सरस्वतीभवन-ग्रन्थमाला

[८७]

नागेशभट्टविरचितः

# बृहच्छब्देन्दुशेखरः

[प्रथमो भागः]

कुलपतेः श्रीविद्यानिवासस्य 'शिवसङ्कल्प'-पुरोवाचा

पुरस्कृतः

सम्पादकः

डॉ० श्रीसीतारामशास्त्री



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 87 ]

# BṚHAT-ŚABDENDUŚEKHARAḤ

[ PART ONE ]

OF

NĀGEŚA BHAṬṬA

FOREWORD BY
**DR. MANDAN MISHRA**
VICE-CHANCELLOR

EDITED BY
**DR. ŚRĪ SĪTĀRĀMAŚĀSTRĪ**
Ex-Head of Shri Rajasthan Sanskrit Mahavidyalaya
Varanasi



VARANASI
1996

अनुसन्धानप्रकाशनपर्यवेक्षकः —
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।



प्रकाशकः —
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.



प्राप्तिस्थानम् —
**विक्रय-विभागः,**
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी–२२१ ००२.



प्रथमं संस्करणम्, ५०० प्रतिरूपाणि
मूल्यम्—२००.०० रूप्यकाणि



मुद्रकः —
**महाकान्त-प्रेस**
बी. १८/१४, रेवड़ी तालाब
वाराणसी–२२१ ०१०.



दीव्यद्गीर्वाणवाणीप्रणयरसलसत्सद्यशःपुञ्जगुञ्ज-
द्द्विद्रोलम्बमालाविलुलितरभसोद्दामदानप्रवाहः ।
विष्वक्प्रोल्लासिविद्यल्लहरिधृतिमहानन्दसिन्धूपमेयः
सम्पूर्णानन्द-सान्द्रो जयति वरमतिर्मुख्यमन्त्री गुणज्ञः ॥

# शिवसङ्कल्पः

पाणिनीयं व्याकरणं कालक्रमेण व्याख्यानक्रमेणाध्ययनाध्यापननवीन-प्रक्रियानुसरणेन नव्यरूपधारणेन च चतुःसोपानव्यापि चतुःसरणिव्यापि च संस्कृतवाङ्मये विशिष्टं स्थानमादधाति। महर्षिपाणिनितो महर्षिपतञ्जलि-पर्यन्तं सूत्रक्रमाध्ययनाध्यापनरूपं प्रथमं सोपानम्, महाभाष्यपरिशीलन-पर्यन्तं द्वितीयम्, ततश्च श्रीरामचन्द्राचार्यप्रणीतप्रक्रियाकौमुदीपर्यन्तं तृतीयम्, श्रीमद्भट्टोजिदीक्षितनिर्मितवैयाकरणसिद्धान्तकौमुदीतश्चतुर्थं सोपानमद्यापि राराज्यते।

तदानीमद्वितीयः प्रगल्भो विद्वान् श्रीभट्टोजिदीक्षितो न नवीनां प्रक्रियासरणिमेव निर्मितवान्; किन्तु तत्र तत्र पूर्वविदुषां, स्वगुरूणामपि च वचनानि साधिक्षेपं वीक्षितानि, येन तदानीन्तनकाशीस्थविद्वत्समाजे महान् कलहकोलाहलो बौद्धिको जातः, अतस्तस्मिन्नेव काले श्रीदीक्षितेन स्वीयवैयाकरणसिद्धान्तकौमुदीग्रन्थस्य स्वयमेव 'प्रौढमनोरमा' इत्याख्या व्याख्या व्यरचि, यस्या उपरि श्रीनागेशभट्टेन शब्दरत्नटीका, खण्डना-त्मिका 'कुचमर्दिनी' च पण्डितराजजगन्नाथेन निर्मिता। एतत्सर्वं समा-लोच्य दीक्षितगुरुवंशपरम्परायां जातः शिष्यः श्रीनागेशभट्ट एव व्याकरणस्य प्रौढं ग्रन्थं शब्देन्दुशेखरं वैयाकरणसिद्धान्तकौमुदीटीका-व्याजेन निर्मितवान्।

अयं शेखरग्रन्थो नव्यव्याकरणस्य शिरोमणिभूतः सर्वविधशङ्कापङ्क-कलङ्कप्रक्षालनपटुः पण्डितवरेण्यानां वैयाकरणानां जिह्वाग्रवर्ती अद्यापि तथैव प्रकाशते यथा तदानीं विबुधबौद्धकलहायमाने काले प्राकाश्यत इति।

अस्य पठनपाठनप्रचलनप्रसारणबाहुल्येऽपि बहवः पाठभेदा न्यूनाक्षर-च्युताक्षर-प्रक्षिप्ताक्षरादिदोषाः कालबलेन सञ्जाताः। तान् सर्वान् दोषान् प्रक्षाल्य ग्रन्थोऽयमधिकृतैः पाठैश्च संयोज्य तत्रभवद्भिराचार्यैर्विद्वद्वरेण्यैः

**श्रीसीतारामशास्त्रिभिः** सम्पादितः कालक्रमेण दुरूहतां दुर्लभताञ्च प्राप्तः पुनरपि सुसम्पाद्य द्वितीयसंस्करणरूपेण प्रकाशितोऽयं महदुपकरिष्यति व्याकरणाध्ययनतपोनिष्ठानां शाब्दिकानाम्। श्रद्धेयाः शास्त्रिचरणाः स्वनामधन्यानां विद्वद्वरेण्यानां वैयाकरणकेसरिणां त्यागतपःस्वाध्यायस्य साक्षात्स्वरूपाणां **श्रीगुरुप्रसादशास्त्रि**वर्य्याणां सारस्वतसाधनाया न केवलं संरक्षणम्; अपि तु तस्या विकासं कुर्वाणाः पाणिनेराचार्यस्यानुग्रहमूर्तित्वेन वाराणस्यां विराजन्त इति गौरवमस्या विद्याराजधान्याः। तैश्च संसेवितः काशीहिन्दूविश्वविद्यालय आचार्यत्वेन, प्राच्यविद्याधर्मविज्ञानसङ्कायप्रमुखत्वेन च, जम्मूस्थितः श्रीरणवीरसंस्कृतमहाविद्यालयो, वाराणसीस्थराजस्थानसंस्कृतमहाविद्यालयश्चाध्यक्षत्वेन संशोभितः। सम्प्रत्यपि ते वाराणसीं सनातनाचारनिष्ठापूर्वकमधितिष्ठन्तो व्याकरणशास्त्रस्याचार्याणां स्नातकानाञ्च मार्गदर्शनं विधाय पाणिनीयां परम्परां संवर्द्धयन्ति। तेषामियं साधना महामहिमभारतराष्ट्रपतिभिर्विंशतिसहस्ररूप्यकमितेनाजीवनं वार्षिकेण मानदेयेन सह सम्मानपत्रप्रमाणपत्रप्रदानपूर्वकं सुसम्मानिता। प्रस्तुतोऽयं ग्रन्थस्तेषां साधनायाः प्रतिफलम्। अत एवाहं **श्रीसीतारामशास्त्रि**पादेभ्यः स्वकीयं विनयाञ्जलिं समर्पयामि। विश्वविद्यालयस्यास्य प्रकाशनाधिकारिणे **डॉ० हरिश्चन्द्रमणित्रिपाठिने**, ग्रन्थस्यास्य मुद्रकाय महाकान्त-मुद्रणालयाधिकारिणे **श्रीहरिकृष्णाय** च धन्यवादाञ्जलिं समर्पयन् ग्रन्थमिमं वैयाकरणेभ्यः सप्रश्रयमुपायनीकरोमि।

**वाराणसी**
रामनवमी,
वि० सं० २०५३
(२८-३-१९९६ ख्रैस्ताब्दः)

**मण्डनमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# पुरो वाक्

अथेदं वादीभकण्ठीरवाणां महावैयाकरण-भट्ट-श्रीनागेश-महाभागानां प्रसिद्धिमागतासु नानाविधविमलकृतिषु किमपि विशिष्टमास्पदमधिकृतवतो 'बृहच्छब्देन्दुशेखर' इति नाम्ना प्रथितस्यास्य महाग्रन्थस्य द्वितीयं राजसंस्करणं शास्त्ररसरसिकानां विदुषां करसरोरुहेषु वाराणसेयेन सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयेन यथोचितसरण्या साधु सम्मुद्रय ससम्मानं सहर्षमुपह्रियत इति अमन्दमानन्दमनुविन्दामो वयम् ।

व्याकरणशास्त्र-गभीरतत्त्व-बुभुत्सूनां सुधीनाम् अथ विशेषपरिश्रमसाध्ये शोधकार्ये दत्तदृष्टीनां छात्राणां चोपकाराय, केषुचिद् अतिप्राचीनेषु विशिष्टपुस्तकालयेष्वेव विरलेषु कथञ्चिद्धस्तलेखेष्वेव विद्यमानतनोरत एव विद्वद्भिरपि विस्मृतस्य शब्देन्दुशेखरापरनामधेयस्य बृहच्छब्देन्दुशेखरस्य शब्दतः प्रतिपाद्यार्थतश्च गुरोर्ग्रन्थस्यास्य सम्मुद्रय प्रकाशनमस्मादेव संस्कृत-विश्वविद्यालयाद् वर्षाणां षट्त्रिंशतः प्राक् २०१७ वैक्रमेऽब्दे (१९६० ख्रीष्टाब्दे) समभूत् । विद्वद्धृदयाकाशलब्धस्थानमिदं ग्रन्थरत्नं स्वल्पेन कालेनैवानुपलब्धतामभजदिति सततशास्त्रचिन्तन-परिष्कृत-विमलमतीनां कोविदानामस्मिन् प्रौढग्रन्थे खलु कियानभूत्समादर इति शक्यते साध्वनुमातुम् ।

तदेवं सुरभारतीप्रणयिषु प्राप्तविशिष्टसम्मानस्यास्य ग्रन्थस्य पुनर्मुद्रणं प्रकाशनं चासीन्नितान्तमावश्यकमिति गीर्वाणवाणीमण्डनानां प्राच्य-पाश्चात्य-विद्यापारदृश्वनां मीमांसारसमांसलानां सहृदयधुरीणानां सम्प्रति सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य वाराणसेयस्य महनीयं कुलपतिपदमलङ्कुर्वतां स्वनामधन्यानां श्रीमतां **श्रीमण्डनमिश्रमहाशयानां** कार्यकाले प्रथिते संस्कृतव्योम्नि बृहच्छब्देन्दुशेखरदिनमणिर्निरभ्रे शुभ्रे स्वकीयां

विमलां त्विषं विकिरन्नुदायिष्टेति कुलपतय इमे सविश्वविद्यालयपरिकरा असंख्येयैर्धन्यवादैः साधुवादैश्च नितरामलङ्क्रियन्ते, प्रार्थयन्ते च भगवन्तो विश्वनाथाः, महागणपतयः, श्रीढुण्ढिराजाश्चामन्दमङ्गलाय ।

इदं द्वितीयं राजसंस्करणमपि पूर्ववद् विदुषां तोषाय यदि भवति तदा स्वीयं प्रयासममुं सर्वथा सफलं मंस्यते ।

डी ५/१०९, मीरघाट
वाराणसी
चैत्रशुक्लप्रतिपदि बुधवासरे
२०५३ वैक्रमेऽब्दे
(२०-३-१९९६)

विदुषामाश्रवः
**सीतारामशास्त्री**
काशीहिन्दूविश्वविद्यालय-प्राच्यविद्याधर्म-
विज्ञान-संकायप्रमुखचरो व्याकरण-
विभागाध्यक्षचरश्च

॥ श्रीः ॥

## मङ्गलाचरणम्

नागमालाविभूषाङ्गं शिरोधृतनिशाकरम् ।
नमामि विश्वनाथं तं देवं ज्ञानप्रदायिनम् ॥ १ ॥

नागेशाख्यो बुधश्रेष्ठः सट्टीकां यां चकार हि ।
सिद्धान्तकौमुदीं श्रित्वा लघुशब्देन्दुशेखरम् ॥ २ ॥

तस्या हि प्रथमं रूपं प्रकाशयाम्यहं मुदा ।
शब्दशास्त्ररसज्ञानां यथा स्याद्धर्षसम्भवः ॥ ३ ॥

अस्य सम्पादनं साधु श्रीसीतारामशास्त्रिणा ।
वैयाकरणवंश्येन यत्नेन महता कृतम् ॥ ४ ॥

समाख्या च कृतेरस्या बृहच्छब्देन्दुशेखरः ।
इति ब्रूते शास्त्रिवर्यो मह्यं तन्नैव रोचते ॥ ५ ॥

ग्रन्थस्यादौ पुष्पिकायाम् अन्त्यश्लोके च दृश्यते ।
शब्देन्दुशेखर-प्रख्या सैव स्यात् सर्वसम्मता ॥ ६ ॥

संस्कारः पूर्वटीकाया नागेशेन यदा कृतः ।
तदाख्या लघुशब्देन्दुशेखरस्तेन वै कृता ॥ ७ ॥

ततो विभाजनायैव बृहद् इति विशेषणम् ।
असकृद् ग्रन्थकर्त्रा वा अन्यैश्च समुदाहृतम् ॥ ८ ॥

तेन नैव कृतेर्नाम प्रमाणैः परिनिष्ठितम् ।
कदाचिद्व्यपदेशेन परावर्तनमर्हति ॥ ९ ॥

शब्देन्दुशेखरः प्रख्या बृहत्-पदयुता हि वा ।
ग्रन्थस्य सारवत्त्वे तु सन्देहो नैव विद्यते ॥ १० ॥

भाष्यं पतञ्जलेर्यत्तु सूत्राणां पाणिनेर्महत् ।
मर्मज्ञस्तस्य नागेशः प्रदीपोद्द्योतकृद् यतः ॥ ११ ॥

प्रत्ननूतनमार्गौ द्वौ दृश्येते पाणिनेर्नये ।
तयोः समन्वयः साधुर्नागेशेन मुदा कृतः ॥ १२ ॥

तदिदं ग्रन्थरत्नं हि पण्डितो बहु मन्यताम् ।
प्रार्थनं काशिकापुर्यां क्षेत्रेशचन्द्रशर्मणः ॥ १३ ॥



॥ श्रीः ॥

## प्रास्ताविक-भूमिकास्थ-विषयाणां सूची

॥ श्रीः ॥

# अथ प्रास्ताविकं किञ्चित्

## [प्रथम संस्करणस्य]

अथेदं विद्वन्मूर्धन्यश्रीनागोजिभट्टाऽपराऽभिधानसुप्रसिद्धनागेशभट्ट-विरचितम्, विद्वच्छिखामणिश्रीभट्टोजिदीक्षितकृतेर्जगद्विदिताया वैयाकरण-सिद्धान्तकौमुद्या विस्तृतविवेचनप्रधानव्याख्यानरूपम्, अनन्यसाधारणम्, शब्देन्दुशेखराऽपरनामधेयमपि, बृहच्छब्देन्दुशेखराख्यया विद्वद्भिर्व्यवह्रिय-माणम्, चिरसम्भृतौत्कण्ठ्यं तद्दर्शनोत्सुकैः सुधीभिः प्रतीक्ष्यमाणप्रकाशन-महोत्सवाऽवसरं ग्रन्थरत्नं सम्मुद्रय सहर्षमधिकरकञ्जं मञ्जुलं प्रभृतकमिव विद्वत्सूपह्रियते ।

यद्यपि सर्वतन्त्र–स्वतन्त्रविद्वद्धुर्यक्षाणाम्, शब्देन्दुशेखर-परिभाषेन्दु-शेखर-महाभाष्यप्रदीपोद्द्योत–वैयाकरणसिद्धान्तमञ्जूषा-लघुमञ्जूषा-परम-लघुमञ्जूषा–लघुशब्दरत्न–काव्यप्रदीपोद्द्योत–योगसूत्रच्छायादि–सुप्रसिद्ध-ग्रन्थप्रणेतृतया विश्वविश्रुतविमलकीर्त्तीनाम्, श्रीनागेशभट्टानां कृतिरियं बृहच्छब्देन्दुशेखर इत्येतावतैव तत्कृतलघुशब्देन्दुशेखर-मञ्जूषोद्द्योतादि-ग्रन्थपरिशीलनसंजातदृढाऽऽश्वासानां विदुषां स्वान्तेषु बृहच्छब्देन्दुशेखरेति-नामाऽक्षरधोरण्येव महतीमुत्कण्ठां तद्दर्शनाऽनुबन्धिनीमुद्भावयितुमलम्भ-विष्णुरिति नाधिकं परिचयप्रदानमेतद्ग्रन्थरत्नमपेक्षते, अथापि वैयाकरण-सिद्धान्तकौमुद्याः सतीषु प्रौढमनोरमा-रत्नाकर-तत्त्वबोधिन्याद्यनेकविशद-विस्तृतटीकासु किमर्थमयं पिष्टपेषणतुल्यो बृहच्छब्देन्दुशेखराख्यव्याख्या-समुद्भावनप्रयासो वैयाकरणशिरोमणीनां श्रीभट्टनागेशानामिति विशेषतो-जिज्ञासासमुद्वेल्लितमानसानां लोलानामाकाङ्क्षापनोदायैव प्रक्रान्तग्रन्थ-विषये संक्षेपेण किमपि परिचयप्रदर्शनमावश्यकं प्रस्तूयते—

सुविदितमेवैतत् सर्वेषां सहृदयानां यत् स्वाभिप्रायप्रकाशनाय, विचारा-णामादानाय, प्रदानाय चेदानीन्तनैः प्रायशः सर्वैरेव मानुषैः सार्थकवर्ण-समूहरूपा केवलं 'भाषा' एव मुख्यतया आश्रीयते। तासु तासु भाषासु प्रयुज्यमानानां तत्तच्छब्दानां च तेषु तेष्वर्थेषु शक्तिग्रहो यावन्न बोद्धॄणा समुपजायते, तावन्न तेषां शाब्दबोधः सम्भवतीति तत्तदर्थविषयकं

शक्तिज्ञानं शाब्दबोधे सहकारिकारणत्वेनामनन्ति भाषाविदो विद्वांसः।[1] तथा चोक्तम्—

**पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः।**
**शाब्दबोधः फलं तत्र शक्तिधीस्सहकारिणी ॥ इति ॥**

तत्र सत्स्वप्यन्येषु शक्तिग्राहकेषु, सन्ध्यावन्दनादिनित्यकृत्यातिरिक्ते लौकिके कर्मणि विद्वद्भिरप्यप्रयुज्यमानाया अत एव व्यवहारमार्गात् सुदूरमपसारिताया देवगिरोऽस्या व्याकरणमेवेदानीं मुख्यं शक्तिग्राहकमवशिष्यते। अत एव—

**शक्तिग्रहं व्याकरणोपमानकोशाऽऽप्तवाक्याद् व्यवहारतश्च।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥**

—इति कारिकोक्तशक्तिग्राहकश्रेण्यामभियुक्तैर्व्याकरणमेव प्रमुखतयाऽभ्यर्हितत्वादादौ पठ्यते। महाभाष्यकारैरपि **'प्रधानं च षडङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति।'** इत्येवं पस्पशायां व्याहरद्भिः शिक्षादिषु षडङ्गेषु वेदपुरुषस्य[2] मुख्यं मुखरूपं स्थानमधितिष्ठतो व्याकरणस्य वास्तविकं महत्त्वमङ्गीकृतमेव।

तदेवं व्याकरणाध्ययनमन्तरा न कस्यापि कोप्यधिकारः खलु देववाण्यां सम्पद्यते, इति नात्र शङ्काकलङ्कपङ्कलेशोऽपि। किं बहुना, सकलवाङ्मयव्यवहारस्यापि व्याकरणज्ञानाधीनत्वात्, व्याकरणाध्ययने लौकिक-वैदिकानामुभयेषामपि अहमहमिकया प्रवृत्तिर्निर्बाधा दृश्यते। तदुच्यते—

**रसालङ्कारसाराऽपि वाणी व्याकरणोज्झिता।**
**श्वित्रोपहतगात्रेव न रञ्जयति सज्जनान् ॥ इति ॥**
**यद्यपि बहु नाधीषे तथाऽपि पठ पुत्र ! व्याकरणम्।**
**स्वजनः श्वजनो मा भूत् सकलं शकलं सकृत् शकृत् ॥इति च॥**

अथात्र पाणिनीयव्याकरणात् पूर्वम् ऐन्द्र[3]-चान्द्र-काशकृत्स्न-कौमार-

---

१. 'तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः' इति हि मञ्जूषायां नागेशभट्टाः।

२. 'ज्योतिषामयनं चक्षुः, निरुक्तं श्रोत्रमुच्यते।
छन्दः पादौ तु वेदस्य, हस्तौ कल्पोऽथ पठ्यते।
शिक्षा घ्राणं तु वेदस्य, मुखं व्याकरणं स्मृतम्' ॥ (पाणिनीयशिक्षा)।

३. 'ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चाऽऽपिशलं शाकलं पाणिनीयकम्' ॥ इति ॥

शाकटायन-सारस्वता-ऽऽपिशल-शाकलादिव्याकरणानां तत्तत्समये सुप्रसिद्धानामपि, कालमाहात्म्येनाद्यत्वे सुदुर्लभत्वात्, महेश्वरप्रसादाधिगताक्षर-समाम्नायश्रुतिमूलकत्वेनाऽभ्यर्हितत्वाच्च पाणिनिमुनिप्रणीतमष्टाध्यायी-सूत्र[1]रूपं व्याकरणमेव लौकिक-वैदिक-शब्द-स्वरानुशासनतया सर्वाङ्गपूर्णं, वेदाङ्गत्वेन[2] व्यवहारभाजनं पठनपाठनादौ लब्धविपुलप्रचारं, विद्वदादृतं च सर्वातिशायिसौभाग्यमाप्ततमप्रणीतत्वेन[3] अनितरसाधारणतया लब्ध-प्रकर्षं च सम्प्रति पुरः परिस्फुरति । तदुक्तम्—

**'येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।**
**कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः'** ॥ इति,
**'अज्ञानान्धस्य लोकस्य सूत्राञ्जनशलाकया ।**
**चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः'** ॥ इति च ॥

तस्याऽस्य पाणिनीय-व्याकरणस्य सूत्ररूपत्वेनाऽतिसुदुर्बोधत्वान्मुग्ध-बुद्धिभिः स्वतोऽर्थतो ग्रहीतुमशक्यत्वेन 'त्रिमुनि व्याकरणमि'ति प्रसिद्धे-र्वार्त्तिक-भाष्यव्याख्यानसव्यपेक्षत्वात्, भाष्यवार्त्तिकोक्तीनामपि च स्वाभाविकगाम्भीर्य्यशालितया सूत्रार्थस्योत्तानबुद्धिभिर्दुरवबोधतायाः पुन-रपि तथैव स्थितत्वेन, सरलप्राञ्जलव्याख्यापेक्षितायास्तत्र तथैव स्थित-त्वात्, कुणिवृत्ति-भागवृत्त्यादिव्याख्यानां च एतर्हि लुप्तत्वात्, प्रायो वैक्रमे षष्ठे (सं ६००) शतके वामन-जयादित्याभ्यां सम्भूय निर्मितया, न्यासा-ऽनुन्यास-पदमञ्जरी-कुङ्कुमविकासाद्यनेकव्याख्याऽनुव्याख्यापरिबृंहितया, स्व-तोऽपि अष्टादशसाहस्री-(१८०००)-ग्रन्थसङ्ख्यापरिमितत्वेनाऽतिविस्तृतया, पाणिनिसूत्रक्रमेणैवाऽत्र वृत्तौ सूत्राणां व्याख्यानात् सत्वरं प्रक्रियांश-(शब्दरूप-धातुरूपादि)-ज्ञाननिष्पत्तौ पिपठिषूणां याथातथ्येन साहाय्यमना-चरन्त्याऽपि, तथाविधग्रन्थान्तरविरहेण लब्धप्रचुरप्रचारया काशिकावृत्त्या सर्वविद्या[4]प्रदीपभूतानां पाणिनिव्याकरणसूत्राणामध्ययनाऽध्यापनं च बहोः

---

१. 'अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः' ॥ इति ॥

२. 'श्रुतिमूलकत्वादस्यैव वेदाङ्गत्व'मिति शेखरे नागेशभट्टाः ।

३. 'प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म । (—वृद्धिरादैच्सूत्रे महाभाष्यम्) ।

४. 'उपासनीयं यत्नेन शास्त्रं व्याकरणं महत् ।
प्रदीपभूतं विद्यानां सर्वासां, तदवस्थितम् ॥

कालात् सम्भृतप्रचारमासीत् ।

तदुक्तं महाकविना माघेन राजनीतिस्वरूपनिर्धारणप्रस्तावे—

**'अनुत्सूत्रपदन्यासा, सद्वृत्तिः, सन्निबन्धना ।**
**शब्दविद्येव नो भाति राजनीतिरपस्पशा ॥' इति ॥**

अथ गच्छता कालेन काशिकावृत्ति-समाश्रित-पाणिनिसूत्रव्याख्यानपरिपाट्याध्येतॄणां झटिति शब्दरूप-धातुरूपादिज्ञानविरहात्, ततोऽपरितुष्यद्भिः श्रीरामचन्द्राचार्यैः प्रायो वैक्रमे १४५० संवत्सरे प्रक्रियाक्रमेण (शब्दरूप-धातुरूपादिसाधनोपयोगि-सन्ध्यादिक्रमेण) पाणिनिव्याकरणसूत्राणां कतिपयानां, केषांचन धातूनां च व्याख्यानं 'प्रक्रियाकौमुदी'नाम्ना समुद्भावितम् । तदनन्तरं तेषामेव श्रीरामचन्द्राचार्याणां पौत्राः श्रीविट्ठलाचार्याः स्वपितामहचरणैरभ्यूहितायाः प्रक्रियाकौमुद्या उपरि तात्कालिकैः विद्वद्भिरुपक्षिप्तानां दूषणानां[1] समाधानाय, तत्र परित्यक्त[2]व्याख्यानानां पाणिनिसूत्राणां धात्वादीनामुणादिसूत्राणाञ्च केषाञ्चित् यथामति विशदव्याख्यानाय च नाऽतिविस्तृतां प्रक्रियाकौमुदीप्रसादाख्यां विद्वत्समादरणीयां व्याख्यां व्यररचन् ।

किञ्च परां प्रसिद्धिं गताया अस्या एव प्रक्रियाकौमुद्या, एकामन्यामन्वर्थनाम्नीं प्रकाशाख्यां व्याख्यां पारसीकस्य भारतसम्राजः अकबरस्य[3] मन्त्रिणो महाराजवीरवरस्य (प्रसिद्धस्य वीरबलस्य) सूनोः कल्याणमल्ल-

---

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः' ॥ इति ॥

१. 'तथा च पण्डितम्मन्यैः प्रक्षेपैर्मलिनीकृता ।
प्रक्रियाकौमुदी, तस्याः प्रसादः क्रियते मया' ॥ (श्री विट्ठलाचार्यः) ।

२. 'स्पष्टत्वात्समुपेक्षितानि कतिचिद्व्याख्यातकल्पत्वतो,
रामाचार्यवरैरमूनि विशदं व्याख्यामि सूत्राण्यहम् ।
ग्रन्थेऽस्मिन् स्वरसाधनं कतिपयानौणादिकांश्च ब्रुवे,
स्थाने तांश्च गणान् यथामति, तथा न्यायान् पदैः सूचितान्' ॥
(—प्रक्रियाकौमुदीटीकाप्रसादकृत्, श्रीविट्ठलाचार्यः) ।

३. तदेतत् प्रकाशटीकाप्रारम्भे टीकाकर्त्रा स्वयमेव विस्तरेणोक्तम् । तथाहि—
अलिकुलमण्डितगण्डं, प्रत्यूहव्यूहतिमिरमार्तण्डम् ।
सिन्दूरारुणशुण्डं देवं वेतुण्डतुण्डमवलम्बे ॥

स्याध्ययनाय तत्पित्राभ्यर्थिता, विद्वत्सदसि लब्धकीर्तयो, वाराणसेया, भट्टोजिदीक्षितगुरवः श्रीशेषश्रीकृष्णभट्टा व्यातेनिरे ।

भास्वद्भूमीवलयतिलके धर्मकर्मप्रसूता-
वार्यावर्त्ते सुचरितकृताचार्यके विश्ववन्द्ये ।
अन्तर्वेदिर्जयति यमुना-जह्नुजा-व्याजभाजो-
र्बाह्वोर्मध्ये हरि-गिरिशयोः स्पष्टलक्ष्मेव वक्षः ॥

तत्रोदुम्बरहार[1] इत्यभिधया जागर्त्ति नीवृद्वरः,
स्वर्लोकप्रतिबिम्बमम्बरचरैः साशङ्कमालोकितः ।
यस्मिन्नलिपतकल्पशाखिविभवाः, शाखाशतोद्भासिताः,
सेव्यन्ते तरवोऽथ वेदगुरवः प्रत्याश-यातैर्द्विजैः ॥

ब्रह्मावर्त्तं नाम तत्राऽस्ति तीर्थं, सार्थं, पण्यं पूर्वपुण्यैरगण्यैः ।
यत्संसेव्य प्राप वल्मीकजन्मा सन्मानाऽर्हां काव्यवाचां समृद्धिम् ॥

आस्ते तस्मिन्नमरनगरीगर्वसर्वस्वहारी,
हारीभूताऽमलसुरसरित्, [2]पत्त्रपुञ्जाऽभिधानः ।
ग्रामः स्वःस्त्रीजनविनिमयीभूतरामाभिरामः,
कामक्रीडाभवनमवनौ कश्चिदाश्चर्यरूपः ॥

तत्र ब्राह्मणमण्डलेऽतिविपुले सत्कर्मभिर्निर्मले,
वाल्मीकिप्रतिवेशवासवशतो विज्ञातसर्वागमे ।
आसीद्रूपधरः परः स्मरहरः, सच्छ्रोत्रियाणां वरः,
शौर्योदार्यविवेकधैर्यनिलयो भूपालभूषामणिः ॥

तद्वंशे महाराजरूपधरस्य पुत्रो नारायणः, तत्पुत्रो महाराजगङ्गादासः, तत्पुत्रो महाराजवीरवरः (वीरबलः) । तद्वर्णनं च तत्रैव—

कामो वामदृशां, निधिर्नयजुषां, कालानलो विद्विषां,
स्वःशाखी विदुषां, गुरुर्गुणवतां, पार्थो धनुर्धारिणाम् ।
लीलावासगृहं कला-कुलभुवां, कर्णः सुवर्णार्थिनां,
श्रीमान् वीरवरः क्षितीश्वरवरो वर्वर्त्ति सर्वोपरि ॥

बालार्कोदरसोदराऽङ्घ्रिकिरणैः स्पष्टाऽरिसीमन्तिनी-
सीमन्तेषु समर्पयन्नविरतं सिन्दूरपूरश्रियम् ।

1. उदुम्बरहारःब्रह्मावर्त्तं (विठूर—कानपुर) निकटे विषयः । स च सम्प्रति 'राय-बरेली' नाम्ना प्रसिद्ध इति संभाव्यते ।

2. 'पत्त्रपुञ्ज'ग्रामः—'पटौंजा' इति सम्प्रति प्रसिद्धः । तत्रत्याः 'पटौजा के दूबे' इति रीत्या कान्यकुब्जब्राह्मणेषु कुलीनतया प्रसिद्धा ब्राह्मणाः

अकबरक्षितीशस्य च प्रायो १६१६ वैक्रमेऽब्दे राज्ये वर्तमानत्वाद् वीरवरस्य, प्रक्रियाप्रकाशकर्तुः शेषश्रीकृष्णस्य च स एव समय इति निश्चीयते। अथैवं लब्धप्रसारां नानाविधटीकाप्रणयनद्वारा तदानीन्तनैर्विद्वद्भिः प्रदर्शितादरामपि सटीकां प्रक्रियाकौमुदीं पाणिनिसूत्राणां सर्वेषां तत्र व्याख्यानाभावात्, धातुगणोणादीनां, सर्वासामावश्यिकानां परिभाषाणां च यथायथं सन्निवेशाऽभावात्, त्रिमुनिविरुद्धसदोषव्याख्यानवतीत्वाच्च त्रुटिपूर्णां तां विनिश्चित्य तयाऽपरितुष्यद्भिः त्रिमुनिसिद्धसर्वाङ्गपूर्णवैयाकरणसिद्धान्तप्रतिपादकपाणिनीयव्याकरणसूत्रव्याख्यानानुपलम्भात्खिन्नमानसैः, वाराणसीमधिवसद्भिः, श्रीशेषकृष्णप्रधानशिष्यैस्तत्र भवद्भिर्भट्टोजिदीक्षितैः प्रक्रियाकौमुदीप्रदर्शितमार्गेण प्रक्रियाप्रधानसरण्या 'वैयाकरणसिद्धान्तकौमुदी'तिनाम्ना सुप्रसिद्धा, धातुगणोणादिपाणिनीयलिङ्गानुशासनाद्यशेष-

---

सर्वाशाः परिपूरयन्निजयशःकर्पूरपूरैश्चिरं,
श्रीमान् वीरवरो जगत्यनुपमश्रीः केन वा वर्ण्यताम् ॥

सोऽयं काव्यकलाविलासभवनं श्रीपारसीकेश्वर-
प्राणानामधिदैवतं, गुरुगुणश्रेणीमणीरोहणम् ।

विद्यानां निकषोपलः, कुलगृहं केलीकुरङ्गीदृशां,
शश्वत्पण्डितमण्डलीपरिवृतो विद्याविनोदं व्यधात्' ॥

तस्य वीरबलस्य पुत्रश्च कल्याणमल्लः । स चाऽतितीक्ष्णबुद्धिः, स्वभावाच्च व्याकरणप्रियः । तदुक्तं—

कल्याणस्य तनूद्भवस्य नृपतेः कल्याणमूर्तेस्ततः
कल्याणीं मतिमाकलय्य विषमग्रन्थार्थसंवित्तये ॥

कृष्णं शेषनृसिंहसूरितनयं श्रीप्रक्रियाकौमुदी—
टीकां कर्त्तुमसौ विशेषविदुषां प्रीत्यै समाजिज्ञपत् ॥

अस्फुटभावा, प्रस्फुटदोषाऽभिहिताऽपसिद्धान्ता ।
असमर्थकपदबन्धा, नैषाऽपरथा विभावयत्यर्थम् ॥

तस्माद्वीरवरान्महीशमुकुटाऽलङ्कारचूडामणेः
प्राप्याज्ञां, सुचिरं विभाव्य च हृदि ज्योतिर्नृसिंहाभिधम् ।

सन्तोषाय विशिष्य भाव्यविदुषां, तोषाय दुर्मेधसां,
व्याख्याम्याकरसाक्षिकं सुविशदं तां प्रक्रियाकौमुदीम्' ॥ इति ।

१. 'आनन्त्यात् सर्वशब्दा हि न शक्यन्तेऽनुशासितुम् ।
बालव्युत्पत्तयेऽस्माभिः संक्षिप्योक्ता यथामति' ॥ (-इति प्रक्रियाकौमुदी) ।

सूत्रव्याख्यानयुता, यथास्थानं भाष्येष्टिवार्त्तिकपरिभाषाद्युपन्यासमहनीया, ग्रन्थतो द्वादशहस्रश्लोकमानवती (१२००० ग्रन्थप्रमाणा), शब्दतो लघ्व्यप्यर्थगुर्वी सिद्धान्तकौमुदी प्रायशो वैक्रमे १६५० संवत्सरे विरचय्य विदुषां पुरस्तात् समुपास्थाप्यत ।

आवश्यकसर्वसामग्रीगुम्फितायाः, शास्त्रार्थ-पङ्क्ति-गूढोक्तिविशङ्कटाया अभिनवाया वैयाकरणसिद्धान्तकौमुद्या विद्वत्सु समादरेण साकं लोके प्रचारोऽपि सत्वरमेव परां कोटिं तथा पस्पर्श यथा काशिकावृत्ति-प्रक्रिया-कौमुदी-प्रकाशादिप्राचीनग्रन्थानां नामान्यपि जनानां मानसपटलेभ्योऽपस्रंसिरे । किं बहुना, आगोपाल-जलहारिकाऽङ्गनं सिद्धान्तकौमुद्या नामधेयं श्रीपतञ्जलिनिर्मिताद् महाभाष्यादपि समधिकं कीर्त्तिकलापसम्भृतमण्डनं प्रसिद्धिं लेभे ।[1]

स्वनिर्मितायाः सिद्धान्तकौमुद्या असम्भावनीयामनन्यसाधारणीमल्पीयसैव कालेन संजातां तादृशीं प्रसिद्धिं विज्ञाय परां मुदमधिगच्छन्तः श्रीभट्टोजिदीक्षिताः स्वबुद्धिविलासवैभवं, परमतखण्डनपाटवं च विद्वत्सु समुपस्थापयितुं पुनरप्यभिलषन्तः स्वकृतेः सिद्धान्तकौमुद्या एव टीकाव्याजेन प्रौढमनोरमानाम्नीं व्याख्यां निरमासिषुः, यस्यां 'यत्तु प्राचा', 'यत्तु तत्पौत्रेण' 'यत्तु प्रसादकृता', इत्येवं नामग्राहं[2] न केवलं रामचन्द्राचार्य-विट्ठलादिप्राचीनविदुषां

---

१. 'कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः ।
कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रमः' ।। (—इति केषांचित्) ।

'किं सम्बुद्धिपदं विधेर्निगदितं, घ्यन्तस्य चान्तेऽस्ति किम् ?
भर्त्तारं प्रति भाषते प्रतिदिनं मुग्धा रतौ किं पुनः ? ।
का पाठ्या पदशुद्धये भुवि सदा, स्वान्तेषु दुष्फक्किकाः
स्मृत्वा किं प्रवदन्ति वै बहुजना, 'आ-ई नहीं, कौमुदी' ।।

इति सिद्धान्तकौमुदी-फक्किका-काठिन्यसूचकं केषांचित् पद्यम् ।

२. (क) 'यत्तु प्राचा (रामचन्द्राचार्येण)'वेति केचिदि'त्युक्त्वा 'सख्यासुख्यः' इत्याद्युक्तम्, यच्च तद्व्याख्यातृभिः (शेषकृष्णाचार्यैः) 'उभयमप्येतद्भाष्ये स्थितमि'त्युक्तम् । यथा चोपष्टम्भार्थं प्रसादकृता—
'सख्युः पत्युः प्रसिद्धर्चै यत्खय्त्यादित्याह पाणिनिः ।
सुख्य इत्यादि साध्वेतदुभयं भाष्यगौरवात् ।।'
—इति विचारचिन्तामणिस्थश्लोकोपन्यसनं कृतं, तदेतत्सर्वं भाष्य-

मतान्येव, अपितु स्वगुरूणां श्रीशेषकृष्णभट्टानामपि वचांसि तथा खण्डितानि यथा तदानीन्तनेषु विद्वत्सु महान् बौद्धो वाक्कलहः समुदायिष्ट। तदेवं प्रक्रियाकौमुदीप्रकाशकृतां शेषकृष्णभट्टानां शिष्यप्रशिष्यैः, तत्पुत्रपौत्रादिभिश्च स्वगुरूक्तिखण्डनममृष्यद्भिः श्रीदीक्षितस्य गुरुद्रोहमहापातकमुद्घोषयद्भिः सिद्धान्तकौमुदी-प्रौढमनोरमयोर्नैकविधान्याक्षेपप्रतिक्षेपसम्भृतान्तराणि खण्डनानि टीकाव्याजेन, साक्षात्खण्डनग्रन्थतयैव वा समुल्लासितान्यभूवन्। तेषु पण्डितराजजगन्नाथकृतं मनोरमाकुचमर्दनं,

---

कैयटाऽपर्य्यालोचनमूलकमिति कृतबुद्धय एव विदाङ्कुर्वन्तु।
(—अजन्तमनोरमा)।

(ख) 'इह प्राचा (रामचन्द्रेण) 'आखूत्थं वर्तते' इति नपुंसकं पठितम्, यच्च तत्पौत्रेण (विट्ठलेन) तथैवाऽभिनिवेशेन व्याख्यातं, तदुपेक्ष्यम्। (——उत्तरार्द्धमनोरमा)।

(ग) 'तच्छिवः। यत्तु प्राचा (रामचन्द्रेण) 'तत् शिव' इत्यत्र जश्त्वे कृते, 'खरि च' इत्युक्तं, तन्न। तदो दान्तत्वेन जश्त्वोपन्यासवैयर्थ्यात्। यत्तु तत्पौत्रेण (विट्ठलेन) 'तदो वावसाने इति चर्त्वे कृते पश्चाच्छिव इत्यनेन सम्बन्धे, झलां जश् इति जश्त्वे, खरि च इति चर्त्वमि'ति। तदतिस्थवीयः। (—हल्सन्धिमनोरमा)।

१. (क) 'एजृ दीप्तौ। कम्पनार्थस्तु परस्मैपदी। एजते कम्पते इति तु प्राचां (शेषकृष्णभट्टानां) व्याख्यानं प्रामादिकमेव।
(——हल्सन्धिमनोरमा)।

(ख) 'प्रादूहोढोढ्येषैष्येषु। 'अत्र ऊहशब्दः कैश्चित्प्रक्षिप्तः। भाष्यादौ तु न दृश्यते' इति प्राञ्चः (—शेषकृष्णभट्टाः)। इदानीन्तनपुस्तकेषु तु भाष्यवार्त्तिकयोरूहशब्दो दृश्यते एव।
(मनोरमा, अचसन्धौ)।

(ग) यत्तु प्राचोक्तं 'प्रातिपदिकार्थः सत्ते'ति : यच्च व्याख्यातं (शेषकृष्णैः) 'योऽर्थः सन्नित्येव केवलं भाषते, न जात्यादिरूपो, न कारकयोगी, स विवक्षितो, यथाऽव्ययार्थः' इति। तन्न'!
(——मनोरमा-कारके)।

२. 'अहो! अयं महान् अस्य (दीक्षितस्य) द्रोहोद्रेको यत्—'उदासीनानां प्राचां ग्रन्था आशयविशेषकल्पनेन समर्थ्यन्ते, न च समर्थ्यन्ते गुरूणामि'ति शितुक्सूत्रव्याख्यावसरे मनोरमाकुचमर्दने पण्डितराजा व्याजह्रुः।

३. (क) 'लक्ष्मीकान्तपदाम्भोजमानम्य श्रेयसां पदम्।
पण्डितेन्द्रो जगन्नाथः स्यति गर्वं गुरुद्रुहाम्॥

शेषचक्रपाणिनिर्मितं प्रौढमनोरमाखण्डनं चातिशयेन प्रसिद्धिं भजेते।

इह केचित् (भट्टोजिदीक्षिताः) निखिलविद्वन्मुकुटमयूखमालालालितचरणकमलानां, गीर्वाणगणगौरवग्राममांसलमहिममण्डिताऽखण्डमहीमण्डलानां, शेषवंशावतंसानां श्रीकृष्णपण्डितानां चिरायाऽर्चितयोः पादुकयोः प्रसादादासादितशब्दानुशासनाः, तेषु च पारमेश्वरं पदं प्रयातेषु कलिकालवशंवदीभवन्तः, तत्र भवद्भिरुल्लासितं प्रक्रियाप्रकाशमाशयानवबोधनिबन्धनैर्दूषणैः स्वयं निर्मितायां मनोरमायामाकुल्यकार्षुः।

सा च प्रक्रियाप्रकाशकृतां पौत्रैरखिलशास्त्रमहार्णवमन्थाचलायमानमानसानामस्मद्गुरुवीरेश्वरपण्डितानां तनयैर्दूषिताऽपि, स्वमतिपरीक्षार्थं पुनरस्माभिरपि निरीक्ष्यते'।

(—मनोरमाकुचमर्दनम्)।

(ख) 'ऊकालः। यत्तु 'ऊशब्देन स्वोच्चारणकालो लक्ष्यते' इति (मनोरमायाम्) आहुः। तन्न। ऊशब्दलक्ष्यस्य स्वोच्चारणकालस्य सादृश्यरूपभेदसम्बन्धेनोत्तरपदार्थेनाऽन्वयस्यानुपपत्तेः'।

(—मनोरमाकुचमर्दनम्)।

(ग) 'निपात एकाज्। यत्तु पर्य्युदासादेवाज्रूपनिपाते लब्धे निपातग्रहणमुत्तरार्थमिति (दीक्षिताः) वदन्ति, तन्न। अनाङित्यस्य पर्य्युदासत्वे 'प्रतिषेधार्थोऽयमारम्भ' इत्येतत्सूत्रगतभाष्याऽसंगतेः'।

(—मनोरमाकुचमर्दनम्)।

(घ) 'यत्तु आ च आ च रलौ, तौ चेमौ वर्णौ च, उश्च उलच ऋलोः, तयोर्वर्णयोरिति वा प्रथमान्तेन, परिनिष्ठितविभक्त्या वा विग्रह' इति (मनोरमायाम्) आहुः। तन्न। रलाविति रूपस्याऽसिद्धेः। इति शाकलप्रकृतिभावेन, तदभावे सवर्णदीर्घेण च यणादेशस्य बाधात्'। (—मनोरमाकुचमर्दनम्)।

१. (क) 'अत्र प्रेजतीति मूलोदाहरणमभिप्रेत्य 'एजृ कम्पने' इति प्रकाशः। कम्पनार्थस्य एजतेः परस्मैपदत्वादिति बोध्यम्'।

(—प्रौढमनोरमाखण्डनम्)।

(ख) 'एवे च। अनियोगे=अवधारणभिन्ने सम्भावने। तथाच—

'अनवक्लृप्तौ यदा दृष्टः पररूपस्य गोचरः।
एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत्'॥

—इति श्लोकवार्त्तिकम्' इति प्रकाशः। तत्र वृत्तौ भवं वार्त्तिकम्। अध्यात्मादित्वाट्ठञ् बोध्यम्। तेन 'वार्त्तिकोक्ती रभसादि'ति केषांचित् (दीक्षितानाम्) उक्तिः, सैव राभसिकीति बोध्यम्।' (प्रौढमनोरमाखण्डनम्)।

किम्बहुना, तदानीं वाराणस्यां प्रत्यहं सभ्यसभासु, विद्वत्समवायेषु, जाह्नवीघट्टसोपानेषु, देवगृहेषु, विदुषां कथनोपकथनेषु, सहृदयानां स्वैरगोष्ठीबन्धेषु च प्रतिरथ्य, प्रतिमन्दिरं, प्रतिकुटीकोटरं च सिद्धान्तकौमुदीं, तद्व्याख्यां प्रौढमनोरमाञ्चाधिकृत्यैव विचारविमर्शः, तर्काः, आक्षेप-प्रतिसमाधानादिकञ्च जनसंमर्देन, श्रोतृजनकोलाहलेन, प्रेक्षकवृन्द-साधुवाद-करताडनादिभिश्च साकं महता संरम्भेण तथा समुदितं, यथा सर्वदिङ्मण्डलमेव विक्षुब्धान्तरालमिवाऽभूत् ।

अथैवं समेधमाने विद्वत्कुलद्वयविरोधे श्रीमद्भट्टोजिदीक्षितानां पौत्रैः, श्रीवीरेश्वरदीक्षितसूनुभिः श्रीनागेशभट्टगुरुभिर्महापण्डितैर्हरिदीक्षितैस्तदानीं सुप्रसिद्धानां, श्रीशेषकृष्णपण्डितेन्द्रस्य पुत्राणां पण्डितराजजगन्नाथस्य गुरूणां, महाविदुषां श्रीशेषवीरेश्वराणां कोपोपशमनाय तत्स्तुतिपूर्वकमेव मनोरमोक्तिमण्डनपरं बृहच्छब्दरत्नाख्यं व्याख्यानं प्रौढमनोरमामधिकृत्य व्यलिख्यत ।

अस्मिन्नेव समये (प्रायः १७५० वैक्रमेऽब्दे) स्वगुरु-हरिदीक्षित-पाद-कमलसेवनलब्धवैदुष्यः, स्वमतमण्डन-परमतखण्डन-सामर्थ्यवतीं, नवनवोन्मेषशालिनीमनिर्वचनीयां कामपि स्पृहणीयां प्रतिभामादधानो, विद्वत्तल्लजोऽयं श्रीभट्टनागेशो बहोः कालाज्जरठैर्महावैय्याकरणैः प्रचाल्यमाने वादाहवे

(ग) 'एवं चैतद्-भाष्यकैयटापर्यालोचनमूलमिति केषांचित् (दीक्षितानाम्) उक्तिः आशयानवबोधनिबन्धनेति ध्येयम् ।'
(—मनोरमाखण्डनम्) ।

१. [1]'शेष-वि-भूषणमीडे शेषाऽशेषार्थलाभाय ।
दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥
'गूढोक्तिग्रथितां पितामहकृतां विद्वत्प्रमोदप्रदां,
भक्त्याधीत्य मनोरमां निरुपमाद्रामाश्रमात् सद्गुरोः ।
तत्त्वाऽज्ञानवशात्परेण कलितान्दोषान् समुन्मूलयन्,
व्याचष्टे हरिरेष तां फणिमतान्यालोच्य वैरेश्वरिः' ॥इति॥

1. शेषश्च=अनन्तश्च (='शे-ष'इत्यक्षरद्वयं च), विश्च=गरुडश्च (='वकार' 'इकार' इत्यक्षरद्वयं च), भूषणम्=अलङ्कारः शय्यात्वेन, वाहनतया च (नामद्व्यक्षरतया वा अलङ्कारो) यस्य-इत्येवं श्लेषेण भगवतः श्रीविष्णोः, 'शेषवीरेश्वर' इति नाम्नश्च परामर्शः संकेतेन कृतः । साक्षाद्गुर्वादि-पूज्यजननामग्रहणस्य निषिद्धत्वात् ।

आत्मनो वैशिष्टयमनन्यसाधारणं शास्त्रार्थपाटवं, ग्रन्थलेखनकौशलं च ख्यापयितुमिव, सिद्धान्तकौमुदी-प्रौढमनोरमा-खण्डन-मण्डन-कर्तॄणामुक्ति-प्रत्युक्तिषु तादृशं गभीरं वादवैदुष्यमनवलोक्य ताभिरसन्तुष्यन् सिद्धान्तकौमुदीटीकामिषेण विरचितेन पंचाशत्सहस्र (५००००) ग्रन्थपरिमितेन, विद्वत्सुलभगम्भीरार्थेन,'बृहच्छब्देन्दुशेखर' इति नाम्ना प्रसिद्धेन, शब्देन्दुशेखराख्येन महता ग्रन्थेन सह शास्त्रार्थरणाङ्गणं वन्यगजभुवं केसरिकिशोर इवाऽवततार।

स्वभावगम्भीरे, वैयाकरणसिद्धान्तमहार्णवायमाने, प्रखरतरकल्पना-कोटिव्याटीकमानवपुषि, अभिनवयुक्तिजालजटिलेऽस्मिन्ग्रन्थे महाभाष्यमनुसरन्तीभिर्वाचोयुक्तिभिर्न केवलं प्राचीनानां कैयट-वृत्तिकार-पदमञ्जरीकार-न्यासकार-धातुवृत्तिकारादीनामालोच्याऽऽलोच्य खण्डशः कृतानि मतान्येवाऽपि तु मनोरमासिद्धान्तकौमुदीखण्डनकृतां पण्डिराजजगन्नाथ-शेषचक्रपाणि-रत्नाकरकारादीनामपि वचांसि कुशाग्रबुद्धितीक्ष्णासिधारेण भट्टनागेशेन विचित्य विचित्य विदलितानि निभाल्य तदानीन्तनाः पण्डितंमन्या वादीभा विद्वत्सभासु वादगोष्ठीषु स्तब्धबुद्धयः सन्तस्तथा पराभवं जग्मुर्यथाऽद्यावध्यपि न केऽपि विद्वांसो नागेशोक्तिविरोधाय लेखनीमुत्थापयितुमुत्साहमपि प्रदर्शयन्।

सर्वतन्त्र-स्वतन्त्रो, वादीभकण्ठीरवोऽयं महावैयाकरणः श्रीनागेशभट्टो 'दोषा वाच्या गुरोरपी'तिलोकोक्तिमनुरुन्धन्निव स्थले स्थले मनोरमाम्,

---

१. 'निपात एकाजनाङ्। अनाङिति पर्य्युदासादेव अज्रूपे निपाते लब्धे निपातग्रहणमुत्तरार्थमि'ति मनोरमा।

'यत्तु पर्य्युदासादेवाज्रूपे निपाते लब्धे निपातग्रहणमुत्तरार्थमि'ति वदन्ति। तन्न। अनाङित्यस्य पर्य्युदासत्वे 'प्रतिषेधार्थोयमारम्भ' इत्येत्सूत्रगतभाष्यासंगतेः' (–इति मनोरमाकुचमर्दनम्)।

'यत्तु नायं पर्य्युदासः। किन्तु प्रसज्यप्रतिषेधः। प्रतिषेधार्थोऽयमारम्भः' इति भाष्यग्रन्थेन बोधितत्वात्। पर्य्युदासत्वेनैव सिद्धौ भाष्याऽसंगतिः स्पष्टैव'··· इति। तन्न- (बृहच्छब्देन्दुशेखरे २३३ पृष्ठे)।

२. 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया ईरिन्ग्रहणे ईरिणीशब्दस्यापि ग्रहणमित्यभिप्रेत्य स्त्रीलिङ्गोदाहरणमाह–– स्वैरिणीति'। (––प्रक्रियाकौमुदीप्रसादः)।

किम्बहुना, भाष्यमप्यधिक्षिपन् संकोचलेशमपि नान्वभूदिति, अहोऽस्य प्रतिभावैशद्यम् ।

अत एव सर्वानपि प्राचीन-मूल-टीकादिग्रन्थानतिशेते इयं नागेशभट्ट-कृतिरिति कामं वक्तुं शक्यम् ।

## बृहच्छब्देन्दुशेखरः

ग्रन्थरत्नेऽस्मिन्न केवलं नाम्नैव, अपितु स्वरूपेणाऽपि बृहति व्याकरण-शास्त्रसम्बन्धिनां प्रायशः सर्वेषामेव विषयाणां, सिद्धान्तानाञ्च पाण्डित्य-पूर्णं विवेचनं विद्यत इति व्याकरणरहस्यजिज्ञासूनां कृते ननु परामुपादेयता-मिदं भजते । वस्तुतः महाभाष्यप्रणयनानन्तरं पाणिनीयसूत्राणां विशद-विस्तृतविवेचनात्मकः, एतदतिरिक्त एतत्समोऽन्यो न कोऽपि व्याकरण-ग्रन्थोऽद्यावध्युपलभ्यते इत्युक्तौ नात्युक्तिदोषलेशोऽपि । अस्य ग्रन्थरत्नस्य वैयाकरणसिद्धान्तकौमुदीवत् पूर्वार्द्धोत्तरार्द्धौ द्वौ मुख्यौ भागौ स्तः । तयोर्मध्ये सप्तचत्वारिंशत्प्रकरणयुतः प्रथमो भागः, उत्तरार्धापेक्षया द्विगुणादप्यधिकः, अव्ययीभावसमासपर्यन्तं विशेषव्याख्यानसम्पन्नत्वात् । षड्विंशतिप्रकरण-विराजितस्योत्तरार्द्धस्य तु संकुचितव्याख्यानवत्त्वेन स्वरूपलघुता स्वाभाविक्येव । सिद्धान्तकौमुद्याः प्रतीकमादाय प्रवृत्तेऽस्मिन् टीकाग्रन्थे परमतनिरसनपूर्वकं स्वसिद्धान्तमुपस्थापयद्भिः श्रीनागेशभट्टैः स्वपरमगुरो-र्भट्टोजिदीक्षितस्य समर्थनं तर्कपूर्णयाऽत्यन्तं मनोग्राहिण्या शरण्या-ऽक्रियत, यद्विलोक्य विदुषां मुखेभ्यो हठात् स्वयमेव साधुवादाः प्रसरन्ति । परं सूक्ष्मेक्षिकया पदार्थतत्त्वावगाहनचतुरा इमे यत्रैव भट्टोजिदीक्षितानां

---

'स्वैरिणीत्यत्र तु ङीपः प्राग्भागमादायैव वृद्धिर्बोध्या । यत्तु व्याचख्युः लिङ्गविशिष्टपरिभाषयेति । तन्निष्फलम्' ।
(–मनोरमा, अच्सन्धौ ।

'असमस्तस्थले हे स्वेराऽस्ति, हे स्वेर ज्ञानं वर्तते, हे स्वेर घटौ स्तः' इत्यादिप्रयोगेष्ववृद्धये उत्तरपदयोरिरेरिणोरित्यर्थः–समासग्रहणाभा-वेऽपि वस्तुतः समासे एव वृद्धेरिष्टत्वात्–स्वीकार्यः । समर्थपरिभाषोप-स्थानेनाऽन्वितार्थकत्वादुद्धारेऽपि, स्वेर घटौ इत्यादौ दोषानुद्धारात्' ।
(इति मनोरमाखण्डनकृतः) ।

लिङ्गविशिष्टपरिभाषोपन्यासस्तु निष्फल एव । समर्थपरिभाषा च ईदृशेषु नेति ओत्वोष्ठयोरित्यत्र व्युत्पादयिष्यते' ।
(––बृ० श० शे० १९० पृष्ठे) ।

विचारशैथिल्यं, स्वसिद्धान्तप्रातिकूल्यं वाऽऽकलयन्ति तत्र 'मूलं तु वृत्त्यनुरोधेन[1]', 'रक्षितग्रन्थानुसारेण', 'मूलं, मनोरमा च चिन्त्यैव[2]' इत्येवं रीत्या तानप्यधिक्षिपन्ति। किंबहुना, स्वमतविपरीतानां महाभाष्यवचनानामपि प्रौढिवादत्वमुद्घोषयन्नयं[3] नागेशः स्वस्य महाभाष्यतत्त्ववेत्तृत्वं सगर्वं प्रकटयति। कैयटस्तु[4] प्रतिपदं विहन्यमानो ग्रन्थेऽस्मिन् निःसारतामिवादधानोऽभिलक्ष्यते।

कुत्रचिच्च भट्टनागेशः स्वमतविरोधभाजामन्याचार्यवचनानां व्याख्यानं स्वबुद्धिवैभवेनैवं विधत्ते यथा न केवलं तेषां वचनानां स्वमतविरोधित्वं व्याहन्यतेऽपि तु तेषु स्वमतपोषकत्वमप्या[5]विर्भवतीत्यहो व्याख्यानपाटवमस्य।

अन्येषां परमप्राचीनानां प्राचीनानां च विदुषां गभीराणां मतानां तलस्पर्शी, गुणैकबद्धादरोऽयं ग्रन्थकारो यत्राऽपि तेषां वचःसु सारमभिनवार्थबोधनसामर्थ्यं चाद्राक्षीत्तानि कुत्रचित्तदा[6]चार्यनामनिर्देशपूर्वकम्, कुत्रचिच्च, 'केचित्तु[7]' 'प्राञ्चः' इति विशेषसंकेतमकृत्वाऽप्यत्र ग्रन्थे

---

१. 'मूलं तु वृत्त्यनुरोधेनेत्याहुः' इति बृहच्छब्देन्दुशेखरे ८५ पृष्ठे। 'रक्षितग्रन्थानुसारेण मूलग्रन्थसत्त्वात्' इति बृहच्छब्देन्दुशेखरे ९६९ पृष्ठे।

२. 'व्यपेक्षायां नित्यार्थश्चे'ति मूलं, 'पुमः खय्यम्परे' इतित्तत्रस्थाऽप्रत्ययरूपो विसर्ग इति सामानाधिकरण्ये त्वित्यादिमनोरमा च चिन्त्यैव' (इति बृहच्छब्देन्दुशेखरे २९६ पृष्ठे)।

३. 'एओङ्' 'ऐऔच्' 'इको गुणवृद्धी' इतिसूत्रस्थभाष्यन्तु पूर्वपक्षस्थत्वात् प्रौढिवाद इति ध्येयम्।' (इति बृहच्छब्देन्दुशेखरे २०० पृष्ठे)।

४. 'कैयटस्तु चिन्त्य एव' (इति बृहच्छब्देन्दुशेखरे ४३ पृष्ठे)।

५. अत्र ३३ पृष्ठस्थो बृहच्छेखरग्रन्थो द्रष्टव्यः।

६ 'शश्छोटीति प्रसंगोच्चारितयिति कैयटेन व्याख्यातम्'। (बृहच्छब्देन्दुशेखरे ५ पृष्ठे)। 'स्पष्टं चेदं प्रकृतसूत्रे हरदत्तग्रन्थे, दृशधातौ माधवग्रन्थे च (तत्रैव ८२ पृष्ठे)। 'स्पष्टं चेदमादेच उपदेशे इत्यस्य भाष्यकैयटादिषु।' (तत्रैव २१ पृष्ठे। 'तदुक्तं हरिणा।' (बृहच्छब्देन्दुशेखरे ७३ पृष्ठे)।

७. 'केचित्तु तदुत्तरकालो…'(बृहच्छब्देन्दुशेखरे २१ पृष्ठे)। 'केचित्तु वैदिकशिक्षयैव…'(बृहच्छब्देन्दुशेखरे ३२ पृष्ठे)।

८, 'व्याप्तिन्यायेन, बहुलक्ष्यसंस्कारानुरोधेन च सर्वस्याऽपि ग्रहणमिति

समग्रहीत्तेषां मतानि । अत एव ग्रन्थेऽस्मिन् शतद्वयादप्यधिकानां ग्रन्थानां, ग्रन्थकर्तॄणां च नामानि, उद्धृता ग्रन्थभागाश्चोपलभ्यन्ते, ते चाध्येतॄणां सौकर्य्यायास्माभिर्ग्रन्थान्ते सपृष्ठाङ्काः पृथङ् निर्दिष्टा राजन्ते ।

स्वमतप्रदर्शनन्तु 'परे तु' 'वस्तुतस्तु' इत्यादिशब्दप्रयोगपूर्वकमेव प्रायशो भट्टनागेशा विदधति । तथा हि—

(क) 'परे तु अस्याऽनुनासिकत्वेऽतोल्रेतिसूत्रे भगवान् पाणिनिर्ल्कारं नोच्चारयेत् । प्रत्याहारेणैव निर्वाहात्' (बृ० शे० ७ पृ०) ।

(ख) 'परे तु 'सेदुष' इत्यादौ पूर्वमिटि, ततः सम्प्रसारणे, 'नाजानन्तर्य्ये' इति निषेधाद्वहिरङ्गपरिभाषाया अप्रवृत्त्या, यणि, बहिरङ्गतयैव सम्प्रसारणाऽसिद्धत्वेन वल्पतरत्वाद्यस्य लोपे, तत्सिद्धिरिति-एषा परिभाषा निष्फला' (—बृ० शे० १३५ पृ०) ।

(ग) वस्तुतस्तेषु 'ञमः क्वी'त्येव पठितुं शक्यम्' । (बृ० शे० ३४ पृ०) ।

वस्तुतो ग्रन्थेऽस्मिन् श्रीनागेशभट्टस्यानन्यक्षुण्णा विचारसरणिः, प्रतिक्षणमभिनवार्थोपस्थापिका कल्पनाशक्तिः, पदे-पदे महाभाष्य-कैयटाद्याकरोक्तिसमुपबृंहिताः सूक्तयः, गभीरार्थप्रतिपादनसमर्थानां शब्दानां यथास्थानं गुम्फनं च कामप्यनिर्वचनीयां विद्वद्धृदयावर्जनीं सुषमां प्रकटीकरोतीति नैव तिरोहितं स्यादेतद्ग्रन्थरत्नपरिशीलनशालिनां विदुषाम् ।

## बृहच्छब्देन्दुशेखरः, शब्देन्दुशेखरो वा ।

अथाऽस्य ग्रन्थस्य नामकरणविषये केचन विद्वांस एवं प्रत्यवतिष्ठते—यत् कस्याऽपि ग्रन्थस्य नामकरणे ग्रन्थनिर्मातैव सर्वसंमतोऽधिकारी भवति । तेन च ग्रन्थकर्त्रा यन्नाम शुद्धमशुद्धं वा, उचितमनुचितमन्वर्थमनन्वर्थं वा ग्रन्थस्य कृतं, न तस्य परिवर्त्तने वर्तते कस्याप्यधिकारः । तथा च संमुद्रय प्रकाश्यमानस्यास्य ग्रन्थस्य मंगलाचरणश्लोके, समाप्तिश्लोके,

प्राञ्चः ।' (बृहच्छब्देन्दुशेखरे ३८ पृष्ठे) ।
'प्राचार्यः इत्यादावव्ययपूर्वपदप्रकृतिस्वरः सिध्यतीति प्राञ्चः ।'
(—बृहच्छब्देन्दुशेखरे ८२ पृष्ठे) ।

१. 'नत्वा फणीशमीशानं कौमुद्यर्थप्रकाशकम् ।
मनोरमोमार्द्धदेहं तन्वे शब्देन्दुशेखरम्' ॥ इति,

२. 'शब्देन्दुशेखरः पुत्रो, मञ्जूषा चैव कन्यका ।
स्वमतौ सम्यगुत्पाद्य शिवयोरर्पितौ मया' ॥ इति,

पुष्पिकायां[1] च 'शब्देन्दुशेखर' इतिनाम्नो ग्रन्थकृत्कृतस्य स्पष्टत उपलम्भात्, 'बृहच्छब्देन्दुशेखर'नाम्ना स्वकपोलकल्पितेन व्यवहरणं, तन्नाम्ना प्रकाशनं च न केवलमनुचितमपि तु ग्रन्थकृतामक्षम्योऽपराधः। अतः शब्देन्दुशेखर-नाम्नैवास्य प्रकाशः संस्कृतविदुषां कृते प्रमोदावहो, न तु केवलं सम्पादक-मनस्सम्भूतेन 'बृहच्छब्देन्दुशेखर'नाम्नेति।

तत्र नामकरणविषये विसंवादवतां विदुषामेष हृदयस्थितो भावोऽभि-ज्ञायते, यत्—(१) 'बृहच्छब्देन्दुशेखर' इति नाम न ग्रन्थकृता कृतम्, (२) नान्यैरपि कैश्चिद्विद्वद्भिः, अपि तु केवलं सम्पादकमनःप्रसूतमेवेतन्नाम। (३) अस्य ग्रन्थस्य केवलमेकमेव नाम ग्रन्थकृता विहितं, तच्च 'शब्देन्दु-शेखर' इत्येवेति।

तत्रेत्थं ते समाधीयन्ते यदस्य ग्रन्थशिरोमणेः 'शब्देन्दुशेखरः' इति ग्रन्थकारकृता संज्ञा इति नात्र विवादावसरः। अयं हि बृहच्छब्देन्दुशेखरो नागेशभट्टस्य प्रथमो ग्रन्थ इत्यग्रे यथावसरं स्फुटो भविष्यति। एतद्ग्रन्थ-निर्माणानन्तरमनेनैव श्रीनागेशभट्टेनास्या एव वैयाकरणसिद्धान्तकौमुद्या द्वितीयं व्याख्यानमेतद्ग्रन्थसारभूतमत एव लघु, लघु[2]शब्देन्दुशेखराख्यं गच्छता कालेन निरमीयत। एवमेकेन लेखकेनैव निबद्धयोर्द्वयोः शेखरयो-र्भिन्ना प्रतीतिः स्पष्टं यथा जायेत, इत्येतदर्थे ग्रन्थकृतैवाऽस्य ग्रन्थरत्नस्य-पुनः 'बृहच्छब्देन्दुशेखर' इत्याख्याप्यकारीति लघुशब्देन्दुशेखरे पूर्वार्द्धान्ते, लकारार्थप्रक्रियान्ते, कृदन्तान्ते च **'विस्तरस्तु बृहच्छब्देन्दुशेखरे द्रष्टव्यः', 'विस्तरस्तु बृहच्छब्देन्दुशेखरे बोध्यः'** इति तल्लिखितेन वाक्येन निश्चीयते। न केवलं लघुशब्देन्दुशेखरे एवापि तु स्वनिर्मिते मनोरमाव्याख्याने ल[3]घुशब्दरत्नेऽपि अस्य ग्रन्थस्य 'बृहच्छब्देन्दुशेखर' इति नाम्नैव व्यवहारो

---

शब्देन्दुशेखरः सोऽयं फणिभाष्योक्तिभूषितः।
सतां हृत्कमलेष्वास्तां यावच्चन्द्रदिवाकरौ' ॥ इति च ॥

१. 'इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते शब्देन्दुशेखराख्ये सिद्धान्तकौमुदीव्याख्याने उत्तरार्द्धे वैदिकप्रकरणं, स्वर-प्रकरणञ्च समाप्तिमगमत्'।

२. 'नत्वा फणीशं नागेशः तनुतेऽर्थप्रकाशकम्।
मनोरमोमार्द्धदेहं लघु-शब्देन्दु-शेखरम्' ॥ इति ॥

३. मनोरमाव्याख्यानस्य लघुशब्दरत्नस्य निर्माणमप्यस्मादेव बृहच्छब्देन्दु-शेखरादुद्धृतेभ्यो मनोरमासमर्थकपाठेभ्यो नागेशभट्टेनैव स्वगुरुनाम्ना कृतमिति उभयग्रन्थविमर्शनशालिधियां न तिरोहितमेतत्।

भट्टनागेशेन विहितो दृश्यते। अतोऽस्य ग्रन्थस्य शब्देन्दुशेखर इव 'बृहच्छब्देन्दुशेखर' इति संज्ञाऽपि नागेशभट्टेनैवाक्रियतेति नात्र सम्पादकमनः प्रसूतत्वं शक्यतेऽवधारयितुम्। अनन्तरं निर्मितस्यास्य लघुरूपस्य व्याख्यानस्य 'लघुशब्देन्दुशेखर' इति संज्ञाकरणमेव, अस्य ग्रन्थस्य 'बृहच्छब्देन्दुशेखर' इत्याख्यां ग्रन्थकर्तुस्तात्पर्य्यं ग्राहयितुमलम्। यतो लघुशब्दस्य सापेक्षिकत्वेन कस्याऽपि बृहतो व्याख्यानस्यावश्यमेव तत्र सद्भावात्। अत एव—

**'नागेशभट्टविदुषा नत्वा साम्बं शिवं लघुः।**
**वैयाकरणसिद्धान्तमञ्जूषैषा विरच्यते॥'**

—इति नागेशभट्टविरचितलघुमञ्जूषा-मङ्गलाचरणश्लोकान्तर्गतशब्दव्याख्याऽवसरे नागेशभट्टप्रधानशिष्याः कलाटीकाकर्तारो वैद्यनाथपायगुण्डेमहोदयाः 'अनेन (नाम्नि लघुशब्दविशेषणेन) गुर्व्यपि एका मञ्जूषा अस्तीति सूचितमि'ति व्याचक्रुः। अत एव सर्वप्रथमं निर्मितस्यास्य ग्रन्थस्य निर्माणावसरे 'शब्देन्दुशेखर' इति सामान्यमेव नाम निर्दिष्टं ग्रन्थकृता, न तु सविशेषणं, लघुशब्दयुक्तं, बृहच्छब्दघटितं वा। लघुशब्देन्दुशेखरस्य प्रणयनानन्तरं तु ग्रन्थकृन्नागेशो बृहच्छब्देन्दुशेखरनाम्नैवामुं व्याजहार, न तु निर्विशेषणेन 'शब्देन्दुशेखर' इति पदेन, इत्यनुपदमेव दर्शितेन प्रमाणेन निश्चितमेव। यत्र कुत्राऽपि परिभाषेन्दुशेखरलघुमञ्जूषादौ, 'शब्देन्दुशेखरे निरूपितम्' इत्यभिधत्ते भट्नागेशः, तत्र प्रायशः सर्वत्रापि शब्देन्दुशेखरपदेन लघुशब्देन्दुशेखरस्यैवोभयोर्वा शेखरयोर्बोधनेच्छयेति तत्तत्स्थलविवेचन-विमर्शादिना सुस्पष्टमेवेति न तिरोहितं विदुषाम्।

अत एव ग्रन्थकर्तुरिच्छामेवानुसरन्तोऽर्वाचीना लघुशब्देन्दुशेखरटीकाकर्तारः प्रसिद्धा विद्वांसः सदाशिवभट्टोदयङ्करपाठकादयोऽमुं ग्रन्थं 'बृहच्छब्देन्दुशेखर' इति नामग्राहं स्वनिर्मितासु सदाशिवभट्टी-ज्यौत्स्न्यादिटीकासु स्थले स्थलेऽस्मार्षुः। तेषु केषांचिदिह विद्वन्मनस्तोषार्थमुद्धरणं नाप्रासंगिकं भविष्यतीति कृत्वा केचन प्रघट्टकाः समुपस्थाप्यन्ते।

प्रायो १८५० विक्रमाब्दे उदयङ्करपाठकेन निर्मितायां लघुशब्देन्दुशेखरटीकायां ज्यौत्स्न्यां बृहच्छब्देन्दुशेखरस्य स्मरणमेवमुपलभ्यते—

(क) 'तमनतिक्रम्येति। सङ्ख्यानं संख्या, क्रम' इति संख्यापदनिर्वचनस्य बृहच्छब्देन्दुशेखरे (२५८ पृष्ठे) कृतत्वाद्भ्रमेणेहापि

पुँल्लिङ्गो निर्दिष्टः। स्त्रीलिङ्गस्य, नपुंसकस्य वा निर्देशस्त्विहोचितः'। (—लघुशेखरटीका ज्यौत्स्नी, पृष्ठे[1] ३६३)।

(ख) 'भाष्योक्तं व्यवस्थापयितुं परानुसारि-बृहच्छेखरोक्तिं (२०० पृष्ठे) दूषयति—लक्षणप्रतिपदोक्तपरिभाषया त्विति'।
(—ज्यौत्स्नी, १७८ पृष्ठे)।

(ग) 'इण्गतावित्यतश्चे'त्यपपाठः, बृहच्छेखरेऽदर्शनात्। (—ज्यौत्स्नी, ४० पृष्ठे)।

(घ) 'उदात्तत्वादीनामिति। अस्य 'वस्तुतः' इत्यादिः। बृहच्छेखरे (२९ पृष्ठे) तथा दर्शनात्।' (—ज्यौत्स्नी, ८५ पृष्ठे)।

(ङ) 'वयन्तु कल्पयामः—अन्त्योदाहरणं पटयतीत्यादीत्युत्तरग्रन्थानन्तरम् 'अत एव' इत्यादिः 'सार्थका'न्तः पाठः। बृहच्छेखरे (५२ पृष्ठे) तथा दर्शनात्'। (—ज्यौत्स्नी, २४२ पृष्ठे)।

एवमेव १८७३ वैक्रमाब्दसमये महोपाध्यायसदाशिवभट्टनिर्मितायां लघुशब्देन्दुशेखरटीकायामपि बृहच्छेखरोल्लेखो दृश्यते। तथा हि—

(क) 'बृहति तु' (२३० पृष्ठे) 'नार्थ' इत्यस्य ई३चाक्रवर्मणस्येत्येतत्सम्बन्धेन, नार्थः=न सकलप्रयोजनसिद्धिरित्यर्थः'।
(—सदाशिवभट्टी ३३२, पृष्ठे)।

(ख) 'बृहच्छेखरे तु (२७८ पृष्ठे) ननु वचनयोर्युगपत्प्रवृत्तौ, क्रमेण वा प्रवृत्तौ एकस्यैव विधानापत्तिः। 'द्वे' इत्यस्य संख्येयपरत्वेन शब्दद्वयस्योच्चारणसाध्यत्वेन, तस्य बुद्ध्यारोहावश्यकत्वात्, 'यर' इति षष्ठ्याः कारकविभक्तित्वस्य न्याय्यत्वाच्च, 'उच्चारण' इत्यध्याहारेणोच्चारणद्वयस्यैव विधेयत्वादिति चेन्न।' (—सदाशिवभट्टी ३८२, पृष्ठे)।

(ग) 'बृहति (९४ पृष्ठे) उपस्थितेरप्युक्तत्वाच्च न क्षोदः'।
(—सदाशिवभट्टी १६७, पृष्ठे)।

(घ) 'इडाया वा इत्युत्तरम् 'इणः षः' इति पठित्वा इष्टसाधनपरो

---

१. सदाशिवभट्टी-ज्यौत्स्नी-चिदस्थिमालादयः प्राचीना लघुशब्देन्दुशेखरटीकाः, आचार्यश्रीगुरुप्रसादशास्त्रिमहाभागैः स्वनिर्मित-'वरवर्णिनी'-त्याख्यया प्रसिद्धया टीकया सह संपाद्य समूलं प्रकाशिता इति, अत्र पृष्ठसंख्या तैः सम्पादितस्य षट्टीकोपेतस्य लघुशब्देन्दुशेखरस्यैव द्रष्टृजनसौकर्य्याय संकेतिता।

बृहच्छेखरस्तु (२९१ पृष्ठे) प्रकाशाशयाऽसमर्थकत्वादनादेय एव'। (—सदाशिवभट्टी, ३१२ पृष्ठे)।

(ङ) 'ध्वनितं चेदं भ्यामादावपीत्युक्त्या बृहति' (—३६४ पृष्ठे)।
(—सदाशिवभट्टी, ७२ पृष्ठे अजन्तपुंलिङ्गे)।

एवमुपस्थापितैः प्राचीनटीकासन्दर्भैः प्रमाणैश्च सिद्धमेतज्जायते यत्—

(१) 'बृहच्छब्देन्दुशेखर' इति संज्ञा ग्रन्थकृतैवास्य ग्रन्थस्य विहिता, लघुशब्देन्दुशेखरादावनयैव संज्ञयाऽस्य ग्रन्थरत्नस्य तेन स्मरणात्।

(२) अन्यैरपि प्रथितैर्विद्वद्भिः सदाशिवभट्टोदयङ्करपाठकादिभिरस्य ग्रन्थमुख्यस्य बृहच्छब्देन्दुशेखरनाम्नैव स्मृतत्वेन सर्वसम्मतैवैषा संज्ञेति। तथा च न केवलमस्मन्मनःप्रसूतमेतन्नामेति सुधीभिर्विभावनीयम्।

एतेन 'बृहच्छब्देन्दुशेखर' इति नाम्ना प्रसिद्धस्याप्यस्य ग्रन्थस्य 'शब्देन्दुशेखर' इति नाम्नैव व्यवहार उचित इति प्रणिगदन्तः समाहिताः।

'व्यावृत्तिर्व्यवहारो वा लक्षणस्य (नामादेः) प्रयोजनमि'ति सिद्धान्तानुसारेण स्पष्टप्रतिपत्तये लघुशब्देन्दुशेखरप्रणयनानन्तरं ग्रन्थकृतैवास्य 'बृहच्छब्देन्दुशेखर' इति नाम्ना व्यवहृतत्वेन, 'शब्देन्दुशेखराभिधेयः प्रायो 'लघुशब्देन्दुशेखर एवे'त्यस्य विदुषां व्यवहारतो निश्चितत्वेन च 'शब्देन्दु-

1. शब्देन्दुशेखरपदेन लघुशब्देन्दुशेखरस्यैव ग्रहणं बोधश्च बहोः कालाज्जायते स्म। अत एव लघुशब्देन्दुशेखर-टीका 'चन्द्रकला'प्रणयनावसरे श्रीभैरवमिश्राः-'शब्देन्दुशेखरस्येयं टीका चन्द्रकलाभिधा'इति श्रीमदुदयङ्करपाठकाः 'शब्देन्दुशेखरज्योत्स्नीमातनोत्युदयङ्करः' इति, श्रीराघवेन्द्राचार्यश्च 'श्रीराघवेन्द्रगुरुणा क्रियते शब्देन्दुशेखरव्याख्या' इति, आचार्याः श्रीगुरुप्रसादशास्त्रिणश्च 'टीकान्तरेषु विश्रान्तिं भजमानेषु कारके। प्रथिमानं परं धत्ते शेखरे वरवर्णिनी' इति प्रत्यपीपदन्। किम्बहुना, स्वयं ग्रन्थकृतो नागेशभट्टा अपि लघुशब्देन्दुशेखरान्ते—

'शब्देन्दुशेखरः पुत्रो मञ्जूषा चैव कन्यका।
स्वमतौ सम्यगुत्पाद्य शिवयोरर्पितौ मया॥
शब्देन्दुशेखरः सोऽयं फणिभाष्योक्तिभूषितः।
सतां हृत्कमलेष्वास्तां यावच्चन्द्रदिवाकरौ'॥

इत्येवं पद्ययुगलेन लघुशब्देन्दुशेखरमेव 'शब्देन्दुशेखर'नाम्ना व्यवहरन्तोऽस्मदभिहितार्थे—'अस्य 'बृहच्छब्देन्दुशेखर' इत्येव नामधेयं ग्रन्थकृत्संमतम्' इत्यत्र स्वीयां सुस्पष्टां संमतिं प्रादर्शयन्।

शेखर' इत्येवाऽस्य नामधेयम्, नायं बृहच्छब्देन्दुशेखरपदवाच्य' इत्याग्रहस्याऽनुचितत्वात् ।

अत एव सर्वेष्वपि विशिष्टेषु पुस्तकालयेषु यत्रास्य ग्रन्थरत्नस्याल्पीयानपि वर्त्ततेंऽशः, तत्र सर्वत्र 'बृहच्छब्देन्दुशेखर'नाम्ना एवास्य पुस्तकसूचीषूल्लेखो दृश्यते, नान्येन नाम्ना, अन्यस्माल्लघुशेखराद् व्यावृत्तेर्व्यवहारस्य चोक्तेनैव नाम्ना संभवात् । 'लण्डन'नगरस्थ-'इण्डिया-आफिस-लाइब्रेरी' नामकपुस्तकालयाल्लब्धस्य 'ग' संज्ञितस्यैतद्ग्रन्थहस्तलिखितादर्शस्य च सर्वेष्वपि पत्रेषु प्रान्तभागे समुपलभ्यमानो 'बृ. श. शे.' इति ग्रन्थनाम्नः संक्षिप्तः सङ्केतः, अन्तिमे तत्सूचीपत्रे च 'बृहच्छब्देन्दुशेखरः' इत्युल्लिखितं सम्पूर्णं नाम च 'अयं ग्रन्थो बृहच्छब्देन्दुशेखरः' इति नाम्नैव प्रसिद्धः' इत्यत्र कामं प्रमाणमुपस्थापयतः ।

एवमेव महाभाष्य-लघुमञ्जूषा-लघुशब्देन्दुशेखरादिव्याकरणशास्त्रग्रन्थसम्पादका व्याकरणशास्त्रेतिहासलेखकाश्च सर्वेऽपि विद्वांसो नागेशभट्टग्रन्थनिर्देशावसरे 'बृहच्छब्देन्दुशेखरः', 'लघुशब्देन्दुशेखरः' इत्येवमेव ग्रन्थनाम्न उल्लेखं व्यदधुः, न तु 'शब्देन्दुशेखर' इति नाम्न उल्लेखम् ।

यत्तु—'यथा भिन्नेन भिन्नेन लेखकेन लिखितयोरेकयैव संज्ञया संज्ञितयोर्द्वयोर्ग्रन्थयोः स्पष्टप्रतिपत्तये लोको ग्रन्थकर्त्तुर्नामधेयम्, अन्यं कंचन वा शब्दं भेदकतयोपादत्ते, यथा 'अमुककृत इतिहासग्रन्थोऽमुककृतश्चे'त्येवम् । परं नैतावता ग्रन्थकर्त्तुर्नाम, अन्यो वा कश्चन शब्दो ग्रन्थनाम्नि समाविष्टो भवति । ग्रन्थनाम तु तदेव यद् ग्रन्थकृता पूर्वं विहितम् । स्पष्टप्रतिपत्तये यत्किमप्यस्माभिरुपादीयते तत् केवलमुपलक्षणमेव[1] स्यान्न तु विशेषणम्[2] । तथैवात्रापि स्पष्टप्रतिपत्तये ग्रन्थकृता, तदनुसारिभिरन्यैश्चोदयङ्करसदाशिवभट्टादिभिश्च ग्रन्थनाम्न्युपादीयमानो बृहच्छब्दो न विशेषणमपि तूपलक्षणमेवेति न ग्रन्थनामघटकतामर्हतीत्यस्य 'शब्देन्दुशेखर' इत्येषैव संज्ञे'तीत्थमपि केचन विद्वांसो व्याहरन्ति ।

तत्तु सूक्ष्मेक्षिकया निभाल्यमाने नेदमुदाहरणम्, प्रकृतेंऽशेनापि संघटत इत्यापातरमणीयमेवैतत् । यतो नात्र द्वौ भिन्नौ भिन्नौ लेखकौ, एकयैव

---

१. अवर्त्तमानत्वे (कादाचित्कत्वे) सतीतरव्यावर्त्तकत्वमुपलक्षणत्वम् । यथा 'काकवन्तो देवदत्तस्य गृहाः' इत्यादि ।

२. विद्यमानत्वे (सार्वदिकत्वे) सतीतरव्यावर्त्तकत्वं विशेषणत्वम् । यथा 'सास्नादिमान् गौः' इत्यादि ।

संज्ञया संज्ञितौ द्वौ ग्रन्थौ वा। 'लघुशब्देन्दुशेखर' इति संज्ञायाः 'शब्देन्दुशेखर' इति संज्ञातः स्पष्टमेव भेदात्। अन्यथा कदाचित् 'लघुसिद्धान्तकौमुदी'ति संज्ञया सिद्धान्तकौमुद्या अपि बोधापत्तिः।

अत्र तु एक एव ग्रन्थः संज्ञाद्वयेन व्यवहृतः, लघुशब्देन्दुशेखरप्रादुर्भावात् पूर्वं 'शब्देन्दुशेखर' इति संज्ञया, लघुशब्देन्दुशेखरनिर्माणावसरे 'बृहच्छब्देन्दुशेखर' इति संज्ञया चेति, नात्र बृहच्छब्दस्योपलक्षणत्वशङ्का; अपि तु 'लघुशब्देन्दुशेखर' इतिवद्'बृहच्छब्देन्दुशेखर'इत्यपि संज्ञान्तरमेव।

इयं 'बृहच्छब्देन्दुशेखर' इति संज्ञा ग्रन्थान्तरस्य 'लघुशब्देन्दुशेखर' इति संज्ञाकरणानन्तरमुद्भाविता, अतः पश्चादुद्भावित्वादस्यामेव ग्रन्थकृदभिमतं वास्तविकं संज्ञात्वमिति तत्त्वविदः।

नन्वेकस्य ग्रन्थस्य शब्देन्दुशेखरमिति संज्ञितस्य पुनः संज्ञान्तरकरणं निरर्थकमिति चेत्, एतद्ग्रन्थवुबोधयिषयोच्चार्यमाणेन 'शब्देन्दुशेखर'इति नाम्ना 'नामैकदेशग्रहणे नामग्रहणमि'ति न्यायबलाद्भ्रमाद्वा कदाचिल्लघुशब्देन्दुशेखरस्य बोधो मा भूदित्येतदर्थमिति गृहाण। उभयोः शेखरयोर्भिन्नभिन्नसंज्ञाकरणानन्तरं तु 'स्यतासी लृलुटोः' इत्यत्र 'उत्सृष्टानुबन्धग्रहणे' इति परिभाषाबलेन 'लृ' इति 'लृङ्लृटोर्ग्रहणमि'तिवत्, उभयोर्लघु-गुरुशेखरयोर्बोधो यत्र कुत्रचिज्जायमानस्तूचित एव स्यात्।

एवं स्थितेऽपि यदि ये केचन 'या खलु संज्ञा ग्रन्थकृता पूर्वं विहिता, तस्याः प्राथम्यात्तयैव व्यवहार उचितः, न त्वनन्तरमुद्भावितये'त्येवमागृह्णीयुः, ते स्वनिर्णये स्वतन्त्रा एवेत्यलमतिप्रसक्त्या।

## अधिगतान्यादर्शपुस्तकानि

तदेवं सर्वगुणगरिष्ठस्य सिद्धान्तकौमुदीसर्व-टीकातिशायिनोऽद्य यावदप्रकाशितस्य बृहतः शब्देन्दुशेखरस्य सम्पादनाय कृतनिश्चयैर्बद्धदृढपरिकरबन्धैरस्माभिरेतल्लिखितादर्शपुस्तकान्वेषणायेतस्ततो भ्रमद्भिः स्वदेशविदेशस्थ-पुस्तकागाराध्यक्षाणां सविधे पत्रादिकं प्रेषयद्भिर्महता प्रयासेन षडेव हस्तलिखितादर्शपुस्तकानि, येषां सम्पादनकार्यसौकर्याय क्रमशः 'क' 'ख' 'ग' 'घ' 'ङ' 'च' इति संकेतोऽत्र विहितः—कथञ्चित्प्रालम्भिषत।

### 'क'पुस्तकम्

तत्र 'क'पुस्तकं काशीस्थमहावैयाकरणकुलक्रमाऽऽगतं, संशोधितं, प्रायः शुद्धं, सुवाच्याक्षरलिखितं, यत्र तत्र रक्तमसीनिर्मितकुण्डलना-

(कोष्ठक)-कुण्डलितपाठसहितं, कृदन्तान्तं, स्वरवैदिकप्रकरणरहितं, द्वितीयाकारकमध्यात् 'अर्थनिबन्धनेयं संज्ञा' इत्यत आरभ्य सप्तमीकारकं यावत् खण्डितं[1], पूर्वार्द्धे (७१८) अष्टादशोत्तरसप्तशतपत्रमुत्तरार्द्धे (२४५) पञ्चचत्वारिंशदुत्तरद्विशतपत्रम्, ११″ × ४¾″ मितदलपरिमाणं, प्रायशः प्रतिपत्रं पञ्चाशद्वर्णयुताभिस्त्रयोदशपङ्क्तिभिर्युक्तैः (९६३) त्रिषष्ट्युत्तरनवशतपत्रैः सम्भृतकलेवरं, विभिन्नाक्षरतया सम्भवतः चतुर्भिः पुरुषैः सम्भूय लिखितं, सर्वोत्कृष्टं वाराणसेयश्रीराजस्थानसंस्कृतमहाविद्यालयप्रधानाध्यक्षाणामाचार्यवर्याणां विश्रुतकीर्त्तीनां श्रीगुरुप्रसादशास्त्रिमहाभागानां स्वीये पुस्तकालये स्थितं परमकारुणिकानां तेषामेवानुकम्पाविशेषेणाऽधिगतमस्माभिः।

इदं च 'क'पुस्तकं नागेशभट्टेनाऽनेकवारं संशोधितस्य बृहच्छब्देन्दुशेखरस्यान्तिमेन परिनिष्ठितेन पाठेनाऽन्वितमिति सर्वादर्शातिशायित्वमस्य 'क'पुस्तकस्य। अत एव यत्रादर्शपाठेषु विप्रतिपत्तिर्भ्रमो, वैपरीत्यं वाऽऽसादितं तत्रास्य 'क'पुस्तकस्यैव पाठाः प्रायोऽस्माभिरादृताः। अत एव चास्य 'क'संज्ञाऽभ्यर्हितत्वादुपदिष्टा।

अथास्य 'क'पुस्तकस्य प्रारम्भोऽन्तिमश्चांशो यथा—

॥ श्रीगणेशाय नमः ॥

**'नागेशः किल नागेशभाषितार्थविचक्षणः।**
**शिवभट्टसुतो धीमानुपाध्यायोपनामकः॥ १॥**
**याचकानां कल्पतरोररिकक्षहुताशनात्।**
**शृङ्गवेरपुराधीश-रामतो लब्धजीविकः॥ २॥**

ग्रन्थसमाप्ति-ग्रन्थप्रचारादि-प्रतिबन्धकविघ्नविघाताय समुचितऋषित्रयनमस्काररूपं मङ्गलमाचरन् शिष्यशिक्षायै, व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति—मुनित्रयमिति'। (—इति प्रारम्भे)।

**'अत्र स्वार्थे द्वित्वम्। पुंस्त्वं लोकात्।**
**शब्देन्दुशेखरे ग्रन्थे पूर्वमर्द्धमपूपुरम्।**

---

१. खण्डितोऽयमंशश्च कुतश्चिदुपलब्धात् 'ग'पाठानुसारिणो 'घ'संज्ञकात् पुस्तकादाचार्यैः श्रीगुरुप्रसादशास्त्रिभिर्लेखकद्वारा लेखयित्वा पूरित इति अत्रत्यः पाठो घपुस्तकपाठत्वेन ग्रन्थेऽत्र स्थले स्थले स्मृतोऽस्माभिः।

प्रीयतां तेन भगवान् शिवया सहितः शिवः ।
शब्देन्दुशेखरः सोऽयं फणिभाष्योक्तिभूषितः ।
सतां हृत्कमलेष्वास्तां यावत्फणिफणे धरा' ॥ २ ॥

'इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते सिद्धान्तकौमुदीव्याख्याने शब्देन्दुशेखराख्ये पूर्वार्द्धं समाप्तम्' ।

(—इति पूर्वार्द्धान्ते) ।

॥ श्रीगणेशाय नमः ॥

'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते इति भाष्याद्युक्तेर्मध्ये कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति—श्रोत्रेति' ।

(—इति उत्तरार्द्धप्रारम्भे) ।

'नाप्युपपदसमास' इति व्यवस्थेति सर्वेष्टसिद्धिः । 'इति श्रीउपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टकृते शब्देन्दुशेखरे सिद्धान्तकौमुदीव्याख्याने कृदन्तं समाप्तम् । तेन श्रीरस्तु' ।

(—इति कृदन्तान्ते च पाठः) ।

अस्मिन् 'क.'पुस्तके यद्यपि लिपिकालो न निर्दिष्टस्तथाऽपि शतद्वयाब्दादधिकं पुरातनं प्रायश इदं भवेदिति पत्राणां जीर्णतयाऽनुमातुं शक्यते ।

## 'ख'पुस्तकम्

स्वरवैदिकप्रकरणान्तं सम्पूर्णमत एव महत्त्वपूर्णं सुवाच्यैर्मनोहरैर्देवनागरैरक्षरैः १७९१ वैक्रमाब्दे लिखितं पूर्वार्द्धे, (१९३) त्रिनवत्युत्तरशतपत्रमुत्तरार्द्धे (१००) शतदलम्, ९½" × ३½"मितपत्रपरिमाणम्, प्रायशः प्रतिपत्रमशीतिवर्णयुताभिः सप्तविंशतिपङ्क्तिभिस्सहितैः (२९३) त्रिनवत्युत्तरद्विशतपत्रैः पूर्णविग्रहं, विपुलपाठं 'ख'पुस्तकमपि तेषामेव विमलयशसामाचार्यश्रीगुरुप्रसादशास्त्रिमहाभागानामहेतुक्यानुकम्पया ग्रन्थस्यास्य सम्पादनसौकर्य्याय तेभ्योऽलभ्यत । इदमेवैकं पुस्तकमासादितेषु सर्वथा पूर्णमन्यानि खण्डितानीत्यस्यैवादर्शस्य ग्रन्थरत्नस्यास्य सम्पादने सर्वाधिकं साहाय्यमस्माभिरासादितमिति निस्संकोचमावेदनम् ।

श्रीनागेशभट्टकृताद्बृहच्छब्देन्दुशेखरस्थपाठशोधन-परिवर्तन-परिवर्द्धन-परिष्कारादितः पूर्ववर्तिनोऽपरिपक्वबुद्ध्या विलिखिताः, अत एव शिथिलयुक्तयः, अरुचिग्रस्ताश्च, (ग्रन्थकृता परिपक्वबुद्ध्यवस्थायां स्वयमेव निस्सारिताः) सर्वेऽपि पाठा ये शोधनानन्तरं 'क'पुस्तके कुण्डलिताः,

खण्डिताः, निस्सारिताश्च, तेऽविकला अत्र 'ख'पुस्तके उपलभ्यन्ते इति 'क'पुस्तकपूर्ववर्त्यादर्शप्रतिकृतित्वमस्येत्यवगम्यते ।

अस्य 'ख'पुस्तकस्य प्रारम्भमध्यान्तपाठा यथा—

श्रीमहागणपतये नमः । श्रीरामाय नमः । श्रीदुर्गायै नमः । श्रीगुरुभ्यो नमः ।

**'नागेशभट्टो नागेशभाषितार्थविचक्षणः ।**
**शिवभट्टसुतो धीमानुपाध्यायोपनामकः ॥ १ ॥**
**याचकानां कल्पतरोररिकक्षहुताशनात् ।**
**श्रृङ्गवेरपुराधीश-रामतो लब्धजीविकः ॥ २ ॥**
**नत्वा फणीशमीशानं कौमुद्यर्थप्रकाशकम् ।**
**मनोरमोमार्द्धदेहं तन्वे शब्देन्दुशेखरम्' ॥ ३ ॥**

(—इति पूर्वार्द्धप्रारम्भे) ।

**'शब्देन्दुशेखरे ग्रन्थे पूर्वमर्धमपूपुरम् ।**
**प्रीयतां तेन भगवान् शिवया सहितः शिवः ॥ १ ॥**
**शब्देन्दुशेखरः सोऽयं फणिभाष्योक्तिभूषितः ।**
**सतां हृत्कमलेष्वास्तां यावत्फणिफणे धरा' ॥ २ ॥**

'इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते सिद्धान्तकौमुदीव्याख्याने शब्देन्दुशेखराख्ये पूर्वार्द्धं समाप्तम् । संवत् १७९१ रक्ताक्षीसंवत्सरे माघमासे सुदीयपक्षे द्वादश्यां भृगौ लिलेख शब्देन्दुशेखरे पूर्वार्द्धम्' । (—इति पूर्वार्द्धान्ते) ।

श्रीवक्रतुण्डाय नमः । मंगलादीनि मंगलमध्यानि मंगलान्तानि च शास्त्राणि प्रथन्ते इति भाष्योक्तेर्मध्ये कृतं मंगलं शिष्यशिक्षायै निबध्नाति–श्रोत्रेति' । (—इत्युत्तरार्द्धादौ) ।

'नाप्युपपदसमास इति व्यवस्थयैव सर्वेष्टसिद्धिः । इति श्रीउपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टकृते शब्देन्दुशेखरे सिद्धान्तकौमुदीव्याख्यायां कृदन्तं समाप्तम्' ।

'श्रीमंगलमूर्तिर्जयति । श्रीरामो विजयतेतराम् । शुभमस्तु । लिखितमिदं कृदन्तटिप्पणं संवत् १७९१ माघवदीशिवरात्रिदिने समाप्तिमगमत् ।' (—इति कृदन्तान्ते) ।

'पद्यादींस्तु द्व्युदात्तानामसंहितवदुत्तरान्' इति विशेषवचनात् ।

**'शब्देन्दुशेखरः पुत्रो मञ्जूषा चैव कन्यका ।**
**स्वमतौ सम्यगुत्पाद्य शिवयोरर्पितौ मया ॥ १ ॥**

**शब्देन्दुशेखरः सोऽयं फणिभाष्योक्तिभूषितः ।**
**सतां हृत्कमलेष्वास्तां यावच्चन्द्रदिवाकरौ' ॥ २ ॥**

'इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टरचिते शब्देन्दुशेखराख्ये सिद्धान्तकौमुदीव्याख्याने उत्तरार्द्धे वैदिकप्रकरणं स्वर-प्रकरणं च समाप्तिमगमत्' । (—इति च सर्वान्ते पाठः) ।

एतत् 'ख'पुस्तकाधारेणैकमुद्रणार्ह-पत्र-सञ्चिका (प्रेस-कापी) अस्माभिः-कारिता, अस्यैव प्रचुरपाठवत्त्वात् ।

## 'ग'पुस्तकम्

त्रिषु खण्डेषु नद्धमर्वाचीनैः संस्कृतानभिज्ञैः त्वरायुक्तैर्बहुभिर्लेखकैः कुत्रचित्स्पष्टैः, बहुत्र च भ्रामकैर्देवनागराक्षरैर्लिखितमशुद्धिबहुलमशोधितं यत्र तत्र मात्राक्षर-पद वाक्य-परिभ्रष्टपाठमेतदाधारेण सम्पादनकार्यस्य पाठ-निर्धारणस्य च कर्त्तुमशक्यत्वेन व्यवहारानर्हमपि भट्टनागेशकृतस्य बृह-च्छब्देन्दुशेखरपाठशोधन-परिवर्तन-परिवर्द्धन-परिष्कारादेः साक्षिभूतमत एव विशिष्टाया एकस्या अवस्थायाः प्रातिनिध्यमाचरत्प्रायशः (प्रतिपत्रं) पञ्चाशद्वर्णघटितत्रयोदशपङ्क्तिविराजितं, १२″×४½″ मितपत्रपरिमाणं, प्रान्तभागे' बृ.श.शे.' इति लिखितैर्वर्णैः 'बृहच्छब्देन्दुशेखराख्योऽयं ग्रन्थः' इति स्पष्टमुद्घोषयद्भिर्युतं, सुपुष्टैः चिक्कणैर्नवीनैरनेकवर्णैः (७९४) चतुर्नवत्यु-त्तरसप्तशतपत्रैर्विभावितवष्मोऽपि वैदिकप्रकरणान्तमत एवापूर्णं 'ग' पुस्तकमे-तत् पारेसमुद्रं 'लण्डन'नगरस्थात् 'इण्डिया-आफिस-लाइब्रेरी' नामकात्सु-प्रसिद्धात्पुस्तकागारात्तत्रत्यानां व्यवहारचतुरशिरोमणीनां पुस्तकालयस्यास्य संचितस्य यशसः संरक्षणाय, तत्परिवर्द्धनाय च प्रतिक्षणं दत्तावधानानां, पाठकारुन्तुद-निरर्थकाभिनिवेशरहितानां, पुस्तकालयाध्यक्षाणां हृदयावर्ज-केनानुकरणीयेनान्यत्राननुभूतेन च सौहार्देन प्रभावितान्तःकरणैरस्माभिः प्रालम्भि ।

'ग'पुस्तकस्यास्य विवरणम् 'इण्डिया-आफिस-पुस्तकालय'-सूचीपत्रे एवं लिखितं दृश्यते—

**660-662.**

**1504, 1505, 1513.** Size 12 in. by 4.5 in.; fairly written, in Devanāgarī by different recent hands; 8-13 lines in a page.

[*Brihat-*] *Śabdenduśekhara*, a commentary on the

*Siddhāntakaumudī*, by *Nageśabhaṭṭa*, son of *Śivabhaṭṭa* (surnamed *Kāla*) and *Satī*.

Vol. i. and ii., foll. 278 and 277 resp.; numbered 1–553 (three consecutive leaves being marked 106). The *Pūrvārdha*. It begins :

'नागेशभट्टो नागेशभाषितार्थविचक्षणः ।
शिवभट्टसुतो धीमानुपाध्यायोपनामकः ॥
याचकानां कल्पतरोररिकक्षहुताशनात् ।
शृङ्गवेरपुराधीशरामतो लब्धजीविकः ॥
नत्वा फणीशमीशानं कौमुद्यर्थप्रकाशकम् ।
मनोरमोमार्द्धदेहं तन्वे शब्देन्दुशेखरम् ॥

ग्रन्थसमाप्तिग्रन्थप्रचारादिप्रतिबन्धकविघ्नविघाताय समुचितऋषित्रय-नमस्काररूपं मङ्गलमाचरन् शिष्यशिक्षायै व्याख्यातृश्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति । मुनित्रयमिति ।

The *kāraka* (or *vibhaktyarthāḥ*) begins fol. *253b*; the *samāsa*, fol. 318*b*; the *taddhita*, fol. 421; the *dvirukta*, fol. 544.

It ends :

'शब्देन्दुशेखरे ग्रन्थे पूर्वमर्धमपूपुरम् ।
प्रीयतां तेन भगवान् शिवया सहितः शिवः ॥
शब्देन्दुशेखरः सोऽयं फणिभाष्योक्तिभूषितः ।
सतां हृत्कमलेष्वास्तां यावत्फणिफणाधरौ ॥

इति श्रीकालोपनामकशिवभट्टसुत-सतीगर्भज-नागेशभट्टविरचिते सिद्धान्त-कौमुदीव्याख्याने [1]शब्देन्दुशेखराख्ये पूर्वार्धं समाप्तम्' ॥

Vol. iii, foll. 239; the *Uttarārdha*, in three parts, each with a separate numbering of leaves; viz, *tiṅanta*, foll. 154 : इति श्रीशिवभट्टसुत-सतीगर्भज-नागोजीभट्टविरचिते शब्देन्दुशेखरे तिङन्तं समाप्तम् ॥ *vaidikī prakriyā*, foll 20, not quite complete at the end of the eighth or last adhyāya, *kṛdanta*, foll. 65.

In the margin of the last leaf of vol. ii, as well as in the

१. 'शब्देन्दुशेखराख्ये' इति शुद्धः पाठः ।

*sūcīpattras* (one loose leaf in each of the first two volumes, and two in vol. iii), the work is called *Vṛihacchabdendu-śekhara*, as indeed it also is done in the author's shorter work the *laghuśabdenduśekhara* (see below).

[H. T. Colebrooke.]

पुस्तकमिदं प्रायशः 'क'पुस्तकपाठान् अनुसरति; परन्तु 'क'पुस्तक-पाठशोधनानन्तरमस्याऽऽविर्भावाद्ये खलु पाठाः 'क'पुस्तके रक्तमस्या कुण्डलितास्ते नात्रोपलभ्यन्ते। अर्थात् 'ख'पुस्तके ये पाठा मूले ग्रन्थघटकतयोल्लिखितास्ते 'क'पुस्तके रक्तमस्या कुण्डलितास्त एव च कुण्डलिताः पाठाः पुस्तकादस्मात् 'ग'संज्ञकात् प्रायशो निस्सारिताः। कुत्रचिच्च 'क'-कुण्डलिता अपि पाठा अत्र कुण्डलनारहिता ग्रन्थघटकतया दृश्यन्ते इति 'ख'पाठानुसारित्वमप्यस्य न व्याहतम्। स्थले स्थले हल्सन्धि-विसर्ग-सन्धि-स्वादिसन्ध्यजन्त-कारक-समास-तद्धित-तिङन्तादौ पूर्वतनाः, शिथिल-युक्तग्रोऽरुचिग्रस्ताः, 'क'-'ख'पुस्तकपाठेभ्योऽतिप्राचीनाः, अत एव 'क'-'ख'पुस्तकयोरवर्तमानाः, तत्तत्स्थानीय'क'पाठतो भिन्नाभिधेयाः, विरुद्धा अपि पाठा उपलभ्यन्ते। मात्राभङ्गादिदोषयुक्तैर्भ्रामिकाक्षरैर्लिखितानामेतेषामशुद्धिशङ्कुलानां पाठानामुपलब्धादर्शेष्ववर्तमानत्वात्तादृशपाठवतोऽन्यस्य शुद्धस्यादर्शपुस्तकस्याऽनुपलब्धेर्वास्तविकपाठनिर्धारणार्थं महान्तं क्लेशमनुभवद्भिः कथं कथमपि महताऽऽयासेन यथामति तेषामुद्धारः, टिप्पण्यां संयोजनं, संगमनञ्चाऽस्माभिस्सम्पादितमिति सहृदया एवाऽस्य परिश्रमस्य महत्त्वमनुभविष्यन्तीति किमधिकं स्वयं तदभिधानेन।

आदर्शपुस्तकान्तरप्राप्त्यभावाद् दूयमानमानसैरस्माभिरावेदितसकल-वृत्तान्तानां, हैयङ्गवीनहृदयानां, गुणैकपक्षपातिनां, सुरभारत्युद्धाराय बद्धपरिकराणामुत्तरप्रदेशमुख्यमन्त्रिणां श्रीसम्पूर्णानन्दमहाभागानामहेतुक्या विशेषानुकम्पाया: प्रभावेणैव कथं कथमप्यन्यान्यपि त्रीणि खण्डिताऽऽदर्श-पुस्तकानि क्रमशः 'घ'-'ङ'-'च'-इत्याख्याभाञ्जि वाराणसेय-सरस्वतीभवन-पुस्तकागारादपि प्राध्यगम्यन्तास्माभिः।

## 'घ'पुस्तकम्

'तेषु 'घ'पुस्तकमिदमव्ययीभावसमासप्रकरणादारभ्य पूर्वार्द्धान्तं, खण्डितं १७६१ वैक्रमेऽब्दे सबलदासपुत्रगनेसदासेन लिखितं, प्राचीनं, मध्ये मध्ये खण्डितबहुपत्रं च वर्तते।

अस्य पुस्तकस्य पृष्ठसंख्याया (१) एकसंख्यातः प्रचलितत्वेनानुमीयते यदिदमव्ययीभावसमासत एव प्रारब्धलेखमासीदथवाऽस्य कारकान्तः प्रथमोऽपि भागोऽनुपलम्भाल्लुप्त इति । अस्यान्तिमस्य पत्रस्य संख्या (२६६) षट्षष्ट्युत्तरद्विशतं वर्तते । पत्रेषु चैतेषु ४५, ४६, ४७, ४८, ४९, ५०, ५१, ५२,५३, ६०, ६१, १४४, १४५, १४६ संख्याङ्कितानि दलानि नोपलभ्यन्ते। पत्राणां परिमाणं १३'×५" वर्तते। तेषु प्रतिपत्रं प्रायशः १० पङ्क्तयः, प्रतिपङ्क्ति च ६० अक्षराणि दृश्यन्ते। अथास्याऽऽदर्शपुस्तकस्य प्रथमयोर्द्वयोरपि पत्रयोर्विदीर्णतया प्रारम्भे कियानपि पाठो वाचयितुमशक्यः संवृत्तः। पृष्ठादेकस्मादारभ्य (९४) चतुर्नवतिपर्य्यन्तं, चतुर्विंशत्युत्तरशतसंख्याकादारभ्यान्तिमपत्रं यावद् एकेनैव लेखकेन प्राचीनेषु पत्रेषु समानाक्षरैर्लिखितमिदं पुस्तकमवशिष्टभागे च नवीनपत्रं विभिन्नलेखमपि प्रतिभाति। केनाऽपि कारणेन खण्डितोऽयमस्यांशस्तदानीन्तनेन केनाऽपि विदुषा पूरित इति सम्भाव्यते। तथा चेत्थमिदं प्रारभ्यते—

**'समर्थः पदविधिः। विधिशब्दः कर्मसाधनः। शेषषष्ठ्या समास इत्यभिप्रेत्याह—पदसम्बन्धीति।'**

इत्थं च समाप्यते—

**'अत्र स्वार्थे द्वित्वं पुंस्त्वं लोकात्।**

**शब्देन्दुशेखरे ग्रन्थे पूर्वमर्धमपूपुरम्।**
**प्रीयतां तेन भगवान् शिवया सहितः शिवः॥**
**शब्देन्दुशेखरः सोऽयं फणिभाष्योक्तिभूषितः।**
**सतां हृत्कमलेष्वास्तां यावत्फणिफणे धरा'॥**

**'इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते सिद्धान्तकौमुदीव्याख्याने शब्देन्दुशेखराख्ये पूर्वार्द्धं समाप्तम्। शुभमस्तु। संवत् १७६१ लेखक शबलदास क बेटा गनेशदास। समाप्त।'**

## 'ङ' पुस्तकम्

'ङ' पुस्तकमिदं १०½"×४॥। परिमितैः(३०८)अष्टोत्तरत्रिशतसंख्याकैर्नवीनैः पत्रैर्युतमव्ययीभावसमासादारभ्य स्वरवैदिकप्रकरणान्तमेकेनैव लेखकेन लिखितं, 'ख' पुस्तकपाठानुसारीति नाऽतिमहत्त्वपूर्णम्, (१८००) अष्टशतोत्तरसहस्रमिते वैक्रमेऽब्दे लिपिकृतमन्यादर्शसमाद्यन्तभागं, तस्यैवाब्दस्य फाल्गुनशुक्लद्वितीयायां शनिवासरे समाप्तलेखं च वर्तते। अत्र च

प्रतिपत्रमेकादशपङ्क्तयः, प्रतिपङ्क्ति च (५२) द्वापञ्चाशदक्षराणि सन्ति। 'ख'पुस्तके यत्र यदक्षरं, पदं पंक्तिर्वा नास्ति, तदेवास्मिन् 'ङ'पुस्तकेऽपि तथैव खण्डितमुपलभ्यत इति शुद्धपाठनिर्णये नानेन पुस्तकेनेषदप्यस्माकं साहाय्यमाचरितमित्युक्तकल्पमपीदं स्थाने स्थानेऽस्माभिष्टिप्पण्यादौ क्वचिदुपयुक्तमेव।

## 'च'पुस्तकम्

पुस्तकमिदं 'च'संज्ञकं हल्सन्धि-विसर्गसन्ध्यजन्ताव्ययीभावसमासप्रकरणसम्बन्धिनां कतिचन स्फुटपत्राणां विभिन्नैर्लेखकैर्विभिन्नकालिकेभ्यः पुस्तकेभ्यो लिखितानां (१३३) त्रयस्त्रिंशदुत्तरशतसंख्याकानां संग्रहमात्रमेव। नात्र किमपि प्रकरणं सादि, सान्तं चोपलभ्यते, न वा लेखकनाम-लिपिकालौ। अत्रत्याः पाठाः कुत्रचित् 'क'पुस्तकपाठानुसारिणः, कुत्रचित् 'ख'पुस्तकपाठानुसारिणः, कुत्रचिद् 'ग'पुस्तकपाठानुसारिणः, कुत्रचित्स्वतन्त्राः, क्वचित्सकलादर्शविलक्षणाश्च। परं च सम्पूर्णस्यैकस्याऽपि प्रकरणस्याऽनुपलम्भात् संग्रहपुस्तकमिदं 'च'संज्ञितमपि पाठशुद्ध्यशुद्धिनिर्णये विशेषतः कमप्युपयोगं नाऽभजत्।

मद्रासप्रदेशस्थे 'गवर्नमेण्ट-ओरिएण्टियल-मैनुस्क्रिप्ट-लाइब्रेरी, ट्रिप्लिकेन' इत्याख्ये हस्तलेखागारे देवनागराक्षरैर्लिखिताः षट्, तेलुगुलिप्यां लिखिताः त्रयः, 'ग्रन्थ'मातृकाभिर्लिखितौ द्वावित्येकादश खण्डिता हस्तलेखा अस्य ग्रन्थस्य सुरक्षिता इति तत आदर्श-पुस्तक-प्राप्त्यर्थं स्वातन्त्र्येण, उत्तरप्रदेशराज्यद्वारा च प्रयतमानैरप्यस्माभिः साफल्यं नैवालभ्यत।

तथा चैकेन सम्पूर्णेनादर्शेनापरैश्च खण्डितैरादर्शैः पृथक्-पृथग् नानाविधपाठयुतैः शुद्धपाठनिर्धारणे साहाय्यमनाचरद्भिः, परिष्कृताऽपरिष्कृतपरिनिष्ठिताऽपरिनिष्ठितपाठसङ्कुलैरक्षरविलोपमात्राभङ्गादिलेखककृतदोषसम्भृतैश्च बृहतः शब्देन्दुशेखरस्य व्याकरणशास्त्रमूर्धन्यतयाऽतिकठिनस्य सम्पादने भृशमायस्यद्भिरस्माभिः कियान् क्लेशः, कीदृशावायासखेदौ चान्वभाविषतेति सहृदयैकसंवेद्योऽयं प्रसङ्गः। अथाऽपि भगवद्गुरुचरणकृपया यथामति निर्व्यूढोऽयं भार इति प्रसीदत्येव नश्चेतः।

### अत्रत्याः पाठभेदाः

अज्ञैर्विज्ञैर्नानाविधैर्लेखकैस्त्वरया, शान्त्या, सानुसन्धानमर्थावगम-

पुरस्सरम्, यथा तथा वा समये समये विलिखितेष्वेकस्यैव ग्रन्थस्य विभिन्नेषु हस्तलेखेषु भ्रमप्रमादविप्रलिप्साकरणाऽपाटवादिमनुष्यस्वभावसुलभदोषाद्धेतोरक्षर-पदपङ्क्तिवाक्यविलोप-व्यन्ययोपजननां सम्भवात्, प्रायशः सर्वेष्वपि पुरातनेषु ग्रन्थेषु देश-काल-कृताः पाठभेदाः समुपलभ्यन्ते। एते च भेदाः कुत्रचिद्वर्णे, कुत्रचित्पदे, यत्र कुत्रचिद्वाक्यसमुदायेऽपि च दृष्टिपथमायान्ति। प्रक्षिप्ताः पाठाः, प्रकरणानि च तद्ग्रन्थस्य ततोऽपि प्राचीनैः प्रामाणिकैर्हस्तलेखैरिमे नैतद्ग्रन्थघटका इति निर्धार्य्यन्ते च।

परन्त्वत्र बृहच्छब्देन्दुशेखर उपलभ्यमाना पाठभेदा न देश-काल-लेखककृताः, न वा प्रक्षिप्ताः; अपि तु स्वेनैव ग्रन्थकर्त्रा श्रीनागेशभट्टेन यथायथं स्वबुद्धयैवोद्भाविता इति वैशिष्टयमेतेषां पाठभेदानाम्।

एतेषामुपलब्धानामादर्शपुस्तकानां गभीरानुशीलनेनैतत्सुस्पष्टतां भजते यत्—

यथा यथाऽयमभिनवग्रन्थलेखको विद्वत्तरुणो ग्रन्थाभ्यासादिना, शास्त्रार्थादौ नवीन-कोटि-कल्पना-श्रवणादिना च सदसद्विवेकिन्या बुद्धेः परां कोटिं पस्पर्श, तथा तथा स्वलिखिताभिरेव कोटिकल्पनाभिस्तुष्टः सन् समये समये ग्रन्थेऽस्मिन् स्वविचारशोधनं, व्याख्यानपरिवर्तनं, सिद्धान्तभेदं, समासशैल्यनुसरणञ्चाकार्षीत्।

तदित्थं सम्पूर्णोऽयं ग्रन्थो ग्रन्थकृता सप्तवारमवश्यमशोध्यत, ततोऽप्यधिकवारं वेत्यप्यन्यादर्शपुस्तकलाभान्तरमेव निश्चेतुं शक्येत। अत एव एकस्मिन्नादर्शपुस्तके यः सिद्धान्तो ग्रन्थकृता युक्तिभिः स्थिरीकृतः, स एवाऽन्यस्मिन्नादर्शपुस्तके ततोऽपि विशिष्टाभिर्युक्तिभिस्तेनैव खण्डितः, संक्षेपेण वा निरूपितोऽप्युपलभ्यते। न कोऽपि लिपिकारोऽध्येताऽध्यापको वान्यस्य ग्रन्थघटकस्य पाठस्य सिद्धान्तस्य वा खण्डनं, स्वाभिमतपाठं तद्ग्रन्थघटकतया कर्त्तुं, न वा संक्षेप्तुमलं, नैव चैषा परिपाटी क्वचिद् दृष्टा, आदृता वा दृश्यते विद्वद्भिः।

ग्रन्थरत्नस्याऽस्य बहूनां हस्तलेखानां समये समये स्वाध्ययनं समाप्य स्वगृहं प्रत्यावर्तमानैश्छात्रैरन्यैरपि व्याकरणशास्त्रसेविभिः पण्डितैः काशीतो बहिर्नीतत्वाद् ग्रन्थकृता श्रीनागेशभट्टेनाऽपि विधीयमानानीमानि परिशोधनपरिवर्तन-संक्षेपादीनि न सर्वेषु हस्तलेखेषु समावेशमभजन्। अत एवास्य ग्रन्थस्योपलभ्यमानेषु सर्वेष्वप्यादर्शपुस्तकेषु महान् पारस्परिकः सैद्धान्तिको

भेदो, ग्रन्थे न्यूनाऽऽधिक्यं च गोचरतामुपयाति। एतदर्थमेव क्रियासमभिहारकृतेन शोधनेनाप्यपरितुष्यन् ग्रन्थकार एतस्यैव ग्रन्थस्य सारभूतमर्थगभीरं लघुशब्देन्दुशेखराख्यमपरमपि ग्रन्थरत्नं समासशैल्या विरचयामास।

## अधिगतानामादर्शपुस्तकानां पौर्वापर्यं सम्बन्धश्च

ग्रन्थशिरोमणेरस्य बृहच्छब्देन्दुशेखरस्य सम्पादनायाधिगतानां षण्णामपि पुस्तकानां पौर्वापर्य्यस्य, तेषां पारस्परिकस्य सम्बन्धस्य च निर्णयायैतेषां हस्तलेखानां द्वयोर्वर्गयोर्विभाग आवश्यकः। यतो हि पुस्तकेष्वेषु पुरातनानामाचार्याणां ग्रन्थावलोकनादिभिस्तन्मताक्रान्तबुद्धिना, अत एवापहृतस्वतन्त्रविचारशक्तिना, नागेशभट्टेनापरिपक्वशेमुषीकेन निर्णीतानां सिद्धान्तानामुपस्थापका एके, किञ्च पुनः पुनर्महाभाष्य–प्रौढमनोरमा–बृहच्छब्दरत्नादिनवीनग्रन्थानामालोडनेनावस्थायाश्च परिपाकात्संजातपरिनिष्ठितविचारेण, स्वतन्त्रविचार–विमर्श–सामर्थ्यवता, स्वनवीनसिद्धान्तस्थापनप्रवणेन, वैयाकरणशिरोमणिना, श्रीनागेशभट्टेन प्राङ्निर्णीतस्वसिद्धान्तप्रभञ्जकानां नवीनानां सिद्धान्तानां, व्याख्यानानाञ्चापेक्षिकेन संकोचेनोपस्थापका अन्ये, इति द्विविधाः पाठाः समुपलभ्यन्ते।

तथा च प्रथमे खलु वर्गे ग्रन्थस्यास्य 'घ', 'च', 'ङ', 'ख' इति संज्ञितानि चत्वार्यादर्शपुस्तकानि प्रवेशं लभन्ते, प्राचीनपाठप्रतिनिधिभूतत्वात्। द्वितीये च वर्गेऽवशिष्टे 'क', 'ग' संज्ञिते द्वे अप्यादर्शपुस्तके समागच्छतः, ययोः प्रथमवर्गाश्रितानां सर्वेषामप्युपलब्धानामादर्शपुस्तकानां पाठाः स्थले स्थले खण्डिताः, परिवर्त्तिताश्च समुपलभ्यन्ते।

प्रथमवर्गीयाणां चतुर्णामप्यादर्शपुस्तकानां सूक्ष्मेक्षिकयाऽऽलोचने सुनिश्चितमेतज्जायते यद्ग्रन्थकृन्नागेशो ग्रन्थममुं संशोधनमिषेण शनैः शनैः सङ्कोचयामास[१]। अत एव 'च' पुस्तकापेक्षया 'ङ' पुस्तके, 'ङ' पुस्तकापेक्षया

---

१. यथा–(बृ० शे० २८५ पृष्ठे) 'सेनासुरेति। चद्वयं श्रूयेतेति भावः। महाप्राणछकारोच्चारणापेक्षया चकारद्वयोच्चारणं लघीयो मन्यते। ध्वनितं चेदं 'तस्मिन्निति निर्दिष्टे' इत्यत्र कैयटे। वैकल्पिकेष्वपि भावानुष्ठानस्यैवौचित्यं, फलाधिक्यायेत्यप्याहुः। यत्तु 'सन्निपातपरिभाषया छस्य चर्त्वाप्रवृत्तौ छकारोपरि चकारः श्रूयेते'ति तन्न। चर्त्वस्यासिद्धतया तत्परिभाषाया अप्रवृत्तेः। तथा च इत एव ज्ञापकाद् व्याख्यानाद्वा 'षष्ठयर्थे इयं पञ्चमीति बोध्यम्' इत्ययं पाठः केवलं 'च' पुस्तक एव। अन्येषु तु ततो लघीयान्, भिन्नः, अंशतो विरुद्धश्च पाठो दृश्यते, स च मूलादेवावगन्तव्यः।

'घ'पुस्तके, एतदपेक्षया च 'ख'पुस्तके पाठानां स्वल्पता दृष्टिपथमवतरति। येन ग्रन्थकर्त्तुरुत्तरोत्तरक्रमेण प्रौढत्वं, लेखनपाटवं च स्पष्टतामुपयाति। तथा च 'च'पुस्तकमिदं बृहच्छब्देन्दुशेखरस्य सर्वप्रथमं रूपमुपस्थापयति। तदनन्तरं ग्रन्थकृता संशोधितं सत् 'ङ'पुस्तकरूपतां दधौ। पुनः परीक्षण-परिवर्तनेन 'घ'रूपमुपगतः, शनैः शनैः 'ख'पुस्तकस्वरूपं च जगृहे' इति नानारूपधरोऽयं ग्रन्थः, स्वस्य स्थिर-निश्चितरूपस्यानवाप्त्या मन्ये न लघु-शब्देन्दुशेखर इव प्रकामं प्रचारमभजत्।

'ख'पुस्तकादृते कवर्गीयाणां त्रयाणामपि पुस्तकानां खण्डितत्वा-न्नैतैस्तात्कालिकं ग्रन्थस्य प्राक्तनं स्वरूपं शक्यते निर्धारयितुमिति खेदाव-होऽयं विषयः।

'ख'पुस्तकस्य तु सर्वथा पूर्णत्वादस्मिन्न केवलं नागेशभट्टकृतानि तात्कालिकानि परिवर्तन–परिवर्धन-परिशोधनादीन्येव प्रत्यक्षतामुपयान्त्यपि त्वेतत्खपुस्तकस्थपाठस्य स्वस्वनिर्माणकालप्रतिनिधिभूतानामवशिष्टानां त्रयाणामपि खण्डितादर्शपुस्तकानां पाठैः सह तुलनया तत्तदवसरे ग्रन्थकृता संशोध्य संशोध्य निर्धारितस्य तस्य तस्य ग्रन्थस्वरूपस्य साध्वनु-मानमप्युपपद्यते।

तथा च प्रथमे वर्गे 'ख'पुस्तकमेव सर्वातिशायिसौभाग्यं भजते। 'ङ'-पुस्तकं तु प्रायशः 'क'पुस्तकमेवानुसरति, न तु तत्र कश्चन मौलिको भेदः। यथा प्रागवोचाम, 'ख'पुस्तके या त्रुटिः, या पदवर्णहानिरक्षरभ्रमो वा, स सर्वोऽप्यत्रापि तथैवोपलभ्यत इत्याश्चर्यकरं साम्यमेतयोः। तथापि यत्र कुत्रचिदनयोर्भेदोऽपि परिलक्ष्यत एव।

'घ'पुस्तकं 'च'पुस्तकापेक्षयाऽर्वाचीनमप्यन्येभ्यः प्राचीनमिति तत्रत्य-पाठानामनुशीलनेन निर्धार्यते। इदमप्याश्चर्यकरमेव यत्–यत्र कुत्रचित् 'ख'-'घ'पुस्तकयोः साम्यम्, कुत्रचित् 'क'-'घ'पुस्तकानां, कुत्रचिच्च चतुर्णामपि, एवमेव तथैव तयोस्तेषां वा परस्परं भेदोऽपि। अत एवात्र प्रतिपदं पाठ-भेदा उपलभ्यन्ते। ते चात्रास्माभिर्यथाशक्ति तत्तत्पुस्तकनामनिर्देशपूर्वकं टिप्पणीस्थाने योजिता अनुशीलनकर्तॄणां सौकर्य्याय।

द्वितीयवर्गीययोः 'क''ग'पुस्तकयोर्मध्ये 'क'पुस्तकमेव सर्वथा विशिष्ट-मादरार्हं च विद्यते। अस्मिन्नुपलभ्यमानाः सर्वेऽपि पाठाः प्रामाणिकाः, युक्तियुक्ताः, नागेशभट्टस्य परिपक्वबुद्धेर्द्योतकाः, गम्भीरार्थाश्च वर्तन्ते।

मन्यामहे, 'क'पुस्तके उपलभ्यमानमेवास्य बृहच्छब्देन्दुशेखरस्यान्तिमं, संशोध्य ग्रन्थकृता स्थिरीकृतं च रूपं विद्यत इति। एतत्कपुस्तकस्थित-पाठानां संशोधितस्यान्यस्य स्वरूपस्यानुपलम्भात्, बृहच्छब्देन्दुशेखरानन्तरं रचितेपु लघुशेखरभाष्यप्रदीपोद्द्योतादिषु 'क'पुस्तकानुमोदितपाठानामेव दर्शनाच्च 'क'पुस्तकस्थस्वरूपमेव बृहच्छब्देन्दुशेखरस्यान्तिमं रूपमिति निर्णयमेव द्रढयति।

'ग'पुस्तकं तु 'क'पुस्तकस्यैव द्वितीयं रूपमिति न 'क'पुस्तकस्थ-पाठेषु स्थिरीकृतस्य ग्रन्थस्वरूपस्य भेदस्तत्र सम्भाव्यते। इयानेव 'क'-'ग'-पुस्तकयोर्भेदो यत् 'क'पुस्तके ये खलु पाठाः, यावन्तो वर्णा वा रक्तया मस्या कुण्डलिताः प्रायस्ते सर्वेऽपि 'ग'पुस्तकान्निःसारिताः। तेषां च तत्रा-नुपलम्भादेवमनुमीयते यत्कदाचिदस्मादेव 'क'पुस्तकादेतदाधारभूतादन्य-स्माद्वा कस्माद्यदाऽस्य 'ग'पुस्तकस्य लेखनमभूत्तदा लेखकेन 'कुण्डलान्त-र्गता पाठा हेया एव' इति बुद्धया ते परित्यक्ता इति। ये च पाठाः 'क'-पुस्तके कुण्डलिताः परं 'ग'पुस्तके नोपलभ्यन्ते तेषां, 'क'कुण्डलितः पाठः' इत्येवंरूपेणोल्लेखोऽस्माभिर्विहितोऽत्र प्रतिपदं टिप्पण्यां दृष्टिपथमुपयास्यति विदुषाम्।

तथा च, यथा प्रथमे वर्गे 'ख'पुस्तकं मुख्यं, तथैव द्वितीये वर्गे 'क'-पुस्तकं प्रधानमित्येतयोः 'क'-'ख'पुस्तकयोः परस्परसम्बन्धस्य च निर्णये क्रियमाणे सर्वेषां पौर्वापर्य्ये, पारस्परिकः सम्बन्धश्च स्वयमेव निर्णीतौ स्यातामिति तदर्थमेव प्रयतामहे।

'क'पुस्तके हि प्रायशः सर्वेषामेव प्रथमवर्गीयाणां 'ख' 'घ' 'ङ' 'च' पुस्तकानां पाठा यत्र तत्र प्रबलाभिर्युक्तिभिः खण्डिता उपलभ्यन्ते। यो हि खलु सिद्धान्तः प्रथमवर्गीयान्यतमादर्शपुस्तके निर्धारितः, सोऽप्यत्र 'क'-पुस्तके खण्डितो ग्रन्थकृतेत्यहो नागेशभट्टस्य बुद्धेः समये समये परिवर्त्तनम्।

अथ बृहच्छब्देन्दुशेखरस्य प्रथमवर्गान्तर्गतेभ्यः 'च'-'ख'प्रभृतिप्राचीना-दर्शेभ्यो नवीनादर्शयोः 'क'-'ग' इत्यनयोः कियान् परस्परं भेदो, वैपरीत्यं च कीदृगिति प्रदर्शयितुं द्वित्राण्युदाहरणान्यत्रोपन्यस्यामः। एषूपस्थाप्य-मानेषूदाहरणेषु य एव खलु सिद्धान्तः प्राचीनादर्शेषु ग्रन्थकर्त्रा युक्तिजालैः, स एव नवीनयोः परिष्कृतादर्शयोः स्वयमेव तेन मण्डित इत्यद्भुतमेवैतत्। तथा हि—

(क) 'अत्रानुनासिकः पूर्वस्य तु वा। इदं विधिसूत्रम्, नाधिकारो, लाघवात्। अधिकारत्वे हि प्रतिसूत्रमावृत्यापत्तौ गौरवापत्तेः। मतुवसोरिति सूत्रे सम्बन्धाऽनापत्तेश्च। तद्विषये एतदप्रवृत्तौ हि तत्र वसुग्रहणं व्यर्थं स्यात्। तदर्थं तत्रापकर्षकरणे गौरवम्। अत एव 'अत्र'ग्रहणं चरितार्थम्—एतद्रुप्रकरणे इत्यर्थकम्। अन्यथा अधिकारादेव रुप्रकरणलाभे तद्वैयर्थ्यं स्पष्टमेव। 'तु'शब्दस्तु 'अन्त्यस्य रुः, ततस्तु पूर्वस्य अनुनासिकः' इति विशेषस्य स्पष्टं बोधनाय 'वा'शब्दवद् बोध्यः' इति विधिसूत्रत्वसमर्थकः 'ख'-'च'पुस्तकस्थः पाठः (बृ० श० २६८ पृ०)।

तद्विरुद्धः परिष्कृतोऽस्याऽधिकारत्वसमर्थकः 'क'-'ग'पाठस्तु इत्थम्—

'अयं चाधिकारः। तेनोत्तरसूत्रविषय एव एतयोः प्रवृत्तिः। अत्रेति तु रुप्रकरण एवास्य सम्बन्धो, न तु अग्रे 'ढो ढे लोपः' इत्यादावित्यर्थसूचनार्थम्। 'तु'शब्दः 'परस्य नित्यं रुत्वं पूर्वस्य तु वा अनुनासिकः' इति विशेषद्योतनार्थम्। अत एव मतुवसोरित्यत्रोपसंख्यातयोः 'वन उपसङ्ख्यानम्', 'विभाषा भव'दित्यनयोरुदाहरणेऽत्रानुनासिकादेरनुच्चारणं भाष्ये। विधिपक्षे तु अत्र प्रवृत्तिर्दुर्वारैव। अत्र च रुस्थानिनः पूर्वस्यानुनासिक इति बोध्यम्। वाग्रहणन्तु स्पष्टार्थमेव' इति।

(ख) येन विधिरिति सूत्रे (बृ० श० ९० पृष्ठे)—'कर्मणि क्विर्न तु भावे। तथा सति कर्मणोऽनुपादानात् साकाङ्क्षतापत्तेः' इति'ख.'पाठः।

स च 'विधिरिति क्विर्भावे। कर्म तु विधेयमनुक्तमपि प्रसिद्धत्वाल्लभ्यत एव' इति 'क'पुस्तकपाठेन सर्वथा खण्डितः।

(ग) 'वसिष्ठ-मित्रावरुणौ कुण्डिनश्च महातपाः' इति प्रवराध्याये मत्स्यपुराणात्, 'वसिष्ठ-मैत्रावरुण-कौण्डिन्येति होते'ति बौधायनसूत्राच्चावश्यस्वीकार्य'लघावन्ते' इत्युदात्तकुण्डिनेत्यकारान्तप्रकृतिकगर्गादियञन्तकौण्डिन्यस्याप्यत्र ग्रहणम्। गर्गादौ कण्वादिमध्ये कुण्डिनेति, कुण्डिनीति च पठन्ति।' इति 'ख'. 'घ.' 'ङ' पाठः। (बृ० श० १२७२ पृष्ठे)। एतद्विरुद्धः 'क'पाठश्च यथा—

'वसिष्ठ-मित्रावरुणौ, कुण्डिनश्च महातपाः' इति प्रवराध्याय-मत्स्यपुराणप्रसिद्ध-कुण्डिनात्तु न गर्गादियञ्। कुण्डनीत्येव तत्र पाठात्। तत्पर्यायिनान्तकुण्डिन्-शब्दात्तस्य भार्येत्यर्थे 'कुण्डिनी'। 'गर्गादौ 'कुण्डिने'ति पाठाद्रुभाभ्यामपि यञ्। उभयोश्चात्र ग्रहणमि'ति तु न युक्तम्। कुण्डिनशब्दात्तु

नापत्ये प्रत्ययः। अनभिधानात्। 'अत एव निपातनात्कौण्डिन्ये पुंवत्त्वाभाव' इति भाष्यमत एव सङ्गच्छते। तव तु तदसङ्गतिः स्पष्टैव।' इति। (बृ० शे० १२७२ पृ०)।

उदाहरणार्थमुपस्थापितेष्वेषु प्रघट्टकेषु 'क'पुस्तकपाठस्य 'च''ङ' 'घ'-'खा'दिपुस्तकपाठैः सह तेजस्तिमिरवद्विरोधः स्पष्टः। उदाहरणैरेतैश्च नागेशभट्टानां समये समये स्वसिद्धान्तपरिवर्तनं, बृहच्छेखरस्थपाठानां परिवर्तनञ्च स्पष्टमेवावभोत्स्यन्ते विद्वांसः। एवमुपलभ्यमाने च परस्परपाठविरोधे 'क'पुस्तकपाठस्यैव प्रामाण्यम्। सर्वतः परिनिष्ठिते लघुशब्देन्दुशेखरे तत्पाठानामेवादरात्। लघुशब्देन्दुशेखरस्था लघुशब्दरत्नस्थाश्च पाठा नितरां परिनिष्ठिताः,नागेशमतसूचकाश्चेत्यतोऽस्माभिरपि 'क'पुस्तकपाठानामेवादरोऽत्र विहितः। अत एव प्रायशः 'क'पाठो मूलेऽन्ये पाठाश्च टिप्पण्यां समायोजिताः।

'ग'पाठास्तु प्रायेण सर्वे 'क'पुस्तकपाठानुसारिण इति 'ग'पुस्तकस्य 'क'पुस्तकानुसारित्वमेवेति प्रागेवावोचाम। 'क'पुस्तके कुण्डलितानामथ च 'क'पुस्तकेऽवर्तमानानामपि 'ख'पुस्तकपाठानां 'ग'पुस्तके यत्र तत्रोपदर्शनात् 'ग'पुस्तकस्य 'ख'पुस्तकपाठानुसारित्वम्, 'घ''ङ'पुस्तकपाठवत्त्वात्स्थले स्थले 'घा'नुसारित्वं, 'ङ'पुस्तकानुसारित्वमपि च दृश्यते। 'क'-पुस्तकरूपनिर्धारणानन्तरं लिपिकृतेऽस्मिन् 'ग'पुस्तके'क'पुस्तकान्निस्सारितपाठानां, भिन्नपाठानाञ्चोपलब्धौ ह्येतदेव कारणं सम्भाव्यते यत्—सम्पूर्णस्य कस्यचिदपि पुस्तकस्य तदानीमनुपलम्भाद् भिन्नैर्भिन्नैर्लेखकैरिदं 'ग'पुस्तकं कदाचित् खण्डितेभ्यो नानापुस्तकेभ्यो भिन्नभिन्नपाठवद्भ्यो लिखितमिति। कथमन्यथा 'क'पुस्तकपाठानुसारिबहुलपाठयुतेऽस्मिन् 'ग'-पुस्तके भूयांसः पुरातना अपि पाठा लभ्येरन्।

## 'क'पुस्तके कुण्डलिताः पाठाः

सर्वतः परिष्कृतपाठवत्त्वात्समादरणीयेऽस्मिन् 'क'पुस्तके रक्तया मस्या कुण्डलिताः, 'ख'पुस्तके तु ग्रन्थघटकतयोपलभ्यमाना बहवः पाठा 'ग'-पुस्तके दृष्टिपथं नैवोपयान्तीति प्राक्प्रत्यपीपदाम। ते चेमे 'ख'पुस्तकघटकाः पाठाः कथं, केन वा 'क'पुस्तके कुण्डलनामवापिताः, कथञ्च 'ग'-पुस्तकान्निस्सारिता इत्येवं जिज्ञास्यमाने नागेशभट्टनिर्मितसकलोपलब्धव्याकरणग्रन्थपरिशीलन-संजातप्रत्ययैरस्माभिरित्थमेव निर्धार्य्यते यदिमे

'क'पुस्तके कुण्डलिताः सर्वेऽपि पाठा नागेशनिर्मिता एव, 'ख'पुस्तके तेषामुपलम्भात्। एतेषु परं 'क'कुण्डलितपाठेषु केचन पाठाः स्थूलयुक्तिकाः प्राचीनमतानुयायिनो नागेशभट्टस्यापरिनिष्ठितबुद्धेर्द्योतकाः, केचन युक्तियुक्ताः, गम्भीरार्थाः, प्रामाणिकाश्च। 'ख'पुस्तकशोधनानन्तरं स्थिरीकृतस्वरूपस्य 'क'पुस्तकस्य च सिंहावलोकने विधीयमाने ग्रन्थकृता 'ख'पुस्तकपाठानुसारिणस्ते सर्वेऽपि पाठाः 'क'पुस्तकादस्मादपसारणाय कुण्डलिताः, य आसन् स्थूलयुक्तिकाः। तदेवं कुण्डलनापीयं नागेशभट्टेनैव सम्पादितेति नात्र सन्देहः। एतद्ग्रन्थनिर्माणानन्तरं नागेशभट्टेन लघुशब्देन्दुशेखर-परिभाषेन्दुशेखरलघुशब्दरत्नादयो ग्रन्था व्यरच्यन्तेति तेषु तेषु ग्रन्थेषु तत्तत्स्थलविषय-समर्थका बहवो बृहच्छेखरस्थाः पाठा अस्माद्बृहच्छब्देन्दुशेखरग्रन्थादुद्धृत्य नीता इति शब्दरत्नादिग्रन्थालोडनेन स्पष्टमेव प्रतीयते। तथा च तेऽपि 'क'पुस्तकस्थाः पाठा ग्रन्थकृता कुण्डलिता ये तेनैव रूपेणान्यत्र ग्रन्थे इत उद्धृत्य नीता इति टिप्पण्यामस्माभिर्यथास्थाने 'शब्दरत्ने उपलम्भादयं पाठः 'क'कुण्डलितः' इत्येवमुल्लिख्य स्पष्टीकृतमेव। एतेषु कतिचन कुण्डलिताः 'क'पुस्तकस्था ये पाठा लेखकदोषादन्यस्मात्कस्मादपि कारणाद्वा त्रुटिता आसन्, तेऽप्यस्माभिः 'ख'पुस्तकात्पूरिताः, तत्र सम्पूर्णस्य पाठस्योपलम्भात्।

## निष्कर्षः

तथा चैतेषामुपलब्धानां षण्णामप्यादर्शपुस्तकानां परिशीलनानुसन्धानादिभिर्वयममुमेव निष्कर्षमुपलभामहे यन्महाभाष्य-शब्दकौस्तुभ-प्रौढमनोरमा-बृहच्छब्दरत्नादिस्वगुरुपरम्पराप्रसिद्धग्रन्थपर्य्यालोचनादिना लब्धोत्साहस्तारुण्याच्चटुलमतिर्नववैयाकरणोऽयं श्रीनागेशभट्टः स्वाध्ययनकालसमाप्त्यनन्तरमेवात्यन्तपरिपक्वनिर्मलबुद्धिसाध्ये ग्रन्थनिर्माणव्यवसाये स्वात्मानं व्यापारयामास, व्यररचच्चान्वर्थनामानं बृहन्तं शब्देन्दुशेखरं ग्रन्थम्, अध्यापयामास चामुं निजच्छात्रान्, उद्घाटयामास च विद्वत्सभासु शास्त्रार्थप्रसङ्गेनैतन्निबद्धाः स्वप्रतिभोद्भासिता नवीनाः फक्किकाः, कोटिकल्पनाश्च।

तदेवं ग्रन्थावलोकन-शास्त्राभ्यास-गुरुशुश्रूषादिना शनैः शनैरधिगतप्रौढवैदुष्यस्य परिपक्व-बुद्धेर्ग्रन्थकर्तुर्नागेशभट्टस्यैवेच्छया तत्सम्मुख एव

छात्राध्यापनावसरे प्रायः प्रतिपाठमेवायं ग्रन्थो नैकवारं स्वस्वरूपं परिवर्तयामास, येषु परिवर्तितेषु ग्रन्थस्यास्य स्वरूपेषु 'च'पुस्तकं प्रथमं, 'क'-पुस्तकञ्चान्तिमं स्वरूपमिति ।

अथैवं पुनः पुनः स्वरूपपरिवर्तनकारणादुत्पन्ना इमे पाठभेदा नान्यत्र पुस्तकेषु वर्तमानैः पाठभेदैः समाः, ये प्रायशो लेखकाध्यापकाध्येतॄणामवधानादिदोषाद्धेतोरुत्पद्यन्ते; अपि तु पुनः पुनर्महाभाष्याद्यनुशीलनादिना परिवर्तितसिद्धान्तेन स्वयं ग्रन्थकृतैव विहिता इति वैशिष्ट्यमेतेषामिति पूर्वमेवाऽचकथाम । वस्तुतोऽस्य परिवर्तनस्यान्तिमं स्वरूपन्तु लघुशब्देन्दुशेखर एव, यत्र नागेशभट्टस्य निर्दुष्टानां, सर्वथा स्फीतानां विचाराणां चमत्कृत्याधायको वास्तविकः पूर्णः प्रतिबिम्ब उपलभ्यते । यतो हि गुरुजनमुखादित्थं श्रूयते स्म यत्कृतानेकवारसंशोधनेऽपि बृहति शब्देन्दुशेखरे यदा पुनरपि संशोधनावश्यकतां गच्छता कालेनान्वभूद् ग्रन्थकारस्तदा प्रचारमुपगतेऽस्य ग्रन्थस्य सर्वेषु पुस्तकेषु समभिलषितस्य परिवर्तनस्य कथमपि कर्तुमशक्यत्वान्निर्बबन्ध तस्यैतस्य ग्रन्थस्य परिनिष्ठितं रूपं 'लघुशब्देन्दुशेखर' इति नाम्ना । अत एव विद्वत्सु यादृशः प्रचारो लघुशेखरस्य समजनि, न तादृशः, ततोऽर्धोऽपि वा प्रचारोऽस्य बृहतः शेखरस्य बभूव । किम्बहुना, अस्य ग्रन्थस्य कुत्रापि पुस्तकालयेषु, विद्वत्कुलेषु वा नैव सम्पूर्णो हस्तलेखोऽपीदानीमधिगम्यते । सेयं हस्तलेखानुपलब्धिर्ग्रन्थस्यास्य सहेतुकं प्रचारावरोधमेवाभिव्यनक्ति ।

किञ्च, स्वगुरुनागेशभट्टविरचितानां ग्रन्थानां प्रचाराय बद्धपरिकरो नागेशभट्टप्रमुखशिष्यो वैद्यनाथपायगुण्डेमहोदयः स्वनिर्मितायां लघुशब्देन्दुशेखरटीकायां चिदस्थिमालायां बृहच्छब्देन्दुशेखरग्रन्थस्याविकलान् पाठान् स्थले-स्थले समुद्धरन्नपि, न कुत्रचिदपि 'बृहच्छब्देन्दुशेखर'नाम्ना, 'शब्देन्दुशेखर'नाम्ना वा ग्रन्थममुं प्रसङ्गतोऽप्यस्मार्षीत्; अपि तु 'केनचिदुक्तं

१. 'एतेन 'अचः परस्य रेफहकाराभ्यां परस्य यरः' इति वाच्योऽर्थः । न च पृथङ् निमित्तता स्यादिति वाच्यम् । चकाराऽभावेन स्पष्टप्रतिपत्तये 'अचो द्वेऽनचि', 'रहाभ्यामि'त्येव न्यासे कार्ये, ईदृशन्यासेन च तदभावकल्पनात् । तत्राऽणुरपीति न्यायेन विधेयसन्निहितत्वेन रहाभ्यामित्यत्रैव निर्दिष्टांशबाधः । 'अचः' इत्यंशे तु सामर्थ्यात्तद्बाधः, व्यवधानञ्चोपस्थितरेफहकारकृतमेव गृह्यते, नाऽन्यकृतं, तदेतत्फलितमाह—अचः पराभ्या-

परास्तम्' 'यत्तु तत्खण्डयति' इत्यादिरीत्या बृहच्छेखरस्थपाठान् पूर्वपक्षत्वेनोपस्थाप्य, बहुषु स्थलेषु ग्रन्थस्य नामनिर्देशं विनैव तान् खण्डयामासेत्याश्चर्य्यंकरमेवैतत् ।

तदेवं बृहच्छब्देन्दुशेखरविषये पायगुण्डेमहोदयेनाङ्गीक्रियमाण उपेक्षाभावो 'लघुशब्देन्दुशेखर-परिभाषेन्दुशेखर-लघुमञ्जूषाद्यनेकप्रौढग्रन्थप्रकाशिताऽलौकिकवैदुष्यस्य विश्वविश्रुतविमलकीर्त्तेर्नागेशभट्टस्य स्वगुरोर्बालभावद्योतकं बृहच्छब्देन्दुशेखरं ग्रन्थं न खलु सुदृढगुरुभक्तिरयं विदुषाम्पुरतो नाम्नाप्युपस्थापयितुमभिलषती'ति स्पष्टं सूचयति । अत एव—

**'नागेशभट्टविदुषा नत्वा साम्बं शिवं लघुः' ।**

—इति लघुमञ्जूषास्थमङ्गलाचरणश्लोकघटक'लघु'शब्दव्याख्यावसरे 'अनेन गुर्व्यप्येका मञ्जूषास्तीति सूचितम्' इत्येवं कलाटीकायां व्याहरतोऽपि वैद्यनाथस्य 'मनोरमोमार्द्धदेहं लघुशब्देन्दुशेखरम्' इति श्लोकघटक'लघु'शब्दव्याख्यायां मौनावलम्बनमुचितमेव ।

परं च नैतावता बृहच्छब्देन्दुशेखरमहाग्रन्थाध्ययन-परिशीलन-मनना-

---

मिति । एतेनानुवादे परिभाषाणामनुपस्थितेरिदमनुपपन्नमित्यपास्तम्' इति 'केनचिदुक्तं परास्तम्' इत्ययं चिदस्थिमालास्थः[1] पाठो बृहच्छब्देन्दुशेखरादुद्धृतः, तत्र १७२ पृष्ठे 'एतेन' 'इति केनचिदुक्तं परास्तम्' इत्यंशरहितस्यास्याऽविकलस्य पाठस्य टिप्पणीस्थ'ख'पुस्तकपाठे दर्शनात् ।

१. 'यत्तु 'नाम्रेडितस्येत्यंशस्यान्वाचयशिष्टत्वज्ञापनार्थं तथोक्तं, तेन वटक् वटगित्यादावन्त्यस्य वा पररूपं भवत्येव । एतेन 'नाम्रेडितस्य' 'अन्त्यस्य वे'ति योगद्वयेनैव पूर्वस्य नित्यत्वे, उत्तरस्य वैकल्पिकत्वे च सिद्धे, 'तु-शब्दो व्यर्थ' इत्यपास्तम् । निषेधोऽच्छब्दमात्रविषयो, द्वितीयं तकाराऽतकाराद्यन्तमात्रविषयमिति विषयविशेषस्य स्पष्टतया बोधनार्थं तस्य सत्त्वात् । एवञ्च 'पट पट इत्याहे'त्यादावन्त्याकारस्य परस्य पररूपे, 'पटपटित्याहे'त्यपि पक्षे बोध्यम्' इति । तत्खण्डयति—फलेति' । इति चिदस्थिमालायां[2] खण्डनार्थमुद्धृतः सकलोऽप्ययं पाठो बृहच्छब्देन्दुशेखरे २०४ पृष्ठे 'ख'पुस्तकपाठत्वेन टिप्पण्यां संगृहीतोऽस्माभिः ।

---

1 आचार्य-श्रीगुरुप्रसादशास्त्रिसम्पादिते षट्टीकोपेते लघुशब्देन्दुशेखरे २५९ पृष्ठे द्रष्टव्योऽयं ग्रन्थः ।

2 षट्टीकोपेते लघुशब्देन्दुशेखरे चिदस्थिमालायां ३०७ पृष्ठे द्रष्टव्यः ।

द्यर्थमुन्मनोभिर्विद्वद्भिर्विघ्नितोत्साहैर्भाव्यम् । अनेकेषामाचार्याणां मतोपमतानामालोचकतया, अशेषव्याकरणग्रन्थप्रतिपाद्यतत्त्वसङ्ग्रहाधायकतया, अन्यत्रानुपलब्धनानाविधशास्त्रीयविचारसमूहानामुपस्थापकतया, पाणिनीयसूत्राणामतिविस्तृतव्याख्यानवत्त्वाच्च प्राचीन-नवीन-वैयाकरण-सिद्धान्तरत्नानामाकरतामिवादधानो नागेशभट्टेन बालभावेऽपि विरचितोऽयं बृहच्छब्देन्दुशेखर इदानीन्तनैः प्रौढातिप्रौढजरठवैयाकरणैरुपनिबध्यमानानतिप्रौढानपि ग्रन्थान् विगलितविभवान् विदधच्च ग्रन्थशिरोमणितामेव भजते, इति नात्र शङ्काकलङ्कपङ्कलेशोऽपि ।

ये खलु 'च' 'ङ' 'घ' 'ख' इत्यादिप्रथमवर्गान्तर्गतानां प्राचीनपुस्तकानां पाठा ग्रन्थकृता श्रीनागेशभट्टेन 'क' पुस्तकस्वरूपनिर्धारणावसरे स्वयमेव कुण्डलनां विधाय हेयतां नीतास्त एव 'ख' प्रभृत्यादर्शपुस्तकस्थाः पाठाः स्वगुरोः पन्थानमनुसरता श्रीवैद्यनाथेनापि चिदस्थिमालायामनूद्यानूद्य खण्डिता इति, नैतावता बृहच्छब्देन्दुशेखरस्य 'क' पुस्तकपाठानुसारिणो विषयेऽनुपादेयत्वशङ्काप्युचिता ।

वस्तुतस्तु नानामततमःसङ्कुलेऽतिगभीरे खलु व्याकरणमहाशास्त्रपयोधावन्यान्यमहार्घसिद्धान्तरत्नानामनुसन्धानं चिकीर्षूणामन्वेषणप्रवणशेमुषीकाणां विद्वत्तल्लजानामयमेव ग्रन्थमन्थ उचितं साहाय्यं विधास्यतीति सुनिश्चितमेव ।

अनुशीलनमननादिनाऽऽश्रितोऽयं कल्पतरुरिव महते फलाय स्यादिति साधु विनिश्चित्यैव दशवर्षेभ्योऽप्यनूनं कालमेतत्सम्पादनायोपयच्छद्भिर्यथाशक्त्युपलब्धपाठभेदादिविराजितं, लघुशेखराद्यन्यग्रन्थोद्धरण-टिप्पण सर्वविधसूत्रसूच्यित्याद्यावश्यकोपकरणयुतञ्चैतस्य ग्रन्थस्यानुत्तमं महनीयं संस्करणं संस्कृतानुरागिणां विदुषां पुरत उपस्थापयद्भिर्विस्मृतसकलायासैरस्माभिः कीदृशः खल्वानन्दोऽनुभूयत इत्यनिर्वचनीयमेव ।

एवमावेदितसकलवृत्तान्तोद्घाटिताऽशेषतत्त्वस्य बृहतः शब्देन्दुशेखरस्यास्य श्रीनागेशभट्टविरचितेभ्योऽन्यव्याकरणग्रन्थेभ्यः कः सम्बन्धः, कीदृशं च तेषु पौर्वापर्यमित्याद्यप्यावश्यकं किञ्चित् प्रकृते संक्षेपतोऽत्रोपदर्शयामः ।

## बृहच्छब्देन्दुशेखरो लघुशब्देन्दुशेखरश्च

लघुशब्देन्दुशेखरोऽपि यद्यपि भट्टोजिदीक्षितकृतायाः सिद्धान्तकौमुद्या

एवाऽऽपेक्षिकं विस्तृतमेव च व्याख्यानम्, तथापि बृहच्छब्देन्दुशेखरापेक्षयाऽस्य लघुत्वेन नूनमन्वर्थनामैवायं ग्रन्थ इत्यत्र नास्ति सन्देहावसरः।

एकेनैव लेखकेनैकामेव सिद्धान्तकौमुदीमभिलक्ष्य टीकारूपेणोपनिबद्धाविमौ बृहल्लघू शब्देन्दुशेखरौ यद्यपि समानप्रतिपाद्यविषयावेव, तथापि स्वकीययाऽलौकिकप्रतिभया, विवेकशीलया प्रज्ञया च ग्रन्थकृद्भिः श्रीनागेशभट्टैः समाश्रिताभ्यां समास-व्यासशैलीभ्यामुपजनिष्यमाणस्य पदार्थसंचय-संकलन-व्याख्यानभेदस्य स्पष्टमुपलब्धेरिमावुभावपि स्वकीयं भिन्नभिन्नमस्तित्वं, महत्त्वं, वैशिष्ट्यञ्च साधु रक्षत एवेति, नैकेनान्यस्य गतार्थत्वं सम्भाव्यते।

व्यासशैलीसमाश्रितेऽत एव स्वरूपेणाऽपि बृहत्यस्मिन् बृहच्छब्देन्दुशेखरे तु प्रतिपिपादयिषितस्य विषयस्याऽऽमूलचूडमुपस्थापनं, तत्सम्बन्धिनीनां सर्वासां शङ्कानां, प्रायेण सम्भावितानाम्पूर्वपक्षाणाञ्च प्रतिपदतर्कपूर्णाभिर्वाचोयुक्तिभिर्निरसनं, स्वाभिप्रायसंरक्षणञ्चेत्येकत्रैव संहृत्य ग्रन्थकर्तुरुत्तमोत्तमलेखनकलायाः सौष्ठवं प्रतिपदं शक्यमत्राऽनुभवितुम्। प्रकामं विस्तीर्णेऽप्यस्मिन् ग्रन्थे न किमप्येतादृशं पदं, पङ्क्तिर्वा, यत्र नैरर्थक्यं पुनरुक्तत्वं वा सम्भाव्येत; अपि तु वक्तव्यस्य वस्तुनः प्रतिपादनं परिमितैः, तदभिधेयप्रकाशनसमर्थैः पदैर्वाक्यैश्च तथाऽत्र विहितमालोक्यते यथा भावुकानां मनःसु सन्देहस्याऽर्थान्तरकल्पनाया वा लेशमात्रमप्यवसरः पदं न निदधाति। किं बहुना, चकारोऽप्यत्र शेखरेऽभिप्रायविशेषसूचक एवोपात्तः। किञ्चकिञ्चेत्यादिकमपि यत्रोपात्तं तत्र ग्रन्थकर्त्तुरभिप्रायविशेषरुच्यादिरूपं प्रकटयन्ति विद्वांसः।

श्रीनागेशभट्टैर्लघुशेखरग्रन्थे प्रौढत्वसम्पादनार्थम् अल्पैरेव पदैर्बह्वर्थप्रकाशनक्षमायाः समासशैल्याः समाश्रयणात्, लघुशब्देन्दुशेखरस्य सतीष्वपि नानाविधानेकटीकाटिप्पणीषु ग्रन्थस्य दुरूहत्वमद्यावध्यपि न्यूनतां नोपयाति। तदित्थं नागेशोक्तीनामर्थगाम्भीर्य्यं विद्वद्भिर्नतमस्तकैरूरीक्रियत एव। परं स्वाभाविकाऽतिसंक्षिप्तगभीरलेखप्रवणत्वान्नागेशभट्टानां तत्कृतलघुशेखरग्रन्थे यत्र कुत्रचित्स्थले प्रतिपाद्यविषये महतामपि प्रायः सन्देहावसरः समुत्पद्यत एव। तत्र च टीकाकारा अपि ग्रन्थकर्तुस्तात्पर्यं परमार्थतो ग्रहीतुमशक्नुवन्तो भ्रान्ता इव दृश्यन्ते। अत्र विषये तादृशस्य एकस्यैव प्रघट्टकस्योपस्थापनमावश्यकं, प्रासङ्गिकं, पर्य्याप्तं च भविष्यति। तथा हि—

(स्थानिवत्सूत्रे लघुशेखरे—) 'प्राधान्यात्कार्यातिदेशोऽयम्। 'शास्त्रातिदेशस्तु कार्यातिदेशादभिन्नरूपः। तस्यापि कार्यफलकत्वात्' इति तृज्वत्सूत्रे कैयटः। भाष्येऽपि 'तत्राऽङ्गशास्त्रातिदेशात्सिद्धम्। आङ्गं यत्कार्य्यं तदतिदिश्यते' इत्युक्त्या तयोरभिन्नत्वं सूचितम्। तत्राऽनपेक्षितार्थसन्निधानः, तत्तन्निमित्तरूपकार्य्यव्यवहार एवानेन, कार्य्यं तु स्वशास्त्रेणैवेति। अत एव रामायेत्यादौ स्थानिवत्त्वेन सुप्त्वात्सुपि चेति दीर्घ इति सङ्गच्छते। परिवीरित्यादौ परत्वाद्दीर्घ इति च सङ्गच्छते। यद्वा, किञ्चिन्निमित्तवैकल्येऽपि दीर्घादिकार्य्यमनेन क्रियते···।' इत्यादि।

अस्य लघुशेखरग्रन्थस्याऽऽपाततोऽयमेवाशयो यत्—'अयं स्थानिवदिति योगः कार्यातिदेश-शास्त्रातिदेश-निमित्तातिदेशेषु प्राधान्यात्कार्य्यातिदेश एव। शास्त्रातिदेशस्तु कार्यातिदेशादभिन्नरूप एव, न भिन्नः, भाष्यकैयटादिषु तयोरैक्यस्य प्रतिपादनात्। तथा चानेन सूत्रेण तत्तन्निमित्तरूपकार्य्यव्यवहार एव विधीयते, कार्य्यं तु स्वस्वशास्त्रेणैव'। इति।

परं चार्थेऽस्मिन् वदतो व्याघात उत्पद्यते। 'अयं कार्य्यातिदेश' इति स्वयमेव स्पष्टमभिधाय, 'तत्तन्निमित्तरूपकार्य्यव्यवहार एवानेन क्रियते, कार्य्यं तु स्वशास्त्रेणैवे'ति कथनं सर्वथा स्वोक्तिविपरीतमेव। अत्रत्याः प्रायशः सर्वेऽपि टीकाकाराश्च श्रीनागेशभट्टाभिमतस्फोरणेऽसमर्था एव दृश्यन्ते। इदानीन्तनाः प्रसिद्धाः कतिचन काशीस्था वैयाकरणा अस्माभिः पृष्टा अप्यत्र विषये टीकाकर्तॄणामेवोक्तीरनुवदन्ति। न च तावता समीहितार्थसिद्धिः। पूर्वापरविरोधस्य कथमप्यसमाधानात्।

परं चात्रत्यो यदि बृहच्छेखरग्रन्थोऽनुशील्येत तदा सर्वा अपि विप्रतिपत्तयो, निरुक्तविरोधश्च विलयमुपयान्ति। तथा हि बृहच्छब्देन्दुशेखरे (१४१ पृष्ठे)—

'अत्र कार्य्यमतिदिश्यते, प्राधान्यात्। कार्य्यं च न जरसादिरूपमेव, किन्तु शास्त्रविहितं सुप्त्वाद्यपि। तत्राऽनपेक्षितशास्त्रम्, अनपेक्षितनिमित्तं च कार्य्यमनेनैव क्रियते। यद्वा—'अनपेक्षितार्थसन्निधानः, तत्तन्निमित्तरूपकार्यव्यवहार एवानेन। कार्य्यं तु स्वशास्त्रेण अर्थादेव सिद्धम्' इति। अत एव 'रामायेत्यादौ स्थानिवद्भावेन यादेशस्य सुप्त्वात्सुपि चेति दीर्घः' इत्यादि सङ्गच्छते। 'इनादीन्बाधित्वा परत्वाज्जरस्' इति च'।

बृहच्छेखरग्रन्थादस्मात् स्पष्टमेव ज्ञायते यत्—कार्यातिदेशो द्विविधः,

जरसूदीर्घाद्यादेशरूपो, दीर्घादिनिमित्तभूतसुप्त्वाद्यतिदेशरूपश्च । अयं च स्थानिवदिति योग उभयोः कार्य्यातिदेशयोर्मध्येऽन्यतररूपः सम्भवति । जरसादेशरूपकार्य्यातिदेशपक्षे 'परत्वाज्जरस्' इति भाष्यं सङ्गच्छते । शास्त्रविहितसुप्त्वातिदेशरूपकार्य्यातिदेशस्वीकारे च 'स्थानिवत्त्वेन सुप्त्वात्सुपि चेति दीर्घः' इति भाष्यं स्वारस्येनोपपद्यते' इति बृहच्छेखरे समाश्रिताया व्यासशैल्या माहात्म्यान्नात्र सन्देहावसरः । कार्य्यातिदेशद्वैविध्यं च बुद्धौ कृत्वा यदि लघुशेखरग्रन्थः संलाप्यते, तदा नैव तिष्ठति तत्राऽपि पूर्वापरविरोधादिकमिति सुधियो विभावयन्तु ।

तथा चैवमतिगभीरस्य लघुशेखरस्य स्पष्टप्रतिपत्त्यर्थमपि बृहतः शेखरस्य परिशीलनमावश्यकमेव । यतोऽत्र बहूनि स्थलानि वर्तन्त एतादृशानि यत्र न टीकाकाराः, नापि तदध्यापका ग्रन्थकर्तुस्तात्पर्यं स्पष्टं बोधयितुं समर्थाः, तत्र बृहच्छेखरोऽयं मूर्तिधरो नागेशभट्ट इवाऽभ्रान्तं विषयं प्रतिपाद्य मनस्तोषं जनयति विदुषाम् । बहुषु स्थलेषु लघुशेखरोऽपि बृहच्छेखरापेक्षया नवीनं युक्तियुक्तं विषयमन्यत्रानुपलब्धया मनोग्राहिण्या सरण्या प्रतिपादयतीत्युभयोरप्येतयोः शब्देन्दुशेखरयोस्तुलनात्मकदृष्ट्या परिशीलनं विदुषां कृते प्रमोदावहं भविष्यतीति नात्र सन्देहः । यतो हि दीर्घदर्शिभिर्विद्वत्तल्लजैः श्रीनागेशभट्टैरुभयोश्शब्देन्दुशेखरयोः पृथक् पृथग् वैशिष्ट्यं सन्निवेशितं, येन नैकेनान्यस्य गतार्थत्वं विद्वद्भिश्चिन्तितमपि स्यात् । तथा हि—बृहच्छब्देन्दुशेखरे सविस्तरं व्याख्यातानां फक्किकानां यथा लघुशेखरे प्रतीकधारणमपि नास्ति, तथैव लघुशेखरेऽपि बहूनां सूत्राणां, फक्किकानाञ्चाऽतिविस्तृतं व्याख्यानमुपलभ्यते, यस्य बृहच्छेखरे न विद्यते चर्चाऽपि । तदेवं परस्परमगतार्थत्वमनयोर्ग्रन्थकृदभिप्रेतं सिद्ध्यति ।

अयं च लघुशब्देन्दुशेखरो बृहच्छब्देन्दुशेखरनिर्माणानन्तरमेव ग्रन्थकृताऽऽविष्कृतः, नाम्नि 'लघु'रिति विशेषणवत्त्वात् । लघुशब्दश्च सापेक्षिकमर्थमभिवदतीति नामनिर्धारणप्रसङ्गे प्रागेवाऽवोचाम ।

किं च बृहच्छब्देन्दुशेखरे 'येन विधिस्तदन्तस्ये'ति सूत्रे (बृ० शे० ९० पृष्ठे) 'विधिरिति कर्मणि किः, न तु भावे । तथा सति कर्मणोऽनुपादानात् साकाङ्क्षतापत्तेः' । इत्येवमुपलभ्यमानः 'ख'पुस्तकपाठो ग्रन्थकृतैव 'क'-पुस्तके 'विधिरिति किर्भावे । कर्म तु विधेयमनुक्तमपि प्रसिद्धत्वाल्लभ्यत एव ।' इत्येवं रीत्या शोधित उपलभ्यते ।

अयं च 'ख'-'क'पुस्तकपाठः परस्परं न केवलं भिन्न एवाऽपि तु विरुद्धार्थोऽपि। लघुशेखरे उपलभ्यमानश्चाऽत्रत्यः पाठः 'क'पुस्तकपाठेन सर्वथा साम्यं भजत इति बृहच्छेखरानन्तरभावित्वं लघुशेखरस्य स्पष्टमेव। अत एव 'विस्तरस्तु बृहच्छब्देन्दुशेखरे द्रष्टव्यः' इत्यभिधानं लघुशब्देन्दुशेखरे सङ्गच्छते।

एवमेव तद्धितस्य प्राग्दिशीयप्रकरणे—'अथ स्वार्थिकाः प्रत्ययाः' इति मूलफक्किकाव्याख्यावसरे लघुशेखरे दृश्यमानः पाठोऽपि बृहच्छेखराल्लघुशेखरस्य पश्चाद्भावित्वं स्पष्टमाख्याति। तथा हि—तत्र बृहच्छब्देन्दुशेखरे इत्थमुपलभ्यते पाठः (१४९० पृष्ठे)—

'अथ स्वार्थिका इति। स्वीयायाः प्रकृतेरर्थे भवा इत्यर्थः। तसिलादावर्थनिर्देशविरहात्। 'अतिशायने' 'कुत्सिते' इत्यादीनां च प्रकृत्यर्थविशेषणत्वादिति भावः।'

अत्राऽयमाशयो यत्—'अग्रे पठ्यमानाः सर्वेऽपि प्रत्ययाः स्वार्थिकाः। अर्थात् स्वीयायाः प्रकृतेरर्थे जायन्ते, न तेषामन्यो वर्त्तते कश्चिदर्थः, तसिलादावर्थनिर्देशविरहात्' इति। परं चात्र जायते एषा शङ्का, यत् 'जात्यन्ताच्छ बन्धुनि', 'प्रकारवचने थाल्' इत्यादावर्थनिर्देशस्य सत्त्वेन कथमत्र स्वार्थिकत्वमिति? परमेतच्छङ्कासमाधानाय न किमप्यभिधत्तेऽत्र बृहच्छेखरः।

लघुशेखरे तु 'प्रायेण स्वार्थिकाः' इत्येवं 'प्रायेण' इति पदं पूरयित्वा ग्रन्थकृतेयं शङ्का स्वयमेव समाहिता। तथा च लघुशब्देन्दुशेखरे पाठः—

'स्वार्थिका इति। 'प्रायेणे'ति शेषः। स्वीयप्रकृतेरर्थे भवा इत्यर्थः। तसिलादावर्थनिर्देशाऽभावात्। 'अतिशायने' इत्यादीनां प्रकृत्यर्थविशेषणत्वादिति भावः। 'जात्यन्ताच्छ बन्धुनि', 'प्रकारवचने थाल्' इत्यादिविहितस्य तु वाचकत्वमेव। अत एव तदर्थस्य विशेष्यतया भानम्। अत एव 'प्रायेणे'ति पूरितम्' इति।

एतदुभयग्रन्थपाठविमर्शनात्स्पष्टमेतज्जायते यद् बृहच्छेखरनिर्माणावसरे या खलु शङ्का ग्रन्थकृतां मनसि नैवासोत्सा लघुशेखरनिर्माणावसरे कथमपि समुद्भूतेति, सा लघुशेखरे 'प्रायेणे'ति पदपूरणेन नागेशभट्टैः समाहिता। यद्यमुं बृहच्छब्देन्दुशेखरं श्रीनागेशभट्टा लघुशेखरानन्तरं व्यरचयिष्यन्, तदा तस्याः शङ्कायाः समाधानमवश्यमेवाऽस्मिन्नपि ग्रन्थेऽ-

करिष्यन्, न चैवं व्यदधुरित्यतो बृहच्छब्देन्दुशेखरस्य पूर्वभावित्वं, लघुशब्देन्दुशेखरस्य च तत्पश्चाद्भावित्वं सुस्पष्टमेव ।

## बृहच्छब्देन्दुशेखरो वैयाकरणसिद्धान्तमञ्जूषा च

नागेशभट्टैर्विरचिता वैयाकरणसिद्धान्तमञ्जूषा वस्तुतो यथा नाम तथा गुणैव । अस्यां मञ्जूषायां महार्घाण्यनन्यलभ्यानि वैयाकरणसिद्धान्तरत्नानि दार्शनिक-विवेचन-शरण्या शाणोल्लीढानीव विधाय, संशोध्य, संमार्ज्य च तथा साधु निगूढं स्थापितानि, यथाऽद्यावध्यपि न कोऽपि तेभ्य एकमपि सिद्धान्तरत्नं मोषयितुं, खण्डयितुं, नाशयितुमपि वा प्राभवत् । ग्रन्थेऽस्मिन् खण्डनखण्डखाद्यवत् स्वसिद्धान्तप्रतिपक्षभाञ्जि सर्वेषां दार्शनिकानां मततमांसि नव्यभव्यतर्कार्करश्मिभिः साधु शकलीकृतानीति न तिरोहितमेतत्प्रेक्षावताम् । व्याकरणशास्त्रं न केवलं प्रकृतिप्रत्ययमात्रबोधकमपि त्वेकं विशिष्टं दर्शनमपीति सिद्धान्तारविन्दविकासेऽयमेव नागेशभट्टः सहस्रांशुरिव प्रचण्डप्रखरतरशेमुषीकोऽस्मिन्ग्रन्थे सर्वातिशायिनीं सफलतां पर्य्युपावृणोत् । वस्तुतो ग्रन्थेऽस्मिन् ग्रन्थकर्तुः स्पृहणीयं विचित्रं वैदुष्यं, परमतविश्लेषणक्षमामनतिसाधारणीं विवेचनाशक्तिं च प्रत्यक्षीकुर्मः । अत्र हि 'शब्दस्य अर्थेन सह कः सम्बन्धः, विभक्तेः प्रत्ययस्य च कोऽर्थः, कुत्र च तस्य सम्बन्धः, का नाम शक्तिः, कश्च शक्त्याश्रयः' इत्यादिविषयमवलम्ब्य बहुप्रत्यपीपदत्र ग्रन्थकारः । शब्देन्दुशेखरे प्रकृतिप्रत्यययोरत्र च तयोरर्थयोर्विवेचनस्य सत्त्वादुभावपि ग्रन्थौ परस्परमन्योन्यस्य पूरकावित्यभेद्य एवोभयोः सम्बन्धः ।

ग्रन्थलेखनव्यसनशीलैः श्रीनागेशभट्टैर्विरचितासु 'गुरुमञ्जूषा-लघुमञ्जूषा-परमलघुमञ्जूषे'ति प्रसिद्धासु तिसृषु मञ्जूषासु लघुमञ्जूषा-परमलघुमञ्जूषे द्वे एवोपलभ्येते । गुरुमञ्जूषाया हस्तलेखस्याऽद्यावध्यपि ग्रन्थागारादिषु कुत्राप्यनुपलम्भेऽपि 'लघुमञ्जूषा' इति नाम्नि लघुशब्दविशेषणात्, वैद्यनाथपायगुण्डेमहोदयैर्नागेशभट्टमुख्यशिष्यैर्निर्मितायां लघुमञ्जूषा-कलाटीकायामनेकशस्तस्याः स्मरणाच्च, गुर्व्यपि एका मञ्जूषा नागेशभट्टनिर्मिताऽऽसीदिति निश्चीयते । परमस्याऽनुपलम्भाद् यद्यपि स्पष्टं किमपि तद्विषये विवेचयितुं निर्धारयितुं वाऽशक्यमेव, तथापि बृहच्छब्देन्दुशेखरे 'मञ्जूषायां शक्तिवादे निरूपितम्', 'समासवादे मञ्जूषायां

विस्तरेण प्रतिपादितम्' इत्येवं रूपेण स्मरणात्, तस्यां मञ्जूषायां प्रकरणनामानि 'शक्तिवादः', 'समासवादः' 'एवकारवादः' इत्येवं रूपेणासन्, न तु यथा लघुमञ्जूषायां 'शक्तिनिरूपणं', 'लक्षणानिरूपणमि'त्येवं रूपेण। अतश्चेदमपि सिद्धं भवति यत्—'इमे उपलभ्यमाने लघु-परमलघुमञ्जूषे बृहच्छेखरानन्तरमेव ग्रन्थकृता विरचिते, न तु ततः पूर्वम्। गुरुमञ्जूषायास्त्वनुपलम्भेनोभयोर्मध्ये कतमो ग्रन्थः प्रथमं निर्मित इति निर्धारणं दुःशकमेव। लघुमञ्जूषायां सुवर्थविचारे, कृदर्थप्रकरणे चोपलभ्यमानः शब्देन्दुशेखरनामोल्लेखो लघुशब्देन्दुशेखरमेव बोधयतीति तत्तत्स्थलविमर्शादिना स्पष्टमिति, न तेन लघुशब्देन्दुशेखरानन्तरं निर्मिताया अस्या लघुमञ्जूषाया बृहच्छेखरापेक्षया प्राग्भावित्वं समर्थयितुमलम्। तस्या हि बृहच्छेखरापेक्षया पश्चाद्भावित्वं स्वतः सिद्धमेव। तथा हि—

'नमस्करोति देवान्' इत्यत्रोपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायात्कर्मणि द्वितीयेति शब्देन्दुशेखरे स्पष्टम्' इति सुवर्थविचारलघुमञ्जूषाग्रन्थव्याख्यावसरे नागेशभट्टप्रमुखशिष्यैर्वैद्यनाथपायगुण्डेमहोदयैः स्वनिर्मितायां कलाटीकायाम् 'एकस्या एव उपपदविभक्तित्वे, कारकविभक्तित्वे चायं न्याय' इति तु न युक्तम्। 'नमस्यति देवानि'त्यत्रैतत्परिभाषोपन्यासपरभाष्यविरोधात्, 'सहयुक्ते' इत्यादिसूत्रस्थभाष्यविरोधाच्च। तदाह—'शब्देन्द्विति'—इत्येवमुद्धृतः पाठो लघुशब्देन्दुशेखर एव तेनैव रूपेण दृश्यते, न तु बृहच्छब्देन्दुशेखरे। तत्र तु अधो निर्दिष्टस्य भिन्नस्यैव पाठस्योपलम्भात्। तथा हि—

'एतेन 'एकस्या एवोपपदविभक्तित्वे, कारकविभक्तित्वे चायं न्याय' इत्यपास्तम्। किञ्च 'एकस्या एवे'त्याद्यङ्गीकारे 'नमस्यति देवानि'त्यत्र परिभाषोपन्यासपरभाष्यविरोधः 'सहयुक्ते'इत्यादिसूत्रस्थभाष्यविरोधश्च।'

(—बृ० श० शे० ८१५ पृष्ठे)।

अयं च पाठः कलोद्धृतपाठाद्भिन्न इति स्पष्टमेव।

एवमेव 'तुमुनादिवाच्यस्त्वभ्यन्तरः' इति तुमर्थे इति सूत्रे भाष्ये। तत्र शोभनाद्यर्थस्य धात्वर्थफलान्वये 'शोभनं पाक' इत्येव। 'कर्तृकर्मणो'रिति षष्ठी तु न। कर्तृसाहचर्य्येण कर्मणा धात्वर्थे भेदेनाऽन्वयिन एव तत्र ग्रहणात्। स्पष्टं चेदं 'पूजनात्पूजितम्' इत्यत्राऽष्टमे भाष्ये। एतच्च निरूपितं 'कर्तृकर्मणो'रिति सूत्रे शब्देन्दुशेखरे।

—इति कृदर्थनिरूपणप्रकरणे लघुमञ्जूषायां प्रतिपादितस्य विषयस्य लघुशब्देन्दुशेखर एव स्पष्टं विस्तृतं च विवेचनमुपलभ्यते। तथा हि—

'कर्तृसाहचर्य्यात्कर्मापि धात्वर्थे भेदेनान्वय्येव गृह्यते। तेन 'स्तोकं पाक' इत्यादौ न क्रियाविशेषणात् षष्ठी। किञ्च क्रियाविशेषणेन 'स्तोकं पाचक' इत्यादौ न समानाधिकरणसमासो, नापि 'सुप्सुपे'त्यादिः, सुबन्तार्थ-विशेष्येणान्वयेनाऽसामर्थ्यात्। 'द्वितीयाश्रिते'त्यादेस्तु सामर्थ्यादवयवद्वारके सामर्थ्ये प्रवृत्तिः।

द्वितीयाप्रकरणोक्त–'परे तु' मतरीत्या वा सामर्थ्यम्। अत एव 'पूजनात् पूजितमि'ति सूत्रे 'दारुणं यथा भवति तथाऽध्यापक' इत्यर्थकस्य 'दारुणाऽध्यापक' इत्यस्य सिद्ध्यर्थं मलोपवचनमारब्धं भाष्ये। अन्यथा समासेन सिद्धे तद्व्यर्थं स्यात्। एतदेव भाष्यं ततः षष्ठ्यभावेऽपि मानम्। अन्यथा षष्ठीसमासस्य 'तृजकाभ्यां कर्तरी'त्यादिनिषेधैरुक्तसामर्थ्येऽपि प्रवृत्त्या तत्समासेनैव सिद्धौ, मलोपवचनं व्यर्थमेव स्यादिति बोध्यम्। न च भिन्नपदत्वेऽपि तथा प्रयोगसाधुत्वार्थं मलोपवचनमिति वाच्यम्। तथा सति 'वाक्ये मलोपश्च वक्तव्य' इति वदेत्। अत एव कैयटेन 'क्रियाविशे-षणं दारुणादयः। तत्र वैयधिकरण्यसमासाऽभावान्मलोपो विधीयते'। इत्युक्तम्। 'सुप्सुपे'त्यादिसमासो न सार्वत्रिक इति तदाशय इत्यलम्।' इति।

एवंरीत्या प्रकृतविषयस्य लघुशब्देन्दुशेखर एव विस्तरो, न तु बृहच्छे-खरे। तत्राऽतिसंक्षिप्तस्याऽधोनिर्दिष्टपाठस्यैवोपलम्भात्। तथा हि—

'अत्र कर्तृसाहचर्यात्कर्मापि धात्वर्थेऽभेदेनान्वय्येव गृह्यते। तेन 'स्तोकं पाक' इत्यादौ क्रियाविशेषणान्न षष्ठी। ध्वनितं चेदं 'पूजनात्पूजितमि'ति सूत्रे भाष्यकैय्यटयोः।' (बृ० श० शे० १२४ पृष्ठे)।

एतदुभयग्रन्थपाठविमर्शेनैतदपि सिद्धं यत्– 'तदानीं न केवलं ग्रन्थ-कारोऽपि तु तदनुयायिनोऽन्येऽपि कलाटीकाकारादयः 'शब्देन्दुशेखर'पदेन, प्रायो लघोरेव शेखरस्य ग्रहणं, बोधं चाऽकार्षुः, न बृहतः शेखरस्ये'ति। यतो लघुमञ्जूषायां यत्प्रतिपादितं नागेशभट्टैस्ततो नाधिकं किञ्चिदत्र बृहच्छेखरे पठ्यते ग्रन्थकृता। एतद्विपरीतं लघुशेखरे तु भूयानुपलभ्यते पाठः। 'उत्सृष्टानुबन्धग्रहणे सामान्यस्यापि ग्रहणमि'ति परिभाषाबलान्ना-मैकदेशग्रहणे नामग्रहणमिति परिभाषाबलाद्वा लघुमञ्जूषायामुपलब्धेन

'शब्देन्दुशेखर'पदेन सामान्यतयोभयोरपि लघु-बृहतोः शेखरयोर्ग्रहणेऽपि, लघुमञ्जूषाया बृहच्छब्देन्दुशेखरपश्चाद्भावित्वं न व्याहन्यते; अपि तु तत् सिद्ध्यत्येवेति सुधियो विदाङ्कुर्वन्तु ।

## बृहच्छब्देन्दुशेखरः, परिभाषेन्दुशेखरश्च

सिद्धान्तकौमुदीव्याख्यानभूते बृहच्छब्देन्दुशेखरे प्राचीनवैयाकरणतन्त्रे वाचनिकतया पठितानां, पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानां, भाष्यवार्तिकयोरुपनिबद्धानामेतच्छास्त्रोपयोगिनीनां सर्वासां परिभाषाणां सर्वाङ्गपूर्णस्य विवेचनस्याऽसम्भवात्प्राचीनमतनिरसनपूर्वकं स्वमतद्योतनाय स्पष्टं स्वातन्त्र्येण तद्व्याचिख्यासवो नागेशभट्टाः परिभाषाविषयकसिद्धान्तसर्वस्वप्रकाशकं परिभाषेन्दुशेखरनामकमेकं स्वतन्त्रं महत्त्वपूर्णं ग्रन्थमपि निरमासिषुः ।

ग्रन्थस्यास्य बृहच्छेखरे नामानुपलम्भादयं ततोऽर्वाचीन एवेति बृहच्छब्देन्दुशेखरस्यैतदपेक्षयाऽपि प्राथम्यं सिद्धमेव । परिभाषेन्दुशेखरेऽतिसूक्ष्माभिरपि विपुलगभीरार्थपूर्णाभिः पङ्क्तिभिरभिव्यज्यमानयाऽन्यत्र तद्ग्रन्थेष्वनुपलभ्यमानया ग्रन्थकर्त्तुर्निरतिशयप्रौढ्या, बुद्धेः परिनिष्ठितेन विपाकेन च ग्रन्थोऽयं परिभाषेन्दुशेखरो नागेशभट्टरचितेषु व्याकरणग्रन्थेष्वन्तिम इति निर्धार्यते । अत एवास्य ग्रन्थस्य नान्यस्मिन् कस्मिन्नपि ग्रन्थे दृश्यते नामस्मरणम् । लघुशब्देन्दुशेखरेऽसिद्धं बहिरङ्गमिति परिभाषाविचारप्रसङ्गे परिभाषेन्दुशेखरस्योल्लेखस्तु परिभाषेन्दुशेखरनिर्माणानन्तरं, लघुशब्देन्दुशेखरस्य पुनर्विधीयमाने सिंहावलोकने पश्चाद्ग्रन्थकृता योजित इति प्रतीयते । यतो ग्रन्थकृन्नागेशोऽयं स्वलिखितग्रन्थानां पुनः पुनरनुसन्धान-परिवर्धन-परिशोधनावसरे पूर्वं पश्चाद्वा लिखितानां ग्रन्थानां पूर्वं पश्चाद्वा लिखिते ग्रन्थे प्रसङ्गतः स्मरणमध्येतॄणामधिकव्याख्यानजिज्ञासापनोदनसौकर्याय, स्वग्रन्थप्रसिद्धये च व्यधात् । अत एव प्रायशः सर्वेषामेव व्याकरणग्रन्थानां मञ्जूषा-शब्देन्दुशेखर-भाष्यप्रदीपोद्द्योतादीनाम्, प्रायशः सर्वेष्वपि तद्ग्रन्थेषूल्लेखो दृश्यते, येन कश्च ग्रन्थः पूर्वं लिखितः, कश्च पश्चादिति निर्धारणेऽन्वेषकजनमनोमन्थको महानुत्पद्यतेऽन्तरायो नागेशभट्टग्रन्थानां पौर्वापर्यनिर्धारणे ।

## बृहच्छब्देन्दुशेखरो भाष्यप्रदीपोद्द्योतश्च

'व्याकरणशास्त्रजीवातुभूतं पातञ्जलं महाभाष्यमधिकृत्य यावन्न खलु

यस्य लेखिनी प्रचरेत्तावन्न तस्य प्रौढवैयाकरणविद्वत्सु जायेत गणने'त्यासीत्सम्प्रदायः। अत एव प्रायशः सर्वैरेव प्राचीनैरुद्भटपण्डितैर्महाभाष्यस्य साक्षात्, परम्परारूपेण वा कृतं व्याख्यानं प्रदीप-कौस्तुभ-महाभाष्यरत्नाकरादिरूपेण समुपलभामहे। आत्मनश्च 'सुधीः'[1] 'विद्वान्'[2] 'भाष्ये कृतभूरिपरिश्रमः' इत्यादिपदैर्विभूषयिता नागेशः कथं तावन्महाभाष्यमपि स्वलेखिनीचर्चितं न विदध्यात्। अतो भाष्ये कृतभूरिपरिश्रमत्वमात्मनः ख्यापयितुमयं महाभाष्यगूढार्थविद्योतनाय प्रदीपव्याख्यानव्याजेन भाष्यप्रदीपोद्द्योतनामकं महान्तं निबन्धं निर्बबन्ध। अत्र च महाभाष्यस्य, कैयटनिर्मितस्य तद्व्याख्यानस्य प्रदीपाख्यस्य च साधु विवेचनं विधाय, स्थले स्थले कैयटमतं स्वसिद्धान्तप्रतिपादकतीक्ष्णवाचोयुक्तिभिरच्छैत्सीत्, अनैषीच्च यत्र कुत्रचिद् भाष्यवचांस्यपि प्रौढिवादताम्।

बृहच्छब्देन्दुशेखर'ख'पाठविरुद्धैर्लघुशब्देन्दुशेखरसम्मत[3] 'क'पुस्तकपाठैर्युतत्वादयमुद्द्योतग्रन्थोऽपि बृहच्छब्देन्दुशेखरानन्तरमेव निर्मित इति नात्र सन्देहावसरः।

## बृहच्छब्देन्दुशेखरो लघुशब्दरत्नश्च

अद्य यावत् संमुद्रय क्वचिदप्यप्रकाशितस्य, स्वगुरुभिर्भट्टोजिदीक्षितपौत्रैः श्रीहरिदीक्षितैरभ्यूहितस्य, प्रौढमनोरमाव्याख्यानभूतस्य, बृहच्छब्दरत्नापरनामधेयस्य शब्दरत्नस्योपर्युपक्षिप्तानां दोषाणामुद्धाराय, अथ च तत्र (बृहति शब्दरत्ने) प्राचीनाचार्यमतानुसारेण प्रतिपादितानां स्थूलयुक्तिसिद्धसिद्धान्तानां पुनः संशोधनद्वारा स्वगुरोर्वैदुष्यस्याऽपि विद्वत्सदसि संस्थापनाय, स्वानुकूलमतोपष्टम्भाय च वास्तविकं छात्र[4]त्वमाविष्कुर्वता श्रीनागेशभट्टेन स्वगुरुनाम्नैव,न तु स्वनाम्ना, एकमन्यत्प्रौढमनोरमाव्याख्यानं भाव-

१. 'नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः।
बालानां सुखबोधाय परिभाषेन्दुशेखरम्॥'

२. 'नागेशभट्टविदुषा नत्वा साम्बं शिवं लघुः।
वैयाकरणसिद्धान्तमञ्जूषैषा विरच्यते॥'

३. 'विधिरिति कर्मणि किः, न तु भावे' इति बृहच्छेखरस्थ'ख'पुस्तकपाठाद्विपरीतस्य 'विधिरिति भावे किः' इत्येवंविधस्य 'क'पुस्तकस्थपाठानुयायिनो लघुशेखरपाठस्योद्द्योते तेनैव रूपेणोपलब्धिर्जायते।

४. 'गुरोर्दोषाणामावरणं छत्रम्। तच्छीलमस्य छात्रः'।

गभीरं लघुशब्दरत्नं नाम व्यरचि। एकेनैव नागेशभट्टविदुषा विरचितत्वादु-भयोरनयोश्शेखर-लघुशब्दरत्नयोर्ग्रन्थयोर्न केवलं विषयप्रतिपादनशैलीसाम्य-मपि तु यत्र तत्रोपलभ्यमानं पाठयोरपि सर्वथा साम्यं नाऽस्वाभाविकम्। केवलमेतयोरियानेव भेदो यदेकः सिद्धान्तकौमुदीप्रतीकमुपादाय विरचितोऽन्यश्च प्रौढमनोरमाप्रतीकान्। अत एव श्रीहरिदीक्षितनाम्ना लिखितमपि लघुशब्दरत्नमलौकिकप्रतिपादनशैल्या सूचितनिजवास्तविकलेखकं नागेश-भट्टकृतिष्वेव पदं निधत्ते। सुदृढं प्रमाणं चाऽत्र—'गुरुं नत्वा श्रये बद्धशब्दरत्नेन्दुशेखरम्' इति लघुशब्दरत्नटीकायां भावप्रकाशाख्यायां नागेशशिष्यवैद्यनाथोक्तिरपि।

एतेन 'यत्तु केचित्—'लघुशब्दरत्नोऽपि नागेशभट्टेनैव विरचितः, शब्देन्दुशेखरादिग्रन्थानुपूर्व्या बहुश उपलम्भात्, व्याख्यानसाम्याच्चे'ति। तन्न। गुरुशिष्योक्तौ तादृशसाम्यस्य बहुत्र दर्शनात्। तदीयग्रन्थापेक्षया शब्दरत्नस्यातिशयितगाम्भीर्यपूर्णलेखात्, हरिदीक्षितकृतत्वे बाधाऽयोगाच्चे'-ति श्रीसभापतिशर्मोपाध्याया लघुशब्दरत्नमधिकृत्य लघुमञ्जूषाभूमिकायां प्रत्यपीपदन्, तदेतद्धरिदीक्षितकृतबृहच्छब्दरत्नाऽपर्यालोचनमूलकं, कुण्ड-लितपाठयुत'क'पुस्तकस्थबृहच्छेखरग्रन्थाऽदर्शनमूलकञ्चेत्यधिकं बृहतः शब्दरत्नस्य सम्पादनावसरे प्रतिपादयिष्यतेऽस्माभिः।

बृहतः शब्देन्दुशेखरान्मनोरमासमर्थनपरग्रन्थभागानुद्धृत्योद्धृत्य लघु-शब्दरत्नस्य निर्माणादस्य बृहच्छेखरपश्चाद्भावित्वं सुनिश्चितमेव। अत एव ये खलु पाठा लघुशब्दरत्ने ग्रन्थकृतोद्धृतास्ते नागेशभट्टैः स्वहस्तेन शोधिते 'क'पुस्तके कुण्डलिता उपलभ्यन्ते, पश्चान्निस्सारिताश्चेत्यतो 'ग'-पुस्तकादौ प्रायेण तेषां 'क'पुस्तककुण्डलितपाठानां सर्वथाऽभाव एवेति प्रागवोचाम।

तथा चेदानीं यावदुपदर्शितेन युक्तिकदम्बकेनैतत्सिद्ध्यति, यत्—'उप-लभ्यमानेषु श्रीनागेशभट्टविरचितव्याकरणग्रन्थेषु बृहच्छेखरोऽयं सर्वतः प्रथमो ग्रन्थो, ग्रन्थकृताऽस्य सर्वतः प्रथमं विरचितत्वा'दिति।

## बृहच्छब्देन्दुशेखरः, प्रौढमनोरमा च

श्रीभट्टोजिदीक्षितनिर्मितायाः प्रौढमनोरमायाः, अस्य बृहच्छब्देन्दु-शेखरस्य चेत्युभयोरपि एकस्या एव सिद्धान्तकौमुद्या व्याख्यानभूतत्वादु-भयोरपि परिदृश्यमानं साम्यं स्वाभाविकमेव। अत एव स्वगुरुहरिदीक्षि-

तस्य पितामहचरणैरभ्यूहिताया: प्रौढमनोरमाया: पाठस्याऽपि यत्र कुत्रचिद-विकलं स्वरूपं बृहच्छब्देन्दुशेखरे दृष्टिपथमवतरति[1]। कुत्रचिच्च मनोरमाया नामोल्लेखपूर्वकं तत्र प्रतिपादितविषयस्य संकेतं विदधता ग्रन्थकृताऽस्य 'मनोरमैव उमा, मनोरमोमा, सा अर्द्धदेहो यस्य स, तत्त्व'मित्यर्थकं मनोरमोमार्द्धदेहत्वं[3] विशदीकृतमेव। परं चास्य प्रौढमनोरमापेक्षयाऽतिविस्तृतत्वाद्बहूनां विषयाणां, व्याकरणशास्त्रसम्बन्धिनां नवीनानां सिद्धान्तानाञ्चात्र समावेशस्य सत्त्वात्प्रौढमनोरमयाऽस्य गतार्थत्वं नाशङ्कनीयम्।

किञ्च, ग्रन्थेऽस्मिन् सर्वतन्त्रस्वतन्त्रोऽलौकिकालोचनप्रतिभासम्पन्नो नागेश: स्थले स्थले प्रौढमनोरमाया: खण्डनं[4] विदधत्, प्राचीनमतानुसारित्वं

---

१. तथा हि—

(क) 'यद्यपि सूत्रकारकृतोऽनुनासिकपाठ इदानीं परिभ्रष्टस्तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भाव:।'—प्रौढमनोरमास्थोऽयं पाठो बृहच्छब्देन्दुशेखरे २५ पृष्ठे एवमेवोपलभ्यते।

(ख) 'अय:सहितेति। न त्वयसो विकार: 'जानपदे'ति ङीष्प्रसङ्गात्। अयस्कर्णीति। अय इव कर्णौ यस्या:। 'नासिकोदरौष्ठे'-त्यादिना ङीष्।

अध:शिरसी। एतयोरिति। सूत्रे तु षष्ठ्या: स्थाने प्रथमा बोध्या। अधस्पदमिति। मयूरव्यंसकादित्वात्समास:। शिरस्पदमिति। षष्ठी-समास:'।—अयं मनोरमास्थो ग्रन्थो बृहच्छेखरेऽपि ३०२ पृष्ठे एवमेव द्रष्टुं शक्यते।

२. (क)…'हल्सूत्राऽन्त्यं हल्रूपाऽन्त्यं चेद्भवती'ति वाक्यार्थद्वयम्…
……प्राग्वत् 'हसमीपो लकार इत्यस्याऽर्थासङ्गतिरि'त्यपि मनोरमायां स्पष्टम्।' (बृहच्छब्देन्दुशेखरे, १६ पृष्ठे)।

(ख) 'वेदे तु अर्द्धमेवोदात्तम्। प्रातिशाख्यात्लक्ष्यानुरोधाच्चेति मनोरमायां स्पष्टम्'। (—बृहच्छब्देन्दुशेखरे, ३३ पृष्ठे)।

(ग) 'मनोरमायामपि 'परत्वादि'त्यस्य उत्कृष्टत्वादित्यर्थेनाऽपवादत्वमेव विवक्षितमिति वदन्ति।' (बृहच्छब्देन्दुशेखरे, २२९ पृष्ठे)।

(घ) 'अत एव ब्रह्माणमानयतीति विग्रहे 'ब्रह्माणी'त्यादौ 'पूर्वपदात् संज्ञायाम्' इति णत्वमुक्तं मनोरमायाम्।'

(—बृहच्छब्देन्दुशेखरे,४५० पृष्ठे)।

३. 'मनोरमोमार्द्धदेहं तन्वे शब्देन्दुशेखरम्।' (—बृहच्छब्देन्दुशेखरे, १ पृष्ठे)।

४. (क) 'एवं च उभशब्दादुत्पन्नं द्विवचनं लुका नापहृतं यत्र, ततोऽ-

वा प्रकटयन्, 'मनोरमोमाया अर्धं द्यति=खण्डयतीति मनोरमोमार्द्धदा, तादृशी ईहा=चेष्टा यस्य, तथाभूतोऽयं मदीयो निबन्ध' इति स्वहृदयस्थितं निगूढार्थमप्यभिव्यञ्जयतीति न तिरोहितं शेमुषीमताम्। तथा च प्रौढ-मनोरमाग्रन्थेनाऽप्यस्य गतार्थत्वशङ्का दूरापास्तैव।

## नागेशभट्टस्य गद्यम्

श्रीनागेशभट्टनिर्मितेषु सर्वेष्वपि व्याकरणग्रन्थेषु प्रयुज्यमाने संस्कृत-गद्यभागे व्याकरणमहाभाष्यान्तर्गतेषु पतञ्जलिवचःसु काममनुभूयमान-स्तादृशः प्रसादगुणः, पाठकहृदयावर्जकत्वञ्च यद्यपि नाभिलक्ष्येते, तथापि आपेक्षिकस्य सारल्यस्य, स्वाभाविकस्य वाक्प्रवाहस्यापेक्षितार्थबोधजन-कत्वस्य च वर्तमानत्वान्नागेशभट्टीयमिदं गद्यमपि किमपि विशिष्टं स्थानमधिगच्छत्येव।

लेखनकलाविन्मूर्धन्योऽयं भट्टनागेशो यथाशक्ति सरल-सरस-मनोहर-वाक्यवृन्दैः स्वाभिप्रायमुपस्थापयितुं यतमानोऽपि व्याकरणशास्त्र-स्वभाव-सुलभं काठिन्यं कथं नाम परिहर्तुमलं भवेत्; किन्तु तत्कृतोपयुक्तशब्द-गुम्फनशालिश्रवणमधुरवाक्यविन्यासान् विलोक्य 'श्रीमतो भट्टनागेशस्या-स्य संस्कृतभाषायामासीत्पूर्णोऽधिकार' इति प्रतिपादनं मन्यामहे नात्युक्तये दोषाय प्रभवेत्।

अयं हि खलु नागेशभट्टस्य कालः वादप्रणाल्याः पूर्णोल्लाससमयोऽ-भूत्। तदानीं नव्यन्यायवाचोयुक्तिसंपृक्ताया अवच्छेदकावच्छिन्नेत्यादि-शब्दघटिताया एव भाषासरितः प्रवाहो विद्वत्सु महता वेगेन प्रावहत। नवीन-निबन्धरचयितुः स एव ग्रन्थो निबन्धश्च वा विदुषां प्रशंसायाः,

---

न्यत्रायजिति मनोरमायां प्रयासः किमर्थ इति चिन्त्यम्। (—बृहच्छब्दे-न्दुशेखरे, ४०९ पृष्ठे)।

(ख) परिगणनपक्षे मनोरमायामव्ययपदवैयर्थ्यानुक्तिस्तु तत्पक्षे प्रयोगाऽसिद्धिरूपदोषस्यापि सत्त्वम्, उदाहरणत्वपक्षे तु तद्वैयर्थ्यमेव दोष इत्यभिप्रेत्याहुः।' (बृहच्छब्देन्दुशेखरे, १४० पृष्ठे)।

(ग) 'यत्तु मनोरमायामत्र प्रकरणे प्रश्नोत्तरयोर्निरालम्बनताप-त्तेरिति दृश्यते। तस्यायमर्थः—अद्ग्रहणं तद्भिन्नव्यावृत्त्यर्थमित्यर्थस्य बालैरपि सुज्ञेयत्वेन 'अतः किम्? वटक्, मरुत्' इति प्राचीनग्रन्थस्य निरालम्बनतेति।' (—बृहच्छब्देन्दुशेखरे, २०३ पृष्ठे)।

आदरस्य च पदमधिरुरोह, यत्र खलु नव्यन्यायमिश्रितया सुपरिष्कृतयैव भाषया विषयविचारोऽभूत्कृतः।

किम्बहुना, कारणाच्चास्मादेव, प्रसादगुणगरिष्ठया, कोमलकान्त-पदावल्या ब्रह्मानन्दसहोदररसानुभूतिसम्पादकसाहित्यशास्त्रग्रन्थेष्वपि तस्या एव भाषायाः साम्राज्यं निर्द्वन्द्वमुदियाय, का कथा संस्कृतवाङ्मयस्यान्येषां भागानां व्याकरणादीनाम्।

एवंविधे नव्यन्याय-प्रचुर-प्रचारे, विवादप्रधाने काले, शास्त्रार्थरणाङ्गण-महारथस्य भट्टनागेशस्य संस्कृतं नव्यन्यायवात्याऽऽक्रान्तं न भवेदिति कथं नाम सम्भावितम्। अत एव—

'एवं चान्वयितावच्छेदकावच्छेदेनान्वये एवकारस्तात्पर्य्यग्राहक इति विभक्तित्वावच्छेदेन सारूप्यान्वयो लभ्यते।' (बृ० श० शे० ३६४ पृष्ठे)।

'तद्धर्मावच्छिन्नविषयकशाब्दत्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपित-वृत्तिविशिष्टज्ञानं हेतुः।' (मञ्जूषा)।

—इत्येवंविधा वाक्यप्रयोगाः, 'दृढस्तर्केऽस्य नाभ्यास इति चिन्त्यं न पण्डितैः' इत्येवं मञ्जूषायामात्मनो नैय्यायिकत्वं चिख्यापयिषद्भिर्भट्ट-नागेशैरकारिषत।

एवं सत्यपि अस्याः शास्त्रार्थसहायिकाया नव्यन्यायशब्दप्रचुराया भाषाया निरर्थको बहुलतया वा प्रयोगः स्वग्रन्थेषु नागेशैः प्रायशो नैवादृतो येनानपेक्षितं काठिन्यं ग्रन्थेषूपजायेत। केवलं दार्शनिक-सिद्धान्त-बहुले मञ्जूषाग्रन्थे, यत्र नव्यन्यायसरण्या आश्रयणं विना गभीरस्य विचारविमर्शस्यैवाऽसंभवः, तत्रैवास्या भाषायाः प्रायेण समाश्रयणमका-रीति तत्तद्ग्रन्थपर्य्यालोचनेन निश्चीयते।

वस्तुतः परमतध्वंसार्थं, स्वमतमण्डनार्थञ्चाऽस्याः परिष्कृतभाषायाः समाश्रयणं भूषणमेवाभून्न तु दूषणम्। एतद्विवेचनद्वारा स्पष्टमिदमुपजायते यदयं नागेशभट्टः सर्वविधभाषायाः प्रयोगे, निर्माणे, लेखने च सर्वथा समर्थो, विद्वांश्चासीदिति।

## श्रीनागेशभट्टः

बृहच्छब्देन्दुशेखरादिनानाग्रन्थप्रणेता, वैयाकरणकेसरी, सर्वतन्त्रस्वतन्त्रः, सकलसंस्कृतवाङ्मयतत्त्वज्ञः, सर्वशास्त्रेषु निबन्धकृत्, पाणिनीयव्याकरण-

१. 'सर्वतन्त्रार्थतत्त्वज्ञः, सर्वत्र च निबन्धकृत्, वैयाकरणनागेशः'।(—मञ्जूषा)।

स्यान्तिमः परिष्कर्ता, वादीभकण्ठीरवः, शास्त्रार्थमहारथो नागेशभट्टोऽयं किमभिजनः, कदा, कुत्र, कस्मिन् वा जनिमुपाययौ, कस्यां वाऽवस्थायामायासीत्काशीम्, क्व वा सकलां विद्यामधिजगे, के वाऽस्य पूर्वपुरुषाः, भ्रातरो दायादा वा कियन्तः, कियन्तं वा कालं सुरभारत्याः स्पृहणीयां सेवां विधाय कदाऽयं पारमेश्वरं शिवसायुज्यप्रदं पदमुपागादित्यादिजिज्ञास्यमानविषयेऽन्येषां पुण्यकीर्तीनामाचार्याणामिव शृङ्खलाबद्धं निश्चितं किमपि प्रमाणं यद्यपि नोपलभ्यत इति महतः खेदस्य विषयोऽयम्, तथापीतस्ततोऽन्वेषणादुपलब्धाभिः सामग्रीभिर्गुरुपरम्परया प्रसिद्धिमुपागताभिः किंवदन्तीभिश्च यदद्यावधि निर्धारितमेतद्विषये तदेवाऽत्रास्माभिर्ननु विदुषां मोदाय, मननाय चैवमुपनिबध्यते—

प्रयागादुत्तरं स्थितस्यैर्ताह 'सिंग्रौर' इति नाम्ना व्यवह्नियमाणस्य पुराणप्रसिद्धस्य[1] शृङ्गवेरपुरस्याऽधीशाद्विशेनवंशोत्पन्नात्क्षत्रियात्स्वशिष्यतामुपागताद्राम[2]सिंहाद्योगक्षेमनिर्वाहमात्रसमर्थां[3] (सम्भवतः प्रतिवर्षम् १०० शतं रूप्यकाणि) वृत्तिमुपलभमानो, 'दुर्गादेवी'ति नाम्ना[4] प्रसिद्धया पतिव्रताशिरोरत्नभूतया पाणिगृहीत्या कान्तया सह क्षेत्रसंन्यासमूरीकृत्य श्रीभगवतो विश्वेशितुः सर्वतः प्रियां ज्ञानरत्नप्रकाशिकां काशिकां पुरीमधिवसन्, स्वकीयया सर्वशास्त्रावगाहनपरिष्कृतपरिमलबुद्ध्या, तत्क्षणप्रखर-

---

१. 'रामः सीता च सौमित्रिर्मया नीता रथेन ते ।
शृङ्गवेरपुराभ्याशे गङ्गाकूले व्यवस्थिताः ।।' (–अध्यात्मरामायणम्) ।
शृङ्गवेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ।
गुहमासाद्य धर्मात्मा निषादाधिपतिं प्रियम् ।।' (–मूलरामायणम्) ।

२. 'विसेनवशजलधौ पूर्णशीतकरोऽपरः ।
तेन श्रीरामभक्तेन सर्वा विद्याः प्रजानता ।।
शृङ्गवेरपुरेशेन रिपुकक्षदवाग्निना ।
अर्थिनां कल्पवृक्षेण विद्वज्जनसभासदा ।।
नागेशभट्टशिष्येण बध्यते रामवर्मणा ।
सेतुः परोपकृतयेऽध्यात्मरामायणाम्बुधौ' ।।
(–अध्यात्मरामायणटीकायाम्) ।

३. 'याचकानां कल्पतरोररिकक्षहुताशनात् ।
शृङ्गवेरपुराधीश-रामतो लब्धजीविकः' ।। (–बृहच्छेखरः) ।

४. 'शेषालङ्कारकं दुर्गा-रमोमा-कान्तया युतम् । गुरुं नत्वाऽऽश्रये बद्धशब्दरत्नेन्दुशेखरम् ।।' इति भावप्रकाशे वैद्यनाथपायगुण्डे ।

तरकोटि-कल्पना-निर्माण-प्रदर्शितानन्यसाधारणवैदुष्येन च चमत्कृतिमुपनीतया, तदानीन्तनया काशीस्थविद्वत्परिषदा ससम्मानम् 'उपाध्याय' इत्युपाधिना (यश्चायमुपाधिरुप[1] नामतामपि पश्चाल्लेभे) विभूषितः का[2]लोपनामकोऽयं नागोजीभ[3]ट्टापराभिधानः श्रीनागेशभट्टो महाराष्ट्रियाणामृग्वेदशाखाध्यायिनां देशस्थब्राह्मणानामुत्तमे कुले शिवरूपाच्छ्रीशिवभ[4]ट्टात्, सतीकुलशेखरायमाणायां सतीदेव्यां जन्म लेभे।

## नागेशभट्टानां गुरवः, शिष्याश्च

प्रकाण्डविद्वद्वृन्दमहीयस्यां वाराणस्यां विहितनिवसतीनां श्रीमतां भट्टोजिदीक्षितानां पौत्रेभ्यः, शिक्षितानेकशिष्येभ्यो विद्वत्संसदि लब्धकीर्त्तिभ्यो महावैयाकरणेभ्यः, श्रीवीरेश्वरतनुजन्मभ्यः, सुधीन्द्रहरिदीक्षितेभ्यः सकलं महाभाष्यान्तं व्याकरणं याथातथ्येनाभिगम्य, विद्वच्छिरोभूषणानां न्यायदर्शनपारदृश्वनाम्प्रतिवादिभयङ्कराणां श्रीरामरामभट्टाचार्यमहाभागानां चरणकमलसेवनाल्लब्धकृपापोतोऽयं नागेशो न्यायाब्धिमतिगभीरमपि हेलयैवापपारत्। तदुक्तं श्रीमता नागेशभट्टेन स्वयमेव लघुमञ्जूषायाम्—

'अधीत्य फणिभाष्याब्धिं सुधीन्द्रहरिदीक्षितात्।
न्यायतन्त्रं रामरा[5]माद्वादिरक्षोघ्नरामतः'॥
'दृढस्तर्केऽस्य नाभ्यास' इति चिन्त्यं न पण्डितैः।
दृषदोऽपि हि सन्तीर्णाः पयोधौ रामयोगतः'॥ इति।

रसगङ्गाधरनाम्नि प्रसिद्धतमे साहित्यग्रन्थे च गुरु[6]-मर्मप्रकाशाख्यां

---

१. 'इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टकृते शब्देन्दुशेखराख्ये सिद्धान्तकौमुदीव्याख्याने उत्तरार्द्धम्। (—बृहच्छेखरः)।

२. इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते सिद्धान्तकौमुदीव्याख्याने पूर्वार्द्धं समाप्तम्'। (—बृहच्छेखरः)।

३. 'इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते शब्देन्दुशेखरे तिङन्तं समाप्तम्'। (—बृहच्छेखरः)।

४. 'नागेशः किल नागेशभाषितार्थविचक्षणः।
शिवभट्टसुतो धीमानुपाध्यायोपनामकः' ॥(—बृहच्छेखरः)।

५. 'रामरामात्=रामरामभट्टाचार्यात्' इति मञ्जूषायाः कलाटीका।

६. 'नत्वा गङ्गाधरं मर्मप्रकाशं तनुते गुरुम्।
रसगङ्गाधरमणेरतिगूढार्थसंविदे ॥

व्याख्यामुपनिबध्नन्नयं साहित्यशास्त्रविषये पण्डितेन्द्रश्रीजगन्नाथमात्मन आचार्यत्वेनोपाग्रहीदित्यनुमीयते कैश्चित् ।

परन्तु शब्देन्दुशेखर-लघुशब्दरत्नादौ श्रीजगन्नाथपण्डितराजनिर्मितस्य मनोरमाकुचमर्दनस्य, टीकारूपेणापि लिखिते गुरु-मर्मप्रकाशे रसगङ्गाधरस्य च बहुत्र खण्डनदर्शनान्नायं नागेशभट्टो पण्डितराजजगन्नाथस्य शिष्यो भवितुमर्हति ।

'गुरु-मर्मप्रकाश'इति स्वविरचितटीकाया नाम्नि 'गुरु'रिति पदसम्बन्ध-स्तु 'गुरुमञ्जूषा' इतिवत् प्रकाशाख्ये स्वटिप्पणे गुरुत्वबोधनायैव । अनेन लघुमर्मप्रकाशोऽप्यनेन व्यरचीत्यपि स्पष्टं ज्ञायते' इत्यपि केचन विद्वांसो व्याहार्षुः ।

सर्वशास्त्रेष्वप्रतिहतप्रवेशस्यास्य नागेशभट्टस्य यद्यप्यासन् बहवश्छात्राः, तथापि तेषु 'वैद्यनाथ'पायगुण्डेनामा एक एवायं स्वगुरुसदृशं प्रौढं पाण्डित्यं, ग्रन्थप्रणयनव्यसनञ्च गुरुचरणकृपावशादवाप्य परां प्रसिद्धिमुपाययौ। दृढतरगुरुभक्तेनानेन पायगुण्डेमहाभागेन स्वगुरुविरचितानां प्रायेण सर्वेषा-मेव व्याकरणग्रन्थानामुपरि वैदुष्यपूर्णा गुरोर्गभीराणामभिप्रायाणामुपदर्शिका विस्तृताष्टीका व्यरच्यन्त । व्याकरणशास्त्रग्रन्थेष्विवान्येष्वपि शास्त्रेषु महाभागेनाऽनेनोपनिबद्धा महत्त्वपूर्णा ग्रन्था उपलभ्यन्ते । अस्य वैद्यनाथस्य पुत्रो बालशर्मापि स्वपितृगुरोर्नागेशभट्टस्यैव शिष्यतां स्वीचकारेति तन्नि-र्मितस्य 'धर्मशास्त्रसंग्रह'-ग्रन्थस्य परिशीलनेन विज्ञायते । वैद्यनाथस्य च मन्युदेवाऽपराऽभिधानो मन्नुदेवनामा प्रखरमतिः शिष्यो बभूव येन 'मन्नु-देवी'ति नाम्ना परिभाषेन्दुशेखरे एका टीका, 'लघुशब्देन्दुशेखरदूषणोद्धार'-नामकः स्वतन्त्रो ग्रन्थश्च व्यलिख्येताम् ।

## श्रीनागेशभट्टविषये प्रसिद्धाः किंवदन्त्यः

अन्येषां विशिष्टानां विदुषां विषय इव, आचार्याणां भट्टनागेशाना-मपि विषये नानाविधाः किंवदन्त्यः प्रचलिता वर्तन्ते, याभिरेतेषां जीवन-चरिते महानुपलभ्यते प्रकाशः । आसु जनश्रुतिषु कियान् सत्यांश इति

---

याचकानां कल्पतरोररिकक्षहुताशनात् ।
नागेशः शृङ्गवेरेशरामतो लब्धजीविकः' ॥

(--रसगङ्गाधरः, गुरु-मर्मप्रकाशः) ।

निर्णयो यद्यपि दुःशकस्तथापि आप्तजनपरम्परया गुरुमुखेभ्यः श्रुतिकुहरमुपागता इमाः सर्वथा अविश्वसनीया इति प्रतिपादनमपि कथं नामौचित्यं भजेत। अतोऽस्माकं ग्रन्थनायकस्यास्य ग्रन्थकर्तुः श्रीनागेशभट्टस्य जीवनकाले समुपस्थितानां कतिपयानां विशिष्टानां विश्वसनीयानां घटनानामत्रोल्लेखो मन्यामहे न सहृदयानामरुन्तुदः स्यात्।

(१)

तद्यथाऽनुश्रूयते—मल्लविद्यायां दत्तावधानोऽयं नागेशो व्यायामशालायां द्वन्द्वयुद्ध–(कुस्तीबाजी)–पाटवमेव मल्लेभ्योऽभ्यस्यन्नवशिष्टे च काले प्रत्यहं काशीप्रतोलीष्वितस्ततो भ्राम्यन्नाषोडशाब्दं पर्य्यध्ययन एवावतस्थे।

अथ गच्छता कालेन कदाचिदयं निरुद्देश्यं पर्य्यटन्ननाहूतोऽपि विद्वत्सभायां प्रविश्य, तत्र समागतानां शास्त्रार्थधुरन्धराणां विदुषां कृते विस्तारितेष्वग्रासनेषु एकमधिकृत्य स्थितस्तत्रत्यैः सभ्यैस्तथा मर्मभेदिभिर्वाग्बाणैर्भृशं विद्धः, सावमानं, सफूत्कारं निस्सारितश्च, यथाऽयमपमानाग्निना दग्धाऽज्ञानान्धकारः, स्वस्वरूपसाक्षात्कारमितिकर्तव्यताबुद्धिञ्चालभत।

हृदयाकाशे भयंकरझंझावातान्दोलनजनिकयानयावज्ञयात्मनो मौर्ख्येण च भृशं दूयमानचेताः कस्यापि दयार्द्रहृदयस्य तन्त्राचार्यस्य कृपावशाल्लब्धसारस्वतमन्त्रोऽलौकिकवैदुष्यप्राप्तये, प्राणत्यागाय वा विहितनिश्चयस्त्यक्ताहारो, वाचामधीश्वरीम्भगवतीं श्रीवागीश्वरीम्मनोवाक्कायकर्मभिस्साधु शिश्रिये।

अथ निश्चिते काले मन्त्रानुष्ठानप्रभावादधिगतवाग्देवीपूर्णप्रसादोऽल्पैरेव दिवसैस्तत्तद्गुरुजनेभ्यो लब्धसकलशास्त्रवैदुष्यः परां ख्यातिमुपागतस्तदानीन्तनैः पण्डितेन्द्रैः ससंभ्रमं, ससम्मानमपि पण्डितसभासूपस्थाप्यमानान्यग्रासनानि न बह्वमंस्त। वस्तुतः स्वकीयाभिर्निरुपमाभिः कृतिभिर्यशःशरीरेणाद्यापि संस्कृतप्रणयिनां हृत्सु परिस्फुरन्नयमनन्यलभ्यायाः स्पृहणीयायाः प्रतिष्ठायाः पदमवाप, यावच्चन्द्रदिवाकराववाप्स्यति चेति नात्र सन्देहः।

(२)

कमलालया-सरस्वत्योः प्रसिद्धसहजविरोधात् सरस्वत्याः पूर्णं कृपापात्रं प्रखरमतिरुद्भटोऽपि विद्वानयं सपत्नीको नागेशो द्विजत्वादिन्दिराकोपभाजनतयेव दारिद्र्योपहतो द्व्यहं, त्र्यहं वा प्रतिसप्ताहमुपवासं यदि न विदधीत, ननु तदेवाश्चर्यकरं भवेत्।

अथैवं योगक्षेमार्थमप्यत्यन्तं कष्टमनुभवन्त्या स्वधर्मपत्न्या धनोपार्जनाय विदेशगमनार्थं मुहुर्मुहुर्नुत्तोऽयं विद्वद्धौरेयो द्विजो दारिद्र्यादात्मानं मोचयितुं विदेशं जिगमिषुर्गङ्गातीरमागत्य, नौकया द्वितीयं पारं गन्तुकामो नाविकं 'पण्डितोऽहं ब्राह्मणः, आतरं विनापि मां नयसि चेत्परं पारं, पुण्यभागी स्याः' इति सरलया वाचा दैन्यदुःखितान्तःकरणः प्रार्थयामास।

स्वभावसुलभेनौद्धत्येन मुखरतामापन्नोऽयं नाविकश्च 'न मन्यामहेऽन्यं पण्डितमृते जगद्विदितयशोभ्यो नागेशभट्टेभ्यः, येषां कारणाद्देशोऽयं भारतं वर्षं गर्वमनुभवन्नात्मनि न माति, येषां च सम्मुखे शास्त्रार्थावसरे भवादृशाः सर्वेऽपि पण्डितमानिनः स्वमुखमप्युद्घाटयितुं वेपन्ते। जगद्वन्द्यास्त एवास्माकं मान्याः, नान्ये भवादृशाः।' इत्येवमतिविनीतांस्तानपरिचिन्वन्नविनीतशब्दैः प्रत्याचख्यौ।

नाविकवचनाद्भग्नोत्साहाः श्रीनागेशभट्टा आत्मनो विज्ञापनां कर्तुमनिच्छन्तः स्वकुटीरं प्रति परावृत्य स्वभावसुखदे व्यसनभूते ग्रन्थप्रणयनव्यापार एव पुनरपि स्वं मनो नियोजयामासुः।

(३)

अथ कदाचित्—

आशुतोषस्य भगवतः श्रीविश्वनाथस्य दर्शनेनात्मनो जन्मनो नेत्रयोश्च साफल्यं कामयमानः, पुरुषार्थचतुष्टयप्रकाशिकां काशिकां पुरीमुपागतो धर्माचरणपरिशुद्धबुद्धिः, शास्त्रानुशीलनशीलः, शृङ्गवेरपुराधीशो विद्वान् रामसिंहो विद्वदुपदेशग्रहणप्रसङ्गतो विश्वविश्रुतविमलयशसां श्रीनागेशभट्टानामप्याश्रमपदं श्रद्धाप्रेरितान्तःकरणो महतोत्साहेनाजगाम। तत्रोपस्थितैर्जीर्णशीर्णैरुपकरणैः, पटच्चरकच्चरादिभिश्च विद्यातपःपूतान्तःकरणस्य प्रशस्ततेजस्विनोऽस्य महतीं विपन्नामवस्थामनुमाय दयार्द्रहृदयो राजा पण्डितप्रकाण्डं विनयावनत इत्थं व्यजिज्ञपत्—

१. 'पीतोऽगस्त्येन तातश्चरणतलहतो वल्लभोऽन्येन रोषा-
दाबाल्याद्विप्रवर्यैः स्ववदनविवरे धारिता वैरिणी मे।
गेहं मे छेदयन्ति प्रतिदिवसमुमाकान्तपूजानिमित्तं
तस्मात्खिन्ना सदाहं द्विजकुलसदनं नाथ! नित्यं त्यजामि।'
इति 'द्विजकुलेषु कथं न प्रसीदसी'त्येवं कदाचित् पृष्टवन्तं श्रीविष्णुं प्रति कमलाया उक्तिः।

'विद्वन् ! श्रीमच्चरणकमलावलोकनक्षीणपातकचयोऽयं रामसिंहः शृङ्ग-वेरपुराधीशः श्रीमतां सेवां विधातुमभिलषति । यदि वर्तते श्रीमतां किमपि कष्टं, तदपनोदायादिशतु मां शीघ्रं, येनाहमात्मनः साफल्यं मन्वीय ।' इति । राज्ञैवं सविनयमावेदितोऽयमलौकिको विद्वान् अतिसरलेन रूपेण कस्याऽपि ग्रन्थस्यैकां पङ्क्तिं दर्शयन् राजानमेवं प्रत्यब्रवीत्—'राजन् ! प्रातःकालान् मध्याह्नं यावदस्याः पङ्क्तेरभिप्रायावगतये प्रयतमानोऽहं महान्तं कष्टमन्वभूवम् । परमिदानीमपीयं निगूढार्थैव वर्त्तते । केवलमिदमेवेदानीं विद्यते कष्टम् । यद्यत्र भवता क्रियते किञ्चित् साहाय्यन्तदाऽत्यन्तं प्रसीदामि ।' इति ।

प्रकाण्डपण्डितस्याऽस्यावितर्कितं भावगभीरमलौकिकमुत्तरमुपश्रुत्य लज्जया, श्रद्धया चावनतमूर्धा, तदीयपादपद्मनिविष्टचित्तचञ्चरीको राजा निजापराधक्षमापनाय भूमौ लुठन्, साष्टाङ्गञ्च प्रणमंस्तस्यैव शिष्यत्वमुपाग्रहीन्निरधारयच्चास्य योगक्षेमसम्पादनयोग्यामाजीविकाम् । इत्थं भूयस्यः किंवदन्त्यः श्रूयन्ते ।

## नागेशभट्टस्य सन्ततिः

नागेशभट्टस्य न कोऽपि पुत्रो बभूव । अत एवोत्तराधिकारिणोऽभावात्काश्यां भगवत्याः श्रीसिद्धेश्वरीदेव्या निकटे वर्तमानं निजं गृहं नागेशो 'देवे'त्युपाधिभाजामृग्वेदपाठिनां देशस्थब्राह्मणानां कुले परिणीतायै स्वपुत्र्यै प्रादात् । कियन्त्येव वर्षाणि व्यतीतानि, नागेशपुत्रीकुलोत्पन्नैरेवोपभुज्यमानमिदमैतिहासिकं गृहमिदानीं द्विजाऽतिरिक्तेन केनापि काशीवासिना मूल्यं प्रदाय जगृह इत्यप्यश्रौष्म । एवं च—

**'शब्देन्दुशेखरं पुत्रं मञ्जूषां चैव कन्यकाम् ।**
**स्वमतौ सम्यगुत्पाद्य शिवयोरर्पितौ मया' ॥**

इत्येवं लघुमञ्जूषादावुपलभ्यमानाच्छ्लोकात् 'शब्देन्दुशेखरे पुत्रत्वस्य, मञ्जूषायां कन्यात्वस्य चाध्यारोपको नागेशो निःसन्ततिक एवासीदि'ति कल्पनाया अप्रामाणिकत्वं स्पष्टमेव, नागेशभट्टतनयावंशजानामिदानीमप्युपलम्भात् । 'निःसन्ततिक' इत्यस्य पुत्ररूपसन्ततिरहित इत्यर्थो यद्यभिप्रेतस्तदा तूचितमेव । तत्पुत्रसत्ताधायकानां प्रमाणानामत्यन्ताभावात् ; अपि तु पुत्र्यै स्वगृहप्रदानं पुत्राऽभावमेव द्रढयति । अत एव

लघुमञ्जूषाकलाटीकायां नागेशभट्टशिष्या वैद्यनाथपायगुण्डेमहाभागा अस्य श्लोकस्य व्याख्यानावसरे '**नापुत्रस्य लोकोऽस्तीत्यादिश्रुत्यगोचरत्वमाह— शब्देन्दुशेखरमिति । स्वमतौ पत्नीत्वम् ।**'—इति प्राहुः ।

भगवत्प्रीत्यै तु स्वकृतीनां भगवच्चरणयोरर्पणमित्येष सम्प्रदायः शिष्टैः प्राचीनैर्विद्वद्भिराशीर्वादात्मकतृतीयमङ्गलत्वेनादृतो दृश्यते संस्कृतवाङ्मये भट्टोजिदीक्षिता अपि सिद्धान्तकौमुद्यन्ते—

**'भट्टोजिदीक्षितकृतिः सैषा सिद्धान्तकौमुदी ।**
**प्रीत्यै भूयाद्भगवतोर्भवानीविश्वनाथयोः' ॥**

इत्येवं व्याहरन्तोऽमुमेव सम्प्रदायमनुसरन्तो विभाव्यन्ते ।

तथा च तादृशीं शिष्टपरम्परामेवानुरुन्धानो नागेशः स्वकृतिषु पुत्रत्व-पुत्रीत्वे आरोप्य शिवयोरर्पयामास । नैतावता 'पुत्रवदस्य कन्यापि नैवासीदन्यथा कथं नाम मञ्जूषायां कन्यात्वमादधीत नागेशः' इति शङ्कनीयम् । अत एव नागेशसमकालिको प्रौढो नैयायिको विद्वान् महादेवपुणताम्बेकर-महाभागः सत्स्वप्यनेकपुत्रेषु स्वनिर्मिते प्रकाशकौस्तुभे पुत्रत्वं, स्वनिर्मितायां सर्वोपकारिण्यां पुत्रीत्वमारोप्य शिवचरणाब्जयोस्तावार्पयत् । एवं सत्यपि **'मञ्जूषां चैव कन्यकाम्'** इति वाक्यान्नागेशस्य न काचित्कन्याप्यासीदित्या-गृह्णन्ति ये, ते मन्यामहे 'स्वमतौ सम्यगुत्पाद्ये'ति वाक्यबलात् 'नागेश-भट्टोऽयं यावज्जीवमविवाहित एवासीत्, कथमन्यथा स्वमतौ पत्नीत्वमादधीते'त्येतत्साधयितुमपि कदाचित्प्रयतेरन्नित्यलं विस्तरेण ।

## नागेशभट्टस्य समयः

जीवनकालनिर्णायिकानां दृढतरप्रमाणामनुपलम्भाद्यद्यपि कदायमुत्पन्नः, कदा च पाञ्चभौतिकं स्वं विग्रहं जहाविति निश्चप्रचं न शक्यते व्यवस्थापयितुम्, तथापि १७३१ वैक्रमाब्दात् १८१० वैक्रमाब्दं (१६७४-१७५३ ई० सन्) यावत्कदाचिदयमासीदित्यनुमीयते ।

तथा हि—'जयपुराधीश्वराः श्रीजयसिंहवर्माणः १७७१ वैक्रमेऽब्दे (१७१४ ई०) अनुष्ठीयमानेऽश्वमेधयज्ञे पण्डितनरेन्द्रममुं श्रीनागेशभट्टमपि जयपुरागमनाय निमन्त्रयामासुः । परम् '**अहं क्षेत्रसंन्यासं गृहीत्वा काश्यां स्थितोऽस्मि, अतस्तां परित्यज्य नान्यत्र गन्तुं शक्नोमि**' इत्युत्तरं ददन्नागेशो

न तन्निमन्त्रणं स्वीचक्रे ।' इति नागेशविषयिणीं प्रसिद्धां घटनां जयपुरनिवासी महामहोपाध्यायो दुर्गाप्रसादशर्मा स्वसम्पादितरसगङ्गाधर-भूमिकायां नागेशभट्टस्य कालनिर्धारणप्रसङ्गे व्यलिखत् ।

अतिदूरं स्थितेभ्यो नागेशभट्टेभ्यो जयपुरनगरात्प्रेषितं जयसिंहवर्मणो राज्ञो निमन्त्रणपत्रं तेषां देशान्तरव्यापिनीं परामुत्कृष्टां ख्यातिं—यस्या उपार्जने स्वीयजीवनकालस्य प्रथमश्चत्वारिंशद्वर्षप्रमितो भागोऽवश्यमेव व्ययीकृतो भवेत्–अनुमापयति । अथैवं यदि अश्वमेधयज्ञसमयात् चत्वारिंशद्वर्षाणि हीयन्ते, तदा समुपलभ्यते स एव १७३१ वैक्रमाब्दसमयः ।

वाराणसेये सरस्वतीभवन-पुस्तकालये बृहच्छब्देन्दुशेखरस्यैकं १७६१ वैक्रमाब्दे लिखितं खण्डितं पुस्तकम्—यस्याऽस्माभिः 'घ' इति सङ्केतेनोपयोगोऽत्र विहितः—उपलभ्यते । एवमेव भानुदत्तकृताया रसमञ्जर्या उपरि नागेशभट्टेन लिखितायाष्टीकाया अपि १७६९ वैक्रमेऽब्दे लिखितो हस्तलेख 'इण्डिया-आफिस-लाइब्रेरी'नामके लण्डननगरस्थे पुस्तकागारे सुरक्षितो वर्त्तते । तद्यदि बृहच्छब्देन्दुशेखरनिर्माणावसरे नागेशोऽयं त्रिंशद्वर्षदेशीयोऽपि भवेत्, तदाप्यस्य जन्मकालः १७३१ वैक्रमाब्दः, तदर्वाक्, पश्चाद्वा सिद्ध्यति । इण्डिया-आफिस-पुस्तकालयस्थो हस्तलेखोऽप्यत्रैव तात्पर्यं ग्राहयति ।

१७१४ वैक्रमेऽब्दे (१७५७ ई०) विद्वद्रत्नप्रभाभूषितायामस्यां वाराणस्यां बहोः कालात्प्रचाल्यमानस्य 'महाराष्ट्रियब्राह्मणेषु 'देवरुखे' इत्युपाधिधारिणो ब्राह्मणाः सम्बन्धार्हा न वे'ति विवादस्य निर्णयाय शास्त्रमर्मज्ञानां विपश्चितामभूदेका सभा, यस्यां 'देवरुखे ब्राह्मणा सम्बन्धार्हाः' इति निर्णयः समजनि । एतन्निर्णयव्यवस्थापत्रोपरि निर्णेतृत्वेन हस्ताक्षराणि विदधतां द्वासप्ततिसंख्यकविदुषाम्मध्ये श्रीनागेशभट्टगुरवो रामरामभट्टाचार्या अप्येके वर्तन्ते । व्यवस्थापत्रमिदं श्रीरामकृष्णसदाशिवपिंपुटकरेण 'चितलेभट्टप्रकरण'नामके पुस्तके मुद्रापितमुपलभ्यते । अनेन व्यवस्थापत्रेणापि '**न्यायतन्त्रं रामरामात्**' इति मञ्जूषोक्तश्लोकाद् नागेशस्य १७३१ वैक्रमेऽब्दे सत्ता सम्भाव्यत इति, प्रायेण प्रामाणिक एवैष समयः ।




किञ्च—पण्डितराजश्रीजगन्नाथोपनिबद्धरसगङ्गाधरप्रसिद्धसाहित्यनिबन्धगुरुमर्मप्रकाशव्याख्यारचयिता श्रीनागेशभट्टः पण्डितेन्द्रजगन्नाथगुरोः प्रक्रियाप्रकाशकृतः श्रीशेषवीरेश्वरस्य समकालीनानां प्रौढमनोरमालेखकानां श्रीभट्टोजिदीक्षितानां पौत्रस्य श्रीवीरेश्वरदीक्षितसूनोः सुधीन्द्रहरिदीक्षितस्य शिष्य इति पण्डितराजाद् द्वितीयः पुरुषः स इत्युपरि दर्शितेन वंशवृक्षेण साधु बुद्धयारूढं जायते ।

अयं च पण्डितराजो जगन्नाथ इतिहासलेखकोक्त्यनुसारं १६८५ वैक्रमाब्दात् १७१५ वैक्रमाब्दं (१६२८–१६५८ ई० सन्) यावद् वर्तमानस्य यवनसम्राजः 'शाहजहाँ' इत्याख्यस्य राजसभायां ततो लब्धपण्डितराजपदवीको राजपण्डितो बभूवेति पण्डितराजस्याप्ययमेव समय इति न सन्देहास्पदम् । तथा चात्रापि यदि पुरुषद्वयपर्य्याप्तसमयः प्रायेण (४०) चत्वारिंशद्वर्षाणि योज्यन्ते, तदा १७५५ वैक्रमाब्दस्य प्राक्पश्चाद्वा तस्य नागेशस्य समयो जायते । स च पूर्वं निर्णीतान्नातिदूरं याति ।

एवमुपस्थापितानां प्रमाणानां सामञ्जस्येनैष एव निष्कर्षोऽवधारयितुं शक्यते यदीसवीयवत्सरस्य सप्तदशशताब्द्यास्तृतीयस्य चरणस्यान्तिमो भागो हि खलु नागेशभट्टानां निश्चितो जन्मकाल इति ।

एभिर्लिखिताः पञ्चाशतोऽप्यधिका महत्त्वपूर्णा ग्रन्था नागेशभट्टानां दीर्घकालिकं जीवनमनुमापयन्ति ।

महामहोपाध्यायः संस्कृतविद्यालयाध्यक्षः, श्रीहरप्रसादशास्त्री, बंगाल-रायल-एशियाटिक-सोसाइटी-संस्थया संगृहीत-ग्रन्थ-सूची-प्रस्तावनायां 'शरदां शतं जीवन्नयं नागेशः १७७५ ईस्वीयाब्दे निधनतामुपागमदि'ति प्रतिपादयामास । तथा हि—

The great supporter of Bhattoji Dixit, however was Nagoji Bhatt a pupil of Hari Dixil, who Commented upon all his works and the works of his School.

He had a long life and lived more than hundred years and died in 1775 on the day when Hasting's life was in jeapardy on account of the Benaras revolt.

परं च स्वप्रतिपादितार्थे प्रमाणस्य कस्याप्युपन्यासस्तैर्नाऽकारि ।

तथापि 'चिरजीवितया वार्द्धक्योपहतगतयः कुब्जतामुपगता गडुलपृष्ठा अपि नागेशभट्टा भित्तिमुपाश्रित्य, भित्तौ गडुलप्रवेशार्हं छिद्रं च विधाय, तत्प्रविष्टपृष्ठगडुलभागा आदेवलोकगमनं ग्रन्थान्निरमासिषुः' इत्येवं प्रसिद्धा वाराणसेयी जनश्रुतिर्यदि सत्या, विश्वसनीया च तदा हरप्रसाद-शास्त्रिलेखोऽपि प्रमाणान्तरं नैवापेक्षते ।

एवमेवैतद्विरुद्धं 'द्वाषष्टितमे वर्षे श्रीनागेशभट्टः शिवसायुज्यमगादि'-त्येवमभिदधानो ज्ञानकोशकृदपि स्वाभिमतार्थे प्रमाणं नैवोपन्यस्तवान् ।

एवं स्थिते श्रीनागेशभट्टोऽमुष्मिन् वर्षे सांसारिकाद्बन्धनाद्विमुक्तोऽभू-दिति सम्यङ् न शक्यते वक्तुम्, तथापि एतल्लिखितग्रन्थानां संख्ययाऽस्य दीर्घजीवितत्वे नास्ति कस्यापि सन्देह इति प्रागेवाऽवोचाम ।

## नागेशभट्टरचिता ग्रन्थाः

सर्वशास्त्रमर्मज्ञः, सकलतन्त्रेष्वप्रतिहतगतिर्नागेशो व्याकरणशास्त्र इव अन्येष्वपि साहित्य-पुराण-योग-दर्शन-धर्मशास्त्रादिषु महत्त्वपूर्णान् ग्रन्थान्, टीकाश्च व्यररचत् । यद्यप्यनेन लिखितानां न सर्वेषां ग्रन्थानामुपलब्धि-र्ज्ञानं वाऽद्य यावज्जातम्, तथापि एतन्नाम्नोपलब्धानां, ज्ञातानामपि तावतां ग्रन्थानां संख्या न वर्तते न्यूना । 'केटलाग्स आफ केटलोगोरम्' इत्याख्ये सूचीपत्राणां सूचीपत्रपुस्तके एतल्लिखितानां ग्रन्थानामेका विस्तृता वर्तते सूची । तदनुसारमन्यप्रामाण्याच्च अधोनिर्दिष्टा ग्रन्था नागेशभट्टकृति-

त्वेनोपगृह्यन्ते—येषां परिचयात्मकं विस्तृतं विवरणं 'श्रीनागेशभट्टः' इति नाम्ना यथावसरं प्रकाश्यमाने स्वतन्त्रे निबन्धे यथाशक्ति विधास्यतेऽस्माभिः। तानि च ग्रन्थनामानि यथा—

(१) बृहच्छब्देन्दुशेखरः, (२) लघुशब्देन्दुशेखरः, (३) गुरुमञ्जूषा, (४) लघुमञ्जूषा, (५) परमलघुमञ्जूषा, (६) लघुशब्दरत्नम्, (७) अष्टाध्यायीसूत्रपाठः, (८) तिङन्तसंग्रहः, (९) धातुवृत्तिः, (१०) णेरणौवादार्थः, (११) परिभाषेन्दुशेखरः, (१२) महाभाष्यप्रदीपोद्द्योतः, (१३) विषमपदी, शब्दकौस्तुभटीका, (१४) वैयाकरणकारिका, (१५) वृत्तिवादः, (१६) शब्दानन्तसागरसमुच्चयः, (१७) सुप्तिङन्तसागरसमुच्चयः, (१८) स्फोटवादः, (१९) अलङ्कारसुधा (कुवलयानन्दटीका), (२०) लघुकाव्यप्रदीपोद्द्योतः, (२१) गुरुकाव्यप्रदीपोद्द्योतः, (२२) गुरुमर्मप्रकाशः, (२३) रसतरङ्गिणीटीका, (२४) रसमञ्जरीप्रकाशः, (२५) तीर्थेन्दुशेखरः, (२६) अध्यात्मरामायणटीका, (२७) चण्डीपाठटीका, (२८) चण्डीस्तोत्रप्रयोगविधिः, (२९) आचारेन्दुशेखरः, (३०) तीर्थेन्दुशेखरः, (३१) त्रिस्थलीसेतुः, (३२) अशौचनिर्णयः, (३३) कात्यायनीतन्त्रम्, (३४) इष्टिकालनिर्णयः, (३५) प्रयोगतरणिः, (३६) प्रायश्चित्तेन्दुसंग्रहः, (३७) लक्षणरत्नमाला, (३८) सापिण्ड्यमञ्जरी, (३९) तर्कभाषाटीका, (४०) तात्पर्यदीपिका, (४१) प्रभाकरचन्द्रतत्त्वदीपिका, (४२) पदार्थदीपिका, (४३) पातञ्जलसूत्रवृत्तिः, (४४) पातञ्जलसूत्रवृत्तिभाष्यच्छायाव्याख्या, (४५) व्याससूत्रेन्दुशेखरः, (४६) वेदसूक्तभाष्यम्, (४७) लघुसांख्यसूत्रवृत्तिः, (४८) प्रत्याख्यानसंग्रहः, (४९) एकश्रुतिवादः, (५०) श्राद्धेन्दुशेखरः, (५१) कालेन्दुशेखरः, (५२) गीतगोविन्दटीका, (५३) सुधालहरीटीका, (५४) वाल्मीकीयरामायणटीका, (५५) परमार्थसारविवरणम्, (५६) वृत्तिसंग्रहः।

पाणिनीयव्याकरणसिद्धान्तानां परिष्कर्तुर्महावैय्याकरणस्य, परमतालोचने, स्वसिद्धान्तस्थापने च नवीनानां स्वप्रतिभोद्भासितानां साहित्यशास्त्रसिद्धान्तानां निर्धारयितुः पण्डितराजजगन्नाथस्योपमामादधानस्य श्रीमतो नागेशभट्टस्य, तन्निर्मितानां ग्रन्थानां चोपरि न तावदद्यावधि तादृशमन्वेषणकार्यं समजनि, यादृशमासीदावश्यकमिति महतः खेदस्य विषयः। अन्यथाऽन्येषां तत्कृत-ग्रन्थानां, तत्सिद्धान्तानाञ्चावश्यमेव भवेद्विकासः।

मन्यामहे वाराणसेय-संस्कृत-विश्वविद्यालयस्यानुसन्धानविभागोऽनुसन्धानसमर्थप्रतिभासम्पन्नैर्योग्यतम-संचालकैरादिष्टेन पथोन्नतेः परमशिखरमधिरुरुक्षुरेतादृशानां प्राचीनानां ग्रन्थप्रणेतॄणां विषयेऽवश्यमेवावश्यकमनुसन्धास्यतीति ।

अथैवमुपलब्धैरुपकरणैर्यथामति परिष्कृतेऽप्यत्र बृहच्छब्देन्दुशेखरे भ्रमप्रमादविप्रलिप्साकरणाऽपाटवादीनां मनुष्यस्वभावसुलभतयाऽस्मदज्ञानविलसिता मुद्रणयन्त्रसङ्घर्षोद्भाविताश्च मात्राभङ्गादिका नैकविधास्त्रुटयो याः खलु सम्भवेयुस्ता उदाराशयैर्विद्वद्भिस्समीकरणीया एव ।

ननु विद्वन्निवहैरेवैकपदे संहत्य कर्तुमर्हं नितान्तं गुरुकर्मैतद्बृहच्छब्देन्दुशेखरसम्पादनं नाम त्रिचतुराक्षरलवलघीयसा चेतसा कुर्वन्नहं कथं नु वा न वचनीयोऽस्म्यभिरूपाणाम् ?

अथाप्यप्रकाशितग्रन्थप्रकाशनकौतुकङ्कथङ्कथमपि संवरीतुमसमर्थेन मया केनाप्यदभ्रेण साहसेन साधु सम्पाद्य संस्कृतजगत्युद्भावितोऽयं ग्रन्थो यदि विदुषस्तोषयेन्ननु सफलश्रमोऽहं कृतकृत्यमात्मानं मंस्ये ।

## कृतज्ञताप्रकाशः

अथाऽस्य प्रायेण परस्परविपरीतैर्विपुलैः पाठभेदैः परिवर्द्धितकलेवरस्य बृहतः शब्देन्दुशेखरस्य संस्कृतविदुषामुपकारबुद्धयैवाऽतिव्ययसाध्यां मुद्रणव्यवस्थां सरस्वतीभवन-पुस्तकागाराद्यथोपलब्धलिखितग्रन्थावाप्तिसौकर्यञ्च, सोत्साहं, सानुरागं विदधतां, परममान्यानां, संस्कृतभाषोद्धारबद्धपरिकराणां, महनीयसुललितकीर्त्तिकलापपरिमलभरोल्लासितनिखिलजगतीवलयान्तरालवर्त्तिविद्वज्जनमानसमरन्दानां, सुरभारतीविभ्रमभरैकनिकेतनानां, भारतीयसभ्यतासंस्कृतिसमुपासकानां विपश्चिल्लोकवल्लभानामुत्तरप्रदेशमुख्यमन्त्रिणां, स्वनामधन्य**श्रीसम्पूर्णानन्दमहाभागानां** सर्वः सुरभारतीप्रणयिसार्थ एवाऽधमर्णतां भजते ।

वस्तुतो गुणैकपक्षपातिनां, सकलप्रदेशराज्यधूर्वहनीतिविदग्रेसराणामेतेषां मुख्यमन्त्रिमहोदयानामस्मिन् बृहच्छब्देन्दुशेखरप्रकाशनकार्ये यदि नाऽभविष्यद्विशिष्टः कृपाकटाक्षस्तदा नैवेदं संस्कृत-वाङ्मयाब्धेरमूल्यं ग्रन्थरत्नं प्रकाशमुपाभजिष्यदिति मुख्यमन्त्रिमहोदया एवाऽत्र विशेषतो धन्यवादार्हा इत्येवमस्य ग्रन्थमणेः प्रकाशने पदे पदे हठादुपस्थितेभ्यो नानाविधविघ्नेभ्यो भृशं दूयमानचेतसामपि तत्तदवसरे मुख्यमन्त्रिमनीषिभिर्वर्द्धि-

तोत्साहानामस्माकमावेदनं न खलु केषामपि कृते चटुलश्चाटुवादोऽपि तु वस्तुस्थितिकीर्त्तनमात्रमेव।

तदेवमेतद्ग्रन्थ-सम्पादन-मुद्रण-प्रकाशनादि-सर्वविध-सकल-श्रेयोभाजः **श्रीसम्पूर्णानन्दमहाभागान्** **वयं** शब्दैः प्रशंसाम इत्येवमभिचिन्तयतां खलु निरुद्धप्रसरेव नः सरस्वती।

किञ्चैवमेतद्ग्रन्थसम्पादन-मुद्रण-प्रकाशन-पुस्तकादानप्रदानादिविविध-कार्येषु स्वस्वानुरूपं विशिष्टं साहाय्यमातिष्ठद्भ्योऽनुसन्धानविभागाध्यक्षेभ्यो विद्वत्सदसि लब्धकीर्त्तिभ्योऽनेकभाषाप्रवीणेभ्यः **श्रीक्षेत्रेशचन्द्रचट्टोपाध्याय-महाशयेभ्यः**, वाराणसेय-संस्कृत-विश्वविद्यालयस्य प्रस्तोतृपदमलङ्कुर्वद्भ्यो विपश्चिदपश्चिमेभ्यः **श्रीकुबेरनाथशुक्लमहोदयेभ्यश्च** धन्यवादान्वितरन्तस्तेषां सौजन्यातिशयं श्लाघामहे।

तदनु '*Preface and Introduction to An Edition of Brihacchabdendushekhara of Nagesh*' इत्याख्यस्यैतद्ग्रन्थसम्बन्धिनो निबन्धस्य (thesis) विलेखनावसरे विशिष्टमुचितं निर्देशं यथावसरमुपादिशद्भ्यः, सहृदयधुरीणेभ्यो हिन्दूविश्वविद्यालयसंस्कृतविभागाध्यक्षेभ्यो डॉ० श्रीसूर्य्यकान्तशास्त्रिमहाभागेभ्योऽनेकान् साधुवादान् क्रियासमभिहारेणोदाहरन्तो वयमेतेषामनुग्रहभरं नितरां धारयामः।

**नानापुस्तकपाठभेदविलसत्प्रोद्भिन्ननानामत-**
**व्याख्याभेदविशङ्कटोक्तिगहनो नागेशभट्टोम्भितः।**
**नव्यव्याकरणाऽब्धिगाहनरसव्यासङ्गभाजां बृहद्**
**हृद्यः शेखरनामको विजयते शब्देन्दुपूर्वो निधिः॥**

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत्॥**

श्रीराजस्थान-संस्कृत-कालेज,
मीरघाट, वाराणसी—१
चैत्रकृष्णः १०, भौमे, सं० २०१७ वै०

—इत्याशंसमानस्य विधेयतमस्य
**श्रीसीतारामशास्त्रिणः**
ता० २२-३-१९६०

---

१. अस्माभिः 'पी-एच० डी०' इत्युपाधिप्राप्त्यर्थं 'बृहच्छब्देन्दुशेखर'ग्रन्थमधिकृत्य लिखितस्य, काशीस्थहिन्दूविश्वविद्यालये च समुपस्थापितस्याङ्ग्लभाषामयस्य निबन्धस्य (Thesis) प्रकाशनं तु ततो लब्धानुज्ञैर्यथावसरं विधास्यते।

॥ श्रीः ॥

# बृहच्छब्देन्दुशेखरे

## प्रथमभागप्रकरणसूची





॥ श्रीमहागणपतये नमः ॥

अथ महामहोपाध्यायश्रीनागेशभट्टविरचितः

# बृहच्छब्देन्दुशेखरः



नागेशः किल नागेशभाषितार्थविचक्षणः ।
शिवभट्टसुतो धीमानुपाध्यायोपनामकः ॥१॥
याचकानां कल्पतरोररिकक्षहुताशनात् ।
शृङ्गवेरपुराधीश-रामतो लब्धजीविकः ॥२॥
नत्वा फणीशमीशानं कौमुद्यर्थप्रकाशकम् ।
मनोरमोमार्द्धदेहं तन्वे शब्देन्दुशेखरम् ॥३॥

## ॥ अथ संज्ञाप्रकरणम् ॥

ग्र[२]न्थसमाप्ति-ग्रन्थप्रचारादि-प्रतिबन्धकविघ्न-विघाताय समुचितऋषित्रयनमस्काररूपं मङ्गलमाचरन् शिष्यशिक्षायै, व्याख्यातृ-श्रोतॄणामनुषङ्गतो मङ्गलाय च निबध्नाति—**मुनित्रयमिति**। कारकविभक्तेर्बलीयस्त्वाद् द्वितीया। **परिभाव्येति**। तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात्—

---

१. 'नागेशभट्टो' ग. ख. पुस्तकपाठः ।

२. 'प्रचारादि' इत्यन्तोऽयं पाठः ख. पुस्तके नास्ति ।

प्राचामुक्तीस्तिरस्कृत्येत्यर्थः। मुनित्रयोक्तीर्विचार्येत्यर्थः[1]। न चाऽत्राऽर्थे[2] 'परिभावस्तिरस्क्रिया' (अम०१।७।२२)[3] इति कोशविरोधः। कोशस्य नामलिङ्गानुशासनत्वेन धातोस्तिरस्कारमात्रार्थाऽबोधकत्वात्। 'परौ भुवोऽवज्ञाने' (३।३।३५) इति विशेषणेनाऽन्यार्थबोधनाच्च। एतेन स्वग्रन्थस्य प्राचीनग्रन्थैरगतार्थता, समूलत्वं च ध्वनितम्। भाविनोऽपि बुद्ध्या विषयीकरणादियमिति निर्देशः। सिद्धान्त[4]प्रकाशकत्वेनाऽतिदुरूहग्रन्थान्तरेभ्यः सिद्धान्तज्ञाने जायमानस्य क्लेशरूपसन्तापस्य शामकत्वेन च कौमुदीसादृश्यम्[5]।

अत्र **'सिद्धान्तकौमुदी'** इत्यनेन वैयाकरणसिद्धान्तो विषयः। तज्ज्ञानं प्रयोजनम्। तज्जिज्ञासुरधिकारीत्यादि बोधितम्।

**अइउणिति**—एषु जातिपरो निर्देशः। अत एव 'अवात्ताम्' इत्यादावुभयोरपि झल्त्वात् 'झलो झलि' (८।२।२६) इत्यादिसिद्धिः। तत्र यद्यपि ह्रस्वदीर्घप्लुतसाधारणी जातिरस्ति, तथापि तस्या अत्र न निर्देश, अणुदित्सूत्रेऽण्ग्रहणात्; किन्तु तद्व्याप्या ह्रस्वमात्रवृत्तिरपि सा स्वीक्रियते, व्यवहारबलात्। तस्या एव निर्देशः। (अत एवा[6]ऽस्य च्वावित्यादावणुदित्सूत्रप्रवृत्तिः)। अत एव 'दीर्घाणामनण्त्वेन सवर्णाऽग्राहकत्वम्' इति सिद्धान्तः सङ्गच्छते। न चैवमपि दीर्घादीनामच्त्वं[7] न स्यात्, इष्टापत्तेः। अणुदित्सूत्रप्रवृत्त्या, लक्षणया वाऽजादिपदैस्तदुपस्थितिः शास्त्रे इत्यग्रे निरूपयिष्यामः। (यद्वा[8] व्यक्तिपक्षेऽपि विनिगमनाविरहात्तद्रूपाणां सर्वेषां ग्रहणमत्र। तदुक्तं भाष्ये—'रूपसामान्याद्वा सिद्धम्' इत्यग्रे निरूपयिष्यामः। स्पष्टं

१. 'विचार्येत्यर्थश्च' ग. पाठः। 'विचार्येत्यर्थो वा' ख. पाठः।
२. 'न चाऽत्र पक्षे' ख. ग. पाठः।
३. 'अनादरः परिभवः परीभावस्तिरस्क्रिया' इत्यमरे तु दीर्घः पाठः।
४. 'सिद्धान्त' इति ग. नास्ति।
५. 'सादृश्यबोधनादुपमाऽलङ्कारो व्यङ्ग्यः' ख. पाठः; ६. ख. पुस्तकपाठः।
७. 'अत्वं न स्यात्' इति तु शोधितः क. पुस्तकपाठः; ८. ग. पुस्तकपाठः।

चेदं वृद्धिसञ्ज्ञासूत्रे कैयटे।) य[1]द्वा—व्यापकजातिनिर्देश एवाऽत्र। अणुदित्सूत्रप्रयोजनन्तु वक्ष्यते।

संज्ञासूत्राण्येतानि। नन्वेतानि न संज्ञासूत्राणि; किन्तु क्रम[2]बोधकानि। अत एव 'यमां यमि' (८।४।६४) इत्यादौ यथासङ्ख्यनिर्वाह इति चेत्, न, क्रमबोधकत्वेऽप्येषामादिरन्त्येनेत्यनेनैकवाक्यतया वृत्तिपरिच्छेदकत्वेन संज्ञासूत्रत्वाक्षतेः। क्रम[3]स्याऽपि संज्ञाद्वारेणैवोपयोगात्। एकवाक्यता चेत्थम्—'आदिरकारादिरन्त्येनेता सदृशेन णकारादिना सहित उच्चार्यमाणः सन् आद्यन्ताभ्याम[4]ाक्षिप्तमध्यगामिनामिकारोकारादीनाम्, स्वस्य च संज्ञेति' इत्याहु[5]ः। 'स्वौजस०' (४।१।२) इत्यादीनामप्येतदेकवाक्यतया सुबादिसंज्ञार्थत्वेन संज्ञासूत्रत्वमस्त्येव। स्वादिविधायकत्वमपीति त्वन्यत्।

'अइउण्' इत्यादौ संहित[6]ा—(कार्यकर[7]णेऽभिमतवर्णनिर्द्देशाऽनापत्त्या तद्—)विवक्षाविरहान्न यणादयः। 'विभक्तिस्वरप्रतिरूपकाश्च' इत्यनेन निपातत्वात्, 'निपात एकाज्' (१।१।१४) इति प्रगृह्यत्वेन 'प्रकृतिभावान्न सन्धिः' इत्यपरे।

कारप्रत्ययोऽपि बाहुलकान्न भवति। वस्तुतस्तत्र 'इक्श्तिपौ धातुनिर्देशे' (३।३।१०८) इत्यतो 'निर्देशे' इत्यनुवर्त्तते। निर्देशश्च प्रतिपादनम्। तच्च प्रत्यासत्त्या वर्णस्यैव। प्रकृते त्वानुपूर्वीसम्पादनमात्रे तात्पर्यम्, न तु 'कविपुत्रः' इत्यादौ दृष्टानां प्रतिपादने। अतो न कारप्रत्ययः। 'ककारः' इत्यादौ हलामज्व्यतिरेकेणोच्चारणाऽभावादच्सहितोच्चारणेऽपि वर्णप्रतिपादन एव तात्पर्यमिति न कश्चिद्दोषः। यत्तु 'वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादात् सन्धिर्न' इति, तन्न, वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च ज[8]ाते, 'उपेन्द्रः' इत्यादौ तटस्थ इव, उद्देश्यतावच्छेदकावच्छिन्ने वर्णोपदे-

---

१. ख. पाठः; २. 'क्रमविधायकानि' ख. पाठः।
३. क. ग. पाठः; ४. ख. पाठः।
५. 'आक्षिप्तानां सञ्ज्ञेत्याहुः' क. पाठः।
६. 'संहिताविवक्षाविरहान्न' ख. पाठः; ७. ख. नास्ति।
८. 'निष्पन्ने' ख. पाठः।

शादावपि प्रवृत्तेरापादयितुं शक्यत्वात्। वाक्याऽपरिसमाप्तिन्यायस्य तु नाऽयं विषयः। वाक्यार्थाऽप्रतिबन्धकत्वात्। पदसाधुत्वज्ञानस्य वाक्यार्थ-ज्ञानहेतुत्वाऽभावाच्च। असाधुत्वज्ञानस्य प्रतिबन्धकत्वाऽभावाच्च। अत एव 'समानायामर्थाऽवगतौ शब्दैश्चाऽपशब्दैश्च' इति भाष्यं सङ्गच्छते।

अत एव 'सरूपाणाम्' (१।२।६४), 'नाज्झलौ' (१।१।१०) इत्यादावेक-शेष-दीर्घादि सिद्ध्यति। स्पष्टा चेयं रीतिः 'भूते' (३।२।८४) इति सूत्रे तृतीये भाष्यकैयटयोः। तत्र हि 'भूते' इत्यधिकाराऽऽश्रया निष्ठा, भूतक्रियाविषयनिष्ठा-विधानाश्रयो भूताधिकारः' इत्यन्योन्याश्रयमाशङ्क्य, 'भूतशब्दो हि नित्यः शास्त्रं चाऽन्वाख्यानमात्रम्' इत्याश्रित्य समाहितम्।

यत्तु—'उपजीव्यविरोधात् सन्धिर्न। तथा हि—अजादिसंज्ञाग्रहकाले 'आद्गुणः' (६।१।८७) इत्यादीनामनिष्पत्त्या तदप्रवृत्तावविकृतरूपाऽकारा-दिषु गृहीताऽजादिपदशक्तिः पश्चादाद्गुणप्रवृत्तौ विरुध्येत। नहि सन्धौ सत्यविकृतरूपश्रवणं भवति' इति। तन्न, पुनरच्पदस्य पदार्थान्तरे शक्त्याग्रहेण तद्विरोधाऽभावात्, सकृदुच्चरितस्य सकृदर्थप्रत्यायकत्वेन पुनः शक्तिग्राहकाऽभावाच्च।

न च सन्धौ सन्देहादविकृतानामेव संज्ञित्वं न स्यात्। व्याख्यानेन निर्णयसम्भवादिति—यत्किञ्चिदेतत्।

**हयवट्**—हकारोऽत्र इण्-अश्-हश्-अड्-ग्रहणेषु हकारग्रहणार्थः। नन्विदं न्यूनम्, अम्ग्रहणेऽपि ग्रहणात्। न च तत्र फलाऽभावः। 'बहुपुम्-क्हित्याह' इत्यादौ 'पुमः खयि' (८।३।६) इति रुत्वस्य फलस्य स्पष्टत्वात्। अनुकार्याऽनुकरणयोरभेदविवक्षया पदान्तत्वाऽभावेन ककारादेर्जश्त्वप्रवृत्त्य-भावादिति चेत्, न, 'अमादिव्यवहारस्य 'ञमञ्' इति ञकारेणाऽञादिव्यव-हारेणैवोपपत्तौ ञमङणेति सूत्रे मकारो न कार्यः। झकार-भकारपरखयादेर-पत्तेः। त्वद्रीत्या 'बहुपुमक्‌भे[1]त्याह' इत्यादौ रुत्ववारणाय मकारस्या-वश्यकत्वेन तदसङ्गतिः स्पष्टैव। 'झलां जश्' इति (८।४।५३) इति

१. 'बहुपुमक्झेत्यादौ' ख. पाठः।

जश्त्वप्रवृत्तावपि तस्याऽसिद्धत्वान्न दोषः। 'झषस्तथोः' (८।२।४०) 'हयवरट्' इत्यादौ मुखसुखार्थाऽकाराद्युच्चारणेन शास्त्राऽबोधिताऽजव्यवहित-हल्समुदायस्याऽसाधुत्वबोधनाच्च[1]। (अत एव 'उच्चैरुदात्तः' (१।२।२७) इति सूत्रे भाष्यम्—'न पुनरन्तरेणाऽचं व्यञ्जनस्योच्चारणमपि भवति' इति)। अत एव अटि हकारप्रयोजनकथनाऽवसरे भाष्ये 'शश्छोटि' (८।४।६३) इत्युपन्यस्य तदुदाहरणं नोपन्यस्तम्। 'हकारपरशकाराऽसम्भवेन 'शश्छोटि' इति—प्रसङ्गोच्चारितम्' इति च **कैयटेन** व्याख्यातम्। 'अमि हकारस्य प्रयोजनम्' इति च भाष्ये नोक्तम्। तस्मात् तादृशप्रयोगाऽभाव एव भाष्यतात्पर्यम्।

नन्वेवं हलिति सूत्रं व्यर्थम्, वलादिप्रत्याहाराणां रेफेणाऽपि ग्रहणे बाधकाऽभावात्। न च 'हलन्त्यम्' (१।३।३) इत्यत्रैवं सति सूत्राऽऽवृत्त्यसम्भवेनान्योन्याश्रयो दुःपरिहर इति वाच्यम्। 'रन्त्यं[3] हर' इति पाठेनाऽऽवृत्त्या[4], हन्प्रत्याहारबोधकसूत्रसमुदायाऽन्त्यमिदित्यर्थेन वाऽदोषात्, इति चेत्, न, वल्-रल् झल्-शल्षु हकारग्रहणार्थं तस्याऽऽवश्यकत्वात्। न[5] चैवमपि 'शषसह' इत्येव सिद्धौ लकारो व्यर्थः। खरि हकारग्रहणाऽऽपत्तौ 'हरिर्हसति' इत्यादौ विसर्गाद्यापत्तेरित्यलम्[6]।

ननु चतुर्दशसूत्र्यामक्षरसमाम्नाय इति व्यवहारोऽनुपपन्नः। आम्नाय-समाम्नाय-शब्दयोः 'आम्नायस्य क्रियार्थत्वात्' इत्यादौ वेद एव प्रसिद्धत्वादत' आह—**माहेश्वराणीति**। महेश्वरादागतानीत्यर्थः। महेश्वरप्रसाद-

---

१. 'ज्ञापनाच्च' ख. पाठः; २. ख. पुस्तके नास्ति। क. ग. पाठः।
३. 'रन्त्यं हरिति पाठेनाऽदोषादिति चेन्न' ग. पाठः; ४. क. पाठः।
५. 'हर् रन्त्यम्'इत्यसमस्तपाठेनाऽदोषात्। न च 'रो रि' इति लोपे,'ढ्र' इति दीर्घे, 'हा रन्त्य'मित्यस्यापत्तिः। 'झलां जश् झशी'तिवत् सौत्रत्वेन तदुपपत्तेः। 'ढो ढे लोपः', 'रः खरवसानयो'रिवि लघुन्यासेन सिद्धौ 'रो रि' इति गुरुभूतयोगविभागेन तस्याऽनित्यत्वबोधनेन तस्याऽप्रवृत्तेश्चेति चेन्न' —क. पुस्तकपाठस्थानेऽयं ख. पुस्तके पाठः।
६. क. पुस्तके कुण्डलितः पाठः।

लब्धानीति फलितम्। एवं च तदानुपूर्वीका श्रुतिरिवाऽनादिरकर्त्तृका, प्रत्याहारादितात्पर्यिका, तत्प्रसादात् पाणिनिना लब्धा। अत एवाऽष्टाध्याय्यपेक्षयाऽस्य ग्रन्थान्तरत्वम्। अत एव च श्रुतितुल्यमूलकत्वेनाऽस्यैव वेदाङ्गत्वं प्रमाणत्वं चेति बोध्यम्। अत्र प्रमाणं तु—

**येनाक्षरसमाम्नायमधिगम्य महेश्वरात्।**
**कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः॥** इति शिक्षावचनम्।

महेश्वरेण प्रोक्तानीति व्याख्यानेऽपि मदुक्तार्थ एव पर्यवसानम्। व्याख्यानेनाऽध्यापनेन वा प्रकाशि[1]तस्यैव 'प्रोक्त'पदार्थत्वात्। प्रत्याहाराह्निकभाष्ये—'एषा ह्याचार्यस्य शैली लक्ष्यते—अक्षु अचो हल्सु हल इति', 'लण्सूत्रे णकारविषयाऽऽचार्यप्रवृत्तिर्ज्ञापयति, व्याख्यानत इति' इत्यादावाचार्यपदेन शब्दपुरुष एव। मीमांसकानां वेदपुरुषे प्रेरणादिवत्, आचार्यत्वेन व्यवहारे बाधकाऽभावात्, महेश्वरकृतत्वेन व्याख्यातॄणां मते महेश्वरवत्।

'ञमङणनम्' इत्यादौ मकारप्रत्याख्यानपरभाष्यं तु 'किमदृष्टार्थमेव तदुच्चारणम्, उत दृष्टार्थमपि' इत्येवं विचारपरमिति न दोषः। अन्यथाऽङ्गानामपि पारायणादिषु धर्मश्रवणेन तत्र-तत्र पाणिनिन्यासप्रत्याख्यानस्याऽप्यसङ्गतताऽऽपत्तिः। एवं चाऽऽम्नायसादृश्यादाम्नायव्यवहार इति बोध्यम्।

'श्रुतिरेव' इत्यन्ये। इदमेवाऽभिप्रेत्य भाष्ये उक्तम्—'सोऽयमक्षरसमाम्नायो वाक्समाम्नायः फलितः, पुष्पितश्चन्द्रतारकवत् प्रतिमण्डितो ब्रह्मराशिरिति—सर्ववेदपुण्यफलाऽवाप्तिश्चाऽस्य ज्ञाने भवति, मातापितरौ चाऽस्य स्वर्गे लोके महीयेते' इति। 'चन्द्रतारकवत् प्रतिमण्डितः' इति प्रतीकमुपादाय **भर्तृहरिणा**—'यथैवेदम् अव्युच्छिन्नं चन्द्रतारकादि, एवमस्याऽक्षरसमाम्नायस्य वाग्व्यवहारजनकस्य न कश्चित् कर्त्ताऽस्त्येवमेव वेदे पारम्पर्येण स्मर्यमाणम्' इति व्याख्या[2]तम्। तदुक्तमेतच्चतुर्दशसूत्रव्याख्यायां नन्दिकेश्वरकृता[3]यां काशिकायाम्—

---

१. 'प्रकाशिततत्त्वस्यैव' क. पाठः।
२. 'व्याख्यातमित्यलं' ख पाठः; ३. 'नन्दिकाशिकायां' क. पाठः।

**नृत्तावसाने** नटराजराजो ननाद ढक्कां नवपञ्चवारम् ।
उद्धर्त्तुकामः सनकादिसिद्धानेतद्विमर्शे शिवसूत्रजालम् ॥

तथा—

अत्र सर्वत्र सूत्रेषु अन्त्यं वर्णचतुर्दशम् ।
धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये ॥ इति ।

**धात्वर्थम्**=धातुमूलकशब्दशास्त्रप्रवृत्त्यर्थम् । इन्द्रोऽप्याह—
**अन्त्यवर्णसमुद्भूता धातवः परिकीर्त्तिताः ।** इति[1] । इत्यलम् ।

नन्वेवमपि प्रयोजनाऽभावादेषामानर्थक्यम्, कलादिदोषरहितवर्णस्वरूपज्ञानस्य लोकत एव सिद्धेः ।

कस्यचित् साधुत्वाऽप्रतिपादनाच्चाऽत आह—**संज्ञार्थानीति** । 'आदिरन्त्येन'(१।१।७१) इति सूत्रेण क्रियमाणाऽणादिसंज्ञानां सन्निवेशविशेषमन्तरेण कर्त्तुमशक्यत्वादिति भावः ।

संज्ञाप्रणयनं च लाघवेन शास्त्रप्रवृत्त्यर्थमिति बोध्यम् । गर्गाद्यादिगणेषु पाठेनाऽपठितेषु च पृषोदरादिपाठात् कलादिदोषविशिष्टानामसाधुत्वं बोध्यम् । संज्ञा[2]र्थत्वं यथा, तदाह—**एषामिति** ।

**अकारश्चेति** । तेन 'र'प्रत्याहारसिद्धिरिति भावः । अनन्त्यत्वात् पृथगुक्तिः ।

इदं च[3] तुल्यास्यसूत्रस्थकैयटाद्यनुरोधेन । **परे तु**—अस्याऽनुनासिकत्वे 'अतो ऌान्तस्य' (७।२।२) इति सूत्रे भगवान् पाणिनिर्लकारं नोच्चारयेत्, प्रत्याहारेणैव निर्वाहात् । तस्मादस्याऽनुनासिकत्वाऽभाव एव । (न च[4] तत्र लकारग्रहणमादिरन्त्येनेत्यस्याऽनित्यत्वज्ञापनाय । तस्मिन् ज्ञापिते रेफाऽकाररूपाऽऽद्यन्तविषये तदप्रवृत्ताविरसंज्ञावैयर्थ्यापत्तेः । न ह्यनित्यत्वेन तस्या एव क्वचित् संज्ञात्वं भवति, क्वचिन्नेति लभ्यते । क्वचित् संज्ञात्वसिद्धावत्रापि तथैव व्यवहारोपपत्तौ लकारोच्चारणसार्थक्यस्योपपादयितुमशक्यत्वात् ।

'व्याख्यानतः' इति न्यायेन 'रात्सस्य' (८।२।२४) इत्यादौ दोषवारणेऽपि वृद्धिविधायके लकारोच्चारणं व्यर्थमेव) । 'लोपश्च बल[5]वत्तरः' इत्यादि-

---

१. इतिः ग. पुस्तके नास्ति; २. ख. पुस्तके नास्ति ।
३. क. ग. पाठः; ४. ग. पाठः ।
५. 'सौत्रलोपेन लुप्तो वा' इत्यस्याग्रेऽयं पाठो ग. पुस्तके ।

भाष्यादप्यस्याऽनुनासिकत्वमप्रामाणिकम्[1]। एतच्चाऽनुपदमेव स्फुटीभविष्यति।

तस्मादुपालकारीयतीत्याद्यर्थम् 'उरण्' (१।१।५१) इति सूत्रे लकारग्रहणं कर्त्तव्यमेव, ऋलोः सावर्ण्य(वचन)वत्। (सौत्रलोपेन[2] लुप्तो वा)। ध्वनितं चेदं 'लपरत्वं वक्ष्यामि' इत्यनेन तुल्यास्यसूत्रे भाष्ये। (यद्वा[3] 'रलयोः समता भवेत्' इति तन्त्रोक्तेः—'रपरः' इत्यत्र 'र'शब्देन लोऽपि ग्रहणम्। अयमेव 'वक्ष्यामि' इति भाष्यार्थः। 'अतो ऌान्तस्य' (७।२।२) इत्यत्र तु स्पष्टार्थमुभयोपादानम्, उक्तार्थस्य क्वचिदनाश्रयणज्ञापनार्थं वा। तेन 'रात्सस्य' (८।२।२४) इत्यादौ न दोषः। एतदेवाऽभिप्रेत्य **शारदाटिप्पणे राघवभट्टेनोक्तम्**—'व्याकरणपरिभाषया रेण लोऽपीष्यते ग्रहणमिति' इत्याहुः)।

ननु 'अइउण्' इत्यनेनैव सिद्धत्वात् पुनर्हयवेत्यादिष्वकारो व्यर्थः। **तस्याऽपि** हल्त्वादिप्रसङ्गश्चेत्यत आह—**हकारादिष्विति**। त[4]त्फलं तूक्तमेव। 'हल्संज्ञार्थः' इति तु न भ्रमित[5]व्यम् पुनः पुनरुच्चार[6]णवैयर्थ्यापत्तेः।

**स्यादेतत्**—'न विभक्तौ तुस्माः' इत्यादिसार्थक्याय हलन्त्यमित्यस्योपदेशेऽन्त्यं हलित्स्यादित्यर्थकत्वाऽऽवश्यकत्वेन, 'हलन्त्यमादिरन्त्येन' इत्यनयोः परस्परसापेक्षत्वेनाऽन्योन्याश्रयादबोधः। एवञ्च लकारेत्संज्ञामबोधयित्वा हलामित्संज्ञाबोधनं पाणिनेरयुक्त[7]म्।

ननु 'हल्' इत्येकदेशस्यैव तन्त्रा[8]दिकमस्तु। 'हस्य ल्' इति समासः। सामीप्यं षष्ठ्यर्थः। न च 'षष्ठी स्थाने' (१।१।४९) इत्यस्य जागरूकत्वेन सामीप्यरूपः षष्ठ्यर्थो दुर्लभः, अनुवादे परिभाषाणामनुपस्थितेः, संज्ञापरिभाषयोरुभयोरपि अन्यगुणत्वेन परस्परं सम्बन्धाऽयोगाच्च, 'गुणानां च परार्थत्वात्' इति न्यायात्।

---

१. 'अप्रामाणिकमित्यग्रे निरूपयिष्यामः' ग. पाठः।

२. ग. पाठः; ३. क. पाठः, ख. ग. पुस्तके नास्ति; ४. क. ग. पाठः।

५. इतोऽग्रे 'राम' इत्यादौ संयोगान्तलोपापत्तेः' ख. पाठः।

६. 'पत्तेश्च' ख. ग. पाठः।

७. ख. पुस्तके नास्ति; ८. 'आवृत्तिरस्तु' क. ग. पाठः।

न च 'इको गुणवृद्धी' (१।१।३) इति सूत्रे तच्छेषशब्देन परिभाषयोर्गुणगुणिभावो व्यवहृत इति वाच्यम्, 'सार्वधातुकार्द्धधातुकयोः' (७।३।८४), 'अलोऽन्त्यस्य' (१।१।५२), 'इको गुणवृद्धी' (१।१।३) इति सूत्रत्रयस्य लक्ष्यसंस्कारकमहावाक्ये विशेषणविशेष्यभावमादायैव तच्छेषव्यवहारः, न तु गुणगुणिभावेन, परस्परापेक्षत्वेन वेति कैयटेन स्पष्टमुक्तेः, एतन्मूलकतयैव तत्पक्षाऽसम्भवस्य तेनोक्तेश्चेति [1]नाऽन्योन्याश्रय इति चेत्, न, 'हल विलेखने' इति धातोर्लकारस्येत्संज्ञापत्तेः। न च फलाऽभावः, 'देवदत्त ! हल' इत्यादौ लित्त्वसामर्थ्यादभस्यापि टेर्लोप इतिवत् प्रत्ययात् पूर्वत्वाऽभावेऽपि लित्स्वरस्यैव फलत्वात्। ([2]अत एव काम्यचि लुप्तनिर्दिष्टाऽऽदिर्यत्न आस्थितो भाष्ये। 'देव[3]दत्त ह्लाद' इत्यादावतिव्याप्तेश्च)। किञ्च, 'ब्राह्मणस्य कम्बलः' इत्यादावसत्यपि प्रकरणादौ स्वस्वामिभावादिवदनन्तरसमीपादिशब्दप्रयोगमन्तरा सामीप्याद्यप्रतीतौ, वृत्तौ सुतरां तदप्रतीतिरिति[4] सामीप्यादेः षष्ठ्यर्थत्वाऽभावः। पृथक् प्रयोगे त्वसामर्थ्याद् वृत्तेरेवाऽभाव इति, अस्य समासस्य क्लिष्टत्वम्। अत एव 'चित्रगुः' इत्यतश्चित्रा गावो यस्येत्य[5]तश्च चित्रग[6]वीसमीपवर्त्तिवृक्षादेरप्रतीतिः। ['चित्रगवीनाम्' इति क्वचिद्दन्त्यनकारपाठस्तु लेखकप्रमाद एव। एवं च[7]ाऽऽनन्तर्यादयः षष्ठ्यर्था एव न भवन्ति]। 'अस्तेरनन्तरे समीपे वा' इत्यादिभाष्यं तु (अनन्तरादि)-पद[8]ाऽध्याहारेण तन्निरूपितसम्बन्धार्थिका, स्थाननिरूपितसम्बन्धार्थिका वेत्यभिप्रायकम्।

अत एव मतुप्सूत्रे **कैयटेन**—'गावोऽस्य सन्त्यनन्तराः' इत्यर्थे मतुप्शङ्कापरभाष्यव्याख्यावसरे 'आनन्तर्यमस्त्यर्थवत् प्रकृत्यर्थोपाधिः' इत्युक्तम्,

---

१. 'व्यवहारादिति नान्योन्याश्रयः' ख. पाठः। 'व्यवहारः, न तु परस्परार्थव्यवस्थापकत्वेनेत्यदोषादिति नान्योन्याश्रयः' ग. पाठः।

२. क. पुस्तके नास्ति;

३. क. ग. पुस्तके नास्ति।

४. ख. पुस्तके नास्ति;

५. 'त्यतश्चित्र' ख. पाठः।

६. 'गवीणां' ख. पाठः;

७. क. ग. पुस्तके नास्ति।

८. क. पुस्तके नास्ति;

९. 'तदध्याहाण' ख. ग. पाठः।

न तु तस्य षष्ठ्यर्थ(त्वेन प्रत्ययार्थ)—त्वमुक्तम्। [भगवता भाष्य[1]कारेण चाऽसामर्थ्यादवृत्त्यभाव उक्तः]। षष्ठ्यर्थत्वे तु प्रत्ययार्थत्वात् क्वाऽसामर्थ्यम्।

तस्माद् यत्र षष्ठ्यन्तमात्रप्रयोगे आनन्तर्यादिप्रतीतिस्तत्रानन्तरादिपदाध्याहार एवेति तत्त्वम्। तत्र सूत्राऽनुपात्ताऽस्त्यर्थान्तर्भावेण बहुव्रीहिवत्, आनन्तर्याद्यर्थान्तर्भावेण बहुव्रीहि-मत्वर्थीयौ—'चित्रा गावः मन्त्यस्याऽनन्तराः' इत्यर्थे न भवतः अनभिधानादिति मतुप्सूत्रे भाष्ये स्पष्टम्। अनन्तरादेरिदमर्थत्वे 'तस्येदम्' इति शैषिको नेति 'तस्येदम्' (४।३।१२०) इत्यत्र भाष्ये। अनन्तरादिशब्दैः षष्ठीतत्पुरुषस्तु भवत्येवेत्याद्यूह्यम्।

'ग्रामकूपः' इत्यत्र ससीमके, साऽरण्यके ग्रामशब्दस्य वृत्तेरवयवार्थकषष्ठ्यैव समासः। 'अनेकाल्शित्' (१।१।५५) इत्यादौ तु 'घ्वसोरेद्धा' (६।४।११९) इत्यत्र विभक्त्यन्त-'लोपश्'शब्दोत्तरं शकारप्रश्लेषपरभाष्यप्रामाण्यात् समीप एवाऽवयवत्वारोपेण समासः। अत एव 'गङ्गातीरम्' इत्यादौ न दोषः। (स्प[2]ष्टा चेयं रीतिर्मपर्यन्तस्येति सूत्रे कैयटे। 'तीरत्व[3]-जाति—)विशिष्टेनाऽवयविना तीरेण संयोगसम्बन्धोऽप्यत्र वक्तुं शक्यः-इत्यन्ये। **अनेकान्तपक्षे** सर्वत्राऽनुबन्धग्रहणे एवमेव बोध्यम्। न च 'वुञ्छण्क-ठज्' (४।२।८०) आदौ परस्मिन्नपि सामीप्यसत्त्वाण्णित्वप्रयुक्तवृद्धिप्रसङ्गः। दध्नचश्चकारेण 'हलन्त्यमितीत्संज्ञकसामीप्यप्रयुक्तं कार्यं पूर्वस्यैव, न परस्य' इति व्याख्यानेन निर्वाहसम्भवात्। एतेन 'हात् ल्' इति पञ्चमीसमासो 'हे ल्' इति सामीप्यार्थकसप्तम्या समासो 'हसमीपो ल्'इति मध्यमपदलोपी समासश्च परास्तः। पञ्चम्याः परशब्दान्वितत्वेन, सप्तम्याः क्रियान्वितत्वेन, लकारेण सामर्थ्याऽभावाच्च। (यद्यपि 'हलसीरात्' इति निर्द्देशेन हलधातोर्लस्य नेत्सञ्ज्ञेति मध्यमपदलोपिसमासे बाधकाऽभावस्तथापि ज्ञापकस्वीकारापेक्षया स[4]म्पूर्णसूत्रावृत्तिरेव लघीयसी)।

ननु 'हल् च ल् च' इति द्वन्द्वोऽस्तु। न चाऽस्यामवस्थायां हल्पदार्थज्ञानाऽभावेन सहविवक्षाऽभावाद् द्वन्द्वो दुर्लभ इति वाच्यम्, 'आद्यन्तौ

---

१.[ ]एतदन्तर्गतः पाठः क. पुस्तके नास्ति; २. ग. पाठोऽयम्।
३. ग. पाठः; ४. 'संपूर्णावृत्ति' ग. पाठः।

टकितौ' (१।१।४६) इत्यादौ यथासंख्यमन्वयेऽपि प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नां[1]ऽन्वयमात्रेण सह विवक्षामाश्रित्य द्वन्द्वसाधुत्ववदिहापि प्रथमतो लकारो हल्पदवाच्यश्चेदिति सामान्यतो बोधं कल्पितमादाय द्वन्द्वसाधुत्वोपपादनात्। ततो विशेषजिज्ञासायामादिरन्त्येनेत्याद्येकवाक्यतया विशेषतो वाक्यार्थबोधो लक्ष्यसंस्कारक इत्यदोषः।

किञ्च, सहविवक्षा=सह वक्तुं वक्तुरिच्छा। सा चाऽऽदिरन्त्येनेति सूत्रप्रणयनानुपपत्त्या पाणिनेस्ततः पूर्वमपि हल्पदार्थज्ञानादक्षतैव। बोद्धृबोधस्तु क्रमेणैवेति चेत्, न, 'आद्यन्तौ' (१।१।४६) इत्यादौ यथासंख्यसूत्राऽऽरम्भसामर्थ्येन तथा साधुत्वाङ्गीकारेऽपि, अन्यप्रकारेण तस्य साधुत्वकल्पने मानाभावात्। किञ्च, श्रोतॄणां सह बोधो भवत्विवतीच्छया सह वक्तुमिच्छाया एव सहविवक्षात्वेन, श्रोतॄणामपि सहबोधस्यैवौचित्यात्। तादृशेच्छया तेषां तादृशबोधाऽजनकशब्दप्रयोगे तु पाणिनेर्भ्रान्तत्वापत्तिः[2]। 'मुखनयनं पश्य' इत्यादौ तु नय[3]नपदार्थाऽज्ञानवतः कस्यचित् सहबोधाऽसम्भवेऽपि, अन्यस्य तज्ज्ञानवतः सहबोधसत्त्वेन सहविवक्षाऽक्षतैव। अत्र तु न कस्यापि सहबोध इति विशेषात्। ('मु[4]खनयनं पश्य' इत्यादावुभयज्ञत्वेन ज्ञातं प्रत्येव तादृशशब्दप्रयोगात्। तेन रूपेण ज्ञानं भ्रमः, प्रमा वेत्यन्यत्। लोके भ्रमेणापि व्यवहारात्)। किञ्च, पाणिनेः पूर्वं हल्पदार्थज्ञानेऽपि तदभिप्रायेण न प्रयोगः। अन्यथा व्याख्यातृपरम्परावगतवक्तृतात्पर्याऽनुपपत्त्या, 'लट् स्मे' (३।२।११८) इति सूत्रस्थकैयटोक्तरीत्या लक्षणया, तन्त्रान्तरीयप्रथमादिव्यवहारेण प्रथमादिपदानामिव शक्त्यनुमानाद्वा, ततः श्रोतॄणां बोधसम्भवेनेतरेतराश्रयस्यैवाऽभावेन, तदाशङ्का, लकारनिर्देश-तन्त्राश्रयणादिरूपसमाधानादिपरभाष्यस्याऽसङ्गत्यापत्तेः।

न चैवमजादिव्यवहारस्यापि लक्षणादिनैवोपपत्तौ 'आदिरन्त्येन' (१।१।७१) इत्यादिवैयर्थ्यम्। 'क्वचिल्लक्षणया बोधः' इति सर्वत्र लक्षणाद्याश्रयणमेवेति नियमाऽभावात्, 'नाऽसूया कर्त्तव्या

१. 'साहित्यान्वय' क. ख. पाठः; २. क. पुस्तके नास्ति।

३. 'तु पदार्थाज्ञानवतः' ग. पाठः। 'तुः' क. ख. पुस्तके नास्ति।

४. क. ग. पाठः।

यत्राऽनुगमः क्रियते' इति 'पंक्तिविंशति' (५।१।५९) इति सूत्रस्थ-भाष्योक्तेश्च । तस्मात् 'करिष्यमाणशक्तिग्रहोपायकपदस्य तदभिप्रायेणाऽऽ-चार्यस्य पूर्वमप्रयोगः' इत्येव कल्पना ज्यायसी । ध्वनितश्चाऽयमर्थो वाक्याऽसमाप्तिप्रतिपादकभाष्येणाऽपीति स्पष्टमस्मत्कृतभाष्यप्रदीपोद्द्योते । किञ्च, लकारद्वयश्रवणापत्तिः । संयोगान्तलोपस्तु न, यणः प्रतिषेधात्, झलो लोपाच्च । ['पूर्वं[1] पूर्वमन्तरङ्गम्' इति पक्षे विभक्तिलोपस्य बहिरङ्गत्वेनाऽ-सिद्धत्वात्, लस्य संयोगान्त्यत्वाऽभावाच्च । पूर्वोक्तरीत्या द्वन्द्वस्य दुःख-लभ्यत्वेन सूत्राऽऽवृत्तेरेव युक्तत्वाच्च] । एतेन 'ह्[2]लन्त्यम्, ल्' इति प्रश्लेष इत्यपास्तम् । संयोगान्तस्य पदत्वाऽभावाच्च । सौत्रलोपाश्रयणे त्वस्मदुक्त-मेव लघु । न चेह 'शपसर्'[3] इत्यन्तं समुदायमुद्दिश्य 'ह'लित्यनेन हल्संज्ञा विधेयेति वाच्यम्, श्रोत्रगृहीतस्योद्देश्यत्वे 'वृत्त्या पदजन्योपस्थितिः शाब्दबोधे कारणम्' इति सिद्धान्तहानात् । (रान्तसमु[4]दायस्याऽज्ञातज्ञापकत्व-रूपोपदेशत्वाऽभावेन णादीनामित्संज्ञाऽनापत्तेः । आवृत्त्या[5]ऽऽदिनोभयरूपत्वे तु विपरीतगौरवम् । मम त्वानुपूर्वीविशेषस्याऽज्ञातस्य ज्ञापनादुपदेशत्वम्) । विनिगमकाऽभावेन 'अइउ' इत्यादीनामपि संज्ञापत्तेश्च । न च[6]ऽऽद्यन्तावयव-द्वारा समुदायानुकरणं हल्शब्दः, इति नाऽन्योन्याश्रय इति वाच्य[7]म्, अत्यन्तवैसादृश्येनाऽनुकरणत्वाऽयोगात् । अनुकरणं हि सादृश्याख्यसम्बन्धेन प्रतीतिजनकम् । न चैतसादृश्यं मध्यमेष्विवत्यपि वदन्ति । न च 'उपदेशे इदन्त्यम्', 'अच्', 'अनुनासिकः' इति सूत्रत्रयम् । 'अच्' इति सूत्रमनन्त्या-र्थम् । तत्र 'अनुनासिकः' इति तृतीयसूत्रेऽजित्यनुवृत्तिसामर्थ्यात् 'अच् चेद् इद् भवति तर्ह्यनुनासिक एव' इति नियमाश्रयणाद् रुप्रभृतौ न दोषः । एवं च हल्ग्रहणमपि व्यर्थम् । अन्योन्याश्रयशङ्काऽपि नास्तीत्यपरमनुकूलम् । योगविभागसामर्थ्याच्चाऽनन्तरस्येति न्यायं

---

१. क. ग. पुस्तके नास्ति;

२. क. ग. पाठः ।

३. क. ग. पाठः;

४. अयं ग्रन्थः क. पुस्तके नास्ति ।

५. 'आवृत्त्योभय' ग. पाठः;

६. 'एतेनाद्यन्तावयवद्वारा' ख. पाठः ।

७. 'इत्यपास्तं' ख. पाठः ।

बाधित्वा व्यवहितस्यापि नियमः। तेनाऽऽद्यस्याऽपि न 'रु'प्रभृतौ प्रवृत्तिः। 'मिदचोन्त्यात्परः' (१।१।४७), 'ञ्नित्यादि' (६।१।१९७) इति ज्ञापकाच्च न विपरीतनियमः।

न च पाणिनिसूत्रभेदः। एवञ्च[1] पारायणादावदृष्टहानिः। तथा च तत्र-तत्र भाष्यम्—'अपाणिनीयन्तु भवतीति—इति वाच्यम्। कल्प्यमानन्यासस्य लघुत्वेऽस्याऽदोषत्वात्। तथा च 'उपसर्गात्तः' (७।४।४७) इति सूत्रे भाष्यम्—'सूत्रभेदं तमुपाचरन्ति, यत्र तदेवाऽन्यत् सूत्रं क्रियते, भूयो वा। यदि तदेवोपसंहृत्य क्रियते, नाऽसौ सूत्रभेदः' इति। **'उपसंहृत्य'** इत्यस्य—संक्षिप्तं कृत्वेत्यर्थः। 'नाऽसौ सूत्रभेदः'—इत्यस्य 'दोषाय' इति शेषः। दृष्टद्वारैवाङ्गानामदृष्टार्थत्वमिति तदाशय इति वाच्य[2]म्।

[अप[3]वादबोधात् पूर्वमुत्सर्गवाक्यस्य लक्ष्यसंस्कारकत्वे उदासीन इवाऽपवादविषयेऽपि प्रवृत्त्यापत्तौ 'पश्चाद्भुक्तवन्तं ब्रूयान्मा भु[4]क्थाः' इति किं तेन कृतं स्यात्, इति 'स्थानेऽन्तरतमः' (१।१।५०) इति सूत्रभाष्योक्तन्यायबोधिताऽपवादशास्त्रवैयर्थ्यापत्तिमूलक-प्रातिपदिकार्थसूत्रस्थभाष्यपठित-पूर्वमपवादा अभिनिविशन्ते पश्चादुत्सर्गाः' इति न्यायेनोत्सर्गवाक्यार्थात् 'पूर्वमपवादवाक्यार्थस्यावश्यकत्वेन, तत्काले चाऽच्पदार्थनिष्पत्त्यभावेनाऽन्योन्याश्रयस्य तदवस्थत्वात्। ननु सूत्राऽऽवृत्तिमतेऽपि 'न विभक्तौ तुस्माः' (१।३।४) इति सूत्रघटकविभक्तिपदबोध्यसुप्तिङ्बोधात् पूर्वं तद्बोधेनाऽन्योन्याश्रयस्य तदवस्थत्वेन, तत्परिहाराय 'अपवादसिद्ध्युपयोग्यतिरिक्तविषय एवाऽपवादबोधात् पूर्वमुत्सर्गस्य न लक्ष्यसंस्कारकता, अपवादसिद्ध्युपयोगिनि तु तद्बोधात् पूर्वमपि सा' इत्यवश्यं वाच्यम्, 'न विभक्तौ' इत्याद्यपवादारम्भसामर्थ्यात्।

एवं च प्रकृतेऽपि न दोषः। विभिन्नविभक्तिनिर्देशेन, योगविभागेन चाऽज्विषयनियमस्य सर्वनियामकत्वज्ञानेनाऽपवादत्वनिर्णयादिति चेन्न]। योगविभागनियमज्ञापकाश्रयणरूपज्ञानगौरवमाश्रित्यार्द्धमात्रात्मकैकहकार-

---

१. क. ग. पाठः।

२. 'इति वाच्यम्। योगविभागनियमज्ञापका'—क. ग. पाठः।

३. क. ग. पुस्तके नास्ति; ४. 'भुङ्क्था' इति त्वपपाठः, लुङि श्नमभावात्।

प्रत्याख्याने 'सेयं महतो वंशस्तम्बाल्लट्वानुकृष्यते' इति ऋलृक्सूत्रस्थभाष्यविरोधः[1]। तत्र हि 'वंशस्तम्बात्' इति ल्यब्लोपे पञ्चमी। महान्तं वंशस्तम्बं संयोज्येत्यर्थः। **लट्वा**—क्षुद्रपक्षिविशेषः। लकारस्त्वननुनासिक इत्यत्र विसर्गेण समानः। किञ्चाऽजित्यस्यानुपदेशार्थत्ववारणायापि ज्ञापकाश्रयणे विपरीतं गौरवम्। एतेनैवंजातीयका अन्येऽपि पूर्वपक्षाऽऽभासा निराकर्त्तव्याः। नहि वर्णाभिव्यक्तिजनककण्ठताल्वादिव्यापारगौरवमेवादर्त्तव्यम्, न तु ज्ञानजनकमनोव्यापारगौरवमिति राजाज्ञाऽस्ति।

[यत्तु[2] 'पूर्वं ह्यपवादा अभिनिविशन्ते, पश्चादुत्सर्गाः' इति भाष्ये पठ्यते, तस्यायं भावः—लक्षणैकचक्षुष्कस्य तदुद्देश्यतावच्छेदकावच्छिन्ने सर्वत्रोत्सर्गकृतसंस्कारबुद्धावुत्सर्गापवादयोर्विषयव्यवस्थाऽनापत्त्या, 'भुक्तवन्तं प्रति मा भुक्थाः' इति वाक्यस्येवापवादशास्त्रस्य वैयर्थ्यापत्त्या च स पूर्वमपवादविषयं पर्यालोच्य, तदभावनिश्चये उत्सर्गेण तत्तल्लक्ष्यं संस्करोति।

'अभिनिविशन्ते' इत्यस्य—बुद्ध्यारूढा भवन्तीत्यर्थः। लक्ष्यैकचक्षुष्कस्तु तच्छास्त्रपर्यालोचनं विनाऽप्यपवादविषयं परित्यज्योत्सर्गेण तद्विषयलक्ष्यं संस्करोति, तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेः।

तदुक्तम्—'प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते' इति। 'ततः' इत्यस्यापवादशास्त्रपर्यालोचनात् प्रागपीत्यर्थः। 'प्रकल्प्य' इत्यस्य परित्यज्येत्यर्थः। एतन्मूलकमेव पठ्यते—'उपजनिष्यमाणनिमित्तोऽप्यपवादः' इति। न त्वपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थः। 'अभिनिविशते, अपवादविषयम्' इत्यादिपदस्वारस्यात्। पद[3]पदार्थोपस्थितौ वाक्यार्थबोधाऽभावे कारणाऽभावाच्च। वाक्यार्थबोधात् प्रागपवादत्वोत्सर्गत्वज्ञानाऽभावाच्च। अभावज्ञाने प्रतियोगिज्ञानस्य कारणतया विधिवाक्यार्थबोधं विना निषेधवाक्यार्थबोधाऽसम्भवाच्च। एतेन 'न विभक्तौ तुस्माः'

---

१. 'विरोधात्' इति क. पुस्तके पाठः।

२. क. ग. पाठः;      ३. 'पदजन्य' क. पाठः।

(१।३।४) इति विभक्तिपदबोध्य-सुप्तिङ्बोधो हलन्त्यमिति वाक्यार्थबोधोत्तरम्, तद्बोधश्चाऽपवादवाक्यार्थबोधोत्तरमित्यन्योन्याश्रयस्तदवस्थ एव इत्यपास्तम् ।

यद्यप्यत्र हलन्त्यमित्यनेन लक्ष्यसंस्कारे सुप्तिङ्रूपविभक्तिपदार्थज्ञानोत्तरम् 'न विभक्तौ' इत्यस्य वाक्यार्थज्ञानम्, ततस्तद्विषयपर्यालोचनोत्तरमुत्सर्गेण लक्ष्यसंस्कार इति—आद्यस्य न्यायस्य व्यभिचारस्तथापि न दोषः। 'तुस्माः' इत्यस्याऽसन्दिग्धतया तज्जन्योपस्थितिमात्रेण प्रथमान्तस्यैव प्राय उद्देश्यसमर्पकतायाः क्लृप्तत्वेन च पकारादावपवादविषयत्वाऽभावनिर्णयात् ।

विभक्तिपदवाच्यानां तुस्मा इतो नेत्यापाततो वाक्यार्थबोधसम्भवात्। हलन्त्यमित्यत्र हल्पदवाच्यमिद् इति वाक्यार्थबोधेऽपि तस्य लक्ष्यसंस्कारकत्वाऽभावेन, विशिष्य बोधस्यैव तथात्वेन तस्य च लकारेत्संज्ञाबोधं विना कथमप्युपपादयितुमशक्यत्वेन वैषम्यादिति दिक्] ।

न च सह आ=समन्तात् (एति=) ग[२]च्छतीत्यर्थात् सहेता=मध्यमवर्णइति, अतो नान्योन्याश्रयः । सिद्धान्तेऽपि सूत्राऽनित्यत्वावश्यकत्वेन नाऽतिप्रसङ्ग इति वाच्यम्, अन्योन्याश्रयतत्परिहारादीन् वदता भाष्यकारेण 'कटीवी' इत्यत्र प्रश्लिष्टा[४]त्, ईङ्गतावित्यतश्च[५] सहाऽऽङ्पूर्वात् तृजभावबोधनात्, इण आङा एत्येधतीति वृद्धेर्दुर्वारत्वाच्च। (इत्पदाऽभावे 'हयवरट्' इति रेफादिभिः प्रत्याहाराऽऽपत्तेश्च । सूत्रत्वाद्युपाध्यवच्छिन्नाऽन्त्यग्रहणे मानाऽभावात् । आदेरपि तादृशस्यैव ग्रहणापत्तौ यणादिसंज्ञाद्यसिद्ध्यापत्तेश्च । 'र'प्रत्याहाराऽसिद्ध्यापत्तेश्च) । अ[६]तः सूत्राऽऽवृत्त्या तं परिहरति—**हलन्त्यमिति ।**

अत एव भाष्येऽपि 'लकारनिर्देशात् सिद्धं हलन्त्यमित्संज्ञं भवति, लकारश्चेति वक्तव्यम्' इत्युक्त्वा, 'एकशेषनिर्देशाद्वा सिद्धम् । हल् च हल्

---

१. ग. पाठः; २. 'सह आगच्छती' क. ग. पाठः ।
३. क. ग. पाठः; ४. 'प्रश्लिष्टस्य' क. ख. पाठः ।
५. 'वित्यस्य च तृज' क. ख. पाठः; ६. क. ग. पुस्तके नास्ति ।

च, हल, हलन्त्यमित्संज्ञं भवति' इत्युक्तम्। तस्याऽयं भावः—कृतैकशेषेण हल्पदेन सम्बन्धसामान्यषष्ठ्या समासः। अन्त्यशब्दस्य द्वन्द्वान्ते श्रूयमाणस्येवोभयत्राऽन्वयः। [स[1] चाऽत्र क्रमिकबोधादावृत्त्यैव वाच्यः]। एवं च 'हल्सूत्रान्त्यम्' 'हल्रूपान्त्यं चेद्भवति' इति वाक्यार्थद्वयम्। न च द्वितीयार्थे षष्ठ्यनुपपन्ना। 'राहोः शिरः' इतिवदुपपत्तेः। 'हसमीपो लकार इद्भवति, हल्रूपान्त्यमित्' इति कैयटोक्तव्याख्याय इष्टत्वे हि 'हल् इत्संज्ञं भवति, ह[2]लन्त्यं चेत्संज्ञं भवति' इति वदेत्। प्राग्वत्—'हस[3]मीपो लकार इत्यस्याऽर्थाऽसङ्गतिः' इत्यपि **मनोरमायां** स्पष्टम्। एवं च पदद्वयावृत्तेरावश्यकत्वे, षष्ठ्यर्थान्वयक्लेशमसहमानो मूलकृत्संपूर्णसूत्रं पृथगावर्त्तितवानिति सुधीभिर्विभावनीयम्।

**हलिति सूत्रे इति**—(हलि[4]—अन्त्यमिति सप्तमीति योगविभागात् समासः। ननु—उक्तरीत्य[5]ा सप्तमीसमासाऽप्राप्तिः। हलीत्यस्य क्रियान्वयित्वेनाऽन्त्यपदेन सामर्थ्याऽभावः। यथा कथञ्चित् सामर्थ्याश्रयेणैतत्प्रवृत्तौ मानाऽभावात्। एतेन 'सुप्सुपा' इति समास इत्यपास्तमिति चेत्।

एवं तर्हि—) हलः=हल्सूत्रस्याऽन्त्यम् इति सूत्रे षष्ठीतत्पुरुषः। 'षष्ठी स्थाने' (१।१।४९) इत्यस्य तु 'ऊदुपधाया गोहः' (६।४।८९) इत्यादाविव, प्रागुक्तयुक्त्या चाऽप्रवृत्तिः।

अत्राऽप्युपदेश इति सम्बध्यते। तद्वल्लभ्यं—**सूत्रे इति**।

**आदिरन्त्येन** (१।१।७१)—**आदिरिति किम्?** इगादिप्रत्याहारेष्वकारादीनामपि ग्रहणापत्तेः। अन्त्यशब्देन पूर्वेषामाक्षेपात्। अन्त्येनेति किम्? इण्[6]आदिप्रत्याहारे अकारादीनामपि ग्रहणापत्तेः। आदिशब्देन परेषामाक्षेपात्। उभयोपादाने तु न दोषः। लोके 'अयमादिरन्तो वा' इत्युक्तेऽवशिष्टमपि किञ्चिदस्तीति नियमेन प्रत्ययात्—'परस्मिन् सति यस्मात् पूर्वो नास्ति स आदिः', 'पूर्वस्मिन् सति यस्मात् परो नास्ति सोऽन्त्यः' इति लक्षणस्य आवश्यकत्वेऽकारादिग्रहणे इकार-णकारादीनामाद्यन्तत्वस्यैबाऽनापत्तेः।

---

१. क. पुस्तके नास्ति; २. 'वेत्संज्ञ' ग. पाठः।
३. ख. ग. पुस्तके नास्ति; ४. क. पुस्तके कुण्डलितोऽयं पाठः।
५. ख. ग. पुस्तके नास्ति; ६. 'रप्रत्या' ख. पाठः।

इतेति किम् ?। अमङणनेत्यादिणकारादिभिः प्रत्याहाराऽऽपत्तेः। (यदि[1] त्वनित्यत्वावश्यकत्वेन तेनैवाऽनतिप्रसङ्ग इत्युच्यते, तदा इतेति[2]–'नाऽसूया कर्त्तव्या यत्रानुगमः क्रियते' इति न्यायेन बोध्यम्)। (न च[3] 'मध्यगानाम्' इत्यधिकमिति वाच्यम्)। तत्र[4] विनिगमकाऽभावादवयवत्वेन बोधकाऽऽद्यन्तशब्दाभ्यामाक्षिप्तावयविभूतसमुदायघटकाऽऽदिवर्णात् परभूता, अन्त्यवर्णात् पूर्वभूता, आदिवर्णश्चेति—सर्व इह गृह्यन्ते। तेनाऽऽदिसहितमध्यगाः संज्ञिन इति फलितम्। समुदायस्य तु न संज्ञा, फला[5]ऽभावात्। सहग्रहणात्तु समुदाय एव सञ्ज्ञेति समुदायादेव विभक्त्युत्पत्तिरिक इत्यादौ, नाऽऽदिमात्रात्। [नन्वन्त्यशब्देन स्वघटितसमुदायाऽऽक्षेपेणाऽन्त्यस्यापि समुदायघटकत्वात् संज्ञित्वं स्यात्। न चेत्संज्ञा-लोपाभ्यामपहारात् कथं तस्य संज्ञाप्राप्तिरिति वाच्यम्। व[6]र्णसमाम्नायेऽपहारेऽपि इक्शब्दादौ तस्य सत्त्वात्। अक[7]ः-सवर्ण इत्यादिसूत्रष्वश्रव[8]णापत्तेः, 'आदिरन्त्येन' (१।१।७१) इति सूत्रस्याऽसङ्गततापत्तेश्च, अत्रेत्त्वेऽपि लोपाऽभावात्। न च संज्ञास्वरूपबोधनेन सङ्केतकाल एव तस्य पारार्थ्यनिर्णयेन न संज्ञित्वम्। आदेरपि तर्हि तत्त्वाऽनापत्तेरिति चेन्न, आ[9]दिपदमावर्त्त्य 'अन्त्येन सहोच्चार्यमाण आदिर्मध्यगवर्णाऽऽदिवर्णाऽभिन्नः' इत्यर्थः। तेषां स सञ्ज्ञेति यावत्।

[[10]लाघवात् 'आदिरन्त्य इच्च सह' इत्येव न्यासे कर्त्तव्ये आदिरन्त्येनेति गुरुभूतन्यासेनाऽन्त्येऽप्रधानत्वबोधनद्वारा आदेः प्राधान्यबोधनेन, परार्थत्वेऽपि संज्ञित्वबोधनात्। एवं च 'स्वं रूपम्' (१।१।६८) इति प्रत्याख्यानेऽपि न दोषः।

---

१. क. ग. पाठ;
२. 'इतेति चिन्त्यप्रयोजनं' ग पाठः।
३. क. नास्ति;
४. 'तत्रे'ति क. पाठ। ख. ग. नास्ति।
५. 'प्रयोगाऽभावात्' क. ग. पाठः;
६. क. ग. नास्ति।
७. क. ग. पाठः;
८. क. ग. पाठः।
९. क. पाठः;
१०. [] एतदन्तर्गतः पाठः क. पुस्तके कुण्डलितः।

**केचित्त्वाद्यन्तयोरुभयोः**[1] संज्ञास्वरूपबोधकतया पारार्थ्येऽपि 'स्वम्' **इत्यनुवृत्त्या न** दोषः। स्वं रूपं चाऽऽदेरेव नान्त्यस्य। अप्रधानतृतीया-निर्देशात्। सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वादित्याहुः]।

इदं सूत्रमनित्यम्।[2] 'अचि श्नुधातु' (६।४।७७) इति सूत्रे 'इणः' इत्येव सिद्धे 'य्वोः' इति निर्देशात्[3]। (शास[4] इदङ्हलोः' (६।४।३४) इत्यत्रोपादानात्। तत्राऽङ्गादौ, हलादावित्यर्थे उभयवैयर्थ्यम्। 'व्यतिशासै' इत्यत्र क्ङित्त्वमेव नास्ति। आटा सहैकादेशस्य स्थानिवद्भावाच्च। अतो नाऽतिप्रसङ्गः)—इति दिक्।

**हलन्त्यम्** (१।३।३) अत्र पदद्वयम्। समासे ह्यन्त्यशब्दस्य पूर्वनिपातः स्यादित्याहु। 'कर्मधारययोग्यपदानां समासाऽभावः सूत्रकारशैलीसिद्धः' इत्यपि वदन्ति। यद्यपि सर्वोऽपि हल् तं तमवधिं प्रत्यन्त्यो भवति, तथाप्यन्त्यग्रहणादुपदेश इत्यनुवृत्तेश्च प्रत्यासत्त्याऽज्ञातज्ञापकोच्चारणविषय-समुदायं प्रत्यन्त्य इह गृह्यते। अत एव थमोरुकारः (णौ गमेरिका[5]रश्च) मकारेत्संज्ञापरित्राणार्थश्चरितार्थः। समुदायोपदेश एव सर्वत्र ऋषितात्पर्येण, अवयवानां नान्तरीयकतया च तेषामज्ञातज्ञापकत्वाऽभावात्। (अत्र गमेर्मकारो नोपदेशाऽन्त्यः)।

(न[6] चैवमिकारस्येत्त्वे 'इदितो' (७।१।५८) इति नुमापत्तिः। अनुनासिकत्वे मानाऽभावात्। उच्चारणार्थेनाऽप्यन्त्यत्वविघातस्य कर्त्तु शक्यत्वात्। वस्तुतोऽयमिका निर्देश स्थानिवद्भावलब्धधातुत्वमादायेति न दोषः)।

'उपदेशे' इति प्रधानक्रियान्वयि, तदन्वयस्य न्याय्य[7]त्वात्। तत्रो-च्चा[8]रणेनाऽभिव्यक्तस्य तदुत्तरं संज्ञा युक्तेति। तेन तदुत्तरकालो लक्ष्यते।

---

१. 'उभयोरपि' ख. पाठः; २. क. ग. पाठः। 'निर्देशादिति दिक्' क. पाठः।
३. ख. पाठः क. पाठस्थाने; ४. क. ग. नास्ति।
५. ख. नास्ति; ६. () एतदन्तर्गतः पाठः क. नास्ति।
७. इतोऽग्रे—'उपदेशशब्देन चोपदेशो यस्मिन्निति बहुव्रीहिणा काल उच्यते' —अयं ख. पाठः। क. ग. तु नास्ति; ८. 'तत्रोच्चारणकालेना' ख. पाठः।

(स च[1]ाऽव्यवहित एव)। अत एव 'उपदेशस्तावत्, उपदेशोत्तरकाला इत्संज्ञा' इत्यादिवाक्याऽपरिसमाप्तिन्यायप्रतिपादक-'नाज्झलौ' (१।१।१०) इति सूत्रस्थभाष्यं सङ्गच्छते। तत्र (प्रायोऽन्त[2]रङ्गत्वादुपदेशाऽव्यवहितोत्तरे) पदपर्यालोचनकाले यथोद्देशपक्षश्रयणेनेत्संज्ञा। पदार्थोपस्थितिरनुबन्धविनिर्मुक्तस्यैव। स्प[3]ष्टं चेदं तित्स्वरितमित्यत्र कैय[3]टे।

(अत[4] एवेदम इशित्यादौ 'अण्त्वात् सवर्णग्रहणं प्राप्तमप्रत्यय इत्यनेन निषिध्यते' इति भाष्ये उक्तं सङ्गच्छते। धुडित्य[5]ादौ सानुबन्धाद् विभक्तिस्तु[5] श्राव[6]णे प्राथमिकबोधे विशिष्टस्य विषयतया[7], तस्यैवाऽर्थवत्त्वमारोप्य। अन्यो हि पश्चादुपतिष्ठते, न तु प्रयुज्यत इति, ततो विभक्त्यसम्भवात्। विभक्त्यर्थान्वयस्तु 'आनर्थक्यात् तदङ्गेषु' इति न्यायेनाऽनुबन्धरहित एव। इत्संज्ञाकार्यमप्येवम्)। वैयाकरणे चित्स्वरस्तु न। 'आदिरन्त्येन' (१।१।७१) इति सूत्रप्रवृत्त्योपस्थापक एव च[8]स्य चारितार्थ्यात्। अत एव धेट्प्र[9]भृतीनामेजन्तत्वनिमित्तकाऽऽत्वसिद्धिः। न चैवमप्युपदेशे एजन्तत्वाऽभावात् कथमात्वम् 'धातोः' (३।१।९१) इत्यधिकारेण 'धातुसंज्ञोपदेशे एजन्तस्य' इति तदर्थान्न दोषः। धातुसंज्ञा त्वनुबन्धरहितस्यैवेति स्पष्टं 'न धातु' (१।१।४) इति सूत्रे भाष्यकैयटयोः। अत एवोदीचां माङ इति निर्देशः संगच्छते। [10]सोऽयमनेकान्तपक्षः।

[[11]विभक्त्यादिसञ्ज्ञाऽपि सूत्रान्तर्गतानामेव। तत्फलन्तु तत्रैव 'न विभक्तौ'

---

१. क. ग. नास्ति; २. क. ग. पाठः; ३. ख. नास्ति।
४. क. ग. नास्ति; ५. इतोऽग्रे–'धुडित्यादौ सानुबन्धाद्विभक्तिस्तु तेनैवानुबन्धविनिर्मुक्तोपस्थितेस्तस्यैवार्थवत्त्वात्सुलभा। इत्संज्ञाकार्यं तु यत्र संज्ञा तत्रानर्थक्यात्तदुपस्थाप्ये एव—क. पाठः।
६. ख. ग. पाठः; ७ इतोऽग्रे–'लोपद्वारेण च विशिष्टे तद्वाचकताग्रह एव। इत्संज्ञाकार्यन्तु यत्र संज्ञा तत्रानर्थक्यात्तदुपस्थाप्ये एव' ग. पाठः।
८. 'तस्य' क पाठः; ९. 'धेप्रभृतीनां' ग. पाठः।
१०. क. नास्ति; ११. [] एतन्तर्गतः क. ग. पाठः।

(१।३।४) इत्यादीनां प्रवृत्तिः। अ[1]नुबन्धानामनेकान्तत्वादेव 'इदम इम्' (५।३।३) इत्यादावणत्वात् सवर्णग्रहणं प्राप्तमप्रत्यय इत्यनेन निषिध्यन्ते' इति भाष्ये उक्तं संगच्छते। 'अनेका[2]ल्शित्' (१।१।५५) इति सूत्रे यद् इशि उक्तम्—'शित्करणादेव सर्वादेशः' इति भाष्ये, तस्य इत्सञ्ज्ञकशकारकरणसामर्थ्याद् भूतपूर्वगत्याऽनेकाल्त्वमादाय सर्वादेशः' इत्यर्थ इति न तद्विरोधः।

ते चाऽनुबन्धाः—अनेकान्ताः=अनवयवा[3]ः। यो ह्यवयवः स कदाचित् तत्रोपलभ्यत एव। अयं तु न तथा। तदर्थभूते विधेये कदाऽप्यदर्शनात्। 'अनेका[4]ल्' (१।१।५५) इत्यत्र सम्बन्धसामान्यषष्ठ्यर्थे बहुव्रीहिः, समीपेऽवयवत्वारोपेण वा बहुव्रीहिरिति डा-णलादौ न दोषः। न चाऽत्र पक्षे वुञ्छण्कठजादौ परस्मिन्नपि सम्बन्धसत्त्वेन णित्त्वप्रयुक्तवृद्धिः स्यादिति वाच्यम्, दध्नचश्चकारेण हलन्त्यमितीत्सञ्ज्ञकसामीप्यप्रयुक्तकार्यं पूर्वस्यैव, न परस्येति कल्पना[4]त्। (यत्र[5] तूपदेशाऽव्यवहितोत्तरकालेऽसम्भवस्तत्र तद्व्यवहितेऽपि काले सा। यथाऽइउणित्यादीनां हल्प्रत्याहारसिद्ध्युत्तरं सेति दिक्। यद्वा, सर्वत्र फलप्रत्यासत्तेः, कार्यकालपक्षे तथैवौचित्याच्च विधानोत्तरं प्रयोग एव प्रक्रियादशायां तत्प्रवृत्तिः। प्रत्यासत्तिलभ्यमुपदिश्यमानाऽन्त्यत्वं हि प्रत्याय्येष्वसम्भवात् प्रत्यायकनिष्ठमाश्रीयते। अत एवाऽनेकाल्सूत्रे इशादावनेकाल्त्वात्सर्वादेशत्वे सिद्धे शिद्ग्रहणं किमर्थमित्यादिविचारो भाष्यकृत्कृतः संगच्छते। किञ्चाऽनवयवत्वे ण-श-कप्रत्ययादौ कादेरित्त्वानापत्तिः, प्रत्ययादित्वाऽभावात्।

'चुटू' (१।३।७) इत्यादावादिशब्दस्य समीपपरत्वे तु चुञ्चुप्-चणपयोर्यादित्वेऽपीत्त्वापत्तिः)। दध्नःचश्चकारेण चैकान्तत्वमेव ज्ञापयितुं युक्त[6]मिति दिक्।

---

१. 'अत एव' क. पाठः; २. ग. नास्ति। क. पाठः।
३. 'अनेकान्तत्वं चानवयवत्वं' ग. पाठः; ४ एतत्स्थाने—'इदं चानेकान्तत्वं डाणलाद्यतिरिक्तविषयम्। सर्वादेशत्वं विना तत्राऽनुबन्धत्वस्यैवाऽभावात्' ग. पाठः; ५. क. कुण्डलितः पाठः; ६. ग. ख. नास्ति।

[केचि[1]त्तु तदुत्तरकालो व्यवहितोऽपि, फलप्रत्यासत्तेः। पदार्थेष्वेवेत्संज्ञाया उचितत्वात्। कार्यकालपक्षे तथैवौचित्यात्। 'न तेषामुपदेशः' इति चेत्, पूर्वमते परम्परासम्बन्धे फलमिव, इत्संज्ञैव तत्राऽस्तु, सामर्थ्यात्। उपदेशान्त्यत्वं हि प्रत्याय्येष्वसंभवात् तत्प्रत्यायकनिष्ठामाश्रीयते। अत एवानेकाल्सूत्रे 'इशादावनेकाल्त्वात् सर्वादेशत्वे सिद्धे, शिद्ग्रहणं किमर्थम्' इत्यादिविचारो भाष्यकृत्कृतः सङ्गच्छत इत्याहुः। **सोऽयमेकान्तपक्षः**]

(एवञ्च[2] विधानकाले तत्रोपलम्भादन्यत्रानुपलम्भाच्चैकान्तत्वमेव युक्तम्। अनवयवो हि काकादिरेकजातीयसम्बन्धेन वृक्षगृहादिषूपलभ्यते। न चैवमवयव इति दिक्)। अन्त्यमिति किम्? वाचालः। हल् किम्? 'चिरिणोति' इत्यादौ धातोरन्त्यस्य मा भूत्।

**आद्योच्चारणमिति।** आद्यमुच्चारणमित्यर्थः। तच्च[3] प्रत्यासत्त्या एतच्छास्त्रप्रवर्त्तकाऽऽचार्याणामेव। आद्यत्वं चाऽज्ञातज्ञापकत्वम्। 'उप'शब्द आद्यर्थकः। दिशिरुच्चारणक्रियः। स्पष्टं चेदमादेच उपदेशे—इत्यत्र भाष्यकैयटादिषु। ([4]तच्चेत्संज्ञाश्रयावयवकशब्दस्य, इत्संज्ञाश्रयावयवकबोधकशब्दस्य वेति बोध्यम्)। प्रकृ[5]तसूत्रभाष्ये तु—'उपदेश इति किम्?। अभ्र आँ अपः। प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देश इति नासावुपदेशः' इत्युक्त्वा, उद्देशोपदेशयोर्लोकव्यवहारेण संकीर्णत्वमाशङ्क्य, 'उपदेशनेऽजनुनासिकः' इति वार्तिककारदर्शितन्यासस्य खण्डनाय—'उपदेश इति करणे घञ्। उपदिश्यतेऽनेन[6]' इति। तच्च शास्त्रं शासनकरणम्, प्रत्यासत्त्यैतच्छास्त्रीयधात्वागमप्रातिपदिकनिपातप्रत्याहारसूत्रप्रत्ययाऽऽदेशरूपम्।

(त[6]त्रोपदेशने = शास्त्रे। उच्चारित इत्यध्याहारः। न तु तत्र बोधित इति,व्याख्यानात्। तथा सति'अभ्र आँ'इत्यादौ दोषो दुर्वार इति बोध्यम्। शास्त्रं च प्रकृतमेव, प्रत्यासत्तेः)। ननु ल्युटा बाधात् करणे घञ् दुर्लभः। वाऽसरूपविधिस्तु 'क्तल्युट्तुमुन्खलर्थेषु न इति निषिद्धः। न च तत्र

---

१. ख. ग. पाठः। क. पाठेन च क्वचित्तुल्यः;  २. क. ग. पाठः।
३. 'स च' ग. पाठ;  ४. ग. पाठः।
५. क. कुण्डलितः पाठः;  ६. क. ग. पाठः।

साहचर्येण भावल्युट एव ग्रहणम्। 'ईषत्पानः सोमो भवता' 'इत्यत्र कर्मणि खल् न' इति भाष्यादिप्रामाण्येनाऽत्र साहचर्याऽनाश्रयणात्। न च संज्ञात्वाऽभावात् कथं घञः प्राप्तिः। 'अकर्त्तरि च(३।३।१९) इति सूत्रे संज्ञायामित्यस्य[1] प्रायिकत्वात्। 'हलश्च' (३।३।१२१) इति घञ् तु यद्यपि ल्युडपवादः, स च विकल्पेनैव। न च तत्रापि 'क्त ल्युट्' इत्यस्य प्रवृत्तिः। ल्युटो यत्राऽपवादत्वं तत्रैव निषेधप्रवृत्तेः, तथापि स प्रकृते न लभ्यः। 'संज्ञायाम्' इति विहितत्वात्।

न च 'प्रायेण' इत्यनुवृत्तेः 'प्रायेण संज्ञायाम्' इति व्याख्यानान्निस्तारः। गुण-प्रधानसन्निधौ यत्र प्रधानं विशेषणसाकाङ्क्षम्, तत्र गुणस्य[2] तद्विशेषणताया एव न्याय्यत्वात्। तदुक्तं भाष्ये—'न ह्युपाधेरुपाधिर्भवति' इति चेन्न, 'बाहुलकाल्ल्युडभावे घञः सिद्धेः' इत्युक्तम्। तत् प्रौढिवादः, बाहुलकस्याऽगतिकगतित्वात्। 'उच्चार्य वर्णानाह—उपदिष्टा इमे वर्णाः' इत्यादिभाष्यादुपदेशशब्दस्योच्चारणार्थत्वनिर्णयेन, सङ्कीर्णलोकव्यवहारस्य लक्षणयाऽप्युपपन्नत्वेन च, भावघञि बाधकाऽभावाच्च। (व्याख्यान[3]-सापेक्षोच्चारितपदाऽध्याहारे गौरवाच्च)। 'आदेश उपदेशे' (६।१।४५), 'उपदेशेऽत्वतः' (७।२।६२) इत्यादावाद्योच्चारणार्थकभावघञन्तस्यैव सर्वसम्मतत्वाच्च। अत एव 'एकाच उपदेशे' इति सूत्रे **कैयटेनोक्तम्**—'इत्संज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यते। तदुक्तम्—उद्देशश्च प्रातिपदिकानां नोपदेशः' इति। इदं च 'आदेच उपदेशे' (६।१।४५) इति सूत्रे भाष्ये स्पष्टम्। एवं चैतद्भाष्यविरोधेनाऽत्रत्योपसंहारस्य संकीर्णत्वादिशङ्कादिपरभाष्यस्य प्रौढिवादत्वमावश्यकम्।

किञ्चोपदेशशब्दस्य प्रत्ययादिपरत्वे तस्यैव 'हलन्त्यम्' इत्यत्राऽन्वयेन यत्किञ्चित्समुदायान्त्यस्य वारणसम्भवे, तदर्थं सामर्थ्यादिवर्णनक्लेशो भाष्यकृतो व्यर्थः स्यात्।

किञ्च, षष्ठीप्रक्लृप्तिपक्षे प्रत्ययविधौ पञ्चम्याः प्रकल्पकत्वापत्तौ सनः

१. एतत्स्थाने 'तस्ये' त्येव ख. पाठः; २. 'विशेषणस्य' ग. पाठः।
३. ग. पाठः।

सनेवादेशोऽस्तु। नैवं शक्यम्। इत्संज्ञा न स्यात्। 'उपदेश इत्संज्ञोच्यते' इति तस्मिन्नितिसूत्रस्थभाष्यम्, 'आदेशस्योपदेशाऽभावात्' इति **कैयटश्च** विरुध्येत। एतेन 'प्रक्रियाशब्दे करणव्युत्पत्तिः' इति परास्तम्। तदुक्तम्—'अजबभ्यां स्त्रीखलनाः, स्त्रियाः खलनौ विप्रतिषेधेन' इति। अतो भावप्रत्यय एव न्याय्यः। यत्तु—

**धातु-सूत्र-गणोणादि-वाक्य-लिङ्गानुशासनम्।**
**आगम-प्रत्ययाऽऽदेशा उपदेशाः प्रकीर्तिताः॥** इति॥

करणव्युत्पत्त्या पूर्वार्द्धोपात्तानाम्**उपदेशसंज्ञा** = उपदेशव्यवहारः। एतेन 'संज्ञायाः शास्त्रकारैरनुक्तेः' इत्याद्यपास्तम्। कर्मव्युत्पत्त्या त्वागमादीनाम्। उणादि-लिङ्गानुशासनयोः पृथगुपादानं गोबलीवर्दन्यायेन।

एवं गणाद्धातोः, प्रत्ययेभ्य उणादेरपि। शीङ्, लण्, चोरट्, उण्, आचरेऽवगल्भ, धुट्, अनङित्युदाहरणानि। अत्र सूत्रसाहचर्याद्धात्वागमप्रत्ययादिशब्दे[1] तद्बोधकपाणिन्यादिपठितानुपूर्वीक[2]शब्दानामेव ग्रहणम्। तेषां धातुत्वादिव्यवहारस्तु भाविसंज्ञाविषयघटकत्वेन, 'धातुपाठः' इत्यादिव्यवहारवत्।

एतेन 'आमोऽमित्त्वमदन्तत्वात्, यकारादी चुञ्चुप्चणपौ' इत्यादिग्रन्थविरोधः। न ह्युत्सृष्टानुबन्धस्य न प्रत्ययत्वम्, येन मित्त्वादि न भवेत्। किञ्च, 'न तु' (१।१।४) धातु' इति सूत्रे धातुग्रहणं किमर्थम्? 'लूञ् लविता' इत्यादिभाष्यम्, अनुबन्धो न धात्वेकदेशः, यस्मादुपदेश एवेत्संज्ञा। प्रयोगे तु 'लू' शब्द एव धातुसंज्ञः। 'केवलमसौ ञित्कार्यं लभते' इति कैयटग्रन्थश्च विरुध्यते। किञ्च, 'तस्मिन्निति' (१।१।६६) इति सूत्रस्थोक्तभाष्यविरोधः इत्यपास्तम्।

इदं चोदाहरणमात्रम्। एतेन 'ध्वसोः' (६।४।११९) इति सूत्रे 'लोपश्श्चेति द्विशकारको निर्देशः। द्वितीयः शकार इत्' इत्युपधासंज्ञासूत्रस्थभाष्यविरोधः। तत्र हि 'लोपश्' इति भिन्नं पदम्, 'श्' इति च। पूर्वस्य श्चुत्वेन शः। झल्परसंयोगादित्वेन 'स्कोः' (८।२।२९) इत्यस्य तु न

---

१. 'प्रत्ययादीनां' क. ख. पाठः; २ 'पठितानुपूर्वीकानामेव' क. ग. पाठः।

प्रवृत्तिः। तस्य निमित्तकार्यिणोरखण्डैकपदस्थत्व एव प्रवृत्तेः—'प[1]रेश्च' (८।३।७४) इति सूत्रस्थभाष्यसंमतिपूर्वकमुपपादयिष्यमाणत्वात्। शकारस्य च धात्वाद्यन्तत्वाऽभावः स्पष्ट एव। अपि च 'नमोवरिवश्चित्रङः'(३।१।१९) इत्यस्याऽसंग्रह इति परास्तमिति, तन्न, करणव्युत्पत्त्यैव भाष्यरीत्या सर्वसंग्रहे, कर्मव्युत्पत्तिकथनस्य व्यर्थत्वात्।

किञ्चैवमुपदेशकरणत्वस्यैवोपदेशव्यवहारप्रयोजकत्वेनोपदेशताप्रयोजक-धातुत्वादिरूपोपाध्यवच्छिन्नसमुदायाऽन्त्यं हलिदिदित्यर्थ इति त्वद्ग्रन्थ-विरोधः। यथा पाचकादिव्यवहारस्य पाककर्तृत्वादिकमेव प्रयोजकम्, न तु देवदत्तत्वादि। लिङ्गानुशासनस्य प्रकृतानुपयोगाच्चेति दिक्।

यत्र तु करणव्युत्पत्त्यैवाऽर्थसंगतिस्तत्राऽगत्याऽस्तु बाहुलकात् तथा। यथा—'यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तौ' इत्यादौ। एतेन 'तपरोप-देशश्चेत् तपरोच्चारणम्' इति वार्त्तिकं व्याख्यातम्।

**केचित्तु**—'उपदेशशब्दः संप्रदानव्युत्पत्त्या प्रयोजनपरः। तपरत्वे प्रयो-जनमस्ति चेत् तकारोच्चारणं कर्त्तव्यमिति तदर्थः' इत्याहुः।

यत्तु 'भीमादयोऽपादाने', (३।४।७४) 'दाशगोघ्नौ सम्प्रदाने'(३।४।७३), 'ताभ्यामन्यत्रोणादयः' (३।४।७५) इत्युक्तेः सम्प्रदाने घञ् दुर्लभः। उणादि-शब्देन च पञ्चपाद्युक्तवदष्टाध्यायीतार्तीयीकतृतीयचतुर्थचरणोक्ता अपि गृह्यन्ते, विनिगमकाऽभावादिति, तन्न, उणादित्वादेव ल्युटि बाहुलके सिद्धे 'कृत्यल्युटः' (३।३।११३) इति सूत्रे ल्युड्ग्रहणवैयर्थ्यापत्तेरित्याहुः।

**उपदेश इति किम्?** अभ्र आँ अटितः। यद्यपि लोपो न प्राप्नोति,'आङ[2] इत्' इति वक्तव्येऽनुनासिकविधानसामर्थ्यात्। यथा 'उञ ऊँ' इत्यत्र विधान-सामर्थ्यान्नित्त्वलोपौ)। तथापि 'अनेकान्ता अनुबन्धाः' इति पक्षे 'आदितश्च' (७।२।१६) इत्य[3]टित इतीट्प्रतिषेधः स्य[4]ात्। उत्तरार्थं चावश्यकं तत्।

---

१. 'परश्चेति' क. ख. पाठः; २. ग. नास्ति।
३. 'आदितश्चेतीट्प्रति' ग. पाठः।
४. इतोऽग्रे–यद्यपि वेदे आपाद्यं नास्ति, तथाप्यभ्र आँ इत्यनुकरणात्परेऽटित इत्यत्र दोषः। यत्तु लोपाऽभावे इदिति महासंज्ञाकरणात्सञ्ज्ञापि नेति। तत्तु महासंज्ञयैव लोपसिद्धेस्तस्य लोप इत्यस्य वैयर्थ्यापत्त्या, 'इक' इत्यादौ ककारादिश्रवणाऽनापत्त्या चाऽयुक्तम्।' ग. पाठः।

([1]उपदेशेऽज० (१।३।२) उपदेश इति तूत्तरार्थमावश्यकम्)। ननु [2]'मुखनासिकम्' (१।१।८) इति लक्षणलक्षिताऽनुनासिकत्ववतामचां (पाणिन्युच्चारितानाम्) एतच्छास्त्रेऽनुपलम्भेन कीदृशानुनासिक्यास्ते इत्यत आह—**प्रतिज्ञेति**। प्रतिज्ञाविषयीभूतमानुनासिक्यं येषामिति विग्रहः। 'आतश्चोपसर्गे' (३।३।१०६) इति कर्मण्यङ्।

[एतेन[3] 'प्रतिज्ञाशब्दस्य भावाऽङन्तस्य प्रतिज्ञासमधिगम्ये लक्षणा' इत्यपास्तम्। (कारकविषये लक्षणयैवोपपत्तौ कारके प्रत्ययविधानवैयर्थ्यापत्तेश्च)। (एतेन[4] 'पाणिनिवृत्ति-आद्यज्ञानविषयो व्याकरणम्' इत्यर्थक-'पाणिन्युपज्ञं व्याकरणम्' इत्यादावपि लक्षणा इत्यपास्तम्)। न च लाक्षणिकार्थानुशासनमेव तत्। (अदृ[5]ष्टत्वात्)। 'लः कर्मणि' (३।४।६९) इत्यादीनामपि तथात्वापत्तौ 'तिङां कर्मादौ शक्तिः' इति सिद्धान्तासङ्गत्यापत्तेश्च[6]।

पाणिनिना प्रोक्ता वर्णाः पाणिनीया इत्यर्थः। प्रतिज्ञा चेदमित्थमिति कथनम्। (व[7]र्णानां तत्त्वज्ञापको व्यवहारश्च)। तत्कर्त्तारश्च प्रत्यासत्तिन्यायेन एतच्छास्त्रकर्त्रध्येतार एव। एतेन 'पाणिनीयाः' इत्यस्य पाणिनिशास्त्राध्येतार इत्यर्थं[8] मत्वा प्रश्नसमानार्थकत्वाऽभावेनेदमुत्तरमसङ्गतमिति मन्दोक्त[9]मपास्तम्। 'पाणिनि'शब्दश्च भाष्यवार्तिककृतोरप्युपलक्षणम्। [10]आर्थं वाऽस्योत्तरत्वं बोध्यम्। यद्यपि सूत्रकृतस्तथा पाठ इदानीं परिभ्रष्टस्तथापि वृत्त्यादिव्यवहारबलेन यथाकार्यं प्राक् स्थित इत्यनुमीयत इति भावः]।

ननु 'रलयोः' इति न्यूनम्, टकारस्याऽपि मध्यगत्वात्। न च 'लोपः

---

१. क. पाठः; २. क. कुण्डलितोऽयं पाठः; ३. क. ग. नास्ति।
४. क. नास्ति; ख. ग पुस्तके तु दृश्यते; ५. क. ग. नास्ति।
६. चो नास्ति क. ग. पुस्तके; ७. क. ग. पाठः।
८. वृत्तिदीपिकादिकृन्मौनिकृष्णभट्टोऽत्र मन्दपदेन व्यवह्रियते।
९. 'इत्यपास्तम्' इति तु शोधितः क. पाठः। 'मन्द'पदमपसारितम्। ग. पुस्तके तु स्वत एव तथा पाठः। १०. प्रतिज्ञेत्यादेरित्यर्थः।

खल्वपि तावद्भवति' इति भाष्यादन्तरङ्गत्वादित्संज्ञालोपयोः कृतयोरसन्निधानात् संज्ञा नेति वाच्यम्, हल्प्रत्याहारे 'ल'णित्यकारप्रवेशाऽऽपत्तेः। हल्प्रत्याहारसिद्धेः प्रागच्पदार्थनिष्पत्त्यभावेनोपदेशेऽजित्यस्य वाक्यार्थाऽभावेन तं[1]दप्राप्तेः।

ननु तदुत्तरमुपदेशकालाऽव्यवहितोत्तरकालाऽभावात् कथमित्संज्ञेति चेत्। [अनु[2]नासिकत्वप्रतिज्ञासामर्थ्याद् व्यवहितेऽपि प्रवृत्तिरिति गृहाण।

(एवं[3]ञ्च हल्प्रत्याहारसिद्ध्यनन्तरं 'हलन्त्यम् इति' वाक्यार्थबोधे) मकारादीनां द्विरुपदेशसामर्थ्याद् यणादिव्यवहाराच्च उपदेशव्यवहितकाले णादीनामपीत्संज्ञेति बोध्यम्]।

न च लणित्यनुनासिकस्य तत्र प्रवेशेऽपि गणानां भेदकत्वेनाऽननुनासिकस्य न हल्त्वमिति वाच्यम्, 'मामँस्त्रायस्व' इति प्रयोगेऽनुनासिकपक्षेऽनुस्वारापत्तेः।

न च टकारस्याऽडादिप्र[4]त्याहारस्वरूपबोधनार्थत्वेन परार्थत्वान्न ग्रहणम्। (तदु[5]क्तं भाष्ये—'अप्रधानत्वादिति इति वाच्यम्। इक्स्वरूपबोधनेन चरितार्थस्येकारस्याऽण्प्रत्याहारे) ग्रहणा[6]ऽनापत्तेरत आह–**प्रत्याहारेष्विति**।

अन्यथा नासिकादौ यणाद्यापत्तिरिति भावः।

नन्वित्त्वविधानसामर्थ्याद् यणभावस्य सिद्धत्वेन कथम् 'अनुनासिकः' इत्यादिनिर्देशानां ज्ञापकत्वम्?

न च येन नाप्राप्तिन्यायेनेत्त्वस्य यण्बाधकत्वेऽपि नासाशब्दात् कप्रत्यय-

---

१. 'तस्य तदप्राप्तेः' इत्युचितः पाठः प्रतिभाति।
२. क. नास्ति।
३. ग. पाठः।
४. 'अट्प्रत्याहार' क. ग. पाठः।
५. ग. पाठः।
६ न ग्रहणं। प्रत्याहारद्वये इकारस्य ग्रहणाऽनापत्तेः' ख. पाः।

निष्पन्ननासिकाशब्दे यस्येति लोपस्य प्राप्तत्वेन लाघवात् 'नास्क' इत्येव वक्तव्ये नासिकशब्दोच्चारणस्य ज्ञापकत्वाऽक्षतिरिति वाच्यम्, 'केऽणः' (७।४।१३) इति ह्रस्वेत्त्वाभ्यां परत्वाद् यस्येति लोपस्य बाधितत्वेन, सकृद्गतिन्यायात् (भ्रष्टावसरत्वाच्च) पुनस्तदप्रवृत्तौ, नास्कस्याऽसाधुत्वात्। न च नित्यो 'यस्येति' (६।४।१८४) लोपः। शब्दान्तरप्राप्त्या तस्याऽप्यनित्यत्वात्। (अ[2]णग्रहणसामर्थ्येन 'केऽणः' (७।४।१३) इत्यस्य लोपबाधकत्वाच्च। पुनस्तु न लोपप्रवृत्ति[3]ः, भ्रष्टावसरत्वात्)–इत्यत आह—**आदीति।**

आदिना 'तृषिमृषिकृशेः' (१।२।२५),'एकः पूर्वपरयोः' (६।१।७४),'उणादयो बहुलम्' (३।३।१) इत्यादिसंग्रहः। (वस्तु[4]त उक्तरीत्या लण्सूत्रस्थाऽकारस्य नाऽनुबन्धत्वम्; किन्तूच्चारणार्थमेव। एवञ्च 'आचारादप्रधानत्वाल्लोपश्च बलवत्तरः' इति भाष्यस्थोऽप्रधानत्वादिर्द्वितीयसमाधिरपि युक्त एव। तत्राऽप्रधानत्वादित्यन्त्याऽनुबन्धविषयम्। अप्रधानत्वबोधकाऽन्त्येनेति तृतीयानिर्द्देशादिति तदर्थः। मध्यगाऽनुबन्धविषये तु—'लोपश्च' इत्यादि। अन्त्यस्य तु यथा न लोपस्तथोक्तमेवेति वदन्ति)।

ननु 'प्रत्याहारेऽनुबन्धानाम्' इति वार्त्तिके 'प्रत्याहारशब्दस्य वर्णसमाम्नाये प्रसिद्धेः, 'प्रत्याहारेष्वित्ताम्' इत्यनुपपन्नमत आह—**आदिरन्त्येनेतीति।** वार्त्तिके तादर्थ्यात्ताच्छब्द्यमिति भावः। प्रत्याह्रियन्ते=संक्षिप्यन्ते वर्णा यत्रेति बाहुलकादधिकरणे घञ्। 'भावघञन्तादर्श आद्यच्'इत्यन्ये। यद्यपि योगोऽकारादिसंज्ञास्वतिप्रसक्तस्तथापि योगरूढिरिति भावः। यत्तु—

**'एकस्मान्ङ-ञ-ण-व-टा' द्वाभ्यां षस्त्रिभ्य एव क-ण-माः स्युः।**
**ज्ञेयौ च यौ चतुर्भ्यो रः पञ्चभ्यः, श-लौ षड्भ्यः॥**

इति प्रत्याहारा एकचत्वारिंशत्' इति, तन्न, सुप्तिङादीनाम्, रप्रत्याहारस्य, 'चयो द्वितीया' इति चय्प्रत्याहारस्य, 'ञमन्ताड्डः' इति

---

१. क. ग. नास्ति; २. क. नास्ति।
३. 'प्रवृत्तिरित्यत आह-आदीति' ग. पाठः; ४. क. ग. पाठः।

अम्-प्रत्याहारस्य चाऽधिकस्य व्यवहारदर्शनात्। संख्यानियमस्याऽप्यु-पयोगाऽभावाच्च। यद्यप्यत्रोपजीव्यत्वादनुनासिकसंज्ञा प्रथमं वक्तुमुचिता, तथापि 'नासिकां=तद्व्यापारमनुजाता'इति योगेनैव गतार्थत्वात् संज्ञासूत्र-मनावश्यकमिति सूचयितुं नेहोपन्यस्तम्। अत एव तत्र सूत्रे मुखग्रहण-प्रत्याख्यानभाष्यध्वनितो यमानुस्वारयोरनुनासिकत्वव्यवहारः सङ्गच्छते।

'यरोऽनुनासिके' (८।४।४५) इत्यादौ स्वरूपग्रहणाऽभावस्तु—'पशु' 'रपत्य'मित्यादिवद्भविष्यतीति बोध्यम्।

**ऊकालोऽच्** (१।२।२७) कुक्कुटरुते उकार एव एकमात्र(त्व[1])द्विमा-त्रत्वादीनां प्रसिद्धेरकारादयो नोक्ताः सूत्रकारेण। 'ऊ' इति एकद्वित्रिमा-त्राणां **क्रमेण** प्रश्लेषनिर्देशः, व्याख्यानात्। (अत एव[2]) संज्ञासंज्ञिनोः क्रमोऽपि[3] महासंज्ञाकरणात्। ([4]एतेन 'यथासङ्ख्यसूत्रमिहैवोपन्यस्तुं युक्तम्' इति परास्तम्)। तेन च स्वोच्चारणकालसदृशो लक्ष्यते। स कालो यस्येति बहुव्रीहिः। 'ह्रस्वदीर्घप्लुतः' इति द्वन्द्वः। सौत्रं पुंस्त्वम्। एकवचनं वा। तदेतत्फलितमाह—**उश्च ऊश्चेति**। ननु 'वां कालः' इति विग्रहोऽ-युक्तः, व्यधिकरणत्वादिति चेत्, सत्यम्। फलितार्थकथनमेतत्। विग्रहस्तु 'वः कालो यस्य' इत्युक्त एव। अत्र जात्याख्यायां 'कालः' इत्येकवचनम् तस्य वैकल्पिकत्वात्, 'वः' इति बहुवचनम्। 'ह्रस्वदीर्घप्लुतः' इति विशिष्टा संज्ञा तु न, प्रयोजनाऽभावात्, संज्ञाकरणस्य लघ्वर्थत्वाच्च। अत एव संज्ञिनोऽपि त्रय इति बोध्यम्।

ननु 'उकालो ह्रस्वः' इति प्रथमवाक्येऽण्त्वात् सवर्णग्रहणे द्विमात्रत्रिमा-त्रयोर्ह्रस्वसंज्ञाऽपि स्यात्। तत्र विधौ यद्यपि न दोषः, 'आपोऽन्यतरस्याम्' (७।४।१५) इत्यादिविकल्पविधानेन ह्रस्वविधाने द्विमात्राऽविधानज्ञापनात्। त्रिमात्रस्य 'प्लुतश्च विषये स्मृतः' इत्युक्तेर्न विधानम्। तथाप्यनुवादे दोषः स्यादिति चेन्न, 'छे च' (६।१।७३) इत्येव सिद्धौ, 'दीर्घात्' (६।१।७५) इति सूत्रस्य वैयर्थ्यापत्तेः। न च 'पदान्ताद्वा' (६।१।७६) इति विकल्पार्थं तत्, योगविभागस्य तथापि वैयर्थ्यात्।

---

१. ग. पाठः;
२. क. ग. नास्ति।
३. 'क्रमस्तु' क. ग. पाठः;
४. क. नास्ति।

किञ्च 'ऊरूपोऽच्' इति, 'अज्रूपो य ऊ' इत्यर्थे वाऽज्ग्रहणवैयर्थ्यापत्तेः ऊसदृशो योऽजित्यर्थो भविष्यति । सादृश्यस्य च प्रकारान्तरेणाऽसंभवाद् व्याख्यानाच्च कालकृतस्यैव ग्रहणं भविष्यतीत्यधिकं कालग्रहणमुच्चारित-कालसदृशका[1]लस्यैव संज्ञा, न तु तेन गृहीतकालसदृशकालस्यापीत्यर्थकमतो न दोषः ।

न च तथापि अजिति[2] वर्णग्रहणे जातिग्रहणस्य दुर्वारत्वात् 'तितउ-च्छत्रम्' इत्यत्र परत्वेन 'दीर्घात्पदान्ताद्वा' इति तुग्विकल्पाप[4]त्तिः । (न[3] च तदभावे नित्यस्तुग्भविष्यतीत्यदोषः । सकृद्गतिन्यायाश्रयणाद् भ्रष्टावस-रत्वाच्च तदप्रवृत्तेः)—इति वाच्यम्, अन्तरङ्गत्वेन ह्रस्वलक्षणस्यैव प्रवृत्तेः ।

किञ्च, लोके ह्रस्व[5]त्वादि व्यक्तावेव प्रसिद्धम्–,न जाताविति महासंज्ञा करणसामर्थ्यान्न जातिग्रहणम् । अच् किं ? प्रतक्ष्य । मात्रिकत्वेऽपि 'ह्रस्वस्य पि[6]ति' (६।१।७१) इति तुक् न । उत्तरार्थं चेत्याहुः ।

नाऽत्र श्रुतिकृतमुच्चैस्त्वम् । उपांशुप्रयोगेऽव्याप्तेः, श्रुतिप्रकर्षस्याऽव्य-वस्थितत्वाच्च; किन्तु स्थानकृतम् । एवं च उच्चैरित्यधिकरणशक्तिप्रधा-नम् । अधिकरणत्वं चोच्चारणक्रियां प्रति । तच्च ताल्वादीनां सभागत्व एवेत्याशयेनाह—**ताल्वादीति** । अत्र कण्ठादीति वक्तुमुचितम् । तद्बीजन्तु तुल्यास्यसूत्रे वक्ष्याम[7]ः । प्रयत्नेरितो वायुर्यदोर्ध्वभागे प्रतिहतोऽचं व्यञ्जयति, तदा स उदात्त इति भावः । एवमग्रेऽपि ।

**अजिति** । 'ऊकालः' इत्यतस्तदनुवृत्तेरिति भावः । वस्तुतस्तु हल्व्य-तिरेकेणाऽचामुदात्तत्व[8]ादीनामुपलम्भेन, हलां चाऽज्व्यतिरेकेण तेषामनुपल-

---

१. 'उच्चारित(कालसदृश)मात्रकालक' ख. पाठः; २. ग. पाठः ।
३. 'पत्तिरिति वाच्य' क. पाठः; ४. क. नास्ति । ख. ग. पाठः ।
५. 'ह्स्वत्वं' ख. पाठः; ६. क. ग. पाठः ।
७. क. ग. पाठः; ८. 'उच्चैस्त्वादीना' ख. पाठः ।

म्भेनाऽच्सन्निधाने तदुपरागवशादेव हल्षु तत्त्वोपपत्त्या च, हलां साक्षादुदात्तत्वादिकल्पने मानाऽभवात् 'हस्स्वरप्राप्तौ[1] व्यञ्जनमविद्यमानवत्' 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इत्यनयोः सत्त्वेन हलां[2] तत्त्वेऽपि क्षत्यभावाच्चाऽजनुवृत्तौ फलाऽभावः। मूलेऽजिति तु वस्तुस्वरूपकथनं बोध्यम्।

**आय इति**—आकारो निपातत्वादाद्युदात्तः। यच्छब्दः फिट्स्वरेणान्तोदात्तः। **जसः** सुप्त्वादनुदात्तत्वम्। 'एकादेश उदात्तेनोदात्तः' इत्येकार उदात्तः।

**अर्वाङिति**—अभिमुखावाच्यव्युत्पन्नं प्रातिपदिकमेतत्। तस्य 'फिषोऽन्त उदात्तः' इत्यन्तोदात्तत्वे, आद्यस्य शेषनिघातेनाऽनुदात्तत्वम्। अर्वन्तमञ्चतीति विग्रहेऽपि 'गतिकारकोपपदात्कृत्' इत्युत्तरपदप्रकृतिस्वरत्वम्। शेषं प्राग्वत्।

एकस्मिन्नचि उदात्तानुदात्तयोर्धर्मिणोर्मेलनविरोधादाह—**उदात्तानुदात्तत्वे वर्णधर्माविति**। (न च[3] द्वन्द्वे साहित्यस्य प्रकारत्वात् प्रकृतिजन्यबोधप्रकारस्य च भावप्रत्ययार्थत्वाद् द्विवचनमनुपपन्नम्, इष्टार्थाऽलाभश्चेति वाच्यम्, प्रत्येकधर्मयोरपि तत्प्रकारत्वेनाऽक्षतेः। अत एव 'तस्य भावः' इति सूत्रे कैयटेन—'धव-खदिरत्वम्' इत्यादौ 'जातिसमुदाये भावप्रत्ययः' इत्युक्तम्। तत्र तस्य समुदायस्याऽनुद्भूतावयवत्वे एकवचनम्। उद्भूतावयवत्वे तु द्विवचनाद्यपीति बोध्यम्)।

**यस्मिन्निति**—बाहुलकादधिकरणे घञिति भावः। 'अर्श आद्यच्' (५।२।१२७) इति तु भाष्ये उक्तम्। न चोदात्तादिव्यवहारस्य लोकवेदयोः प्रसिद्धत्वेन व्यर्थेयं त्रिसूत्रीति वाच्यम्, 'तस्यादित' (१।२।३५) इति सूत्रभाष्य-कैयटे प्रत्याख्यातत्वेनेष्टापत्तेः।

नन्वर्द्धह्रस्वशब्दस्य किं 'ह्रस्वरूपमर्द्धम्' इत्यर्थो विवक्षितः, उत 'अर्द्धं नपुंसकम्' (२।२।२४) इत्येकदेशिसमासेन 'ह्रस्वस्याऽर्द्धम्' इति ? नाद्यः, ह्रस्वस्वरिताऽसंग्रहापत्तेः। (पूर्वनिपा[4]तवैपरीत्यापत्तेश्च)।

---

१. उच्चैस्त्वादि' ख. पाठः;	२. 'हलां स्वरप्राप्तेरपि' क. ग. पाठः।
३. क. नास्ति। ख. ग. पाठः;	४. क. ग. नास्ति।

कर्मधारययोग्यपदानां सूत्रकृता समासाऽकरणाच्च। अन्त्येऽपि—ह्रस्वशब्देन स्वशास्त्रसङ्केतितस्य ग्रहणे दीर्घस्वरिताऽसंग्रहः। [अन्त्येऽपि[1] किं ह्रस्वशब्देन स्वशास्त्रसङ्केतितस्य ग्रहणम्, उत मात्राकालिकमात्रस्य? आद्ये दीर्घस्वरिताऽसंग्रहः]। ह्रस्वशब्दस्य मात्राकालिकेऽचि संकेतितत्वात्[2]। (अन्त्ये—ह्रस्वशब्दोच्चारणं व्यर्थम्, स्पष्टप्रतिपत्तये 'अर्द्धमात्रम्' इत्यस्यैव वक्तुमुचितत्वात्। तदाह)—**अतन्त्रमिति**। स्वशास्त्रसङ्केतिताऽबोधकमित्यर्थः। एवं च लोके दीर्घादिष्वपि अर्द्धमात्रैवोदात्ता। तदुक्तं **हरिणा—**

**'प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयते'** इति।

'अनुपात्तमपि मात्रारूपं प्रमाणमेवोपलक्ष्यत इत्यर्थः' **इति हेलाराजः**। अत्र च प्रमाणं 'तस्य'ग्रहणम्।

तद्धि दीर्घादिरूप(सकल[3])स्वरितसङ्ग्रहार्थम्। ह्रस्वग्रहणविवक्षायां हि स न स्यात्। नच षष्ठीकल्पनार्थम्। 'आदितः'शब्दस्य सम्बन्धिशब्दत्वादेव सिद्धेः। न च त्रिपादीस्थस्वरितसंग्रहाय तत्। अस्यापि परिभाषात्वेन कार्यकालपक्षे तत्रोपस्थितेरादितोऽर्द्धमात्रैवोदात्तेति नियमनात्। स्वरितस्यैव तल्लिङ्गत्वा[4]च्च। ('समा[5]हारः स्वरितः' (१।२।३१) इत्यनेन कार्यकालपक्षे त्रिपादीस्थोद्देशेनाऽपि स्वरितसङ्केतबोधनात् सर्वप्रतिपादकसमाहारग्रहणस्यानुवृत्त्याऽर्थाधिकाराश्रयणेनात्रापि सर्वोपस्थितेरनायासेन लाभात्)। भाष्ये इत आरभ्य नवसूत्र्या 'अ, अ' (८।४।६८) इत्यतः प्रागुत्कर्षेण, त्रिपाद्या असिद्धत्वस्यैवाऽभावाच्च। 'अर्द्धमुदात्तम्' इतिवृत्तिस्तु 'सत्यभामा', 'भामा' इतिवद् व्याख्येया।

[6]**आदितोऽर्द्धमित्यस्य—**'मात्रायाः' इति शेषो वा[6]। **उत्तरार्द्धमित्यस्य** चाऽर्द्धमात्रातोऽवशिष्ट उत्तरो भाग इत्यर्थो बोध्यः। इदमेवाऽभिप्रेत्य भाष्ये 'अर्द्धह्रस्वशब्दोऽर्द्धमात्रायां रूढः। ततः प्रमाणे मात्रचो लुक्' इत्युक्तम्। [अतएव 'अर्द्धह्रस्वशब्देनाऽर्द्धमात्रा लक्ष्यते' इति हरदत्तेनोक्तम्। भाष्ये रूढ इत्यस्य निरूढलक्षणावानित्यर्थ इति तत्तात्पर्यम्]।

---

१. क. नास्ति, ख. ग. पाठः; २. 'संकेतितत्वादत आह' क. पाठः।
३. क. ग. पाठः; ४. क. ग. पाठः; ५. क. नास्ति; ६. क. नास्ति।

वेदे तु यथा[1]प्रयोगं बोध्यम्। [वेदे तु[2] 'अर्द्धमेवोदात्तं प्रातिशाख्याल्लक्ष्यानुरोधाच्च' इति **मनोरमायां** स्पष्टम्। एवं च वैदिकोदाहरणविषयकेऽस्मिन् सूत्रे ह्रस्वग्रहणमविवक्षितमेव, 'ईयिवांसम्' इत्यादिप्रयोगादुपेयिवानित्यादावुपसर्गवत्। 'अर्द्धमुदात्तम्, इति वृत्तिरपि यथाश्रुतैव। तत्र लक्ष्यं 'येऽराः' इति। अत्र एकारः, 'तनूनपाच्छचीपति' इत्यत्र पदपाठे ऊदीतौ चाऽर्द्धोदात्तौ बह्वृचैः पठ्यन्ते। यद्यपि तनूनपाच्छचीपतिशब्दयोः 'उभे वनस्पत्यादिषु' (६।२।१४०) इति पूर्वपदोत्तरपदयोराद्युदात्तत्वे, शेषनिघातेनोदीतावनुदात्तौ प्राप्नुतः, तथापि **'जात्यवद्वा, तथावाऽन्तौ तनूशचीतिपूर्वयोः' इति प्रातिशाख्येन** पाक्षिकस्वरितत्वोक्तेर्न दोषः। **जात्यः**=स्वरितविशेषः। [3]**तथा वेत्यस्य**=अनुदात्तौ वेत्यर्थः। प्रातिशाख्यमप्यनुपदमेव स्फुटीभविष्यति।

([4]**गुरवस्तु**—अर्द्धशब्दोऽवयववाची। स च कस्याञ्चिच्छाखायां समांशः, कस्याञ्चिदर्द्धमात्रेति प्रातिशाख्यानुरोधेन वेदे, लोके च भाष्यप्रामाण्येनार्द्धमात्रैवेति व्यवस्था बोध्या। एतेन 'समं स्यादश्रुतत्वात्' इति न्यायेन 'सिद्धेऽर्द्धग्रहणमपि व्यर्थम्' इत्यपास्तम्। एवं च ह्रस्वग्रहणमतन्त्रमिति मूलं यथाश्रुतमेवेत्याहुः)।

**तस्य चेति**। अनुदात्तस्येत्यर्थः। **उदात्तेति**। उदात्त-स्वरितयोः परत्वे सतीत्यर्थः। तयोः परत्वं चोपस्थिताऽनुदात्ताऽपेक्षयैव।

**अन्यत्रेति**। उदात्तस्वरितपरत्वाऽभावे इत्यर्थः। **प्रातिशाख्ये इति**। लोके त्वनुदात्त एवेति भावः। प्रातिशाख्यन्तु मनोरमायां द्रष्टव्यम्।

[[5]**केचित्तु**—वैदिकशिक्षयैव लोकेऽपि स्वरितविभागज्ञानसिद्धिमाश्रित्यास्य सूत्रस्य भाष्ये प्रत्याख्यानात्, लोकेऽपि तादृशस्थले उदात्तश्रुतिरेव। न चैवं 'प्रातिशाख्यम्' इति समाख्या विरोधः।

---

१. क. पाठः;
२. क. कुण्डलितः ख. पाठोऽयम्।
३. क. ग. पाठः;
४. क. ग. नास्ति।
५. क. ग. पाठः;
६. अयं ग्रन्थः क. ग. नास्ति।

**'एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः।**
**तस्योदात्ततरोदात्तादर्द्धमात्राऽर्द्धमेव वा॥**

**अनुदात्तः परः शेषः स उदात्तश्रुतिर्न चेत्।**
**उदात्तं वोच्यते किञ्चित् स्वरितं वाऽक्षरं परम्॥'**

(इति ऋग्वेद[1]प्रातिशाख्यस्य ऋग्वेदे स्वरितपर-ह्रस्वस्वरितस्याऽभावेन तत्र प्रतिषेधस्य वैयर्थ्याऽऽपत्त्याऽन्यविषयताया आवश्यकत्वात्)।

तदर्थस्तु—'पूर्वयोः=उदात्तानुदात्तयोः। **उदात्तात्**=स्वतन्त्रोदात्तात्। **उदात्ततराऽर्द्धमात्रेति**–'क्व वोऽश्वाः' इत्यादि ह्रस्वाऽभिप्रायम्। **अर्द्धमेव वेति**—दीर्घाद्यभिप्रायम्। 'व्यापकत्वादिदमेवाऽऽदर्त्तव्यम्' इति सूचयितुमेवकारः, ह्रस्वस्याऽप्यनेन संग्रह[2]ात्, तच्छाखायां दीर्घादिष्वपि समांऽशोदात्तकस्वरितस्यैव पाठाच्च। एतेनैतौ पक्षौ वैकल्पिकावित्यपास्तम्।

'वा'शब्दस्तु पादपूरणाय। **'अनुदात्तः'** इत्यादि परिशेषसिद्धार्थकथनम्। स शेष उदात्तश्रुतिः स्यात्। किमविशेषेण? नेत्याह–**न चेदित्यादि**। उदात्तस्वरितपरं विहायेत्यर्थः' इत्याहुः।

ह्रस्वस्वरितमुदाहरति–क्वेति। 'किमोऽत्' (५।३।१२) इत्यत्। 'क्वाति' (७।२।१०५) इति क्वादेशे 'तित्स्वरितम्' (६।१।१८५) इति स्वरितः दीर्घं तमुदाहरति–**रथानामिति**। **येऽरा[3] इति**। 'स्वरितो वाऽनुदात्ते पदादौ' (८।२।६) इत्येकारः स्वरितः। (न च त्रैपादिकत्वेनाऽसिद्धत्वम् उक्तोत्तरत्वात्)। 'नोदात्तस्वरितोदय'मिति निषेधस्तु 'उदात्तादनुदात्तस्य स्वरितः' (८।४।६६) इत्यस्यैव। अनन्तरस्येति न्यायात्। स्वरितपरमुदाहरति-**शतचक्रमिति**। 'अह व्याप्तौ' इत्यस्मात् कर्मणि ण्यति, तित्त्वात् स्वरिते, संज्ञापूर्वकविधेरनित्यत्वाद् वृद्ध्यभावः)। [अ[4]हौ साधुरिति यति, तित्स्वरेणाऽन्त[5]स्वरितः। यद्वा—अहेरित्यर्थे ह्यः। वृत्रस्येत्यर्थः। 'छन्दसि वावचनं प्राङ्

---

१. क. ग. नास्ति;　　२. 'संग्रहणात्' ख. पाठः।
३. ख. पाठः। ग. क. नास्ति;　　४. क. ग. पाठः।
५ 'अन्तस्वरितो वा' ग।

णौ चङ्युपधायाः' (७।४।१) इति वचनाद् गुणाऽभावः। 'उदात्तस्वरितयोर्यणः' (८।२।४) इति स्वरितः। 'उदात्तयणो हल्पूर्वात्' (६।१।७४) इति तु न, छान्दसत्वात् (इ[1]त्यन्ये)।] 'यत्'शब्दः फिट्स्वरेणाऽन्तोदात्तः। तदेकादेशश्च वा स्वरितः। **स इति**। उदात्तादि-ह्रस्वादिसंज्ञक इत्यर्थः।

(**नवविधोऽपी**त्युपलक्षणम्। तेन एच् लृकारादेरपि संग्रह[2]ः)। '**मुख०**' (१।१।८) उच्यतेऽसौ वचनः। बाहुलकात् कर्मणि ल्युट्। (मुख[2]नासिकेति)-(मुखस[3]हितया नासिकयेति) मध्यमपदलोपीसमासः। द्वन्द्वे हि प्राण्यङ्गत्वादेकवद्भा[4]वे, ह्रस्वत्वे, 'मुखनासिकम्' इति स्यात्। 'मुखनासिकया वचनः' इति 'साधनं कृते'ति समासः। अधिकरणस्याऽपि 'स्थाल्या पच्यते' इतिवत् करणत्वम्।

व[5]स्तुतस्तु—स्थ[6]ानशब्दोऽपि करणव्युत्पत्त्या करणविशेषे योगरूढः। कण्ठादीनामपि करणत्वमेव। अ[7]धिकरणत्वं त्वयुक्तम्। आकाशस्यैव तदधिकरणत्वात्)। अत एव तुल्यास्यसूत्रे भाष्ये 'अस्यन्त्यनेन वर्णानित्यास्यम्' इति करणे व्युत्पत्तिर्दर्शितेति मतान्तरं भाष्यप्रदीपोद्द्योते निरूपितम्। तदभिप्रेत्याऽऽह—**मुखसहितेत्यादि**। मुखेति किम्? यमानुस्वाराणामेव प्रसज्येत। ततश्च 'आङोऽनुनासिकः' (६।१।१२६) इत्यत्राऽनुस्वारः स्यात्। 'अनुनासिकस्य क्वि' (६।४।१५) इत्यादावप्रतिपत्तिरेव स्यात्।

[वस्तु[8]तस्तेषु 'ञमः क्वि' इत्येव पठितुं शक्यम्। 'यरोऽनुनासिके' (८।५।४५) इत्यत्र त्वप्रतिपत्तिः। तत्र कमल्ँ ॐ पठसीत्याद्यसिद्ध्या 'यरो ञमि ञम् वा' इत्यस्य पठितुमशक्यत्वात्। भाष्ये तु प्रासादवासिन्यायेनो-

---

१. ग. पाठः; २. ख. ग. पाठः; ३. क. पाठः।
४. 'एकवत्त्वे, ह्रस्वत्वे' क. पाठः; ५. 'यद्वा' ख. पाठः।
६. क पुस्तके अयं नास्ति ग्रन्थः; किन्तु अस्य स्थाने-'तुल्यास्यसूत्रे भाष्येऽस्यन्त्यनेन वर्णानित्यास्यमिति करणव्युत्पत्तिरप्येवम्। तदेतदभिप्रेत्याह' इति पाठः। ७. ग. पाठः।
८. [] एतदन्तर्गतः क. ग. पाठः।

भयस्थानानामपि ञादीनां संज्ञासिद्धिमाश्रित्य, यमाऽनुस्वाराणां चाऽनुनासिकत्वे दोष-प्रयोजनयोरभावेन मुखग्रहणाऽभावेऽप्यदोष इति—तत्प्रत्याख्यातम् । न च मुखग्रहणसत्त्वेऽनुस्वारस्य केवलनासिकास्थानत्वेनाऽनुनासिकत्वाऽभावे हरिं नमतीत्यादावनुस्वारस्य ययीत्यादिपरसवर्णस्याऽसिद्धत्वेन 'यरोऽनुनासिके' इति पक्षे ञमङणनाः पर्यायेण स्युः । मुखग्रहणाऽसत्त्वे तु तस्याऽनुनासिकत्वे आन्तरतम्यादनुस्वार एवाऽनुनासिको भवतीति दोष इति वाच्यम् । अयोगवाहानां शर्षु पाठस्य 'नुम्विसर्जनीयः' (८।३।५८) इति सूत्रस्थविसर्जनीयग्रहणेनाऽनित्यतया, तत्र 'यरोऽनुनासिक' इत्यस्याऽप्रवृत्त्याऽदोषात् ।] (अत[1] एव भाष्ये 'यमानुस्वाराणामनुनासिकत्वे नैव दोषो न प्रयोजनम्' इत्युक्तम्) ।

नासिकेति किम् ? शक्तेत्यादौ 'अनुदात्तोपदेश' (६।४।३७) इत्यादिना कलोपो मा भूत् । **अष्टादशेति**—यद्यपीदं न जातिपक्षे, तस्या एकत्वात् । व्यक्तिपक्षेऽपि न, व्यक्तीनामानन्त्यात् । तथापि गुणभेदभिन्नानाम्, लोक-वेदयोः प्रयुज्यमानानाम्, शास्त्रीयकार्योपयोगिनां तत्त[2]द्व्याप्यधर्मवतामष्टादशत्वमेवेति भावः । एवमग्रेऽपि बोध्यम् ।

**ऌवर्णस्येति**—विवृतस्येत्यर्थः । 'तेन 'ऌति ऌ वा' (६।१।१०१) इति विधेयस्य तुल्यास्यसूत्रे भाष्ये दीर्घत्वकथनेऽपि न क्षतिः । तस्येषत्स्पृष्टत्वादिति बोध्यम्[3] ।

**दीर्घाऽभावादिति**—अत्र च मानं तुल्यास्येति भाष्ये 'ऌति सवर्णे' (६।१।१०१) इत्यनेन[4] पक्षे द्विलकाराऽभावे 'अकः सवर्णे' (६।१०१) इति दीर्घत्वे, 'होतॄकारः' इति ॠकारघटितप्रयोगकरणमिति बोध्यम् । (प्रथ[5]मयोः पूर्वसवर्णः' (६।१।१०२) इति सूत्रस्थं सवर्णग्रहणमुक्ताऽर्थे ज्ञापकमपि वक्ष्यते) ।

**ह्रस्वाऽभावादिति**—इदं च 'एओङ्' सूत्रे, 'एच इक्' (१।१।४८) इति सूत्रे च भाष्ये स्पष्टम् । एतेन गानरोदनादौ चतुर्मात्रादीनामप्युपलम्भे,

१. ग. पाठः; २. 'तद्ग्राह्यधर्मवतां' इति ग. पाठः । ख. तु नास्ति । ३. 'इति बोध्यं' इति क. नास्ति; ४. 'इति द्विलकाराऽभावे' ख. पाठः । ५. क. नास्ति ।

दीर्घऌकारस्याऽऽगमशास्त्रे मातृकान्यासे उपलम्भे, **राणायनीयशाखायां** 'सुजाते एश्वसूनृते', अध्वर्यो ओद्रिभिः सुतम्' इत्यादौ मा[1]त्रिकैचामुपलम्भेऽपि न दोषः। लोके प्रयोगेष्वप्रयुज्यमानत्वाच्छास्त्रीयकार्योपयोगित्वाऽभावाच्च। (प्र[2]क्रियादशायां तत्सत्त्वे मानाऽभावाच्च)। एतेन 'अनुदात्तत[3] रस्याऽऽधिक्यं दुर्वारम्' इत्यपास्तम्। (इ[4]दमपि 'उदात्तादिस्वराणामविभागेनाऽवस्थानमेकश्रुतिः' इति पक्षे बोध्यम्। यदा त्वेकश्रुतिः स्वरान्तरम्, तदेदमुपलक्षणं बोध्यम्, तस्या लोकेऽपि सत्त्वात्)।

**तुल्यास्य०** (१।१।९)—तुल्यौ आस्यप्रयत्नौ यस्येत्यर्थः। आस्ये भवमास्यम्। 'शरीरावयवाद्यत्' (५।१।६)। तच्च वर्णोपयोगित्वात् स्थानमेव। प्रयत्नस्य पृथगुपादानाच्च। न तु मुख्यमास्यम्—ओष्ठावधिककालपर्यन्तम्, 'आस्य'पदोपादानवैयर्थ्यापत्तेः। प्रकृष्टो यत्नः प्रयत्नः। प्रकर्षश्च वर्णोत्पत्त्यव्यवहितप्राग्भावित्वरूपः। (द्वन्द्वग[5]र्भबहुव्रीह्याश्रयणाच्च प्रत्येकसाम्यमादाय न सवर्णत्वम्। अत एव 'अकः सवर्णे' (६।१।१०१) इति सूत्रे, सवर्णग्रहणम्, 'इकोऽसवर्णे' (६।१।१२७) इति सूत्रं च चरितार्थम्)। जनकत्वं षष्ठ्यर्थः। वर्णानां स्वरूपतो भेदाय कण्ठादिष्वप्यवान्तरस्थानभेदस्याऽऽवश्यकत्वेन, भेदघटिततुल्यत्वस्य न क्षतिः।

(यद्वा[6]—ताल्वादिशब्देन तत्सम्बद्धा वायुसंयोगा गृह्यन्ते)।

एतेन 'द्वौ तुल्यशब्दौ तन्त्रेणाऽत्र निर्दिष्टौ। तत्र एकः सदृशवाची, अपरो लक्षणया सङ्ख्यावाची। तत्र चाऽऽस्ये सादृश्याऽयोगात्, प्रयत्ने चैकत्वाऽयोगात् सम्भवाऽनुरोधेन—'एकस्थानम्, सदृशप्रयत्नं च सवर्णम्' इत्यर्थ इति परास्तम्। तन्त्राऽऽश्रयणे, लक्षणायां मानाऽभावाच्च। तदेतदाह—**ताल्वादीति**।

'आस्य'शब्दस्य तद्धितान्तत्वप्रकटीकरणायैवमुक्तम्। न तु 'कण्ठादि'

---

१. 'इत्यादावर्द्धमात्रिकैचां' ख. पाठः;
२. क. नास्ति।
३. 'एतेनैकश्रुत्यनुदात्ततरादीनां' ख. पाठः;
४. क. ग. पाठः।
५. क. ग. नास्ति।

इति। तथा सति 'कण्ठ आदिरवयवो यस्य' इति व्युत्पत्त्या प्राथमकल्पिकाऽऽस्यप्रतीतिरपि स्यात्। एतेन 'वर्णसमाम्नाये, मातृकान्यासादौ चाऽकारस्य प्राथम्येन स्थानप्रयत्नविवेके कण्ठस्थानस्यैव प्रथमत उक्तत्वेन च, 'कण्ठादि' इत्येव वक्तुमुचितम्' इत्यपास्तम्। (शि[1]क्षायां कण्ठादीनां तत्त्वेनैव स्थानत्वोक्त्या तद्रूपेणैवास्यभवशब्देन ग्रहणमिति तद्भागभेदमादाय नोदात्तादिषु सावर्ण्यभङ्ग इति बोध्यम्)। **आभ्यन्तरेति**–'प्र'शब्दबलाल्लब्धम्।

प्रकर्षश्च वर्णोत्पत्ति(अव्य[2]वहित)-प्रागभावित्वरूपो लक्ष्यते। 'यस्य एतद्द्वयं येन यदीयेन एतद्द्वयेन तुल्यम्, इत्यर्थः। 'यजु[3]ष्येकेषाम्' इत्यादिनिर्देशाद् यावदास्यभवतुल्यत्वमेव गृह्य[3]ते। (जन[4]कत्वं च 'यजुष्येकेषाम्' इत्यादिनिर्देशात् पर्याप्तमेव गृह्यते)। अत एव ईप्रत्ययान्त-वातप्रमीशब्दस्य 'वातप्रम्ये' इत्यादावेकारादीकाराद्योर्न सावर्ण्यमिति न दीर्घः। कण्ठतालिव्यादिसमासनिर्देशेन प्रत्येकं जनकतापर्याप्त्यभावात्। अत एव ऐकारौकारयोः सावर्ण्यमाशङ्क्य, 'नैतौ तुल्यस्थानौ' इति समाहितं 'तुल्यास्य०' (१।१।९) सूत्रे भाष्ये। अत एव व-लयोर्न सावर्ण्यम्। तेन 'तद्वस्तु' इत्यादौ 'तोर्लि' (८।४।६०) इति परसवर्णो न। ( व-ल[5]योः सावर्ण्ये हि तद्दुर्वारमेव स्यात्। वल्-रलिति भेदेन व्यवहाराच्च)। [अत[6] एव 'तद्वानासम्' (४।४।१२५) इति सूत्रप्रयोगः संगच्छते। 'एकारौकारयोः केवलतालव्यत्वम्, केवलौष्ठ्यत्व'मिति 'एच इक्' (१।१।४८) इति सूत्रभाष्यध्वनितमतान्तरे इकारोकारयोरेकारौकाराभ्यां सावर्ण्येऽपि, मधुबभ्र्वोर्यजुष्येकेषामित्यादिनिर्देशैर्न तत्प्रयुक्तकार्यप्रवृत्तिः।

न च यावदास्यभवतुल्यत्वविवक्षणे 'प्रयत्न'ग्रहणं व्यर्थम्, प्रयत्नस्यापि आस्यभवत्वादिति वाच्यम्, ह्रस्वदीर्घयोः सावर्ण्याऽनापत्तेः। तयोर्जनकवायुसंयोगानामास्यभवानामतुल्यत्वात्। तस्मादास्यभवशब्देन कण्ठादीनामेव ग्रहणमिति बोधनाय तत्सार्थक्यम्। 'किं पुनरास्ये भवम्? स्थानं

---

१. ख. ग. नास्ति। क. पाठः;　२. अयं क्वचित्पाठः;　३. क. ग. पाठः।
४. ख. पाठः;　५. ग पाठः;　६. क. ग. पाठः।

करणं च' इति भाष्ये करणशब्देन वायुसंयोगाद्येव प्रयत्नपदसार्थक्याय दर्शितमित्याहुः[1]]। (व्याख्यानाच्च[2] कण्ठादिस्थानस्यैव ग्रहणमित्याहुः)।

[अ[3]त एव लणिति सूत्रं चरितार्थम्। न च 'इको यणचि' (६।१।७७) इत्यादावुभयग्रहणाय, प्रत्याहारे ग्रहणाय च तदिति वाच्यम्, 'हयवरलट्' इत्येव पठितुं युक्तत्वात्। पृथक् सूत्रकरणम् अटि लकाराऽग्रहणार्थम्। वलयोः सावर्ण्ये हि तद् दुर्वारमेव स्यात्। 'वँल्' 'रल्' इति भेदेन व्यवहाराच्च। 'उदोष्ठ्यपूर्वस्य' (७।१।१०२) 'लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये' (७।३।७३) इत्यादौ तादृश्या एव जनकताया ग्रहणे मानाऽभावात्। व्याप्तिन्यायेन, बहुलक्ष्यसंस्काराऽनुरोधेन च सर्वस्यापि ग्रहणमिति **प्राञ्चः।**

**केचित्तु** प्रत्येकं स्थानत्वेऽपि न क्षतिः। 'मधुवभ्वोः…' 'यजुष्येकेषाम्' इत्यादिनिर्देशैर्वल्-रलिति भेदेन निर्देशेन च सावर्ण्याऽनित्यत्वज्ञापनात्। अत एव एका[4]र-ओकारयोः केवलतालव्यत्वम्, केवलौष्ठ्यत्वमिति 'एच इक्' (१।१।४८) इति सूत्रभाष्यध्वनितमतान्तरे इकारोकारयोरेकारौकाराभ्यां न सावर्ण्यमित्याहुः]।

**आस्येति किम्?** 'तप्तं'। 'झरो झरि' (८।४।६५) इति लोपो मा भूत्। प्रयत्नेति किम्? 'वाक् श्च्योतति'। प्रेति किम्? श-चयोः श्वासाऽघोषविवाराख्यबाह्यप्रयत्नसाम्येन तत्रैव दोषात्। (न च त[5]द्धितान्ताऽऽस्यपदोपादानादेव स्थानप्रयत्नोभयसाम्यलाभे किं 'प्रयत्न'ग्रहणेनेति वाच्यम्, अन्यतरसाम्येऽपि संज्ञाप्रवृत्तिप्रसङ्गात्। सति तु तस्मिंस्तदुपादानसामर्थ्येन धर्मद्वयकृतसाम्यविवक्षणान्न दोषः)। (अ[6]त एवाऽकः सवर्ण इति सवर्णग्रहणं चरितार्थम्)।

कस्य किं स्थानमित्याशङ्कायामाह–**अकुहेति**। यद्यपि सर्ववर्णोच्चारणे कण्ठव्यापार आवश्यकस्तथापि चवर्गाद्युच्चारणे तात्वादिव्यापारोऽपि

१. क. ग. पाठः; २. ग. पाठः; ३. क. ग. पाठस्थाने ख. पाठः।
४. ग. पाठः; ५ क. नास्ति; ६. ग. पाठः।

तथा। अकारादीनामुच्चारणे तु नेति भावः। न चैवं क-चयोरपि सावर्ण्यापत्तिः। भिन्नस्थानकथनवैयर्थ्यापत्तेः।

ननु 'कण्ठ्यावहौ' 'जिह्वामूले तु कुः प्रोक्तः' इति **शिक्षोक्तेः** कुग्रहणमसङ्गतमिति चेन्न, (अत्रत्य[1]कण्ठपदस्य कण्ठस्थान-तत्समीपजिह्वामूलः स्थानोभयपरत्वात्। जिह्वामूलीयव्यवहारातिप्रसङ्गवारणाय परं तस्य रूढिकल्प्येति बोध्यम्)। रूढिकल्पने मानं च हयवरट्सूत्रस्थभाष्ये अयोगवाहेषु जिह्वामूलीयगणनम्। [वृत्त्या[2]दिप्रामाण्येन शिक्षास्थजिह्वामूलपदस्य लक्षणया स्वसमीपदेश-कण्ठबोधकत्वात्। ध्वनितं चेदं 'हयरवट्'सूत्रे भाष्ये। अत एव जिह्वामूलीयव्यवहाराऽतिप्रसङ्गवारणाय तस्य रूढिकल्पना नेति लाघवम्]। अत्र वाक्ये 'ह'पदेन पञ्चमाऽन्तस्थासंयुक्तहकारस्यैव ग्रहणम्—

**'हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम्।**
**उरस्यं तं विजानीयात् कण्ठ्यमाहुरसंयुतम्' ॥**

इति शिक्षास्वरसात्।

न चाऽनेन कादीनां कण्ठस्थानत्वे बोधिते, तुल्यस्थानत्वात् सवर्णपदवाच्यत्वग्र[3]हे 'कु'शब्दस्य तद्ग्राहकत्वमणुदित्सूत्रेण बोधनीयमिति कथमत्र वाक्ये 'कु'शब्देन पञ्चानामुपस्थितिरिति वाच्यम्, तत्तद्वर्णोत्पत्तेः प्राक् तत्तत्स्थानादौ जिह्वास्पर्शाद्यनुभवेन तत्तत्स्थानत्वनिर्णयस्य जातत्वेनाऽक्षतेः। अकुहेत्यादिकथनन्तु साधारणधर्मबोधनायेत्याहुः।

(विस[4]र्जनीयपदेन च साहचर्यादकाराश्रयविसर्गस्यैव ग्रहणम्। अत एव 'अयोगवाहा विज्ञेया आश्रयस्थानभागिनः' इति शिक्षया न विरोधः।)

**दन्ता इति—** 'दन्त'शब्देन तत्संयुक्तदेशो लक्ष्यते। अतो भग्नदन्तस्याप्युच्चारणं भवत्येव। 'उपध्मा ध्मायेतेऽनेन, तत्र भवः, इति योगेनोपध्मानीयस्यौष्ठ्यत्वमित्याह—**उपूपेति**। न च उपयोरप्यनेन शब्देन

---

१. क. ग. पाठः;　　　　२. ख. पाठः—क. ग. पाठस्थाने।
३. 'शक्तिग्रहे' ख. पाठः;　　　　४. क. ग. पाठः।

व्यवहारप्रसङ्गः[1]। (जिह्वामूलीयपदवदस्यापि योगरूढत्वात्)।

'एदैतोः' इत्यादौ तपरत्वमसन्देहार्थमेव, न त्वेतावता तत्कालस्यैव ग्रहणमिति भ्रमितव्यम्। शिक्षोक्तार्थानुवादकेऽस्मिन्नाधुनिकस्य वाक्ये तपरशास्त्राऽप्रवृत्तेः। तेन प्लुतस्याऽपि तत्स्थानत्वाऽनुभवो नाऽनुपपन्न इति बोध्यम्। तथा च **पाणिनीयशिक्षा—**

**कण्ठ्यावहाविचुयशास्तालव्यावोष्ठजावुपू।**
**स्युर्मूर्द्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः॥**
**जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः।**
**एऐ तु कण्ठतालव्यावोऔ कण्ठोष्ठजौ स्मृतौ॥ इति।**
**[अष्टौ स्थानानि[2] वर्णानामुरः कण्ठः शिरस्तथा।**
**जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च]॥**

[न च 'अयोगवाहा[3] विज्ञेया आश्रयस्थानभागिनः' इति **शिक्षोक्तेः** 'जिह्वामूलीयस्य जिह्वामूलम्' इति, 'विसर्जनीयस्य कण्ठं स्थानम्' इति चाऽसङ्गतम्। अत एवोपध्मानीयस्योष्ठ्यत्वम्, पकाराश्रयत्वात्। एतेन 'विसर्जनीयस्योरःस्थानम्' इत्यपास्तमिति वाच्यम्, 'तत्र भवः' (४।३।५३) इत्यधिकारीय'जिह्वामूलाङ्गुलेश्छः' इति सूत्रविहित–छप्रत्ययान्त-जिह्वामूलीयशब्देन भाष्यादौ व्यवहारदर्शनेन तत्स्थानत्वनिर्णयात्। शिक्षा तु–आश्रयस्थानतत्समीपस्थानोभयपरतया व्याख्येया। तत्र यथाऽनुभवमभियुक्तोक्त्या व्यवस्था। अत एव–

**अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा।**
**जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च॥**

इत्यत्र **शिक्षायां** जिह्वामूलस्य स्थानमध्ये गणनं सङ्गच्छते। अकुहेत्यत्र विसर्जनीयस्य साहचर्येणाऽकाराश्रयस्यैव ग्रहणान्न दोषः।

---

१. 'व्यवहारप्रसङ्गः। तथा सत्योष्ठीया इत्येव व्यवहरेयुः' ख. पाठः।
२. क. पाठः। ख. ग. नास्ति; ३. [] एतदन्तर्गतः पाठः क. नास्ति।

न च[1] दन्तोष्ठादीनामन्येषां सत्त्वेनाऽष्टाविति शिक्षाऽसङ्गता। नियमस्याऽसङ्कीर्णस्थानपरत्वात्। तेषां सङ्कीर्णत्वं सभा[2]गत्वाद्यभिप्रायम्, स्थानद्वयनिबन्धनं चेति यावद्बाधं साधु]।

(य[3]त्तु 'वादीनां दन्तोष्ठादि समुदितं स्थानम्, न तु प्रत्येकम्' इति। तन्न, शिक्षायां 'दन्त्योष्ठ्यम्', 'कण्ठ्यतालव्यौ' इत्यादौ 'तत्र भवः' (४।३।५३) इत्यधिकारविहितवतः प्रत्येकमनुत्पत्त्यापत्तेः। दन्तोष्ठ्यमित्यादि त्वसङ्गतमेव। शरीराऽवयवसमुदायस्य शरीराऽवयवत्वाऽभावात्। स्वाङ्गसमुदायस्य स्वाङ्गत्वाऽभाववत्। स्वजनकवायुसंयोगावच्छेदके कण्ठादौ स्वाधारत्वमारोप्य 'शरीरे मे वेदना' इतिवत् कण्ठे भव इत्याद्युपपत्तिरिति यावद्बाधं साधु।)

**नासिका चेति**—चेन स्व-स्ववर्गानुकूलंताल्वादि समुच्चीयते।

यत्तु 'अनुस्वारयमानां च नासिका स्थानमिष्यते' इति शिक्षोक्तेरेषां नासिका करणम्। किञ्च, स्थानत्वे क-ङयोः सावर्ण्याऽनापत्तिः। यावत्स्थानैक्याऽभावादिति। तन्न, कण्ठादीनामपि करणत्वस्यैव 'अस्य[2]न्त्यनेन वर्णानित्यास्यम्' इति–उक्तभाष्यात् प्रतीतेः। (प्रा[4]सादवासिन्यायोऽपि—यथा तत्रोभयवासिनोऽन्यतरवासिशब्देन ग्रहणम्, तथाऽत्रोभयजन्यस्यान्यतरजन्यशब्देन ग्रहणमिति सूपपाद एव)।

न चैवं कस्यचित् स्थानत्वेन, कस्यचित् करणत्वेन व्यवहारे बीजाऽभावः। वर्णाऽभिव्यक्तिजनकवायुसंयोगाऽनुयोगि–तद्वर्णाश्रयाऽऽकाशावच्छेदकताल्वादेर्योगरूढ्या स्थानत्वव्यवहारात्। (त[5]स्य व्यापारवदसाधारणकारणत्वात्।) तत्सम्बन्धजनकप्रयत्नविशेषादौ स्पृष्टत्वाद्याख्ये करणत्वव्यवहारस्तु गौणः। एवमाकाशनिष्ठाधारत्वस्यावच्छेदके आरोपेण, वायुसंयोगनिष्ठाऽऽधेयत्वस्य वर्णे आरोपेण वा, (कण्ठे भवः क[6]ण्ठ्य इत्यादौ) स्थानभूतदेशानामाधारसप्तम्या निर्देशः।

---

१. क. नास्ति। ख. ग. वर्तते; २. 'सङ्कीर्णत्वं यथा तथोक्तं' ग. पाठः।
३. क. ग. पाठः। ख. नास्ति; ४. क. ग. पाठः।
५. क. ग. नास्ति; ६ क्वाचित्कः पाठः।

अत एव 'तत्र भवः' (४।३।५३) इत्यधिकारविहित-यदन्तेन 'नासिक्यो वर्णः' इत्यादिव्यवहारः। (तत्सह[1]कारि-जिह्वाग्रादेः करणत्वेन व्यवहारात्। तत्तत्स्थाने जिह्वाग्रादिसम्बन्धेन वर्णोत्पत्तेः। तत्सम्बन्धजनकप्रयत्नविशेषे स्पृष्टत्वाद्याख्ये च करणत्वव्यवहारः)। वर्णाभिव्यक्त्यनन्तरभावी, सावर्ण्याऽनुपयुक्तः, आन्तरतम्यपरीक्षोपयुक्तश्च कण्ठविवरादिनिष्ठविकासादेरास्यबहिर्देशावच्छिन्नकार्यस्य जनको (त[2]द्वर्णनिष्ठधर्मविशेषजनक आस्यबहिर्देशावच्छिन्नवायुसंयोगजनको) यत्नो 'गुण'शब्देनोच्यते। अत एवाऽकारादिनिष्ठानुनासिक्यं वृद्धिसंज्ञासूत्रशेषभाष्ये 'भेदकत्वाद् गुणस्य' इत्यादिग्रन्थे गुणत्वेन व्यवहृतम्। कण्ठादिदेशावच्छिन्नवायुसंयोगेनोत्प[3]न्नेषु तेषु नासावच्छिन्नवायुसंयोगेन तद्रूपधर्मस्योत्पत्तेः।

अत एव 'साऽनुनासिकाऽकारादीनां नासिका स्थानम्' इति नोक्तं मूलकृता। 'एकोऽयमात्मा उदकं नाम, तस्य गुणभेदादन्यत्वं भवति—अन्यदिदं शीतम्, अन्यदिदमुष्णम्, इति तद्दृष्टान्तवर्णनपरभाष्य-कैयटाभ्यां तथैव प्रतीतेः।

(अत्र[4] आत्मशब्दो द्रव्यपर्यायः)। अत एव गुणानामभेदकत्वपक्षे निरनुनासिकैः सानुनासिकानां ग्रहणं सिद्ध्यति, स्वरूपस्यैकत्वात्। तेषां नासिकास्थानत्वे तूत्पादकसामग्रीभेदात् स्वरूपभेदस्याऽप्यापत्तौ, अग्रहणं तदवस्थमेव स्यात्।

न च तत्र भगवतोदात्तत्वादीनामपि गुणव्यवहारः कृतः, सोऽसङ्गतः स्यात्, तेषां वर्णोत्पत्तिप्राग्भावित्वात्, आस्यान्तर्गतत्वाच्चेति वाच्यम्, सावर्ण्याऽनुपयुक्तत्वाऽऽन्तरतम्यपरीक्षोपयोगित्वकृतसादृश्यमात्रेण तत्त्वव्यवहारात्।

नासिका त्वास्यबहिर्भूतैव। 'मुखनासिका०' (१।१।८) इति सूत्रे (मु[5]खं च नासिका चेति), मुखद्वितीया नासिकेति (च[5]) भाष्ये विग्रहप्रदर्शनात्। (न ह्यवय[6]वाऽवयविविषये 'देवदत्तसहितो हस्तः' इति प्रयोगः सचेतसाम्)।

१. ख. नास्ति;
२. ख. पाठः। क. ग. नास्ति।
३. 'अभिव्यक्तेषु' ख. पाठः;
४. क. ग. पाठः।
५. ग. नास्ति;
६. अयं पाठः क. नास्ति।

'सहस्तो देवदत्तः' इत्यादौ तु विद्यमानवाची 'सह'शब्दः । अत एव 'मुखवचनोऽनुनासिकः' इतीयत्युच्यमाने क-च-ट-त-पानामेव प्रसज्येत' इति भाष्ये एवकारः सङ्गच्छते । आस्याऽन्तर्गतत्वे तु यमादीनाम्, ङादीनां च मुखवचनत्वात् तदसङ्गतिः स्पष्टैव । मम तु न दोषः । ङादीनां 'सर्वं वाक्यं सावधारणम्' इति न्यायेन मुखमात्रवचनत्वाऽभावात् । प्रासादवासिन्याय-[स्या[1]ऽप्याप्यज्ञानाच्च । तन्न्याय–] प्रदर्शकभाष्येणाऽपि नासिकाया आस्यानन्तर्गतत्वबोधनाच्च ।

नन्वेवं सति 'यदि लौकिकमास्यम्, किमास्योपादाने प्रयोजनम्' इति भाष्यम्, 'तत्र तुल्यावास्यप्रयत्नमात्रौ यस्य जनकावित्यर्थबोधनेन नासिकास्थान-ञङादिनिवृत्त्यर्थमास्यग्रहणं स्यात्' इति शङ्कां मनसि निधाय 'नासिकाऽपि न बाह्या वर्णोत्पत्तिनिमित्तम्, किं तर्हि, आस्याऽन्तश्चर्म विततमस्ति, तत्सम्बद्धा रेखा नासिका, तस्यां वाय्वभिघाताद् वर्णोत्पत्तिः' इति **कैयटश्च** विरुध्येत । 'मुखनासिका' इति सूत्रस्थमुखग्रहणं मुखाऽवयवपरम् । गोबलीवर्दन्यायेन च नासाऽतिरिक्तस्यावयवपरं तत् । एवकारश्चाऽप्यर्थे । प्रासादवासिदृष्टान्तोऽप्यंशेन कथञ्चिदुपपाद्य इति न तद्विरोधोऽपीति चेन्न, अवधारणगर्भसमासे ह्रस्वाऽकारादीनां सावर्ण्याऽनापत्तेः । तज्जनकवायुसंयोगानामपि तुल्यत्वात् ।

न चाऽऽस्यपदं तल्लाक्षणिकम् । 'यदि लौकिकम्' इत्यु[2]पक्रमविरोधात् । अवधारणागर्भसमासे तु नासिकाव्यावृत्तिरपि दुरुपपादैवेति भाष्याशयात् । मुखनासिकेति सूत्रे, तद्भाष्यादौ च न लक्षणेत्यपरमनुकूलम् । कैयटस्तु चिन्त्य एव । ञादीनां तु नासिकास्थानमेव, उभयावच्छेदेन वायुसंयोगोत्तरमेव स्वरूपोत्पत्त्या विनिगमनाविरहादुभयोरपि स्थानत्वात् ।

[आस्य[3]बहिर्भूतत्वाच्च न कङयोः सावर्ण्यदोषः । न चैवम् 'आस्ये

---

१. क. नास्ति;　　　　२. 'लौकिकमिति वाक्यशेषविरोधात्' ख. पाठः ।

३. [] एतदन्तर्गतः पाठः क. ग. नास्ति ।

तुल्यदेशप्रयत्नम्' इति वार्त्तिकव्याख्यावसरे 'यदि लौकिकमास्यं किमास्योपादाने प्रयोजनम् ? प्रयत्नविशेषणमास्योपादानम्' इति भाष्याऽसङ्गतिः। (नासिकाव्यावृत्तये[1] देशविशेषणताया अप्यावश्यकत्वादिति वाच्यम्।) अनुनासिकाऽकारादौ तस्या धर्ममात्रजनकतया, ङादावपि तत्त्वमेवेत्याशयात्[2]। अत एव तत्सिद्धान्तभाष्ये 'एतदर्थमेव देशविशेषणमपि तत्' इत्युक्तमित्यनुपदमेव स्फुटीभविष्यति]।

न चैवं स्थानतोऽन्तरतमे 'त्वं करोषि' इत्यादौ चरितार्थं परसवर्णशास्त्रम्, 'सँय्यन्ता' इत्यादौ न प्रवर्त्तेत। उक्तरीत्या यादीनां नासिकास्थानत्वाऽभावेन, स्थानत आन्तर्याऽभावादिति वाच्यम्।

[संग्रा[3]ह्यलाघवाऽनुरोधेन 'ञयि' इति वाच्ये 'ययि' इत्युक्तिसामर्थ्येन गुणकृताऽऽन्तर्येणापि तेषु तत्प्रवृत्तेः। अस्तु वा **कैयट**रीत्या आस्याऽन्तर्गतत्वं[4] स्थानत्वं च। तथापि न कङयोः सावर्ण्ये दोषः। 'तद्धितान्त आस्यशब्दः। आस्ये भवम्—आस्यम्। स्थानं[5] करणं च। प्रारम्भो यत्नस्य, **प्रयत्नः**। द्वन्द्वगर्भो बहुव्रीहिः। अथवा— प्रयतनमेव **प्रयत्नः**। तदेव चाऽऽस्यम्। न च बाह्यभेदे सावर्ण्याऽनापत्तिः। यत् समानं तदाश्रयिष्यामः। किं सति ? भेदे सतीत्याह। भेदाऽधिष्ठाना हि सवर्णसंज्ञा। अन्यथा 'झरो झरि' (८।४।६५) इत्यादौ सवर्णग्रहणमनर्थकं स्यात्। न च बाह्यैक्ये आभ्यन्तरभेदे सावर्ण्याऽऽपत्तिः। एवं तर्हि 'आस्यभवे एकस्मिन् तुल्यः प्रयत्नो येषाम्' इत्यर्थप्रतिपादकभाष्यसन्दर्भेण यत्किञ्चित्स्थानैक्ये एव संज्ञाया बोधनात्।

किञ्च—नासिकायाः करणत्वेऽप्यास्यभवत्वेन करणस्याऽपि ग्रहणाद्यावदास्यभवतुल्यत्वे इत्यर्थाऽऽपत्तौ, तवाऽपि क-ङयोः सावर्ण्याऽनापत्तिस्तदवस्था। न चैवं ञ-ङ[6]योरपि सावर्ण्याऽऽपत्तिः, आस्यान्तर्गतत्वपक्षे

---

१. ग. पाठः;
२. क. ग. नास्ति। ख. पाठः;
३. 'त्यभिमानात्' ग. पाठः।
४. 'त्वमेव' ख. पाठः
६. ग. नास्ति;
७. 'ग-ङयोः' ग. पाठः।

इति वाच्यम्, 'आस्ये तुल्यदेशप्रयत्नम्' इति वार्त्तिकन्यासे उक्तरीत्या देशविशेषणे फलाऽभावं मनसि निधाय—'किमास्योपादाने प्रयोजनम्' इति प्रश्ने, सौत्रत्वाद् द्वन्द्वसाधुत्वमभिप्रेत्य, ('किं पुनः[1] स्थानं करणं च' इति भाष्यात्) प्रयत्नविशेषणमास्योपादानमित्युक्त्वा, तद्व्यावर्त्यत्वेन बाह्य-प्रयत्नान् प्रदर्श्य, 'यथा तृतीयास्तथा पञ्चमाः, आनुनासिक्यमेषामधिको गुणः' इति ग्रन्थेन[2] समाहितत्वात्। उक्तरीत्या ङादीनां नासिकास्थानत्वात् तेषां परस्परसावर्ण्यनिवृत्तये देशविशेषणमप्यास्यग्रहणमावश्यकमि[3]ति तस्य गूढ आशयः। स च नासिकाया बाह्यत्व ए[4]व सङ्गच्छते]।

'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठस्य भाष्ये दूषितत्वेनोक्तयुक्तेर-सम्भवदुक्तिकत्वात्। न च नासिकाया बाह्यत्वे 'आस्ये तुल्यदेशप्रयत्नम्' इति वार्त्तिकन्यासे, 'किमास्योपादाने प्रयोजनम्' इति प्रश्नस्य, 'प्रयत्न-विशेषणमास्योपादानम्' इत्युत्तरस्य चाऽसङ्गतिः। नासिकाव्यावृत्तये देश-विशेषणताया अप्यावश्यकत्वादिति वाच्यम्। अनुनासिकाऽकारादौ तस्या धर्ममात्रजनकतया ङादावपि तथात्वमित्यभिमानेन तत्सत्त्वात्।

किञ्च, सिद्धान्ते 'प्रयत्नविशेषणमास्योपादानम्' इत्युक्त्वा तद्व्यावर्त्यत्वेन बाह्यप्रयत्नान् प्रदर्श्य, 'यथा तृतीयास्तथा पञ्चमाः, आनुनासिक्यमेषामधिको गुणः' इति ग्रन्थेनोक्तरीत्या ङादीनां नासिकास्थानत्वात् तेषां कादिभिः सावर्ण्यसिद्धये देशविशेषणमप्यास्यग्रहणमित्यर्थ उक्तप्रायः। स च नासिकाया बाह्यत्व एव सङ्गच्छते। आस्यान्तर्गतत्वे तु–'मुखनासिका' (१।१।८) इति सूत्रे नासिकाऽतिरिक्ताऽवयवकमुखस्यैव ग्रहणेन, तत्साहचर्यादत्राऽप्यास्य-पदेन तादृशस्यैव ग्रहणमिति क्लेशेनोपपादनीयः स्यात्। अन्यथाऽत्र स्थाने एतत्कथनवैयर्थ्याऽऽपत्तिः। आस्यग्रहणव्यावर्त्त्य-सावर्ण्याऽनुपयुक्तप्रदर्शन-

---

१. ग. पाठः;　२. 'ग्रन्थेनोक्तरीत्याङादीनां' ग. पाठः।
३. 'मित्यर्थं उक्तप्रायः' ग. पाठः;　४. 'बाह्यत्वे स्पष्ट एव' ख. पाठः।
५. 'ग्रहणमित्याशयः' ख. पाठः।

मेवाऽत्र प्रक्रान्तम्। (नासिकायाः[1] सावर्ण्याऽनुपयुक्तत्वबोधनाय हि तस्य गुणत्वोक्तिः)। [न चाऽनुनासिकाऽ[2]कारादीनां ञादीनां च[3] (ताल्वादिस्थानैक्येनाऽऽनुनासिक्यरूपप्रयत्नैक्येन[4] च) परस्परसावर्ण्यनिवृत्तये, प्रयत्नविशेषणाऽऽस्यग्रहणस्यैवेदं व्यावर्त्यप्रदर्शनमिति वाच्यम्[5]। नाज्झलौ[6]' (१।१।१०) इत्येव सिद्धेः]।

अत एव 'एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति। काकलकाऽधस्तनोपजतृस्थानत्वात् तस्य। सर्वमुखस्थानमवर्णमेके इच्छन्ति। एवमपि व्यपदेशो न प्रकल्पते—'आस्ये येषां तुल्यो देशः' इति। व्यपदेशिवद्भावेन व्यपदेशो भविष्यतीत्यर्थक—एतदुत्तरभाष्यसन्दर्भः स्वरसतः सङ्गच्छते। अन्यथा प्राक् प्रयत्नविशेषणमात्रस्योक्तेर्देशविशेषणत्वाऽभावेन तदसङ्गतिः स्पष्टैव। (उपरञ्जकतया देशविशेषणत्वमादाय तद्ग्रन्थयोजनं तु न स्वारस्याऽऽवहम्)।

[अ[7]त एव शिक्षायामपि—'शेषाः स्पृष्टा हलः प्रोक्ताः' इत्यन्तेनाऽऽभ्यन्तरप्रयत्नानुक्त्वा—'निबोधाऽनुप्रदानतः' इत्युपक्रम्य—

**'अ[8]मोऽनुनासिका न-ह्रौ, नादिनो ह-झशः स्मृताः।**
**ईषन्नादा यणश्चैव, श्वासिनस्तु ख-फादयः।**
**ईषच्छ्वासांश्चरो विद्यात्.....................'॥ इत्युक्तम्।**

(अत्र 'नादिनः' इति पूर्वपराऽन्व[9]यि।) **नादेति**—संवारघोषयोरुपलक्षणम्। श्वासपदं—विवाराऽघोषयोरिति। अत्र 'न—ह्रौ' इत्युप-

---

१. ख. ग. नास्ति;
२. क. नास्ति।
३. 'अनुनासिकयकारादीनां' ग. पाठः;
४. ग. पाठः।
५. इतोऽग्रे—'विनिगमनाविरहेणार्थद्वयस्यापि बोधनात्। तस्य सावर्ण्यानुपयुक्तत्वबोधनाय हि तस्य गुणत्वोक्तिः। एवञ्च नासिकास्थानस्य, तत्रत्यप्रयत्नस्य च न सवर्णसञ्ज्ञासूत्रे ग्रहणमिति तात्पर्यम्'—ग. पाठः।
६. ख. पाठः। क. ग. नास्ति;
७. [] एतदन्तर्गतः क. ग. पाठः।
८. 'ञमो' ग. पाठः;
९. ग. पाठः।

लक्षणम् । एकारौकारयोरपि तत्त्वाऽभावात् । एवम्—'एचो द्वादशानाम् । लृवर्णस्य द्वादश' इत्याद्यपि (प्रायिकम्[1]) । एवञ्च नासिकाया आस्यबाह्यत्वे क-ङयोः सावर्ण्ये दोष एव न । आस्याऽन्तर्गतत्वेऽपि तदतिरिक्ताऽऽस्यभवस्यैवाऽत्र सूत्रे ग्रहणान्न दोष इति ध्येयम् ।]

[ननु 'उदात्त[2]ादीनां सवर्णसंज्ञा न प्राप्नोति' इति भाष्यं त्वन्मते विरुध्येत, स्थानैक्याद् विवृतरूपप्रयत्नैक्याच्च । मम तु यत्किञ्चिदैक्येऽप्युदात्तादिरूपप्रयत्नभेदान्न प्राप्नोतीत्याशय इति चेत्, न, ऊर्ध्वभागाऽधोभागादिरूपस्थानभेदान्न प्राप्नोति । नहि तव कण्ठादित्वेनाऽत्र सूत्रे निर्देशः; किन्त्वास्यभवत्वेन । एवं चोदात्तादिजनकाऽऽस्यभवयोस्तुल्यत्वाऽभावादिति **प्रश्नाशयः** । 'अभेदका उदात्तादयः' इत्युत्तरभाष्य[3]ाशयस्तु—योगरूढ्या कण्ठादय एवाऽऽस्यभवत्वेन गृह्यन्ते, न तु तदवान्तरस्थानविशेषाः, (न[4]ासिकाया आस्यान्तर्गतत्वपक्षे नासिकाया इव) इति । अत एव शिक्षादौ स्थानप्रयत्नविवेके तेषामकथनम् । उदात्तादिशब्देनाऽपि जन्यजनकयोरभेदोपचारात् ते स्थानविशेषा उच्यन्ते । यद्वा, बाह्येष्वपरिगणितत्वादास्यान्तर्गतत्वाद् वर्णोत्प[5]त्त्यव्यवहितप्राग्भावित्वाच्च सूत्रे 'प्रयत्न'पदेनैषामपि ग्रहणं स्यात् ।

तथा च तत्सामर्थ्यादुदात्तत्वादिनाऽपि तुल्यत्वं विवक्षणीयमिति **पूर्वपक्षाशयः** । 'अभेदका उदात्तादयः' इति सिद्धान्तस्य च ते सवर्णसंज्ञाभेदकत्वेन न विवक्षिता इत्यर्थः । अनङ्गाद्युदात्तत्वेनोदात्तादिशब्देनाऽनुपात्तस्य न कार्याऽन्वयित्वमिति ज्ञापनादित्याशयः] । एवं च (न्य[6]ायभाष्यादिप्रामाण्येन यत्किञ्चित्स्थानतुल्यत्वे सवर्णसंज्ञेति स्थिते) **शिक्षादौ** चकारेण ञकारादीनपि संगृह्य तेषां नासिकास्थानमित्येव युक्तम् । (अनु[7]स्वारादौ स्थानत्वस्यैव क्लृप्तत्वाच्च) इत्यलं विस्तरेण ।

---

१. ग. नास्ति;　　२. ख. पाठः;　　३. 'उत्तराशयस्तु' ख. पाठः ।

४. ग. पाठः;　　५. 'त्पत्तिप्राग्भा' ख पाठः ।

६. क. नास्ति;　　७. क. नास्ति ।

सूत्रे 'प्र'शब्देन विलक्षणार्थबोधेऽपि, लोके यत्न-प्रयत्नशब्दयोः पर्यायत्वमिति ध्वनयन्नाह–**प्रयत्नो द्विधेति**। क्वचित्तु यत्नो द्विधेत्येव पाठः।

**चतुर्द्धेति**। यत्तु—

**स्वराणामूष्मणां चैव विवृतं करणं स्मृतम्।**
**तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च॥**

इति शिक्षावाक्याद्विवृततर-विवृततमप्रयत्नयोरपि प्रतीयमानत्वेन 'नाज्झलौ'(१।१।१०) इति सूत्रभाष्यादूष्मणामीषद्विवृतत्वस्य प्रतीयमानत्वेन च,'चतुर्धे'त्यसङ्गतम्। किञ्च, एवं सत्येङैचोः सावर्ण्यस्य प्रसक्तेरेवाऽभावेन, तदर्थं ज्ञापकाऽनुसरणमपि व्यर्थमिति। तन्न, नाज्झलाविति सूत्रवैयर्थ्याऽऽपत्त्या सूत्रकारेण विवृतत्वव्याप्यानामेषां सवर्णसंज्ञाऽनुपयुक्तबोधनात्। न चैवं संवृतकथनमधिकम्। 'अ अ' (८।४।६८) इति पाणिनीयशास्त्रविधेयत्वेन तत्कथनात्। यदि तु सूत्रवृत्त्यादिषु श्रद्धाजाड्यमपहाय, प्रयत्नभेदादेवैतद्व्यावर्त्यसावर्ण्यानां न सावर्ण्यमित्युच्यते, तदा सन्तु सप्त प्रयत्नाः। मास्तु च नाज्झलाविति सूत्रम्। (अत[1] एव 'तुल्यास्य'सूत्रे भाष्येऽवर्णस्यैचां च सावर्ण्यमाशङ्क्य, विवृततरत्वेनैव परिहृतम्)। एवञ्च एदैतोरोदौतोश्च न सावर्ण्यप्रसक्तिः, प्रयत्नभेदादित्य[2]लम्।

स्पृष्टादीनामाभ्यन्तरत्वं त्वोष्ठप्रभृति-काकलकपर्यन्तदेशरूपाऽऽस्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां स्पर्शेषत्स्पर्श-दूरावस्थान-समीपावस्थान-रूपाऽऽभ्यन्तरकार्यकारित्वाद् वर्णोत्पत्त्यव्य[3]वहितप्राग्भावित्वाच्च बोध्यम्।

तत्र बहूनामेकस्थानत्वेऽपि कस्यचिदुच्चारणे सम्यक् स्पर्शः, कस्यचिदीषदित्यनुभवं शिक्षाकारोक्तिं चाऽनुसृत्य विवेक्तव्यम्।

**स्पृष्टं प्रयतनमिति**—नपुंसके भावे ल्युट्। ल्युटा नङो बाधात्। नङन्तस्य पुंस्त्वाच्च। 'प्रयतनम्' इति क्वाचित्कोऽपपाठ इत्याहुः।

(**ईषत्स्पृष्ट[4]मिति**—अत्र स्पृष्टमीषत्स्पृष्टमिति विभागकथनसामर्थ्येन

---

१. ख. ग. पाठः। क. नास्ति; २. क. ग. पाठः। ख. नास्ति।
३. 'त्पत्तिप्राग्भावि' ख. पाठः; ४. क. ग. पाठः।

चवर्ग-यकारादीनां न सावर्ण्यम्। अन्यथा ईषच्छुक्लस्य शुक्लत्ववत्, ईषत्स्पृष्टस्यापि स्पृष्टत्वाऽनपायात् तद्दुर्वारं स्यात्)।

(न[1] च ह्रस्व-दीर्घानां कालविशेषपरिच्छेद्यतानियमाय कारणभेदोऽवश्यं वाच्यः। स च यत्नविशेषरूप एव। अन्यस्य निरूपयितुमशक्यत्वात्। स च वर्णोत्पत्तिप्राग्भावित्वादाभ्यन्तर एवेति तदकथनान्न्यूनता, ह्रस्व-दीर्घयोः सावर्ण्याऽनापत्तिश्चेति वाच्यम्। अइउण्सूत्रे भाष्ये कालभेदजनकप्रयत्नस्याऽऽस्यविशेषणेन सवर्णसञ्ज्ञासूत्रेऽग्रहणस्योक्तत्वेनाऽऽस्यबहिर्भूतत्वेन तेषां बाह्यत्वमित्याशयात्। अथ[2] यथाऽऽस्यबहिर्भूतत्वं तथा बाह्यप्रयत्ननिरूपणावसरे निरूपयिष्यते।)

**प्रक्रियेति**—तेन 'दण्डाऽऽढकम्' इत्यादौ दीर्घसिद्धिः। अन्यथा संवृताकारस्य विवृतेन आकारेण सावर्ण्याऽभावात् स न स्यादिति भावः।

**विवृतमेवेति**—प्रक्रियादशायां विवृतत्वं प्रतिज्ञेयमित्यर्थः।

न च 'विवृतकरणाः स्वरास्तेभ्य ए ओ, ताभ्यामप्यै औ, ताभ्यामप्याकारः, संवृतोऽकारः' इति शिक्षावाक्यादाकारस्य विवृततरत्वेनाऽकारस्य विवृतत्वप्रतिज्ञायामपि दीर्घेण सावर्ण्याऽसिद्धिः। तस्मादकारस्य विवृततरत्वं वक्तुं युक्तमिति वाच्यम्। स्वराणामूष्मणां चेति प्रागुक्त**पाणिनीयशिक्षा**बलात् 'अकारस्य विवृतोपदेशः कर्त्तव्य आकारग्रहणार्थः' इति 'अइउण्' सूत्रस्थभाष्यवार्तिकबलाच्च, दीर्घाऽऽकारेऽपि विवृतत्वस्यैव स्वीकारात्। प्रागुक्तशिक्षास्थं तु नैतच्छास्त्रीयप्रक्रियोपयोगि, पाणिनीयशिक्षाभाष्यवार्त्तिकविरोधादित्यवधेयम्।

**'अ अ'** (८।४।६८)–एकस्य विवृतत्वादपरस्य संवृतत्वात् सन्ध्यभावः। न चाऽत्रोद्देश्यस्य सवर्णग्राहकत्वाऽऽपत्त्या, आकारादीनामप्ययमादेशः स्यादिति वाच्यम्। [य[3]थोद्देशपक्षेऽस्याऽसिद्धत्वेनाऽत्र ग्रहणकशास्त्राऽप्रवृत्तेः। कार्यकालपक्षे तु—] 'तपरनिर्देशात् सिद्धम्' इति भाष्य एव समाहितत्वात्।

---

१. क. पाठः; २. 'अस्य यथाऽऽस्य' क्वाचित्कः पाठः; ३. क. नास्ति।

एतेन 'अनुनासिकाऽकारादीनां स्थानेऽननुनासिक एवोच्चारितगुणकः स्यात्' इति परास्तम् । 'अद' इति न्यासे तात्परत्वेन विधेयेनाऽपि तत्कालसवर्ण-ग्रहणात्, षण्णामेकशेषनिर्देशाद् वा सिद्धमिति बोध्यम् ।

**पूर्वत्रासिद्धम्** (८।२।१)—अस्य विधित्वे त्रिपाद्यां परस्य पूर्वं प्रत्यसिद्धत्वा-नापत्तिः । (तथा[1] च छान्दसे गोधुङ्मानित्यादौ घत्वे कृते, परत्वाज्जश्त्वे कृते, वैकल्पिकत्वात् परसवर्णाऽभावे 'झयः' (८।२।१०) इति वत्वाऽऽपत्तिः' भष्भावाऽनापत्तिश्च । परसवर्णपक्षे तु भष्भावाऽनापत्तिरेव बोध्या) । [त[2]था च छान्दसे—'गोधुङ्मान्', 'गुडलिण्मान्' इत्यादौ घ(त्व)ढत्वयोः कृतयोः 'झयः' (८।२।१०) इति वत्वाऽऽपत्तिः । न च वन्वात् परत्वात् 'प्रत्यये भाषा-याम्' (८।५।४५) इत्यनुनासिके, झयोऽसत्त्वात्कथं वन्वाऽऽपादनम् । 'झयः' इति सूत्रन्तु कुमुद्वानित्यादौ चरितार्थमिति वाच्यम् । अनुनासिकस्य बहिरङ्गत्वेनाऽसिद्धत्वात् । ढत्वादिकन्तु प्रकृतिप्रत्ययोभयापेक्ष-वत्वाऽपेक्ष-याऽन्तरङ्गमेव । किञ्च, वैदिकेषु गुडलिड्मानित्यादिषु वत्वापत्तिः । तेषु ह्यनुनासिको वैकल्पिकः । किञ्च, गोधुङ्मानित्यादौ जस्त्वादौ परत्वात् कृते, भष्भावाऽनापत्तिः] ।

न चाऽतिदेशा[3]न्तरवदस्यापि त्रिपाद्यां प्रवृत्तिः स्यात् । सपादसप्ताध्या-य्यामपि पूर्वं प्रति पराऽसिद्धत्वाऽऽपत्तेः । मध्ये पाठस्य, (विप्र[4]तिषेधसूत्रस्य च) सामर्थ्याऽऽश्रयणे तु (विनिगमनाविरहा-)त्त्रिपाद्यामप्यप्रवृत्तिः स्या-दित्याशयेनाह—**अधिकार इति**। अत एव 'श्चुत्वं धुटि सिद्धं वाच्यम्' इत्यादिकं चरितार्थम् । एवं च यत्राऽनुवृत्तिस्तस्याऽसिद्धत्वम् । (पू[5]र्वशब्देन तूपस्थितत्वाऽविशेषात् सर्वस्यैव ग्रहणम्) ।

पूर्वत्वं च क्वचित् सपादसप्ताध्याय्याः, क्वचित् सूत्राऽन्तरसहितायाः ।

तत्राऽयमर्थः—'हो ढः' (८।२।३१) इत्यादावस्योपस्थितौ वाक्यभेदे-नाऽन्वयः—'हस्य ढो भवति, इदं च शास्त्रं पूर्वत्राऽसिद्धम्' इति । अत एव 'न मु ने' (८।२।३) इत्यादिभिस्तन्निषेध उपपद्यते ।

---

१. क. पाठः । ख. पाठापेक्षयाऽयमेव युक्तः; २. ख. पाठः । क. ग. नास्ति ।
३. 'न चाऽन्यविधिवत् त्रिपाद्यामप्यस्य' ख. पाठः; ४. ख. नास्ति ।
५. क. नास्ति ।

(केचि[1]त्तु असिद्धपदस्याऽसिद्धशास्त्रके लक्षणया 'पूर्वत्राऽसिद्धशास्त्रको हस्य ढः' इत्येकवाक्यतयैवाऽन्वयः । 'न मु ने' (८।२।३) इत्यस्यापि नाभावतन्निमित्तकशास्त्रातिरिक्ते पूर्वत्राऽसिद्धशास्त्रकं मुत्वमित्येकवाक्यतयैवान्वय इत्याहुः) ।

**शास्त्रमिति**—न तु कार्यमिति भावः । **असिद्धमिति**–सिद्धम्=निष्पन्नम् । प्रवृत्तमिति यावत् । 'सिद्धश्च प्रत्ययविधौ' इत्यादौ तथा दर्शनात् । तद्भिन्नम् **असिद्धम्**=अनिष्पन्नम् । अप्रवृत्तमिति यावत् । यद्यपि लोकेऽनाहार्यनिश्चयस्यैव प्रवर्त्तकत्वं दृष्टम्, तथापीह शास्त्रप्रामाण्यादाहार्याऽऽरोपोऽपि शास्त्रप्रवृ्तावप्रवृत्तौ च नियामक इति बोध्यम् । न च विद्यमानेऽपि शास्त्रे, जातेऽपि कार्ये, शास्त्रप्रामाण्यात् कार्यमात्रेऽभावारोपोऽस्त्विति वा[2]च्यम् । सिद्धेऽसिद्धत्वाऽऽरोपात् सूत्रोदाहरणसंपत्तये परत्वाल्लक्ष्ये कार्यप्रवृत्तेरावश्यकतया, जाते कार्येऽभावप्रतियोगित्वाऽऽरोपेऽपि, देवदत्तहन्तृहतन्यायेन स्थानिभूतर्वादेरभावात् 'हशि च' (६।१।१४१) इत्यप्राप्तौ, मनोरथाऽसिद्धेः ।

न च 'तौ सत्' (३।२।१२७) इत्यादिनिर्देशैः देवदत्तहन्तृहतन्यायस्यानित्यत्वादेतत्प्रयोगसिद्धिरिति वाच्यम् । 'हते देवदत्ते, तद्धन्तरि हतेऽपि नोन्मज्जनं देवदत्तस्य । हतत्वारोपे तु सुतराम् । हन्तुमुद्यतस्य हनने तूज्जीवनमस्त्येव' इति तन्न्यायशरीरम् । 'तौ' इत्यादौ वृद्धिहन्तुः पूर्वसवर्णस्य हननोद्यमसजातीयं प्रसङ्गमात्रम्, न तु हननस्थानीयं लक्ष्ये प्रवर्त्तनमिति न तत्राऽस्य न्यायस्य विषय इति, कथं तेनाऽस्याऽनित्यत्वं बोधनीयम् । (ध्वनितं चेदं 'स्वादिष्वसर्वनामस्थाने' (१।४।१७) इति सूत्रे कैयटे ।)

प्रकृते तु निरधिष्ठानाऽऽरोपाऽसम्भवेन हननसजातीयं कार्यप्रवर्त्तनमावश्यकमेव । अत एव 'यच्छास्त्रमुच्चारितं तस्याऽसिद्धत्वमशक्यं कर्त्तुमित्य-

---

१. क. ग. पाठः । क. पुस्तके तु कुण्डलितः ।

२. 'इति वाच्यम्, सूत्रपाठे कार्याऽपाठात् । पूर्वशास्त्रविहितत्वादिरूपपूर्वत्वाद्याश्रयणे तु लक्षणापत्तिः । किञ्च, सिद्धेऽसिद्धत्वारोपात्' ख. पाठः ।

३. क. पाठः ।

सिद्धवचनाऽतिदेश आश्रीयते' इति **कैयटः**। अतिदेशश्चाऽऽरोप एव।

एतेन 'कार्याऽसिद्धत्वेऽपि 'मनोरथः' इत्यत्रोत्वे कर्त्तव्ये रलोपस्य पूर्वमेवाऽप्रवृत्तौ रोरुत्वस्याऽप्रतीघातान्मनोरथसिद्धिरप्रत्यूहा' इति परास्तम्। स्पष्टं चेदं प्रकृतसूत्रे 'अचः परस्मिन्' (१।१।५७) इति सूत्रे, 'षत्वतुकोः' (६।१।८६) इति च सूत्रे भाष्ये।

ननु मनोरथे दर्शनाऽभावरूपलोपेऽभावाऽऽरोपस्य दर्शनाऽऽरोपरूपत्वेन[1] न दोषः। अभावाऽभावस्य प्रतियोगिरूपत्वात्। (किञ्चोक्तरीत्योत्वस्य नित्यत्वमपि सुवचम्। 'ढ्रलोपे' (६।३।१११) इति दीर्घे तदप्राप्तावपि, 'यस्य च लक्षणाऽन्तरेण निमित्तं विहन्यते न तदनित्यम्' इत्युक्तेरदोषात्) इति चेत्। एवं तर्हि 'अमू' इत्यादावद अ औ इत्यस्यामवस्थायाम्, मुत्वे कृते, जातस्योत्वस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वेऽपि, पूर्वरीत्याऽकाराऽभावेन पररूपा[3]द्यनापत्तिः।

न च 'न मु टादेशे' इति वार्तिकेन, टायां परत आदेशेऽसिद्धत्वनिषेधसामर्थ्यादितद्विषये पूर्वोक्तन्यायाऽप्रवृत्तिरिति वाच्यम्। शास्त्राऽसिद्धत्वपक्षस्यैव ज्ञापयितुं युक्तत्वात्। एवं शीभावात् पूर्वमदसोसेरिति मुत्वे, शीभावाऽभावे, दात् परैकाराऽभावेनैन ईदिति सूत्रं व्यर्थमिति, तदपि शास्त्राऽसिद्धत्वे ज्ञापकं बोध्यम्।

**केचित्तु**—'अमू' इत्यादौ वैतण्डिक[4]तया वृद्ध्या[5]द्यङ्गीकारेऽपि 'लक्ष्ये लक्षणस्य' इति न्यायाद् दस्य विकाराऽभावेन, सन्नियोगशिष्टन्यायाद् दात्परत्वाभावाच्च पुनरुत्वाऽप्रवृत्त्याऽमू इत्याद्यसिद्धिरित्याहुः]।

तत्र वृद्ध्या उकाराऽपहारे, सन्नियोगशिष्टन्यायादेव मस्याऽपि निवृत्तौ, दात् परत्वमस्त्येव। लक्ष[6]भेदाच्च 'लक्ष्ये लक्षणस्य' इति न्यायस्याऽप्यविषय इति चिन्त्यम्। ('अद[7]सोमेः' (८।२।८०) इति सूत्रे समाहारद्वन्द्वनिर्देशे

१. 'दर्शनरूपत्वेन' ख पाठ; २. क. कुण्डलितः।
३. 'वृद्ध्याद्यनापत्तिः' ख. पाठः; ४. क. ग. पाठः।
५. 'अमू' 'इत्यादौ वृद्ध्यादावपि' ख. पाठः।
६. 'विधेयभेदाच्च' ख. पाठः; ७, ख. पाठः।

लक्षणभेदस्य स्पष्टत्वात् ।) अधिकम् 'कृन्मेजन्तः'[1] (१।१।३९) सूत्रे भाष्यप्रदीपोद्द्योते द्रष्टव्यम् ।

शास्त्राऽसिद्धत्वाऽङ्गीकारे यत्राऽप्यन्तरङ्गत्वात् पूर्वमेव त्रैपादिकं प्रवृत्तम्, तत्राऽपि[2] तत्तच्छास्त्र एवाऽभावप्रतियोगित्वाऽऽरोपेण तन्निवृत्तिबुद्धेरभावः, आदेशबुद्ध्यभावः, लक्ष्ये जातत्वबुद्ध्यभावश्चेति न किञ्चिदवद्यम् ।

जायमानकार्यं तु स्थानिबुद्ध्याऽऽदेश एव प्रवर्त्तते । 'न हि रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयति' इति न्यायात् । स्पष्टं चेदं 'द्विर्वचनेऽचि' (१।१।५९) इति भाष्ये । यत्र तु सह प्रसङ्गस्तत्राऽप्रवृत्तिरेव, अभावाऽऽरोपात् ।

न च कार्याऽसिद्धत्वे नाऽयमतिदेशः । किं तर्हि ? कार्यस्याऽसिद्धत्वम्=अनिष्पन्नत्वम् अनेन[3] प्रतिपाद्यते । तत्र निष्पन्नस्याऽनिष्पन्नताया वचनशतेनाऽपि कर्त्तुमशक्यतया, (पूर्वम्)[4] अप्रवृत्तिरेव प्रतिपाद्यत इति न दोष इति वाच्यम्[5] । किमनेन पूर्वशास्त्रप्राप्तौ पराऽप्रवृत्तिः, उत तद्विषयसम्भावनायाम् ? नाद्यः, 'नलोपः सुप्' (८।२।२) इति सूत्राऽसङ्गतेः । तद्धि नियमार्थम् । त्वद्रीत्या हि 'राजाश्वः' इत्यादौ 'राजन्-अश्व' इत्यस्यां दशायां कस्यापि पूर्वशास्त्रस्याऽप्राप्त्या एतन्निषेधाऽप्रवृत्तौ, नलोपे जाते, भुक्तवन्तमित्यादिन्यायेन (पुनः)[4] एतदप्रवृत्तौ, दीर्घसिद्ध्या, नियमाऽनुपयोगात् । राजभ्यामित्यादावप्युक्तरीत्या दीर्घापत्तेश्च । नाऽन्त्यः, राजभ्यामित्यादौ

---

१. 'इति सूत्रे ख. पाठः;　　२. 'अपि.' क. ख. नास्ति ।

३. ख. ग. नास्ति;　　४. क. ग नास्ति ।

५. इतोऽग्रे, राजन्-भ्यामिति स्थिते कस्यापि सपादसप्ताध्यायीस्थस्याऽप्रवृत्त्या, एतदप्रवृत्तौ, नलोपे जाते, प्राप्तदीर्घस्याऽनेन वारणाऽनापत्तेः ।
　　एवं 'हर इहे'त्यादौ यलोपे गुणस्याऽसिद्धत्वेनाऽभावाऽनापत्तेः । एतेन 'पूर्वत्र ने'त्येव सूत्रणीयम् । 'नलोपः सु'बिति सूत्रं तु पूर्वविषये परनिषेध इत्यर्थबोधनद्वारा, 'राजाऽश्व' इत्यादौ नलोपे दीर्घविषयस्य सम्भावितत्वेन तत्र निषेधाऽभावाय स्या'दित्यपास्तम् । 'राजभ्या'-

राजाश्ववन्नलोपे, सुब्विधिदीर्घविषयसम्भावनया सर्वथा नलोपाऽनापत्तेः। एतेन 'पूर्वत्र न' इत्येव सूत्रणीयम् इत्यपास्तम्।

न चैवमपि अविद्य[1]मानवत्पदानुवृत्त्यैव सिद्धेः 'असिद्ध'ग्रहणं व्यर्थमिति वाच्यम्। शास्त्रस्याऽविद्यमानवत्त्वेऽपि राजभ्यामित्यादौ कृतस्य कार्यस्याविद्यमानत्वबुद्धेर्दुरुपपादतया, दीर्घाऽऽपत्तेस्तदवस्थत्वात्। यदि निमित्तकारणविद्यमानत्वं कार्यविद्यमानत्वे नियामकं स्यात्, स्यादपि तथा। न चैवम्, कु[2]लालादेरविद्यमानत्वेऽपि घटसत्तादर्शनात्। शास्त्रं तु युगपत्प्राप्तिके चरितार्थम्। 'नलोप[3]ः सुप्' (८।२।२) इति सूत्रं चाऽसं[4]ङ्गतं स्यात्।

असिद्धत्वे तु कारणेऽनुत्पन्नत्वबुद्ध्या भवत्येव कार्येऽनुत्पन्नत्वबुद्धिः। कारणाऽनुत्पत्तौ कार्याऽनुत्पत्तेर्लोकसिद्धत्वादित्यलम्।

**बाह्यप्रयत्न इति**—काकलकाऽधस्ताद् गलविवरसंकोच-विकास-श्वासोत्पत्ति-ध्वनिविशेषरूपनाद-तद्विशेषरूपघोषा-ऽल्पघोष-प्राणाल्पत्वमहत्त्व-रूप—बहिर्भूतकार्यकरत्वेन, वर्णोत्पत्त्यनन्तरभावित्वेन चाऽऽस्य—बाह्यदेशस्थत्वेन च बाह्यत्वं विवारादीनाम्। 'नाभिप्रदेशात् प्रेरितो वायुः प्राणाख्य ऊर्ध्वमाक्रामन्, (तत्तत्स्थानान्याहत्य, ध्वनीनभिव्यज्य, तत्काल

---

मित्यादौ सर्वथा नलोपाऽनापत्तेः। 'पूर्वत्र कर्त्तव्ये एव निषेधः, कृते तु न निषेधः' इत्यर्थेऽपि प्रागुक्तरीत्या 'राजभ्या'मित्याद्यसिद्धिः। 'नलोपः सुबि'ति सूत्राऽसङ्गतिश्च' ख. पाठः। क. नास्ति।

१. 'एतेनाऽविद्यमानवत्पदाऽनुवृत्त्यैव सिद्धेरसिद्धग्रहणं व्यर्थमित्यपास्तम्। कार्यस्याऽविद्यमानवत्त्वे मनोरथाऽसिद्धेः। शास्त्राऽविद्यमानवत्त्वे तु कृतकार्यस्य शास्त्रस्य बुद्धेरतीतयाऽविद्यमानत्वेन तद्बुद्धावाप्रवृत्तौ 'राजभ्या'-मित्याद्यसिद्धेः। किञ्च, शास्त्रस्याऽविद्यमानवत्त्वेऽपि कृतकार्यस्याऽविद्यमानत्वबुद्धिर्दुरुपपादा। यदि निमित्तकारणविद्यमानत्वं–' ख. पाठः।

२. 'दण्डादेरविद्यमान' ख. पाठः, ३. क, ग. पाठः।

४. 'नलोपः सुबिति सूत्रमपि प्रागुक्तरीत्यैवाऽचरितार्थं स्यात्' ख पाठः।

एव स्पृष्टतादीनुत्पाद्य[1]) मूर्ध्नि प्रतिहतः=निवृत्तः सन्, वर्णानभिव्यज्य, (तदभिव्यक्तिकाले[2] वा), यत्नविशेषसहायेन गलविवरादीनां विकासादीन् करोति' इति सिद्धान्तात्। अत एव—

**आत्मा बुद्ध्या समेत्याऽर्थान् मनो युङ्क्ते विवक्षया।**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥**
**सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।**
**वर्णान् जनयते··· ··· ··· ॥**

**इति शिक्षया न विरोधः।** ([3]अर्थान् बुद्ध्या समेत्य=विषयीकृत्येत्यर्थः)। **ये तु** 'वर्णोत्पत्त्यनन्तरं मूर्ध्नि प्रतिहतः=निवृत्तः' इति वदन्ति, तेषां **शिक्षा**विरोधः स्पष्ट एव।

([3]अत्रेदं बोध्यम्—'शब्दप्रयोगेच्छयोत्पन्नयत्नान्नाभिदेशात् प्रेरितो वायुर्वेगान्मूर्द्धपर्यन्तं गतस्ततः प्रतिनिवृत्तो यत्नविशेषसहायेन तत्तत्स्थानेषु जिह्वाग्रादिपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति। ततो यत्नविशेषेण परावृत्तिसमये गलविवरादीनां विकासादीन् करोति। तत्र ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वात् 'आस्ये प्रयत्नाः' इत्युच्यन्ते, 'आभ्यन्तराः' इति च। गलविवरादिविकासादिकराश्चाऽऽस्यबहिर्भूतदेशे कार्यकरत्वात् 'बाह्याः' इति। मात्राकालिकत्वादि-(रूपं[4] ह्रस्वत्वादि)कन्तु वाय्वल्पत्व-महत्त्वकृतमिति। 'नाभिप्रदेशात् प्रेरकयत्न एव कश्चिद् विलक्षणोऽल्पं वायुं प्रेरयति, कश्चिदधिकमिति तस्य यत्नस्य वायुप्रेरणारूपं कार्यमास्यबाह्यदेशमिति सोऽपि बाह्य एव' इति दिक्)।

एतेन[6] 'नाऽऽस्याद् बाह्यदेशे यत्नोत्पत्तिर्मानाऽभावात्। बाह्यत्वं तु वर्णोत्पत्त्यनन्तरभावित्वमात्रेण' इति पर[7]ास्तम्। 'आस्ये तुल्यदेशप्रयत्नम्' वार्त्तिके इति 'आस्येन प्रयत्नविशेषणाद् बाह्यप्रयत्नव्यावृत्तिः' इति भाष्यविरोधा-

---

१. क. ग. नास्ति; २. ख पाठः; ३. ख. नास्ति; ४. क. ग. पाठः। ५. ग. नास्ति। क. पाठः; ६. 'यत्तु' ख. पाठः; ७. 'तन्न' ख. पाठः।

पत्तेः। (ह्रस्वत्वादीनां बाह्यत्वाऽनापत्तेश्च)। उदात्तादीनां यद्यपि प्रागुक्तरीत्याऽऽभ्यन्तरत्वमेव, तथापि ('उदात्तादीनां सवर्णसंज्ञा न प्राप्नोति, अभेदका उदात्तादयः' इति) पूर्वोदाहृतभाष्येण सवर्णसंज्ञाऽनुपयुक्तत्वबोधनात्। आन्तरतम्यपरीक्षोपयोगित्वेन तत्र तत्र दर्शयिष्यमाणत्वाच्च। वृद्धिसूत्रशेषे गुणत्वेन व्यवहाराच्च। तेनैव सादृश्येन बाह्येषु गणनमिति बोध्यम्।

इदं चाऽऽनुनासिक्यस्य, ह्रस्वत्वादेश्चोपलक्षणम्।

**शर इति**—आक्षरसमाम्नायिकाः शषसाः। अत एव यम-विसर्गादीनां पृथग् ग्रहः। अत एवाऽनुस्वारस्य श्वासाऽघोषविवारा नेत्याहुः।

**श्वासानुप्रदानाः**–(अनु=पश्चात् प्रदीयते=उत्पद्यते इत्यनुप्रदानो 'बाह्य-' प्रयत्नः) तत्प्रयत्नकाः।

**विवृण्वते कण्ठमिति**—तदभिव्यक्त्युत्तरं जायमाने कण्ठविवरविकासे तेषां कर्त्तृत्वविवक्षा बोध्या। विवार एषां प्रयत्न इत्यर्थः।

**अन्ये** त्विति—वर्गतृतीय-चतुर्थ-पञ्चकास्तद्यमाः, हकाराऽनुस्वारौ यरलवा इत्यर्थः।

**नादभागिनः**—तत्प्रयत्नकाः। यद्यपि खयादिषु घोषाऽघोषान्यतरप्रयत्नमात्रेणाऽपि प्रक्रियांशनिर्वाहस्तथाऽपि शिक्षाद्यनुरोधेनाऽन्येषामुक्तिरिति बोध्यम्।

**वर्गयमगा इति**—वर्गगा यमगाश्चेत्यर्थः। **अल्पाऽसवः**=अल्पप्राणाः। (यत एतदुच्चारणोत्तरं प्राणानामल्पत्वमिव भवति)।

**वर्गेष्विति**—विद्यमानानामिति शेषः। **चतुर्णामिति**—निर्धारणे षष्ठी। 'अन्यतमात्' इति शेषः। एतेन 'पर'शब्दयोगे 'चतुर्भ्य इति पञ्चम्युचिता' इत्यपास्तम्।

**मध्ये पूर्वसदृश इति**—सादृश्यं च प्रयत्नैक्येन। एवं च 'वर्गपञ्चमयुक्ताः प्रथमादयो यमाः' इति **विवरणकारो**क्तिरसङ्गतेति भावः।

अत एव यमानामयोगवाहेषु गणनं भाष्यकृतः सङ्गच्छते। **परस**दृशास्तु

---

१. क. ग. पाठः; २. क. पाठः। ख. ग. नास्ति।

३. 'इति भाष्येण' क. पाठः; ४. 'चानुनासिक्यस्याप्युप' ख. पाठः।

न, अनुभवविरोधात्। 'चत्वारश्च यमाः स्मृताः' इति **पाणिनिशिक्षोक्त**-सङ्ख्याविरोधाच्च। प्रथम-द्वितीय-तृतीय-चतुर्थ-यमत्वेन हि 'चत्वारः' इत्युक्तम्। अयं च वेद एव। तदाह—**प्रातिशाख्ये प्रसिद्ध** इति। (एतेन—'तद्नमनम्' इत्यादौ यमेन व्यवधानात् 'यरोऽनुनासिके' (८।४।४५) इति न प्रवर्त्तेत' इत्यपास्तम्। अखण्डपद एव यमोत्पत्तेर्न दोष इत्याहुः।

**अन्येषां त्विति**—अचाम्, उक्तान्यहलां चेत्यर्थः। **स्पष्टमिदं संहिता-संज्ञासूत्रे भाष्ये**।

**यरलवाश्चेति**—चकारेणाऽचामपि ग्रहणं बोध्यम्। 'सुपां सुलुक्' (७।१।३९) इति सूत्रे 'इकारस्याऽऽन्तर्यतो दकारो भवति' इति भाष्यात्। (अस्मादेव भाष्याद् घोषसंवारनादत्वमचाम्। अन्यथा त-दौ पर्यायेण स्याताम्। अल्पप्राणत्वाऽनङ्गीकारे द-धौ पर्यायेण स्याताम्। अत एव 'सर्वे स्वरा घोषवन्तः' इति छान्दोग्योपनिषद्युक्तम्)। **अन्ये** इति। द्वितीय-चतुर्थौ, तद्यमौ, शषसहा अयोगवाहाश्चेत्यर्थः। जिह्वामूलीयादीनां स्थानादिविवेकस्तु स्वरूपनिर्णयाय, न तु सावर्ण्यादावुपयोगीति बोध्यम्।

**अनुपयुक्ता** इति—'तुल्यास्य' (१।१।९) सूत्रे 'प्र'शब्दस्य ग्रहणादित्यर्थः। उपयुक्तत्वे हि श-छयोरपि सावर्ण्यं स्यादिति भावः।

**परीक्षायामि**ति—सा च 'घोषवतो नादवतः' इत्यादिना तत्र तत्र स्फुटीभविष्यति।

**कादय** इति–'अनन्त्यश्च भवेत् पूर्वो ह्यन्त्यश्च परतो यदि' इत्यादिप्रातिशाख्य-'त्रिभिश्च मध्यमैर्वर्गैः' इति भाष्यादिपर्यालोचनया, 'क–ख–ग–घ-ङ' इत्यादीनामप्यनादित्वाऽनुमानात्। मातृकामन्त्रे तथैव पाठाच्च। एतेन 'चतुर्दशसूत्र्यां ञादिपावसानत्वेन कादि-मावसानत्वाऽयोगादिदं चिन्त्यम्' इत्यपास्तम्। लोकप्रसिद्धपाठाऽपेक्षत्वात्।

**स्पर्शा** इति—तत्संज्ञका इत्यर्थः। 'अन्तस्था'शब्द आदन्तः।

**शषसहा ऊष्माण** इति—तमब्ग्रहणाद्ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः—'वाग्घसति', अन्यथा सोष्मणः सोष्माण इति द्वितीयाः, नादवतो

---

१. क. ग. नास्ति; २. 'ह्रस्वाऽचामपि' ख. पाठ; ३. क. ग. पाठः।

नादवन्त इति चतुर्थाः प्रसज्येरन्निति 'स्थानेऽन्तरतमः' (१।१।५०) इति सूत्रस्थभाष्यप्रामाण्याद् द्वितीयचतुर्थयोरप्यूष्मत्वं बोध्यम् ।

(तेन[1] 'विवृतमूष्मणाम्' इत्यनेन तेषामपि विवृतत्वं स्पर्शत्वात् स्पृष्टत्वं च । एवं च द्वितीयचतुर्थयोराभ्यन्तरप्रयत्नद्वयं बोध्यम् । विनिगमनाविरहात् । अतोऽपि यावत्प्रयत्नैक्यविवक्षा न युक्ता । आद्येन द्वितीयचतुर्थयोः सावर्ण्याऽभावप्रसङ्गादित्याहुः ।[1] **कश्चित्तु**—) एवं तयोरूष्मत्वेऽपि 'विवृतमूष्मणाम्' इत्यत्र शषसहा एव[2] गृह्यन्ते । तयोः 'स्पृष्टं प्रयतनम्', इत्यत्र ग्रहात्[3] । (इत्याह) । (तथा च शिक्षा—

**'स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् ।**
**अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः ॥**
**शेषाः स्पृष्टा हलः प्रोक्ता ………………………'॥ इति ।**

'नेमशब्दोऽर्द्धे । तेन विवृता इत्यर्थः' इति तद्विवरणकृतः । एतन्मूलकं भाष्ये ईषद्विवृतत्वमूष्मणामुक्तम्) ।

**अचः स्वरा** इति—स्वरशब्दवाच्या इत्यर्थः । 'उदात्तादिभिः (स्वै[4]रैः) स्वयमेव राजन्ते' इति व्युत्पत्तेः स्वपूर्वाद्राजतेर्बाहुलकादौणादिको डः । स्पष्टं चेदम् 'उच्चैरुदात्तः' (१।२।२९) इत्यत्र भाष्ये । तद्धर्मत्वादुदात्तत्वादयोऽपि 'स्वर'शब्देन व्यवह्रियन्ते ।

**ᳵक ᳵपा भ्यामिति**—खफयोरप्युपलक्षणम् ।

**प्रागर्द्धविसर्गेति**—(ऊ[5]र्ध्वाधोऽवस्थितवृत्तद्वयात्मिका लिपिर्विसर्गस्य । अर्धवृत्तद्वयात्मिका चानयोरिति सादृश्यं लेखने बोध्यम् । ये तूच्चारणेऽप्यर्द्धविसर्गसादृश्यं वदन्ति, तेषामेतौ पादमात्रिकौ बोध्यौ ।) (सादृ[6]श्यमुच्चारणे, लेखने च बोध्यम्) ।

अं अः, इत्युपलक्षणमिकारादेः । तदेव ध्वनयन्नाह—**अचःपराविति** । अत एव 'मोऽनुस्वारः' (८।३।२३) इति सूत्रेऽनुस्वारग्रहणं चरितार्थम् ।

---

१. क. ग. नास्ति; २. ख. पाठः ।
३. क. ग. पाठः, ख. नास्ति; ४. क. ग. नास्ति ।
५. क. ग. पाठः; ६. ख. पाठः ।

अन्यथा 'कुप्वोः ≍क≍पौ च' इतिवत् 'मो अं' 'मो अं' इति वदेत्[1]। तद्धि 'स्वर एव स्वारस्यमनुगतः' इति व्युत्पत्त्याऽचः परत्वबोधनार्थम्। तथा च शिक्षा—

**अनुस्वारो विसर्गश्च≍क≍पौ चापि पराश्रितौ ॥ इति ।**
**अलाबुवीणानिर्घोषो दन्त्यमूल्यस्वराननु ।**
**अनुस्वारस्तु कर्त्तव्यो नित्यं ह्रोः शषसेषु च ॥ इति ।**

अचः परत्वं चाऽविकृताऽनुस्वारस्यैव । अत एव 'बर्हूंञ्जि' इत्यादौ न दोषः । 'नपुंसकस्य झलचः' (७।१।७२) इति सूत्रस्थभाष्यं तु हलः परमप्यनुस्वाराऽऽपादकं पूर्वपक्षस्थत्वान्नाऽर्थसाधकम् ।

**ऋऌवर्णयोरिति—**(वा० ८।२।१)—आ च आ च रलौ, तयोर्वर्णयोरिति विग्रहः । (ऋ ऌ[2] औ इति स्थिते 'ऋत्यकः' (६।१।१२८) इति प्रकृतिभावेन दीर्घाऽभावे, ऌकारस्य ('ऋतोऽङि' (७।३।११०) इति गुणे यणि रलावित्यस्य सिद्धिर्बोध्या ।)

[न[3]नु 'ऋ ऌ औ' इति स्थिते वैकल्पिकत्वात् (प्रकृतिभावाऽभा[4]वोऽस्तु । यद्वा गुणे ऋकाररूपनिमित्तविनाशेनाऽकृतव्यूहपरिभाषया तदभावोऽस्तु । नाऽचः परस्मिन्निति स्थानिवत्त्वम् । अस्य स्थानिवत्त्वस्य प्रकृतिभावप्रवृत्तिद्वारा, पदान्तभूतऋकारस्थानिकयणादेशप्रतिबन्धकतया, साक्षात् परम्परया वा पदान्तविधिप्रतिबन्धकस्थानिवत्त्वस्य 'न पदान्त' (१।१।५८) इति निषेध इत्यर्थस्य वक्ष्यमाणतया स्थानिवत्त्वनिषेधात् । एवं–) प्रकृतिभावाऽभावेऽपि,] अन्तरङ्गत्वात् सवर्णदीर्घे, यणि 'रौ' इत्यापत्तिरिति चेन्न, अकृतव्यूहपरिभाषया सवर्णदीर्घाऽप्राप्तेः । अग्रे यण्प्रवृत्त्या सवर्णाऽच्त्वरूपनिमित्तस्य विनाशात्, सौत्थितिवत् ।

एवं च सवर्णदीर्घाऽभावे, 'ऋतो ङि' (७।३।११०) इति ऌकारस्य गुणे, ऋकारस्य यणि च सिद्धम्—**रला**विति । यद्वा—'वार्णादाङ्ग'परिभाषया दीर्घं बाधित्वा गुणः । न च युगपत्प्राप्तिविष[5]य एव स न्यायः, मानाऽभावात् ।

---

१. 'मकारस्य स्थाने 'अं' इत्यनुस्वार आदेशः स्यादित्यर्थः ।
२. क. पाठः;                ३. क. नास्ति । क. पाठस्थानेऽयं ख. ग. पाठः ।
४. ग. नास्ति;                ५. 'प्राप्त्यादिविषये' ख. पाठ ।

अत एव लावस्थायामडिति पक्षे (वृद्धिं बाधित्वा इयङादेशे) 'अध्यैयाताम्' इत्यादिसिद्धिः। अन्यथाऽन्तरङ्गत्वादाटश्चेति वृद्धावायादेशे 'अध्यायाताम्' इत्यापत्तिः। (एतेन[1] 'एकनिमित्तक एव स न्यायः' इत्यपास्तम्। अत एव 'प्रत्ययः' (३।१।१) इत्यादि निर्देशाः सङ्गच्छन्ते)।

यत्र त्वप्रवृत्तिरिष्टा, तदर्थमनित्यत्वमाश्रयणीयम्। ओसि तु ऋऌो-रित्येव, न तु रलोरिति। क्वचित् तथा दृश्यमानप्रयोगस्त्वागन्तुनाऽका-रेणोपपाद्यः[2] ('प्रयुक्तानां[3] शास्त्रेणाऽन्वाख्यानात्। ईदृशानां प्रयुक्तत्वे, साधुत्वे च मानं चिन्त्यमिति परे)। 'ऋऌवर्णयोः' [वा० ८।२।१] इत्यत्र तु न दीर्घः। 'ऋत्यकः' (६।१।१२८) इति प्रकृतिभावात्[4]]। न च क्लृ३प्त-शिखेत्यादौ 'अनृतः' (८।२।८६) इति निषेधात् प्लुताऽनापत्तिः, ऋऌगिति वर्णोपदेशे पृथग्वर्णद्वयोच्चारणेन सावर्ण्याऽनित्यत्वस्य[5], (क्वचित् परस्पराऽ-ग्राह[6]कत्वस्य वा] कल्पनात्।

न च 'अऋृतः' इति न्यासः कार्यः। 'र्युक्तो ऋत्–ऋृदिति मध्यमपद-लोपिसमासः। रेफयुक्तऋृकारभिन्नस्येत्यर्थात् क्लृ३प्तेत्यादौ निषेधाऽप्राप्त्या, वर्णोपदेशे ऌकारो व्यर्थः। 'रषाभ्यां नो णः' इत्यादिभाष्यस्याऽप्यत्रैव तात्पर्यम्। अच्त्वं तु सावर्ण्यात् सिद्धमिति वाच्यम्। सूत्रभङ्गम्, विषयबाहुल्यकृतज्ञान-गौरवं चाश्रित्यैकऌकारप्रत्याख्याने लाघवाऽभावात्। मम[7] तु फलमुखत्वा-दनित्यतादिकल्पनागौरवं न दोषाय[8]।

ननु 'न हि वार्त्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्तिः' इति 'तृतीया च होश्छ-न्दसि' (२।३।३) इति सूत्रस्थभाष्योक्तन्यायेनाऽत्रत्यज्ञापकपरा ग्रन्था असङ्गता इति चेन्न, [एषामनादित्वेन, शिवसूत्रत्वेन वा सूत्रकृद्वक्ष्यमाणार्थविषयक-

१. क. ग. पाठः; २. 'बोध्यः' ख. पाठः; ३. क. पाठः।
४. क. कुण्डलितः पाठोऽयम्; ५. क. ग. पाठः; ६. क. ग. पाठः।
७. 'मम तु वार्त्तिके उद्देश्यसामानाधिकरण्येन विधेयान्वयमात्रे ऌकारस्य तात्पर्यग्राहकतामात्रकल्पनेन न किञ्चिद्गौरवम्' ख. पाठः।
८. क. ग. पाठः।

त्वेनैव, वार्त्तिककृद्वक्ष्यमाणार्थमादायाऽपि प्रवृत्तेः।[1]) 'इदं च वार्त्तिकं 'प्रथमयोः' (६।१।१०२) इति सूत्रस्थसवर्णग्रहणेन बोधितम्' इति वक्ष्यते।

**अकार-हकारयोरिति**—अकार-घकारादीनामुपलक्षणमिदम्।[2] (एकारस्य[3] केवलताल्व्यत्वम्, ओकारस्य केवलौष्ठ्यत्वमिति मते[4]—) एकारशकारादीनामप्युपलक्षणम्। एतेन 'नाऽक्शलौ' (१।१।१०) इत्येव सूत्रयितुमुचितम्, इत्यपास्तम्। न च 'हशि' च (६।१।११४) इति सिद्धेऽतो रोरिति व्यर्थम्, आकारव्यावृत्त्यर्थत्वात्। न च हकारे 'अतो रोः' (६।१।११३) इत्येव सिद्धे, 'यशि च' इत्येव पठितुं युक्तम्। तपरकरणादाकारे इव, हकारेऽपि पूर्वसूत्राऽप्रवृत्तेः।[5]

सौत्रद्विवचनोपपत्त्यर्थं मध्यमपदलोपिसमासं दर्शयति—

**आकारसहित** इति—अत एव 'कालसमयवेलासु' (३।३।१६७) इति निर्देश उपपद्यते। समाहारद्वन्द्वे तु टच्प्रसङ्ग इति भावः। न च हल्पदेन समाहारद्वन्द्वोत्तरम्—'आ'पदेन इतरेतरयोगेन न दोष इति वाच्यम्। अज्झल्पदेनाऽऽकारस्य सहविवक्षाऽभावेन द्वन्द्वस्यैव दुर्लभत्वात्। तथात्वे

---

१. इतोऽग्रे–'यत्र वार्त्तिके सूत्रं तात्पर्यग्राहकम्, तदतिरिक्तविषयत्वात्तद्भाष्यस्य न दोष.'—ख. ग. पाठः।

२. क. ग. नास्ति; ३. क. ग. पाठः।

४. 'कण्ठताल्वादेः प्रत्येकस्थानत्वमते, एकारस्य केवलताल्व्यत्वमते च' —इति ख. पाठः, क. ग. पाठस्थाने।

५. इतोऽग्रे—'न च चवर्गयकारादीनामपि सावर्ण्यं स्यात्, ईषच्छुक्लस्यापि शुक्लत्ववदीषत्स्पृष्टस्याऽपि स्पृष्टत्वादिति वाच्यम्। स्पृष्टमीषत्स्पृष्टमिति विभागकथनसामर्थ्यादप्रवृत्तेः। वस्तुतो नाऽऽज्झलाविति सूत्रं व्यर्थम्। 'विवृतमूष्मणा'मित्यत्र योगं विभज्य, ईषदित्यनुवर्त्य, स्वराणां चेत्यत्र निवर्त्य, प्रयत्नभेदस्य भाष्ये उक्तत्वात्'—ख. पाठः ; क. ग. तु नास्ति।

ह्यज्भिरप्याकारस्य सावर्ण्यं न स्यादिति बोध्यम्। **इत्येतेष्विति**—एतेषु[1] परेषु, एतेषु विद्यमानस्य चेत्यर्थः। तेन हकारादीनाम्[2], अकारादिषु परतोऽपि दीर्घादिसंग्रहः[3][4]। **इत्येतेषु परेष्विति** तु क्वाचित्कोऽपपाठः। तथा पाठे उपलक्षणत्वं वा बोध्यम्[5]। (एतेन[6] 'अकः सवर्णे' (६।१।१०१) इत्यत्रत्याज्ग्रहणसामर्थ्येन दीर्घवारणं शक्यमिति परास्तम्। शीङः शकारोच्चारणं तु 'शिश्ये' इत्यादौ चरितार्थम्। तत्र वार्णपरिभाषया[7] पूर्वं दीर्घाऽप्रवृत्तेः]।

**दीर्घादीनामिति**—आदिनोदात्तादीनामपि ग्रहणं बोध्यम्। **ग्रहणकेति**। दीर्घादीनामिव हकारादीनामप्यकारादिवाच्यत्वे बुद्धे, अगादिप्रत्याहारेषु[8] इकारादीनामनुच्चारितत्वेन प्रत्यायकत्वाऽसम्भवेन, प्रत्ययानां प्रकृतिवृत्त्युपस्थाप्यार्थान्वयाऽनुरोधेन 'त्वादिभ्य' इत्यादिनिर्देशात्स्वीकृतया प्रत्याहारेषु तद्वाच्यवाच्ये निरूढलक्षणयाऽच्पदबोध्यत्वं स्यादित्यर्थः।

**'अणुदित्'०** (१।१।६९)—अत्राऽणमुद्दिश्य सवर्णबोधकता विधेयेति न 'यच्छब्दयोगः[9] प्राथम्यम्' इत्यादिन्यायविरोधः। **सवर्णस्येत्यस्य**—'बोधकः' इति शेषः। [10]अर्थविशेष्यकशक्तिग्रहवत् पदविशेष्यकस्याऽपि तस्य स्वीकारादित्याहुः[10]। एवमन्यत्रापि बोध्यम्। ननु कृत्रिमाऽकृत्रिमन्यायेन प्रत्ययस्यैव निषेधः स्यात्। तथा चाऽऽगमादौ सवर्णग्रहणं स्यात्। एवं च 'वॄतो वा' (७।२।३८) इत्यादिसूत्रं व्यर्थं स्यादत आह—**प्रतीयत** इति। अत[11] एव 'ज्याद ईयसः' (६।४।१६०) इति न सूत्रितमिति तत्सूत्रे भाष्ये स्पष्टम्।) 'तेन इदम इश्' (५।३।३) त्रिमात्रो न[12]। अनुबन्धानामनेकान्तत्वात्सवर्ण-

१. 'इत्येतेषु' ख. पाठः; २. 'हादीनां' ख. पाठः।
३. क. ग. पाठः; ४. 'दीर्घादीनामपि संग्रहः' ख. पाठः।
५. इतोऽग्रे—'यत्त्वकः सवर्णे इत्यत्रत्याऽज्ग्रहणसामर्थ्येन दीर्घवारणं शक्यमिति। तन्न, उत्तरार्थत्वादिति दिक्'—ख. पाठः।
६. क. ग. पाठः; ७. 'तत्र चाऽकृतव्यूहपरिभाषया' ग. पाठः।
८. ग. पाठः; ९. 'सिद्धं धर्मिणमादायेत्यादि' ख. पाठः।
१०. ग. पाठः; ११. क. ग. पाठः।
१२. इतोऽग्रे—'अन्तरङ्गत्वात्' उपदेशे इति वचनाच्च सूत्रान्तर्गतेष्वेवेशादि-

ग्रहणप्रसक्तिः। (उ[1]दिदिति—न च 'चोः' (१८।२।३०) इत्यादावुपदेशत्वाऽभावादुकारस्येत्त्वाऽभावे उदित्त्वाऽभावात् कथं सवर्णग्रहणमिति वाच्यम्। कुचुट्टुतुपूनामितराऽनवयवानामुदित्संज्ञाया व्याकरणान्तरे कृतत्वेन तयैवेहापि व्यवहारेणाऽदोषात्। यद्यपि समुदायसवर्णिनोऽप्रसिद्धास्तथापि तदवयवचादिसवर्णा एवात्र तत्सवर्णा बोध्याः)।

'अप्रत्ययः' इत्युदिदंशेन सम्बध्यते। 'चोः कुः' इत्यादावुदित्करणात्। कुक्टुगादौ सवर्णग्राहकत्वन्तु न[2]। (अवयव[3]भूतानामुदित्संज्ञाऽभावात्। 'सूत्रे चकारेण स्वरूपस्याऽपि ग्रहणं बोध्यम्' इति प्राञ्चः। तत्र कस्य स्वरूपस्य ग्रहणम्? 'अस्य च्वौ' (७।४।३२) इत्यादिसूत्रपठिताऽकारस्वरूपस्येति चेन्न, तस्य तद्विहितकार्यप्रसक्त्यभावात्। न च ह्रस्वव्यक्तीनां न परस्परं सावर्ण्यम्, स्थानैक्येन स्थानतुल्यत्वाऽभावादिति वाच्यम्। पुरुषभेदेन भेदात् तत्तत्स्थानानामपि तुल्यत्वस्य सूपपादत्वात्। अत एव शकारयोः सावर्ण्यनिषेधाऽऽपादनपरभाष्यसङ्गतिः। एकपुरुषोच्चारिताऽकारयोरपि तत्तत्कालाद्युपाधिभेदमारोप्य तुल्यत्वं सूपपादम्।

तस्मादयं चो भिन्नक्रमः। अण्, उदिच्चेत्यर्थ इति युक्तमाभाति।)

---

शब्देषु इत्संज्ञायामनुबन्धविनिर्मुक्तैव पदार्थोपस्थितिरित्यण्त्वात् सवर्णग्रहणप्रसक्तिः। इत्संज्ञाकार्यं तु 'आनर्थक्यात् तदङ्गेषु' इति न्यायात् तत्प्रत्याय्ये प्रवर्त्तत इति ध्येयम्। उदिदिति भिन्नं पदम्। तेन उपदेशेऽजित्यादावुदित्पदार्थाऽबोधेऽप्यण् सवर्णग्राहक इत्यस्य प्रवृत्तिः। अतद्गुणसंविज्ञानश्चायं बहुव्रीहिः। 'चोः कुः' इत्यादौ चकारककारादीनामेव संज्ञात्वम्। अन्यथोक्तरीत्योकारस्य पदपर्यालोचनदशायामेव निवृत्तत्वेन सूत्रस्याऽसम्भवदुक्तिकत्वापत्तेः। समुदायसवर्णिनामप्रसिद्धत्वाच्च'—ख. पाठः।

१. क. ग. पाठः।

२. इतोऽग्रे—'तत्रोकारस्य उच्चारणार्थत्वात्। सूत्रे चकारेण स्वरूपस्यापि ग्रहणं बोध्यमित्याहुः'—ख. पाठः।

३. क. ग. पाठः।

अत्रेति ग्राहकसूत्र एवेत्यर्थः। अत्र ज्ञापकन्तु उऋदिदिति सूत्रे तपरकरणम्। तद्धि चुरादिण्यन्तात् 'कृत'धातोर्लुङि, चङि 'अचीकृतत्' इत्यत्र ऋकारस्य दीर्घस्य स्थाने ह्रस्व एव यथा स्यादित्येवमर्थम्। पूर्वेणाऽत्राऽण्ग्रहणे तूद्देश्य-ऋकारेणाऽनण्त्वाद् भिन्नकालाऽग्रहणेन तस्य न स्थानित्वम्, न वाऽऽदेशत्वं प्रसक्तमिति व्यर्थं तत् स्यात्। न च तपरसूत्रेण ऌकारग्रहणार्थं तत्, स्थानेऽन्तरतमपरिभाषया तस्य वारणेन तद्ग्रहणे फलाऽभावात्।[1]

न चैवं भाव्यमानत्वात् सवर्णग्रहणाऽप्रसक्तेस्तद्वैयर्थ्यम्। तपरत्वाऽभावे आदेशाऽन्तरनिवृत्त्यर्थत्वेन, स्वरूपाऽभ्यनुज्ञानार्थत्वेन, अपूर्वबोध्यत्वाऽभावेन चाऽविधेयत्वात्। कृते तु तपरत्वे भाव्यमानताऽपीत्यन्यदेतत्।

यत्तु 'उपसर्गादृति' (६।१।९१), 'ऋत उत्' (६।१।१११) इति तपरकरणं मानमिति, तन्न, ऌकारग्रहणेन चारितार्थ्यात्।

**त्रिंशत** इति—'ऋऌवर्णयोः' वा० (८।३।१) इत्यत्र जातिपक्षाश्रयणाद् ऋत्वजात्याक्रान्त-ऌत्वजात्याक्रान्तयोः सवर्णसंज्ञाविधानादिति भावः। नन्वेवं वर्णसमाम्नायादिषु व्यापकजातिग्रहणादेवाऽष्टादशादीनां ग्रहणेन,[2] अच्त्वादौ च सिद्धे, ग्रहणकशास्त्रेऽण्ग्रहणं व्यर्थम्। अत एव सूत्रारम्भपक्षे 'अस्य च्वौ' (७।४।३२) इत्यादौ दीर्घादिग्रहणसिद्धिः। अन्यथाऽण्ग्रहणेन वर्णसमाम्नायस्थानामेव ग्रहणेन, णकारादिचिह्नेन प्रत्याहारे तत्प्रत्यभि-[3]ज्ञासत्त्वेन, तत्रत्याऽऽद्यवर्णे सूत्रस्य चरितार्थतया, व्यक्तिपक्षे तत्रत्याऽत्रत्यव्यक्तेर्भेदेन, प्रकृते तदप्रवृत्तिः स्पष्टैव। (न च[4]ऽइउणित्यादावकारादिर्विनिगमनाविरहेण सर्वाऽकाराणामनुकरणमित्य[यम]पि स एवेति न दोषः।

१. इतोऽग्रे—'न च म्लृदादिभ्योऽनुकरणेभ्य आचक्षाणणिचि ऌकारस्य ऌकारार्थं तत्। उद्देश्यकोटौ ऌकारग्रहणस्य पूर्वेणाऽण्ग्रहणेऽप्रसक्तया ज्ञापकत्वाऽक्षतेः। वस्तुतोऽनभिधानेन तेषामभाव इति पश्यादिसूत्रे निरूपयिष्यामः'—इति ख. पाठः। क. ग. तु नास्ति।

२. 'ग्रहणे, अच्त्वादौ च सिद्धे ग्रहणकशास्त्रं व्यर्थम्'—ख. ग. पाठः।

३. 'प्रत्याहारे तत्रत्यानामेव ग्रहणस्य सत्त्वेन' ख. पाठः। 'प्रत्यभिज्ञासत्त्वे' क. पाठः।

४. ग. पाठः।

प्रयोगस्थसवर्णाऽकाराणामनुकरणेऽपि सूत्रस्थाऽनुकरणे मानाऽभाव इत्याशयात्)। जातिपक्षाश्रयणादेवागादिप्रत्याहारे[1] उपस्थितदीर्घेकारादीनां तदुत्तरविभक्त्यर्थेनाऽन्वयः[2]।

'न च विधेयेऽप्यष्टादशानां ग्रहणाऽऽपत्तिः। न च विधेयविशेषणत्वात्

---

१. 'अत एवाऽगादिप्रत्याहारे' ख. पाठः।

२. इतोऽग्रे—'न च प्रत्याहारशब्दानां विशिष्टत्वेन घटादिशब्दघटकाऽकारादिभिरिव तद्घटकाऽकारादिभिर्न सवर्णग्रहणं प्राप्नोतीति वाच्यम्। तदुपस्थितस्योच्चारिताऽभेदेन गृहीतस्यैव सवर्णग्राहकत्वेनाऽदोषात्'। 'य एते प्रत्याहाराणामादितो वर्णास्तैः सवर्ण(र्णा ?)ग्रहणं तथा स्यात्' इति भाष्येण वर्णोपस्थापकशब्दघटकस्यापि अण्ग्रहणेन ग्रहणात्। वर्णतात्पर्यकाणामेव वाऽण्ग्रहणेन ग्रहणात्। उपस्थितवर्णाऽभेदेनैवाऽवयवस्या…? …दत्र भायाऽपि कार्यजातिग्रहणप्रा(प्ता)तिप्रसंगवारणाय 'अप्रत्ययः' इति निषेधार्थं च तदावश्यकमि(ति) तदाशयः। यदि तु लक्ष्यानुरोधेन व्याख्यानाद् विधेयविषये व्यक्तिपक्ष एव। अनुवाद्यविषये जातिपक्ष एवेत्याश्रयणीयः (आश्रियते)। यद्वा, विधेयाऽण्विषये तपरत्वं प्रायेण कृतमेत्र। यत्रापि न कृतं तत्रापि तपरत्वं कर्त्तव्यम्। 'तपरसूत्रस्य तत्कालवृत्तिजातिबोधकः' इत्यर्थः।

इशादिषु विशिष्टस्य विधेयतया वर्णग्रहणमेव तत्र ऋलृवत्। =ऋलृवर्णयोः सावर्ण्यस्य स्थाने ऋवर्णवत् लृवर्ण इति वाच्यमिति न दोषः। (नाऽसूया कर्त्तव्या…सूत्रमावश्यकमेवेति दिक्)। किञ्च तन्त्रान्तरे, प्रातिशाख्यादौ च क्वादिभिर्वर्गग्रहणस्य सत्त्वादकारादिभिरष्टादशानां ग्रहणस्य च सत्त्वात् जातिरावश्यकीति तदाशयः—इति खण्डितो ग. पाठः। ख. पुस्तके तु—'तदुत्तरविभक्त्यर्थेनाऽन्वयः संगच्छते। कवर्गेऽपि कुत्वजातेः स्वीकारात्। कुरित्याद्यनुगतव्यवहाराच्च तत्सिद्धिः। संज्ञापक्षेऽप्यनुगतव्यवहाराऽनुगतधर्मस्याऽऽवश्यकत्वात्। त्रयी शब्दानां प्रवृत्तिरिति पक्षे आवश्यकत्वाच्च। स्पष्टं चेदं वृद्धिरादैच्सूत्रे कौस्तुभे।

तत्र ह्रस्वत्वादिविवक्षितम्, उद्देश्यविशेषणत्वाच्चाऽस्य च्वावित्यादौ न विवक्षेति मीमांसकरीत्या निर्वाहः। 'उपेयिवानित्यत्रोपेत्यविवक्षायाः' 'अनूचानः' इत्यादौ नञो विवक्षायाश्च दर्शनेन, तस्या वैयाकरणैरभ्युपगन्तुमशक्यत्वात्—इति वाच्यम्। जातिपक्षे तपरसूत्रस्य जातिग्रहणप्राप्तसवर्णग्रहणनियामकत्ववदप्रत्यय इत्यस्य योगविभागेन तत्प्राप्तसवर्णग्रहणनिषेधकत्वेनाऽदोषात्।

ऋत्वाभिव्यञ्जकं चाऽज्भागवेष्टित-रश्रुतिरेव। लकार-रेफयोश्च समानश्रुतिता कविसम्प्रदाये प्रसिद्धेति ऋत्वजातिर्लृकारेऽप्यस्त्येवेति तत्रापि न दोषः। यद्वा, लृवर्णस्य ऋवद्भाव एव वाच्यः। सावर्ण्यं च न वाच्यम्।

---

न च जातिबोधार्थमेव तर्हि सूत्रमावश्यकम्। षट्भेदवृत्त्यात्वादिजातिबोधाऽर्थमपि सूत्रस्य कर्त्तव्यताऽऽपत्तेः। लोकव्यवहारात् तत्सिद्धिरिति तूभयोः सममिति चेन्न, विधेयेऽप्यष्टादशानां ग्रहणाऽपत्तेः'—अयं पाठः।

१. उपेत्यविवक्षायाः, सुप्सुपेत्यादावनुवाद्यगतैकत्वाविवक्षायाश्च दर्शनेन तस्या वैयाकरणैरभ्युपगन्तुमशक्यत्वात् 'अस्य च्वौ' (७।४।३२) इत्यादौ व्यापकजातेरप्यविवक्षाऽऽपत्तेश्च। इदमेव सूत्रं तदनाश्रयणे ज्ञापकम्। ऋग्रहणे लृकारग्रहणाऽनापत्तेः। ऋत्वजातेर्लृवृत्तित्वस्वीकारे प्रमाणाभावात्। जातिबोधार्थमुदिदंशस्याऽऽवश्यकत्वाच्च। ध्वनितं चेदं वृद्धिसूत्रे कौस्तुभे।

अत्वादिकमपि द्विमात्रत्वादिविशिष्टमत्वादिकमेवेति, न तद्बोधकसूत्रारम्भः। पृथगनुबन्धकरणाच्च न ऋदिल्लृदित्प्रयुक्तकार्यसङ्करः। वार्त्तिककृता त्वण्ग्रहणमत्र प्रत्याख्यातम्—'सवर्णेऽण्ग्रहणमपरिभाष्य'मिति। अण्मात्रे सवर्णग्रहणलाभाय न कार्यम्। क्वचित्तु तल्लाभायाऽपि कार्यम्। जातिग्रहणप्राप्ताऽतिप्रसङ्गवारणायाऽप्रत्यय इति निषेधार्थं च तदावश्यकमिति तदाशयः। यदि तु लक्ष्याऽनुरोधेन व्याख्यानाद् विधेयविषये व्यक्तिपक्ष एव, अनुवाद्यविषये जातिपक्ष एवेत्याश्रीयत इति न दोष इत्युच्यते, तथाऽपि 'नाऽसूया कर्त्तव्या यत्रानुगमः क्रियते' इति भाष्योक्तन्यायेनोक्तार्थं च सूत्रमावश्यकमेवेति दिक्। इति ख. पाठः।

पृथगनुबन्धकरणाच्च न ऋदित्-लृदित्प्रयुक्तकार्यसङ्कर इति चेदिष्टापत्तेः।

तदुक्तं वार्त्तिककृता 'सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात्' इति।

किञ्चाऽप्रत्यय इत्यस्य विधीयमाने गुणाऽभेदकत्वप्राप्तसवर्णग्रहण निषेधकत्वमपि। अत एव 'घटवत्' इत्यादौ मतोर्मस्य नाऽनुनासिको वकारः। यदि तु गुणानामभेदकत्वेऽण्ग्रहणं व्यर्थम्, अज्ग्रहणेनैव सिद्धेः। अतो यण्सु गुणभेदकत्वमेवेत्युच्यते, तदा तु सम्यगेव। एवं च 'मय उञो वो वा' (८।३।३३), 'यवलपरे यवला वा' (वा. ८।३।२६), 'इको यणचि' (६।१।१७) इत्यादिभिरनुनासिकस्थानेऽनुनासिकः, इत्यादिः केषाञ्चिदुक्तिः परास्ता। सूत्रमतेऽनुनासिकानामत्राऽग्रहणे, तत्प्रत्याख्यातृनयेऽपि तदग्रहणस्यैव न्याय्यत्वात्।

**सामर्थ्यादिति**–'एचोऽयवायावः' (६।१।७८) इत्यादौ तु स्थानेऽन्तरतमपरिभाषयैव निर्वाह इति वक्ष्यते। न य्वाभ्यामित्यत्र तु 'ऐ-औ' स्वरूपेण पाठ्यौ। 'वृद्धिरादैच्' (१।१।१) इत्यत्राप्यैजित्येव पाठ्यम्। तत्र, गुणसूत्रे च परस्परसवर्णसंज्ञावादिमते चतुर्णां ग्रहणसत्त्वात्[1]। वक्ष्यमाणरीत्या यथोद्देशे कार्यकाले चाऽनुवाद्यतयाऽणुदित्सूत्रप्रवृत्तेः। न चैवं पूर्वपक्षसिद्धान्तयोर्निर्दलत्वाऽऽपत्तिः। तद्धि पूर्वपक्षे सिद्धान्तदूषणवत्त्वम्। अत्र च वृद्धिगुणविधौ प्रत्याहारद्वयग्रहणवैयर्थ्यरूपस्य, 'प्लुतावैच' (८।२।१०६) 'एचोऽप्रगृह्यस्य' (८।२।१०७) इत्यत्र च तद्वैयर्थ्यरूपस्य दोषस्य सत्त्वादिति वाच्यम्। 'ऐऔ'जिति सूत्रवैयर्थ्योपन्यासेन तन्मूलभूतग्रहणवैयर्थ्यरूपदोषस्याऽपि क्रोडीकृतत्वेनाऽक्षतेरित्याहुः।

[[2]**यद्यपीति**—इदं च व्यक्तिपक्षे। अणुदित्सूत्रस्य प्रत्याहारबोध्यवर्ण-

---

१. इतोऽग्रे—'तपरकरणेन यथोद्देशपक्षस्य बोधनादनुवाद्यतयाऽणुदित्सूत्रप्रवृत्तेः।' ख. ग. पाठः। इतोऽग्रेऽपि—'कार्यकालपक्षेऽप्यनुवाद्यताया एव वक्ष्यमाणत्वात्' इति ग. पुस्तके त्वधिकः पाठो दृश्यते।

२. क. ग. पाठः। एतत्पाठस्थाने ख. पुस्तके तु—'यद्यपीति। निषेधपर्यालोचनं विना नोत्सर्गस्य वाक्यार्थो लक्ष्ये प्रवृत्तिश्च। ङ्किति चेति सूत्रे निषेधसूत्राणां परिभाषात्वाङ्गीकारेणैकवाक्यतया एव युक्तत्वात्।

ष्वपि प्रवृत्तिः (प्रत्ययार्थान्वये च प्रकृतिवृत्तिप्रयोज्योपस्थितिः कारणम्) इति पक्षे च। वर्णानामुपदेशस्तावत्। तदुत्तरकालेत्संज्ञा। तदुत्तरमादिरन्त्येनेति प्रत्याहारस्तदुत्तरकाला सवर्णसञ्ज्ञा। तदुत्तरकालमणुदिदित्येतेन सर्वेण समुदितेन [वाक्येन] सवर्णानां ग्रहणं भवति। न चात्रेकारः शकारं गृह्णातीति वाक्याऽपरिसमाप्तिन्यायादित्यर्थः।

अयं भावः—'आदिरन्त्येन' (१।१।७१) इति प्रत्याहारसिद्धौ, 'नाज्झलौ' (१।१।१०) इत्येतद्वाक्यार्थबोधे सति, निर्णीतैतद्विषयपरिहारेण सवर्णसञ्ज्ञाबोध्यनिश्चये सत्यणुदित्सूत्रेण [अकारादिभिः] तावतां ग्रहणं बोधनीयम् (अन्यथा बाधकसम्भावनया 'तुल्यास्य' (१।१।९) सूत्रजशक्तिग्रहेऽप्रामाण्यसन्देहेन तच्छास्त्रजबोधानापत्तिः)।

न चैतद्वाक्यार्थबोधकाले तन्निश्चय इति। अत एव शकारयोः सावर्ण्यसिद्धिः। अन्यथा तयोरज्झल्रूपत्वेन तन्निषेधापत्तिः। यत्तु नाज्झलावित्येतद्बोधोत्तरं तुल्यास्येत्यस्य बोध इति–एतत्काले सवर्णपदार्थज्ञानाऽभावेनाणुदिदित्यस्याऽबोध इति, तन्न, अभावज्ञाने प्रतियोगिज्ञानस्य कारणतया विधिबोधोत्तरमेव निषेधबोधात्। वाक्यस्याऽपरिसमाप्तत्वं च सवर्णपदवाच्यनिर्णयं विना सवर्णग्रहणबोधनाऽसामर्थ्यमिति बोध्यम्।]

(एवञ्च नाज्झलावित्यस्य बोधकाले तद्वाच्यवाच्यत्वस्य लक्ष्यतावच्छेदकस्याऽनिर्णयात् तदन्तर्भावेन लक्षणाऽपि वक्तुमशक्येत्यपि बोध्यम्।)

---

'नाज्झला'विति सूत्रात् पूर्वमिकारादिषु संज्ञाप्रवृत्तिसमयेऽज्झलोरपि प्रवृत्तेन 'भुक्तवन्तं प्रति मा भुक्थाः' इति वाक्यस्येव निषेधवाक्यस्य वैयर्थ्यापत्तेश्च, अष्टदोषदुष्टविकल्पाऽऽपत्तेश्च। तथा चैतत्पर्यालोचनोत्तरं सवर्णपदार्थज्ञाने जातेऽणुदिदित्यस्य वाक्यार्थबोधः। वाक्यार्थबोधे पदार्थज्ञानस्य कारणत्वात्। वाक्यार्थबोधोत्तरं च लक्ष्ये प्रवृत्तिः। तथा च नाज्झलावित्यस्य बोधकाले तद्वाच्यवाच्यत्वस्य'—इत्ययं ख. पाठः।

१. ग. पाठः; २. ग. नास्ति; ३. ग. पाठः; ४. 'तद्ग्रहण' ग. पाठः। ५. 'तथा च' ख. पाठः; ६. () एतदन्तर्गतः क. कुण्डलितः ख. ग. पाठः।

**प्रश्लिष्टत्वादिति**—अत्र लिङ्गम् 'कालसमयवेलासु' (३।३।१६७) इति निर्देशः[1]। ये तु निर्देशादेव सावर्ण्याऽभावमिच्छन्ति, तेषामानुमानिकवचनकल्पनाऽऽपातः। अत एव भाष्ये प्रयत्नभेदेनैषां सावर्ण्याभावः साधितः सङ्गच्छते। एतेन 'हे पिपा३सो' इत्यत्र प्लुतादाकारात् परस्य सनः सस्य षत्वं स्यादित्यपास्तम्। दीर्घात् परत्र प्लुतस्याऽपि प्रश्लेषाच्च।

इदं च व्यक्तिपक्षेऽणुदित्सूत्रसत्त्वे जातिपक्षे तु भिन्नजातीयत्वादेव न हकारेणाऽऽकारग्रहण(मिति बोध्यम्)।

**हो ढ** इति—हकारेणाऽऽकारग्रहणे सति यद्यत्प्राप्नोति, तस्य सर्वस्याप्युपलक्षणमिदम्।'एतेन ढत्वस्याऽसिद्धत्वात् संयोगान्तलोप आपादयितुं युक्तः' इत्यपास्तम्। सर्वस्याऽप्येकयैव युक्त्या वारयितुं शक्यत्वेन, आपाद्यमानेऽर्थे न्यायाऽनादराच्च। 'हलोऽनन्तराः' (१।१।७) इति सूत्रे यादिसाहचर्येणाऽच्त्वानाक्रान्तहलामेव ग्रहणाच्च। (न च[2] गुणकृताऽन्तरतमे स्थानिनि हकारे चरितार्थो ढोऽनन्तरतमे आकारे न प्रवर्त्तेतेति वाच्यम्। व्यक्तिपक्षे आकारविषयकलक्षणस्याऽचरितार्थत्वात्। उपलक्षणत्वेनाऽदोषाच्च।) (हलश्च[3] न यण् तुल्यस्थानप्रयत्नकाः प्रसिद्धा इति सूत्रेऽज्ग्रहणेनैव सिद्धेऽण्ग्रहणं व्यर्थमत आह—अनुनासिकेत्यादि)।

यद्यपि 'युवोरनाकौ' (७।१।१) इति सूत्रभाष्ये 'अनुनासिका यणः' इति सामान्यत उक्तम्, तथापि कुण्डं रथेनेत्यादौ पर[4]सवर्णमाशङ्क्य, रेफोष्मणां सवर्णा न सन्तीति समाधानपरहयवरट्सूत्रस्थभाष्यविरोधेन, तस्य रेफाऽतिरिक्तपरत्वं मनसि निधायाऽऽह—**यवला** इ[5]ति।

---

१. सर्वत्र पुस्तकेषु 'निर्देशा' इति बहुवचनान्त एव पाठो दृश्यते।

२. ख. पाठः; ३. क. ग. पाठः।

४. 'कुण्डं रथेनेत्यादावनुनासिकणकारमाशङ्क्य, स्थानप्रयत्नान्तरतमे 'कुण्ठितः' इत्यादौ सावकाशमत्र न प्रवर्त्तत इति समाधानपर'—ख. पाठः।

५. इतोऽग्रे—'द्वयोरिति। एदर्थमेवाऽणुदित्सूत्रेऽण्ग्रहणम्। अन्यथाऽज्ग्रहणमेव कुर्यात्।' ख. पाठः।

तेन सँय्यन्तेत्यादौ 'वा पदान्तस्य' (८।४।५९) इति परसवर्णानामनुनासिकयवलानाम् 'अनचि च' (८।४।४७) इति द्वित्वं सिद्धयति। 'हलो यमाम्' (८।४।६४) इति लोपस्तु वैकल्पिकः। अत्र चाऽण्ग्रहणमेव मानमित्याहुः। 'अतो भिस' (७।१।९) इत्यादि[स्थ]तकारोच्चारणात् 'आङि चापः' (७।३।१०५) इत्यत्र ओसनुकर्षणार्थाच्चकाराच्च 'तपरः' इत्यत्र बहुव्रीहिः। अन्यथा 'ओसि च' (७।३।१०४) इत्यनेन सिद्धे किं तेन? न चाऽऽकाररूपस्यैवाऽऽपो यथा स्यात्, अतिखट्वयोरित्यत्र मा भूदित्यर्थं चकार इति वाच्यम्। नियमाद् विधेर्ज्यायस्त्वात्। 'सहिवहोरोत्' (६।३।११२) इति सूत्रस्थवर्णग्रहणाद् व्याख्यानाच्च पञ्चमीसमासोऽपि। तदाह—तः पर **इत्यादिना।**

(वर्णग्रहणे तु तत्सामर्थ्यादत्वावच्छिन्नसर्ववर्णग्रहणबोधनेन तत्र तपरसूत्राऽप्रवृत्तिरिति बोध्यम्।) आद्यस्योदाहरणम्—'अतो भिस' इत्यादि। द्वितीयस्य तु वृद्धिरादैजित्यादि। न चात्र संज्ञायास्तात्परत्वेऽपि, संज्ञिनां तदभावात् कथमैक्षु त्रिमात्रव्यावृत्तिः। संज्ञासवर्णिनामप्रसिद्धत्वाच्च। (संज्ञासमकालस्याऽप्रसिद्धत्वाच्च।) द्विमात्राणामप्यतत्कालत्वाद् व्यावृत्त्यापत्तिश्चेति वाच्यम्। (इत एव तपरकरणाद् भाष्यादिप्रामाण्याच्च 'तात्पर' इत्यस्य 'तात्परशब्दबोध्यो वर्णः स्वसमकालग्राहकः' इत्यर्थकल्पनेनाऽदोषात्।)

यत्त्वत्राऽणित्यनुवर्त्तते, तच्च परेणैव, तेन नियमार्थमिदमिति तन्न, अण्ग्रहणमनुवर्त्य लाघवेन विधित्वस्यैव वक्तुं युक्तत्वात्।

१. ख. पाठः;
२. 'बलीयस्त्वात्' ख. पाठः।
३. क. ग. पाठः;
४. 'समासस्तदाह' ख. पाठः।
५. क. ग. पाठः;
६. क. ग. पाठः।
७. 'इति वाच्यम्, प्रत्याहारेषु निरूढलक्षणायाः सत्त्वेनैजादिशब्दानामेवोपस्थापकत्वान्न दोषः। दीर्घाऽनुदात्तादीनामैच्छब्दसवर्णित्वं तु परम्परासम्बन्धेन। तत्कालपदं चैतद्विषयेऽधिककालव्यावर्त्तकम्, न तु न्यूनकालस्याऽपि। ऐच्पदसामर्थ्यात्'—ख. पाठः, 'इत एव तपर' इति क. ग. पाठस्थाने।

[1]विधित्वेऽपि वृद्धिरादैजित्यादौ गुणानां भेदकत्वे(अनणि) आकारांशे सावकाशेन तपरसूत्रेण 'अतो भिस' (७।१।९) इत्यादौ परत्वेनाऽणुदित्सूत्रबाधोपपत्तेश्च। संख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टत्वेनेह विरोधस्य सत्त्वात्। स्पष्टं चेदं भा[2]ष्ये। गुणानामभेदकत्वे तु 'अतो भिस ऐस्'(७।१।९) इति तपरकरणात् तत्सामर्थ्येन तत्रोपस्थितेनाऽनेनाऽनवकाशत्वेनैव तस्य बाध[3]ः। अकारस्यैव संज्ञात्वेऽपि विशिष्टाद् विभक्त्युत्पत्तिस्तु 'अतो भिस' इत्यादौ सौत्रत्वाद्बोध्या।

यत्तु 'अतो भिस' (७।१।९) [4]इत्यादौ विशिष्टाद् विभक्त्युत्पत्तेस्तकारविशिष्टा संज्ञा। 'तत्कालस्य' (१।१।७०) इत्यत्र 'त'च्छब्देन विशेष्यस्यैव परामर्शः। अन्यथा सार्द्धमात्रिकादेर्वर्णस्याप्रसिद्धत्वात् सूत्रस्याऽसम्भवदुक्तिकतैव स्यात्। एवं च विशिष्टस्याऽण्त्वाभावादवयवस्य पदैकदेशत्वेनाऽन[5]र्थकत्वाच्चाऽणुदित्सूत्राऽप्रवृत्तिरेवैतद्विषये इत्याहुः। तन्न। यस्येति बहुव्रीहौ समुदायस्याऽवयविनो विशेष्यत्वेन तत्परामर्शेऽपि, सूत्रस्याऽसम्भवदुक्तिकतायास्तदवस्थत्वात्। यस्मादिति बहुव्रीहौ तु विशिष्टे संज्ञात्वं दुर्ल[6]भम्। संयोगसमावायाऽन्यतरसम्बन्धेनाऽन्यपदार्थस्य वर्त्तिपदार्थसन्बन्धित्व एव

---

१. 'विधित्वेऽपि 'वृद्धिरादैच्' (१।१।१), 'दिव उत्' (६।१।१३१) इत्यादौ सावकाशेन तपरसूत्रेण' ख. ग. पाठः।

२. इतोऽग्रे--'यदि तु संज्ञासूत्रद्वये सङ्ख्याऽनुपादानान्न विरोध इति विभाव्यते तदाऽतो भिस ऐसिति' ख. पाठः।

३. 'बाध इति केचित्' ख. पाठः।

४. 'इत्यादौ समुदाये तात्पर्याद्विशिष्टाद्विभक्त्युत्पत्तेश्चाऽवयवस्य संज्ञात्वाऽसम्भवेन तकारविशिष्टा संज्ञा।' ख. पाठः।

५. नास्त्ययं हेतुः। ग. पाठः।

६. इतोऽग्रे 'अत एव 'तदित्ययं वर्णः प्रतिनिर्दिश्यते' इति भाष्यं सङ्गच्छते। संयोगसमवाया' ख. पाठः।

प्रायेण तद्गुणत्वस्वीकारात्। वक्ष्यते चेदं सर्वादिसूत्रे।

तत्कालस्येति तच्छब्दस्य तदुच्चारणकालसदृशे लक्षणा। कालपदेन बहुव्रीहिः। तत्सर्वं ध्वनयन्नाह—**समकालस्यैवेति**।

एवकारश्च न्यायसिद्धबाध्यबाधकभावस्याऽनुवादक इति भावः। जातिपक्षे तु[1] तज्जातिमत्सकलव्यक्तिग्रहणप्रसङ्गे यां व्यक्तिमुपादाय जातिर्निर्दिश्यते, ततो भिन्नकालव्यक्तिर्माग्राहीति[2] नियमार्थमेवैतत् (सवर्णग्रहणानुवृत्तेः[3]। तेन जात्यन्तरयुक्तसमकालव्यक्तिग्रहणाय विध्यर्थमेवैतत् कुतो नेति न शङ्क्यम्)। इदं च विभक्तितकारे न प्रवर्त्तते, 'उपसर्गादृति' (६।१।९१) इति तपरकरणात्। (तेन[4] 'आद्गुणः' (६।१।८७) इत्यादौ न दोषः।) 'ऋदोरप्' (३।३।५७) इत्यत्र दकार एवेति न दोषः। स च पञ्चमीसमासाऽभावपक्षे तकार इवोच्चारणार्थो[ऽस्तु[5]], मुखसुखार्थो वेति। स्पष्टं चेदं वृद्ध्यादिसूत्रेषु भाष्ये।

नन्वेवं 'तित्स्वरितम्' (६।१।१८५) इति सूत्रे 'तितिप्रत्ययग्रहणं कार्यमिह मा भूत्, द्युभ्यां द्युभिरित्युक्त्वा, 'दिव उत्' (६।१।१३१) इत्यत्र दित्वमाश्रित्य, वार्तिकं प्रत्याख्यातम्। भाविदीर्घव्यावृत्त्यर्थं तपरसूत्रे चर्त्वेन दकारोऽपि प्रश्लिष्यत इत्युक्तमाकरे[6], तेनैतद्विरुध्यत इति चेन्न, भाविदीर्घस्य (संप्रसारणसंज्ञायां तद्भावितपक्षाश्रयणरूप)प्रकारान्तरेण व्यावृत्तेः सिद्धतया, ('अर्दसोऽसेः' (८।२।८०) इत्यत्र समाहारद्वन्द्वेनैव निर्वाहाद् भाव्यमानोकारस्य सवर्णग्राहकत्वज्ञापने फलाऽभावेन च तद्भाष्ये[7]] तदाकरस्य प्रौढिवादपरत्वात् 'ऋदोरप्' (३।३।५७) इत्यत्र धकारस्थानिकदस्य सत्त्वाच्चेति दिक्।

---

१. 'जातिपक्षे तु सकलव्यक्तियुक्तजातिग्रहण' ख. पाठ.।
२. 'कालव्यक्तियुक्ताजाति' ख. पाठः।
३. क. ग. पाठः; ४. क. ग. पाठः।
५. ग. पाठः; ६. 'भाष्ये' इति ख. पाठः।
७. क. ग. पाठ; ८. क. नास्ति; ९. 'तद्भाष्यस्य' ख. पाठ।।

**वृद्धिरादैच्** (१।१।१)—वृद्धिः, आत्, ऐजिति पदत्रयम्। ([1]'त्'इत्यस्य भिन्नपदत्वेन चतुष्टयं वा)। अतो न समासान्तादि-प्रवृत्तिशङ्का। तपरकरणमसन्देहार्थनया पूर्वार्थम्। [यथोद्देशपक्षे] त्रिमात्रादिव्यावृत्तये परार्थमपि।

यत्तु अशब्दसंज्ञेत्यनुवर्त्य शब्दसंज्ञायां नेत्यर्थाद् ग्राहकसूत्राऽप्रवृत्तिरिति, तन्न, तस्य प्रथमान्तत्वात्। 'उच्चैरुदात्तः' (१।२।२९) इत्यादौ दोषापत्तेश्च। तेन रमेशः, गङ्गोदकमित्यादौ त्रिमात्रचतुर्मात्राणां त्रिमात्रचतुर्मात्रा न। चतुर्मात्रोऽपि प्लुतः 'प्लुतावैच इदुतौ' (८।२।१०६) इत्यत्र भाष्ये स्पष्टः। 'प्लुतश्च विषये स्मृतः' इति प्लुताऽप्लुतप्रसङ्ग एवेति बोध्यम्। अत्र 'तद्धितार्थ' (२।१।५१) इति सूत्रसंमते—'स्वेच्छया संज्ञाः क्रियन्ते' इति पक्षे, (यदा [2]'यथोद्देशं संज्ञापरिभाषम्' इत्याश्रीयते, तदा–)

**'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्।**
**तच्छब्द एवकारश्च स्यादुपादेयलक्षणम्'॥**

इत्यभियुक्तोक्तेस्तथैवानुभवाच्च पाठक्रमादर्थक्रमस्य बलीयस्त्वेनाऽऽदैज्वृद्धिरित्यानुपूर्वीकल्पनाद् बोधः। वृद्धिशब्दस्य पूर्वपाठस्तु मङ्गलार्थो ग्रन्थादौ। वर्णसमाम्नायस्तु न पाणिनिकृत इति प्रागेवोक्तम्। वृद्धिशब्दस्तु पदपरः। अर्थपरताया असम्भवात्, व्याख्यानाच्च। ([3]संख्यासंज्ञासूत्रे भाष्ये स्फुटमेतत्)तथा च 'आदैचो वृद्धिपदाऽभिन्नाः' इति वाक्यार्थः। पदाऽभेदोऽर्थेतु वाच्यवाचकयोरभेदात्। अत एवाऽयं शुक्ल इतिवदयं डित्थ इत्यादिर्व्यवहारः। पदपदार्थयोस्तादात्म्यस्यैव शक्तिताया मञ्जूषायामुपपादितत्वात्। तदुक्तं हरिणा—

**'वृद्ध्यादयो यथा शब्दाः स्वरूपोपनिबन्धनाः।**
**आदैच् प्रत्यायितैः शब्दैः सम्बन्धं यान्ति संज्ञिभिः॥ इति॥**

अत एव—

---

१. क. नास्ति; २. ख. पाठः; ३. क. ग. पाठः।

रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः ।
गर्वभङ्गो भार्गवस्य शौर्यभङ्गश्च बालिनः ॥

'हिरण्यपूर्वं कशिपुं प्रचक्षते' इत्यादिप्रयोगोपपत्तिः । नामनामिनोरभेदात्[1] । (प्रकृत[2]सूत्रे भाष्येऽप्युक्तम्–'इदं खल्वपि भूयः—सामानाधिकरण्यमेकविभक्तित्वं च, द्वयोरेतद् भवति—संज्ञासंज्ञिनोर्वा, विशेषणविशेष्ययोर्वेति । तत्र सामानाधिकरण्यम्—एकार्थविशेष्यकप्रतीतिजनकत्वम् । संज्ञा च शब्द एव । विशेषणविशेष्यपदे च तद्बोधकपरे । एवं संज्ञिपदमपि । अत एव 'द्वयोर्हि प्रतीतपदार्थकयोर्विशेषणविशेष्यभावो भवतीति बहुव्रीहि[3]णोक्तम् ।) वृद्धिशब्दस्य संज्ञात्वन्तु व्याख्यानादिना बोध्यम् । [व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचिदिति पक्षेऽपि 'अस्मच्छास्त्रे आदैच एव

१. इतोऽग्रे–'न च कशिपुशब्दस्याऽसुरविशेषे लक्षणा, 'हिरण्यपूर्वं'पदं तात्पर्यग्राहकम् । हिरण्यकशिपुनामकत्वेन प्रतीत्यनापत्तेः । न च हिरण्यपूर्वंकशिपुपदवाच्यत्वेनाऽसुरविशेषे कशिपुपदस्य लक्षणा, इतरत् तात्पर्यग्राहकमिति वाच्यम् । बाधादिप्रतिसन्धानाऽभावेऽपि बोधात् । रूढि-प्रयोजनान्यतराऽभावेन काव्ये नेयार्थदोषापत्तेश्चेति यथोक्तमेव श्रेयः । आदैजुद्देशेन वृद्धिपदाऽभेदो विधेयः । स्पष्टश्च पदार्थयोरभेदः 'अथ गौरित्यत्र कः शब्दः' इति भाष्यार्थतया कौस्तुभे उक्तः ।

न च वृद्धिपदोद्देशेनाऽदैजभेद एव विधेयोऽस्तु । एवं चाऽऽनुपूर्वीव्यत्ययोऽपि न कल्प्यः । पदविशेष्यकशक्तिग्रहस्येवार्थविशेष्यकशक्तिग्रहस्याऽप्यङ्गीकारात् । 'अदेङ्गुणः' इत्यादावदेङुद्देशेन गुणपदाऽभेदस्य विधानान्नाऽनुपपत्तिरिति वाच्यम् । पदेनाऽर्थस्मरणाय सम्बन्धज्ञानविधया हि शक्तिग्रहस्योपयोगात् । अर्थविशेष्यकशक्तिग्रहस्यैवौचित्यमिति भाष्याद्याशयात्' ।–इति ख. पाठः । 'यथोक्तमेव श्रेयः' इति पर्य्यन्तं ग. पाठोऽपि ।

२. क. ग. पाठः ।

३. क. ग. पाठः । ख. पुस्तके तु क. ग. पाठस्थाने अय पाठः–'व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचिदिति पक्षे तु 'वृद्धिशब्देनाऽऽदैच एव बोद्धव्या.' 'इत्यर्थस्य सत्त्वेन यथाश्रुतमेव साधु ।'

वृद्धिपदाऽभिन्नाः' इति बोधः। अपरे तु अयं पक्षोऽयुक्त एव। सर्वशब्दानां सर्वार्थवाचकत्वेऽपि वाचकत्वस्य गृहीतस्यैव बोधजनकतया, तद्ग्रहस्य च व्यवहारतः, सङ्केतेन वा जायमानत्वात् संज्ञासूत्राणां च सङ्केतरूपतया-ज्ञातशक्तिज्ञापकत्वेन विधित्वसम्भवात्।

([1]विनिगमनाविरहात्—'आदैचो वृद्धिपदेनैव ग्राह्याः' इति नियमस्याप्यापत्तावाकारादीनां स्वशब्दैर्व्यवहाराऽनापत्तिः) आदैक्षु वृद्धिपदवाच्यत्वोपदेशः, वृद्धिपदे चाऽऽदैज्वाचकत्वोपदेशः, नान्यत्रेत्यत्र वक्तृच्छाया एव नियामकत्वात् तेषां यदृच्छाशब्दत्वेन व्यवहारः, 'स्वेच्छया संज्ञाः क्रियन्ते' इति च व्यवहारः। एतदुपदेशरूपसङ्केतात् प्राक् तत्र संज्ञात्वाऽग्रहाच्च संज्ञानामनित्यत्वव्यवहारोऽपि 'तद्धितार्थ' (२।१।५१) इति सूत्रभाष्यादौ।

अत एव संख्यासंज्ञासूत्रे तत्तत्संज्ञाकरणज्ञानरूपप्रकरणादन्यार्थाऽग्रहणरूपनियमः कृत्रिमाऽकृत्रिमन्यायमूलतयोक्तः। वाचकताबोधकत्वेऽपि तदनुत्पादकत्वान्न शब्दार्थसम्बन्धनित्यताहानिः। अत एव संज्ञाशब्दानां लौकिकत्वम्। यद्वा, लौकिकत्वं वेदमात्रप्रसिद्धशब्दभिन्नत्वम्। तत्र शास्त्रीयाणां शिष्टप्रयुक्तत्वेन साधुत्वाच्छास्त्रविषयत्वे न विवादः।

देशभाषानुसारेण क्रियमाण–'कूची' इत्यादीनां तु न साधुत्वम्। अनादिशिष्टप्रयोगाऽभावात्। नाऽप्यसाधुत्वम्, समाने प्रवृत्तिनिमित्तेऽन्वाख्यातस्याऽभावेन तस्याऽसाधुत्वबोधकाऽभावात्। तत्र हि शब्दः प्रवृत्तिनिमित्तम् (इति[1])। तदुक्तम् ऋलृक्सूत्रे भाष्ये—'समाने प्रवृत्तिनिमित्तेऽन्वाख्यातोऽनन्वाख्यातस्य निवर्त्तकः, यथा देवदत्तशब्दो 'देवदिण्ण'शब्दं निवर्त्तयति' इति। उभयबहिर्भूतत्वेऽपि न शास्त्रविषयता। अत एव लृतकस्य त्रयीपक्षे, चतुष्टयीपक्षे वोक्तरीत्योभयबहिर्भूतत्वेऽपि शास्त्राऽविषयत्वाद् दध्य्लृतकायेत्यादौ यणादेशार्थत्वम् ऋलृक्सूत्रलृकारस्य खण्डितं वार्त्तिककारैः।

वस्तुतोऽन्वाख्यातेन निवृत्तिर्यथाऽसाधुत्वबोधिका, तथा शिष्टाऽप्रयुक्तत्वमप्यसाधुत्वबोधकम्। शास्त्राऽन्वितस्यापि वचन्तीत्यादेः शिष्टाऽप्रयोग-

---

१. ग. पाठः।

मात्रेणाऽसाधुताया वैयाकरणै रङ्गीकारादिति तेषाममाधुत्वमेव। त्रयीपक्षाश्रयणेन यत् तत्र परिहारान्तरमुक्तं तत्तु पक्षान्तरैरपि परिहारा भवन्तीत्याशयेनेति भाष्ये स्फुटम्। नैतावता चतुष्टयीपक्षे शास्त्रविषयत्वमित्यङ्गीकर्त्तु युक्तम्। पक्षभेदेन तद्विषयत्वाऽतद्विषयत्वयोरयुक्तत्वात्। एकत्र साधुत्वाऽसाधुत्वयोः पक्षभेदेन 'न वेति' (१।१।४४) सूत्रे भाष्ये तिरस्कारादिति मञ्जूषायां विस्तर इति वदन्ति।]

[1]केचित्तु कार्यकालपक्षे यत्र वृद्धिस्तत्रादैजित्यु[2]पतिष्ठत इत्यर्थस्य सत्त्वाद् वृद्धिशब्दस्य प्राथम्यमेव युक्तम्। अत्र पक्षे यथा ज्योतिष्टोम-राजसूयादिशब्दानां यागविधावेव यागसामानाधिकरण्यान्नामधेयत्वावगतिर्न तु वाक्यान्तरेण, तथा 'मृजेर्वृद्धिः' (७।२।११४) इत्यादावेव सामानाधिकरण्यान्नामधेयत्वा[3]ऽवगतिः।

('मृ[4]जेर्वृद्धिः' (७।२।११४) इत्यादौ तद्वाचकपदकल्पनयाऽर्थोपस्थित्यङ्गीकारान्न शाब्दबोधे वृत्त्या पदजन्यपदार्थोपस्थितेः कारणत्वस्य हानिः। वृद्धिरादैजित्यादिकं तु 'इको गुणवृद्धी' (१।१।३) इतिवदुपस्थापकम्।) उपस्थाप्याऽर्थस्योपस्थापकेन वृद्ध्यादिपदेन वृद्धिर्यस्येत्यादौ वृत्त्या बोधनात् परं संज्ञासूत्रत्वव्यवहारः। अत्र पक्षे विधिवाक्येनैव वृद्धिसंज्ञाविशिष्टानामादैचां भाव्यमानत्वात् सवर्णग्रहणाप्राप्त्या तपरत्वमसन्देहार्थम्।

न च 'वृद्धिर्यस्याचामादिः' (१।१।७३) इत्यादौ (आ[5]दैचामुपस्थितौ) सवर्णग्रहणं दुर्वारमिति वाच्यम्। तादृशलक्ष्याऽभावेनेष्टापत्तेः। क्वचिद् विधिवाक्यस्योपजीव्यत्वेन प्राधान्यात् तन्निर्णीताऽर्थग्रहस्योचितत्वा[6]च्चेत्याहुः।

१. 'केचित्तु' इत्यस्य स्थाने 'आद्येऽपि' इति ख. पाठः।
२. 'तत्रादैच उपतिष्ठन्ते' ख. पाठः; ३. 'नामधेयत्वापत्तिः' ख. पाठः।
४. क. ग. नास्ति; ख. पाठः; ५. क. ग. नास्ति।
६. 'इत्याहुः' इति पाठः ख. नास्ति।

[परे तु[1] कार्यकालपक्षे ऽपि संज्ञासूत्राणां न भवदुक्तोऽर्थः। 'ष्यङः सम्प्रसारणम्' (६।१।१३) इति सूत्रे 'कार्यकालं संज्ञापरिभाषम्' भस्येत्युपस्थितमिदं भवति, 'यचि भम्' (१।४।१८) इति भाष्याऽसङ्गतेः। भवदुक्तरीत्या यचीत्येव वक्तुं युक्तत्वात्। ('अथ[2] संज्ञाधिकारः संज्ञासम्प्रत्ययार्थः' इति वार्त्तिकाऽसङ्गतेश्च। न हि पक्षान्तरेण शास्त्रजवाक्यार्थबोधे सम्भवति तदर्थं वचनारम्भो युक्तः। किञ्चोपस्थाप्यार्थस्य 'वृद्धिर्यस्य' (१।१।७३) इत्यादौ वृत्त्या बोधनात् संज्ञासूत्रत्वं वा, 'इको गुणवृद्धी' (१।१।३) इत्यादिवत् पदोपस्थापकत्वात् परिभाषात्वं वेत्यत्र विनिगमकाऽभावः। अपि च तत्रापि वृद्धिपदश्रुत्या आदैच्पदोपस्थित्या तत्पदोपस्थितानामेव वाक्यार्थान्वये तेषां वृद्धिपदेन वृत्त्योपस्थितिरित्यत्राऽपि न मानम्। अपि च 'मृजेर्वृद्धिः' (७।२।११४) इत्यादिसूत्रस्थवृद्ध्यादिपदानां तदुपस्थितिसम्पत्त्या चरितार्थानां स्वोपस्थापितपदार्थेऽभेदान्वये मानाऽभावेन ज्योतिष्टोमवाक्याद् वैलक्षण्येन तत्र नामधेयता दुरुपपादा। ज्योतिष्टोमवाक्ये तु पदद्वयस्याऽपि वाक्ये श्रवणात्तस्य फलान्तराऽभावाच्च वाक्यार्थान्वयित्वेन नामधेयता सूपपादा।)

तस्मात् 'भिदेर्गुणः' (७।३।८२) इत्यादौ श्रुते गुणपदार्थजिज्ञासायाम् 'अदेङ् गुणः' (१।१।२) इत्युपस्थित्या तदर्थबोधरूपे शक्तिग्रहे वृत्ते, विधिवाक्यार्थबोध इत्येव तद्विषये कार्यकालपक्षशरीरम्। (तत्त[3]त्प्रदेशेषु सर्वत्र तत्तत्पदशक्तिग्रहपूर्वकं वाक्यार्थबोध इति तात्पर्यम्। न च यत्र कुत्रापि प्रदेशे शक्तिग्रहे वृत्ते पुनः प्रदेशान्तरे तद्ग्रहो व्यर्थ इति वाच्यम्, तत्प्रदेशस्थस्यैव तत्रार्थे शक्तिरिति सम्भावनया प्रदेशान्तरस्थे बोधाऽनापत्त्या सर्वप्रदेशेषु शक्तिग्रहावश्यकत्वात्)।

एवं च तपरत्वं तत्पक्षेऽपि त्रिमात्रादिव्यावृत्त्यर्थम्। वृद्धिशब्दस्यादौ पाठो मङ्गलार्थः। 'एतदेकमाचार्यस्य मृष्यताम्' इति भाष्ये एकपदं प्रथमार्थकम्। 'अपृक्त एकाल्प्रत्ययः' (१।२।४१) इत्यादौ तु क्वचिदुद्देश्यवाचकस्य

---

१. क. ग. पाठः।

२. ग. नास्ति, क. पाठः।

३. ग. नास्ति, क. पाठः।

प्रथमप्रयोग एव साधुत्वम्, न परप्रयोगे इत्यर्थकत्वम्, 'यच्छब्दयोगः प्राथम्यम्' इत्यादेरिति भ्रमवारणाय न तथाकरणमपि सूत्रकारस्य। प्रकारान्तरेण तु संज्ञासूत्रघटकपदानां विधिघटकपदानां च सर्वेषां पदैकवाक्यतयाऽन्वयो दुरुपपाद एव। एकवृद्धिपदाऽनन्वयस्य तदवस्थत्वात्।

न चैकं वृद्धिपदमनुवादः। ईदृशकल्पनापेक्षया मदुक्तप्रकारस्यैवौचित्यात्। एवञ्च संज्ञासूत्रत्वमप्येषामाञ्जस्येनोपपद्यते। किञ्च, भवदुक्तरीत्या संज्ञासूत्रार्थे[1] यस्याऽतो गुण इति प्रथममुपस्थितं तत्राऽदेङ्पदोपस्थितौ गुणपदवददेङ्षु इत्यर्थे तत्पदमत्त्वांशे विधिर्विशिष्टस्य चाऽनुवाद्यतेति महती दुरवस्थेत्याहुः। अत्र चाऽतद्भावितानामपि ग्रहणम्। तद्भावितमात्रग्रहणे मानाऽभावात्। शालीयाद्यसिद्धेश्च। कुत्वं त्वयस्मयादित्वेन भत्वान्न। उभयसंज्ञकत्वाच्च संहितापाठे जश्त्वं भवत्येवेति दिक्।

**'भूवादयो'** (१।३।१)—भूश्च, वाश्चेति द्वन्द्वः। आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः। ततः 'आदि'शब्देन बहुव्रीहिः। तेन भूप्रभृतयो वासदृशा इत्यर्थः।

केचित्तु भूसदृशा वाप्रभृतय इत्यर्थः। धातुपाठे चाऽऽदावदादिगणः, तस्य चाऽऽदौ 'वा'धातुः। 'अदिप्रभृतिभ्यः' (२।४।७२) इत्यत्र बहुव्रीहितत्पुरुषयोरेकशेषः। ध्वनितं चेदम् अत्रैव भाष्ये, चुरादिमनोरमायां चेत्याहुः। स्वस्मिन् स्वसादृश्यं च प्रयोगभेदेनोपपाद्यम्। तेन भूवोः संज्ञासिद्धिः। सादृश्यं च क्रियावाचकत्वेन तदाह—**क्रियावाचिन इत्यादि**।

क्रियावाचिनः किम्[2]?

विकल्पार्थकनिपात'वा'शब्दस्य धातुत्वे, प्रादिपदिकत्वाऽभावात् सुब-

---

१. 'सूत्रार्थेऽतो गुण इत्यादावदेङ्' क. पाठः।

२. इतोऽग्रे याः पश्यसीत्यादौ 'आतो धातोः' (६।४।१४०) इति मा भूदिति। न चाऽर्थनिमित्तकटापो बहिरङ्गत्वेन लोपेऽसिद्धत्वम्, 'नाजाऽनान्तर्ये' इति निषेधात्। ततोऽपि बहिर्भूताऽर्थनिमित्तकविभक्तिसापेक्षत्वेन लोपस्यैव बहिरङ्गत्वाच्च। नाऽप्यस्य लाक्षणिकत्वम्।

भा[1]वे, पदत्वाऽनाप[2]त्तेः। ततः 'शकधृष' (३।४।६५) इत्यादि तुमुनापत्तेश्च (वा[3]र्थस्य क्रियाकाङ्क्षादर्शनेन तदर्थविकल्पस्य क्रियात्वाभावात् 'क्रियावाचिनः' इत्युक्तौ न दोषः)। न च प्रत्यासत्त्या धातुपाठपठिताऽर्थानामेव ग्रहणान्न दोषः। तद्रहितधातुपाठस्यैव प्रवृत्तसूत्रभाष्ये ध्वनितत्वात्। अर्थनिर्देशोऽपि तस्योपलक्षणत्वाच्च। अत एव 'पराभवति' 'केशान् वपति' इत्यादौ धातुत्वम्।

**क्रियात्वं च**—साध्यत्वेन प्रतीयमानत्वम्।

**साध्यत्वं च**—क्रियान्तराऽऽकाङ्क्षाऽनुत्थापकतावच्छेदकवैजात्यम्। अस्त्यादीनामपि क्रियावाचकत्वम् (ष[4]ट्सु क्रियाप्र[5]कारकेषु 'जायते', 'अस्ति', 'विपरिणमते' इत्यादिष्वस्तेर्गणनात्), भूतभविष्यत्कालसम्बन्धाच्च[6]। आसन्नविनाशमुद्दिश्य किं करोतीति प्रश्नेऽस्तीत्युत्तराच्च।

उपसर्गास्तु द्योतका एव, धातव एव वाचका इति प्रपचादिसमुदायानां न धातुत्वम्। अपाठाच्चेति सर्वं भाष्ये स्पष्टम्। भ्वादयः किम्[7]?

---

'नकारजावनुस्वारपञ्चमौ झलि धातुषु।
सकारजः शकारश्च षाट्टवर्गस्तवर्गजः॥' ?

इत्यभियुक्तोक्तेर्भ्वादिषु लाक्षणिकानामपि दर्शनेन, तद्विषये तत्परिभाषाऽप्रवृत्तेः। 'आतो धातोः' (६।४।१४०) इत्यत्र प्रतिपदोक्त आकारो गृह्यत इति तु वक्तुमशक्यम्। 'पशुषः' इत्याद्यसिद्ध्यापत्तेः। पशुं सनोतीति विट्। 'विड्वनोः' (६।४।४१) इत्यात्वम्। अत एव 'जहातिसाम्' (६।४।६६) इत्यादि निर्देशाः सङ्गच्छन्ते। न चाऽऽतोऽनाप' इति वार्तिककृन्मते क्रियावाचिन इति विशेषणं व्यर्थम्। यथाश्रुतसूत्रमते सत्वात्। ख. ग. पाठः। क. पुस्तके तु कुण्डलितः।

१. 'सुबभावे आकारान्तस्य' ख. पाठः; २. 'नापत्तेश्च' ख. पाठः।
३. क. ग. पाठः; ४. क. नास्ति।
५. 'क्रियारूपेषु परिणामिषु जायते' ग. पाठः; ६. 'चः' क. नास्ति।
७. शय्यते इत्यादिभावार्थकतिङन्तानां हिरुगादीनां च मा भूत्। तत्र धातुत्वे 'आदेच' (६।१।४५) इत्यात्वापत्तिः। तत्र नैमित्तिकं धातुत्वनिमित्त-

(आणवयति, वट्टयतीत्यादौ धातुत्वे शास्त्रविषयतया साधुत्वापत्तेः। सूत्रशेषे भाष्ये स्पष्टमेतत्।)

स्तंभ्वादीनां तु सौत्राणामुदित्करणेन, तत्प्रकृतिकच्ल्यनुवादेनाऽङ्विधानेन च[2], सार्वधातुके परे विकरणविधानेन च धातुत्वं ज्ञाप्यते। 'जुचङ्क्रम्य' (३।२।१५०) इत्यत्र पठितजोः, 'जपजभ' (७।४।८६) इत्यत्र पठितपसः, ऋतिप्रभृतीनां च धर्मिग्राहकमानात्, केषाञ्चिद् धात्वधिकारविहितकार्योद्देश्यत्वाद् बोध्यम्। 'चुलुम्प', 'ढुण्ढि', 'विक्लप्', इत्यादीनां 'बहुलमेतन्निदर्शनम्' इत्यनेनेति दिक्।

**प्राग्रीश्वरात्** (१।४।५६)—'रीश्वर'शब्दस्य च अधिरीश्वरे' (१।४।९७) इति सूत्रस्थस्य ग्रहणम्। रेफविशिष्टोच्चारणाच्च 'ईश्वरे तोसुन्' (३।४।१३)

---

कञ्चेति प्रकृतसूत्रभाष्ये स्पष्टम्। यदि त्वस्योपदिश्यमानैजन्तत्वाभावान्नाऽत्र प्रसक्तिरात्वस्य। किञ्च, षष्ठे आदेच इत्यत्र धातुग्रहणासम्बन्ध उक्तो भाष्ये। तर्हि आणवयति वट्टयतीत्यादीनां व्यावृत्तये पाठः। एतच्चात्रैव सूत्रशेषे 'आणवयत्यादिनिवृत्त्यर्थं पाठः' इति वदता, 'उक्तमपि' इति वदता च भाष्यकारेण ध्वनितम्। किञ्च, भूसादृश्यमन्यानभिहितक्रियावाचकत्व इति शिश्ये इत्यादि सुपरिहरम्। आणवयत्यादीनां धातुत्वे हि शास्त्रविषयतया साधुत्वापत्तिरिति भाष्यसंमतः पन्थाः। हिरुगादीनां क्रियासमानाधिकरणत्वाल्लिङ्गाद्यनन्वयित्वाच्च गौणं क्रियावाचकत्वं बोध्यम्। हिरुगादीनामव्ययपाठस्तु प्रातिपदिकाद्यभावेऽप्यकजाद्यर्थः स्यात्।

यत्तु तत्पाठसामर्थ्याद्धातुत्वाद्यभाव एव कल्प्यतामिति। तन्न। प्रधानबाधकल्पनापेक्षयाऽधिकृतविशेषणबाधकल्पनस्यैव न्याय्यत्वात्। यदि तु क्रियान्तराकाङ्क्षादर्शनेन तेषां न क्रियावाचित्वम्, तदाद्यम् (शय्यते) इत्येव प्रत्युदाहरणम्। न च कालस्याऽपि तदर्थत्वेन क्रियावाचकत्वाऽनुपपत्तिः। कालस्यापि धात्वर्थत्वात्। लकारास्तु द्योतका एव। कालावाचकभावार्थकलकारे दोषाच्च। भावार्थके 'शयितव्यम्' इत्यादौ दोषाच्च। इति ख. ग. पाठः। क. पुस्तके तु कुण्डलितः।

१. क. पाठः;

२. 'च' इति क. ग. नास्ति।

इत्यादिस्थस्य न ग्रहणम्। अन्यथा व्याप्तिन्यायेन तस्यैव ग्रहणं स्या[1]दिति स्पष्टं भाष्ये। तत्र 'रीश्वरात् प्राक्' इत्युक्तत्वेना[2]ऽध्यंशे सम्बन्धोऽस्त्येव। तस्य ततः प्राक् सत्त्वात्।

एतेन 'तद्विहितकर्मप्रवचनीयसंज्ञया निपातसंज्ञायाः समावेशो न स्यात्' इत्यपास्तम्। प्राप्तविभाषात्वाच्च 'विभाषा कृञि' (१।४।९८) इत्यत्र न दोषः। यद्वा, रीश्वरमभिव्याप्येत्यर्थः। ल्यब्लोपे पञ्चमी। प्राग्ग्रहणं त्वेकसंज्ञाधिकारेऽपि गत्युपसर्ग-कर्मप्रवचनीयसंज्ञाभिः समावेशार्थम्। 'प्राक्निपाताः सन्तो गतयः' इत्यर्थात्। तेनाऽव्ययत्वाद् गतिसंज्ञकेषु सुपः श्रवणं न। आद्यपक्षे तु प्रागित्यावर्त्यमित्याहुः।

न चाऽव्ययसंज्ञाप्रकरण एव 'चादयोऽसत्त्वे' (१।४।५७) इत्यादि प्रकरणमस्तु। माऽस्तु च निपातसंज्ञा। एवं चैकसंज्ञाऽनधिकारात् संज्ञासमावेशोऽपि सिद्ध्यतीत्यपरमनुकूलमिति वाच्यम्। कर्मप्रवचनीयसंज्ञयाऽपि गत्यादीनां समावेशाऽऽपत्तेः। तथा च जपमनुप्रावर्षदित्यादौ 'गतिर्गतौ' (८।१।७०) इति निघातः स्यात्। [मह[3]ासंज्ञाकरणं तु 'नियमेन पातयन्ति स्वार्थमन्यस्मिन्' इत्यन्वर्थलाभाय। तेनैषां द्योतकत्वं बोधितम्। अत एव 'उरीक्रियते', 'साक्षात्क्रियते', 'अनुभूयते गुरुः' इत्यादौ कर्मणि लकारः सङ्गच्छते। न चैवं तत एव पशुशब्दादेर्व्यावृत्तिसिद्धौ, 'चादयः' इत्यत्र 'असत्त्वे' इति व्यर्थमिति वाच्यम्, स्पष्टार्थत्वात्। अत एव च पदैकदेशानां चादीनां न संज्ञा। (अ[4]र्थवत्त्वाऽभावाच्च)।]

पादपूरणार्थानां तु 'निपाताः' इति बहुवचनात् सा (य[5]द्वा 'निपतनं निपातोऽनेकेष्वर्थेषु येषाम्' इत्यर्श आद्यच्। तेन निपातानामनेकार्थत्वं सिद्धमित्याहुः।) 'असत्त्वे' इति न प्रसज्यप्रतिषेधः, वाक्यभेदासमर्थसमासाऽऽपत्तेः। तद्ध्वनयन्नाह— **अद्रव्येति**।

---

१. 'स्यादितीदमुक्तमिति स्पष्टं भाष्ये' ख. पाठः।
२. 'अवध्यंशे' ग. पाठः;　३. क. कुण्डलितोऽयं पाठः।
४. क. ग. नास्ति;　५. क. नास्ति, ख. ग. पाठः।

सत्त्वत्वं तु–लिङ्गसंख्याकारकाऽन्वयित्वम् । न च पर्युदासपक्षे 'वातीति वा' इत्यस्य क्रियाविशिष्टद्रव्यवाचकतया, क्रियायाश्च द्रव्यभिन्नत्वेन, निपातत्वं स्यादिति वाच्यम् । द्रव्यवाचकपशुशब्दादेरपि त्रिकं प्रातिपदिकार्थादिपक्षे लिङ्गाद्यर्थकत्वेन, लिङ्गादेश्चाऽद्रव्यत्वेन, व्यावर्त्याऽलाभेन सामर्थ्याद्द्रव्य[1]विशेष्यार्थकत्वविवक्षणेनाऽदोषात् । (म[2]हासंज्ञया वारणाच्च) ।

वस्तुतस्तु पर्युदासेऽनर्थकानां निपातत्वाऽनापत्त्या प्रसज्यप्रतिषेध एवोचित इत्याहुः । चादयः किं ? स्वरादिमात्रपठिताऽसत्त्ववाचकानां मा भूत् । तथा सति निपातत्वादाद्युदात्तत्वं स्यादिति बोध्यम् । ('लोधं[3] नयन्ति पशु मन्यमानाः' इत्यत्र तु भ[4]वत्येव निपातत्वम् । तत्र हि पश्विति सम्यगर्थेऽव्ययम् । 'लुब्धमृषिं नयन्ति पशुं मन्यमानाः' इति साऽनुस्वारपाठस्तु निरुक्तेऽसाम्प्रदायिक एव । 'लोध'शब्दार्थनिर्णयाय तस्य प्रवृत्तत्वेन पशुशब्दांऽशेऽन्यथापाठे मानाऽभावात् । अत एव 'लोध'मित्यनवगतम्' इति तद्भाष्ये व्याख्यातम् । स्पष्टं चेदं प्रकृतसूत्रे हरदत्तग्रन्थे, दृश्धातौ माधवग्रन्थे च ।)

**गतिसंज्ञाश्चेति—**चकार उपसर्गसंज्ञासमावेशाऽर्थः । तेन 'प्रनिप्रणीतम्' इत्यादौ 'गतित्वाद् गतिरनन्तरः' (६।२।४९) इति स्वर उपसर्गत्वाण्णत्वादि च सिद्ध्यति । 'योग'ग्रहणन्तु यदर्थे प्रादीनामन्वयस्तं प्रत्येव गत्युपसर्गत्वमिति बोधनार्थम् । प्रत्यासत्तिन्यायात् । अत एव वाऽभेर्ण्यर्थविशेषकत्वेऽभिसावयतीत्यादौ षत्वं न ।

**'प्रादयः'** (१।४।५८)**—**इति योगविभागकरणं तु क्रियायोगं विनाऽपि निपातत्वाय । तेन 'प्रगत आचार्यः प्राचार्यः' इत्यादावव्ययपूर्वपदप्रकृतिस्वरः सिद्ध्यतीति **प्राञ्चः ।**

---

१. 'द्द्रव्यमात्तर्थकत्व' ख. पाठः; २. क. ग. नास्ति ।

३. क. पुस्तके खण्डितः कुण्डलितश्च, ख. ग. पाठोऽयम् ।

४. 'स्यादेव' ख. पाठः ।

**केचित्तु** उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' (ग. १।१।३७) इति चाद्यन्तर्गणसूत्रेण तत्र निपातत्वसिद्धिरित्याहुः।

वस्तुतस्त्वेतद्योगविभागसिद्धमेव तत्रोपसर्गग्रहणमिति भाष्याशय इति दिक्। प्रपरेत्यादौ ('प्रकृतिवदनुकरणम्' इत्यतिदेशात् सुपो लुक्) अनुकार्याऽनुकरणयोरभेदविवक्षयाऽनुत्पत्तिरेव [वा]।

**निस्-निर्-दुस्-दुरिति—**'निसस्तपतौ' (८।३।१०२) 'निसो गते' (वा. ४।२।१०३) इत्यादि निर्देशात् 'हयवरट्'सूत्रे भाष्ये 'इदुदुपधस्य' (८।३।४१) इत्यस्य 'इदुदुपधसस्य' इत्यर्थं कृत्वा 'दुष्कृतम्' इत्युदाहरणात्) 'उपसर्गस्याऽयतौ' (८।२।१९) इत्यत्र (दुसो) वामनोक्तेश्च सान्तौ। 'निरः कुषः' (७।२।४६) 'सुदुरोरधिकरणे' (वा. ३।२।४८) इति निर्देशाद्रेफान्तावपीति बोध्यम्।

[न[4]नु 'निरः कुषः' (७।२।४६) इत्यादि शास्त्राणि निसि न प्रवर्त्तेरन्। न च प्रयोग एव शास्त्रप्रवृत्त्या प्रयोगस्थानामिदमनुकरणम्। 'दाधाघ्विति' (१।१।२०) सूत्रस्थभाष्यस्वरसाच्च। प्रयोगे चोभयोरपि रान्तत्वान्न दोषः। क्वचित्त्वगत्या प्रयोगाऽर्थं कल्पितस्याऽप्यनुकरणम्, यथा 'लटः शतृशानचौ' (३।२।१२४) इत्यादाविति न दोष इति वाच्यम्। एवमपि निस्सम्बन्धिनिरो लाक्षणिकतया तदनुकरणादिति चेन्न, 'एकाच उपदेशे' (७।२।१०) इति सूत्राऽनन्तरं 'निरः कुषोऽनिष्ठायाम्' इति लघुभूतन्यासेन सिद्धे 'स्वरतिसूति' (७।२।४४) इति विकल्पप्रकरणे 'निरः कुषः' (७।२।४६) 'इ[5]ण् निष्ठायाम्' (७।२।४७) इति गुरुभूतन्यासकरणस्योपसर्गद्वयेन रूपस्य सिद्ध्या वैयर्थ्येन, रान्तोपसर्गग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्तिज्ञापनार्थतयाऽदोषात्। तत्र प्रमाणानां सामान्ये पक्षपातात्, व्याख्यानाच्च 'अनिष्ठायाम्' इति पर्युदासे प्रत्ययत्वेनैव सादृश्यम्' न कृत्त्वेनेति, पर्युदासेन कृत्येवेदं प्रवर्त्तेत' इति न शङ्क्यम्।

---

१. क. ग. नास्ति; २. ग. पाठः।

३. क. ग. पाठ; ४. क. कुण्डलितोऽन्ते त्रुटितश्च, ख. पुस्तकपाठः।

५. इत आरभ्य 'लाघवमित्याहुः।' इति पर्यन्तं ग्रन्थोऽयं क. त्रुटितः। ख. तु दृश्यत एव। ग. नास्ति।

न च 'कृ सृ भृ' इति क्रादिनियमात् 'निश्चुकोपिथ' इत्येकमेव स्यात्। यथान्यासे तु न। 'निषेधप्रापितस्यैवाऽयन्नियमः' इत्यर्थस्य वक्ष्यमाणत्वादिति वाच्यम्, नियमस्य सजातीयत्वेनोपसर्गाऽनिमित्तनिषेधप्रापितस्यैव नियमात्। 'विकल्पप्रापितस्याऽपि नियमः' इति वादिनां मते यथान्यासे दुर्वारत्वेनेष्टापत्तेश्च। मदुक्तरीत्या वारणे तु समम्।

अत एव दुर उपसर्गत्वप्रतिषेधे दुसोऽपि निषेधः। तेन 'दुःषेधनि' इति चिन्त्यम्। एवं च निष्कोष्टा, निष्कोषितेति रूपद्वयसिद्धये विकल्पप्रकरणे पाठ आवश्यकः। अत एव क्वचिन्निस इति, क्वचिन्निर इति वैलक्षण्येन निर्देशः सूत्रकृतः सङ्गच्छते, रान्ते उभयग्रहणाय। अत एवाऽसिद्धत्वमपि न। न च यथान्यासेऽपि 'निरः कुषोऽनिष्ठायाम्' इत्येव कुतो न सूत्रितम्, 'यस्य विभाषा' (७।२।१५) इत्यस्य प्राप्त्या निष्ठायां विकल्पस्याऽप्राप्तेरनिष्ठायामित्यस्य वैयर्थ्यापत्तेः। सामर्थ्येनानुमानिकवचनकल्पने तु न किञ्चिल्लाघवमित्याहुः।

[अत्र[1] केचित् सान्तग्रहणे रान्तस्याऽग्रहणमेव। यत्र च रुत्वमसिद्धं तत्र रान्तग्रहणेऽपि न सान्तग्रहणम्। तद्दृष्ट्या रुत्वस्याऽसिद्धत्वेन तयोर्निर्दुरत्वाऽभावात्। यत्र तु रुत्वस्य सिद्धत्वम्, यथा षत्वणत्वयोः, तद्विषयोपसर्गत्वप्रतिषेधपरे 'दुरः षत्वणत्वयोः' (वा. ८।४।१६) इति वार्तिके कृतरेफसान्तस्यापि ग्रहणम्। उपसर्गसंज्ञायां [च] कार्यकालपक्षस्यैवाश्रयणीयत्वात्।[2] 'दुःस्थितम्' इत्याद्यर्थे 'दुःष्ठितम्' इत्यादिशिष्टप्रयोगाऽदर्शनाच्च। तद्वार्त्तिकस्य णत्वविषयोदाहरणे 'इह णत्वं मा भूत्' इति भाष्योक्तेश्च। सान्ताऽग्रहणे तु 'दुर्भवानीत्यादौ णत्वसहितप्रयोगस्यापीष्टत्वेना(ऽत्र ?) णत्वमपि यथा स्यात्' इति वक्तुं युक्तम्।

किञ्चैवं 'सुषामादिषु' (८।३।९८) 'दुष्ठु'शब्दपाठो व्यर्थः स्यात्। स हि 'अपदुस्सुषु स्थः' (उ. २५) इति दुःपूर्वकस्थाधातोः कुप्रत्यये साधुः। त्वद्रीत्या हि दुस्पूर्वकादेव कुप्रत्ययमङ्गीकृत्योपसर्गादित्येव षत्वे सिद्धे

१. क. ग. पाठः।

२. 'कार्यकालपक्ष एवेति तत्राऽपि रुत्वस्य सिद्धत्वात्। दुस्थितमित्या' ग. पाठः।

तद्वैयर्थ्यं स्पष्टमेव। न चास्य रूढत्वेनावयवार्थाऽभावादुपसर्गत्वाऽभावः। अत्यन्तरूढेषु प्रनिष्ठा-निष्ठादिशब्देषु षत्वाऽनापत्तेः। अर्थवत्त्वारोपेणेति चेत्। प्रकृतेऽपि तुल्यम्। न चैवं दुसः पाठो व्यर्थः। 'दुरयते' इत्यादौ रुत्वस्याऽसिद्धत्वेन लत्वाऽभावार्थत्वात्। दुरस्तु 'दुलयते' इति रूपम्। एतेन 'दुःषुणोति' इति 'उपसर्गात्' (८।३।६५) इति सूत्रे हरदत्तोक्तं चिन्त्यमित्याहुः]।

(परे तु[1] दुस्नास्त्येव, निस्निर्दुरामिव सूत्रभाष्यादावव्यवहृतत्वात्। वृत्तिकारादीनां तु प्रमाद एव 'निरः कुषोऽनिष्ठायाम्' इत्येव सूत्रयितुमुचितम्।

यत्तु 'इदुदुपधस्य सस्य' इत्यर्थं हयवरट्सूत्रभाष्ये उक्त्वा 'दुष्कृतम्' इत्युदाहरणं दत्तम्, तन्न तत्रत्यसग्रहणस्य 'अथवा इदुद्भ्यां परं विसर्जनीयं विशेषयिष्यामः' इत्युत्तरभाष्यैकवाक्यतयोपलक्षणताया आवश्यकत्वान्नाऽर्थसाधकम्। मूलं तु वृत्त्यनुरोधेनेत्याहुः)।

**न वेति** (१।१।४४)—'इति'शब्दो मध्यमणिन्यायेनोभाभ्यां सम्बध्यते, व्याख्यानात्। स च लोकेऽर्थपदार्थकस्य शब्दपदार्थकत्वं करोति। (उप[2]स्थितत्वात्)। यथा गवित्ययमाहेति। इह तु 'स्वं रूपम्' (१।१।६८) इति परिभाषणा[3]त् शब्दपदार्थकस्यार्ऽर्थपदार्थकत्वम्। इदमेव इतेः पदार्थविपर्यासकृत्त्वं नाम। तेनाऽर्थ एव संज्ञी, संज्ञा च। शब्दस्यैव संज्ञात्वे, 'हृक्रोरन्यतरस्याम्' (१।४।५३) इत्यत्रोपस्थितिर्न स्यात्। तस्यैव संज्ञित्वे तु 'विभाषा-श्वेः' (६।१।३०) इत्यस्य 'न'शब्दो 'वा'शब्द आदेश इत्यर्थः स्यात्। संप्रसारणग्रहणानुवृत्तावपि पर्यायः स्यात्। 'न वा' इत्यखण्डनिपातार्थनिषेधस्तु न गृह्यते। 'इति'शब्दस्य प्रत्येकं सम्बन्धात् 'न' इति, 'वा' इतीत्यर्थात्[4]। अत एव संज्ञाकरणं चरितार्थम्। अन्यथा विभाषाप्रदेशेषु 'न' इत्येव वदेत्।

---

१. क. ग. नास्ति; ख. पाठः;　　२. ख. पाठः।
३. 'परिभाषणात् तत्र शब्दपदार्थकस्य' ख. पाठ.।
४. 'अर्थात्' इति ख. नास्ति।

न च तयोरपदार्थतयाऽनन्वयप्रसङ्गः। विकल्पवाचिपदस्य तयोर्लक्षणाभ्युपगमात्। तथा च लक्षणातात्पर्यग्राहकमिदं सूत्रम्। सा चाऽर्थद्वये सूत्राऽनुरोधात् क्रमेणैव (जनिताऽन्वयबोधनैराकाङ्क्षादिकमपि सूत्रबलादेव न)।[1] (केचित्तु[2] अर्थस्य संज्ञात्वं न दृष्टचरम्। अनेकविधिवाक्येषु विकल्पवाचिपदलक्षणागौरवग्रस्तं चेतीति शब्दसम्बन्धसामर्थ्याद् विभाषेत्युपस्थितार्थाक्षिप्ततद्वाचकशब्दमात्रस्य संज्ञात्वमित्याहुः।) तत्र 'विभाषोपपदेन' (१।३।७७) इत्यादि प्राप्तविभाषायां नाऽस्योपयोगः। तद्विषये सर्वत्र 'स्वरितञितः' (१।३।७२) इत्यादिना नित्यमात्मनेपदे प्राप्ते तस्य पक्षे निवृत्तिमात्रार्थत्वात्[3]।

'विभाषोर्णोः' (१।२।३) इत्याद्यप्राप्तविभाषास्वपि नोपयोगः। तस्य पक्षे ङित्वविधिमात्रार्थत्वात्। अप्राप्तत्वेन निषेधाऽसम्भवाच्च[4]।

किन्तूभयत्र विभाषासु 'विभाषा श्वेः' (६।१।३०) इत्यादिकास्वावश्यकम्। तत्र हि संज्ञासूत्राऽभावे यदि विधिमुखेन प्रवृत्तिस्तर्हि पित्स्वेव विकल्पः स्यात्। कित्सु तु यजादित्वान्नित्यमेव सम्प्रसारणं स्यात्। निषेधमुखेन प्रवृत्तौ तु कित्स्वेव प्रवृत्तिः स्यान्न पित्सु। उभयथाप्रवृत्तिस्तु वैरूप्यलक्षणवाक्यभेदापत्तेर्वक्तुमशक्या। वस्तुतो भावतात्पर्यकतालाभेन पित्स्वेव प्रवृत्तिः स्यात्, कित्सु तु न स्यादेवेति बोध्यम्। संज्ञाकरणे तु श्रुतक्रमानुरोधात् पूर्वं निषेधः कित्सु प्रवर्त्तते। ततः किदकिद्रूपे सर्वस्मिन् लिटि ऐकरूप्यं प्रापिते सति, 'पक्षे भवति' इत्येकरूपेण विधिमुखेनैव विकल्पः।

---

१. क. ग. नास्ति, ख. पाठ।

२. क ग. पाठ.।

३. इतोऽग्रे—'ननु नेयं प्राप्तविभाषा, उपपदेन प्रतीयमाने कर्तृगामित्वे उक्तार्थानामप्रयोग इति न्यायेनाऽऽत्मनेपदाऽप्राप्ते। स्पष्टं चेदं विभाषोपपदेनेत्यत्र कैयटे इति चेन्न, कर्तृगामित्वविषये इति व्याख्यानस्यैवैतत्सूत्रस्थभाष्यप्रामाण्येनोचितत्वात्।' ख. पाठ., क. ग. नास्ति।

४. इतोऽग्रे—'और्णुवीत्यत्र तु परत्वात् सार्वधातुकमपिदिति नित्यं ङित्वमेव भवति।' ख. पाठः, क. ग. नास्ति।

न चोभयत्र विभाषार्थमावश्यकमप्राप्तविभाषास्वपि प्राप्नोति, **'घटायोन्मीलितं चक्षुः पटं न हि न पश्यतीति'** न्यायात् । एवं च 'विभाषोर्णोः' (१।२।३) इति सूत्रेण प्रोर्णुवीत्यत्राऽपि 'निषेधाश्च बलीयांसः' (१२३) इति सार्वधातुकम्' (१।२।४) इत्यस्य निषेधे, ततो विकल्पः स्यादिति वाच्यम्[1] ।

('विज[2] इट्' इत्यत्राऽगमस्यैव सम्भवेनार्थाधिकारादिहाप्यागमस्यैवेटो ग्रहणेनाऽदोषात् । तत्र लक्ष्यानुरोधेन व्यवस्था । एवं च सूत्रारम्भेऽपि लक्ष्यानुसरणस्यावश्यकत्वेन तत एव 'विभाषा श्वेः' (६।१।३०) इत्यादावप्युभयमुखेन प्रवृत्तिर्भविष्यतीति नार्थोऽनेन सूत्रेण । किञ्चाक्षिप्तशब्दमात्रं संज्ञेत्यप्यसङ्गतमेव । एकस्यार्थस्य समानफलकानेकसंज्ञाकरणस्य 'अनाकृतिः संज्ञा' इति वृद्धिसूत्रस्थभाष्येण तिरस्कारात् । विभाषापदस्य स्वबोध्यबोधके लक्षणेत्यपि न, निषिद्धलक्षणापत्तेः । तस्माद्भ्रूक्रोरित्यादौ लक्ष्यानुसारेणैवोभयमुखेन प्रवृत्तिर्वाच्या । एवं च 'विभाषा श्वेः' (६।१।३०) इत्यादावपि तथैव सिध्यतीति जातिव्यक्तिपक्षयोरुभयोरपि सूत्रं भाष्यकृता प्रत्याख्यातम् ।

**केचित्तु**—किदादिविषये परत्वाद् 'विभाषा श्वेः' (६।१।३०) इत्यस्यैव प्रवृत्तिरिति 'विधिमुखेनैवं प्रवृत्तिः' इति पक्षेऽपि न दोष इत्याहुरिति दिक् ।)

**स्वं रूपम्**—स्वं रूपमिति न संज्ञापरम्, पूर्वनिर्देशात् । रूपग्रहणेनाऽर्थ-

---

१. 'ततो विकल्पः स्यादिति वाच्यम् । 'विभाषा जसि' (१।१।३२) इत्यतो विभाषाग्रहणाऽनुवृत्त्या क्वाचित्कत्वाऽभ्युपगमेनाऽदोषात् । अत एवोभयशब्दे 'प्रथमचरम' (१।१।३३) इति विकल्पो नेति वक्ष्यमाणं सङ्गच्छते । अन्यथा तत्रापि 'न वेति' (१।१।४४) इत्यस्योपस्थितावुभयशब्देऽन्तरङ्गाया अपि निषेधे सर्वसाधारण्येन विकल्पः स्यात् । न चाऽन्तरङ्गत्वादेव तस्या न निषेधः, न वेत्युपस्थितिवैयर्थ्यापत्तेः । 'निषेधाश्च बलीयांसः' (१२३) इति न्यायाच्च । तत्र लक्ष्याऽनुरोधेन व्यवस्थेति दिक् ।' ख. पाठः; क. ग. पाठस्थाने ।

२. क. ग. पाठः, ख. नास्ति ।

स्याऽपि विवक्षेति भाष्यविरोधाच्च । तस्मात्संज्ञिपरं तदाह—**संज्ञीति** ।

'रूपं शब्दस्य संज्ञा' इति भाष्येऽपि संज्ञाशब्दः–'संज्ञायते' इति व्युत्पत्त्या बोध्यार्थपर इति न दोषः । 'राज्ञो यत्' इत्यादौ लौकिकव्युत्पत्त्योपस्थितार्थस्य प्रत्ययेन पौर्वापर्याऽसम्भवात्, (शब्दद्वारा व्याख्याने मानाऽभावात्), प्रातिपदिकादित्यनेनाऽभेदान्वयाऽसम्भवाच्च । सामर्थ्येन, बहुलक्ष्यसंस्काराऽनुरोधेन, तदर्थकशब्दमात्रग्रहणाऽऽपत्तौ नियमार्थं सूत्रम् । तत्र 'स्व'शब्दो न शब्दस्वरूपरूपाऽऽत्मवाची, रूपग्रहणवैयर्थ्याऽऽपत्तेः ।

न च 'रूप'ग्रहणाऽभावे आत्मीयवाचकतयाऽर्थस्यैव संज्ञित्वं स्यान्न शब्दस्येति तच्छङ्कावारणाऽर्थं 'रूप'ग्रहणमिति वाच्यम् । प्रतीतावुपदेशानपेक्षत्वादसाधारणत्वादन्तरङ्गत्वान्नियतोपस्थितिकत्वाच्च शब्दस्वरूपरूपाऽऽत्मवाचकस्यैव ग्रहणसम्भवेन तद्वैयर्थ्यस्य तदवस्थत्वात् । अर्था हि प्रतीतौ सम्बन्धग्राहकमुपदेशमपेक्षते, साधारणश्च, पर्यायैरपि प्रतिपादनात् । बहिरङ्गश्च, पदज्ञानजन्यबोधविषयत्वात् । अनियतोपस्थितिकश्च अनुकरणदशायामप्रतीतेः । तस्माद् रूपग्रहणसामर्थ्यादात्मीयवाची ।

तच्चार्थरूपम्, रूपशब्देन शब्दस्वरूपमेतदुभयं संज्ञीत्यर्थः । तत्राऽर्थो न विशेष्यः, उक्तयुक्तेः; किन्तु शब्दविशेषणम् । एवं चाऽर्थविशिष्टः शब्दः संज्ञीति फलितम् ।

---

१. क. ग. नास्ति ।

२. 'शब्दरूपाऽऽत्मवाची, नपुंसकनिर्देशापत्तेः; रूपग्रहणवैयर्थ्यापत्तेश्च' । ख. पाठः ।

३. क. पाठः ।

४. 'शब्दस्वरूपात्मवाचकस्यैव ग्रहणात्' ख. पाठः ।

५. 'सम्बन्धग्रहणमपेक्षते' ख. पाठः ।

६. 'किन्त्वात्मीयवाची' ख. पाठः ।

७. इतोऽग्रे—'न चाऽन्तरङ्गत्वादिना राजश्वशुरेत्यादौ राजन्शब्दस्यैव ग्रहणे सिद्धे सूत्रं व्यर्थम् । उपस्थितार्थत्यागे मानाऽभावेन तस्य विशेषणतयाऽन्वयस्याऽपि सम्भवादिति वाच्यम् । उक्तन्यायसिद्धार्थाऽनुवादेनैव सूत्रेण

(एवं[1] चेदं सूत्रं विशिष्टरूपोपादानविषयमेव।) एवं चार्थवद्ग्रहण-परिभाषा सिद्धा। (अत्र[2] चार्थः कल्पितान्वयव्यतिरेककल्पितः शास्त्रीयो (ऽपि) गृह्यत इति 'संख्याया अति' (५।१।२२) इति सूत्रे भाष्ये स्पष्टम्) उपस्थितोऽर्थश्च मुख्यः प्रसिद्ध एव गृह्यते। तेन गौणमुख्यन्यायः (१५), 'अभिव्यक्तपदार्था ये' इति न्यायश्च सिद्धः। अर्थानुपस्थितौ तु केवल-शब्देऽपि। इदमेवाऽभिप्रेत्याऽर्थवत्परिभाषा[3] (वर्णग्रहणेषु नेति 'लस्य' (३।४।७७) इत्यत्र भाष्ये उक्तम्। न चाऽशब्दसंज्ञेति व्यर्थम्। 'उपसर्गे घोः किः' (३।३।९२) इत्यादावर्थे कार्यस्याऽबाधादिति वाच्यम्। 'दाधाघु' (१।१।२०) इत्यस्य 'ईहल्यघोः' (६।४।११३) इत्यादौ चारितार्थ्येन 'उपसर्गे घोः' (३।३।९२) इत्यादौ स्वं रूपमित्यनेन परत्वाद् बाध-(शङ्का[4])वारणार्थत्वात्। (कार्यकालपक्षेऽप्यविशेषाद् घुधातोर्दाधाभ्यश्च प्राप्तत्वाच्च)।

तत्र शब्दस्य संज्ञेति न षष्ठीतत्पुरुषः। कर्मसंज्ञादेरर्थसंज्ञात्वेन निषे-धाऽप्रवृत्तौ, 'कर्मण्यण्' (३।२।१) इत्यादौ स्वरूपग्रहणाऽऽपत्तेः। (अर्थे[5] कार्यस्य[6] बाधसत्वात्।[7]) किन्तु सप्तमीतत्पुरुषः। तत्र शब्दपदेन शब्दशास्त्रं लक्ष्यते। यथाश्रुते बाधात्। लुप्तविभक्त्यन्तं[8] चैतत्। तदेतत् सकलमभि-सन्धायाऽऽह—

---

शब्दार्थविषये क्वचिदुक्तन्यायाऽप्रवृत्तेरपि ज्ञापनात्। तेन 'जनपदे लुप्' 'तस्यापत्य'मित्यादौ न दोषः।

एवं चेदं सूत्रं लौकिकव्युत्पत्त्योपस्थितार्थे कार्यबाधे, तदर्थकाऽनेक-शब्दग्रहणे प्राप्ते 'अर्थविशिष्ट उपस्थितः शब्द एव संज्ञी' इत्येतदर्थं फलितम्।

अत एव प्राचामुदीचामरत्यं पशुरित्यादौ न दोषः। अर्थे कार्यस्या-बाधात्।' इयानंशः क. ग. नास्ति, ख. तु दृश्यत एवेत्ययं पाठः।

१. क. ग. पाठः;　　२. क. ग. पाठः।

३. 'परिभाषा विशिष्टोपादानविषयेत्युक्तं' ख. पाठः।

४. क. ग. पाठः;　　५. ख. नास्ति;　　६. क. ग. नास्ति; ख. पाठः।

७. ख. पाठः;　　८. 'लुप्तषष्ठ्यन्तं' ख. पाठः।

**शब्दशास्त्र इति**—इदमपि सूत्राऽऽशयवर्णनमात्रम्[1]। (वस्तुनस्तु[2] अन्तरङ्गत्वादिना राजश्वशुरेत्यादौ तज्जन्यबोधे प्रकारतया भासमानस्य राजन्शब्दस्यैव ग्रहणे सिद्धे सूत्रं व्यर्थम्। उपस्थितार्थत्यागे मानाभावेन तस्य विशेषणतयाऽन्वयस्य सम्भवेन 'अर्थवत्परिभाषाऽपि सिद्धा। लक्ष्यानुरोधेन क्वचिन्न्यायाऽप्रवृत्त्या 'उपसर्गे घोः किः' (३।३।९२) इत्यादौ न दोषः। अत एव 'ऊकाल' (१।२।२७) इति सूत्रे 'स्वं रूपं शब्दस्याऽशब्दसंज्ञा' (१।१।६८) इति योगः प्रत्याख्यायत इति भाष्ये उक्तम्।)

**येन विधिः**(१।१।७२)––येनेति करणे तृतीया, न कर्त्तरि। कृद्योगषष्ठ्या बाधात्। विधिरिति किर्भावे। कर्म तु विधेयमनुक्तमपि प्रसिद्धत्वाल्लभ्यत[3] एव। (करणं[4] च परतन्त्रम्, कर्त्रधिष्ठितस्यैव तथात्वात्। न च 'एरच्' (३।३।५६) इत्यादाविकारादीनां पारतन्त्र्यं धात्वादीनां च प्राधान्यं स्वरूपतोऽवभासते, वास्यादिष्विव तक्षादीनाम्। अतो विवक्षानिबन्धनं तदुभयं बोध्यम्।) एवं च तृतीयया पारतन्त्र्यं लक्ष्यते। तच्च शब्दानां विशेषणभावेन। एवं च विशेषणमिति लब्धम्, तदप्यन्तरङ्गत्वात् समानाधिकरणमेव, न तु व्यधिकरणम्, तत्र (तत्र[5]) तदन्तविधौ सति तत्समानाधिकरणविशेषणत्वयोग्यताऽप्येतत्प्रवृत्तौ निमित्तम्। अत एव 'इन्हन्' (६।४।१२) इत्यादाविन्नंगे तदन्तविधिः। न हि इन्-अङ्गमित्यन्वयो भवति। (बाधात्[6]। यद्वा बाधज्ञानस्य बोधेऽप्रतिबन्धकत्वात् तादृशबोधो भवत्येवैतत्प्रवृत्त्युपयोगी। बाधज्ञानेन जायमाने बोधेऽप्रामाण्यज्ञानजननात् स न लक्ष्यसंस्कारक इत्यन्यत्।)

---

१. 'मात्रविषयम्' ख. पाठः; २. क. ग. पाठः।
३. 'कर्मणि किर्न तु भावे। तथा सति कर्मणोऽनुपादानात् साकाङ्क्षतापत्तेः।' ख. पाठः। ४. क. नास्ति। ग. तु 'कर्त्रधिष्ठितस्यैव तथात्वात्।' एतत्पर्यन्तं दृश्यते पाठः।
५. ग. पाठ; ६. क. ग. नास्ति, ख. पाठः।

एवं च बाधात् स्वस्य चेत्यंशस्येदृशे विषयेऽप्रवृत्तिर्बोध्या, तदाह—**विशेषणमिति।**

**तदन्तस्येति**–प्रकरणात् तदन्तस्य शब्दस्येत्यर्थः ('स्वं रूपम्' (१।१।६८) इति सूत्रात् 'शब्दस्य' इत्यनुवर्त्तनात् तदन्तस्य शब्दस्येत्यर्थः)। अत एव यच्छब्देन शब्दो लब्धः (यद्वा करणत्वं कार्यं प्रति। तच्चेह शास्त्रे प्रायः शब्दस्यैवेति यच्छब्देन शब्दो लब्धः)।

नन्वेवम् 'एरच्' (३।३।५६) इति–'अयः' इत्यत्र न स्यादत आह—**स्वस्य चेति।** स्वमित्यनुवर्त्त्य, षष्ठ्या विपरिणम्यत इति भावः। (तत्प्र-[3]त्याख्याने तु व्यपदेशिवद्भावेन सिद्धिर्बोध्या।) **'समासप्रेति'**(वा.१।१।७२)–विशेषणविशेष्यभावव्यत्यासे तात्पर्यग्राहकमिदमिति। एवं च 'द्वितीया श्रित' (२।१।२४) इत्यादौ श्रितादयो विशेष्यास्तद्विशेषणं सुप्। तेन 'कृष्णं परमश्रितः' इत्यत्र न समासः। एवं 'नडादिभ्यः फक्' (४।१।९९) इत्यादावपि नडादिविशेष्यम्, प्रातिपदिकं विशेषणमिति फलितम्। तेन 'सौत्रनाडिः' इत्यत्र फग् न। नन्वत्र तदन्तविधिसत्त्वेऽपि न क्षतिः। श्रिताऽन्तस्य सुबन्तत्वाऽभावात्। श्रित[4]ादिशब्दस्य तत्प्रकृतिके लक्षणायाम, तेन तदन्तविधावपि न क्षतिः। श्रितप्रकृतिकान्तसुबन्ताऽभावादिति चेत्, न।

[स[5]मर्थपरिभाषोपस्थितसमर्थपदस्य सूत्रीयतत्तत्पदोत्तरविभक्तिसमानविभक्त्यन्तस्योपस्थितया तद्विशेषणत्वेन प्राप्ततदन्तविधेर्निषेधार्थत्वात्। तस्य च तत्प्रकृतिके लक्षणया सुपेत्यनेनान्वयः। न हि सामर्थ्यं (तु) सुबन्तेनैवेति नियमः। 'कुम्भकारः' इत्यादौ सुबुत्पत्तेः पूर्वमपि तदङ्गीकारात्। एकार्थीभावस्याऽलौकिकेऽप्रयुक्त एव कल्पनाच्च। 'परिपूर्णं पदम्' इति न्यायस्तु यस्येतरत्राऽऽकाङ्क्षयाऽन्वयस्तद्विषये, न तु यत्रान्वयस्तद्विषय इति 'कुत्सिते'

---

१. ख. पाठः;　　　　२. क. ग. नास्ति, ख. पाठः।

३. क. ग. पाठः;　　　　४. 'श्रितशब्द' ख. पाठः।

५. ख. नास्ति, क. ग. पाठः। अस्यैव पाठस्य स्थाने ख. पुस्तके त्वयं पाठः—

'श्रितप्रकृतिकान्तसुबन्ताऽभावादिति चेत्, न। समभिव्याहृतसुबादिप्रत्यया-

(५।३।७४) इति सूत्रभाष्यात् स्पष्टमेवोपलभ्यत इति ङ्याप्सूत्रे निरूपयिष्यामः। एतेन सम्बुध्यन्तमेवोदाहर्त्तव्यमिति कैयटाद्युक्तम्, टाबन्तमपीति नव्योक्तं च परास्तम्, मदुक्तरीत्या सर्वत्र समासस्य प्राप्तत्वात्। न चात्र वार्त्तिके समासग्रहणं व्यर्थम्, समासे क्वापि समर्थपदादेर्विशेष्यत्वप्रयुक्ततदन्तविधेरदर्शनादिति वाच्यम्। 'अपपरि' (२।१।१२) इति सूत्रे उगिदञ्चुग्रहणे तद्दर्शनात्। अन्यथा केवलाञ्चतिना क्विबन्तेनैव समासः स्यात्। न च तद्योगे पञ्चमी दुर्लभा, 'प्रयागाद् गतः' इतिवदपादाने सम्भवात्। न च सा न प्रतिपदोक्ता, दिक्शब्दत्वेनैव सिद्धिमाश्रित्याऽञ्चूत्तरपदग्रहणस्य भाष्ये प्रत्याख्यानेन प्रतिपदोक्ताया दुर्लभत्वादिति दिक्]।

**उगिदिति** (वा. १।१।७२)—(उगिता, वर्णेन च यत्र प्रातिपदिकं विशेष्यते, तत्र तेन तदन्तविधिर्भवत्येवेत्यर्थः)। तेना'ऽति भवती'त्यत्र 'उगितश्च' (४।१।६) इति ङीप्, दाक्षिरित्यत्र 'अत इञ्' (४।१।९५) इतीञ्च सिद्धः। सूत्रं तु 'भवतु' इति सर्वादि पठिते, 'अस्यापत्यम्—इः कामः' इत्यत्र च चरितार्थम्। ञित्त्वं तु 'बाह्वादिभ्यश्च' (४।१।९६) इत्युत्तरत्र चरितार्थम्[2])। (अत्र[3]'स्वस्य च' इत्यंशो व्यपदेशिवद्भावेन सिद्धः)।

---

क्षिप्तप्रकृत्यंशं प्रति श्रितादीनां विशेषणत्वेन प्राप्ततदन्तविधेर्निषेधार्थत्वात्। अत एव 'खट्वाक्षेपे' (२।१।२६) इत्यादि चरितार्थम्। अन्यथा 'सुबन्तो यः खट्वाशब्दः' इत्यर्थेऽसम्भवः स्यात्। एतेन 'सम्बुध्यन्तमेवोदाहर्त्तव्यम्' इति कैयटाद्युक्तम्, 'टाबन्तमपि' इति नव्योक्तं च परास्तम्। मदुक्तरीत्या सर्वत्र समासस्य सुलभत्वात्। अन्तरङ्गानपि (५३) इति न्यायेन सम्बुद्धिलोपहल्ङ्यादिलोपाऽप्राप्तावुक्तरीत्या तत्रापि दोषाऽभावाच्च'।

१. ख. पाठः, क. ग. नास्ति; २. चरितार्थमित्याहुरिति क. ग. पाठः।
३. ख. पाठः।

**विरामः** (१।४।११०)—भावे घञ्। शब्दानुशासनप्रस्तावादाह—**वर्णानामिति।** शब्दनित्यत्वे वर्णानामुच्चारणाऽभाव इत्यर्थः। स च स्वभावाद् व्याख्यानाद् वा किञ्चिद्वर्णोच्चिचारणाऽनन्तरकालिक एव गृह्यते। प्रदेशाः—'वाऽवसाने' (८।४।५६) इत्यादयः। अभावस्याऽपि बुद्धिकृतपौर्वापर्यमस्त्येव। यथोच्चरितप्रध्वंसिनां नित्यविभूनां वा वर्णानाम्।

परशब्दो नाऽन्यार्थः, अन्यत्वस्याऽव्यभिचरितत्वादत आह—**अतिशयित इति।** अर्द्धमात्राऽतिरिक्तकालव्यवायेन रहितः। परः किम्? अवग्रहे मा भूत्। मात्राकालो ह्यवग्रहः। अन्यथा सन्निकर्षस्य पुरुषभेदेनाव्यवस्थितत्वादत्रा[1]पि स स्यात्[2]। (परग्रहणे तु तत्सामर्थ्यात्—अर्धमात्राकालातिरिक्तकालव्यवायाऽभावरूपसन्निकर्षस्य ग्रहणान्न दोषः। सन्निकर्षश्च क्वचित् पूर्वेण। प्रायः परेण। अत एव 'अणोऽप्रगृह्यस्य' (८।४।५७) इत्यादीनां संहिताकारे पाठः संगच्छते। पूर्वसन्निकर्षमात्रेणैव तत्र तत्प्रवृत्तेः। ध्वनितं चेदं 'विसर्जनीयस्य सः' (८।३।३४) इति सूत्रे भाष्ये इति दिक्।)

(केचित्तु[4] पुरुषभेदेन सन्निकर्षस्याऽव्यवस्थिततया, सूत्रारम्भसामर्थ्यादेवोक्तसन्निकर्षलाभे, 'पर'ग्रहणं व्यर्थमेत्वेयाहुः)। सन्निकर्षश्च न सम्बन्धः, गुणानां परस्परं संयोगसमवाययोरभावात्। (आ[5]शुविनाशित्वाच्च) 'नित्यविभुद्रव्यता'पक्षेऽपि न, अजसंयोगनिराकरणात्। अत आह—**सन्निधिरिति।**

---

१. 'अत्रापि सत्त्वात्' ग. पाठः।

२. ख. पुस्तके त्वितोऽग्रेऽयं पाठः—'परग्रहणे तु तत्सामर्थ्यात् सर्वाऽपेक्षया न्यूनस्याऽर्द्धमात्राकालव्यवायस्य सन्निकर्षस्य ग्रहणान्न दोषः। एतेन परशब्दग्रहणसामर्थ्यात् पूर्वपरयोः सन्निकर्ष एव संहिताधिकारे पाठः सङ्गच्छत इति। पूर्वसन्निकर्षमात्रेणैव तत्र तत्प्रवृत्तेः। ध्वनितं चेदं 'विसर्जनीयस्य सः' (८।३।३४) इत्यत्र भाष्ये इति दिक्।'

३ क. ग. पाठः;　　　　४. ख. पाठः, क. ग. नास्ति।

५. क. ग. पाठः।

व्यवायाऽभाव इत्यर्थः ।

**सुप्तिङन्तम्** (१।४।१४)—सुप्प्रत्याहारो न सप्तमीबहुवचनम् । तिङ्साहचर्यात् । स च सुपः पकारेणैव, न कपः । 'स्वादिषु' (१।४।१७) इत्यादिग्रहणात् । अन्यथा 'सुप्यसर्वनामस्थाने' इत्येव वदेत् । यद्यपि प्रत्ययाक्षिप्तस्य(स्व)प्रकृत्यवयवकसमुदायस्य सुप्तिङ्भ्यां विशेषणात् सिद्धं तदन्तग्रहणम्, तथाऽपि 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञापनार्थमन्तग्रहणम् । (केचित्तु[1] प्रत्ययेन तादृशार्थस्य नियताक्षेपे, आक्षिप्तस्य वा शाब्देऽन्वये मानाऽभावेन, वाचनिक एवायं तदन्तविधिः । तत्र वाचनिकत्वमेव युक्तम् । अन्यथा 'वनो र च' (४।१।७) इत्यादि समासप्रत्ययविधावस्यापि स निषेधः स्यात् । मम तु सौत्रस्यैव स निषेध इत्याहुः) ।

न च ज्ञापितेऽपि फलाभावः, प्रत्यययोरेव पदसंज्ञायामपि, पदप्रदेशेषु प्रत्ययग्रहण–(२३)परिभाषया तदन्तग्रहणाऽसम्भवात् । 'यस्मिन् ज्ञापिते यस्य चारितार्थ्यं तत् तेन ज्ञाप्यम्' इति सिद्धान्तादिति वाच्यम् । पदसंज्ञायाः 'स्वदिष्वसर्वनामस्थाने' (१।४।१७) इति प्रकृतिसाधारणतया, पदग्रहणे प्रत्ययग्रहणस्यैवाऽभावात् । अत्र सूत्रे 'प्रत्ययग्रहणे यस्मात् स विहितः' (२३) इत्यंशस्तु प्रवर्त्तत एव, तेन नाऽतिप्रसङ्गः । 'यस्मात् प्रत्ययविधिः' इत्याद्यनुवृत्तेर्वा । ज्ञापनफलं तु 'तरप्तमपौ घः' (१।१।२२) इति सूत्रेण तरप्तमपोरेव संज्ञा, न तदन्तस्य । तेन 'गौरी ब्राह्मणितरा' इत्यत्र न ह्रस्वः । विहितांऽशोपस्थितिफलं तु पदसमुदायस्य पदत्वाभावः । 'हरिषु' इत्यादौ सोः पदत्वाऽभावश्च । पदत्वे हि 'सात्पदाद्योः' (८।३।१११) इति षत्वनिषेधः स्यात् ।

न च केवलस्य सुपो न तदन्तत्वम्, व्यपदेशिवद्भावेन सुलभत्वात् । यस्माद्विहितस्तदादित्वं तु न तेन लभ्यम् । (अ[2]शास्त्रीयत्वात् ।) 'व्रतिसे' इत्यादौ प्र[3]त्ययमात्रस्य पदत्वं तु 'अम् से' इत्यवस्थायां प्रकृति-प्रत्ययसमुदाये प्रागेव प्रवृत्तम्, स्थानिवद्भावेन बोध्यम् । 'रामौ' इत्यादावप्येकदेशविकृत-

---

१. ख. नास्ति, क. ग. पाठः; २. ख. नास्ति ।
३. 'इत्यादौ 'से' इति प्रत्ययमात्रस्य' ख. पाठः ।

न्यायेनैव पदत्वम् । एकादेशात् प्रागेव पदत्वप्रवृत्तेः । न त्वेकादेशे कृतेऽस्य प्राप्तिरस्ति । उभयत आश्रयणेऽन्तादिवत्त्वविरहात् । स्थानिवद्भावेनाऽपि नाऽस्य सुबन्तत्वम् । यस्माद्विहितस्तदादित्वस्याऽशास्त्रीयत्वेनाऽतिदेष्टुमशक्यत्वात् । ईदृशे विषये लक्ष्याऽनुरोधाद् यथोद्देशपक्ष एवाऽऽश्रीयते । कार्यकालपक्षे तु 'व्यतिसे' इत्यादौ षत्वनिषेधैकवाक्यतापन्ना संज्ञा दुर्लभेति **प्राञ्चः ।**

**केचि**[1]त्तु कार्यकालपक्षो नाम 'कार्यप्रवृत्तिसमये कार्यविधायकैकवाक्यतापन्नस्य संज्ञाविधायकस्य प्रवृत्तिः' इत्येव । 'सा चोपदेशे नैव' इत्यत्र संकोचे न किञ्चिन्मानम् । अतिदेशवाक्यस्याऽप्येकवाक्यतायाः सुवचत्वात् । (सा[2] चेत्थं—'सुप्तिङन्तं पदसंज्ञम्, तदादेशश्च तद्वत्पदम्, तस्य पदस्यादेः सस्य षत्वं न' इति ।) 'दिवः कर्म च' (१।४।४३), 'गतिबुद्धि' (१।४।५२) 'कर्त्तुरीप्सिततमम्' (१।४।४९) इत्यादीनामनेकेषां 'कर्मणि द्वितीया' (२।३।२) इत्यादिभिरेकवाक्यताया दृष्ट[3]त्वात् ।

(किञ्चैक[4]देशविकृत'–(३७) न्यायेनाऽशास्त्रीयमप्यतिदिश्यत इति वक्ष्यते । एवञ्च 'रामौ' इत्यादौ कार्यकालपक्षेऽपि न दोषः) ।

किञ्च[5] 'व्यतिसे' इत्यादौ यतः प्रत्ययविधिस्तदादित्वमपि व्यपदेशिवद्भावेन सुल[6]भम् । न हि 'तेन शास्त्रीयस्यैवाऽतिदेशः' इति वक्तुं युक्तम् । एकाच्त्वादेरतिदेशाऽनापत्तेः । तस्य लोकन्यायसिद्धताया भगवतोक्तत्वाच्च । 'विशिष्टोऽपदेशो व्यवहारो यस्य समुदायस्य तद्व्यवहारा

---

१. 'यत्तु' ख. पाठः; २. क. ग. पाठः ।

३. इतोऽग्रे–'इति । तन्न । अतिदेशेन हि पूर्वसंज्ञाया आरोपमात्रम् । सा च स्वरादिविध्येकवाक्यतापन्ना । तस्या आरोपेऽपि षत्वनिषेधस्य दुर्लभत्वादित्याहुः' इति ख. पाठः; ४. क. ग. पाठः ।

५. क. ग. पाठः, ख. पुस्तके तु किञ्चेत्यस्य स्थाने 'वस्तुतस्तु' इति पाठः ।

६. 'सुलभमिति कार्यकालपक्षेऽपि न दोषः' ख. पाठः; ।

एकस्मिन्नपि कर्तव्या:' इति तदर्थः (समुदाये दृष्टाः शब्दा अवयवे वर्त्तन्ते' इति तत्र तत्र भाष्योक्तेश्च)। अत एव प्रत्ययान्तत्वप्रयुक्तप्रातिपदिकसंज्ञानिषेधस्तस्य सिद्ध्यति। सति हि प्रातिपदिकत्वे औत्सर्गिकप्रथमैकवचनाऽऽपत्तिः[1]।

ध्वनितं चेदमर्थवत्सूत्रे भाष्ये। तत्र हि प्रत्ययपर्युदासः पृथग् नोक्तः। न चैवं 'यस्माद्विहितः' इत्यत्र विहितत्वांऽशनिवेशो व्यर्थः। अधिकव्यावृत्त्यर्थत्वात्। अत एव देवदत्तश्चिकीर्षतीत्यादौ देवादेर्न सनन्तत्वादिप्रयुक्तधातुत्वादीति स्पष्टमङ्गसंज्ञासूत्रे भाष्ये। [[2]स्पष्टं चाऽधिकमात्रव्यावृत्त्यर्थत्वमस्याऽनुपसर्जनादित्यत्र **कैयटेनोक्तम्।**

न चाऽवयवधर्मस्य समुदायेऽप्यारोपसम्भवे तत्राऽपि धातुत्वादि दुर्वारम्। तादृशाऽऽरोपस्य लोके बहुशोऽदृष्टत्वात्। तदादिग्रहणपरिभाषायां विहितत्वांऽशनिवेशाच्च। न च तेन 'तदंशे व्यपदेशिवद्भावादिना' इत्येव ज्ञाप्यताम्। 'सात्पदाद्योः' (८।३।१११) इति 'साति' ग्रहणेनाऽवयवे तत्प्रवृत्त्यङ्गीकारात्। अत एव 'व्यपदेशिवदेकस्मिन्' (प० ३०) इत्येव पठन्ति।

किञ्च, प्रत्ययग्रहणे स्वाऽऽक्षिप्तस्वप्रकृत्यवयवकसमुदायस्य विशेष्यत्वात् तदन्तविधौ तन्मूलकाऽतिप्रसङ्गनिवारणाय कृतया 'प्रत्ययग्रहणे' (प० २३) इति परिभाषयाऽधिकव्यावृत्तिरेव युक्तेत्यन्यार्थकल्पने मानाभावः। अत एव 'रदाभ्याम्'(८।२।४२) इत्यादौ 'प्रत्ययग्रहणे चाऽपञ्चम्याः'(प० २४) इति तदन्तविधिनिषेधे नास्याः प्रवृत्तिः] अत एवाऽस्यापत्यमिरित्यादौ तद्धितान्तत्वप्रयुक्तप्रातिपदिकत्वसिद्धिः कार्यकालपक्षेऽपि। ('अ[3] ततेर्डः अः' इत्यत्र कृदन्तत्वनिमित्तक-प्रातिपदिकत्वसिद्धिश्च। इयन्मात्रमित्यत्र 'वत्वन्तात् स्वार्थे' इति मात्रच्सिद्धिश्च)। न चैवं 'हरिषु' इत्यादौ सोरपि पदत्वे

१. इतोऽग्रे—करोषीत्यादौ फिट्स्वराऽऽपत्तिश्च। सिपः पित्वं तु सार्वधातुकमपिदित्यर्थम्।' ख. पाठः।
२. [] एतदन्तर्गतः पाठः क. ग. नास्ति, ख. पाठोऽयम्।
३. क. ग. पाठः।

षत्वाऽनापत्तिः 'हलि सर्वेषाम्' (८।३।२२) इत्यादिनिर्देशैस्तादृशाऽऽरोपेण क्वचित् कार्याऽप्रवृत्तिज्ञापनात्[1]।

(यद्वा[2]—'व्यपदेशिवदेकस्मिन्' (प. ३०) इत्युक्तेरीदृशे स्थले व्यपदेशिवद्भावो नास्त्येव। 'निजौ चत्वार एकाचः' इति भाष्यं त्वभ्युपेत्यवादेन। पक्षे हरिष्वित्यादौ सोः प्रातिपदिकत्वं यथा न, तथा वक्ष्यते)।

तस्माद् यथोक्तमेव साधु, भाष्यसंमतं[3] चेति वदन्ति। वाचकतासम्बन्धेन पदशब्दवत्त्वमेव पदत्वव्यवहारप्रयोजकमिति नाऽननुगमः।

**हलोऽनन्तराः (१।१।७)—**

[गर्गाः[4] शतं दण्डयन्ताम्' इत्यत्र समुदाये शतदण्डनवदत्र समुदायस्यैव संज्ञा, न प्रत्येकम्। अत एव सुदृषद्ब्राह्मणीत्यत्र संयोगान्तलोपो न। न च 'संयोगावन्तौ यस्य' इति भाष्योक्तरीत्या निर्वाहः। नानाविधक्लिष्टकल्पनामाश्रित्य, श्रुताऽनन्तरा इत्यस्योपलक्षणतामाश्रित्य च प्रत्येकसंज्ञाकल्पने फलाऽभावात्। ध्वनितं चेदं प्रत्येकं संज्ञापक्षे दोषानुद्धृत्य, पुनर्यदि वृद्धिसंज्ञायां 'प्रत्येकम्' इत्युच्यते, इहापि 'सह'ग्रहणं कार्यम्। 'ब्राह्मणभोजनन्यायात् तत्र तदकरणे, गर्गदण्डनन्यायेनेहाऽप्येतन्न कार्यम्' इत्युपसंहारभाष्येण।

---

१. इतोऽग्रे—'किञ्च तदन्तविधिसूत्रे स्वस्य चेत्यनुवर्त्तयताम्, तस्य चेति वचनं कुर्वतां वार्तिककृतां च मते 'हरिषु' इत्यादौ सुपः पदत्ववारणाय ज्ञापकमावश्यकम्। तदन्तविध्यङ्गभूतप्रत्ययग्रहणपरिभाषाया अयोग्यतया स्वस्य चेत्यंशेऽप्रवृत्त्या विहितत्वांशनिवेशाऽभावात्। न च तत्परिभाषायाः सामर्थ्येन प्रत्ययांऽशे तस्य च इत्यंशाऽप्रवृत्तिरेवेति वाच्यम्। अधिकव्यावृत्त्या चारितार्थ्यात्। सातिग्रहणवैयर्थ्याऽऽपत्तेश्च।

तदर्थमर्थवत्सूत्रेऽप्रत्यय इत्यावर्त्य व्याख्याने विपरीतं गौरवम्। अत एवाऽस्याऽपत्यं 'इः' इत्यतो यूनि 'यञिञोश्च' (४।१।१०१) इति फक्सिद्धिः'। ख. पाठः।

२. क. ग. पाठः; ३. 'भाष्यसंमतं चेति दिक्' ख. पाठः।

४. क. ग. पाठः।

यत्तु 'संयुज्यन्ते वर्णा यत्र समुदाये इत्यन्वर्थसंज्ञाविरोधान्न प्रत्येकं संज्ञा' इति, तन्न, तदाश्रयणे 'घटपटौ संयुज्येते यत्र' इत्यादौ संयोगानुपयोगि-प्रतियोग्यतिरिक्तस्यैवान्यपदार्थतया प्रतीतेर्व्युत्पन्नत्वेन, तद्व्यतिरिक्ततद्घटितपदवाक्यरूपसमुदायस्य संज्ञापत्तावनिष्टापत्तेः। तस्मान्महासंज्ञाकरणं प्राचामनुरोधेनेत्येव ज्यायः। अत एव भगवता गर्गदण्डनन्यायाश्रयणेन 'सह'ग्रहणं प्रत्याख्यातम्, न तु महासंज्ञयेति दिक्[1]]।

'हलः' इति जातौ बहुवचनम्। तेन द्वयोरपि सिद्ध्यति। अत एव शिक्षेत्यादौ 'गुरोश्च हलः' (३।३।१०३) इत्यप्रत्ययः।

यत्र तु बहवः श्लिष्टास्तत्र द्वयोर्बहूनां च सा। यदि बहूनामेव स्यात् तर्हि गोमान्करोतीत्यादौ मतुपस्तकारस्य संयोगान्तलोपो स्यात्। अत एव झलि परे संयोगादिलोपविधानं चरितार्थम्। न ह्यन्यथा झलि परे संयोगः सम्भवति। झल्सहितस्यैव तत्संज्ञाप्रवृत्तेः। (य[2]त्र बहवः श्लिष्टास्तत्र बहूनामपि संयोगत्वे फलं चिन्त्यम्। (आनन्तर्यम्=व्यवधानाऽभावः। व्यवधानं च[3] विजातीयेनैव। स्पष्टं चेदमत्रैव भाष्ये इत्याशयेनाह—**अज्भिरिति**।

हलः किं ? 'तितउ देव'। अत्र 'गुरोरनृतः' (८।२।८६) इति प्लुतः

---

१. 'गर्गाः' इत्यारभ्य दिक्पर्यन्तस्य क. ग. पुस्तकपाठस्य स्थानेऽयम्—'महासंज्ञाकरणं 'संयुज्यन्ते वर्णा अत्र' इत्यन्वर्थलाभार्थम्। तेनाऽत्र समुदायस्यैव संज्ञा, न प्रत्येकम्। अत एव सुदृषद्ब्राह्मणीत्यत्र संयोगान्तलोपो न। न च 'संयोगावन्तौ यस्य' इति भाष्योक्तरीत्या निर्वाहः। प्रयोगनिर्वाहेऽप्यन्वर्थसंज्ञाविरोधेन तत्पक्षोपपत्त्यभावात्। ध्वनितं चेदं प्रत्येकं संज्ञापक्षे दोषानुद्धृत्य, पुनर्यदि वृद्धिसंज्ञायां प्रत्येकमित्युच्यते, इहाऽपि 'सह'—ग्रहणं कार्यम्। 'ब्राह्मणभोजनन्यायात् तत्र तदकरणे, गर्गदण्डनन्यायेनेहाऽप्येतन्न कार्यम्' इत्युपसंहारभाष्येणेति दिक्।'—ख. पाठः।

२. क. ग. पाठः;

३. चकारः ख. पुस्तके नास्ति।

स्यात्। अनन्तराः किं ? 'पनसम्' । अत्र हि सकारमकारयोः संयोगत्वे 'स्कोः' (८।२।२९) इति लोपः स्यात्।

यत्तु 'स्कोः' (८।२।२९) इति सूत्रे 'झलः' (८।२।२६) इति वर्त्तते। तेन झलः परयोः स्कोर्लोप इति नाऽत्र तत्प्राप्तिरिति, तन्न, द्रप्समित्यादौ दोषस्य दुर्वारत्वात्। विच्छिन्नत्वे प्रमाणाऽभावाच्चेत्यन्यत्र विस्तरः[1]।

**'ह्रस्वं लघु'** (१।४।१०)—ननु ह्रस्वप्रदेशेष्वपि लघुसंज्ञयैव व्यवहारोऽस्तु, ह्रस्वसंज्ञा च[2] मास्त्विति चेत्, न, (एक[3]संज्ञाधिकारात्) गुरुसंज्ञया लघुसंज्ञाया बाधात् सर्पिष्ट्वमित्यादौ 'लघोः 'तादौ' (८।३।१०१) इति षत्वाऽनापत्तेः। 'अततक्षत्' इत्यादौ सन्वद्भावाऽभावार्थं तु त[4]या तस्याबाध आवश्यकः। भेत्तेत्यादौ गुणस्तु क्नोः कित्त्वसामर्थ्येन भूतपूर्वलघूपधग्रहणात् सुसाधः।

**इति संज्ञाप्रकरणमिति**—प्रथमाऽध्याय[5]स्थानां सन्धिकार्योपयोगिनीनां संज्ञानां प्रकरणम्। इति=समाप्तमित्यर्थः। तेनाऽऽम्रेडितसंज्ञाप्रगृह्यसंज्ञाभसंज्ञाद्यनुपन्यासेऽपि न दोषः[5]।

'अ अ' (८।४।६८) इत्याद्युपन्यासस्तु प्रासङ्गिक इत्याहुः।

**॥ इति संज्ञाप्रकरणम् ॥**

---

१. इत्युत्तरम्—'महासंज्ञयैवाऽव्यवधानेऽपि लब्धे 'ऽनन्तराः' इति चिन्त्यमिति कश्चित्'। इति ख, पुस्तके पाठः।

२. 'च' इति ख. नास्ति;　　　　३. ख. पाठः।

४. तया गुरुसञ्ज्ञया, तस्याः=लघुसञ्ज्ञाया इत्यर्थः।

५. 'प्रथमाध्यायस्थानामष्टाध्यायीस्थसूत्रविहितसन्धिकार्योपयोगिनीनाम्' ख. पाठः। इतोऽग्रे-'लोपसंज्ञा तु नोपन्यस्ता। तस्या अन्वर्थसंज्ञयैवाऽबोधे सिद्धे शक्त्यग्राहकत्वात्। प्रसक्ताऽदर्शनस्यैव लोपसंज्ञा यथा स्यादित्येतदर्थं तदित्यग्रे स्फुटीभविष्यति। तथा च 'संज्ञानामेवेदं प्रकरणम्' इत्यर्थः, न तु 'संज्ञानामिदमेव प्रकरणम् इति बोध्यम्'। क. कुण्डलितः पाठः। ग. पुस्तके नास्त्येव। ख. तु दृश्यते।

# अथ परिभाषाप्रकरणम्

**इको गुणवृद्धी** (१।१।३)—अयं नाऽधिकारः, तथा सतीको गुणवृद्धी नेति नञा संयुज्यैव पठेत्, 'सर्वस्य द्वे' (८।१।१) इत्यादिवत्। न ह्युत्तरसूत्रोपस्थितिकत्वा[1]ऽविशेषे किञ्चित् संयुज्य, किञ्चिद् विभज्य पठितुं युक्तम्। 'प्रत्ययः' (३।१।१), 'परश्च' (३।१।२) इत्यादौ तु पारार्थ्याविशेषेऽपि विधेयभेदाद्युक्त एव विभा[2]गः। 'एकाचो द्वे' (६।१।१), 'अजादेः' (६।१।२) इत्यादावुद्देश्यभेदाद् यथा। नाऽपि विधिः, तत्तद्विधीनां वैयर्थ्याऽऽपत्तेः। पूर्वोत्तरसाहचर्येण परशास्त्रोपकारकत्वस्य निर्णयाच्च। तस्मात् परिभाषेयम्।

**गुणवृद्धिशब्दाभ्यामिति**—गुणवृद्धिग्रहणाऽनुवृत्त्यैव सिद्धे गुणवृद्धिग्रहणसामर्थ्यादिति भावः। अनुवर्त्तमानं च संज्ञिपरमेव स्यात्। संज्ञाकरणेनाऽन्यत्र संज्ञिपरत्वात्। (व[3]स्तुतस्त्वर्थाऽधिकारात् तस्य शब्दपरता वक्तुं शक्या। किञ्च) लक्षणप्रतिपदोक्तपरिभाषया 'विभाषा दिक्समासे' (१।१।२८) इति सूत्रे दिक्शब्दमुच्चार्य विहितस्य समासस्य यथा ग्रहणमेवं प्रकृतेऽपि गुणवृद्धिशब्दोपस्थितगुणवृद्ध्योर्ग्रहणमित्यनुवृत्त्यैव सिद्धे, गुणवृद्धिग्रह[4]णं व्यर्थम्।

न च वर्णग्रहणे लक्षणप्रतिपदोक्त(प. ११५)परिभाषाया अप्रवृत्तिः। अत एव 'ह्रस्व नद्यापः' (७।१।५४) इत्यादेः 'श्रीपाणां कुलानाम्' इत्यादौ प्रवृत्तिरिति वाच्यम्। तत्राऽप्रवृत्तिज्ञापकेन प्रतिपदोक्तपरिभाषाऽनित्यत्वस्यैव ज्ञापनात्। ध्वनितं चेदम् 'ओत्' (१।१।१५) सूत्रे भा[5]ष्ये (इ[6]ति चेन्न, स्पष्टार्थत्वात्)। तेन 'त्यदादीनामः' (७।२।१०२) 'दिव औत्' (७।१।८४) इत्यादौ नाऽस्योपस्थानम्।

---

१. 'पस्थितिकत्वाऽविशेषेऽपि' ख. पाठः; २. 'योगविभागः' इति ख. पाठः।
३. क. पुस्तके कुण्डलितः पाठः; ग. पुस्तके नास्ति।
४. 'ग्रहणं चिन्त्यप्रयोजनम्' ख. पाठः।
५. इतोऽग्रे–'अर्थाऽधिकारप्रतिपदोक्तपरिभाषाऽनित्यत्वज्ञापकमिति तत्त्वम्' ख. पाठः; क. पुस्तके तु कुण्डलितः; ६. क. ग. पाठः। ख. तु नास्ति।

ननु 'गुणवृद्धी इकः स्थाने स्तः' इत्येवाऽर्थोऽस्तु। अलोऽन्त्य-(१।१।५२) परिभाषाशेषा चेयम्। तत्र 'सार्वधातुकार्द्धधातुकयोः' (७।३।८४) इत्य-[1] त्राऽङ्गस्य सार्वधातुकार्द्धधातुकयोर्गुणो भवतीत्यवान्तरवाक्यार्थबोधो-त्तरम्, स्वस्वनिमित्तवशात् 'गुणवृद्धी इकः स्थाने स्तः', 'षष्ठीनिर्दिष्टा-न्त्याऽऽदेशः' इत्यर्थकं परिभाषाद्वयमुपस्थितम्, तदेकवाक्यतया महा-वाक्यार्थप्रतिपादने विशेष्यविशेषणभावे कामचारेण, यद्यङ्गस्येति पूर्वमेवा-न्त्यमलं नीयते—'अङ्गाऽन्त्यस्य गुणः' इति, ततोऽङ्गान्त्यस्येकोऽनिकश्च गुणे[2] प्राप्ते, 'इक एव' इति नियमाय पश्चादिकाऽन्त्यो विशेष्यते, तदेकपरि-भाषा शेषभूता, विशेषणत्वात्। यदि पूर्वमिकाऽङ्गस्य विशेषणेन 'इगन्त-स्याऽङ्गस्य' इत्यर्थः। स च भवन्नलोऽन्त्यस्येति, तदेयं तस्याः शेषः। न चाऽलोन्त्यपरिभाषायाः स्थानषष्ठीनिमित्तत्वेनाऽवान्तरवाक्यार्थबोधोत्तरं प्रवृत्त्या बहिरङ्गत्वम्, इयं तु पदार्थोपस्थितिमात्रनिमित्तिकाऽन्तरङ्गा। अस्यां स्थानषष्ठ्या लिङ्गत्वे मानाऽभावादिति वाच्यम्। विहितगुणवृद्ध्योः, स्थानिनियममात्रार्थत्वेनाऽस्या अप्यवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्ते[3]रिति चेत्, न।

एवं हि 'मिदेर्गुणः' (७।३।८२) इत्यादाविक्परिभाषाऽलोऽन्त्यपरिभाषयोः परस्परविरोधात् त्यागे सर्वाऽऽदेशो गुणः स्यात्। अस्याश्च तदविरोधेन सार्वधातुकार्द्धधातुकयोरित्यादिरवकाशः।

स्यादेतत्—'मिद इः', 'लघ्वी उपधा', 'पुकि अन्तः' इति भाष्योक्त[4]रीत्या निर्वाहः। न च यापयतीत्यादौ गुणाऽऽपत्तिः। सन्निपातपरिभाषया

---

१. सार्वधातुकार्द्धधातुकयोर्गुणो भवतीत्यवान्तरवाक्यार्थेति ग. पुस्तके पाठः।

२. 'गुणादौ' ख. पाठः।

३. 'अप्यवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्तिः।'इको गुणवृद्धी' (१।१।३) इत्यस्य प्रागुक्ताऽर्थबोधकाले सार्वधातुकार्द्धधातुकयोरित्यादीनामप्यवान्तरवाक्या-र्थोत्पत्तौ बाधकाऽभावेन परिभाषाद्वयस्याऽपि समत्वाच्चेति चेन्न'। ख. पुस्तके पाठः।

४. 'भाष्याद्युक्तरीत्या' ख. पाठः।

वारणात्। न च क्ष्मापयतीत्यत्र[1] दोषः[2]। पुकीत्यस्य विवक्षितसप्तमीत्वेनादोषात्[3]।

न च वार्णादाङ्गस्य बलीयस्त्वाद् यलोपं बाधित्वा यस्य गुणाऽऽपत्तिरिति वाच्यम्, व्याश्रयत्वात्।

ननु 'वार्णादाङ्गम्' (प. ५६) इति परिभाषा समानकार्यिकत्वरूपसमानाश्रये इत्येव धर्मिग्राहकमानेन लभ्यते। तथा हि—'अभ्यासस्याऽसवर्णे' (६।४।७८) इतीयङ्विधायकसूत्रस्थमसवर्णग्रहणं हि तज्ज्ञापकम्। तद्धीषतुरित्यादावियङ्व्यावृत्त्यर्थम्। एतत्परिभाषाऽभावे तु तद्व्यर्थम्। 'ईषतुः' इत्यादावन्तरङ्गेण सवर्णदीर्घेण बाधात्। इयङुवङौ हि अङ्ग-संज्ञाऽभ्याससंज्ञाऽपेक्षत्वाद् बहिरङ्गौ। न चेयङपवादः, 'येन नाऽप्राप्तिन्यायेन' (प. ५९) इयर्त्तीत्यादिसकललक्ष्यप्राप्तयणपवादत्वस्यैव निर्णयात्।

ननु 'इयेष' इत्यत्रापि तर्हि पूर्वप्रवृत्तगुणस्य, 'इयाय' इत्यत्र पूर्वप्रवृत्तवृद्धेश्च 'द्विर्वचनेऽचि' (१।१।५९) इति रूपाऽतिदेशेनाऽपहारे, द्वित्वे च कृते, पुनः प्राप्ते गुणवृद्धी बाधित्वाऽन्तरङ्गत्वात् सवर्णदीर्घाऽऽपत्तिः।

अथ 'अभ्यासस्य' (६।४।७८) इति सूत्राऽऽरम्भसामर्थ्यान्न दीर्घः। न चेयर्त्तीत्यादौ चारितार्थ्यम्। तावन्मात्रप्रयोजनकत्वे हि[4]—

उरित्येव ब्रूयात्। य्वोरित्यनुवर्त्तते 'इणो यण्' (६।४।८१) इति साहचर्याद् व्याख्यानाच्च ऋधातोरेव ग्रहणम्। अर्त्तेरिवर्णस्येयङित्यर्थः।

---

१. 'क्ष्मापयतीत्यादौ' ख. पाठः।

२. एतदग्रे—'पूर्वं पूर्वमिति पक्षे यलोपस्याऽसिद्धत्वात्'—इति ख. पाठः।

३. 'अदोषाच्च' ख. पाठः।

४. तावन्मात्रप्रयोजनकत्वे हि—अभ्यासस्यार्त्ताविर्त्येव ब्रूयात्। न च श्तिपानिर्देशाद् यङ्लुकि न स्यात्। अभ्यासग्रहणसामर्थ्येनाऽदोषात्। अर्ति, इयर्त्तीत्यादौ तु प्रत्यासत्त्या स्थानिनिमित्तयोरेकाङ्गत्व एव तत्प्रवृत्त्यादोषात्। अभ्यासस्याऽर्त्तेरिति न्यासे दोषाऽभावाच्च। यद्वा—'उरित्येव ब्रूयात्'—ख. पाठः।

(अ[1]भ्यासस्यार्त्तौ' इति तु गुरुत्वान्न युक्तम्। एवम् 'अभ्यासस्यार्त्तेः' इति च।)

न च 'अ-ए-ऐ-ओ-औ-'शब्देभ्य आचारक्विबन्तेभ्यो लिटि इयङाद्यर्थम् 'अभ्यासस्य' (६।४।७८) इति सूत्रमावश्यकम्। त[2]था ओणृधातोर्ण्वुलन्तादिच्छा-क्यजन्तात् सनि 'उवोणकीयिषति' इत्याद्यर्थमप्यावश्यकमिति वाच्यम्। षष्ठाऽध्यायप्रथमाऽऽह्निकान्तस्थभाष्यप्रामाण्येन तेषामन[3]भिधानादिति चेन्न।

एवं तर्हि (इयेषेत्य[4]त्रेव) ईषतुरित्यत्राऽपि सवर्णदीर्घबाधः स्यादिति तत्रेयङादिवारणार्थमसवर्णग्रहणमावश्यकमिति चेत्, सत्यम्, एवं तर्हि सम्पूर्णसूत्रमेव तदर्थज्ञापकमस्तु। यद्यपि भाष्ये 'यदयमभ्यासस्याऽसवर्णे इत्यसवर्णग्रहणं करोति' इत्यनेनाऽसवर्णग्रहणस्यैव ज्ञापकता लभ्यते, तथापि 'न ह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवति' इति तदुपपादनग्रन्थेन संपूर्णसूत्रस्यैव ज्ञापकता लभ्यते। (तद[5]ग्रे च 'नैतदस्ति ज्ञापकम्' इत्युक्त्वा अत्त्यर्थमेतत् स्यात्, इत्यनेन सूत्रसार्थक्यं दर्शितम्। असवर्णग्रहणस्यैव ज्ञापकत्वे तद्व्यावर्त्यप्रदर्शनेन तत्सार्थक्यमेव दर्शितं स्यात्।)

ननु 'अकृतव्यूह' परिभाषया (प० ५७) इयेषेत्यादौ सवर्णदीर्घाऽप्राप्तिः। 'यदि दीर्घो न स्यात्' तर्हि गुणः स्यात्' इति सम्भावनायाः सत्त्वेन परिभाषाप्रवृत्तेः सूपपादत्व[6]ात्—इति कथं सम्पूर्णसूत्रस्य ज्ञापकतेति चेन्न। भाष्यप्रामाण्येन, धर्मिग्राहकमानेन चाऽन्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव

१. क. ग. पाठः;　　　　२. 'तथेति' ख. पुस्तके नास्ति।

३. 'अनभिधानात्। अभ्यासस्येत्यत्राऽचि श्नुवत्यतो धातुग्रहणाऽनुवृत्त्याऽभ्यासेन धात्वाक्षेपेण च धातावेव धातौ, न तु नामधाताविति व्याख्यानाद्वाऽदोष इति चेन्न।' ख. पाठः। क. ग. नास्ति।

४. क. ग. पाठः;　　　　५. ख. नास्ति।

६. सूपपादत्वात्। न च तेनैव न्यायेन गुणस्याऽप्यप्राप्तिर्दीर्घसम्भावनायाः सत्त्वादिति वाच्यम्। बहिरङ्गकृतनिमित्तविनाशस्यैव परिभाषाप्रवृत्तिनिमित्तत्वात्। न चैवमपि गुणवृद्धयोः कृतयोः, स्थानिवद्भावेन दीर्घो दुर्वारः।

यत्र तन्निमित्तविनाशकबहिरङ्गविधेः प्राप्तिस्तत्रैव तत्परिभाषाप्रवृत्तिस्वीकारणेहाऽप्राप्तेः (तस्या असत्त्वाच्च)। अन्यथा तवाप्यसवर्णग्रहणाऽभावे 'ईषतुः' इत्यत्रेयङः सम्भावनासत्त्वेनाऽकृतव्यूह-(प० ५७)परिभाषया दीर्घाऽप्राप्तावियङादिव्यावृत्त्यर्थमसवर्णग्रहणं चरितार्थमिति, तस्याऽपि कथं ज्ञापकत्वं स्यात्।

न चाऽन्तरङ्गत्वाद् दीर्घेऽपि इयायेत्यादौ पूर्वान्तिवत्त्वेनाऽभ्यासत्वादिवर्णत्वाच्च णल्यसवर्णे इयङ्विधानेन सूत्रं चरितार्थम्। न च 'अचिश्नु' (६।४।७७) इत्यनेन सिद्धिः। वृद्धिबाधनार्थत्वादिति वाच्यम्। (प्रत्यासत्त्याऽसवर्णपदेनाऽभ्यासोत्तरखण्डसम्बन्ध्यसवर्णाऽच एव ग्रहणात्। शास्त्रबाध-कल्पनाऽपेक्षया परिभाषाज्ञापकत्वस्यैवौचित्याच्च। एवं चेदमेव ज्ञापयति—'वार्णादाङ्गं बलीयः' (प० ५६) इति। एवञ्च 'इयाय इयेष' इत्यादौ सवर्णदीर्घं बाधित्वा गुणादावियङ्सिद्धिः। यदि तु समाननिमित्तकत्वरूपसमानाश्रयत्वे एवाऽस्याः प्रवृत्तिः स्यात्, तदा ज्ञापितेऽपि तदसिद्धिः। सूत्रवैयर्थ्यं च तदवस्थमेव[3])।

---

दीर्घस्य पूर्वपरविधित्वेन तत्र कार्ये–स्थानिवत्त्वाऽप्रवृत्तिरिति कथं सम्पूर्ण-सूत्रस्य' ख. पाठः।

१. क. ग. पाठः; ख. नास्ति; २. क. ग. पाठः, ख. तु नास्ति।

३. ख. पुस्तके तु (एतदन्तर्गतस्य क. ग. पाठस्य) स्थाने 'अचः परस्मिन्' (१।१।५७) इति स्थानिवत्त्वेन तदप्रवृत्तेः। स्थानिभूतादचः पूर्वसम्बन्धि-विधौ हि सः। सम्बन्धश्च पूर्वधर्मावच्छिन्नोद्देश्यकत्वम्। स्थानिभूतादचः पूर्वोऽस्थानिभूत एव गृह्यत इत्यत्र न मानम्। तक्रकौण्डिन्यन्यायाऽनित्यत्वात्। तत्र च सूत्रेऽभावातिदेशोऽपि वक्ष्यते। स्पष्टं चेदं सर्वं 'कृदतिङ्' (३।१।९३) सूत्रे भाष्य इति निरूपितं भाष्यप्रदीपोद्द्योते॥

न चाऽत्र न समानाश्रयत्वमिति भ्रमितव्यम्। अभ्यासेवर्णस्य सवर्णदीर्घेयङौ प्रति स्थानितया, ततः परस्यैव निमित्ततया तत्त्वाक्षतेः।

'स्योनः' इत्यत्र तु न प्रत्यय इव बाहुलकाद् यणादेशः। न[1] चैवमपि इयायेत्यादावियङ् दुर्लभः। तत्र कर्त्तव्ये वृद्ध्यादेः स्थानिवत्त्वेनाऽसवर्णे इति प्रतिषेधादिति वाच्यम्। सूत्राऽऽरम्भसामर्थ्यादेव स्थानिवत्त्वाऽप्रवृत्तेः। तच्च ज्ञापकं सामान्याऽपेक्षम्—अभ्यासस्य कार्ये तदुत्तरखण्डाऽऽदेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्वं नेति। अत एवाऽऽरतीत्यादौ यणादेशस्य स्थानिवत्त्वादभ्यासस्य ('ढ्रलोपे[2]' (६।३।१११) इति दीर्घो दुर्लभ इत्यपास्तम्। दीर्घविधौ तन्निषेधाच्च। अरियियादित्यत्र च स्थानि[3]वत्त्वेनेयङ् भवत्येव। तस्याऽभ्यास-) कार्यप्रतिबन्धकत्वाऽभावात्। (किञ्च[4]) अङ्गस्य 'आडजादीनाम्' (६।४।७२), 'शृदॄप्रां ह्रस्वो वा' (७।४।१२), 'उपसर्गाद्ध्रस्व ऊहतेः' (७।४।२३) इत्यादिसूत्रस्थकैयटादिप्रामाण्यात् ('साम[5]न्येन च वार्णादाङ्गं बलवदित्याश्रीयते न समानाश्रयाङ्गवर्णविषयम्' इति 'अजादेर्द्वितीयस्य' (६।१।२) इति सूत्रे कण्ठतः कैयटोक्तेश्च) पाष्ठप्रथमाऽऽह्निकान्ते भाष्येऽस्याः परिभाषायाः प्रयोजनानाम् इयायेत्यादीनां व्याश्रयसाधारणानामुपन्यासाच्च, न समाननिमित्तकत्वरूपसमानाश्र[5]यत्व एवाऽस्याः प्रवृत्तिरिति नियमः। समानकार्यिकत्वमात्रं त्वाश्रीयते।

यत्र त्वप्रवृत्तिरिष्टा, तदर्थमनित्यत्वमाश्रयणीयम्। तत्र प्रमाणं च 'च्छ्वोः शूड्' (६।४।१९) इति सूत्रस्य सतुक्कनिर्देश एव। (इयं[6] चाङ्गसम्बन्धिन्याङ्ग एवेति 'स्वरितो वा' (८।२।६) इति सूत्रे भाष्ये स्पष्टम्। तत्र हि 'कुमार्यै' इत्यादौ यणुत्तरमाट् दर्शितः। एवञ्च क्षमापयतीत्यत्रानया परिभाषया लोपं बाधित्वा गुणो दुर्वार इति चेत्, न, लघूपधसाहचर्येण

---

सा च ज्ञाप्यमाना आङ्गवर्णयोः समानाश्रयत्वे, युगपत्प्राप्तावेव च प्रवर्त्तते। ज्ञापकस्य सजातीयाऽपेक्षत्वात्। अयं ख. पाठः।

1. 'न चैवमपि असवर्णग्रहणे कृते इयायेत्यादा' ख. पाठः।

2. क. ग. पाठः, ख. तु नास्ति;　　　3. क. ग. पाठः।

4. क. ग. पाठः;　　　5. '–समानाश्रयत्वादावस्याः' ख. पाठः।

6. क. ग. पाठः, ख. नास्ति।

पुक्यन्तस्याऽच एव ग्रहणादिति चेत्, अत्राहुः—(क्ष्मापयतिवत्[1]) 'क्नोपयतीत्यादौ गुणाऽनापत्तेः। किञ्च, तच्छेपपक्षे लघूपधांऽशे इक्परिभाषाऽनुपस्थितावनिग्लक्षणत्वाद् भिन्नम्' इत्यादौ गुणनिषेधाऽनापत्तिः। क्नोः कित्वस्याऽनिग्लक्षणत्वेऽपि लघूपधगुणनिषेधप्रवृत्तिज्ञापकत्वाऽऽश्रयणे तु पदोपस्थितिपक्षज्ञापकत्वमेवोचितम्। एवं हि ज्ञापनमूलकं वाक्याऽन्तरं न कल्प्यमिति लाघवम्।

अपि च 'मृजेर्वृद्धिः' (७।२।११४) इत्यत्राऽच इत्यपकर्षे 'ऋच्छत्यृताम्' (७।४।११) इत्यत्र ऋकारप्रश्लेषे, 'ऋदृशोऽङि' (७।४।१६) इत्यादौ योगविभागादिकल्पने च तच्छेपपक्षे विपरीतगौरवम्। (किञ्च[2] विध्यङ्गत्वात् परिभाषाणां गुणत्वेन, गुणानां च परस्परमसम्बन्धेन तच्छेपत्वस्योक्तिसम्भवाऽभावः। किञ्च, परस्परापेक्षावशाद् द्वयोः शेषशेषिभावो भवति। न चैतयोः साऽस्तीति दिक्।)

न[3] च गुणविधावङ्गस्येति न स्थानषष्ठी; किन्तु इगपेक्षयाऽवयवषष्ठी। एवं च 'अलोऽन्त्यस्य' (१।१।५२) इत्यस्य प्राप्तिरेव न। एवं च मेद्यतीत्यादौ न दोष इति[4] वाच्यम्। 'सार्वधातुक' (७।३।८४) इति गुणस्य 'ईहिता' इत्यादावप्यापत्तेः। ('जुसि[5] च' (७।३।८३) इति गुणस्य 'अनेनिजुः' इत्यादावप्यापत्तेश्च)। तस्मादत्र पदोपस्थितिपक्षः।

तत्र च (विधेयसमर्पक[6])गुणवृद्धिपदश्रुतिर्लिङ्गम्[7], (तदाह—विधीयेते इति। भाष्येऽप्युक्तम्) 'गुणो वृद्धिर्भवति' इति यत्र ब्रूयादिति (तत्र[8] प्रथमाया

---

१. क. ग. पाठः; २. ख. नास्ति, क. ग. पाठः।
३. 'न च' इति स्थाने ख. पुस्तके 'एतेन' इति पाठः।
४. 'इत्यपास्तम्' ख. पाठः; ५. क. ग. पाठः।
६. क. ग. पाठः।
७. '—पदश्रुतिर्लिङ्गम्। 'विधीयते' इति तु अनुवादे परिभाषोपस्थित्यभावान्न्यायसिद्धम्। गुणो वृद्धिर्भवतीति' ख. पाठः।
८. क. ग. पाठः। ख. पुस्तके त्वस्य पाठस्य स्थाने—'गुणो वृद्धिर्भवतीति

विधेयविभक्तित्वेन तदन्तस्य विधेयसमर्पकत्वनिर्णयः। अत एव गुणादिपदानामिक्पदोपस्थापनेन चरितार्थानामपि वाक्यार्थान्वयिता। तदन्वयित्वे उपस्थापकत्वस्यैव भङ्गापत्तेः। 'वृद्धिर्यस्य' (१।१।७३) इत्यादौ यत्पदसमभिव्याहाराद् विधेयसमर्पकत्वाऽभावनिर्णयः)।

न चैवम् 'अचो ञ्णिति' (७।३।११५) 'ओर्गुणः' (६।४।१४६) इत्यादौ पदश्रुतिमात्रनिमित्तकेक्परिभाषोपस्थितिर्दुर्वारा। न च निर्दिष्टस्थानिकत्वान्न प्रवृत्तिः। अच इत्यादेः स्थानित्वनिर्णयस्य वाक्यार्थबोधोत्तरकालिकतया पूर्वमभावादिति[1] वाच्यम्। (लिङ्गस्य[2] श्रुत्यपेक्षया दुर्बलत्वेन प्रथमतः श्रौताऽजादिपदार्थघटितवाक्यार्थबोधे निर्दिष्टस्थानिकत्वेनोपस्थितस्यापि तस्य वाक्यार्थानन्वयित्वात्। सार्वधातुकेत्यादौ तु तदुपस्थितिं विना स्थान्याकाङ्क्षाशान्त्यभावेन बोध एव नेत्यन्तरङ्गेयम्।)

तत्र वृत्ते स्थानषष्ठीत्व[3] निर्णये उपस्थिताऽलोऽन्त्यपरिभाषाया अनन्त्य-

---

यत्र ब्रूयादिति भाष्ये 'भवति' इत्यप्येवमेव। ध्वनितं चेदम् 'अचश्च' (१।२।२८) इति सूत्रभाष्ये। एतेन 'गुणवृद्धिपदमनुवर्त्य' गुणो वृद्धिरिति ये गुणवृद्धी इति योजनयेदं लभ्यत इति परास्तम्। अनुवृत्तौ, योजनायां च फलाऽभावात्। अन्तरङ्गत्वाऽनापत्तेश्च। अनुवृत्त्या सिद्धेः, सामर्थ्यादिदं शब्दपरमिति वक्तुं युक्तम्।' इत्ययं पाठः।

१. 'पूर्वमभावादिति वाच्यम्। लिङ्गेनोपस्थितिसमये वा बाधकाऽभावेनावान्तरवाक्यार्थबोधे श्रौताऽच्पदेनैव स्थान्याकाङ्क्षाशान्तये पुनस्तत्पदैकवाक्यतया सामानाधिकरण्याऽसम्भवात् सामानाधिकरण्येन बोधान्तरं कल्प्यत इत्यन्तरङ्गेयम्।' ख. पाठः।

२. क. ग. पाठः।

३. इतोऽग्रे—'इक्पदघटितवाक्यार्थबोधकाल एव उपस्थिताऽलोऽन्त्य' ख. पाठः।

गुणव्यावृत्तये वाक्यैकवाक्यतया[1] बोध इति बहिरङ्गा सा। ('अलोऽन्त्य'-सूत्रस्य 'यत्र स्थानषष्ठी तत्राऽलोऽन्त्यस्येत्युपतिष्ठते' इत्यर्थेऽपि वाक्येन वाक्यस्यैवैकवाक्यता।)

'मिदेर्गुणः' (७।३।८२) इत्यादाववान्तरवाक्यार्थसमये उपस्थितेक्पदेन सामानाधिकरण्याऽसम्भवाद् वैयधिकरण्येनाऽन्वये जाते[3] (स्थाने[4]षष्ठीत्वाभावनिर्णयेन न प्रवर्तते।) तदेतदाह—**पदमुपतिष्ठत** इति। सूत्रे षष्ठ्यन्ताऽनुकरणाच्छब्दस्वरूपपरतया नपुंसकात् सोर्लुगिति बोध्यम्। (केचित्तु[5] यत्र गुणवृद्धिपदं तत्रेकामुपस्थितिरित्येव वाक्यार्थः। तत्रेक इति पदे षष्ठ्युपादानाद् इकारादयोऽप्युपतिष्ठमाना षष्ठ्यन्ता एवोपतिष्ठन्त इत्याहुः।

इक इति किम्? 'एधिता' इत्यादौ व्यञ्जनादीनां गुणो मा भूत्। ज्ञापकेनाऽनिष्टवारणे तु प्रतिपत्तिगौरवम्। 'भिन्नम्' इत्यादौ निषेधप्रवृत्तये इग्लक्षणत्वसम्पत्त्यर्थमावश्यकत्वाच्च।

**ह्रस्वदीर्घप्लुतश**ब्दैरिति—'ऊकालः' (१।२।२७) इति सूत्रात् 'ह्रस्वदीर्घप्लुतः' इति, अजिनि चाऽनुवर्त्तन इति भावः। फलं तु 'दिव उत्' (६।१।१३१), 'अष्टन आ विभक्तौ' (७।२।८४), ('युष्मद[6]स्मदोरनादेशे' (७।२।८६) इत्यादावेतदनुपस्थितिरिति बोध्यम्। विध्यन्वयस्तु प्राग्वत्।

---

१. 'वाक्यैकवाक्यतया पदैकवाक्यतया वा बोध इति बहिरङ्गा सा। तस्यापि 'यत्र स्थानषष्ठी तत्राऽलोऽन्त्यस्येत्युपतिष्ठते' इत्यर्थे पदैकवाक्यतया बोधः'। ख. पाठः।

२. क. ग. पाठः।

३. 'जातेऽवान्तरवाक्यार्थबोधकालिकस्थानषष्ठीत्वभ्रमेणेक्पदघटितवाक्यार्थबोधकाले उपस्थिताऽप्यलोऽन्त्यपरिभाषोपजीव्यस्थानषष्ठीत्वाऽभावनिर्णयेन वर्त्तत इति न तद्घटितवाक्यार्थबोधः।' ख. पाठः, क. ग. नास्ति।

४. क. ग. पाठः।

५. क. ग. पाठः।

६. ख. पाठः, क. ग. नास्ति।

(एते च परिभाषे 'अचो ञ्णिति' (७।२।११५), 'आद्गुणः' (६।१।८७), 'अतो दीर्घः' (७।३।१०१) इत्यादौ न प्रवर्त्तेते, निर्दिष्टस्थानिकत्वात्)।

'**आद्यन्तौ टकितौ**' (१।१।४६)—यद्यप्यत्र मिलितस्य नैकत्राऽन्वय इति द्वन्द्वो न प्राप्नोति, तथाऽपि साहित्याऽवच्छिन्नयोरन्वयबोधोत्तरं तात्पर्यादिवशात्, यथासङ्ख्यसूत्राऽऽरम्भसामर्थ्याच्च पुनः प्रत्येकाऽन्वयस्वीकारेण न दोषः।

एतेन **'विकृताऽविकृता देहं घ्नन्ति ते वर्त्तयन्ति च'** इति वाग्भटश्लोकोऽपि व्याख्यातः। 'च'शब्दबोधितसाहित्याऽवच्छिन्नक्रिययोः साहित्यावच्छिन्न-विकृताऽविकृतदोषाऽन्वयोत्तरं पुनस्तात्पर्यवशेन प्रत्येकान्वयाऽङ्गीकारादित्याहुः।

ध्वनितं चेदं 'दृष्टान्तस्याऽपि पुरुषाऽऽरम्भो निवर्त्तको भवति' इति भाष्येण। तत्र पुरुषाऽऽरम्भस्तात्पर्यादिः। तद्ग्राहकं चाऽत्र यथासङ्ख्यसूत्रम्। लोके तु प्रकरणादीति।

केचित्त्वेवं रीत्या प्रयोगो लोकेऽसाधुरिति भाष्यतात्पर्यमाहुः। द्वन्द्वान्ते[२] श्रूयमाणस्य इच्छब्दस्य प्रत्येकं सम्बन्धः।

पुरस्तादपवाद-(प० ६१)न्यायेन स्थाने योगत्वस्याऽयमपवादः। प्रत्ययपरत्वं तु परत्वादमुं बाधते। तेन 'चरेष्टः' (३।२।१६) इत्यादयः परा एव भवन्ति। अत एव 'गुणवचने' (५।१।१२४) इत्यादिनिर्देशाः संगच्छन्ते। अत एव यत्रैतदभावे स्थानषष्ठी, तत्रैवेदं प्रवर्त्तते। 'षष्ठी' (१।१।४९) इत्यपकर्षेण 'षष्ठ्यन्तस्य निर्दिश्यमानस्याऽऽद्यन्तौ' इत्यर्थाच्च तदाह—**यस्योक्ताविति**। आद्यन्ताऽऽक्षिप्ताऽवयवी च यच्छब्दार्थः, यथासंख्यसिद्धमर्थमाह—**क्रमादिति**।

---

१. ख. पाठः; क. ग. नास्ति।

२. 'द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकपर्याप्तार्थवाचकत्वादिच्छब्दस्य प्रत्येकं सम्बन्धः। तादृशव्यासज्यवृत्तिधर्मवाचकस्य तु न तथा यथा 'अग्नीषोमौ देवता' इत्यादावित्याद्यूह्यम्।' ख. पाठः।

**मिदचो०** (१।१।४७)—श्नमो मित्करणसामर्थ्याद् बाध्यसामान्यचिन्तामाश्रित्याऽयं स्थानेयोगत्वं प्रत्ययपरत्वयोरुभयोरप्यपवादः। न च श्नमो मः (मकारः) श्रवणार्थः। 'तृणह्' (७।३।९२) इति निर्देशात्। 'अन्त्यादचः' [1] इति सामानाधिकरण्याऽऽश्रयणे तु 'अनिदिताम्' (६।४।२४) इत्यनिदिद्ग्रहणं [2] व्यर्थं स्यात्। 'तृणह्' (७।३।९२) इत्यादिनिर्देशाश्च न सङ्गच्छेरन्नत आह—**निर्धारण** इति।

**अचामिति**—'यस्य समुदायस्य नुम् विहितस्तस्य समुदायस्याऽचां मध्ये' इत्यर्थः। सूत्रे च जातावेकवचनमिति भावः।

**तस्यैवेति**—तच्छब्देन यस्य विहितः स समुदायः परामृश्यते।

यत्तु 'तस्याऽन्त्याऽचः' [3] इति व्याख्यानम्, तन्न, त्रपूणीत्यादावङ्गस्य नान्तत्वाऽनापत्तेः। ([4] लोके पाण्याद्यवयवाङ्गुल्यादेः पुरुषावयवत्वव्यवहारात्, भवितेत्यादौ तासवयवेटो लघूपधाङ्गावयवे कृत्वेन प्राप्तस्य गुणस्य 'दीधीवेवीटाम्' (१।१।६) इति निषेधाऽऽरम्भाच्च)। अवयवाऽवयवस्य समुदायाऽवयवत्वाऽङ्गीकारेऽपि 'पञ्चाऽरत्नीनि' इत्यादौ ([5] पदस्य विभज्याऽन्वाख्याने) उत्तरपदस्याऽपि नान्तत्वाऽऽपत्तौ 'इगन्तकाल' (६।२।२९) इति स्वराऽनापत्तिः। (न [6] चाऽन्तरङ्गः स्वरः। अकृतव्यूहपरिभाषया दुर्वारत्वात्। वर्णस्य वर्णाऽन्तरावयवत्वाऽसम्भवाच्च)। अत एव 'समुदायभक्तोऽसौ नोत्सहतेऽवयवस्येगन्ततां विहन्तुम्' इत्यादिभाष्यादिग्रन्थाः सङ्गच्छन्ते।

('यत्तु [7] कृन्मेजन्तसूत्रभाष्ये 'ग्रामणि कुलम्' इत्यत्र 'इको ह्रस्वः' (६।३।६१) इति पूर्वपदोत्तरपदसन्निपातलक्षणे ह्रस्वे कृते 'ह्रस्वस्य पिति'

---

१. 'अन्त्यादच' इति सामानाधिकरण्याश्रयणे तु 'मुञ्चति' इति न सिद्ध्येत्। अन्त्यस्याऽचोऽभावेनाऽलोऽन्त्यपरिभाषयाऽन्त्यस्याऽऽपत्तेः। मित्त्वन्तु 'ज्ञानानी'त्यादौ चरितार्थम्।' ख. पाठः, क. तु कुण्डलितः, ग. नास्त्येव।

२. 'ग्रहणं च व्यर्थं स्यात्' ख. पाठः, क. ग नास्ति।

३. 'तस्याऽन्त्यस्याचः' ख पाठः; ४. क. ग. पाठः।

५. क. ग. पाठः; ६. ख. पाठः; ७. क. ग. पाठः।

(६।१।७१) इति तुकः सन्निपात(प० ८७)परिभाषया वारणं कृतम्, तत्तु इगन्तपूर्वोत्तरपदसन्निपातविधानाद् युक्तमेव। न च ह्रस्ववर्णस्यैव तुगिति 'यदागमाः' (प० ११) इति न्यायेन नेगन्तसन्निपातविघातः। तस्या अनित्यत्वेन क्वचिद् वर्णग्रहणेऽप्रवृत्ते वक्ष्यमाणत्वात्। यत्तु तत्र कैयटेनाऽवयवाऽवयवस्य समुदायावयवत्वं नेति भाष्याशय उक्तः, तन्न, 'दीधीवेवीटाम्' (१।१।६) इति सूत्राऽसङ्गत्यापत्तेः। भवितेत्यादौ तन्मध्यपतितत्वात् तद्ग्रहणेन ग्रहणेऽपि तदवयवत्वे न मानम्। स्पष्टं चेदम् 'इत्थंभूतलक्षणे' (२।३।२१) इति सूत्रे कैयटे।)

मुञ्चतीत्यादिविषये तु फलाऽभावादयोग्यत्वाच्चाऽन्तावयव इत्यंशाऽप्रवृत्तिर्बोध्या। ('आने मुक्' (७।२।८२) इत्यादौ[1] तु वचनसामर्थ्यात् सूत्रभाष्यादिप्रामाण्येन वर्णस्य वर्णाऽवयवत्वं गौणं बोध्यम्।)

**अन्तावयव** इति—पूर्वसूत्रात् समस्तमप्यन्तपदमेकदेशे स्वरितत्वबलादनुववर्त्तत इति भावः। पराऽऽदित्वे हि 'नुमचिरः' (वा० ८।२।२४) इत्यत्र नुमग्रहणं व्यर्थं स्यात्। पराऽऽदित्वाऽविशेषात् 'वारीणि' इत्यत्र दीर्घश्च न स्यात्। अभक्तत्वे तु 'वहं लिहः' इत्यत्र मुमि मोऽनुस्वारो न स्यात्, अपदान्तत्वात्[2]।

यत्तु परग्रहणं व्यर्थम्। अन्त्यादिति पञ्चमीनिर्देशेन 'तस्मादित्युत्तर[3]स्येत्युपस्थानात्' इति, तन्न, एवं हि अन्त्यादचः परस्य स्थानित्वाऽऽपत्तौ यशांसीत्यादौ सकाराऽऽदिनिवृत्तिप्रसङ्गात्। 'गुणानां च परार्थत्वादसम्बन्धः' इति न्यायेन तस्या अत्राऽनुपस्थितेश्च।

**षष्ठी स्थाने** (१।१।४९)—परिभाषाणामनियमे नियमकारिणीत्वादाह—**अनिर्धारितेति**। तेन 'ऊदुपधाया गोहः' (६।४।८९) इत्यत्र स्थाने योगत्वं न। उपधापदसन्निधानेनाऽवयवषष्ठीत्वनिर्णयात्। सति हि तस्मिन् गोहः स्थाने

---

१. ख. पाठः।

२. 'इतोऽग्रे—'यत्वभक्तत्वे 'त्रपूणीति' दीर्घो न स्यादिति। तत्तु तदादिग्रहणं स्यादिनुमर्थमित्यङ्गसंज्ञासूत्रस्थवार्त्तिकेनैव दूषितप्रायम्।' क. कुण्डलितः, ख. पाठः, ग. नास्त्येव।

३. 'तस्मादित्युत्तरस्येत्युत्तरस्येत्युपस्थानात्' ख. पाठः।

धातुमात्रस्योपधायाश्च ऊत् स्यात् ।

**स्थानेयोगे**ति—'स्थानेन योगो यस्याः' इति विग्रहः। निपातनादेत्व-व्यधिकरणबहुव्रीही। न च 'स्थानं योग[1]:सम्बन्धो यस्या वाच्यः' इत्यर्थक-समानाधिकरणबहुव्रीहिरेवाऽस्त्विति वाच्यम्। स्थानरूपसम्बन्धस्य षष्ठ्यर्थत्वाऽभावात्। स्थाननिरूपितसम्बन्धस्यैव तदर्थत्वात्। (स्थानेन[2]=स्थानशब्देन योग इति तदर्थः।) इदमेव ध्वनयितुं भगवता व्यधिकरण-बहुव्रीहिरेव दर्शितः। 'एकशतं षष्ठ्यर्थाः' इत्यस्याऽपि तन्निरूपका अनन्ता इत्यर्थः। निरूपकभेदे तद्भेदोऽपि फलित एव। 'अस्तेरनन्तरे, समीपे वा' इत्यादि भाष्यस्याऽपि 'अनन्तरादिनिरूपितसम्बन्धे' इत्येवाऽर्थः।

एतेन मतुप्सूत्रस्थभाष्यप्रामाण्येन सामीप्याऽऽनन्तर्ययोः षष्ठ्यर्थत्वाऽभावादिदमसङ्गतमित्यपास्तम्।

**प्रसङ्ग इति**—दर्भाणां स्थाने शरैः प्रस्तरितव्यमित्यादौ तथा दर्शनात्। भावल्युडन्तश्च स्थानशब्दः। तथा च 'इको यणचि' (६।१।७७) इत्यादेरिगुच्चारणप्रसङ्गे यणुच्चारणीय इत्यर्थः। प्रसङ्गश्च सति सम्भवेऽर्थवत एव। अर्थ-प्रत्यायनार्थं शब्दप्रयोगात्। एवं च 'एरुरित्यादेः' तेस्तुरिति फलितोऽर्थः। 'तेन सर्वे सर्वपदादेशाः' इति सिद्धम्। च्लिसिच्स्थलेऽपि द्योत्याऽर्थेनाऽर्थवत्ताऽस्त्येव[3]। (च्ल्य[4]ादेरनर्थकत्वमेवेति सिद्धान्ते तु वक्ष्यमाणरीत्या 'इको-

---

१. 'योगस्तद्रूपः सम्बन्धो।' ख. पाठः; २. क. ग. पाठः।

३. इतोऽग्रे-'न च शब्दनित्यताहानिः। तत्तच्छब्दज्ञाननिष्ठोत्पादविनाशयोर्विषये आरोपेण, रेखागवयन्यायेन शास्त्रस्य सत्वेन च वस्तुतस्तदुपपत्तेः। इको यणित्यादौ स्वगत्याऽनर्थकयोरपि सः। वस्तुतस्तत्राप्यच्परेकार-घटितशब्दस्याऽर्थे तत्परयकारघटितः प्रयोक्तव्य इत्येवाऽर्थः। न च यः कश्चिद् यकारघटितः स्यात्। विधेयाऽन्यश्रूयमाणवर्णत्यागे मानाऽभावात्, तदर्थबोधनाऽसमर्थत्वाच्च।' ख. पाठः।

४. क. ग. पाठः, ख. नास्ति।

यणचि' (६।१।७७) इत्यादिवद् बोध्यम्। अत एव न शब्दनित्यताहानिः। इको यणित्यादावपि 'अच्परेकारघटितशब्दस्यार्थबोधनाय प्रसङ्गे तत्परयकारघटितः प्रयोक्तव्यः' इत्यर्थः फलति)।

साक्षादवयवानामेव षष्ठीनिर्दिष्टत्वेन, विधेयत्वेन च तेषामपि स्थान्यादेशभावोऽक्षत एव। अत एव 'अचः परस्मिन्' (१।१।५७) इत्यादि सङ्गच्छते।

**स्थानेऽन्तरतमः** (१।१।५०)—षष्ठीत्यनुवृत्त्या 'यत्र स्थानषष्ठी तत्रेदमुपतिष्ठते' इति बोध्यम्। तेन विधिवाक्यैकवाक्यतयाऽस्य नियामकत्वम्, न तु विहितानां नियमः। भुक्तवन्तमिति न्यायेनाऽसम्भवात्। फलितार्थमाह—**प्रसङ्ग इति**।

**सदृशतम इति**—अर्थात् प्राप्यमाणानां मध्य एव। अत एव गङ्गोदकमित्यत्र त्रिमात्रो न। तमब्ग्रहणं किम्? वाग्घरिरित्यत्र महाप्राणत्वसाम्येन जायमानः पूर्वसवर्णो वर्गद्वितीयोऽपि मा भूत्; किन्तु नादवान् महाप्राणश्चतुर्थो घ एव यथा स्यादिति।

यत्तु तन्त्राऽऽदिना 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठमपीच्छन्ति[1], तत्तु 'इको यणचि' (६।१।७७) इत्यादौ दोषस्य स्फुटत्वादयुक्तम्।

([2]अत एव 'न भूसुधियोः' (६।४।८५) इति चरितार्थम्। अन्यथा दीर्घाणां यणप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेति भाष्ये स्पष्टम्)। **यत्राऽनेक इति**—स्थानार्थ-गुणप्रमाणकृतमित्यर्थः। ([3]प्रमाणस्योक्तरीत्या गुणत्वेऽपि, गोबलीवर्दन्यायेन पृथङ् निर्देशः। विवारादीनां बाह्यानां साक्षाद् वर्णावृत्तित्वेऽप्यौपचारिकं गुणत्वं बोध्यम्)। गुणशब्देनोक्तत्रितयाऽतिरिक्तधर्ममात्रम्। तेनाऽनान्तर्यमेवैतयोरान्तर्यमित्यादि—'स्थानेऽन्तरतमः' (१।१।५०) सूत्राऽऽदिस्थभाष्येण न विरोधः। ([4]अन्तरतमाऽभाववत्त्वमेव गुणविधौ ऋकाराऽकारयोः सादृश्यमिति तदर्थः)।

---

१. 'पाठमिच्छन्ति' ख. पाठः; २. क. ग. पाठः।

३. क. ग. पाठः; ४. क. ग. पाठः।

**स्थानत** इति—अत्र मानं तु–'षष्ठी स्थाने' (१।१।४९) इत्यतः 'स्थाने'-ग्रहणेऽनुवर्त्तमाने, पुनः 'स्थानेग्रहणमेव'। तद्धि वाक्यभेदेन 'प्रसङ्गे जायमानः स्थानत एवाऽन्तरतमः' इत्यर्थकम्।

नन्वेवमपि 'प्रसङ्गे'[1] 'स्थानकृताऽऽन्तर्यवान्' इत्येव वाक्यार्थोऽस्तु। वाक्यभेदे मानाऽभाव इति चेत्, न, तमब्ग्रहणस्यैव मानत्वात्। अन्यथा स्थान-कृत एव सादृश्ये गृह्यमाणे, सादृश्याऽन्तराऽभावात् किं तेन? इदमेव च सादृश्यान्तर[2]ग्रहणस्याऽपि ज्ञापकम्।

तत्र **स्थानतः**—'इको यणचि' (६।१।७७) इति। **अर्थतः**—'तृज्वत्क्रोष्टुः' (७।१।९५) इति। इह 'क्रोष्टुशब्दस्थाने' 'पक्तृशब्दो' नाऽऽदेशः; किन्तु 'क्रोष्टृ' इत्येव। **गुणतस्तु**—वाग्घरिरित्यादौ मूल एव स्पष्टम्।

एवं पदादय आदेशा वर्णसाम्यरूपगुणेन पादादीनामेव, न चरणा-दीनाम्। **प्रमाणतस्तु**—'अदसोऽसेः' (८।२।८०) इत्यादौ। **बलीय** इति। तेन 'चेतः' इत्यादौ प्रमाणत आन्तर्यवान्—अकारो गुणो न।

**तस्मिन्निति** (१।१।६६)—न स्वरूपपरम्, उदाहरणाऽभावात्। न च 'तस्मिन्नणि च' (४।३।२) इत्येवोदाहरणम्। फलं तु 'हे यौष्माकीण, अस्मभ्यं देहि' इत्यादौ खञः परस्याऽऽदेशा मा भूवन्निति वाच्यम्। 'एङ्ह्रस्वात् सम्बुद्धेः' (६।१।६९) इत्यादाविवाऽङ्गाऽऽक्षेपे सति, तस्य च निरूपकाऽऽ-काङ्क्षायामाक्षेपकखञणोः सम्बन्धेनाऽदोषात्। तत्रैव कर्त्तु युक्तत्वाच्च; किन्तु अचीत्यादिसप्तम्यन्तार्थकः स्वतन्त्रस्य सर्वनाम्नो निर्देशः। सप्तमी[3] तु—सप्तम्यन्तानामेव तच्छब्दार्थत्वमिति बोधनाय (त[4]द्बोध्यार्थस्य 'निर्दिष्टे' इत्यनेन सामानाधिकरण्याय च[5])।

---

१. 'प्रसङ्गे' इति ख. नास्ति; २. 'सादृश्यान्तरसत्त्वस्यापि'—ख. पाठः।
३. 'सप्तम्यनुवादिका सप्तम्यन्तानामेव' ख पाठः; ४. क. ग. पाठः।
५. एतदुत्तरम्—'सप्तम्यन्तानामनुकरणमित्यस्याऽप्यत्रैव तात्पर्यम्। अनुकरणं हि शब्दबोधकम्। तथाऽत्राऽपि सप्तम्यन्तपदबोधकस्तच्छब्द इत्यर्थः' ख. पाठः। क. पुस्तके तु कुण्डलितः। ग. तु नास्ति।

'इति'शब्दः पुनस्तस्य तदर्थपरत्वं बोधयति। अन्यथा 'सप्तम्यन्ते पदेऽव्यवहितोच्चारिते' इत्यर्थः स्यात्। एतेन 'सप्तमीनिर्दिष्टे पूर्वस्य' इति सूत्रयितुमुचितमित्यपास्तम्।

किञ्चैवं 'यत्र सप्तम्यन्तनिर्देशः' इत्यर्थे 'नेड् वशि' (७।२।८) इत्यादौ 'तस्मिन्निति' (१।१।६६) इत्यस्याऽऽपत्तिः। यथान्यासे[1] तु तच्छब्दस्य बुद्धिस्थ-परामर्शकतया, यत्राऽर्थे सप्तमीविधानं तदर्थकसप्तम्यन्तस्यैव ग्रहणान्न दोषः।

'निः' शब्दो नैरन्तर्यपरः। दिशिरुच्चारणक्रियः। एवञ्च 'सप्तम्यन्ताऽ-र्थेऽव्यवहितोच्चारिते[2] उपश्लिष्टस्य पूर्वस्य कार्यम्' इति वाच्योऽर्थः[3]।

एवं च नियमद्वयं फलितम्—अव्यवहित एव, पूर्वस्यैवेति च। अत एव 'जनपदे लुप्' (४।२।८१) इत्यादौ न दोषः। न ह्यर्थ उच्चारितो नाऽपि शब्दस्य निरन्तरः। अव्यवहितपूर्वपराऽन्यतरस्थत्वं हि निरन्तरत्वम्। अवध्यवधिमतोः साजात्यस्यैवौचित्यात्।

किञ्चाऽर्थनिर्देशे 'जनपदे यः प्रत्ययः' इत्यन्वयेऽनियमप्रसङ्गाऽभावा-न्नियमफलायाः परिभाषाया अनुपस्थितिः[4]।

एवमुत्तरसूत्रे 'तस्मात्' (१।१।६७) इत्यपि बोध्यम्, एतत्सूत्रसाहचर्यात्[5]। अन्यथा तदपि 'तस्माच्छसः' (६।१।१०३), 'तस्मान्नुडचि' (६।३।७४) इति योगद्वय एव स्यात्। 'उच्चरत आन् उपलभते', 'गौरनश्वः' इत्यादेर्व्या-वर्त्यस्य तत्र सम्भवात्।

---

१. 'यथान्यासे त्वर्थपरत्वादर्थस्य च यत्रार्थे सप्तमीविधानं तस्यैव ग्रहणात्' —ख. पाठः।

२. 'उच्चारिते सति, ततः पूर्वस्य कार्यम्'—ख. पाठः।

३. इतोऽग्रे—'यत्र सप्तम्यन्तेनाऽर्थनिर्देशः, तत्र निर्दिष्टे पूर्वस्येत्युपतिष्ठते इति वा।'—इति ख. पाठ। ४.' अनुपस्थितिरित्याहुः'—ख. पाठः।

५. इतोऽग्रे—'तस्मादित्यत्र 'निर्दिष्टे' इति पञ्चम्या विपरिणम्यत इति बोध्यम्।' —ख. पाठः।

तथा चैतत्परिभाषाद्वयोपस्थितौ सप्तम्यन्तपदस्य, पञ्चम्यन्तपदस्य च अर्थो लिङ्गमित्याशयेन फलितमाह—सप्तमीति।

'इको यणचि' (६।१।७७) इत्यादौ 'यस्य च भावेन' (२।३।३७) इति सप्तमी[1]।

---

1. इतोऽग्रे—'तेनाऽचि सति यण् भवतीत्यर्थः' इति केचित्, तन्न, औपश्लेषिकाऽधिकरणसप्तम्यन्तत्वेनाऽवश्याऽऽक्षेप्यप्रधानक्रियाऽन्वये सम्भवति, 'सति' इत्यध्याहारे मानाऽभावात्। किञ्च तदध्याहारसामर्थ्यादस्याः परिभाषाया अप्रवृत्तिरेव स्यात्, 'नित्यं ङितः' (३।४।९९) इत्यादौ विहितपदाध्याहारे 'तस्मादित्युत्तरस्य' (१।१।६७) इत्यस्यैव। अत एव तत्र 'आदेः परस्य' (१।१।५४) इत्यस्याऽप्रवृत्तिः। व्यवहितेऽपि सलोपश्च। अत एव 'श्नान्नलोपः' (६।४।२३) इति सूत्रे भाष्ये 'नान्नलोपः' इति सूत्रमस्त्वित्याशङ्क्य, 'नन्दितेत्यत्र दोषः। एवं तर्हि क्ङिति इत्यनुवर्तते। एवमपि हिनस्तीत्यत्र न प्राप्नोति। एवं तर्हि नैषा परसप्तमी। का तर्हि? सत्सप्तमी। एवमपि नन्दमान इत्यत्र प्राप्नोति' इत्युक्तं सङ्गच्छते। तस्मादौपश्लेषिकेऽधिकरणे सप्तमी। उपश्लेषश्चेगादिद्वारा परम्परासम्बन्धेन। एवञ्चाऽचीत्यादिसप्तम्यन्तानां यणादिभावनायामेवाऽन्वयः। स्पष्टं चेदं संहितासंज्ञासूत्रे भाष्ये।

तत्रोपश्लेषः पूर्वस्यैव, परस्याऽपीति 'पूर्वस्यैव' इति नियमार्थमिदम्। तत्र 'पूर्व'शब्देन न भावना। तस्या अर्थरूपत्वेन शब्देन पौर्वापर्याऽसम्भवात्। नाऽपि तद्विशेषणं यणादिकम्। इक्शब्दोत्तरषष्ठीबोधिताऽर्थस्य 'पूर्वस्य' इत्यनेनानुवादे लाघवेन, अयोग्यत्वेन च पूर्वस्येति षष्ठ्याऽनन्वयात्, मानाऽन्तरप्राप्ताऽचो लक्ष्यसंस्कारवेलायामविद्यमानविधेययणादिना पौर्वापर्याऽभावाच्च। भाविबुद्ध्याश्रयणे तु न मानम्; किन्तु तद्विशेषणमिगादिकम्। ततोऽधिकं तु न, मानाऽभावात्।

इदमेवाऽभिसन्धाय 'विधौ परिभाषा, नाऽनुवादे' इत्युद्घोषः। अत एव 'उदीचामातः' (७।३।४६) इति सूत्रे 'स्थाने'ग्रहणं चरितार्थम्। 'षष्ठी स्थाने' (१।१।४९) इत्येतत् साक्षाद् विधेयविशेषणे 'इकः' इत्यादौ चरितार्थम्, तद्विशेषणे न प्रवर्त्तेत। क्वचित्तु—'उदात्तस्वरि-

अ[1]श्रूयमाणक्रियत्वेऽप्यन्तरङ्गत्वादस्त्यर्थलाभः।

तेना[2]ऽचि सति यण् भवतीत्यर्थे 'पूर्वस्य', 'परस्य वा' इत्येवमादिसन्देहे इदमुपतिष्ठते। पूर्वत्वं च—प्रत्यासत्त्या सप्तम्यर्थापेक्षमेवेति **केचित्, तन्न,** 'सप्तम्यन्तार्थेऽव्यवहितोच्चारिते' इत्यर्थे कुतोऽव्यवधानमित्याकाङ्क्षायाम् 'सप्तम्यन्तार्थान्वय्यर्थापेक्षया' इति प्रत्यासत्त्या लभ्यते। पूर्वापेक्षयाऽव्यवधानग्रहणेऽपि, पूर्वः प्रत्यासत्त्या सप्तम्यन्तार्थान्वय्येव गृह्यते। सत्सप्तम्यां हि विधेययणादिकर्तृक-भवतिक्रियान्वयित्वेन। तत्क्रियायास्तत्कर्त्तुश्च विधेयतया। तदपेक्षाऽव्यवधानस्याऽनुवादाऽयोगात्। पूर्वस्येकः सप्तम्यर्थान्वयित्वाऽभावाच्च। मम तु 'अजुपश्लिष्टस्येकः' इत्यर्थे सप्तम्यन्तान्वयीगपेक्षयाऽव्यवधानं युक्तं वक्तुम्। 'अचि सति विद्यमानस्येकः' इत्यर्थे तु पदद्वयाऽध्याहारे गौरवम्। किञ्चाऽत्र सूत्रे 'निर्दिष्टे' इति सप्तम्यौपश्लेषिकेऽधिकरण एवोचिता। 'उपपदविभक्तेः' (पृ० १०४) इति न्यायात्।

तत्र न्याये **कारकविभक्तित्वं च**—कारकाऽधिकारपठितसंज्ञावदर्थनिमित्तकविभक्तित्वम्। प्रथमाया अपि तिङ्समानाधिकरणे विधानात् तत्त्वमिति 'तत्र च दीयते' (५।१।९६) इति सूत्रे भाष्यकैयटयोर्ध्वनितम्। एवञ्च यत्रैवाऽधिकरणे सप्तमी, तत्रैवाऽस्य प्रवृत्तिर्न तु (सत्) सप्तम्याम्। एतदर्थमेव 'निर्दिष्टे पूर्वस्य' इति भिन्नविभक्तिकनिर्देशश्चरितार्थः। अन्यथा 'सप्तम्यन्तार्थे सति, तदपेक्षयाऽव्यवहितस्य पूर्वस्य' इत्यर्थकं निर्दिष्टस्य पूर्वस्येत्येव वदेत्।

यद्वा—'सप्तम्यन्तार्थेऽव्यवहिते परे सति कार्यं भवति' इत्यर्थकं 'निर्दिष्टे परे' इति वदेत्। उक्तन्यायादपि 'इको यणचि' (६।१।७७) इत्यादौ सैवोचिता। लक्ष्यानुसारात्तु क्वचित् तन्न्यायत्यागपूर्वकं सत्सप्तम्यपि।

---

तयोर्यणः' (८।२।४) इत्यादौ लक्ष्याऽनुरोधाद् व्याख्यानाच्चाऽधिकेऽपि प्रवृत्तिः। अचीत्यादिकमपि भावनायामेतद्द्वारैव विशेषणम्।'—इति ख. पुस्तकेऽधिकः पाठः।

१. क. पाठः, ख. नास्ति; २. पृष्ठ ११७–११८स्थः पाठः ख. नास्ति।

'तस्मादित्युत्तरस्य' (१।१।६७) इति सूत्रे तु निर्दिष्टपदं निर्दिष्टादिति विभक्तिविपरिणामेनाऽन्वेति। सा चोत्तरस्येति दिग्योगलक्षणेति दिग्योगलक्षणपञ्चम्यामेव तत्प्रवृत्तिः। अत एव 'कर्तृकर्मणोः कृति' (२।३।६५) इत्यत्राऽस्याऽप्रवृत्तिः, सत्सप्तमीसत्त्वात्। 'कृति सति प्रत्यासत्त्या तत्प्रकृत्यर्थकर्तृकर्मणोः षष्ठी' इति तदर्थः।

अत एव 'श्नान्नलोपः' (६।४।२३) इति सूत्रे भाष्ये 'नान्नलोपः' इति सूत्रमस्त्वित्याशङ्क्य, 'नन्दितेत्यत्र दोषः। एवं तर्हि ङितीत्यनुवर्त्तते। एवमपि हिनस्तीत्यत्र न प्राप्नोति। एवं तर्हि नैषा परसप्तमी। का तर्हि? सत्सप्तमी। एवमपि नन्दमान इत्यत्र प्राप्नोति' इत्युक्तं सङ्गच्छते।

उत्तरसूत्रस्य च 'विहित'पदाध्याहारेण पञ्चम्यामप्रवृत्तिः। तस्मादौपश्लेषिकेऽधिकरणे सप्तमी, उपश्लिष्टस्येत्यध्याहारेण। 'अच्युपश्लिष्टस्येकः' इत्यन्वयः। उपश्लेषश्च समीपवृत्तित्वम्। स्पष्टं चेदं 'संहितायाम्' (६।१।७२) इत्यत्र भाष्ये। 'शब्दस्य च शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हति, अन्यदत उपश्लेषात्। इको यणचि—अच्युपश्लिष्टस्येति' इति हि तत्र भाष्ये उक्तम्।

तथा हि—अचीत्यस्य न कर्त्तृयणादिद्वारा विधेयभावनायामन्वयः। तस्याऽविद्यमानत्वेन तदधिकरणत्वाऽसम्भवात्। कर्तृकर्माऽधिकद्वारकसम्बन्धेनाऽन्वयेनाऽधिकरणत्वे तु न मानम्। तस्मादुपश्लिष्टपदाध्याहारे विधेयविशेषणेऽन्वयः।

इदमेवाऽभिसन्धाय—'विधौ परिभाषा, नाऽनुवादे' इत्युद्घोषः। तत्राश्लेषः पूर्वस्येव, परस्याऽपीति 'पूर्वस्यैव' इति नियमार्थमिदम्। संयोगवत्पूर्वपरयोर्वर्णयोर्बौद्धौपश्लेषिकाऽऽधारत्वस्याऽप्यस्माकं सत्त्वात्।

'क्ङिति च' (१।१।५) इत्यादौ तु लक्ष्यानुरोधात् सतीति, 'प्राप्नुतः' इति चाऽध्याहार्यम्। तत्र च परिभाषा-प्रवृत्तिर्नेत्युक्तम्। तेन 'क्ङिति सति ये गुणवृद्धी प्राप्नुतस्ते न' इत्यर्थः। अन्यथा ह्यव्यवहितक्ङिदुपश्लिष्टस्य पूर्वस्येको गुणवृद्धी न भवतः' इत्यर्थापत्तौ भिन्नमित्यादौ निषेधाऽनापत्तिः।

सतीत्यध्याहारे च 'यस्य च भावेन' (२।३।३७) इति ज्ञापकत्वार्ऽथिका सप्तमी। ज्ञापकत्वञ्च सम्बन्धं विनाऽनुपपन्नं सद्विधिशास्त्रक्लृप्तनिमित्तत्व-मादाय पर्यवस्यति। एवं च 'निमित्ततया क्ङिज्ज्ञाप्या या गुणवृद्धिप्राप्तिः, सा न' इत्यर्थः।

केचित्तु 'क्ङित्सत्तोपलक्षिता या गुणवृद्धिप्राप्तिस्तदभावः' इति वाक्यार्ऽर्थः। एवं च साध्यगुणवृद्धि-सिद्धक्ङितोः समभिव्याहारे सिद्ध-साध्येति न्यायेन निमित्तत्वं फलति। राहूपरागे स्नायादितिवत्। 'क्ङिन्निमित्ते ये गुणवृद्धी' इति तु फलितार्ऽर्थकथनम्, न तु निमित्ततायामस्मच्छास्त्रे सप्तमीविधानमस्तीति भ्रमितव्यमित्याहुः।

(तत्र प्रायेणौपश्लेषिकेऽधिकरणे सप्तमी, क्वचित्तु लक्ष्याऽनुसारात् सति सप्तमीति बोध्यम्)।

अत्र च नियमद्वयं फलति—'सप्तम्यन्तार्थेऽव्यवहित एव', 'पूर्वस्यैव' इति च।

---

१. 'सतीत्यध्याहारे च' इत्यतोऽग्रे—'क्ङिति च' इत्यादौ तु क्ङितीत्यस्य साक्षादभावे, क्रियायां वाऽन्वयेन न परिभाषाप्रवृत्तिः, तयोरर्थरूपत्वात्। एतेन 'गुणवृद्ध्योरन्वयेन सा' इत्यपास्तम्, प्रसक्तस्यैव निषेधात्। विद्य-मानत्वेन (दैशिक-) पौर्वापर्याऽसम्भवात् (च)। न च गुणवृद्ध्याक्षिप्तस्था-निन्यन्वयेन परिभाषा दुर्वारेति वाच्यम्। शब्दोपस्थितस्य शब्दोपस्थितेऽ-न्वये सम्भवत्याक्षिप्तेऽन्वयस्याऽनुचितत्वात्।

न च 'क्ङिति सति पूर्वस्य ये गुणवृद्धी प्राप्नुतस्ते नेत्यर्थः। प्राप्ति-क्रियायाः, सत्तायाश्च निषेध्यक्रियाऽपेक्षयाऽप्राधान्येन, तदन्वये परि-भाषाया अप्रवृत्तेः। तत्र च 'यस्य च भावेन' इति ज्ञापकत्वार्थिका सप्तमी' इति—ख. पाठः। क पुस्तके तु कुण्डलितः, ग. तु नास्त्येव।

२. 'ज्ञाप्ये गुणवृद्धी नेत्यर्थः' ख. पाठः; ३. ख. पाठः। क. ग. नास्ति।

४. 'अत्र च वाक्यद्वयम्। सप्तम्यन्तेऽव्यवहिताऽधिकारबहिर्भूतोदाहरणसम्भ-वात्'—ख. पाठः।

आद्येन व्यवहितव्यावृत्तिः। अव्यवहितस्येति तु फलितार्थकथनम्। न च व्यवहिते संहिताया एवाऽभावः। संहिताऽधिकारबहिर्भूतोदाहरण-सम्भवात्। व्यवधानञ्च न वर्णशून्यकालकृतं व्यावर्त्यम्। संहिताऽधि-कारबहिर्भूतानां वर्णशून्यकालव्यवाये प्रवृत्तेस्तदधिकारेण बोधनात्। अत एवाऽवग्रहेऽप्यानङादयः।

पूर्वशब्दश्च व्यवहिताऽव्यवहितसाधारणो लोके दृष्टः। 'अचः परस्मिन्' (१।१।५७) इत्यादौ च। (कटे शयाने देवदत्ते 'न भूमौ शेते' इति व्यवहारादुपश्लेषोऽपि तथा)। अतोऽव्यवहितार्थकं निर्दिष्टपदम्। व[१]स्तुतोऽवग्रहे सम्प्रदाय एव शरणम्। संहिताधिकारो निर्दिष्टपदं च विफलमेव, अर्द्धमात्राकालाधिकव्यवधाने उपश्लेषाऽभावात्। स्पष्टं चेदं 'संहितायाम्' (६।१।७२) इति सूत्रे भाष्यकैयट[२]योः।

'उदः स्थास्तम्भोः' (८।४।६१) इत्यादौ 'उदः' इत्यादि दिग्योगलक्षणा पञ्चमी। तत्राऽनियतदिक्शब्दाऽध्याहारे प्रसक्ते, परशब्दस्यैवाऽध्याहार इति 'तस्मात्' (१।१।६७) इत्यनेन नियम्यते।

'प्रत्ययः' (३।१।१), 'परश्च' (३।१।२) इत्यादौ तूत्तरांऽशविकला 'तस्मादित्युत्तरस्य' (१।१।६७) इति परिभाषा प्रवर्त्तते। अतो न प्रत्यया व्यवहिताः। अत एव 'छन्दसि परेऽपि' (१।४।८१), 'व्यवहिताश्च' (१।४।८२) इति सूत्रं सार्थकम्। पूर्वस्येति च न स्थानषष्ठी। तत्तद्विधिभिरेव सम्बन्धस्य निर्णीतत्वेन, 'षष्ठी स्थाने' (१।१।४९) इत्यस्याऽप्राप्तत्वात्। अत एवाऽऽगमविधौ न दोषः[३]। 'आने मुक्' (७।२।८२) इत्यादौ तु अत आने मुगित्यापाततः सूत्रार्थे ज्ञाते, आगमिसन्देहे प्राप्ते, सप्तम्या अचरितार्थत्वेन, पञ्चम्याश्च पूर्वसूत्रे कृतार्थत्वेन, 'तस्मिन्' (१।१।६६) इत्यस्यैव प्राप्तौ, पूर्वसम्बन्धित्वं निर्णीयते। एवमन्यत्राऽप्यूह्यम्।

'गाङ्कुटादिभ्यः' (१।२।१) इत्य[४]ादौ अञ्णितः प्रत्ययस्य परस्यैव

१. ख. पाठः, क.ग. नास्ति; २. मध्यस्थोऽयं. क.ग. पाठः, ख. तु नास्ति। ३. ख. नास्त्ययं पाठः; ३ 'इत्यादौ न दोषः। तत्राऽञ्णितः' ख. पाठः।

सम्भवेन, प्रत्यासत्त्या गाङादिप्रकृतिकस्यैव प्रत्ययस्य ग्रहणेन चाऽनियमाऽप्रसक्त्या, परिभाषाया अप्रवृत्तिरेव[1]।

ननु परिभाषाणां नियमत्वव्यवहारः कथम्? तासां विध्यङ्गभूतत्वेन[2], तदेकवाक्यतयैव विधेर्लक्ष्यसंस्कारकत्वस्वीकारेण, व्यवहितादौ प्रवृत्तेरेवाऽभावादिति चेत्, न, 'यदि परिभाषासूत्रं न स्यात् तदा[3] व्यवहितादावपि प्रवृत्तिः स्यात्' इत्येतावता नियमत्वव्यवहारात्। (आसां[4] च न परिसंख्यारूपनियमत्वम्; अपि तु व्रीहीनवहन्तीतिवदार्थनियमत्वमित्यन्यत्र विस्तरः)।

**अलोऽन्त्यस्य** (१।१।५२)—'षष्ठी स्थाने' (१।१।४९) इत्यनुवर्त्तते। तदाह—**षष्ठीनिर्दिष्टेति**। स्थानषष्ठीनिर्दिष्टाऽन्त्यस्येत्यर्थः। स्थानेत्यादि किम्? इट् तृच ऋकारात् पूर्वो मा भूत्। **अन्त्यस्येति**—अल इत्यर्थः। अल इति किम्? पदस्येति विधीयमानं 'वसुस्रंसु' (८।२।७२) इति दत्वं स्वनडुद्भ्यामित्यादावन्त्यस्य पदस्य मा भूत्[5]।

अन्त्यस्येति षष्ठीसाहचर्याच्चाऽल इति षष्ठ्यन्तमेव।

तथा च नियमद्वयमत्र फलितम्—'अल एव' इति, 'अन्त्यस्यैव' इति च। एवं चाऽल्समुदायोत्तरं स्थानषष्ठी अस्या लिङ्गमिति बोध्यम्। अत एव 'इतोऽत्सर्वनामस्थाने' (७।१।८६) इत्यादौ नाऽस्याः प्रवृत्तिः। 'पथ्यादीनामित्यस्याऽवयवषष्ठीत्वात्। 'इतः' इत्यस्याऽल्समुदायोत्तरत्वाऽभावाच्च। ध्वनितं चेदमिको गुणवृद्धी(इ)त्यत्र **भाष्यकैयटयोः**।

---

१. 'अप्रवृत्तेः' ख. पाठः।

२. 'विध्यङ्गभूतत्वेन ताभिरुपस्कृतस्य, निष्पन्नमूर्तिकस्य विधेः'। ख. पाठः।

३. 'स्यात्तदा केवल एव विधिरुदाहरणेषु प्रवर्त्तेत। तथा व्यवहितादावपि' —इति ख. पाठः। ४. ख. पाठः। क. ग. पुस्तके तु नोपलभ्यते।

५. इतोऽग्रे—'एतेनाऽल इति जसन्तमादेशविशेषण'मिति परास्तम्। लोपानामन्त्याऽऽदेशताऽनापत्तेश्च।' अयं ख. पाठः। क. कुण्डलितः। ग. नास्ति।

**ङिच्च** (१।१।५३)—अनेकालर्थमिदम् । तद् ध्वनयन्नाह—**सर्वस्येति** । **आदेरिति**—आदेरल इत्यर्थः । (तेन द्वीपमित्यादौ पान्तसमुदायस्य नेत्त्वमित्याहुः)। अत्र 'परस्य' इत्यावर्त्तते । तेन परबोधकशब्देन यत्र परस्य स्थाने विधानं तत्रैवेयं परिभाषा। तेन 'नित्यं ङितः' (३।४।९९) इत्यादौ न दोषः । न च 'धातोः' (३।१।९१) इत्यधिकारात् तत्राऽप्यस्त्येव परशब्देन विधानम् । विकरणव्यवधाने प्रवृत्त्यनापत्त्या, पूर्वोत्तरसाहचर्याच्च 'धातोर्विहितस्य' इत्यर्थस्यैव तत्राऽङ्गीकारात् । अत एव 'अनेकाल्शित्' (१।१।५५) इत्यत्र भाष्ये शिच्छब्दाऽभावे 'जशः शी' (७।१।१७) इत्यादयोऽन्त्यस्य स्युरित्युक्तम् । **कैयटेन** च—'अतः सर्वनाम्नः' इति षष्ठी, नपुंसकादिति विहितपञ्चमीति तदाशयो वर्णितः ।

**अनेकाल्शित्**(१।१।५५)—शित उदाहरणम्—'इदम इश' (५।३।३) । इतः[2] ।

ननु 'नाऽनेकाल्शि'दित्यलोऽन्त्यस्याऽऽदेः परस्येत्यनुसंहारद्वयनिषेधेनैव सिद्धौ, 'सर्वस्ये'ति व्यर्थम् । न च मध्यस्थस्याऽऽपत्तिः । 'निर्दिश्यमानस्य (प० १२) इति न्यायविरोधात्, षष्ठ्या बोधितस्य समुदायनिष्ठस्थानित्वस्य त्यागे मानाऽभावाच्चेति चेत्, चिन्त्यमेवैतत् । (अनन्तरस्य (प० ६३) इति न्यायेन 'आदेः परस्य' (१।१।५४) इत्यस्यैव निषेध इति शङ्कावारणार्थं तदित्यन्ये) ।

---

१. क. ग. पाठः, ख. नास्ति ।

२. इतोऽग्रे-'जश्शसोः शिः' (७।१।२०) इत्यादौ तु सर्वादेशतायाः प्राक् शित्वाऽभावेन डा-णलोरिवाऽऽनुपूर्व्यादनेकाल्त्वेनैव सर्वाऽऽदेशत्वमिति नैतदुदाहरणं तत् ।'

'आदेशानां प्रत्ययाधिकारे पाठेऽपि वाक्यार्थबोधोत्तरमेव प्रत्ययत्वज्ञानेन उपदेशे णलादीनामित्त्वाऽप्रवृत्तेः ।' क. कुण्डलितः पाठः । ख. ग. तु नास्त्येव ।

ख पुस्तके तु-आदेशानां 'प्रत्ययाऽधिकारे पाठेऽपि नौपदेशिकं प्रत्ययत्वमिति 'प्रत्ययः' (३।१।१) इति सूत्रे उपपादयिष्यामः । आदेशोत्तरमित्संज्ञालोपयोरेकाल्त्वेऽपि न दोषः । उपजीव्यविरोधादित्याहुः' । —अयं पाठः क. पाठस्थाने ।

३. क. ग. पाठः, ख. नास्ति ।

ननु शिद्ग्रहणं व्यर्थम्। तदभावेऽपि इशादेः शकारस्य कार्याऽभावादित्संज्ञाभावेऽनेकाल्त्वादेव सर्वाऽऽदेशत्वसिद्धेः। न च 'ध्वसोरेद्धौ' (६।४।११९) इति लोपस्य सर्वाऽऽदेशत्वाऽर्थमिति वाच्यम्। 'लोपो यि' (६।४।११८) इति प्रकृते पुनर्लोपग्रहणेन तस्य सिद्ध[1]त्वादिति चेत्, न,[2] अनुबन्धानामनेकान्तत्वे औशादौ शकारस्य—'दिव औत्' (७।१।८४) इति तकारस्येव, 'ऋदोरप्' (३।३।५७) इति दकारस्येव, 'सिब्बहुलम्' (३।१।३४)

---

१. 'सिद्धत्वात्। न च 'नाऽनुबन्धकृतमनेकाल्त्वमिति ज्ञापनार्थम्। तत्फलं तु 'अर्वणः' (६।४।१२०) इत्यादेरसर्वाऽऽदेशत्वमिति वाच्यम्। अनुबन्धानामनेकान्तत्वात्। तत्रोगित्वप्रयुक्तनुम्फलस्य सम्भावितत्वेन पूर्वमित्वप्रवृत्तेः। डाणस्विषये तु सर्वाऽऽदेशत्वं विनाऽनुबन्धत्वस्यैवाऽभावेन, तदतिरिक्तविषयमेत्राऽनेकान्तत्वमिति न दोषः। लोपमात्रफलिकेत्संज्ञाया अभावाच्च न लोपः फलम्।

न च औशः शकारः—आदेशस्य औकाररूपत्वमेव, न त्वोकाररूपत्वमिति सन्देहनिवर्त्तकत्वेन न व्यर्थ इति, तस्य लोपमात्रफलकत्वेऽपि, पूर्वमेव भविष्यतीति, तस्य सर्वादेशत्वाय शिद्ग्रहणमिति वाच्यम्। 'अचि श्नु' (६।४।७७) इत्यादाविव व्याख्यानेनैवाऽसन्देहसम्भवात्। 'औ' इति विभक्तिरहितनिर्देशेनैवाऽसन्देहसम्भवाच्च।

न चाऽभस्याऽपि टेर्लोपवदधात्वधिकारस्थत्वेऽपि सार्वधातुकसंज्ञाफलमस्त्विति वाच्यम्। तिङ्साहचर्य-धात्वधिकार-महासंज्ञानां बोधकल्पनेऽतिगौरवात् संज्ञामात्रकल्पनेनाऽपि फलवदुपदेशकालाऽव्यवहितोत्तरकालाऽभावादित्संज्ञाया अनापत्तौ, शकारश्रवणवारणाऽर्थं शित्करणात्। विद्यतिक्रियाऽध्याहारे च मानाऽभावेन, गौरवेण च, शित्करणेन च 'उपदेशे' इत्यस्य प्रधानक्रियाऽन्वयस्यैव युक्तत्वाद्। ज्ञापकपरभाष्यस्याऽन्यत्रैव तात्पर्यमित्याहुः।

कार्यकालपक्षाऽनुगृहीतैकान्तत्वपक्षे तु भाष्योक्तज्ञापकं तत्फलं च स्पष्टमेवेति दिक्'।—इति ख. पाठः, क. ग. पाठस्थाने।

२. इत आरभ्य 'न सर्वादेशत्वमिति भाष्ये स्पष्टम्' इत्यन्तः क. ग. पाठः।

इति सूत्रे पकारस्येव चोच्चारणार्थत्वसम्भवेन, औत इव सर्वाऽऽदेशत्वाऽनापत्त्या तस्याऽऽवश्यकत्वात् ।

'एकान्ता अनुबन्धाः' (प० ५) इति पक्षे तु विधेयविषये उच्चारणार्थानामपीत्संज्ञायाः 'तस्य लोपः'(१।३।९), 'वेरपृक्तस्य'(६।१।६७) इत्यादिभाष्यसम्मतिपूर्वकं 'दिव औत्' (७।१।८४) सूत्रे उपपादयिष्यमाणतया, तत्पक्षे चेत्संज्ञायाः सर्वत्र प्रयोग एव प्रवृत्त्या, शिद्ग्रहणं विनाऽप्यनेकाल्त्वात् सर्वादेशत्वे सिद्धे, तद्ग्रहणं 'नानुबन्धकृतमनेकाल्त्वम्' (प० ६) इत्यस्य ज्ञापनार्थम् । तेन औदादीनां न सर्वादेशत्वमिति भाष्ये स्पष्टम् ।

**परत्वादिति**—'आदेः परस्य' (१।१।५४) इत्यस्याऽवकाशः—'द्व्यन्तरुपसर्गेभ्योऽप ईत्' (६।३।९७) । द्वीपम् । 'शित्सर्वस्य' इत्यस्य—'इदम इश्' एवम् 'अतो भिस' इत्यादिविषये 'अनेकाल्' (१।१।५५) इत्यनेन 'आदेः परस्य' (१।१।५४) इति परत्वाद् बाध्यते ।

एतेन 'ङिच्च' (१।१।५३) इत्यत्र 'ङिदेवाऽनेकालन्त्यस्य' इति नियमेन सिद्धेऽनेकाल्ग्रहणं[1] व्यर्थमित्यपास्तम् ।

---

१. 'अनेकाल्ग्रहणं व्यर्थम् । किञ्च, स्वं रूपमित्यतः पूर्वं 'तस्मादित्युत्तरस्याऽऽदेः' इत्येव सूत्रमस्तु । तत्राऽऽदेरिति पृथग् वाक्यम् । तत्र उत्तरस्येत्यनुवर्त्तते । स्थानषष्ठी चेयम् । एवं च 'पञ्चमीनिर्देशेन यत् कार्यं तदुत्तरसम्बन्धि', 'उत्तरस्य स्थाने वि‍धीयमानं च आदेर्बोध्यम्' इति च वाक्यार्थद्वयम् । अत एव '[1]उत्तरस्य', 'आदे'रिति भिन्नविभक्तिनिर्देशः सङ्गच्छते । वाक्यभेदसामर्थ्याच्च [2]आदेरित्यंशं विनाऽपि क्वचिदंशान्तरस्य प्रवृत्तिः । आदेरित्यंशस्तु [3]अनुवृत्तोत्तरस्येत्यस्यावृत्त्या प्राग्वत् 'नित्यं ङितः' (३।४।९९) इत्यादौ न प्रवर्त्तत इत्यपास्तम् ।

किञ्चैवमादेरित्यंशे 'षष्ठी स्थाने'इत्यस्याऽसम्बन्धात् तस्याऽऽज्जसे-

---

1. 'तस्मादित्युत्तरस्याऽऽदेरिति' ख. पाठः ।
2. 'अंशं विनाऽपि 'गाङ्कुटादिभ्यः' (१।२।१) इत्यादावंशाऽन्तरस्य' ख. पाठः ।
3. इतोऽग्रे–'उपस्थितपरित्यागे मानाऽभावेन, प्रत्यासत्त्या च पूर्ववाक्यप्रापिताऽऽदेशस्यैव ग्रहणात् 'नित्यं ङितः' (३।४।९९) इत्यादौ न प्रवर्त्तते' इत्यपास्तम् ।' ख. पाठः ।

**स्वरितेन**[1] (१।३।११)—इत्थम्भूतलक्षणे तृतीया। **अधिकारो** विनियोगः। स्वरितत्वज्ञाप्योऽधिकार इत्यर्थः। स्वरितत्वं चाऽधिक्रियमाण-पदघटकाऽज्निष्ठम्। अस्य स्वरितत्वस्य दोषविशेषरूपत्वाद्धल्स्वपि सत्त्व-मित्यन्ये।

विनियोगोऽपि—प्रायेणोत्तरत्रोपस्थितिः। क्वचित् पूर्वत्राऽपि। 'कियद् दूरमधिकारः' इत्यत्राऽसति नियामके व्याख्यानमेव शरणम्। (स्वरितत्वं[2]

रसुगित्यादावपि प्रवृत्त्यापत्तिः। तावद्दूरं तदनुवृत्तौ 'तस्मादित्युत्तरस्य' (१।१।६७) इत्यादावपि तत्सम्बन्धापत्तौ तस्याऽप्यागमविषयेऽप्रवृत्त्या-पत्तिः। एतेनाऽनेकाल्शित्वतः पूर्वमेव 'तस्मिन्निति निर्दिष्टे पूर्वस्य', 'तस्मादित्युत्तरस्यादेः' इति सूत्रे कुतो न पठिते' इति परास्तम्।'—अयं पाठः क. कुण्डलितः। ख. ग. त्वयं नास्ति। किन्तु—

एतत्स्थाने ख. पुस्तके तु—'नित्यं ङितः' (३।४।९९) इत्यादि न प्रवर्तत इत्यपास्तम्।

न च ङिच्चेति नियमेन सिद्धेऽनेकाल्ग्रहणसामर्थ्यात् पूर्वविप्रतिषेधेन वद्बाधसिद्धिरिति वाच्यम्, शिदंशे तत्कल्पने मानाऽभावात्।

नन्वनेकाल्शित्वतः पूर्वमेव 'तस्मिन्निति निर्दिष्टे पूर्वस्य', 'तस्मादि-त्युत्तरस्याऽऽदेः' इति सूत्रे कुतो न पठिते इति चेन्न, 'ज्यादादीयसः' (६।४।१६०) इत्यादावङ्गाऽधिकारात्। अङ्गस्य च प्रत्यासत्त्या ज्यादि-रूपस्य, ईयस्निमित्तकस्यैव च ग्रहणेन, परिभाषाप्रवृत्तिं विनाऽपि पर-शब्दाऽध्याहार एव नियमेन प्रसक्तेऽनियमाऽभावेन, अनियमे नियमका-रिण्याः परिभाषाया अप्रवृत्तौ, 'आदेः परस्य' (१।१।५४) इत्यस्याऽप्राप्त्या-पत्तेः। मम तु विभिन्नव्यवहितगुरुतरन्यासकरणसामर्थ्यात् परबोधक-शब्देन परस्य विधाने तत्प्रवृत्तेर्न दोषः। एतेन तस्मादित्युत्तरस्येत्यस्याऽ-प्यनेकाल्शित्वेन बाधाऽऽपत्तौ, 'ब्राह्मणा अष्टौ' इत्यत्र ब्राह्मणपदोत्तर-जश्शसोरौशापत्तिरिति परास्तम्। जश्शस्भ्यामाक्षिप्तप्रकृतेरङ्गस्य च सन्निधानादष्टरूपस्यैव ग्रहणेन, तस्मादित्युत्तरस्येत्यस्य सिद्धान्तेऽपि प्राप्त्यभावेन क्षत्यभावात्। एवं च पञ्चमीनिर्दिष्टात् प्रत्ययसम्बन्धि-कार्यं तस्मादिति परिभाषाया अप्रवृत्तिरिति तत्त्वम्'।—इति पा०।

१. 'स्वरितेनाऽधिकारः' ख. पाठः;　　२. क. ग. पाठः, ख. नास्ति।

चानुनासिक्यवत् प्रतिज्ञागम्यम्)। तदुक्तम्—**प्रतिज्ञास्वरिताः पाणिनीया** इति।

न चैवं व्याख्यानादेवाऽनुवृत्तिनिवृत्ती स्ताम्, किं सूत्रेणेति चेत्, अर्थाऽन्तरसङ्ग्रह इत्यवेहि। तेन स्वरितेनाऽधिकाऽर्थो ग्राह्यः। तेन 'गोस्त्रियोः' (१।२।४८) इत्यादौ स्त्रीप्रत्ययान्तमात्रग्रहणम्। अपि चाऽधिकः **कारः**=कृतिः—यत् पूर्वं सत् परं बाधते। तथा च पूर्वविप्रतिषेधाः सङ्गृहीताः। तत्र स्वरितपाठादिति दिक्।

**परनित्येति** (प० ३८)—**परं** विप्रतिषेधसूत्राद् बलवत्। नित्यम्—कृताऽकृतप्रसङ्गि। तद्विपरीतम्—अनित्यम्। तत्राऽक्लृप्ताऽभावकस्याभावकल्पनाऽपेक्षया, क्लृप्ताऽभावकस्यैव तत्कल्पनमुचितमिति भावः।

एवं **शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति'** (प० ४४) इति पठ्यते। तदपि न्यायसिद्धम्। यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव पुनः प्रवृत्तौ कृताऽकृतप्रसङ्गित्वं प्रसिद्धमिति। इदं च 'शदेः शितः' (१।३।६०) इति सूत्रे भाष्ये स्पष्टम्। तत्र हि न्यविशतेत्यत्र विकरणे कृते, तदन्तस्याऽट्, अकृते धातुमात्रस्येत्यट्- अनित्य इत्युक्तम्।

(आ[1]देशविषये तु स्थानिवत्सूत्रे कार्याऽतिदेशाऽऽश्रयणेन, शास्त्रयोर्भेदे- नैकस्य कृताऽकृतप्रसङ्गित्वाऽभाव इत्यपि बीजम्)।

एवं च तुल्यन्यायेन **'शब्दान्तरात् प्राप्नुवतः, शब्दान्तरे प्राप्नुवतश्चानित्यत्वम्'** (प० ४५), मूलयुक्तेस्तुल्यत्वात्।

परिभाषायाञ्च शब्दान्तरस्येति सम्बन्धसामान्ये षष्ठी बोध्या। इदमेवाभिप्रेत्य अतिदेशविषये **'लक्षणान्तरेण प्राप्नुवन् विधिरनित्यः'** (प० ४६) इति 'असिद्धवदत्राभात्' (६।४।२२) इति सूत्रे **कैयटे**नोक्तम्।

यदि तु शास्त्रव्यतिरेकेण तद्विधेयकार्ययोरेव नित्यत्वादिविचारः, यदाऽपि व्यक्तिविशेषाऽऽश्रयणाऽभावस्तदा नाऽयं न्यायः। तदेतदुच्यते—**कृताऽकृतप्रसङ्गित्वमात्रेणाऽपीति**।

कृते द्वितीये नित्यत्वेनाऽभिमतस्य प्रसङ्गमात्रं नित्यत्वव्यवहारे

---

१. क. कुण्डलितः, ख. पाठः, ग. नास्ति।

प्रयोजकम्, न तु बाधकाऽऽद्यबाधितफलोपहितप्रसङ्गस्तथा। तदेतदुच्यते—**'यस्य च लक्षणान्तरेण निमित्तं विहन्यते, न तदनित्यम्'** (प० ४८) **इति**।

क्वचित्तु बाधकाऽऽद्यबाधितप्रसङ्ग एव गृह्यते। तदेतदुच्यते—**'यस्य च लक्षणान्तरेण निमित्तं विहन्यते, तदप्यनित्यम्'** (प० ४९) इति।

अत एव सप्तमे **कैयट** एतदुपष्टम्भकं लोकव्यहारद्वयमुदाहृतवान्—'वालिसुग्रीवयोर्युद्ध्यमानयोर्भगवता वालिनि हतेऽपि सुग्रीवस्य वालिनः प्राबल्यं न व्यवहरन्ति, भगवत्सहायैः पाण्डवैर्जये लब्धेऽपि, पाण्डवानां प्राबल्यं व्यवहरन्ति च' इति। सर्वं चेदं लक्ष्याऽनुरोधाद् व्यवस्थितं ज्ञेयम्।

एवं 'लुटः प्रथमस्य' (२।४।८५), 'आद्युदात्तश्च' (३।१।३) इत्यादिसूत्र-भाष्यादौ पठ्यमानम्—**'स्वरभिन्नस्य च प्राप्नुवन् विधिरनित्यः'** (प० ५०) इति वचनमपि। इदमपि 'शब्दान्तरस्य' (प०४९) इत्येतत् समानविषयमिति दिक्।

परान्नित्यं[1] यथा—तुदतीत्यादौ परादपि गुणान्नित्यत्वात् शाऽऽदिरिति बोध्यम्।

अन्तरङ्गेति—अन्तः मध्ये, बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽ,-न्तर्भूतान्यङ्गानि यस्य **तदन्तरङ्गम्**। एवं तदीयनिमित्तसमुदायाद् बहि-र्भूताङ्गकं **बहिरङ्गम्**। एवं च परम्पराऽपेक्षया व्याप्यनिमित्तकं व्यापक-निमित्तकं चाऽन्तरङ्गम् बहिरङ्गमित्युत्सर्गः[2]। शीघ्रोप[3]स्थितिकत्वं चाऽस्य बलवत्त्वे बीजम्।

---

१. 'परान्नित्यं यथा—रधेर्णिचि रन्धयति। परामप्युपधावृद्धिं बाधित्वा, नित्यत्वात्, 'रधिजभोः' (७।१।६१) इति नुम्। न च शब्दान्तरप्राप्त्या सोऽप्यनित्यः। कृताऽकृतप्रसङ्गित्वमात्रेणाऽपि नित्यायाः क्वचिदभ्युपग-मात्। 'वृद्धचौत्वतृज्वद्भावेत्यस्य तत्र न प्राप्तिः। साहचर्येण विभक्ति-निमित्तानामेव तत्र ग्रहणात्। एवं तुदतीत्यादौ'–इति क. कुण्डलितः ख. पाठः, ग. तु नास्ति।

२. इतोऽग्रे–'इदमेव चाऽस्य बलवत्त्वे बीजम्—यद्व्याप्यनिमित्तकतया प्रथम-प्रवृत्तिकत्वमित्याहुः।—इति ख. पाठः, क. ग. पुस्तकपाठस्थाने।

३. क. ग. पाठः, ख. नास्ति।

एतेन 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवत्' इति परिभाषाऽन्तरमिति दर्शयति। अत्र च ज्ञापकम्-'ओमाङोश्च' (६।१।९५) इत्याङ्ग्रहणम्। तद्धि 'खट्वा आ ऊढा' इत्यत्र परमपि सवर्णदीर्घं बाधित्वा, धातूपसर्गकार्यत्वेनाऽन्तरङ्गत्वाद् गुणे कृते, वृद्धिप्राप्तौ सत्यां पररूपं यथा स्यादित्येवमर्थम्[1]। एहीत्यनुकरणस्य[2] शिवादिशब्दसम्बन्धे तु नाऽस्य प्रवृत्तिः। ज्ञापकपरभाष्यप्रामाण्येनाऽनित्यम् 'प्रकृतिवदनुकरणम्' (प. ३६) इत्यतिदेशमादाय लब्धाऽऽङ्त्वे एतदप्रवृत्तेः[2]।

न चेयं परिभाषा 'असिद्धं बहिरङ्गम्' (प. ५१) इति परिभाषया गताऽर्थेति वाच्यम्। तस्याः 'नाजानन्तर्ये' (प. ५२) इति साऽपवादतया 'अयजे इन्द्रम्' इत्याद्यसिद्ध्यापत्तेः[3]।

वस्तुतस्तु नेयमसिद्धपरिभाषाऽतिरिक्ता, गौरवात्। 'विप्रतिषेध' (१।४।२) इति सूत्रभाष्ये तामादायाऽस्याः प्रत्याख्यानाच्च।

'नाऽजानन्तर्ये' (प. ५२) इति परिभाषा तु धर्मिग्राहकमानेन[4],

---

१. एतदग्रे—'न च शिव-एहीत्यस्याऽनुकरणे, एहीत्यस्यैव वाऽनुकरणे, पररूपार्थमाङ्ग्रहणं चरितार्थम्। न चाऽनुकार्ये एकादेशादिशास्त्रप्रवृत्त्याऽन्तादिवद्भावेनाङ्त्वलाभेऽपि, अनुकरणे तदभावः। अनुकार्येऽन्तादिवद्भावलब्धाऽऽङ्त्वस्य 'प्रकृतिवदनुकरणम्' (प. ३६) इत्यतिदेशेनाऽनुकरणे सुलभत्वादिति वाच्यम्। 'अभिव्यक्तपदार्था ये' इति न्यायेनाऽर्थपरस्यैवाऽऽङो ग्रहणात् शीघ्रमुपस्थितिश्च एतन्न्यायबीजम्'।—इति ख. पाठः, क. पाठस्थाने।

२. 'एतदप्रवृत्तेः' इत्यन्तः पाठः ख. नास्ति, क. ग. पाठः।

३. इतोऽग्रे—अत एव 'बहुयुवेत्यादौ 'अत उपधा' (४।१।२८) इति विकल्पो न, भविषयेऽन्तरङ्गेण 'संप्रसारणाच्च' (६।१।१०८) इति पूर्वरूपेणाऽल्लोपस्य बाधात्। न चात्रासिद्धपरिभाषायाः प्रवृत्तिः। 'नाऽजानन्तर्ये' (प. ५२) इति निषेधादित्याहुः। इयं च परिभाषा सिचि नेति 'इक' गुणवृद्धी' इत्यत्र भाष्ये स्थितम्। तिङन्ते स्पष्टं निरूपयिष्यामः।—इति ख. पाठः। क. ग. नास्ति।

४. 'धर्मिग्राहकमानेन, ओमाङोश्चेत्यनेन च बहिरङ्गकार्यप्रवृत्तेः पूर्वं यत्राऽन्तरङ्गकार्यस्य प्रवृत्त्ययोग्यता तत्रैवेति न 'अयजे इन्द्रम्' इत्यादौ दोषः'—इति ख. पुस्तके पाठः।

'ओमाङोश्च' (६।१।९२) इत्याङ्ग्रहणेन चाऽन्तरङ्गबहिरङ्गयोर्युगपत्प्राप्त्ययोग्यत्व एवेति न 'अयजे इन्द्रम्' इत्यादौ दोषः। ओमाङोश्चेत्यनेनाऽनित्या सेति वा न दोषः—इति भाष्यारूढः पन्थाः। ([1]एतदुदाहरणं तु 'उभये' इति। अन्तरङ्गत्वान्नित्या संज्ञेति 'उभ'शब्दे निरूपयिष्यते)।[2]

इयं चाऽन्तरङ्गबहिरङ्गयोर्युगपत्प्राप्तावेव। एवं च पचावेदमित्याद्यसिद्धिरत आह—**असिद्धमिति** (प. ५१)। अन्तर[3]ङ्गशास्त्रत्वमस्या लिङ्गम्। अत एव कार्यकालपक्षे त्रैपादिकेऽन्तरङ्गेऽस्याः प्रवृत्तिरित्याकरग्रन्थाः सङ्गच्छन्ते।[4]

'एतज्ज्ञापकं 'वाह ऊठ्' (६।४।१३२) सूत्रस्थमूठ्ग्रहणम्। अन्यथा सम्प्रसारणमात्रविधानेऽपि, लघूपधगुणे, 'वृद्धिरेचि' (६।१।८८) इति वृद्धौ, 'विश्वौहः' इत्यादिसिद्धेर्वैयर्थ्यं स्पष्टमेव। सत्यां हि तस्यां बहिरङ्गस्य सम्प्रसारणस्याऽसिद्धत्वाल्लघूपधगुणो न स्यात्। स्पष्टं चेदं तत्रैव भाष्ये। अकारान्तोपसर्गे उपपदे, अनकारान्तोपपदे च वहेर्वाहेर्वा 'ण्वि-विधावनभिधानान्न स्त एवेति हि तदाशयः। 'वार्यूहः' इत्यादयः प्रयोगास्तु ऊहतेः क्विपिबोध्याः। धातूनामनेकार्थत्वान्नाऽर्थाऽसङ्गतिः। 'प्रौहः' इत्याद्यसाध्वेव। वृद्धेर्दुर्लभत्वात्। अस्योहस्याऽऽनर्थक्यान्न 'प्रादूहोढ' (वा. ६।१।८९) इत्यस्याऽपि प्रवृत्तिः। न च सम्प्रसारणे 'विश्वौहः' इत्यस्याऽसिद्धिः। 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीयः' इति परिभाषाऽन्तरस्य सत्त्वेन लघूपधगुणं बाधित्वाऽऽद्गुणस्यैव प्राप्तेरिति वाच्यम्। वर्णादाङ्गस्य बलीयस्त्वात्, परिभाषाऽन्तरस्याऽसत्त्वाच्चेति दिक्।

अपवादस्तु वचनप्रामाण्याद् बलवान्। सोऽपि यद्यन्यत्र चरितार्थस्तर्हि अन्तरङ्गेण बाध्यत एव। निरवकाशत्वरूपस्य बलवत्त्वबीजस्याऽभावात्।

यथा 'अयजे इन्द्रम्' इत्यादावन्तरङ्गेण गुणेन सवर्णदीर्घः समानाश्रये चरितार्थो यण्गुणयोरपवादोऽपि बाध्यत इति बोध्यम्।

अत्राऽन्तरङ्गत्वमन्तःकार्यत्वरूपम। अन्त[5]:कार्यत्वं चाऽन्तर्भूतनिमित्त-

---

१. क. ग. पाठः, ख. नास्ति;　　२. इत आरभ्य—'न दोषः' इत्यन्तः क. ग. पाठः।　　३. ख. पाठः।

४. 'सङ्गच्छन्ते' इत्यन्तः क. ग. पाठः, ख. नास्ति।

५. 'कृति—तुग्ग्रहणादिति दिक्' (पृ० १३१) इत्यन्तोऽस्य क. ग. पाठः।

कत्वम्। पूर्वोपस्थितनिमित्तकत्वमिति यावत्। अन्तरङ्गशब्देऽङ्गशब्दस्य निमित्तपरत्वात्। न तु पूर्वोपस्थितस्थानिकत्वमपि। अङ्गशब्दात् तदलाभात्। किञ्चैवं सति 'स्रजिष्ठः' इत्यादौ विन्मतोर्लुकि, टिलोपव्यावृत्तयेऽपवादविन्मतोर्लुक्प्रवृत्त्या जातिपक्षाश्रयणपर्यन्तधावनं 'प्रकृत्यैकाच्' (६।४।१६३) इति सूत्रप्रयोजनखण्डनावसरे कृतं निष्फलं स्यात्। भवदुक्तरीत्या विन्मतोर्लुको बहिरङ्गाऽसिद्धत्वेन तद्वारणस्य सुकरत्वात्ः, भाष्ये क्वापीदृशरीत्या बहिरङ्गाऽसिद्धत्वाश्रयणस्याऽदर्शनाच्च।

इदमन्तरङ्गत्वं लोकन्यायसिद्धमित्यचः परस्मिन्निति सूत्रे भाष्ये स्पष्टम्—मनुष्योऽयं प्रातरुत्थाय शरीरकार्याणि करोति, ततः सुहृदाम्, ततः सम्बन्धिनामित्यादिग्रन्थे। तदपि युगपत्प्रवृत्तिविषयमेव। न तु जाते बहिरङ्गे तस्याऽसिद्धत्वविषयमपि। लोके तथाऽदर्शनादिति 'वाह ऊठ्' (६।४।१३२) सूत्रे कैयटे स्पष्टम्।

इयं चोत्तरपदाधिकारे न प्रवर्त्तत इति 'इच एकाचः' (६।३।६८) इति सूत्रे भाष्ये स्पष्टम्। आभीयेऽन्तरङ्गे आभीयस्य बहिरङ्गस्य समानाश्रयस्य नाऽनेनाऽसिद्धत्वमित्यसिद्धवत्सूत्रे भाष्ये स्पष्टम्। 'न सिच्यन्तरङ्गमस्ति'

---

ख. पुस्तके तु—'यत्र त्वल्पाऽपेक्षत्वमन्तरङ्गत्वम्, तत्र तद्बाधं विनाऽपवादस्य चारितार्थ्याऽभावेनाऽन्तरङ्गं बाध्यमेव। अत एव दधतीत्यादावन्तादेशो न। झोऽन्तस्याऽल्पाऽपेक्षत्वरूपाऽन्तरङ्गत्वेन जक्षतीत्यादिविषयेऽपि तत्त्वात्।

न च पूर्वकालप्राप्तिकत्वरूपमन्तरङ्गत्वं दधतीत्यस्य विषयेऽधिकमस्तीति जक्षतीत्यादौ समकालप्राप्तिके चारितार्थ्यादत्राऽन्ताऽऽदेश एव स्यादिति वाच्यम्। 'उपजनिष्यमाणनिमित्तोऽपवादः' (प० ६६) इत्यादिसामर्थ्येन ईदृशाऽन्तरङ्गत्वस्याऽनाश्रयणादित्याहुः।

अन्तःकार्यत्वरूपाऽन्तरङ्गत्वं तु 'अचः परस्मिन्' (१।१।५७) इत्यत्र भाष्ये स्पष्टम्। इदं चाल्पापेक्षत्वरूपाऽन्तरङ्गत्वाऽपेक्षया दुर्बलम्। ध्वनितं चेदम्—'अत्र अस्मादित्यादावेकादेशान्तरङ्गत्वात् स्मायादयः' इति 'सर्वनाम्नः स्मै' (७।१।१४) इति सूत्रस्थभाष्येण। इयं चोत्तरपदाधिकारे न प्रवर्त्तत इति 'इच एकाचः' इति सूत्रे भाष्ये स्पष्टम्'। इति १३१ पृष्ठस्थ–'दिक्' इत्यन्तः—क. ग. पाठस्थानेऽयं पाठः।

इति तु निष्प्रमाणकमिति निरूपितम् 'इको गुण' (१।१।३) इति सूत्रे भाष्यप्रदीपोद्द्योते। उपपादयिष्यते च तिङन्ते।

तथा[1]–'परोपस्थितिनिमित्तकं बहिरङ्ग'मित्येतद् युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव, न तु जातस्य तादृशबहिरङ्गस्याऽन्तरङ्गेऽसिद्धतानियामकम्। प्रागुक्तलोकन्यायेन तथैव लाभात्। अत एव वाय्वोरित्यादौ वलि लोपो यणः स्थानिवत्त्वेन वारितो भाष्ये 'अचः परस्मिन्'(१।१।५७) इत्यत्रेति बोध्यम्। इयं चानित्या कृति—तुग्ग्रहणादिति दिक्।

**अकृतेति** (प. ५७)—विशिष्ट ऊहो येषु तानि—व्यूहानि। ऊहस्तर्कः। स च बहिरङ्गेणाऽन्तरङ्गस्य निमित्तविनाशरूपः। तद्वन्ति अन्तरङ्गाणि–अकृतानि यैरित्यर्थः। बहिरङ्गेणाऽन्तरङ्गस्य निमित्तविनाशे पश्चात्सम्भाविते‌ऽन्तरङ्गं नेति फलितम्।

यद्वा—न कृतो विशिष्ट ऊहो=निश्चयः शास्त्रप्रवृत्तिविषयो यैरित्यर्थः। अध्याहारात्[2]—'निमित्तविनाशसम्भावनायाम्' इति लभ्यते। अस्यां[3] च ज्ञापकं 'समर्थानां प्रथमाद्' (४।१।८२) इति सूत्रे 'समर्थानाम्' इति। तद्धि सूत्थितात् कृतदीर्घात् प्रत्ययो यथा स्यादित्यर्थम्। अन्तरङ्गत्वाद् दीर्घे कृत एव प्रत्ययप्राप्त्या तद् व्यर्थं सदस्या ज्ञापकम्। तत्र हि भाविन्याऽऽदिवृद्ध्या सवर्णाऽच्त्वविनाशः स्पष्ट एव। (न च[4] तत्परिभाषासत्त्वे कृतवर्णानुपूर्वीकं समर्थमेव दुर्लभम्। अस्य क्वचिदेवेष्टसिद्ध्यर्थमाश्रयणमित्यर्थस्याऽपि बोधनात्)। उपपादयिष्यते चेदं तत्रापि।

---

१. 'तथा' इति ग. पाठः; २. 'आक्षेपादध्याहाराद् वा' ख. पाठः।

३. ख पुस्तके तु—'अस्यां च ज्ञापकं 'गोरतद्धितलुकि' (५।४।९२) इति सूत्रस्थं तद्धितग्रहणम्। तद्धि राजगवीयतीत्यादौ सुपो लुकः सत्त्वेन टज्निषेधो मा भूदिति क्रियते। अन्यथाऽन्तरङ्गत्वाट्टच्सिद्धौ किं तेन'।—अयं पाठः।

४. क. कुण्डलितः पाठः; ख. ग. नास्ति।

एवम् 'अदो जग्धिः' (२।४।३६) इति सूत्रस्थं 'ल्यब्'ग्रहणमपि मानम्। 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते' (प. ५५) इति वचनस्योक्त-[1]वचन एवाऽन्तर्भावः।

यद्यपि कृतमपि वा निवर्त्तयन्तीति परिभाषाऽन्तरं पठ्यते। फलं च तुल्यम्। तथाप्यकृतेत्येव लघु। प्राक्षालनाद्धीति न्यायादिति बोध्यम्।

**न कुर्वन्तीति**–यथा निषेदुषीमित्यादौ क्सोरिटमन्तरङ्गत्वात् प्राप्तमपि 'भाविना संप्रसारणेन बलादित्वं नङ्क्ष्यति' इत्यालोच्य न कुर्वन्तीत्यर्थः।

'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' (प. ५३) इत्यस्य[2] 'प्रत्ययोत्तरपदयोश्च' (७।२।९८) इति सूत्रं[3] ज्ञापकम्। त्वत्कृतमित्यादौ लुगपेक्षयाऽन्तरङ्गत्वाद् विभक्तिनिमित्तक[4]–'त्वमावेकवचने' (७।२।९७) इत्येव सिद्धे, इदं व्यर्थं सत् तज्ज्ञापकम्।

ननु 'तव पुत्रस्त्वत्पुत्रः' इत्यादौ तवममादिबाधनार्थं तदावश्यकमिति चेत्। एवं तर्हि मपर्यन्तग्रहणाऽनुवृत्तिरत्रत्या तज्ज्ञापिकेति भाष्यकृतः।

युष्मदादिभ्य आचारक्विप् तु नाऽस्त्येव। सम्पूर्णसूत्रस्य ज्ञापकतापर-भाष्यप्रामाण्यात्। 'ह्रस्वनद्यापः' (७।१।५४) इति नुड्विधायकसूत्रस्थ-भाष्यप्रामाण्येन हलन्तेभ्य आचारक्विबभावाच्च। एवमेवैकाऽर्थकाभ्यां प्रातिपदिकप्रकृतिकणिचोऽप्यनभिधानं बोध्यम्।

ननु मपर्यन्ताऽनुवृत्तिरपि[5] सर्वादेशत्ववारणाय चरिताऽर्था। न च 'उत्सर्गसमानदेशा अपवादाः' इति न्यायेन मपर्यन्तस्यैवाऽऽदेशे सिद्धे, तदनुवृत्तिर्व्यर्थेति वाच्यम्। तस्य श्नमकजादौ व्यभिचारादिति चेत्, न, श्नमि मित्त्वेन, बहुचि पुरस्ताद् ग्रहणेनाऽकचि प्राक् टेर्ग्रहणेन तस्य बाधेऽप्यत्रोत्सर्गस्य त्यागे मानाऽभावात्। अत[6] एव 'तस्मिन्नणि च' (४।१।२)

---

१, 'ल्यब्बाधते, लुग्वा बाधते'—इत्यादिवचनानामुक्तवचने' ख. पाठः।

२. 'इति परिभाषायाः' ख. पाठः; ३. 'सूत्र'मिति क. ग. पाठः।

४. 'विभक्तिनिमित्तके'ति क. ग. पाठः।

५. 'ननु सापि सर्वादेशत्व' ख. पाठः।

६, एतदारभ्य 'तदाशयः' (पृ० १३३) इत्यन्तः क, ग. पाठः।

इत्यनेन युष्माकाद्यादेशविधानं चरितार्थम्। अन्यथा आकङादेशमेव विदध्यात्। आकङि हि तवकाद्यादेशयोरेतदपवादयोरुक्तन्यायेनान्त्यादेशत्वापत्तिरतः समुदायादेशविधानम्। एवञ्च[1] मपर्यन्ताऽनुवृत्तिस्त्वत्कृतमित्यादौ मपर्यन्तस्यादेशविधानार्था। तत्र चाऽन्तरङ्गत्वात् त्वमावित्येव सिद्धे व्यर्था सा एतज्ज्ञापिका। ज्ञापिते त्वस्मिन्नेतद्विषये तवादीनामप्राप्त्या, तदपवादत्वाऽभावेन, मपर्यन्तस्यैवादेशार्थं सा चरितार्थेति तदा[2]शयः।

यत्तु हरदत्तेनाऽन्तरङ्गप्रवृत्तौ–प्रत्यये, उत्तरपदे च मपर्यन्ताऽसम्भवेन तदनुवृत्तिर्ज्ञापिकेत्युक्तम्, तन्न, अन्तरङ्गाणामप्यपवादबाध्यत्वेन, तद्विषये तदप्रवृत्तेः।

इयं च 'सुपो धातु' (२।४।७१) इति लुग्विषयैवेति **केचित्**। 'एङ्-ह्रस्वात्सम्बुद्धेः' (६।१।६९) 'न यासयोः' (७।३।४५) इत्यादिसूत्रस्थाऽऽकरप्रामाण्येन लुग्मात्रविषयेति तत्त्वम्। अत एव 'सनीस्रंसः' इत्यादौ नलोपाऽभावः। 'पञ्चखट्वः' इत्यादावेकादेशात् प्रागेव च टापो लुक्। अन्यथा कृतैकादेशस्य लुकि अकारश्रवणं न स्यात्[3]।

---

१. 'मानाऽभावात्। एवञ्च मपर्यन्तानुवृत्तिर्वाक्यभेदेन पुनर्विधानार्था। तच्च त्वत्कृतमित्याद्यावन्तरङ्गत्वात् पूर्वेणैव सिद्धे व्यर्थमिति ज्ञापकत्वं सुस्थम्'– ख. पाठः।

२. (१३२ पृष्ठस्थ) अत एव इत्यारभ्य एतदन्तः क. ग. पाठः। ख. नास्ति।

३. इतोऽग्रे–– 'तस्याऽप्यकृतव्यूहपरिभाषाज्ञापकत्वमेवोचितम्, लाघवात्। अन्तरङ्गानपीति न्यायेनाऽप्यन्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकीभूतसमासादीनामेव च प्राबल्यबोधनेनाऽविशेषात्। अत एव 'समर्थग्रहणमकृतव्यूहपरिभाषाज्ञापकम्' इत्याकरोक्तं सङ्गच्छते। किञ्चाऽकृतव्यूहपरिभाषाऽतिरिक्तत्वे तयैवोत्तरपदपदस्य चारितार्थ्येऽस्या ज्ञापकमपि भज्येत। अकृतव्यूहपरिभाषा च येन नाऽप्राप्तिन्यायेनाऽन्तरङ्गपरिभाषाऽपवादिकेति बोध्यम्। निमित्तविनाशसम्भावनाऽप्येतत्प्रवृत्तिनिमित्तम्'। ––इत्ययं ख. पाठः— (१३४ पृष्ठस्थ) 'अयं न्यायोऽप्यन्तरङ्ग' इति क. ग. पाठस्थाने।

अयं[1] न्यायोऽप्यन्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकीभूतसमासादीनां च प्राबल्यबोधक इत्यकृतव्यूहपरिभाषाऽन्तर्गत एव। अन्यथा तयैव 'प्रत्ययोत्तरपदश्च' (७।२।९८) इत्यस्य चारितार्थ्ये, एतज्ज्ञापकत्वं तस्य भज्येत। (लु[2]ग्निमित्तप्राबल्यबोधकत्वं 'चौ' (६।३।१३८) इति कैयटे स्पष्टम्)।

अकृतव्यूहपरिभाषाप्रवृत्तौ निमित्तविनाशसम्भावनाऽपि निमित्तम्[1]। अत एव गोमद्दण्डीत्यादौ हल्ङ्यादिलोपो न। अन्यथा हल्ङ्यादिलोपकाले सामासिकलुकोऽप्राप्त्या, तदुत्तरं चाऽप्यपह[3]ार्याऽभावादप्राप्त्या, लोपस्यैवाऽऽपत्तेः। अस्ति चात्राऽपि 'यदीदं न स्यात् तर्हि लुक् स्यादेव' इति सम्भावना। 'अल्लोपोऽनः' (६।४।१३४) इति सूत्रस्थतपरकरणं तु परिभाषाऽनित्यत्वज्ञापनेन चरितार्थम्। तद्धि 'आन' इत्यादौ लोपवारणाय। अन्यथा दीर्घाऽभावे लोपसम्भावनयाऽकृत[4]व्यूहपरिभाषाबलाद् दीर्घाऽप्राप्तौ, तद्वैयर्थ्यं स्पष्टमेव[5]।

[यत्तु[6] अकृतव्यूहपरिभाषा भाष्ये क्वाऽपि न पठितेति असिद्धवत्सूत्रे कैयटादयः। तन्न। सूत्रवृत्त्यादिसम्मताया भाष्याऽनुक्तत्वमात्रेणाऽनङ्गीकारस्याऽयुक्तत्वात्। अप्रतिषिद्धमनुमतं भवतीति न्यायाच्च। अन्तरङ्गानपीति न्यायज्ञापनेन भाष्यकृताऽप्युक्तत्वाच्च। 'चौ' (६।३।१३८) इति सूत्रभाष्यादौ ध्वनितत्वाच्च। तथा च तत्र भाष्यम्—चौ प्रत्यङ्गस्य प्रतिषेधो वक्तव्यः। नैष दोषः। एतदेव ज्ञापयत्याचार्यो—न चौ प्रत्यङ्गं भवति, यदयं चौ दीर्घत्वं शास्ति' इति। प्रत्यङ्गम् अन्तरङ्गमित्यर्थः। 'समर्थानाम्' (४।१।८२) इति सूत्रभाष्ये च ध्वनिता। **कैयटेन** च

---

१. 'निमित्तम्' इत्यन्तोऽयं क. ग. पाठः। ख. नास्ति।

२. ख. ग. नास्ति, क. कुण्डलितः; ३. 'तदुत्तरमप्यपहार्या' ख. पाठः।

४. 'एतत्परिभाषाबलात्' क. पाठः।

५. 'स्पष्टमेवेति स्पष्टम् 'अचः परस्मिन्' (१।१।५७), 'न पदान्त' (१।१।५८) इति सूत्रादौ कौस्तुभे' ख. पाठः।

६. क. कुण्डलितः ख. पुस्तकपाठः। ग. नास्ति।

स्पष्टमुपपादिता । असिद्धवत् (६।४।२२) सूत्रस्थकैयटादयस्तु[1] 'कृतमपि शास्त्रं निवर्त्तयन्ति' इत्येतत्परिभाषाऽभावपरा[2] इत्यन्ये ।

एवम्[3] 'उपजनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते' (प० ६६) इति न्यायोऽप्यकृतव्यूहपरिभाषाऽन्तर्गत एव । अपवाद-विषयाऽभावस्याऽपि निमित्तकोटौ प्रवेशात् । यथा दधतीत्यादावदादेशमव-लोक्याऽन्तादेशो नेत्याहुः । अपरे तु—एतैः सर्वैरन्तरङ्गपरिभाषाऽनित्य-त्वमेव ज्ञाप्यत इत्याहुः] ।

[यत्तु[4]—'न च बहिरङ्गतया वृद्धेरसिद्धत्वात् 'सौत्थितिः' इत्यत्र न निमित्तविनाश इति वाच्यम् । समर्थग्रहणेनैतद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात् । यद्वा—एतज्ज्ञापकैरन्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यत इति । तन्न । अन्तरङ्गबहिरङ्गयोः समकालप्राप्त्यभावेन 'अन्तरङ्गं बलवत्' इत्यस्याऽप्राप्तेः । 'असिद्धं बहिरङ्गम्' (प० ५१) इत्यनयाऽपि जातस्य बहिरङ्गस्याऽन्तरङ्गे कर्त्तव्येऽसिद्धत्वं बोध्यते, न तु जातेऽन्तरङ्गे तस्य तत्त्वं बोध्यते, मानाऽभावात्, फलाऽभावाच्च । एवं च सूत्थितादा-वेकादेशस्य परिभाषासाध्यत्वाऽभावेन तदनित्यत्वज्ञापनाऽसम्भव इति दिक् ।

परे तु 'सेदुषः' इत्यादौ पूर्वमिटि, ततः सम्प्रसारणे, 'नाऽजानन्तर्ये' (प० ५२) इति निषेधाद् बहिरङ्गपरिभाषाया अप्रवृत्त्या, यणि, बहिरङ्ग-तयैव सम्प्रसारणाऽसिद्धत्वेन वल्परत्वाद् यस्य लोपे तत्सिद्धिरित्येषा परि-भाषा निष्फला ।

न च 'लोपो व्योः' (६।१।६६) इत्येतद्विषये बहिरङ्गाऽसिद्धत्वे 'गौधेरः', 'पचेरन्' इत्यादावाङ्गत्वेन बहिरङ्गतया एयादीनामसिद्धत्वेन यलोपाऽना-पत्तिरिति वाच्यम् । तद्विषये निर्णीतलक्ष्यतयाऽनित्यत्वेन तदप्रवृत्तावपि, प्रकृतविषये तदप्रवृत्तौ मानाऽभावात् । अत एव वाय्वोरित्यादेर्बहिरङ्ग-

१. तुः क० नास्ति । 'कैयटादयस्तु चिन्त्याः' ख. पाठः ।
२. 'परिभाषाऽभावपरा वेति दिक्' ख. पाठः ।
३. इत्याहुरित्यन्तोऽयं ख. पाठः । क. ग. नास्ति ।
४. क. ग. पाठः । ख. नास्ति ।

परिभाषया सिद्धिराकरे उक्ता । 'समर्थानां प्रथमाद्'(४।१।८२) इति सूत्रस्थ-समर्थग्रहणं तु 'विपुणः' इत्यादावकृतसन्धेः प्रत्ययदर्शनेन सर्वत्र तथात्व-भ्रमवारणाय न्यायसिद्धार्थाऽनुवाद एव । ध्वनितं चेदं विप्रतिषेध- (१।४।२) सूत्रे भाष्ये ।

तत्र हि—'द्यौकामिः', 'वैक्षमाणिः', 'सौवश्वः' इत्याद्यन्तरङ्गपरिभाषो-दाहरणमुक्तम् । किञ्च पदावधिकेऽन्वाख्याने 'वार्णादाङ्गं बलीयः' (प० ५६) इति प्राप्तवृद्धिवारणाय तत् । ]

यत्तु[1] 'उपेयिवान्' (३।२।१०९) इति सूत्रे उपेयिवानित्यत्रेडर्थं निपात-नम् । इणो लिटः क्वसाविटः पूर्वं नित्यत्वाद् द्विर्वचने 'दीर्घ इणः' (७।४।६९) इत्यभ्यासदीर्घत्वे, तत्सामर्थ्यादेकादेशाऽभावेऽनेकाच्त्वाद् वस्वेकाजित्यप्राप्त-स्येटो निपातनं क्रियते ।

न चेयतुरित्यत्र दीर्घः सावकाशः । पूर्वपरविधेरपि पूर्वविधित्वेन, यणादेशस्य स्थानिवत्त्वादेकादेशप्राप्तेरित्युक्तम् । एवं चेदजादावुपेयुष इत्यादावतिप्रसङ्ग इत्युक्तम् । तत्तु पदावधिकेऽन्वाख्यानेऽन्तरङ्गत्वमना-श्रित्य प्रवृत्तम् । तदा हि नित्यत्वात् सम्प्रसारणे न वलादिलक्षण इट्, पूर्वस्यैव विधौ स्थानिवत्त्वमनाश्रित्यैव, 'वस्वेकाजाद्' (७।२।६७) इति नियमबाधितेटः प्रतिप्रसवोऽयम्, इत्यनाश्रित्यैव चेति दिक्) ।

यद्यपि—'असिद्धवत्' (६।४।२२) सूत्रे 'वसुसम्प्रसारणमज्विधौ सिद्धं वक्तव्यम्', 'पपुषः', 'तस्थुषः' इत्यादौ वसोः सम्प्रसारणे कृते आतो लोपो यथा स्याद् इति भाष्ये उक्तम्, तदपि पदस्य विभज्याऽन्वाख्यानपक्षे 'पपा वस् अस्' इति स्थितेऽन्तरङ्गपरिभाषाया अनित्यत्वादनाश्रयणेन नित्यत्वात् सम्प्रसारणे, ततो बहिरङ्गाऽसिद्धत्वस्याऽनित्यत्वादिडभावे, वस्नि-मित्तक एवाऽऽतो लोप इत्यभिमानेनैकदेश्युक्तिरिति कैयटेन ध्वनितम् । सिद्धान्तिसम्मतोदाहरणं तु 'लुलुवुषः', 'चिच्युषः' इत्याद्येव भाष्योक्तम् ।

तत्र हि—'वस्वेकाजाद्' (७।२।६७) इति नियमादिडभावः । अत एव 'चौ' (६।३।१३८) इति सूत्रे 'चौ प्रत्यङ्गस्य प्रतिषेधः' इति वचनं वार्त्तिककृताऽऽरब्धं भाष्यकृता च प्रत्याख्यातम् ।

१. क. कुण्डलितः पाठः, ख. ग. तु नास्ति ।

प्रत्यङ्गम्=अन्तरङ्गम्। अस्यां परिभाषायां सत्यां तु तद्वैयर्थ्यं स्पष्टमेव। अत एव 'च्छ्वोः' (६।४।१९) इति सूत्रे—'अवश्यमत्र तुगभावार्थो यत्नः कार्यः। अन्तरङ्गत्वाद्धि तुक् प्राप्नोति' इति भाष्ये उक्तम्। तत्सत्त्वे तुकोऽप्राप्त्या यत्नाऽऽवश्यकत्वकथनमसङ्गतमिति स्पष्टमेव। न च तदनित्यत्वज्ञापनार्थम्। 'अवश्यमत्र' इत्यक्षरस्वारस्यभङ्गाऽऽपत्तेः। तथा ल्यब्विधेर्लुग्विधेश्चाऽन्तरङ्गबाधकतायां प्रागुक्तं भाष्योक्तं ज्ञापकं सङ्गच्छते। अन्यथा तयैव तज्ज्ञापकत्वेनाऽभिमतानां चारितार्थ्यं स्पष्टमेव। सर्वं चेदं 'समर्थानाम्' (४।१।८२) इति सूत्रेऽसिद्धवत्सूत्रे च कैयटेन ध्वनितं स्पष्टमुक्तं चेत्याहुः।

(इति [1]**परिभाषाप्रकरणमिति**)— 'समर्थः पदविधिः' (२।१।१) इत्यादीनामन्यत्रोपन्यासस्तु कार्यका[2]लपक्षमाश्रित्य। सूत्रकृ[3]ताऽपि तस्यास्तथैव करणाच्च[3]। सर्वशास्त्रोपकारिकाणामेवाऽत्र पाठाच्च।

॥ इति परिभाषाप्रकरणम् ॥

---

१. यद्यपि नायं पाठः केष्वपि पुस्तकेषूपलभ्यते, तथापि—आवश्यकत्वाद् भ्रष्ट इति मत्वाऽस्माभिः () अत्र स्थापितः।

२. क. पाठोऽयम्, ख. तु 'कार्यकालपक्षे' इति पाठः।

३. क. पाठः, ख. ग. नास्ति।

# अथ अच्सन्धिप्रकरणम्

**स्यादिति**—कार्यशब्दवादे इदम् ।

**संहितायां विषय** इति—कार्यिनिमित्तयोः संहितायां विषयभूतायामित्यर्थः ।

**स्थानत**[1] इति—इदं यथासङ्ख्यसूत्रे भाष्ये स्पष्टम् । 'जातिपक्षे

---

१. इत आरभ्य 'झत्त्वसिद्धिरिति दिक्' इत्यन्तः क. ग. पाठः । ख. पुस्तके तु तत्स्थाने—**'स्थानत आन्तर्य्यादिति** । अत एवाऽनुनासिकाऽनुकरणे 'दधिँ अत्र' इत्यादौ, 'स्वौजस्' इत्यादौ चाऽनुनासिकस्थाने न निरनुनासिक इति भावः । न चाऽस्य विधीयमानत्वेन सवर्णाऽग्राहकत्वात् कथमनुनासिकविधानमिति वाच्यम् । गुणानामभेदकत्वाऽऽश्रयणात् । स्पष्टं चेदम् 'ऊकः' (१।१।१७) इति सूत्रे भाष्ये । एतेन यथासङ्ख्यसूत्रेणैवाऽत्रेष्टसिद्धिरित्यपास्तम् ।

इक्पदोपस्थित-ह्रस्वोपस्थाप्य-दीर्घादौ प्रत्ययाऽर्थाऽऽद्यन्वयाय प्रत्याहारेषु तद्वाच्यवाच्ये लक्षणाया 'दीर्घाज्जसि च' (६।१।१०५) इत्यत्र निरूपयिष्यमाणत्वेन, इक्पदात् षट्षष्टेरुपस्थितया, यण्पदेन—गुणानामभेदकत्वेन चतुर्णम् ।

वस्तुतः स्वरूपकृतभेदसत्त्वेन भाव्यमानत्वेन सवर्णाऽग्राहकत्वेऽपि, अनुवाद्यसमर्पकत्वेऽपि, यण्पदे लक्ष्यतावच्छेदकस्य प्रसिद्धत्वेन लक्षणया—सप्तानां वोपस्थितया, संख्यासाम्याऽभावेन तदप्राप्तेश्च । न च शक्यार्थमात्रविषयकबोधे 'ल्वादिभ्यः' (८।२।४४) इत्यादिनिर्देशो हि तत्तात्पर्याऽनुपपत्तिज्ञानपूर्वकमेव लक्षणायाः प्रसरेण, प्राथमिकीं वर्णसमाम्नायपठितवर्णमात्रविषयिकामुपस्थितिमादाय यथासंख्यमस्तु । एवं च शक्याऽर्थस्मृतौ यथासंख्यसहायेन तद्विषयकवाक्यार्थचतुष्टये 'इत्युत्तरस्य' इत्यादिनिर्देशैर्लक्ष्यसंस्कारके निष्पन्ने, 'ल्वादिभ्यः' (८।२।४४) इत्यादिनिर्देशाल्लक्षितदीर्घादीनां तदन्वयिन्येवाऽन्वय इति वाच्यम् । ऋकारे लकाराऽऽदेशस्य, लृकारे राऽऽदेशस्य च प्रसङ्गात् ।

न चेगादिपदोपस्थापितेकारादिभिर्दीर्घादीनां बोधे, तेषु प्रकृतिजन्यवृत्त्या, समभिव्याहृतपदजन्यवृत्त्या चोपस्थित्यभावेन विभक्त्यर्थस्य, यण्पदार्थस्य चाऽन्वयानाऽऽपत्तेस्तेषां जातिपरत्वमणुदित्सूत्रे भाष्ये

यथासङ्ख्येनाऽपि निर्वाहः' इति 'स्थानेऽन्तरतमः' (१।१।५०) सूत्रे भाष्ये स्पष्टम्। अनुनासिकस्थानेऽपि निरनुनासिक एव। विधीयमानत्वेन सवर्णाऽग्राहकत्वात्। गुणाऽभेदकत्वपक्षोऽपि न विधेयाऽण्विषये। 'अप्रत्ययः' इत्यनेन जातिग्रहणप्रयुक्तस्य, गुणाऽभेदकत्वप्रयुक्तस्य सूत्रप्राप्तस्य च सवर्णग्रहणस्य निषेधात्, जातिग्रहणप्रयुक्तस्यापि तपरसूत्रेणेव। दीर्घादीनामिगादिपदैरुपस्थितये प्रत्याहारेषु जातिपक्ष एवावश्यक इति 'अणुदित्' (१।१।६९) सूत्रे भाष्ये स्पष्टम्। अत एव सर्वझकारादीनां झल्त्वसिद्धिरिति दिक्।

ननु स्थानप्रमणोभायान्तरतमे ह्रस्वेकारे चरितार्थो यण् दीर्घे कथं प्रवर्त्तेतेत्यत उक्तम्—**स्थानत इति**। सर्वतोऽस्य बलवत्त्वात्। 'स्थानेऽन्तरतमे' इति सप्तम्यन्तपाठस्य चैतद्दूषणेनैव भाष्ये दूषितत्वादिति भावः।

चकारो विध्यर्थस्तदाह—**द्वे वा स्त इति**। 'यरोऽनुनासिके' (८।४।४५) इति सूत्राद् वाग्रहणमनुवर्त्तत इति 'नाज्झलौ' (१।१।१०) इत्यत्र भाष्यकैयटयोरुक्तेः। सूत्रकृता[1] शाकल्यमते सर्वत्र द्वित्वाऽभावोक्तेश्च। हलीति वक्तव्येऽनचीति करणात्, 'वाक्'[2], 'वाक्क्' इत्यसिद्धेश्च प्रसज्यप्रतिषेधः। तदाह—**न त्वचीति**। तत्राऽस्मिन् द्वित्वे द्विःप्रयोग एव, न तु स्थाने द्विर्वचनत्वम्, मानाऽभावात्। 'यरः' इत्यादेरध्याहृतोच्चारणक्रियाऽपेक्षया

---

उक्तम्। यथासंख्यसूत्रं च व्यक्तिसाम्य इव धर्मसाम्येऽपि प्रवर्त्तते। अत एव 'स्यतासी लृलुटोः' (३।१।३३) इत्यादौ न दोषः। नाऽप्यत्र पक्षे ऋकारादौ लृकाराद्यापत्तिः। लृत्वादिजातेर्ऋकारेऽभावात्। 'उरण्रपरः' (१।१।५१) इत्यादाविव ग्राहकशास्त्रेण ग्रहणेऽप्युक्तरीत्यापदादिभिरन्वयादिति वाच्यम्। अनुनासिकाऽननुनासिकव्यवस्थासिद्धये 'स्थानेऽन्तरतमः' (१।१।५०) सूत्रप्रवृत्तेरङ्गीकार्यत्वात्। यदि तु ऋलृवर्णयोः सावर्ण्यस्थाने 'लृवर्णस्य ऋवत्' इत्यतिदेश एव क्रियते। 'ऋलृक्'सूत्रे भेदेन निर्देशादतिदेशाऽनित्यत्वेन नाऽतिप्रसङ्गः। अत एवाऽण्ग्रहणप्रत्याख्यानेऽपि 'उरण्' इत्यादौ न दोष इत्युच्यते, तदा जातिपक्षेऽपि लृकारे रेफाऽऽपत्तिरिति दिक्' ।—इत्ययं ख पाठः।

१. ख. नास्ति; २. क. ग. पुस्तकपाठः, ख. नास्ति।

कर्मषष्ठ्या एवोचितत्वाच्च । 'सर्वस्य द्वे' (८।१।१) इत्यत्र स्थाने द्विर्वचनत्वे मानं तु तत्रैव वक्ष्यामः ।

**इति धकारेति**—न तु द्वित्वे पूर्वधस्थाने जश्त्वनिष्पन्नदस्याऽपि । लक्ष्ये लक्षणस्य सकृदेव [1]प्रवृत्तेः । '[2]विकारभेदेन न लक्ष्यभेदः' इत्यन्यत्र प्रपञ्चितम् ।

न चाऽत्र यणो बहिरङ्गत्वेनाऽसिद्धत्वादच्परत्वमेवेति वाच्यम्, 'नाऽजानन्तर्ये' इति निषेधात् । ([3]यथोद्देशपक्षे तदप्राप्तेश्च) ।

यद्यपि तत्स्थानाऽऽपन्नस्य तद्धर्मलाभो दृष्टो लोके, यथा, [4]याज्यकुलादौ गुर्वभावे गुरु[5]प्रेषितच्छात्रादेः पूजादि । तथाऽपि 'स्वं रूपम्' (१।१।६८) इति सूत्रा[6]द् व्याकरणे न स्यादतः 'स्थानिवत्' (१।१।५६) सूत्रम् ।

**आदेश इति**—अत एव अ[7]ग्रहीदित्यादौ ईट इट्त्वसिद्धिः ।

[ए[8]तेन 'धात्वङ्गकृत्तद्धिताऽव्ययसुप्तिङ्पदादेशाः' इति वृत्त्याद्युक्तम्, 'सिजा[9]दीनां च प्रत्ययाधिकारपाठात् श्नम्वत्प्रत्ययत्वम्' इति तद्विवरणोक्तिञ्च अपास्तम् । अव्ययस्याङ्ग-पदाभ्यां पृथग्ग्रहणवैयर्थ्याच्च । परिगणनपक्षे **मनोरमा**यामव्ययपदवैयर्थ्याऽनुक्तिस्तु 'तत्पक्षे प्रयोगाऽसिद्धिरूपदोषस्याऽपि सत्त्वम्, उदाहरणत्वपक्षे तु तद्वैयर्थ्यमेव दोषः' इत्यभिप्रेत्येत्याहुः ।

यत्त्वव्ययांशे 'प्रस्तुत्य' इति वृत्तावुदाहृतम् । 'सर्वे सर्वपदाऽऽदेशाः' इति न्यायेन 'प्रस्तुत्वा' इत्यस्य स्थाने 'प्रस्तूय' इत्यादेश इति **व्याख्यातारः** ।

---

१. इतोऽग्रे—'जश्त्वस्याऽसिद्धत्वमिति तु न युक्तम्, 'पूर्वत्राऽसिद्धीयमद्वित्वे' (पृ० १२८) इति निषेधात् । यथा चाऽत्र न लक्ष्यभेदस्तथा 'समः सुटि' इत्यत्र निरूपयिष्यामः । कार्यकालपक्षे जश्त्वस्य बहिरङ्गतयाऽसिद्धत्वेन लक्ष्यभेदस्योक्तिसम्भवाऽभावाच्चेति भावः ।' ख. पाठः ।

२. 'प्रपञ्चितम्' इत्यन्तोऽयं क. ग. पाठः ।

३. ख. पाठः; ४. 'शिष्यकुलादौ' ख. पाठः; ५. 'गुरुपुत्रादेः' ख. पाठः ।

६. 'स्वं रूपमिति सूत्राल्लक्षणप्रतिपदोक्तपरिभाषया च व्याकरणे'–ख. पाठः ।

७. 'अत एव सिजादीनामादेशादीनां प्रत्ययत्वसिद्धिः, अग्रहीदित्यादावीट इट्त्वसिद्धिश्च' ख. पाठः ।

८. ख. पाठः, क. तु कुण्डलितः, ग. नास्त्येव ।

९. एतदङ्कान्तस्थः क. पाठः, ख. नास्ति ।

तन्न। 'अर्थवत्येव स्थानित्वम्' इति तत्तात्पर्येण क्त्वोऽप्यर्थवत्त्वेन तादृश-स्थान्यादेशभावकल्पने मानाऽभावात्। (न[1] च जहत्स्वार्थायां वृत्तौ क्त्व आनर्थक्यम्। भूतपूर्वगत्या तत्राऽप्यर्थवत्त्वात्। अत एवाऽत्र तुक्)। क्त्वामात्रं च नाऽव्ययमिति स्पष्टमेव। कृत्वेन सिद्धेश्च ]।

**न तु स्थान्यलेति**—स्था[2]निसम्बन्ध्यल्वृत्तिधर्माश्रये नेत्यर्थः।

इदं फलिताऽर्थकथनम्। पर्युदास एव तूचितः। वाक्यभेदाऽसमर्थ-समासाऽभावलाघवाऽनुराधात्। अत एव 'शास्त्रीये कार्य एवाऽयं स्थानिवद्भावः' इति। अत्र सूत्रे 'शास्त्रीयकार्यस्याऽभावाऽतिदेशो न' इति सिद्धान्तः। अन्यथा 'नायकः' इत्याद्यसिद्ध्यापत्तेः। अत एव 'किरतौ लवने' (६।१।१४०) इत्यादिनिर्देशाः सङ्गच्छन्ते। (अ[3]त एवाऽत्र यथेष्टवाक्यशेषाऽ-ध्याहारो न)।

न चैवम[4]पि इटो वलादित्वाऽऽश्रयतया 'बभूविव' इत्याद्यसिद्धिरिति वाच्यम्। प्रत्यासत्त्या यन्निमित्तवैकल्यप्रयुक्तोपदेशाऽप्रवृत्तावतिदेशो मृग्य[5]ते, तस्य निमित्तस्य स्थान्यलसाधारणधर्मत्व एव निषेधप्रवृत्तेः। प्रकृते चाऽऽर्द्धधातुकवैकल्यप्रयुक्ताऽप्राप्तिः। न च तत्स्थान्यलसाधारणम्। यच्च तादृशं वलादित्वम्, न तद्वैकल्यप्रयुक्ताऽप्राप्तिरिति बोध्यम्।

([6]अत एव 'रामाय' इत्यादौ यञादित्वनिमित्तकोऽपि 'एवृत्तिसुप्त्व-मात्राऽऽश्रयः 'सुपि च' (७।३।१०२) इति दीर्घः सिद्ध्यति। सुप्त्वं च न तदसाधारणम्। भ्यामादिषु समुदायेऽपि सत्त्वात्)। प्रत्यासत्तिन्यायात्, 'कष्टाय' (३।१।१४) इति ज्ञापकाच्चाऽलः स्थानित्वं स्थानिसम्बन्धि[7]त्वं वा लभ्यते। इदमेवाऽभिप्रेत्य भाष्ये उक्तम्—'आदेशिन्यल्याश्रीयमाणे प्रतिषेधः' इति।

---

१. ख. पाठः; २. एतदङ्कान्तस्थः क. ग. पाठः; 'न' इति तु तत्र नास्ति।
३. क. ग. नास्ति, ख. पाठः।
४. 'न च स्थान्यलाश्रितविधिभिन्नविधौ कर्त्तव्ये इत्यर्थेऽपि बभूविवेत्याद्य-सिद्धिरिति वाच्यम्।' ख. पाठः।
५. 'अतिदेशो मृग्यते, स्थान्यलसाधारणतन्निमित्तकविधिभिन्नविधावि-त्यर्थात्। अत एव रामायेत्यादौ' ख. पाठः; ६. ख. पाठः।
७. क. ग. पाठः, ख. नास्ति।

अत्र कार्यमतिदिश्यते, प्राधान्यात्[1]। (कार्यं च न जरसादिरूपमेव; किन्तु शास्त्रविहितं सुप्त्वाद्यपि)। त[2]त्राऽनपेक्षितशास्त्रम्, अनपेक्षितनिमित्तं च कार्यमनेनैव क्रियते। यद्वाऽनपेक्षिताऽर्थसन्निधानस्तत्तन्निमित्तरूपकार्यव्यवहार एवाऽनेन। कार्यं तु स्वशास्त्रेणाऽर्थादेव सिद्धमिति।

अत एव 'रामाये त्यादौस्थानिवद्भावेन याऽऽदेशस्य सुप्त्वात्[3] 'सुपि च' (७।३।१०२) इति दीर्घः' इत्यादि सङ्गच्छते। (इनादीन् बाधित्वा परत्वाज्जरसिति च)। एतन्मू[4]लकमेव पठ्यते—'अतिदिश्यमानकार्याणामुपदेशदेश एव देशः' इति। आद्यपक्षमभिप्रेत्य च 'शब्दान्तरस्य प्राप्नुवन् विधिः' (प० ४४) इति सङ्गच्छत इति बोध्यम्। यन्निमित्तवैकल्यप्रयुक्तोपदेशाऽप्रवृत्तावतिदेशो मृग्यते तन्निमित्तं शास्त्रीयमेव, प्रत्यासत्तेः। अत एव तासौ नित्याऽनिट्त्वस्याऽशास्त्रीयत्वात् 'थलि नित्यमिट्' इत्यादि सङ्गच्छते। अनल्विधाविति किम्? तेन तस्मात् तस्य तस्मिंश्च विधौ मा भूत्। 'व्यूढोरस्केन', 'द्यौः', 'द्युकामः', 'क इष्टः' इत्युदाहरणानि तत्र तत्र व्याख्यास्य[5]न्ते।

नन्वादेशग्रहणं व्यर्थम्। 'षष्ठी स्थाने' (१।१।४९) इत्यनुवृत्त्या 'स्था[6]ने यः स स्थानिवत्' इत्यर्थेनैव सिद्धेः। स्थानिवदित्युक्ते सम्बन्धिशब्दमहिम्नैव तल्लाभाच्च। न च पचं[7]त्वित्यादौ 'एरुः' (३।४।८६) इत्याद्यनुमितानां तेस्त्वादीनामपि स्थानिवद्भावाय तत्। 'सर्वे सर्वपदादेशाः' इत्यस्य सत्त्वेन तत्राऽपि स्थान्यादेशभावसत्त्वेनाऽक्षतेः। 'श्रौत एव स्थान्यादेशभावो ग्राह्यः' इत्यत्र न मानम्। तदर्थज्ञापकेनाऽ[8]र्शः शित्त्वेनाऽत्र सूत्रे तद्ग्रहबोधनाच्च इति चेत्, न, मुख्याऽऽदेशग्रहणशङ्कावारणार्थत्वेनानुमानिकादेशग्रहणार्थमादेशग्रहणस्य सत्त्वादिति स्पष्टं भाष्ये[9]।

---

१. क. ग. नास्ति।
२. 'तत्राऽनपेक्षितनिमित्तं च कार्यमनेनैव क्रियते' ख० पाठः।
३. क. ग. नास्ति; ४. 'देश इति' इत्यन्तोऽयं क० ग. पाठः, ख. नास्ति।
५. 'व्याख्यास्यन्ते' इत्यन्तोऽयं क० ग. पाठः।
६. 'स्थानार्थकषष्ठ्यन्तार्थस्य स्थाने यः, स स्थानिवत्' ख. पाठः।
७. 'पचन्त्वित्यादौ' क. पाठः; ८. 'युष्मदस्मद्भ्यां ङसोऽश्' (७।१।२७) इति शित्त्वेनेत्यर्थः।
९. 'स्पष्टं भाष्ये' इत्यन्तोऽयं क. ग. पाठः, ख. नास्ति।

यत्तु–एतन्मूलकमेव पठ्यते–'यदागमास्तद्गणीभूतास्तद्ग्रहणेन गृह्यन्ते' (प० ११) इति। 'अनागमकानां साऽऽगमका आदेशाः' इति 'दाधाघु' (१।१।२०) इत्या[1]दिसूत्रस्थभाष्यरीत्या तत्राऽप्यानुमानिकस्थान्यादेशभावसत्त्वात्। अल्विधौ स्थानिवत्त्वनिषेधात् 'दिदीये' इत्यादौ यणादिकं न।[2] अन्यथा युट एकाराऽऽगमत्वेनाऽज्ग्रहणेन ग्रहणात् तद्दुर्वारं स्यात्। (एतेन 'यदागमाः' (प० ११) इति परिभाषाऽन्तरमेव' इत्यपास्तम्)—इति। तन्न।

'अनागमकानां साऽऽगमका आदेशाः' इत्यस्य ह्ययमर्थः—'आर्द्धधातुकस्येडागमो भवतीत्यर्थे जाते, ततो नित्येषु शब्देष्वागमविधानाऽनुपपत्त्याऽर्थापत्तिमूलकवाक्याऽन्तरकल्पनेन बुद्धिविपरिणामरूपः स्थान्यादेशभावः' इति। तेन न नित्यत्वहानिः। 'स्थानिवत्' (१।१।५६) सूत्रे च ईदृशाऽऽदेशग्रहणे न मानम्। अष्टाध्यायीपठितषष्ठ्यादिबोधितस्थान्यादेशभावे चारितार्थ्यात्। (स्था[3]नषष्ठीत्वबाधकाऽऽद्यन्तावित्यादिसूत्रारम्भसामर्थ्याच्च)।

किञ्चैवं स्थानिवद्भा[4]वे सति (स्था[5]निवद्भावस्य वतिघटितवाक्यत्वेन, स्थान्याऽऽरोपमात्रबोधकत्वात्—) स्थानिबुद्ध्यैव कार्यप्रवृत्त्या 'निर्दिश्यमानस्य' (प० १२) इति परिभाषाबाधाऽभावेनाऽडाद्यागमसहितस्य पिबाद्यादेशाऽऽपत्त्या, 'लाऽवस्थायामट्' इति भाष्योक्तसिद्धान्ताऽसङ्गत्यापत्तिः। उद[6]स्थादित्यादौ निर्द्दिश्यमानपरिभाषया (प० १२) 'उदः स्थास्तम्भोः' (८।४।६१) इत्येतद्वारणपर-'पादः पत्' (६।४।१३०) इति सूत्रस्थभाष्याऽसङ्गतेश्च। स्थानिवद्भावविषयेऽपि 'निर्दिश्यमानस्य' (प० १२) इति परिभाषयाऽप्रवृत्तौ तिसृणामित्यत्र तिस्रादेशे, स्थानिवद्भावेन त्रयाऽऽदेशमाशङ्क्य, सकृद्गतिन्यायेन (प० ४०) समाधानं भाष्योक्तमसङ्गतं स्यात्।

अत एव 'द्वितीयाटौस्स्वेनः' (२।४।३४) इत्यत्र 'एनदादेशः' इति

---

१. 'इत्याद्यन्तौ टकितावित्यादिसूत्रस्थ' ख. पाठः।

२. क. ग. नास्ति, ख. पाठः।

३. क. ग. नास्ति, ख. पाठः; ४. स्थानिवद्भावे सतीति ख. पुस्तके नास्ति।

५. क. ग. पुस्तके नास्ति।

६. 'भाष्याऽसङ्गतेश्च' इत्यन्तः क. ग. पाठः, ख. नास्ति।

भाष्यमते 'एनम्', 'एनौ' इत्यादौ त्यदाद्यत्वसिद्धिः। अन्यथा निर्दिश्यमानेदमोऽन्त्याऽभावेन 'त्यदादीनामः' (७।२।१०२) इत्यत्वं न स्यात्। (अपि[1] चैवं 'रुदिहि' इत्यादौ धित्वाऽऽपत्तिः)। 'एरुः' (३।४।८६) इत्यादौ तु स्थानषष्ठीनिर्देशात् तदन्तपरतयाऽपि पदद्वयस्य[2], व्याख्यातुं शक्यत्वात्, 'ङसोऽशि'ति ज्ञापकसिद्ध—'सर्वे सर्वपदादेशाः' इत्यस्य सत्त्वाच्च)—पठितवाक्यस्यैव, समुदायाऽऽदेशपरतया—नस्य 'स्थानिवत्' (१।१।५६) सूत्रेऽग्रहणान्न दोषः।

ननु 'राज्ञः क च' (४।२।१४०) इति कादेशे 'अनः अकादेशः' इत्याकारकाऽऽनुमानिकस्थान्यादेशभावसम्भवात्, राजकीयमित्यादौ स्थानिवद्भावेन 'अल्लोपोऽनः' (६।४।१३४) इत्यापत्तिरिति चेत्, न, स्थानषष्ठीनिर्दिष्टेऽर्थवति स्थान्यादेशभावेनैव[3] वाक्योपपत्तावन्यमादाय तत्कल्पने मानाऽभावात्। पुच्छरहितश्वदृष्टान्तेनाऽन्त्येऽपि नकारप्रश्लेषान्न दोष इति वक्ष्यते। अर्द्धविकारेण प्रत्यभिज्ञाऽभावाद् वा। यत्र तु स्थानषष्ठीनिर्दिष्टोऽनर्थकस्तत्र भवत्येव तथा कल्पना। यथा 'एरुः' (३।४।८६) इत्यादौ—'तेस्तुः' इति। आनुमानिकस्थान्यादेशभावकल्पनेऽप्युपजीव्यत्वात् श्रौतस्थान्यादेशभावस्य न त्यागः। अत एव 'अचः परस्मिन्' (१।१।५७) इत्यादीनामुक्तिसम्भवः ('यदागमाः'[4] (प० ११) इति त्ववयविग्रहणेन लोके विशिष्टस्यैव ग्रहणान्न्यायसिद्धमिति **केचित्**। 'णेरनिटि' (६।४।५१) इत्यादिज्ञापकसिद्धमित्यपरे)।

'यदागमाः'[1] (प० ११) इत्यादेर्यमुद्दिश्यागमो विहितः स तद्गुणीभूतः, शास्त्रेण तदवयवत्वेन बोधितोऽतस्तद्ग्रहणेन=तद्ग्राहकेण शब्देन गृह्यत इत्यर्थः। 'एवञ्च तद्गुणीभूतः' इत्यंशो बीजकथनम्। लोकेऽपि देवदत्तस्याऽङ्गाऽऽधिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहणं दृश्यते[5]।

प्रनिदारयतीत्यादौ तु न 'दार्' इत्यस्य घुत्वम्। 'यमुद्दिश्य विहिताः'

---

१. क. ग. नास्ति, ख. पाठः; २. क. ग. नास्ति, ख. पाठः।
३. 'स्थान्यादेशभावकल्पनेऽप्यन्यमादाय' ख. पाठः।
४. क. ग. नास्ति, ख. पाठः।
५. 'दृश्यते' इत्यन्तः क. ग. पाठः, ख. नास्ति।

इत्यर्थात् । तेन नेर्णत्वाऽभावः सिद्धयति । 'आने मुक्' (७।२।८२) इति मुग्विधानसामर्थ्येनाऽस्या अनित्यत्वात् क्वचिद् वर्णग्रहणे तदप्रवृत्त्या 'दिदीये' 'अग्निचिदत्र' इत्यादौ न यणादिकम् ।

न च एकारादेर्वर्णस्य कथं वर्णाऽन्तरमवयवः । तदुक्तम्—'रऋतः' इत्यत्र भाष्ये—'कथं ऋकारस्य नाम हल्-आदिः स्यादन्यस्याऽन्य इति' इति वाच्यम् । वचनेनाऽवयवत्वबोधनात् । तस्य च 'अवयववत्' इति सादृश्ये पर्यवसानं बोध्यम्[1] । वर्णग्रहणे क्वचिदप्रवृत्तेरेव जहारेत्यादौ 'आत औ णलः' (७।१।३४) इति न । क्वचिदित्युक्तेः 'आने मुक्' (७।२।८२) इतिसूत्रे भाष्ये-'अकारस्याऽङ्गाऽवयवस्य मुगित्यर्थे, 'पचमानः' इत्यत्र 'तास्यनुदात्तेत्' (६।१।१८६) इति स्वरो न स्यादित्याशङ्क्य, 'उपदेश-भक्तस्तद्ग्रहणेन ग्राहिष्यते' इति समाहितं[2] सङ्गच्छते । 'ङमो ह्रस्वात्' (८।३।३२) इति सूत्रस्थभाष्यसङ्गतिश्च । अरारोर्गुणवृद्धिसंज्ञा च सिध्यतीति दिक् ।

ननु तोस्तित्त्वमपि च्छिन्नपुच्छे शुनि श्वत्वव्यवहारवल्लोकसिद्धन्यायेनैव सिद्धम् । तदेतत् पठ्यते–'एकदेशविकृतस्याऽनन्यत्वात् सिद्धम्' इति । न च शब्दाऽनित्यत्वाऽऽपत्तिः । रेखागवयन्यायेन समाधानादिति चेन्न । अर्द्ध-स्याऽन्यथात्वे, जातिव्यञ्जकभूयोऽवयवदर्शनाऽभावेन, तौ तित्त्वप्रतीतेर्न्याये-नाऽनुपपादनात् । निर्जरादौ[3] त्वनेन न्यायेनैव सिद्धिरिति सूत्रव्यापाराऽभावात् 'परत्वाज्जरस्' इत्यादिग्रन्थानामपि सङ्गतिर्बोध्या । यथा च

१. 'पर्यवसानं बोध्यम्' इत्यतोऽग्रे ख. पुस्तके त्वयम्पाठः—'जहारेत्यादावात औ णल इति च न । 'रपरः' इति पञ्चम्यर्थे बहुव्रीहिरिति क्वचित् । अत एवाऽऽने मुगिति' । ।

२. 'इति समाहितमिति चेन्न । मुख्याऽऽदेशग्रहणशङ्कावारणार्थत्वेन आनुमानिकाऽऽदेशग्रहणार्थमादेशग्रहणस्य सत्त्वादिति स्पष्टं भाष्ये । ननु तोस्तित्त्वम्' ख. पाठः ।

३. इत आरभ्य 'नाऽनेन न्यायेन लाभः ।' एतत्पर्यन्तः पाठो ग. नास्ति ।

परिच्छिन्नपरिमाण-कनिष्ठ-निष्कत्वादीनामीषन्न्यूने तस्मिन्न लोके व्यवहारस्तथाऽक्तपरिमाणसञ्ज्ञिनिष्ठोपसर्गत्वादीनां नाऽनेन न्यायेन लाभः।

न[1] चाऽभीयादित्यादौ भान्तस्याऽनेन न्यायेनोपसर्गत्वादीकारस्य पराऽऽदिवद्भावेनेण्त्वाद् ह्रस्वो दुर्वार इति वाच्यम्[2]।

व[3]क्ष्यमाणज्ञापकसिद्धत्वेनाऽस्य न्यायस्याऽनित्यत्वेनाऽसार्वत्रिकत्वात्।

किञ्च यद्वर्णविकारेण शब्दस्य विकृतत्वं तद्वर्णविशिष्टेन विशेषशब्देन यत्र तस्य ग्रहणं तत्र नाऽस्य न्यायस्य प्रवृत्तिः। तथैव लोकव्युत्पत्तेः। न हि सपुच्छश्व-शब्देन च्छिन्नपुच्छशुनो ग्रहणं लोके। अतोऽपि नाऽभेर्विकृतस्योपसर्गत्वमनेन न्यायेन। 'प्रादयः' (१।४।५८) इत्यादिना तत्तद्रूपेण गृहीत्वैव सञ्ज्ञाविधानादिति दिक्। ध्वनितं चेदं सर्वं भाष्यादौ।

यत्तु 'अयं न्यायोऽपि स्थानषष्ठीनिर्दिष्ट एव' इति। तन्न। मानाऽभावात्। अत एव 'प्राग्दीव्यतोऽण्' (४।१।८३) इति सूत्रभाष्ये 'दीव्यतिशब्दैकदेश-'दीव्य'च्छब्दाऽनुकरणमिदम्' इत्युक्त्वा, 'किमर्थं विकृतनिर्देशः? एतदेव ज्ञापयत्याचार्यो भवत्येषा परिभाषा—'एकदेशविकृतमनन्यवत्' (प० ३७) इत्युक्तम्। स्थानषष्ठीनिर्दिष्ट एव प्रवृत्तौ तु तदसङ्गतिः स्पष्टैव[4]। अनन्य[5]वदित्यस्याऽन्यवन्नेत्यर्थः। तत्राऽन्यसादृश्यनिषेधेऽन्यत्वाऽभावः सुतरामिति दिक्।

नन्वेवमपि 'अपचत् तण्डुलान्' इत्यादौ स्थानिवद्भावेन प्रत्ययत्वेऽपि, स्वतोऽप्रत्ययत्वेन, ब्राह्म[6]णत्वेनाऽतिदिष्टक्षत्रियस्य ब्राह्मणभिन्नत्ववत्, प्रत्ययाऽन्तभिन्नत्वाऽनपायात् प्रातिपदिकत्वं स्यात्। 'अप्रत्ययः इति हि

---

१. इत आरभ्य 'इति वाच्यम्' इत्यन्तः क. ग. पाठः। ख. नास्ति।
२. इतोऽग्रे—'गणपठितानामक्तपरिमाणानामेव तत्र सञ्ज्ञित्वबोधनात् स्पष्टञ्चेदमङ्गसञ्ज्ञासूत्रे भाष्ये'—अयं पाठः क. कुण्डलितः। ख. ग. नास्ति।
३. इत आरभ्य 'सञ्ज्ञाविधानादिति दिक्' इत्यन्तः पाठः ख. ग. नास्ति।
४. 'स्पष्टैवेति दिक्। नन्वेवमपि अपचत् तण्डुलान्' ख. ग. पाठः।
५. इत आरभ्य 'सुतरामिति दिक्' इत्यन्तः पाठः ख ग. नास्ति।
६. इत आरभ्य 'ब्राह्मणभिन्नत्ववत्' इत्यन्तोऽयं पाठः ख. ग. नास्ति।

पर्युदासः । प्रसज्यप्रतिषेधाऽऽश्रयणे वाक्यभेदाऽसमर्थसमाऽऽपत्तेः ।[1]

अत[2] एव 'सृजिदृशोर्झल्यमकिति' (६।१।५८) इत्यादौ पर्युदासाश्रयणे सिसृक्षतीत्यादौ कित्त्वाऽतिदेशेऽपि स्वतोऽकित्त्वादमागमप्राप्तिमाशङ्क्य प्रसज्यप्रतिषेधाश्रयणेन समाहितमिति चेन्न। अतिदेशस्वाभाव्यादेवाऽतिदिश्यमानविरुद्धस्वाश्रयकार्याऽभावात् । अत एव ब्राह्मणवदित्युक्तेऽब्राह्मणत्वप्रयुक्तं मद्यपानादि निवर्त्तते । इदं चाऽसिद्धवत् (६।४।२२) इति सूत्रे (अष्टमे[3] च) कैयटे स्पष्टम्[4] ।

अत एव जहीत्यादौ जादेशस्याऽसिद्धवत्त्वे स्वाश्रयोऽपि हेर्लुक् न। सिद्धत्वाऽसिद्धत्वयोर्विरोधात् । 'असिद्धवत्' (६।४।२२) सूत्रन्तु शाधीत्यादौ स्थानिप्रयुक्तधिभावसम्पादनेन चरितार्थम् । 'सृजिदृशोः' (६।१।५८) इति सूत्रे प्रसज्यप्रतिषेधपरभाष्यं तूपायाऽन्तरपरतया व्याख्येयम् । न चैवं पर्युदासत्वे स्थानिवद्भाव एव दुर्लभः, शास्त्रीयकार्याऽभावादिति वाच्यम् । वाच्यवृत्त्या प्रातिपदिकत्वाऽभावस्य शास्त्रबोध्यताऽभावेऽपि, तात्पर्यतः शास्त्रविषयत्वेन शास्त्रीयत्वात् । अत एव 'पर्युदासे प्रतिषेधो गम्यः' इति शास्त्रकृतां व्यवहारः ।

नन्वेवमचीत्यादिविशेषणद्वारा हलि अयाद्यभावस्याऽपि शास्त्र-

---

१ इतोऽग्रे--'न च प्रत्ययत्वाद्यतिदेशे प्रत्ययत्वाद्यवच्छिन्नप्रतियोगिताकभेदवत्त्वं वक्तुमशक्यमिति न प्रातिपदिकत्वादीति वाच्यम् । प्रातिपदिकत्वाऽभावस्याऽशास्त्रीयत्वेनाऽत्राऽभावाऽतिदेशाऽभावेन च तत्र स्थानिवद्भावस्य वक्तुमशक्यत्वात् । किञ्चाऽतिदिश्यमानमारोपितं धर्ममादाय तत्त्वावच्छिन्नप्रतियोगिताकभेदाऽभावो निरूपयितुमशक्यः । विरोधाऽभावात् । ब्राह्मणत्वेनाऽतिदिष्टक्षत्रियस्याऽब्राह्मणत्वाऽनापत्तेः । अपि चैवं 'सृजिदृशोर्झल्यमकिति' (६।१।५८) इत्यादौ पर्युदासाऽऽश्रयणे सिसृक्षतीत्यादौ कित्त्वाऽतिदेशमात्रेणैव कित्त्वावच्छिन्नप्रतियोगिताकभेदराहित्यादमागमाऽप्राप्तौ भाष्यकृतः प्रसज्यप्रतिषेधालम्बनस्य निर्बीजत्वाऽऽपत्तिरिति चेन्न । अतिदेशस्वाभाव्यादेव'--इति ख. पाठः ।

२. इत आरभ्य 'चेन्न' इत्यन्तः क. ग. पाठः ख नास्ति ।

३. क ग. नास्ति । ४. इतोऽग्रे-'अत एव प्रकृतिवदनुकरणमित्यादिविषयेऽपि न दोषः' ख. पाठः । क. ग. नास्ति ।

तात्पर्यविषयत्वेन, तस्याऽपि शास्त्रीयत्वात् 'लवने' इत्यादिनिर्देशाऽसङ्गतिरिति चेत्। एवं तर्हि पश्चिमत्स्यमृगान् हन्तीत्यादिनिर्देशैः पर्युदासलभ्याऽशास्त्रीयस्याऽपि शा[1]स्त्रतात्पर्यविषयस्य शास्त्रीयवदतिदेशज्ञापनान्न दोषः।

ए[2]तेन 'क्षियः' (६।४।५९) इत्यादौ 'प्रकृतिवत्' इत्यतिदेशेन धातुत्वेऽपि, स्वनिष्ठाऽधातुत्वमादाय सञ्ज्ञा। अधातुरिति हि पर्युदासः। अत आतिदेशिककार्याऽभावादतिदेशाऽप्रवृत्तौ, तद्विरुद्धमपि स्वाश्रयं प्रवर्त्तत इति 'क्षियो दीर्घात्' (८।२।४६) इति सूत्रे कैयटोक्तमपास्तम्। अत एव तत्र भाष्ये इयङर्थं प्रकृतिवदतिदेशे स्वाद्यनुत्पत्तिमाशङ्क्य 'एवं तर्हि आतिदेशिकानां स्वाश्रयाण्यपि न निवर्त्तन्ते' इति समाधाय, विरुद्धनिवृत्तेरावश्यकत्वाऽभिप्रायेण—'अथाऽप्येतन्न' इति शङ्कायाम्, 'एवमपि न दोषः, निर्देशसामर्थ्यादेव तदुत्पत्तेः' इति समाहितम्। तत एव निर्देशात् सोऽतिदेशोऽनित्य इति तदाशयः।

अ[3]त एवाऽधातुग्रहणप्रयोजनेऽहन्नित्यत्र प्रत्ययलक्षणेन प्रत्ययान्तत्वप्रयुक्तपर्युदासमाशङ्क्य, 'न ङिसम्बुद्ध्योः' (८।२।८) इति ज्ञापकेन तत्र कर्त्तव्ये प्रत्ययलक्षणाऽप्रवृत्त्या समाहितमर्थवत्सूत्रे भाष्ये।

अत एव 'वेः स्कन्देरनिष्ठायाम्' (८।३।७३) इत्यत्र षत्वविधायकेऽनिष्ठायामिति पर्युदासश्चरितार्थः।

तत्र हि तिङन्तादिषु षत्ववारणाय पर्युदास आवश्यकः। 'विस्कन्नः' इत्यादौ निष्ठान्तत्वस्य नित्यतया स्थानिवद्भावेनैव निष्ठात्वस्य वक्तव्यत्वादिति दिक्।

ननु चैवमपि 'स्थान्यादेशः' इति सूत्र्यताम्' वत्यध्याहारेण, लक्षणया वाऽभिमताऽर्थसिद्धेः। 'अन्यत्राऽन्यशब्दः प्रयुज्यमानो विनाऽपि वतिं वत्यर्थं गमयति' इति सिद्धान्तात्। 'अ[4]ब्रह्मदत्तं ब्रह्मदत्तः' इत्याह। 'ब्रह्म-

१. 'शास्त्रतात्पर्यविषयस्य' इति ख. नास्ति। क. ग. पाठः।
२. 'इति तदाशयः' इत्यन्तः क. ग. पाठः। ख. नास्ति।
३. इत आरभ्य 'अर्थवत्सूत्रे भाष्ये' इत्यन्तः ग. नास्ति। क. कुण्डलितः ख. पाठः।
४. इत आरभ्य १४९ पृष्ठस्थ 'स्पष्टमेवेति चेन्न' इत्यन्तः क. ग. पाठः। ख नास्ति।

दत्तवत्' इति गम्यते' इति तत्र तत्र भाष्योक्तेः। अत एव 'युष्मदस्मदोः' (७।२।८६) इत्यत्र अनादेशग्रहणं चरितार्थम्। अन्यथाऽऽदेशे स्थानिप्रयुक्त-कार्याऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेति चेन्न[1]। उत्तरसूत्रेऽभावाऽतिदेशार्थम्, स्पष्टतयाऽर्थलाभार्थं च तस्य सत्त्वात्।

नन्वेवमपि 'अनलः' इत्युक्त्यैव सम्बन्धसामान्यषष्ठ्या समासचतुष्टय-फललाभे 'विधि'ग्रहणं व्यर्थमिति चेत्। अप्राधान्येनाऽप्यलाश्रयणे निषे-धार्थं तत्। तद्धि अ[2]लाश्रयविधिमात्रे निषेधो यथा स्यादित्येवमर्थम्। तेन 'प्रपठ्य' इत्यत्र वलादिलक्षण इण्न। (विनिग[3]मनाविरहाद्—) इदमेव विशेषाऽतिदेशमपि बोधयति। अन्य[4]था वलादित्वस्य क्त्वाविशेषधर्मत्वात् सामान्याऽतिदेशे विशेषाऽनतिदेशेन सिद्धौ, तद्वैयर्थ्यं स्पष्टमेव। इडादेरपि क्त्वः सत्त्वाद् वलादित्वं तद्विशेषधर्मः। प्रदायेत्यादौ हलादिक्ङिन्निमित्त-केत्त्वनिषेधक 'न ल्यपि' (६।४।६९) इत्यादिलिङ्गाच्च। कित्त्वं हि क्त्वा-विशेषधर्मः। सेट्क्त्वस्तदभावात्।

न चैवमपि कित्त्वस्याऽल्विधित्वात् स्थानिवत्त्वाऽप्रवृत्तौ तद् व्यर्थमेवेति वाच्यम्। अनुबन्धकार्येऽनल्विधाविति प्रतिषेधप्रवृत्त्यभावस्याऽपि ज्ञापनात्। अन्तरङ्गेण लोपेनाऽऽदेशसम्बन्धात् प्रागेवाऽनुबन्धानामपहारेण तेषां स्थान्यल्त्वाऽभावाच्च। तेनाऽरुदितामित्यादौ सार्वधातुकत्वनिबन्धने-डादिसिद्धिः। सार्वधातुकत्वस्य विशेषधर्मत्वात्। उपस्थितधर्मैः, तद्व्या-पकसामान्यधर्मैश्च विध्याकाङ्क्षापूरणे सति, तदतिरिक्तविशेषग्रहणे मानाऽभावेन, सामान्याऽतिदेशे विशेषाऽनतिदेशात्। अत एव 'आशंसायां भूतवच्च' (३।३।१३२) इत्यनेन भूतसामान्यविहितयोर्लुङ्निष्ठयोरेवाऽति-देशः, न लङ्लिटोरित्याहुः।

---

१. न चैवं संज्ञाप्रकरणात् 'स्थान्यादेशस्य संज्ञा' इत्याद्यर्थाऽऽपत्तिरिति वाच्यम्। 'युष्मदस्मदोरनादेशे' (७।२।८६) इत्यनादेशग्रहणवैयर्थ्यापत्तेः। एतेन विपरीताऽतिदेशवारणार्थमित्यपि परास्तमिति चेन्न'—इति ख. पाठः, एतत्पाठस्थाने।

२. 'अल्विधिमात्रे' ख. पाठः। ३. क. ग. नास्ति। ख. पाठः।

४. इत आरभ्य 'तद्विशेषधर्मः' इत्यन्तः क. ग. पाठः। ख. नास्ति।

'अलाश्रयो विधिः' इत्येवंरूपस्य विधिग्रहणलभ्यसमासस्य बलादेव यत्र विधौ विशेष्यतया, विशेषणतया वा शब्दतोऽल्मात्राऽऽश्रयणं तादृशे विधौ निषेधः। अत एवाग्रहीदित्यादौ 'इट ईटि' (८।२।२८) इति सिचो लोपे न दीर्घस्य स्थानिवत्त्वनिषेधः। सूत्रे 'इटः' इति शब्दतः समुदायाश्रयणात्। अन्यथा टस्याऽनुबन्धत्वादिकारस्यैवाश्रयणमित्यल्विधित्वं स्यादिति दिक्।[1]

ननु स्थानिवद्भावेऽपि न क्षतिः। अत्र सूत्रेऽभावाऽतिदेशाऽभावात्, (स्वाश्रयाऽव्यावृत्तेश्च)[2]—इत्यत आह—**द्वित्वनिषेध इति।** प्रसज्यप्रतिषेधाऽऽश्रयणादयमपि शास्त्रीयं कार्यं-भवत्येवेति भावः। भावाऽभावशब्दौ च शास्त्रबोध्याऽबोध्यपराविति **स्पष्टमाकरे।** (विरुद्धस्वाश्रयव्यावृत्तेः पूर्वमुक्तत्वाच्च)[3]।

**अचः परस्मिन्**—(१।१।५७) अल्विध्यर्थमिति। तेन 'वव्रश्च' इत्यत्राऽङ्गाक्षिप्तप्रत्ययनिमित्तकोरदत्त्वस्य स्थानिवत्त्वेन संप्रसारणतया 'न संप्रसारणे' (६।१।३७) इति निषेधात् संप्रसारणं न। 'आ सप्तमसमाप्तेरङ्गाधिकारः' इति सिद्धान्तात्[4]।

'आदेश'ग्रहणमनुवर्त्तते। स्थानिपदलभ्यं वा। तदनुरोधादच इति स्थानषष्ठी। (अन्यथाऽनूद्यमानत्वात् 'षष्ठीस्थाने' (१।१।४९) इति परिभाषोपस्थितिर्न स्यात्)[5]।

परस्मिन्निति सप्तमी—आदेशविशेषणम्। तेन[6] 'तस्मिन्'(१।१।६६) इतिसूत्रोक्तरीत्या 'क्ङिति च' (१।१।५) इतिवन्निमित्तत्वं फलतीत्याशयेनाऽऽह[7]—**परनिमित्तोऽजादेश** इति। अच एवाऽऽदेश इत्यर्थः। तेनाऽज्झलाऽऽदेशो न स्थानिवत्। अत एव मरुतमाचष्टे मारयतीत्यादौ वृद्धिः। स्पष्टं चेदमत्रैव भाष्ये।

---

१. इत आरभ्य 'स्यादिति दिक्' इत्यन्तः क. ग. पाठः। ख. नास्ति।

२. क. ग. नास्ति। ख. पाठः। ३. क. ग. नास्ति। ख. पाठः।

४. इतोऽग्रे 'अनुवादे परिभाषाऽनुपस्थितेराह-परनिमित्त इति'- इति ख. पाठः। ५. 'तत्सामर्थ्यादचः इति'-इति ख. पाठः। ६. क. ग. नास्ति।

७. 'तेन निर्द्धाराद्यसमभिव्याहारान्निमित्तत्वं फलति'-इति ख. पाठः।

अच इति किम् ? द्यूत्वा । 'व'स्थानिकोठः स्थानिवत्त्वे[1] यण्न स्यात् । स्वाऽऽश्रयनिवृत्तेरप्यत्र सूत्रे सिद्धान्तितत्वात् । परस्मिन्निति किम् ? युवजानिः । निङः स्थानिवत्त्वे हि यलोपो न स्यात् । पूर्वविधाविति किम् ? हे गौः । सम्बुद्धिलोपे कर्त्तव्ये वृद्धेः स्थानिवत्त्वं मा भूत् ।

अच इति—तस्यैव सूत्रे श्रवणादिति भावः । न च 'परस्मिन्' इति निमित्तस्याऽपि श्रवणमस्तीति वाच्यम् । तथा सति लवनमित्यादौ निमित्ताऽ[2]नाऽपेक्षया पूर्वस्य गुणस्य स्थानिवत्त्वादवादेशाऽनापत्तेः । अत एव 'किरतो लवने' (६।१।१४०) इत्यादिनिर्देशाः सङ्गच्छन्ते । आदेशाऽपेक्षया पूर्वत्वविज्ञाने तु 'वैयाकरणो' न सिद्ध्येत् । यणः[3] स्थानिवत्त्वेनाऽऽयाऽऽपत्तेः ।

**दृष्टस्येति—**पूर्वत्वमुपलक्षणम्, न तु विशेषणमिति तात्पर्यम् । निषेधसूत्रे यलोप-स्वर-ग्रहणसामर्थ्येन, यथेष्टं वाक्यशेषाऽध्याहारेण च–'स्थानिनि यद्भवति तदादेशेऽपि भवति, स्थानिनि यन्न भवति, तदादेशेऽपि न भवति' इति भावाऽभावयोरुभयोरप्यतिदेशः । अत एव गणयतीत्यादौ न वृद्धिः । न च क्लिलुगुपधात्वेतिनिषेधेनाऽत्र स्थानिवत्त्वं दुर्लभम् । उपधासंज्ञामुपजीव्य विहितप्रत्ययविधावेव तन्निषेधात् । अत एव 'चङ्परनिर्ह्रास'-ग्रहणं चरितार्थम् । अन्यथा तत्राऽप्युपधात्वेन 'स्थानिवत्' (१।१।५६) इत्येव सिद्धे, किं तेन ? तेन 'परिखा'शब्दाच्चातुरर्थिकेऽणि, 'वृद्धादकेकान्तखोपध' (४।२।१४१) इति च्छप्रत्यये 'पारिखीयः' सिद्ध्यति । अन्यथाऽऽल्लोपस्य स्थानिवत्त्वेन खस्योपधासंज्ञा न स्यात् । अतो न प्रकृते दोषः[4] ।

'पूर्वस्ये'[5]ति सम्बन्धसामान्यषष्ठ्यैव कार्यस्याऽध्याहारेण सिद्धे 'विधि'-

---

१. 'स्थानिवत्त्वेन' ख. पाठः ।　　२. 'निमित्तल्युडपेक्षया' ख. पाठः ।

३. 'यण स्थानिवत्त्वेनाऽऽयाऽऽपत्तेः' इति ख. नास्ति । क. ग. पाठः ।

४. इतोऽग्रे–'अत्र केचित्–अवधारणगर्भसमासेन पूर्वस्यैव विधौ स्थानिवत्त्वम्, न तु पूर्वपरयोर्विधौ । तत्फलं तु आरतुरित्यादौ 'ऋच्छत्यॄतामिति' क. ग. पाठः ।

५. इत आरभ्य 'इत्यत्र भाष्ये' (१५२ पृष्ठे) इत्यन्तोऽयं ख. पाठः ।

ग्रहणं 'पूर्वस्यैव विधौ स्थानिवत्त्वम्, न तु पूर्वपरयोर्विधौ' इत्यर्थलाभार्थम्। तदाह—**पूर्वत्वेन दृष्टस्येति।** पूर्वत्वेन दृष्टस्यैवेत्यर्थः। तत्फलं तु 'आरतुः' इत्यादौ 'ऋच्छत्यृताम्' (७।४।११) इति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वमित्यग्रे निरूपयिष्यामः। ध्वनितं चेदम् 'उपेयिवाननाश्वान्' इत्यत्र भाष्ये इत्याहुः।[1]

पूर्वत्वं च—व्यवहिताऽव्यवहितसाधारणम्। अव्यवहितस्यैव ग्रहणे मानाऽभावात्। अनुवादत्वेन निर्दिष्टपरिभाषाया अप्रवृत्तेः। तेन पटयतीत्यादिसिद्धिः। अत एव चङ्परह्रस्वे स्थानिवत्त्वनिषेधः सार्थकः, स्वरे निषेधश्चेत्याहुः।

यत्तु 'अव्यवहितग्रहणेऽप्यवयवद्वारा समुदायस्याऽपि कार्यभाक्त्वेन, तस्याऽव्यवहितपूर्वत्वमस्त्येव' इति। तन्न। अत्र सूत्रे आनुमानिकस्थान्यादेशभावग्रहणे मानाऽभावात्। ('अचः'[2] (४।३।३१) इत्यस्याऽसङ्गत्यापत्तेश्चेत्याहुः)।

**पूर्वस्य विधावित्यत्र** कर्मणि क्तिः। शेषे षष्ठी। अनुवादे परिभाषाऽनुपस्थानान्न स्थानसम्बन्धलाभः। अत एव श्रायसावित्यादौ नुम्न। एकदेशविकृत(प० ३७)न्यायेन सान्तस्य सुब्निरूपिताऽङ्गत्वात्। नाऽपि[3] पूर्वकर्मके विधावित्यर्थः। विधेये स्थानिभूतादचः पूर्वताया निरूपयितुमशक्यत्वात्।

ननु नाऽनेनाऽत्र स्थानिवद्भावप्राप्तिः। 'पूर्वत्राऽसिद्धे न स्थानिवत्' (वा० ८।४।१)[3] इति निषेधात्। अत आह—इति यण इति[4]। 'पूर्वत्राऽसिद्धे'

१. 'इत्याहुः' इति ख. नास्ति। २. ख. पाठ.। क. ग. नास्ति।

३. इत आरभ्य 'अशक्यत्वात्' इत्यन्तः क. ग. पाठः। ख. पुस्तके तु—'नापि पूर्वकर्मके विधावित्यर्थः। अवध्यवधिमतोः साजात्येनाऽचः पूर्वस्य भावरूपस्यैव ग्रहणाऽऽपत्तौ, वव्रश्चेत्यत्र संप्रसारणनिषेधाऽऽपत्तेः। अत एवोत्तरसूत्रे द्विर्वचनग्रहणं चरितार्थम्। वर्णद्वित्वं तु द्विःप्रयोग एवेत्युक्तम्'—इति पाठः।

४. इतोऽग्रे—'पूर्वत्राऽसिद्धे' इति च नाऽपूर्वम्, किन्तूत्तरसूत्रस्थविधिशब्दस्यैवाऽर्थः। तत्र हि 'चर्च, विधयश्चे' इति द्वन्द्वः। विधयश्च जशादि-

(वा० ८।४।१) इति च नाऽपूर्वम्। किन्तूत्तरसूत्रस्थविधिष्विति बहुवचनलभ्यम्। अनुस्वारादिग्रहणमेव चाऽतिदेशं प्रति त्रिपाद्यसिद्धत्वाऽभावज्ञापकमिति भावः।

**अन्ये तु**—अतिदेशं प्रति त्रिपाद्या असिद्धत्वेन न्यायसिद्धम्, 'पूर्वत्रासिद्धे' (वा० ८।४।१) इति। 'न मु ने' (८।२।३) इत्यत्र नेति योगविभागेन स्थलत्रयेऽसिद्धत्वाऽभावबोधनात् 'तस्य दोषः' (वा० ८।४।१) इत्यपि न्यायसिद्धमेव। स्थानिवत्सूत्रं प्रति तु त्रिपादी नाऽसिद्धा[1]। 'प्रत्ययः' (३।१।१) इ[2]त्यादिनिर्देशादिति वक्ष्यते। तेन 'वः' 'नः' इत्यादौ विसर्गसिद्धिरित्याहुः।

**न पदान्त** (१।१।५८)—अत्र 'विधि'शब्दो भावसाधनः। पदान्तेत्यत्राऽन्तशब्दश्चरमाऽवयववाची। कर्मषष्ठ्या च समासः। अत एव एषो यन् हसतीत्यादौ 'एतत्तदोः' (६।१।१३२) इति सुलोपो न। इणः शतरि 'यन्' इति रूपम्। तत्र यणः स्थानिवत्त्वात्। उत्वे च न स्थानिवत्। अनेन निषेधात्। इदमेवाऽभिप्रेत्य 'अपरविधाविति तु वक्तव्यम्' इति प्रघट्टके'कानि प्रयोजनानीति प्रश्ने–दध्यत्र। यणि संयोगान्तलोपः प्राप्नोति। स्थानिवत्त्वान्न' इति भाष्यमुपादाय, 'न पदान्त' (१।१।५८) इति निषेधोऽत्र नाऽस्ति। पदान्ते विधातव्ये स प्रतिषेधः। न च लोपोऽभावात्मकत्वात् पदान्तः, इति कैयटेनोक्तम्। अष्टमे च 'भोभगो' (८।३।१७) इति सूत्रे

---

साहचर्यात् त्रैपादिका एव गृह्यन्ते। अत एव 'विधि'ग्रहणं चरितार्थम्। अन्यथा जश्चर्ष्वित्येव वदेत्। न चैवं द्विर्वचनसवर्णादिग्रहणं व्यर्थम्। विधिग्रहणबोधितार्थस्याऽनित्यत्वज्ञापनार्थत्वात्। तेन 'तस्य दोषः संयोगादिलोप' (वा० ८।४।१) इत्यादिसिद्धमिति भावः। यद्वा—'विधि' ग्रहणं विधिमात्रसंग्रहार्थम्। तेन 'क्विलुगुपधात्वचङ्परनिर्ह्रासेषु' इत्यपि सिद्धम्। द्विर्वचनादिग्रहणं चाऽस्य सूत्रस्याऽनित्यत्वज्ञापनार्थम् तेन 'स्वरदीर्घयलोपेषु लोपाऽजादेश एव न स्थानिवत्' इत्यपि सिद्धमित्याहु.'। ख. पाठः।

१. 'त्रिपादी नाऽसिद्धा। भोभगो (८।३।१७) इतिसूत्रेऽशूग्रहणाल्लिङ्गादिति वक्ष्यते' ख. पाठः।

२. 'प्रत्यय इत्यादिनिर्देशादिति वक्ष्यते' इति ख. नास्ति। क. ग. पाठः।

कैयटेन स्पष्टमेवोक्तम् । प्रकृतसूत्रभाष्ये च स्पष्टमिति भाष्यप्रदीपोद्द्योते निरूपितम् । 'पादस्य लोपः' (५।४।१३८) इत्यस्य समासान्तप्रकरणे पाठात् तत्र गौणाऽवयवत्वाऽऽश्रयणेऽपि, प्रकृते तथाऽऽश्रयणे न मानम् । 'कानि सन्ति' इत्यादौ चारितार्थ्यात् ।

एतेन 'कर्मसाधनो विधिशब्दः, स्थानषष्ठ्या च समासः' इति परास्तम् । अनुवादे परिभाषाणामनुपस्थितेः स्थानसम्बन्धस्य दुर्लभत्वाच्च । द्विर्वचनादिषु विधिशब्दस्याऽनन्वयाऽऽपत्तेश्च । तदनुरोधात् कर्मधारयाऽऽश्रयणे तु विधिशब्दस्य पूर्वनिपाताऽऽपत्तिः । पूर्वोक्तप्रतिज्ञाऽनिर्वाहश्च । (वैरूप्याऽऽपत्तिश्च)[1] । एकेन विधिशब्देन युगपत् समासद्वयाऽनुपपत्तिश्च । कर्मसाधनस्य बहिरङ्गत्वं[2] चेत्याशयेनाऽऽह[3]—**पदचरमावयव** इति ।

भाष्ये तु 'पदेऽन्तः' इति सप्तमीसमासोऽप्युक्तः । न च तस्मिन् सति गतिकारकोपपदानां सुबुत्पत्तेः पूर्वं समासेऽसुबन्तत्वेन, सुबन्तेन समासे 'उत्तरपदत्वे चाऽपदादिविधौ' (वा० ४४३) इतिप्रत्ययलक्षणप्रतिषेधेन चोत्तरस्याऽपदत्वाद् गोचेत्यादावल्लोपस्य स्थानिद्भावेनाऽवङापत्तिरिति वाच्यम् । उत्तरपदस्य कार्थित्वे एव प्रत्यासत्त्या प्रत्ययलक्षणनिषेधप्रवृत्तेः । अत्र चेदं भाष्यमपि मानम् । सुबुत्पत्तेः पूर्वं समासे चैतद्विषयेऽनित्यत्वान्न प्रवृत्तिरिति दोषः ।

---

१. ख. पाठः ।

२. 'कर्मसाधनस्य बहिरङ्गत्वञ्च । यत्तु 'पदेऽन्त इति सप्तमीसमासः" इति । तन्न । 'गतिकारकोपपदानां सुबुत्पत्तेः पूर्वं समासेऽसुबन्तत्वेन, सुबन्तेन समासे 'उत्तरपदत्वे चाऽपदादिविधौ' (वा० ४४३) इति प्रत्ययलक्षणप्रतिषेधेन चोत्तरस्याऽपदत्वात् गोचेत्यादावल्लोपस्य स्थानिवद्भावेनाऽवङापत्तेरित्याशयवानाह—पदचरमावयव इति । पदचरमाऽवयवश्चाऽत्र द्विर्वचनसाहचर्येणाऽनेकवर्णाऽस्थानिक एव गृह्यते । तेन 'कत्सन्' इत्यत्र 'कोः कत्तत्पुरुषेऽचि' (६।३।१०१) इत्यनेन कदादेशः सिद्ध्यति । अन्यथा कदादेशस्याऽपि व्यपदेशिवद्भावेन पदान्तविधित्वात् स्थानिवद्भावो न स्यात्'—इति ख. पाठः, क. ग. पाठस्थाने ।

३. 'इत्याशयेनाह' इत्यारभ्य (१५५ पृष्ठे) 'दर्शितम्' इत्यन्तोऽयं क. ग. पाठः।

एवं पदचरमावयवे कर्त्तव्ये परपदस्थाऽजादेशस्यैव स्थानिवत्त्वनिषेध इति समासद्वयप्रदर्शनेन भगवता दर्शितम् ।

अत एव 'अचः परस्मिन्' (१।१।५७) इत्यत्र पञ्चमीसमासस्य 'अपीपचत्' इत्युदाहरणं भाष्योक्तं सङ्गच्छते इत्याहुः ।

अत्र (साक्षात् परम्परया वा) पदचरमाऽवयवसाधकः, प्रतिबन्धकश्च स्थानिवद्भावो निषिध्यते । तत्राऽऽद्ये उदाहरणम्—कानि सन्तीति । द्वितीये तूदाहरणम्—राजानो यन्तीति । अत्र इणो यणः स्थानिवत्त्वेन 'हशि च' (६।१।११४) इत्युत्वं न स्यात् । 'न पदान्त' (१।१।५८) इति निषेधात् सिद्ध्यति ।

'वरे' इत्यस्य—वरे योऽजादेशः स न स्थानिवदित्यर्थः । सूत्रे निपातनात् साधुत्वम् । यत्तु ईकारं प्रश्लिष्य 'ईकारे[2] सति विधौ=ईकारनिमित्ते विधौ न स्थानिवत्' इत्यप्यर्थः । तेनाऽऽमलक्याः फलमामलकम् । फले लुकि जातस्य स्त्रीप्रत्ययलुकः स्थानिवत्त्वेन 'यस्य' (६।४।१४८) इति लोपो न । एवं पञ्चाऽग्नाय्यः, पञ्चेन्द्राण्यो वा देवता अस्य-'पञ्चेन्द्रः', 'पञ्चाऽग्निः' इत्यत्र परनिमित्तङीप्लुकः पूर्वयोरानुगैकारयोः सन्नियोगशिष्ट(प० ८८)-न्यायेन निवृत्तौ कर्त्तव्यायां स्थानिवद्भावेन, तयोः[3] श्रवणं स्यात् । ईकारे[4]-

१. क. ग. नास्ति ।　　　　२. 'ईकारे परतो विधौ' ख. पाठः ।

३. इतोऽग्रे—ईकारे परतस्तन्निषेधे तु न दोषः । न चाऽऽनुगादिनंकारे, परतो विधिः । वस्तुतस्तयोः परत्वेनाऽक्षतेरिति । तन्न । 'लुक् न स्थानिवत्' इत्यनेनैव सिद्धेः (—तद्वैयर्थ्यात्) । तद्धि पञ्चभिः श्वश्रूभिः क्रीतः पटः 'पञ्चश्वशुरः' इत्यादावुकाराऽकारलोपनिवृत्तये आवश्यकम् । न च 'भस्याऽढे' (वा, ६।३।३५) इति पुंवत्त्वेन निर्वाहः । 'अन्तरङ्गान्' (प० ५३) इति न्यायेनैकादेशात् पूर्वं लुकि भत्वाऽभावात् । प्रत्ययलक्षणस्य नियमार्थत्वेनाऽल्विधावप्रवृत्त्या भत्वाऽभावाच्च । अन्तरङ्गानपीति न्यायेन पुंवत्त्वं बाधित्वा ङीषादेर्लुक एव प्राप्तेश्च । पट्व्या अपत्यं 'पाट्वेयः' इत्याद्यसिद्ध्यापत्तेश्च । पट्व्या मृद्व्येत्युदाहरणपराऽचः' ख. पाठः ।

४. इत आरभ्य 'तद्वैयर्थ्यात्' (१५६ पृष्ठे) इत्यन्तोऽयं क. ग. पाठः । ख. नास्ति ।

निमित्तके विधौ तन्निषेधे तु न दोष इति। तन्न। 'लुक् न स्थानिवत्' इत्यनेनैव सिद्धेस्तद्वैयर्थ्यात्।

'पट्व्या' 'मृद्व्या' इत्युदाहरणपरा'ऽचः परस्मिन्' इति सूत्रस्थभाष्य-विरोधाच्च। (ईकारप्रश्लेषस्य[1] भाष्यवार्त्तिकाऽनारूढत्वाच्च)।

उदाहरणम्—यायावरः। यातेर्यङन्ताद् वरच्। यङोऽल्लोपस्य स्थानि-वद्भावात् 'आतो लोपः' (६।४।६४) इत्यालोपो न। न च 'पूर्वमलोपस्ततो यलोपः' इति क्रमसत्त्वादकारेणाऽऽर्द्धधातुकत्वाद् यलाभात् कथमतिदेशः। सम्भावनामात्रेणाऽपि तत्प्रवृत्तेः 'वरे'ग्रहणेन ज्ञापितत्वात्। अस्ति चाऽत्राऽपि 'यदि पूर्वं यलोपः स्यात् तदाऽकारेण प्रत्ययत्वं लब्धं स्यात्' इति सम्भावना।

फलं तु यङन्तस्य 'यातिः' इत्यादिसिद्धिः। यातेर्यङन्तात् क्तिच्। क्तिन् तु न। 'अ प्रत्ययात्' (३।३।१०२) इत्यनेन बाधात्। अतो लोपः (६।४।४८)। यलोपः। अल्लोपस्य स्थानिवत्त्वादातो लोपः। यलोपः। पुनरातो लोपस्तु न। 'चिणो लुग्'न्यायेनाऽऽलोपस्याऽसिद्धत्वात्। स्थानिवत्त्वाच्च। (न च[2]ऽल्लोपस्याऽऽल्लोपे आभीयाऽसिद्धत्वम्। विभिन्नाऽऽश्रयत्वात्)।

स्वरे—चिकीर्षकः। अत्र ईकारस्य स्वरे कर्त्तव्येऽल्लोपः स्थानिवत्। स्वविधौ[3] च न तथेति स्वराऽप्रवृत्तिरेव स्यात्। लित्वन्तु 'कारके' (१।४।२३) इत्यादौ साऽवकाशम्।

स्यादेतत्। अत्र 'सवर्ण'ग्रहणं व्यर्थम्। 'शिण्ढि' इत्यादावनुस्वारस्या-ऽऽदिष्टादचः पूर्वत्वेन स्थानिवद्भावस्यैवाऽप्राप्तेः। सवर्णदीर्घस्तु नाऽत्र 'सवर्ण'पदेन गृह्यते[4]। अनुस्वाराऽऽदिसाहचर्येण त्रैपादिकस्यैव ग्रहणात्[5]। साहचर्याऽनाश्रयणे तु दीर्घग्रहणेनैव सिद्धेरेतद्वैयर्थ्यमेवेति चेत्, सत्यम्[6]।

१. क. ग. नास्ति। ख. पाठः।
२. ग. नास्ति। क. कुण्डलितः। ख. पाठोऽयम्।
३. स्वविधौ=अकारस्य स्वरे कर्त्तव्ये। न तथा=न स्थानिवद्भाव इत्यर्थः।
४. इतोऽग्रे–'फलाऽभावात्'— इति ख. पाठः।
५. 'ग्रहणाच्च' इति ख. पाठः।
६. 'सिद्धेरेतद्वैयर्थ्याच्चेति चेत् सत्यम्' ख. पाठः।

सवर्णग्रहणस्य[1] 'अनादिष्टादचः पूर्वत्वस्याऽशास्त्रीयत्वेऽपि स्थानिवत्सूत्रेणाऽतिदेशः' इत्यर्थलाभा[2]र्थत्वात्। यद्वा[3]ऽनादिष्टादचः पूर्वसम्बन्धित्वं विधेः परम्परयाऽपि गृह्यते इत्यर्थलाभार्थं तत्।

नन्वेवं ब्राह्मणकण्डूतिरिति न सिद्ध्यति। कण्डूयतेः 'अप्रत्ययात्' (३।३।१०२) इत्यनेन क्तिनो बाधेऽपि, क्तिचि, अल्लोप-यलोपयोरल्लोपस्य स्थानिवत्त्वेन धातुत्वे, उवङि, क्यजन्जात् क्तिचि, तदभावे यणि, उक्तरीत्या स्थानिवत्त्वादूठ्-वलोपयोरभावे-(क[4]ण्डुवतिरिति, कण्डूतिरिति वा) अनिष्टरूपाऽऽपत्तिः। न च कण्ड्वादीनां धातुत्वे, उवङि, वस्योठि कर्त्तव्ये वकारस्याऽनादिष्टादचः पूर्वत्वं न स्थानिवत्त्वेन लभ्यम्। वकारस्याऽनादेशत्वात्। उवङः स्थानिवत्त्वेन तल्लाभेऽपि, न तस्य किञ्चित् कार्यमस्ति। एवं च वस्योठि कार्येऽल्लोपस्य स्थानिवत्त्वाऽप्रवृत्तावूठि, 'ब्राह्मणक[5]ण्डूतिः' सिद्ध्यत्येव। ध्वनितं चेदं 'कण्ड्वादिभ्यो यक्' (३।१।२७) इत्यत्र कैयटे इति वा[6]च्यम्।

'सर्वे सर्वपदादेशाः' इ[7]ति 'कण्डू' इत्यस्य 'कण्डुव्' इत्यादेशो तस्य, 'कण्डू-ऊ' इत्यादेशे कर्त्तव्ये स्थानिवद्भावस्य सुलभ[8]त्वादिति चेन्न।

'न पदान्त' (१।१।५८) सूत्रस्थब्राह्मणकण्डूतिरिति भाष्योदाहरणेनाऽनादिष्टादचः पूर्वत्वेन स्थानिवत्त्वस्य परम्पर[9]या तत्सम्बन्धिविधौ प्रवृत्तेर्वाऽनित्यत्वकल्पनादिति प्राञ्चः। अत्र [10]नव्याः—

---

१. 'सवर्णग्रहण' ख. पाठः।　　२. 'इत्यर्थलाभार्थम्' ख. पाठः।

३. इत आरभ्य 'इत्यर्थलाभार्थं तत्' इत्यन्तः ख. नास्ति। क. ग. पाठः।

४. ख. पाठः।　　५. 'ब्राह्मणकण्डूतिरिति'-इति ख. पाठः।

६. इतोऽग्रे-'प्रातिपदिकस्य सिद्धचनापत्तेः'—इति ख. पाठः।

७. 'इति पक्षे कण्डू' ख. पाठः　　८. 'सुलभत्वाच्चेति चेन्न' ख. पाठः।

९. 'परम्परया तत्सम्बन्धिविधौ प्रवृत्तेर्वा' इति ख. नास्ति। क. ग. पाठः।

१०. इतोऽग्रे—'सर्वे सर्वपदादेशा इत्याश्रित्य स्थानिवत्त्वप्रवृत्तौ स्वरादिग्रहणे व्यवहिताऽव्यवहितसाधारणपूर्वत्वग्रहणज्ञापकताया आकरोक्ताया असङ्गत्यापत्तेः, पूर्वविधावित्यत्रानुमानिकादेशग्रहणे मानाऽभावाच्च'—ख. पाठः।

'अचः परस्मिन् पूर्वविधौ' (१।१।५७) इत्यत्राऽऽनुमानिकाऽऽदेशग्रहणे मानाऽभावः[1]।

अपि च—अनादिष्टादचः पूर्वत्वे स्थानिवत्त्वादिज्ञापने फलाऽभावः। न च 'समाद्ये'त्यत्राऽद् इ य इति स्थिते 'ण्यल्लोपौ' (वा० ६।४।५१) इति पूर्वविप्रतिषेधेन उपधावृद्धेः पूर्वं णिलोपे, ततः प्रत्ययलक्षणेनोपधावृद्धावेकदेशविकृत(प० ३७)न्यायेन प्राप्तजग्ध्यादेशस्य वारणाय णिलोपस्य स्थानिवत्त्वमुपेयम्। तच्चोक्तार्थं[2] विना न सम्भवति। कृतवृद्धेः 'आद्' इत्यस्याऽनादिष्टादचः पूर्वत्वाऽभावादिति वाच्यम्। अन्तरङ्गत्वेनोपधावृद्धेः पूर्वमेव[3] प्राप्तेः।

किञ्च[4] 'ण्यल्लोपौ' (वा० ६।४।५१) इति णिस्थानिकवृद्ध्यादेर्बाधकम्[5]।

[6]'शिण्ढी'त्युदाहरणमपि चिन्त्यम्। 'दीर्घादाचार्याणाम्' (८।४।५२) इत्युत्तरम्—'अनुस्वारस्य ययि' (८।४।५८), 'वा पदान्तस्य' (८।४।५९),

१. 'मानाऽभावाच्च' ख. पाठः। २. 'तच्च पूर्वोक्तार्थं विना' ख. पाठः।
३. 'पूर्वमेव प्राप्तेः' इत्यस्य स्थाने 'दुर्वारत्वात्' इति—ख. पाठः।
४. 'किञ्च' इति ख. नास्ति 'ण्यल्लोपाविति तु'-इति ख. पाठः।
५. इतोऽग्रे—'स्थानिभूतादचः पूर्वत्वेन दृष्टो यस्तद्वृत्तिधर्मावच्छिन्नोद्देश्यकविधौ'इत्यर्थस्य 'कृदतिङ्' (३।१।९३) सूत्रे भाष्ये ध्वनितत्वेनाऽऽक्षतेश्च। इदमेवाऽभिप्रेत्य 'पूर्वत्राऽसिद्धे न स्थानिवत्' इत्यनेनैव सिद्धौ 'द्विर्वचनादीनि न कर्त्तव्यानि, वरेयलोपस्वरवर्जम्' इति भाष्यम्। अन्यथा सवर्णग्रहणस्याऽपि कर्त्तव्यताऽऽपत्तौ तदसङ्गतिः स्पष्टैव। न च हरित-शब्दादाचक्षाणणिजन्ताण्णिचि 'हरिल्लुनाति' इत्यादौ 'तोर्लि' (८।४।६०) इति परसवर्णे स्थानिवद्भावाऽऽपत्तिः। न च 'पूर्वत्राऽसिद्धे न' (वा ८।४।१) इति निषेधः। 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' (वा० ८।४।१) इति तन्निषेधादिति सवर्णग्रहणमिति कथं प्रत्याख्यातमिति वाच्यम्। परनिपातयोग्यस्य पूर्वनिपातकरणेन संयोगादिलोपसाहचर्यात् प्रतिपदोक्तलत्वस्यैव तत्र ग्रहणान्न दोष इति भाष्याशयात्'—इति ख. पाठः।
६ इत आरभ्य 'भाष्यविरोधापत्तेरित्याहुः' (१६० पृष्ठे) इत्यन्तः पाठः ख. नास्ति।

'तोर्लि' (८।४।६०), 'उदः स्थास्तम्भोः' (८।४।६१), 'झयो होऽन्यतरस्याम्' (८।४।६२), 'शश्छोऽटि' (८।४।६३) इति षट्सूत्रीपाठोत्तरम्—'झलां जश् झशि' (८।४।५३), 'अभ्यासे चर्च' (८।४।५४), 'खरि च' (८।४।५५), 'वाऽवसाने' (८।४।५६) 'अणोऽप्रगृह्यस्य' (८।४।५७) इति पञ्चसूत्र्याः पाठ इति भाष्य-सम्मताऽष्टाध्यायीपाठपक्षे 'अनुस्वारस्य' (८।४।५८) इति सूत्रदृष्ट्या 'झलां जश्' (८।४।५३) इत्यस्य, 'झरो झरि' (८।४।६५) इत्यस्य चाऽसिद्धत्वेन यय्परत्वाऽभावात्। प्रत्याख्यानभाष्यरीत्या 'पूर्वत्राऽसिद्धे' (वा० ८।४।१) इति निषेधस्य णत्वे प्रतिप्रसवेनाऽत्र स्थानिवत्त्वेन परसवर्णाऽभावस्यैव लाभाच्च।

'णत्वे च लक्षणप्रतिपदोक्त (प० ११५) परिभाषा न' इत्युपपादयिष्यते।

भिन्धीत्युदाहर्त्तुमुचितम्। तदप्युक्तरीत्या स्थानिवत्त्वाऽप्रवृत्तेरनु-चितम्। तस्माद् बेभिद्यादिभ्यो यङन्तेभ्यः क्विपि 'बेभिल्लाति' इत्यादौ 'तोर्लि' (८।४।६०) इति परसवर्णे स्थानिवत्त्वाऽभावाय तत्। 'क्वौ लुप्तम्' (वा० ६।४।८५) इति तु क्वाचित्कम्। 'संयोगादिलोपलत्वण-त्वेषु' (वा० ८।४।१) इत्यत्र लत्वस्य मध्ये पाठादत्र सवर्णग्रहणाच्च णत्व-प्राग्वर्त्तिलत्वस्यैव ग्रहणान्न दोषः।

न चाऽत्र 'पदचरमावयवे न स्थानिवत्' इति निषेधः। तत्स्थानिव-त्त्वेन दकारगतपदचरमावयवत्वस्याऽपहारेण, तत्स्थानिके तस्याऽलाभेन, तत्र तस्य निषेधस्याऽप्रवृत्तेः। स निषेधस्तु 'कानि सन्ति' इत्यादौ चरि-तार्थः। एतदेवाऽभिप्रेत्य 'वेतस्वान्' इत्यादावेतन्निषेधप्रवृत्त्या रुत्वमाशङ्क्य, तत्समाधानग्रन्थे—'ननु चैवं विज्ञायते—सम्प्रति यः पदान्तः' इति सिद्धान्तिनोक्तम्। 'स्थानिवत्त्वनिषेधं विनाऽपि यः पदान्तः' इति च कैयटेन व्याख्यातम्। किञ्च पुनस्तदग्रे 'वेतस्वान्' इत्यादेः सर्वथैतदनुदाहरणत्व-बोधनाय 'पदेऽन्तः' इति पक्षो दर्शितः। तदनेन भाष्यद्वयेन 'पदचरमावयवे कर्त्तव्ये परपदस्थाऽजादेशो न स्थानिवत्' इति दर्शितम्।

एवञ्चाऽपरविधाविति प्रघट्टकस्थकैयटग्रन्थो 'भोभगो' (८।३।१७) इति सूत्रस्थकैयटग्रन्थश्च, तदनुसारिणो नवीनग्रन्थाश्च एकपदविषये एतस्य निषेधस्य प्रवृत्तिं वदन्तश्चिन्त्या एव। अत एव 'अपीपचन्' इति पञ्चमी-समासोदाहरणे नाऽयं भगवतोक्तः।

न च द्विर्वचनादिसाहचर्येण पदचरमावयव एकवर्णस्थानिक एव गृह्यत इति न तत्र दोषः। एवं हि तत एव वर्णरूपस्य तस्य ग्रहणापत्तौ 'कौ स्तः' इत्युदाहरणपरभाष्यविरोधाऽऽपत्तेरित्याहुः ।

अनुस्वारे-शिषन्तीति[1]। दीर्घे-प्रतिदीव्ना। **जशि**-सग्धिरित्युदाहरणम्। अदनं-ग्धिः। अदेः क्तिनि 'बहुलं छन्दसि' (२।४।३९) इति 'घस्लृ' आदेशः। 'घसिभसोः' (६।४।१००) इत्युपधालोपः। 'झलो झलि' (८।२।२६) इति सलोपः। घस्य जश्त्वम्। सहस्य सः। 'सग्धिः स्त्री सहभोजनम्' इत्यमरस्वरसा[2]त् 'झ[3]लो झलि' (८।२।२६) इत्यनेन सिच एव लोप इति पक्षे तु छान्दसो वर्णलोपो बोध्यः। स्पष्टं चेदं 'धि च' (८।२।२५) इति सूत्रे भाष्ये। लोके तु 'सग्धिः' इत्यसाध्वेवेति बोध्यम्।

**चरि**—जक्षतुः।

भा[4]ष्ये तु 'पूर्वत्राऽसिद्धे न स्थानिवत्' (वा० ८।४।१) इत्याश्रित्य 'वरेयलोप-स्वरवर्ज-द्विर्वचनादीन्यत्र न कर्त्तव्यानि' इत्युक्तम्। एवञ्च सूत्रमतेऽपि दीर्घस्य त्रैपादिकस्यैव ग्रहणमित्येके। 'चिण्णमुलोर्दीर्घः' (६।४।९३), 'कर्मण्यङ्' (३।१।३०),'वा दान्त' (७।२।२७) इत्यादिसूत्रस्थभाष्यप्रामाण्याद् वर्ज्यकोटौ दीर्घग्रहणमपि बोध्यमित्यन्ये।

**निषेध** इति–द्विर्वचनग्र[5]हणादिति भावः। 'नाऽजानन्तर्ये' (प०५२) इति

१. इतोऽग्रे–'ननु परसवर्णे स्थानिवत्त्वनिषेधसामर्थ्येनैवाऽनुस्वारलाभेऽनुस्वारग्रहणे फलं चिन्त्यमिति चेन्न। तन्मात्रविषयत्वशङ्कावारणार्थत्वात्'—इति ख. पाठः। ग. नास्ति। क. तु मसीलेपेन दूरीकृतोऽयं पाठः।

२. इतोऽग्रे—'समानस्य छन्दस्यमूर्द्ध' (६।३।८४) इत्यनेन 'समानस्य सः' इत्यन्ये। 'वयस्यासु मूर्ध्नो मतुप्' (४।४।१२७) इति सूत्रस्थ 'वयस्यासु' इति निर्देशस्य सामान्याऽपेक्षज्ञापकत्वेन च्छान्दसा अपि क्वचिद् भाषायामिति ज्ञापनादमरे न दोषः। 'तद्वानासाम्' इति यत्प्रत्ययस्य च्छन्दसि विहितत्वेन 'वयस्या'शब्दस्य लोकेऽप्राप्तेः। केचित्तु—'स्वतन्त्रघस्लृधातोरेव बाहुलकात् क्तिनि पृषोदरादित्वादुपधालोपेन लोकेऽपि साधुत्वमाहुः। चरि-जक्षतुः—इति ख. पाठः।

३. इत आरभ्य 'असाध्वेवेति बोध्यम्' इत्यन्तः क. ग. पाठोऽयम्।

४. इत आरभ्य 'बोध्यमित्यन्ये' इत्यन्तः क. ग. पाठः। ख. नास्ति।

५. 'द्विर्वचनग्रहणाद् विधिग्रहणाद् वा' ख. पाठः।

निषेधाद् बहिरङ्गपरिभाषाया अप्रवृत्तिः[1]।

**झलां जश् झशि** (८।४।५३)—सौत्रत्वाज्जशः[2] शस्य जश्त्वं 'व्रश्च' (८।२।३६) इत्यादिषत्वञ्च न। दकार इति—स्थानत आन्तर्यादिति भावः।

**अदर्शनम्** (१।१।६०)—'स्थाने' इत्यनुवर्त्तते। 'प्रसङ्गे' इति हि तदर्थः। तदेतदाह—प्रसक्तस्येति। शास्त्रतोऽर्थतो वेति भावः।

अत्र दृशिर्ज्ञानसामान्यवचनः। तेन 'स्मृत्यतिरिक्तज्ञानसामान्याऽभावो लोपः' इति फलितम्। अत ए[3]व 'स्मृत एवाऽनुबन्धः कार्यसाधकः' इति सङ्गच्छते। लोपविधायके तु ज्ञानस्याऽवर्जनीयत्वेन, तन्निषेधस्तत्सामग्रीनिषेध एव पर्यवस्यति। तत्र सामग्र्यन्तर्गता सत्ता निषिध्यते। (सा च[4] बुद्धिसत्ता, बाह्यसत्ता वेत्यन्यदेतत्)।

अदर्शनशब्दाऽर्थस्यैषा संज्ञा, न तु शब्दस्य[5]। व्याख्यान[6]ात्।

ननु प्रसक्तस्येति किम्? न च 'दधि' 'मधु' इत्यादौ तुक् स्यात्, 'ग्रामणीः' इत्यादौ चाऽण्कार्यं वृद्ध्यादि स्यादिति वाच्यम्। प्रत्ययलक्षणसूत्रस्य नियमार्थत्वात्। स्थानिवद्भावस्तु स्थानषष्ठीनिर्दिष्टत्वाऽभावान्नैव प्रवर्त्तते। अणस्तस्माद् विधानाऽभावेन, ञ्णितप्रत्ययनिरूपिताङ्गत्वाऽभावेन, वृद्धेरप्रसक्ते (श्च[7]। प्रत्ययेनाऽङ्गाक्षेपे तु विधिपक्षेऽपि तुको व्यावृत्तिसिद्धे)-श्चेति चेन्न। ग्रामाऽधिकरणिका स्थितिरित्यर्थके 'ग्रामे तिष्ठति' इति वाक्ये 'ल्यब्लोपे' (वा० १।४।३१) इति पञ्चम्यापत्तेः। अस्ति ह्यत्र ल्यपोऽ-

---

१. 'अप्रवृत्तेः' ख. पाठः।　　　२. 'निपातनाज्जशः' ख. पाठः।

३. 'अत एव ल्यबन्तपदस्याऽध्याहारविषये 'ल्यब्लोपे' इत्यस्य न प्रवृत्तिः। स्मृत एवाऽनुबन्धः कार्यसाधक इति च सङ्गच्छते' ख. पाठः।

४. ख. पाठः।

५. इतोऽग्रे–'महासंज्ञाकरणसामर्थ्यात्। लोपनं लोप इति हि तदर्थः। न हि शब्दो लोपनक्रिया।'—इति ख. पाठः।　　६. व्याख्यानात्' इति ख. नास्ति। क. ग. पाठः।　　७. क. ग. नास्ति ख. पाठः।

दर्शनम् । प्रसक्तग्रहणे तु शास्त्रतोऽर्थतो वा ल्यपः प्रसक्त्यभावान्न दोषः । एतेन 'लोपनं लोपः' इत्यन्वर्थसंज्ञाबलादेव सिद्धे, सूत्रं न कार्यमिति परास्तम्[1] ।

**संयोगान्त** (८।२।२३)—'पदस्य' इत्यधिकारात् 'संयोगस्य' इत्यस्य तद्विशेषणत्वेन तदन्तग्रहणे लब्धेऽन्तग्रहणं चिन्त्यप्रयोजनम् । 'पदस्येत्यस्य क्वचिद् वैयधिकरण्येनाऽन्वयः' इत्यर्थज्ञापकं वा । 'प्रत्येकं संयोगसंज्ञा'-पक्षेऽपि 'संयोगयोर्लोपः' 'हलोर्लोपः' इति वा न्यासेन 'सुदृषत्प्रासादः' इत्यादौ दोषाऽभावात्, तत्पक्षस्य दूषितत्वाच्च । यत्तु संयोगेति लुप्तषष्ठीकं पदम् । तच्च, 'पदस्य' इति चाऽन्तस्य विशेषणम् । 'संयोगाऽन्तस्य सतः पदान्तस्य' इत्यर्थः । अत्र चाऽन्तग्रहणं मानम् । अत एव सरूपसूत्रे 'पृथक् सर्वेभ्यो विभक्तावेकशेषः' इति पक्षे 'अन्त्ययोर्निवृत्तौ वृक्षस् स् स् इति प्रसज्येन' इत्याशङ्क्य 'संयोगान्तलोपेन सिद्धम्' इति भाष्यं सङ्गच्छते । यथा[2]श्रुते हि योऽत्र संयोगः, न तदन्तं पदम्, सुपोः प्रत्येकं पदत्वादिति । तन्न[3] । तादृशलक्ष्याऽभावात् ।

अत एव 'घ्वसोरेद्धौ' (६।४।११९) इति सूत्रे 'द्विशकारको निर्देशः' इति भाष्यं सङ्गच्छते । तव मते संयोगान्तलोपस्य दुर्वारत्वेन शकारद्वयाऽभावात् तदसङ्गतिः स्पष्टैव । (किञ्चैवं स[4]ति 'लुप्तनिर्दिष्टः शकारः' इत्येव ब्रूयात् । लाघवाय तथैव वक्तुमुचितत्वाच्च) । 'वृक्षौ' इत्याद्यसिद्ध्या त्वदुदाहृतभाष्यस्यैकदेश्युक्तित्वाच्च[5] । ('त[6]त्राऽवरतो द्वयोः श्रवणं प्रसज्येत'

---

१. इतोऽग्रे–'न च तेनैव सिद्धे सूत्राऽऽरम्भसामर्थ्येनैव 'प्रसक्ताऽदर्शनम्' इत्यर्थ-लाभे 'स्थाने' इत्यनुवृत्तिर्व्यर्थेति वाच्यम् । वाच्यवृत्त्याऽलाभात्'—इति ख. पाठः ।

२. 'यथाश्रुते हि' इति ख. नास्ति ।

३. 'तन्न' इ यतोऽग्रे-'संयोगसंज्ञासूत्रेऽन्तपदसामर्थ्याद् द्विवचनान्तेन समास इति ध्वनयता भाष्यकृता प्रयोजनाऽन्तराऽभावस्य ध्वनितत्वात् । तादृशलक्ष्या-ऽभावाच्च ।' ख. पाठः । ४. क. ग. नास्ति । ख. पाठः ।

५. 'प्रौढिवादपरत्वाच्च ।' इति तु ख. पाठः ।

६. क. ग. नास्ति । ख. पाठः ।

इति भाष्ये 'अवरतः' इति पदोपादानेन पूर्वग्रन्थस्य प्रौढिवादत्व-ध्वननाच्च)।

**यण् इति** (वा० ८।२।२३)—वाचनिकमिदम्। यद्वा-वाच्यः = व्याख्येय इत्यर्थः। 'झलो झलि' (८।२।२६) इति सूत्राद् 'झलः' इत्यपकर्षणादिति भावः। अत एव 'झलि झलः' इति नाऽसूत्रि। अपकृष्यमाणं च वाक्य-भेदेन सम्बद्ध्यते। षष्ठ्या च विपरिणम्यते[1]। तेन पूर्ववाच्यस्य क्वचिद-झल्यपि प्रवृत्तिः। उत्तरवाक्येन च तस्य क्वाचित्कत्वं ज्ञाप्यत इति नाऽति-प्रसङ्गः। (ध्वनितं[2] चेदम् 'अमो मश्' (७।१।४०) इत्यत्र भाष्यकैयटयोः।) एतेन 'अत्रैव कुतो न कृतम्' इत्यपास्तम्।

यद्वा—कार्यकालपक्षेऽन्तरङ्गे लोपे कर्त्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वम्' इति व्याख्या (न[3] च 'नाजानन्तर्ये' (प० ५२) इति निषेधः। 'केऽणः' (७।४।१३) इति निर्देशेन तस्याऽनित्यत्वात्। तत्र हि 'क इ अणः' इति स्थितेऽन्तरङ्गत्वाद् गुणो न तु परत्वात्। लक्ष्यगतपरत्वमादाय यणोऽपि परत्वात्। 'नाऽजानन्तर्ये' (प० ५२) इति निषेधेनाऽन्तरङ्गपरिभाषाऽ-प्रवृत्तावुभयोरपि परत्वेन, परस्परप्रतिबन्धाद् द्वयोरभावे प्राप्ते, उक्तनिर्देश-स्तदनित्यत्वज्ञापकः)।

(यदि[4] तु नाऽत्राऽसिद्धपरिभाषायाः प्रवृत्तिः किन्तु निरपवादायाः 'अन्तरङ्गं बलीयः' इत्यस्याः तर्हि) उत्तरकालप्रवृत्तिके लोपेऽजानन्तर्याऽ-भावात्[5] तदप्रवृत्तिर्बोध्या। एतच्च 'सुखार्त्तः' इत्यत्र निरूपयिष्यते। तदुक्तं भाष्ये—'संयोगान्तलोपे यणः प्रतिषेधः। संयोगादिलोपे[6] च। न वा झलो लोपाद् बहिरङ्गलक्षणत्वाद् वा' इति। न च श्वल्ल्यादिभ्यः[7] कर्त्तरि क्विपि, सौ, तृतीयपक्षे संयोगान्तलोपः प्राप्नोति, आद्यपक्षद्वये तु नेति

१. 'षष्ठ्या च विपरिणम्यते' इति ख नास्ति। क. ग. पाठः।

२. क. ग. पाठः। ख. नास्ति। ३. क. कुण्डलितः ख. पाठः। ग. नास्ति।

४. क. पुस्तके कुण्डलितः पाठः। ग. नास्ति। ख. पुस्तके तु—'यदि लक्ष्यगत-परत्वमादाय विप्रतिषेधशास्त्राऽप्रवृत्तिस्तर्हि उत्तरकालप्रवृत्तिके लोपे' इति पाठः।

५. 'भावाच्च' ग. पाठः। क. ग. पाठः।

६. 'संयोगादिलोपे च' इति ख. नास्ति।

७. 'श्वल्ल्यादिधातुभ्यः' इत्यर्थः।

फलभेद इति वाच्यम्[1]। दध्यत्रेत्याद्युदाहरणविशेषाभिप्राय[2] एव, संयोगादिलोपाभिप्राय एव वा[3] भाष्ये तृतीयः पक्षः। 'झल्ग्रहणाऽपकर्ष एवैतद्विषयकः' इत्यन्ये।

इति पक्षे इति—विनिगमनाविरहादिति भावः। न च बहिरङ्गत्वेनाऽसिद्धत्वाद् यणभावः। 'दध्यत्र' इत्यादिभाष्योदाहरणप्रामाण्येन यथोद्देशपक्षाङ्गीकारात्। (यत्तु[4] 'कार्यकालपक्षेऽपि त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषा न प्रवर्त्तते, विसर्जनीयसूत्रस्थभाष्यप्रामाण्यात्' इति। तन्न। संयोगान्तलोपसूत्रस्थभाष्यविरोधाद् विसर्जनीयसूत्रस्थभाष्यमपि यथोद्देशाश्रयेणैव प्रवृत्तमिति न तदसङ्गतिरिति दिक्)।

**धकारयकारयो**र्द्वित्वेति— एवं च विसर्गादिद्वित्वेनाऽऽधिक्येऽपि न क्षतिः। **द्विधमेकयमिति**—द्विधत्वं प्रक्रियायां बोध्यम्। अत्र पुनर्द्वित्वप्रवृत्त्या रूपान्तरमित्येतत् 'समः सुटि' (८।३।५) इति सूत्रे खण्डयिष्यते।

यत्तु 'कृञ्चाऽनुप्रयुज्यते' (३।१।४०) इति सूत्रे लिङ्ग्रहणाऽभावेऽन्यपरप्रयोगमाशङ्क्य—एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्याः, तृतीयस्याश्च न भविष्यति। तद्यथा 'गोषु स्वामी, अश्वेषु च' इत्येव भवति, न तु गोषु चाऽश्वानां स्वामी' इत्युक्तत्वेन एकस्मिन् द्वित्वाऽभावेऽपरस्मिन् द्वित्वस्य वक्तुमशक्यत्वादयुक्तमिदमिति। तन्न। सार्थकाऽनेक-

१. 'फलभेद इति वाच्यम्। आद्यपक्षद्वयेन फलैक्यात् पूर्वं पूर्वमन्तरङ्गम्' इत्याश्रित्य सुलोपस्याऽसिद्धत्वेन संयोगान्तत्वाऽभावात् तदप्राप्तेः। पूर्वपक्ष्युक्त-'दध्यत्र' इत्याद्युदाहरणविशेषाऽभिप्राय एव, संयोगादिलोपाभिप्राय एव वा भाष्ये तृतीयः पक्षः। झल्ग्रहणाऽपकर्ष एवैतद्विषयक इत्यन्ये। काव्यादिभ्य आचक्षाणणिजन्तेभ्यः कर्तृक्विपि लोपो भवति, न वेति, 'अतोऽम्' (७।१।२४) इतिसूत्रे विचारयिष्यत इत्यलम्। 'न वा' इति 'वा'शब्दस्वारस्याद् वचनाऽऽरम्भवादिन एव प्रत्याख्यानप्रकारः। भाष्यकृत्तु 'तर्हि वक्तव्यं न वक्तव्यम्, इत्यादिशब्दैरेव प्रत्याचष्टे इत्याहुः।'—इति ख. पाठः।

२. 'दध्यत्र' इत्यारभ्य 'इत्यन्ये' इत्यन्तः क. ग. पाठः। ख. नास्ति।

३. 'वा' इति क. नास्ति। ४. क. कुण्डलितः ख. पाठः। ग. नास्ति।

विषये तन्न्यायाङ्गीकारात्। द्वित्वादेस्त[1]न्निर्मेयस्य वा सार्थकत्वाऽभावात्। वेदे त्वेककर्मविषयशास्त्रविधेयसाधनाऽनेकत्वे।

अत एव व्रीहिसाधनकप्रयोगे व्रीहिभ्रेषे न यवोपादानम्। किन्तु तत्सदृशनीवाराद्युपादानमेव। तत्र हि सादृश्यात् तद्बुद्ध्युदयेन तत्प्रयोग-निर्वाहात्। 'भिन्नपदविषयोऽयं न्यायो नैकपदविषयः। वेदेऽप्यनेकद्रव्य-विषय एव, न तु व्रीहिविषये एव। यज्जातीयव्रीहिभिः प्रक्रमस्तज्जाती-यानामेवोपादानमिति नियमः' **इत्यन्ये**।

अत एव 'सर्वस्य द्वे' (८।१।१) इति सूत्रे पूर्वं द्विर्वचनमित्यङ्गीकारे 'द्रोग्धा' इत्यत्र घत्वढत्वयोरापत्तिरिति भाष्यकारोक्तं दूषणं सङ्गच्छते।

वस्तुतो यत्राऽन्याऽऽकृतिकरणे भिन्नार्थत्वसम्भावना, प्रयोगान्यत्व-बुद्धिश्च, तद्विषयोऽयं न्यायः। अत एवेदृशे विषये प्रक्रमभङ्गमालङ्कारिका दोषमाहुः। न चैतत् प्रकृते इति दिक्।

'हलो यमाम्' (८।४।६४) इति लोपे, द्वित्वाऽभावे चैतदेव[2] रूपम्। नन्वेवमपि संहिताया अविवक्षिततत्वे रूपाऽन्तरं दुर्वारम्।

**संहितैकपदे नित्या नित्या धातूपसर्गयोः।**
**समासे चाऽथ वाक्ये च सा विवक्षामपेक्षते॥**

—इत्युक्तत्वेन समासे, वाक्ये च तदनित्यत्वस्य प्राप्तेः। अत एव 'भूवादि' (१।३।१) सूत्रे भाष्यम्—'अथाऽसंहितया निर्देशः—'भू–आदयः' इति भवितव्यमिति' इति चेन्न।

**नित्या समासे वाक्ये तु सा विवक्षामपेक्षते।**

इत्येवोत्तरार्द्धसत्त्वात्। न चाऽत्र पाठे 'समास'ग्रहणं व्यर्थम्, एकपद-त्वादेव समासे संहितानित्यत्वसिद्धेरिति वाच्यम्। एतत्सामर्थ्यनैकपदेनाऽ-खण्डपदस्यैव ग्रहणात्। अत एव 'अग्रे-अग्रे' इत्यादौ पदद्विर्वचने संहिता

---

१. 'द्वित्वादेर्निर्मेयस्य' इति क., 'द्वित्वाद्विनिर्मेयस्य' इति ग. पाठः।

२. 'एकधमेव रूपम्'–इति पाठान्तरम्।

न नित्या। स्पष्टं चेदं 'प्रकारे गुणवचनस्य' (८।१।१२) इति सूत्रे भाष्ये।

अखण्डत्वं च—पदत्वाऽभावादुत्तरखण्डत्वम्। अत एव 'राजीयति' इत्यादौ न दोषः। अन्यथा[2] शपा एकादेशाऽभावोऽपि स्यात्। 'समासे चाऽथ वाक्ये च' इति पाठेऽपि समासे चेति पूर्वाऽन्वयीति न पाठयोः फले विशेषः। 'अथ' शब्दश्च चरितार्थः। धातुसंज्ञासूत्रस्थभाष्यम् असमास-परतया व्याख्येयम्। 'भू' इत्यनुकरणम्-अविभक्तिकम्-अभेदेनाऽऽदेर्विशे-षणम्। 'उतश्च प्रत्ययाद्' (६।४।१०६) इतिवत्। अनुभूतविशेषणः 'आदि'-शब्दो लक्षणयाऽऽदिमत्पर इत्याहुः।

([3]न चैवमपि 'इकोऽसवर्णे (६।१।१२७) इति प्रकृतिभावेन रूपाऽन्तरं दुर्वारम्। समासे तन्निषेधात्। न च नित्यसमासे तन्निषेधः। भाष्ये 'नित्य'-ग्रहणस्य प्रत्याख्यानात्। नन्विह यण् दुर्लभः। 'सुधी' शब्दस्य ध्यायतेः सम्प्रसारणे निष्पन्नत्वेन, 'सम्प्रसारणाच्च' (६।१।१०८) इति पूर्वरूपाऽऽप-त्तेरिति चेन्न। 'सम्प्रसारणपूर्वत्वे समानाऽङ्गग्रहणम्' (६।१।१०८) इति वार्त्तिकोक्तेः। किञ्च साक्षात्सम्प्रसारणस्थानिकपूर्वरूपादेः 'हलः' (६।४।२) इत्यारम्भसामर्थ्यादल्विधौ स्थानिवत्त्वाऽङ्गीकारेऽपि, पूर्वरूपोत्तरं प्रवृत्त-'हलः' (६।४।२) इतिदीर्घस्य स्थानिवद्भावेन सम्प्रसारणत्वे मानाऽभावात्। उपपादयिष्यते चेदम् 'इग्यणः' (१।१।४५) इति सूत्रे)।

['न[4] भूसुधियोः (६।४।८५) इति यण्-निषेधस्तु न। आङ्गत्वेन प्रत्यये परत एव तत्प्रवृत्तेः। 'अनन्तरस्य' (प० ६३) इति न्यायेन 'एरनेकाचः'

---

१. 'अत एव राजपुरुषौ, राजीयतीत्यादौ' ख. पाठः।
२. 'अन्यथा औ शब्भ्यामेकादेशाऽभावोऽपि' ख. पाठः।
३. ग. नास्ति। क. पुस्तके कुण्डलितः, ख. पाठः।
४. इत आरभ्य १६९ पृष्ठस्थ'नादिन्या' इति प्रतीकात्पूर्वम् 'इति दिक्' इत्यन्तोऽयं ग्रन्थः ख. पाठः। क. ग. नास्ति। भट्टोजिदीक्षितकृत–प्रौढ-मनोरमायामपि दृश्यतेऽयं पाठः।

(६।४।८२) इति, 'ओः सुपि' (६।४।८३) इति च सूत्रद्वयप्रापितस्यैव तेन निषेधाच्च ।

**धात्वंश इति**—अत्र 'यणो मयः' (वा० ८।२।२३) इति रेफस्य न द्वित्वम् । 'अचो रहाभ्याम्' (८।४।४६) इति सूत्रे विशेषविहितेन निमित्तत्वेन तस्य द्वित्वं प्रति कार्यित्वबाधात् । तथा च भाष्यम्—'नेमौ रहौ कार्यिणौ । किं तर्हि ? निमित्तं द्विर्वचनस्य' इति । न चैवमपि प्रकरणे कार्यित्वबाधे मानाऽभावेन 'यणो मयः' (वा० ८।२।२३) इति दुर्वारम् । अत एव 'हर्य-नुभवः' इत्यादावनचि चेति द्वित्ववारणायाऽर्थाऽधिकार आश्रितः **कौस्तुभे** इति वाच्यम् । स्वाऽगर्भहकारघटितवाक्याऽन्तरे इवाऽन्यशास्त्रेऽपि तद्बा-धात् । किञ्च 'अयं रेफो यकारवकाराभ्यां पूर्व एवोपदिश्येत, पर एव वा यथान्यासम् । कश्चाऽत्र विशेषः ? परोपदेशेऽनुनासिकपरसवर्णद्विर्वचन-प्रतिषेधो वक्तव्यः । स्वर्नयति, कुण्डं रथेन, भद्रह्लदः । न वक्तव्यः । रेफोष्मणां सवर्णा न सन्ति । नेमौ रहौ' इति भाष्यसन्दर्भस्यैव मानत्वात् । अन्यथा वचनाऽऽरम्भे द्विर्वचनमात्रस्य निषेधेन फलभेदे प्रत्याख्यानाऽनापत्तेः । पूर्वोपदेशे 'कित्त्वप्रतिषेधो व्यलोपवचनं च' इति दोषोपन्यासवद् रेफस्य 'यणो मयः' (वा० ८।२।२३) इति द्वित्वाऽनापत्तिरूपदोषाऽनुपन्यासेन न्यून-ताऽऽपत्तेश्च । 'इको यणचि' (६।१।७७) इत्यादौ तु निमित्तत्वमिकः स्थानित्वेन न बाध्यते, 'तस्मादित्युत्तरस्य' (१।१।६७) इति निर्देशात् ।

इदं च व्यक्तिपक्षेऽप्यावश्यकम् । अन्यथा 'अकः सवर्णे' इत्येतत्पर्यालो-चनया 'श्रीशः' इत्यादिविषयकलक्षणाऽभावस्यैव कल्पनवत् संग्राहकवाक्ये इकः स्थानित्वश्रवणात् तद्विषयकलक्षणाऽभावस्यैव कल्पनं स्यात् । स्पष्टा चेयं रीतिः 'इको यणचि' (६।१।७७) इत्यत्र कैयटे इत्याहुः ।

**लाकृतिरिति**—अत्र यण्-तत्प्राग्वर्त्तियर्द्वित्वप्रयुक्तरूपभेदो नाऽस्ति । तदुक्तम्—'लाकृतिरिति त्वेकमेव' इति । अत्र यथा 'लण्'सूत्रस्थभाष्य-विरोधो न भवति, तथा 'गम्लृ'शब्दे उपपादयिष्यते । न च वकाराऽऽ-पत्तिरिति वाच्यम् । तस्य समुदितस्थानत्वेन दन्त्यत्वाऽभावात् । अन्यूनाऽ नतिरिक्तस्थानिकाऽऽदेशलाभेनाऽधिकस्थानस्याऽप्रवृत्तेश्चेत्यलम् ।

नन्वनेन यणादिविधौ तेषां यण्संज्ञा=यण्पदशक्तिग्रहः। अविद्यमाने शक्तिग्रहाऽसम्भवात्। संज्ञया च यण्विधिरित्यन्योन्याश्रयादस्य वाक्यार्थो दुर्वचः। यण्शब्द एव वाऽऽदेशः स्यात्। यण्संज्ञाविधानं तु 'संयोगादेरातो धातोर्यण्वतः' (८।२।४३) इत्यादावनुवादे चरितार्थम्। अतो न भाविसंज्ञाविज्ञानम्। 'इग्यणः' (१।१।४५) इत्यादौ तु सामर्थ्यात् तत्कल्पनम्।

न चाऽयमन्योन्याश्रयो न वर्णैकत्वमते। तन्मते नित्यतया वर्णानाम्, शास्त्रस्य साधुत्वाऽन्वाख्यानपरत्वेनाऽन्योन्याश्रयाऽभावात्। तस्मादनन्ता वर्णाः, अनित्याः व्याकरणनिष्पाद्याः, इति मतेऽयं वाच्यः। तत्राऽनुवादविषयाणां सर्वेषां शक्तिग्रहकालेऽस्मदादीनामनुपस्थितेस्तत्राऽपि शक्तिग्रहाऽसम्भवेन, शक्तिग्रहकालाऽनुपस्थित-स्त्यानादौ नत्वाऽनापत्तिरिति तेषु सर्वेषु सामान्यलक्षणप्रत्यासत्त्या शक्तिग्रहो वाच्यः, देशान्तरस्थाऽसन्निहितगोव्यक्तिष्विव। सामान्यलक्षणाऽनभ्युपगमे—जातौ शक्तिग्रहात्, शक्त्यनुभव-पदार्थस्मरण-वाक्यार्थबोधानां समानप्रकारकत्वेनैव कार्यकारणभावाद् वाऽतिप्रसङ्गभङ्गोऽभ्युपेयः। एवं चाऽसन्निहितयण्स्विव भावियण्स्वपि तथैव न दोषः, भाविगोव्यक्तिष्विवेति वाच्यम्।

एवमप्यसतीनां व्यक्तीनां तया संज्ञया व्यवहाराऽनुपपत्त्याऽन्योन्याश्रयः। अनेन विधानोत्तरं संज्ञया व्यवहारः, संज्ञाकरणकव्यवहारेण च 'इकः स्थानेऽयं प्रयोक्तव्यः' इत्येवंरूपेण विधानमिति—वाक्यार्थो दुर्वचः।

'सतामादैचां संज्ञया भाव्यम्' इति भाष्ये संज्ञयेत्यस्य-संज्ञाकरणकव्यवहारेणेत्यर्थः। अनुत्पन्नगवादेः संज्ञया व्यवहाराऽदर्शनादिति चेन्न।

'सिद्धन्तु नित्यशब्दत्वात्' इति न्यायेन समाधानात्। कार्यवादेऽपि भाविसंज्ञाविज्ञानान्न दोषः। न चाऽनुवादे संज्ञाशास्त्रस्य चारितार्थ्येन तदाश्रयणे मानाऽभावः। अत्र संज्ञासूत्रोपस्थितिबाधकल्पनाऽपेक्षया भावि-

१. संयोगादेरातोधातोरित्यनेनेति भावः।

संज्ञाविज्ञानस्यैवौचित्यात्। अत्र भाष्ये तदनुवितस्तु पक्षान्तरेणाऽपि परिहारसम्भवात्। 'इग्यणः' (१।१।४५) इत्यादौ 'यणः स्थाने' इति व्यवहारदर्शनेन कार्यवादे एव, शास्त्रज्ञानसापेक्षतयैव वा तत्सूत्रसङ्गतिरिति मत्वा, तत्र तेन समाधिरुक्तः—'वृद्धिविपरिणाममात्रं स्थान्यादेशभावः' इति। अस्याऽपि नित्यशब्दवादे, शास्त्रजज्ञाननिरपेक्षतया च प्रवृत्तिरिति-समाधिस्तत्र 'अथवा' इतिग्रन्थेनोक्तः। तत्रापि 'तद्भावितस्यैव संज्ञा' इति पक्षे तु शास्त्रज्ञानसापेक्षतया भाविसंज्ञाविज्ञानेनैव समाधिर्बोध्य इति दिक् ]।

**नादिन्या** (८।४।४८)—'यरोऽनुनासिके' (८।५।४५) इत्यतो 'यरः' इत्यनुवर्त्तते। वृत्तौ 'पुत्रशब्दस्य' इत्यवयवषष्ठी। 'आदिनी' इति च प्राधान्याद् यर एव विशेषणम्।

एतेन—'पुत्रादिनीत्यादावुभयत आश्रयणेनाऽऽदिवद्भावात् पुत्रशब्दस्याऽऽदिनीशब्दपरत्वं दुर्लभम्' इत्यपास्तम्। ([1]एवं च 'पुत्र्यादिनी' इत्यत्र लिङ्गविशिष्टपरिभाषया प्राप्तोऽपि तकारस्य द्वित्वनिषेधो न। 'पुत्रादिनी' इत्यत्रैकरेफमात्रव्यवधाने चारितार्थ्येन, रेफयकारोभयव्यवधाने प्रवृत्तौ मानाऽभावात्। न चाऽत्रापि सवर्णदीर्घस्य 'अचः परस्मिन्' (१।१।५७) इति स्थानिवत्त्वाद् द्वाभ्यां व्यवधानम्। 'यस्य' (६।४।१८४) इति लोपस्य स्थानिवत्त्वेन तस्य तुल्यत्वात्। 'द्विर्वचने' (१।१।५९) इति,'पूर्वत्राऽसिद्धीय' (वा० ६।१।३) इति वा तन्निषेधाच्च। रेफयकारयोस्तु द्वित्वप्राप्तिरेव नास्तीति बोध्यम्)।

[2]**आक्रोशो**—निन्द्यकर्माऽऽरोपः। इदं च सूत्रं स्त्रियामेव प्रवर्त्तते। ई[3]दृशाऽऽक्रोशस्य प्रायः स्त्रीष्वेव दर्शनात्। भाष्ये तथैवोदाहरणाच्च।

---

१. क. ग. नास्ति। ख. पाठः। २. 'आक्रोशो निन्दा'—ख. पाठः।

३. इत आरभ्य 'तथैवोदाहरणाच्च' इत्यन्तः क. ग. पाठः। ख. नास्ति।

('अचो[1] रहाभ्यां द्वे' (८।४।४६) 'नाऽचि च' 'आदिन्याक्रोशे पुत्रस्य' इति वक्तव्ये नञ्द्वयोपादानेन वैयर्थ्यशङ्कायुक्तोत्तर-नञ्घटितवाक्यस्य नादिनीत्यस्याऽनित्यत्वकल्पनात् । न च स्त्रीप्रत्ययान्त एवाऽप्रवृत्तिरस्त्विति वाच्यम् । उदाहरणपरभाष्यविरोधाऽऽपत्तेः) । तद् ध्वनयन्नाह—**पुत्रा-दिनीति** ।

केचित्तु आदिनीति ङ्यन्ताऽनुकरणं लुप्तसप्तमीकमित्याहुः । अत एव 'तत्परे च' (वा० ८।४।४८) इत्यस्याऽऽदिनीशब्दो यस्मात् परस्तत्र परे, इति **हरदत्तो** व्याख्यानमकृत । 'अद्'धातौ **माधव**स्वरसोऽप्येवमेव । अत्र[2] मूलेऽपि क्वचित्—'आदिनीशब्दे परे' इत्येव पाठो दृश्यते । नञ्द्वयोपादा-नन्तु स्पष्टार्थमेव । एतत्सूत्रसाहचर्यादत्रोपसङ्ख्यातत्वाच्च 'वा हत' (वा० ८।४।४८) इति वार्त्तिकमपि स्त्रियामेव । तदाह—**पुत्रहतीति** । अत एव 'अनचि च' (८।४।४७) इत्यनेन सिद्धे 'वा हत' (वा० ८।४।४७) इति चरितार्थम् । 'पु[3]त्रस्य क्तान्ते चेद्धतजग्धयोरेव, आक्रोशे एव' इति नियमार्थत्वात् ।

**संयुक्तेष्विति**—'त्रिप्रभृतिषु' (८।४।५०) इति सूत्रे परस्परसाहचर्याद् वर्णानां सजातीयानामेव ग्रहणम् । न च तथाऽचः सम्भवन्ति । अत एव 'अचोरहाभ्याम्' (८।४।४६) इति सूत्रं सार्थकमिति भावः । निर्धारणे सप्तमी । 'अचः' इत्यनुवर्त्तते । तेन[4] त्रिप्रभृतिसंयुक्तवर्णमध्येऽचः परस्य यरो द्वे वा न स्त इत्यर्थः । तेनेन्द्रः, राष्ट्रमित्यत्र नकार-षकारयोरेव प्राप्तद्वि-त्वस्य निषेधविकल्पः । स्पष्टं चेदं **हरदत्त**ग्रन्थे ।

न च 'अनचि च' (८।४।४७) इत्येव विकल्पे सिद्धे 'त्रिप्रभृतिषु' (८।४।५०) इत्यादिसूत्रत्रयं व्यर्थमिति वाच्यम् । विकल्पस्यैव मतभेदप्राप्तव्य-वस्थाबोधनार्थत्वात् ।

---

१. ख. पाठः । क. ग. नास्ति ।

२. 'अत्र मूलेऽपि क्वचित्' इति ख. नास्ति । क. ग. पाठः ।

३. 'नियमार्थत्वात्' इत्यन्तः क. ग पाठः । ख. पुस्तके तु 'पुत्रस्य क्तान्ते चेद्धतजग्धयोरेव' इति नियमार्थमित्येके । 'आक्रोश एव' इति नियमार्थ-मिति कश्चित् ।'—इति पाठः ।

४. इत आरभ्य 'इत्यर्थः' इत्यन्तोऽयं क. ग. पाठः । ख. नास्ति ।

एतेन 'शाकटायनग्रहणाऽनुवृत्त्यैव सिद्धावुत्तरसूत्रयोः शाकल्यादिग्रहणं व्यर्थम्' इत्यपास्तमिति सूत्राऽऽशयः। (इदमेव ध्वनयितुमनचीति सूत्रे 'वा'ग्रहणानुवृत्तिर्दर्शिता 'नाज्झलौ' (१।१।१०) इति सूत्रे भाष्यादौ। तेन ह्यस्य सूत्रत्रयस्याऽनावश्यकता ध्वनिता)।

(यत्तु[२] 'दीर्घादाचार्याणाम्' (८।४।५२) इत्यत्राऽऽचार्यग्रहणं पूजार्थम्। 'नित्य एव निषेधो दीर्घात् परः' इति। तन्न। 'वाक्' 'वाक्क्' इति भाष्योदाहरणविरोधाऽऽपत्तेः। न चाऽत्राऽनचीत्यनुवर्त्य पर्युदासपरतया 'हलि' इत्यर्थाद्धलि पर एव नित्यनिषेध इति वाच्यम्। 'सर्वत्र शाकल्यस्य' (८।४।५१) इतिवदस्यापि प्रपञ्चाऽर्थतयैवोपपत्तौ, **माधवादिविरुद्धक्लिष्टशब्दाऽधिकाराऽऽश्रयणे** मानाऽभावात्। 'आस्ते' इत्यत्र 'स'द्वित्वविकल्पस्य **माधवेना**ऽङ्गीकृतत्वात्। पूजाऽर्थतायाः प्रामाणिकैरनुक्तेश्च। 'त्रिप्रभृतिषु' (८।४।५०) इत्यत्र शाकटायनग्रहणस्याऽपि तथात्वापत्तौ 'संस्कर्त्ता' इत्यत्र त्रिसकारपरकैयटादिग्रन्थविरोधाच्च।

यत्तु 'नाऽऽदिनी' (८।४।४८)इत्यादौ वृत्तावनचीत्यादिप्राप्तिमुद्भाव्य, 'त्रिप्रभृतिषु' (८।४।५०) 'सर्वत्र' (८।४।५१) इत्यनयोः प्राप्तिमनुद्भाव्य, पुनः 'दीर्घाद्' (८।४।५२) इत्यत्राऽनचीति प्राप्तिरुद्भाविता **हरदत्तेन**। तस्याऽयमाशयः—निषेधविकल्पे प्राप्त्युद्भावनं नाऽऽवश्यकम्, तद्विकल्पे विधिविकल्पस्य फलितत्वेन विधेरेवाऽप्राप्तविषयविकल्पसम्भवात्। नित्यनिषेधे तु तदुद्भावनमावश्यकमिति। तन्न।

विकल्पेऽपि निषेधप्रकरणान्नञुल्लेखस्याऽऽवश्यकत्वे प्राप्त्युद्भावनस्याऽऽवश्यकत्वात्। 'मध्येऽसम्बन्धः, मण्डूकाऽनुवृत्तिरग्रे' इत्यत्र मानाऽभावाच्च। 'सर्वत्र' (८।४।५१) इति सूत्रस्य द्वित्वमात्रनिषेधकतेति बोधयितुं तदनुल्लेखाच्च। त्रिप्रभृतिष्वित्येतद्विषये नकारषकारयोर्द्विर्वचनाऽभावः, इति मिश्रग्रन्थेन प्राप्त्युल्लेखस्य कृतप्रायत्वाच्च। **वृत्ति-हरदत्तयोः** 'नादिनि' (८।४।४८) 'शरोचि' (८।४।४९) इत्यनयोरपि बहुषु पुस्तकेषु प्राप्त्युल्लेखस्याऽनुपलभ्यमानत्वाच्चेत्यलम्)।

---

१. अयं पाठः क. कुण्डलितः। ख. ग. नास्त्येव।

२. क. कुण्डलितः ख. पाठः। ग तु नास्ति।

**अचो रहा**[1] (८।४।४६)— 'अचः' इति श्रुतत्वाद् रहाभ्यां सम्बध्यते।

'गु[2]णः कृताऽऽत्मसंस्कारः' इति न्यायाच्च। 'विधौ परिभाषोपतिष्ठते' (प० १०३) इत्यस्याऽनित्यत्वात्, उक्तन्यायाच्च 'तस्मादित्युत्तरस्य' (१।१।६७) इत्यस्याऽच इत्यंशेऽप्युपस्थितिः। तदाह—**अचः पराभ्यामिति**।

**वा यमीति**—'झयो हः' (८।४।६२) इत्यतोऽन्यतरस्यामित्यनुवृत्तेः। भा[3]ष्यसम्मताऽष्टाध्यायीपाठे तु 'वाऽवसाने' (८।४।५६) इत्यतोऽनुवृत्तिर्बोध्या।

अत्र च ज्ञापकं ग्राहकसूत्रस्थाऽण्ग्रहणम्। तद्धि 'सँय्यन्ता' इत्यादावनुनासिकयादीनां द्वित्वार्थम्। लोपस्य नित्यत्वे व्यर्थमेव स्यात्। यद्यपि गुणानामभेदकत्वेनैव साऽनुनासिकानां द्वित्वसिद्धेरज्ग्रहणमेव कर्त्तुम् युक्तम्, त[4]थाऽपि यण्विषये गुणभेदकत्वमेवेति ज्ञापयितुमण्ग्रहणम्। नह्येकेनैकमेव ज्ञाप्यमिति नियमः। अण्ग्रहणप्रत्याख्यातृवार्त्तिकमते तु व्याख्यानादेव तदनुवृत्तिः। स्पष्टं च 'लण्' इति सूत्रे भाष्ये वैकल्पिकत्वमुक्तम्।

**आदित्य** इति— 'आदित्य'शब्दाद् देवताऽर्थे ण्यः। 'यस्येति च'

---

१. 'अचो रहा' (८।४।४६)-अचः परस्य रेफहकाराभ्यां परस्य यरः, इति वाच्योऽर्थः। न च पृथक् निमित्तता स्यादिति वाच्यम्। चकाराऽभावेन, स्पष्टप्रतिपत्तये 'अचो द्वेऽनचि रहाभ्याम्' इत्येव न्यासे कर्त्तव्ये—ईदृशन्यासेन (च), तदभावकल्पनात्। तत्र अणुरपीति न्यायेन विधेयसन्निहितत्वेन 'रहाभ्याम्' इत्यत्रैव निर्दिष्टांऽशाऽबाधः। 'अचः' इत्यंशे तु सामर्थ्यात् तद्बाधः। व्यवधानञ्चोपस्थितरेफहकारकृतमेव गृह्यते, नाऽन्यकृतम्। तदेतद् फलितमाह–अचः पराभ्यामिति। एतेनाऽनुवादे परिभाषाणामनुपस्थितेरिदमनुपपन्नमिति परास्तम्।'–इति ख. पाठः, क. ग. पाठस्थाने।
२. ख. पाठस्थाने क. ग. पाठोऽयम्।
३. इत आरभ्य 'अनुवृत्तिर्बोध्या' इत्यन्तः पाठः ख. नास्ति। क. ग. पाठः।
४. 'तथापि गुणा भेदकाः, इति पक्षमपि ज्ञापयितुं' ख. पाठः।

(६।४।१८४) इत्यल्लोपेऽनेन यलोपः 'आपत्यस्य' (६।४।१५१) इति तु न। भवाद्यर्थण्यप्रत्ययान्ताण्ये तदप्राप्तेः।[1]

[2]**यथासङ्ख्येति**—स्थानाख्यप्रमाणेनेत्यर्थः। हल इति किम्? शय्या। यमामिति किम्? आध्नोत्। आर्त्नी। (आङ्पूर्वादृतेर्बाहुलकान्निप्रत्ययः।[3] धनुषः कोटी उच्येते। एतेन 'हलो यरां यरि सवर्णे लोपः' इत्येव सूत्रमस्तु, 'झरो झरि' (८।४।६५) इति च न वक्तव्यम्, इति परास्तम्। 'आर्त्तिः पीडा धनुःकोट्योः' (अ० ३।३।६८) इत्यमरे तु नकाररहितः पाठो दृश्यते। 'अर्त्तिः' इति तत्र पाठान्तरम्)। यमीति किम्? रामाभ्याम्।

**एचोऽय**(६।१।७८)—'इचोऽचि यणयवायावः' इति सूत्रयितुमुचितम्। न च 'हूहूयति' 'तोष्टूयते' इत्यादौ 'वान्तो यि' (६।१।७९) इति यणादेश-प्रसङ्गः 'वान्तौ यि प्रत्यये' इति न्यासेन वारणात्। 'एकवान्तसाहचर्या-दपरोऽपि मुख्यवान्त एव गृह्यते, इति नोक्ताऽतिप्रसङ्गः' इत्यपरे। 'स्वल्प-क्लेशोच्चारणयुक्तकण्ठ्य-तालव्यादेः स्वल्पक्लेशोच्चारणयुक्तः सः। अधिक-क्लेशोच्चारणयुक्तस्याऽधिकक्लेशोच्चारणयुक्तः' इति स्थानेऽन्तरतम (१।१।५०)परिभाषयैव निर्वाहः। एतदेव ध्वनयितुं यथासङ्ख्य (१।३।१०) सूत्रं नोपन्यस्तम्। **क्रमादिति** तु फलितार्थकथनं बोध्यम्। उदात्तगुण-युक्तानामनुदात्तादिगुणयुक्तव्यावृत्त्यर्थं स्थानेऽन्तरतमपरिभाषाया आवश्य-कत्वाच्च।

**तस्य लोपः** (१।३।९)—'उपदेशेऽज्' (१।३।२) इत्यत इदित्यनुवृत्त्या, विभक्तिविपरिणामेन च सिद्धौ 'तस्य'ग्रहणं सर्वलोपार्थम्। तेन, ञिटुडू-नामन्त्यस्य लोपो न। 'नाऽनर्थके' (प० १०६) इति परिभाषा तु 'अलो-न्त्यात्' (१।१।६५) इति सूत्रे भाष्ये प्रत्याख्यातैवेति दिक्।

**वान्तो (यि)** (६।१।७९)—'येन विधिः' (१।१।७२) इत्यस्याऽपवाद-भूतया, वाचनिक्या, 'यस्मिन्विधिस्तदादावल्ग्रहणे' (प० ३३) इति परि-

---

१. 'तदप्राप्तेश्च' ख. पाठः।
२. 'यथासङ्ख्येति स्थानाख्यप्रमाणेनेत्यर्थः' इति पाठः। ग. नास्ति।
३. क. पुस्तके कुण्डलितः ख. पाठः। ग. तु नास्त्येव।

भाषया लभ्यमर्थमाह—**यकारादाविति**। ('यान्ते'[1]इत्यर्थे तु गव्यूत्यादिभ्यो लिटि, आमि, अतो लोपे, 'गव्याञ्चकार' इत्यादावेव स्यात्। न च 'अचः परस्मिन्' (१।१।५७) इति स्थानिवद्भावः। 'येन विधिस्तदन्तस्य' (१।१।७२) इति सूत्रप्रवृत्तिसामर्थ्येन श्रुतिकृत-यान्तस्यैव ग्रहणात्। अत एव 'ढकि लोपः' (४।१।१३३) इत्यत्र ढक्कल्पनं सङ्गच्छते। अन्यथा (प[2] ?) ढकोऽभावे निर्दिष्टपरिभाषा(प० १२)बाधे 'गाङ्गेय-पितृष्वसा' इत्यादौ लोपाऽऽपत्तिरित्याहुः)। **ओदौतोरिति**–वान्तज्ञानाय पूर्वसूत्रपर्यालोचनस्याऽऽवश्यकतया तत्र तौ प्रति निर्णीतयोरेव स्थानिनोर्ग्रहणादितिभावः।

भा[3]ष्ये तु यथास्थितसूत्रन्यासे 'ओदौतोरिति वक्तव्यम्' इति वचनमेवाऽऽश्रितम्। उक्तयुक्तिस्तु शिथिलैव। सूत्रपर्यालोचनेऽपि तदीयलक्ष्यसंस्कारकवाक्यार्थपर्यालोचने मानाऽभावात्। अन्तरतमपरिभाषासहकारेण हि तत्र तयोः स्थानित्वनिर्णयः। ततः प्राक् झटित्युपस्थितेनैच इत्यनेन वाक्यार्थबोधे बाधकाऽभावात्। न च पश्चादन्तरतमपरिभाषापर्यालोचनया एकारैकारयोस्त्यागः। सप्तम्यन्तपाठस्याऽभावात्। एतदेवाऽभिप्रेत्य 'पूर्वत्र स्थानिविशेषलाभो यथासङ्ख्यसम्बन्धात्'इह तु निमित्ताऽभावात् तल्लाभाऽभावः' इति कैयटेन षष्ठे उक्तम्। न चाऽचीत्यनुवर्त्य 'अचि परतो यादृशो वान्त आदेशः पूर्वं दृष्टस्तादृशो यि प्रत्यये भवति' इति सूत्रार्थः। ओस्थानिकश्च अव्, औस्थानिकश्च आव्, तत्र दृष्ट इति वाच्यम्। वाच्यवृत्त्येदृशाऽर्थाऽलाभात्। 'यि प्रत्यये' इति दृष्टवाचीत्यस्य निवृत्तिश्चेति दिक्। **गव्यमिति**। भत्वाद् वलोपो न। वान्तः किम्। रैयति। 'यी'ति किम् ? गोभ्याम्। प्रत्यये किम् ? गोयानम्।

**गोर्यूताविति** (वा० ६।१।७९)—न च 'अप्रत्ययचकारादौ चेद् यूनावेव' इति नियमाद् 'गोयानम्' इत्यादिव्यावृत्तौ व्यर्थं सूत्रे प्रत्ययग्रहणमिति।

---

१. क. ग. नास्ति। ख. पाठः।

२. 'अन्यथाऽत्र ढकोऽभावे' इति, 'अन्यथा पितृष्वसुर्ढकोऽभावे' इति वा अत्र पाठः स्यात्।

३. इत आरभ्य 'निवृत्तिश्चेति दिक्' इत्यन्तोऽयं क. ग. पाठः। ख. नास्ति।

वाच्यम् । 'यूतौ चेद् गोशब्दस्यैव,' 'गोशब्दस्य चेद् यूतावेव' इति वा विपरीतनियमस्याऽपि सम्भवात् ।

ननु 'गव्यूतिः' इत्यत्र वस्य 'हलि सर्वेषाम्' (८।३।२२) इति, 'लोपः शाकल्यस्य' (८।३।१९) इति वा लोपः स्यादत आह—**वान्त इत्यत्रेति**—न च विशेषविहितेन कार्यित्वेन निमित्तत्वबाधाद् वकारे 'लोपो व्योः' (६।१।६६) इति दुर्लभमिति वाच्यम्[1] । निमित्तत्वाऽनाक्रान्ते विषये कार्यित्वस्य प्रकृते एव चारितार्थ्यात् ।

एवं च 'यादौ प्रत्यये श्रूयमाणवकारान्त आदेशः' इत्यर्थः । तत्र यद्यपि सूत्रविषये नाऽस्य फलम् । प्रत्ययेऽस्य प्रवृत्तेः । स हि द्विविधः—कृत्, तद्धितो वा । उभयथाऽपि पूर्वस्य पदत्वाऽभावः । आद्ये तदप्राप्तेः, द्वितीये भत्वेन बाधात् । 'गो'शब्दादिभ्यः क्यचि तु 'नः क्ये' (१।४।१५) इति नियमात् पूर्वस्य पदत्वमेव न । तथापि वार्त्तिके तदनुवृत्त्या तत्र फलमिति भावः । एवं तर्हि वार्त्तिक एव प्रश्लेषोऽस्तु, लाघवादित्याशयेनाह—**छकाराद्** वेति ।

न च 'लोपो व्योः' (६।१।६६) इति सूत्रे वकारस्य भगवता प्रत्याख्याततत्वेन कथमत्र वलोपः । लौकिकोदाहरणाऽभावेन तदर्थतया प्रत्याख्यानेऽपि, शास्त्रीयसौत्रप्रयोगाऽर्थन्वे बाधकाऽभावात् । अत एव 'अतो ऌान्तस्य' (७।२।२) इति 'लुप्तनिर्दिष्टो वकारः' 'इको गुणवृद्धी' (१।१।३) इत्यत्र भाष्ये उक्तम् । न चैवं 'विष्णवे' इत्यादौ 'तस्य लोपः' (१।३।९) इति लोपो दुर्वारः, उच्चारणस्य 'गव्यूतिः, नाव्यम्' इत्यादौ चारितार्थ्यादिति वाच्यम् । 'गवि च युक्ते' (वा० ६।३।४६) 'यतोऽनावः' (६।१।२१३) इत्यादिनिर्देशैर्वारणात् । 'इति यवयोर्लोपो न' इत्यत्र वकारग्रहणन्तु वार्त्तिके प्रश्लेषपक्षे आवंशे उपायाऽन्तरपरतया योज्यम् ।

**केचित्तु**—'वान्तो यि' (६।१।७९) इति सूत्रे वान्तग्रहणं व्यर्थम् । न च तदभावे 'चेयम्' इत्यादावतिप्रसङ्गः । 'क्षय्यजय्यौ' (६।१।८१) इति योगं विभज्य, 'कण्ठ्यतालव्यस्य चेत् क्षिज्योरेव' इति नियमेनाऽदोषात् ।

१. इतोऽग्रे 'सर्वत्रैव निमित्तत्वबाधाऽऽपत्तौ रलीति वक्तव्ये वलीत्यस्य वैयर्थ्यात्' ।—इति ख. पाठः ।

'क्षिज्योः शक्यार्थे एव' इति द्वितीयसूत्रार्थः । एवञ्च[1] ओदौतोः स्थानित्वलाभाय न यत्न आस्थेयो भवति । एवञ्च तद्योगविभागेनान्यत्राऽपि विधानार्थम् । तेन 'गव्यूतिः' इतिसिद्धेर्वार्त्तिकं नाऽपूर्वम् । य[2]कारांशे हल्रूपेऽशि 'हलिसर्वेषाम्' (८।३।२२) इत्यस्यैव प्रवृत्तेर्यकारसाहचर्याद् वस्याऽव्यज्रूपेऽश्येव 'लोपः शाकल्यस्य' (८।३।१९) इत्यस्य प्रवृत्तिरितिनाऽत्र तत्प्रवृत्तिः । एवं भोसादिसाहचर्याद् 'हलि सर्वेषाम्' (८।३।२२) इत्यस्याऽपि एचोऽयवादिसम्बन्धि-विषयेऽप्रवृत्तेर्न दोष इत्याहुः ।

**धातोस्त (६।१।८०)**—अत्र 'धातु'ग्रहणाऽभावे यद्यपि 'यि प्रत्यये चेत् तर्हि तन्निमित्तस्यैव' इति सामान्यनियमो नाऽऽपादनाऽर्हः, तथा सति योगविभागैवकारवैयर्थ्याऽऽपत्तेः । विशिष्टविषयविधिनाऽपि तत्फललाभात् । तथापि प्रातिपदिकमात्रविषयो नियमः सम्भाव्येत । तथा च 'बाभ्रव्य' इत्यत्रैव स्यात् । 'गव्यम्'इत्यत्र न स्यात् । 'औयत' इत्यत्र च स्यात् । अतो धातुग्रहणम् । 'एव'कारस्त्विष्टतोऽवधारणाऽर्थः । अन्यथा 'तन्निमित्तस्य चेद्धातोरेव इत्यपि नियमः सम्भाव्येत । तथा च 'बाभ्रव्य' इत्यत्र न स्यात् । धातोस्त्वतन्निमित्तस्याऽपि स्यात्—'औयत' इत्यादाविति बोध्यम् ।

[4]केचितु—'अयं निय[5]मो धातुप्रत्ययविषय एव । 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' (प० ९०) इति परिभाषणात् । तेन 'भू'धातोः क्विपि 'भुवे हितम्' इत्यर्थे 'उगवादिभ्यो यत्' (५।१।२) इति यति न वान्तादेशः, यद्यभिधानमस्ति' इत्याहुः । **लव्यमिति**—लुनातेरचो यत् । 'सार्वधातुकार्द्ध' (७।३।८४) इति गुणः ।

**लाव्यमिति**—'ओरावश्यके' (३।१।१२५) इति ण्यत् । उभयत्राऽपि गुणवृद्ध्योर्यत्-ण्यन्निमित्तत्वेन यादिप्रत्ययनिमित्तत्वमेवेति बोध्यम् । **तन्निमित्त-**

---

१. इत आरभ्य 'यत्न आस्थेयो भवति' इत्यन्तः क. ग. पाठः ख. नास्ति ।
२. इत आरभ्य 'हलि सर्वेषामित्यस्यैव प्रवृत्तेः' इत्यन्तः क. ग. पाठः । ख. नास्ति ।
३. इत्यस्याऽपि 'एचोऽयवा'दिसूत्रविहितसम्बन्धि-य-व-विषये' इति ख. पाठः ।
४. 'केचित्तु' इति ख. नास्ति । ५. 'अयं च नियमो' ख. पाठः ।

**स्येति किमिति**--सूत्रमेव किमर्थमिति प्रश्नः[1]।

**ओयते** इति—'वेञ्'धातोः कर्मणि लटि, यकि, यजादित्वात् सम्प्रसारणे 'अकृत्सार्व' (७।४।२५) इति दीर्घे, आङा सह 'आद्गुणः' (६।१।८७)। धातूपसर्गकार्यस्याऽन्तरङ्गत्वाद् वान्तादेशे गुणो नाऽसिद्धः। इदं च 'सुट् कात्पूर्वः' (६।१।१३)। इत्यादौ तत्प्रत्याख्यानाय भाष्ये स्पष्टम्। यत्तु 'धातूपसर्गयोः कार्यमन्तरङ्गम्' इत्यस्य गृह्यमाणधातूपसर्गकार्यविषयकत्वमिति। तन्न। 'ओमाङोश्च' (६।१।९५) इति सूत्रस्थाऽऽङ्ग्रहणस्य तज्ज्ञापकतापरभाष्यविरोधात्। 'सुट् कात्पूर्वः' (६।१।१३) इत्यादिज्ञापकसिद्धे 'पूर्वं धातुः साधनेन युज्यते' इति पक्ष आह—**औयतेति**। तस्मादेव कर्मणि लङ्। आडागमे वृद्धिः। शेषं पूर्ववत्।

**क्षय्यज** (६।१।८१)–'क्षि क्षये' 'जि जये' इत्यनयोरेव ग्रहणम्, न तु'क्षीष् हिंसायाम्' 'क्षै जै क्षये' इत्यनयोः, व्याख्यानात्। अत एव 'क्षिज्योरेवैचः' इति भाष्ये ह्रस्वनिर्देशः। तद् ध्वनयन्नाह—**क्षेतुं जेतुमित्यादि**। 'अर्हे कृत्यतृचश्च' (३।३।१६९) इति कृत्यः। न चैवं तेषामशक्यार्थे 'क्षेयम्, जेयम्' इत्यादेः प्रयोगस्य सिद्धत्वात् 'शक्याऽर्थे' इत्यनर्थकम्, अशक्यार्थे क्षय्यमिति वारणेन चारितार्थ्यात्।

**तस्मै प्रेति**—क्रयाऽर्थे वस्तुनि 'क्रय्य' इति निपात्यते इत्यर्थः। ननु[2] सर्वनाम्नां प्रधानपरामर्शित्वस्यौत्सर्गिकत्वात् प्रत्ययार्थपरामर्श एवोचित इति चेन्न। यतः प्रत्ययार्थपरामर्शे यदि 'स एवाऽर्थः' इति तत्पुरुषः, तदा क्रय्यशब्दः स्वार्थे एव वर्त्तते इति 'तदर्थ' ग्रहणं व्यर्थं स्यात्। अथ 'सोऽर्थो यस्य'इति बहुव्रीहिस्तथाऽपि (शब्दे[3] शब्दस्य वृत्त्यभावात्) अनर्थकमेव तत्स्यात्[4]। तस्मात् सामर्थ्याद् गुणभूतस्याऽपि ग्रहणम्। 'चतुर्थी तदर्थार्थ' (२।१।३६) इति समासः। क्रयार्थत्वञ्च फलोप-

१. 'सूत्रमेव किमिति प्रश्नः' इति ख. पाठः।

२. 'ननु सर्वनाम्नां प्रधानपरामर्शित्वस्यौत्सर्गिकत्वात् प्रत्ययार्थपरामर्शः स्यादत आह–तस्मै प्रेति। क्रयार्थे वस्तुनि 'क्रय्य' इति निपात्यते इत्यर्थः। अय भावः—प्रत्ययार्थपरामर्शे यदि स एवार्थः' ख. पाठः।

३. क. ग. नास्ति।

४. 'तत् स्यादिति भावः। केचित्तु विनिमयो नाम' ग. पाठः।

धानरूपम्, न तु योग्यतामात्रम् । 'तदर्थे' इति विशेषणात् । तदाह–क्रेतार इति । योग्यतामात्रग्रहणे त्वव्यावर्त्तकमेतत् स्यादिति भावः ।

केचित्तु[1] विनिमयो नाम स्वीयं धान्यादि दत्त्वा परतस्तन्मूल्यग्रहणम् । तत्र–धान्यं क्रय्यम् । येनाऽन्यदीयं द्रव्यं गृह्यते तत् क्रय्यमिति यावत् । यत्र तु स्वीयं द्रव्यं दत्त्वा परकीयधान्यादिग्रहणं तत्र (धान्यं) क्रेयमिति । समानेऽपि विनिमये द्रव्ये न क्रय्यत्वं नाऽपि क्रेयत्वम् । किन्तु धान्यादावेव । शब्दशक्तिस्वभावात् । भाष्यस्वरसोऽप्येवमेव । 'क्रयणाऽर्हम्' इति मूलस्याऽप्यत्रैव तात्पर्यमित्याहुः ।

**लोपः शा** (८।३।१९)—'भोभगोअघोअपूर्वस्य' (८।३।१७) इत्यशीति चाऽनुवर्त्तते । तत्र ओकारान्तेषु 'ओतो गार्ग्यस्य' (८।३।२०) इति बाधकमित्याशयेनाह–**अवर्णपूर्वयोरिति** ।

**यवयोरिति**—यद्यपि व्योरित्यनुवर्त्तते, तथापि वर्णसमाम्नाये यकारस्य प्राक् पाठात् तत्क्रमेणैवं व्याख्यातम् । **हर एहीति** । 'ओमाङोश्च' (६।१।९५) इति पररूपं प्राप्तम् । इदं सूत्रं लघुप्रयत्ने न प्रवर्त्तते । शाकटायनमते तयोर्विधानेन शाकल्यमते तदभावात् । अवर्णेति किम् ?। हरिव् गच्छति । पदान्तयोः किम् ? । हरये ।

अशि किम् ?—वृक्षं वेतीति वृक्षवीः । क्विप् । तमाचष्टे, करोति वेति ण्यन्ताद् विच् । वृक्षव् करोति । क्विपि तूठ् स्यात् । वि[3]जिनमित्तको 'लोपो व्योः' (६।१।६६) इति लोपस्तु न । णिलोपटिलोपयोः स्थानिवत्त्वात् । प्रातिपदिकाण्णिजुत्पत्त्या पदत्वाऽभावेन 'न पदान्त' (१।१।५८) इतिनिषेधाऽप्रवृत्तेः ।

[न[4]नु विचि 'लोपो व्योः' (६।१।६६) इति वलोपाऽऽपत्तिः । न च णिलोपस्य, टिलोपस्य वा स्थानिवत्त्वम् । 'न पदान्त' (१।१।५८) इति निषेधात् । न चाऽस्य न पदत्वम् । 'सुबन्ताण्णिच्' इति हरदत्तादिमतेऽन्त-

१. 'केचित्तु' इत्यारभ्य 'तात्पर्यमित्याहुः' इत्यन्तः क. ग. पाठः ।
२. ग. नास्ति । ३. इत आरभ्य 'निषेधाऽप्रवृत्तेः' इत्यन्तः क ग. पाठः ।
४. 'संग्रहः' (१८० पृष्ठे) इत्यन्तः क. कुण्डलितोऽयं ख. ग्रन्थः । ग. नास्ति ।

र्वीत्तिसुपा पदत्वस्यैकदेशविकृत (पृ० ३७)न्यायेन वान्तेऽपि सुलभत्वात्। न च इष्ठवदित्यतिदिष्टेन भत्वेन पदत्वबाधः। णिचो लुप्तत्वात्। न च प्रत्ययलक्षणम्। णाविष्ठवदित्यनेन 'यचि भम्' (१।४।१८) इतिशास्त्रस्यैवाऽतिदेशेन तस्य वर्णाऽऽश्रयत्वात्।

भाष्यमते प्रत्ययलक्षणसूत्रस्य 'प्रत्ययस्याऽसाधारणं रूपं यत्राश्रीयते तत्रैव प्रत्ययलक्षणम्' इति नियमार्थत्वात्। अत्र[1]ाऽतृणेडित्यादाविवाऽप्राधान्येनाऽलाश्रयणेऽपि न दोषः। वार्त्तिकोक्तस्य 'अप्राधान्येनाऽलाश्रयणे विध्यर्थम्' इति विधित्वपक्षस्याऽसार्वत्रिकत्वाच्च। (का[2]र्याऽतिदेशपक्षेऽपि,—स्वादित्वमात्रविरहप्रयुक्तभत्वाऽप्राप्तिमति श्रूयमाणणिचि चरितार्थस्य, स्वादित्वाऽजादित्वविरहप्रयुक्तभत्वाऽप्राप्तिमति लुप्तणिच्यतिदेशाऽप्रवृत्तेर्न दोषः)।

न च 'अचः परस्मिन्' (१।१।५७) इत्यनेन स्थानिवत्त्वाद् भत्वं सुलभम्। णिलोप[3]स्य तेन स्थानिवत्त्ववट्टिलोपस्यापि स्थानिवत्त्वापत्तौ, वान्ते भत्वस्य दुर्लभत्वेन तेन तद्गतपदत्वाऽनिवृत्तेः। पदत्वं तु तत्रैकदेशविकृत(पृ०३७)-न्यायेनेति न दोषः। यदि तु टिलोपस्थानिवत्त्वस्य वान्तगतपदत्वसंरक्षण-द्वारा, 'न पदान्त' (१।१।५८) इति निषेधप्राप्तिद्वारा, पदान्तस्थानिकवलोप-प्रापकतया 'न पदान्त' (१।१।५८) इति निषेध इत्युच्यते तदा (अ[4]स्य) णिलोपस्थानिवद्भावस्याऽपि 'न पदान्त' (१।१।५८) इति निषेधप्रतिबन्ध-द्वारा, पदान्तस्थानिकवलोपप्रतिबन्धकतया तत्राऽपि न पदान्तेतिनिषेधो दुर्वारः। (तत्प्र[5]वृत्तेः प्राक् पदत्वसत्त्वाच्च। विधिनिषेधयोरेकवाक्यतयैवाऽनुष्ठापकत्वाऽङ्गीकारात्। निषेधविषये तदप्रवृत्तेश्च)।

'पटितः', इत्यादौ तु बहिरङ्गत्वेन टिलोपस्याऽसिद्धत्वेन न जश्त्वम्। 'अत्यरराजत्' इत्यादौ भत्वनिमित्तकोऽपि टिलोपोऽन्तरङ्गत्वाण्णिलोपात् प्रागेव। अकृतव्यूह(पृ० ५७)परिभाषा त्वनित्यत्वान्न प्रवर्त्तते। तस्या[6] असत्त्वाच्च। (अत[7] एव) टिलोपस्य बहिरङ्गाऽसिद्धत्वाच्च तत्र कुत्वमपि न। ([8]णिचि भत्वसत्त्वेन तत्र कुत्वाऽप्राप्त्या, भ्रष्टावसरन्यायेन णिलोपेऽप्य-

१. 'इत आरभ्य 'न दोषः' इत्यन्तः ख. ग. नास्ति। क. पाठः।
२. क. नास्ति।
३. इत्युच्यते तदा' इत्यन्तोऽयं क. ग. पाठः।
४. क. ग. नास्ति।
५. ख. पाठः क. ग. नास्ति।
६. क. ग. पाठः।
७. क. ग. नास्ति। ख. पाठः।

प्रवृत्तेः)—इति चेन्न[1]। कार्यातिदेशपक्षे 'णाविष्ठवद्'इत्यतिदेशस्य प्रत्ययलक्षणेन प्राप्तेः। न हि तत्र वर्णाश्रयत्वम्। प्राधान्येन कार्याऽतिदेशस्यैव युक्तत्वात्। सुबन्ताण्णिजितिपक्षो न सूत्रभाष्यवार्त्तिकसम्मत इति चुरादौ वक्ष्यते इति प्रातिपदिकात्तदुत्पत्तौ पदत्वाऽभावाच्च।

ध्वनितं चेदं सर्वं 'न पदान्त' (१।१।५८) सूत्रे 'हरदत्तादिमते' इत्युक्त्या **मनोरमायाम्**। आदिना—शास्त्रातिदेशाश्रयणेन णिलोपे भत्वाऽनङ्गीकर्तॄणां संग्रहः]।

नन्वेवमपि 'करोति' इति 'क'निमित्तो 'लोपो व्योः' (६।१।६६) इति वलोपो दुर्वारः। न च स्थानिवत्त्वम्। 'न पदान्त' (१।१।५८) इति निषेधात्। (विजु[2]त्तरसुब्निमित्तकपदत्वस्य बहिरङ्गतयाऽसिद्धत्वेनाऽन्तरङ्गभसंज्ञया बाधाऽयोगात्। अन्तरङ्गपदत्वन्तु वचनसामर्थ्याद् बाध्यत एव)—इति चेन्न। 'न पदान्त' (१।१।५८) सूत्रे भावसाधनं विधिशब्दमाश्रित्य, चरमाऽवयववाच्यन्तशब्दमाश्रित्य, कर्मषष्ठ्या समासेन 'पदचरमावयवे कर्त्तव्ये' इत्यर्थात्। इह च विधेयो लोपो न पदचरमावयवः। 'न[3] पदान्त' (१।१।५८) सूत्रनिरूपितरीत्या परपदस्थाऽजादेशस्यैव पदान्तविधौ स्थानिवत्त्वनिषेधाच्च।

किञ्च[4] 'यः सम्प्रति पदान्तः' इति भाष्योक्तरीत्या स्थानिवत्त्वनिषेधं विनाऽस्य पदान्तत्वाऽभावादत्र निषेधाऽप्रवृत्तिः। स्थानिवत्त्वनिषेधज्ञाने पदान्तत्वज्ञानम्, तन्निर्णये च स्थानिवत्त्वाऽभावज्ञानमित्यन्योन्याश्रयो हि तत्राऽप्रवृत्तौ बीजमति बोध्यम्। (एतेन[5] 'पदान्तस्य स्थाने विधौ' इत्यर्थवर्णनं परास्तम्। अत्र वलोपाऽऽपत्तेः। न चेष्टाऽऽपत्तिः। 'वृक्षवयतेरप्रत्ययः वृक्षव् करोती'ति 'विभाषा भवद्भगवदि'ति वार्त्तिकस्थभाष्यविरोधाऽऽपत्तेः)। न च पदसंज्ञायां टिलोपस्य स्थानिवत्त्वाद् वस्य पदान्तत्वमेव

१. 'इति चेन्न। कार्याऽतिदेशपक्षे णाविष्ठवदित्येतद्विषयकप्रत्ययलक्षणोपप्लवस्य व्यक्तिपक्षे वैयर्थ्याऽऽपत्त्या प्रागुक्तकल्पनाया अयुक्तत्वात्'—इति ख. पाठः।

२. क. ग. नास्ति। ३. 'बोध्यम्' इत्यन्तोऽयं क. ग. पाठः। ख. नास्ति।

४. 'किञ्च' इति क. ग. नास्ति। ख. पाठः।

५. ख. पाठः। क. ग. नास्ति।

नास्तीति—अशीति व्यर्थमिति वाच्यम् । 'पूर्वत्राऽसिद्धीये' (वा० ८।४।१) इति निषेधात् । साक्षात् परम्परया वा पूर्वत्राऽसिद्धीयप्रापक-प्रतिबन्धकाऽतिदेशस्य तेन निषेधादित्याहुः ।

**कानि सन्तीति**—वाक्यसंस्कारपक्षे एतदुदाहरणम् । त[1]त्रापि पक्षे पूर्वोपस्थितनिमित्तकत्वरूपाऽन्तरङ्गत्वाद् यादायाऽन्तरङ्गाणां पूर्वं प्रवृत्तिसत्त्वादिकारादेः स्थानिभूतादचः पूर्वत्वं द्रष्टव्यम् । एतन्मूलकमेव वाक्यसंस्कारपक्षे श्रुतवर्णक्रमेणैव लक्ष्यसंस्कार इति वदन्ति ।

न च स्थानिवत्त्वाऽभावेऽप्यल्लोपस्य बहिरङ्गत्वादसिद्धत्वं दुर्वारम् । पदद्वयाऽऽश्रितत्वेन यणावोरेव बहिरङ्गत्वात् । ('न[2]ाऽजानन्तर्ये' (प० ५२) इति निषेधाच्च) ।

**एकः पूर्वपरयोः (६।१।८४)—इत्यधिकृत्येति** । स्यादेतत् । 'एक'ग्रहणं किमर्थम् ? न च 'रदाभ्यां निष्ठातो नः' (८।२।४२) ('उ[3]भौ साभ्यासस्य') इतिवदनेकस्य स्थानित्वेन स्थानिसमसङ्ख्याकाऽऽदेशव्यावृत्त्यर्थमिति व[4]ाच्यम् ।

---

१. 'तत्रापि इत्यारभ्य 'वदन्ति' इत्यन्तोऽयं क. ग. पाठः । ख. पुस्तके तु—'वाक्यसंस्कारपक्षे एतदुदाहरणम् । नन्वेतत्पक्षेऽपि परस्परपरिहारेण लब्धाऽवकाशयोः समवस्थितयोरेकस्मिल्लँक्ष्ये युगपत्प्राप्तिरूपविरोधाऽभावेन सर्वशास्त्राणां युगपत्प्रवृत्त्या, सर्वविधिभ्यो लोपविधेर्बलवत्त्वाच्च शिभावादपि पूर्वं लोपे, इकारस्य स्थानिभूतादचः पूर्वत्वाऽभाव इति चेन्न । वाक्यसंस्कारपक्षेऽपि प्रकृतवर्णक्रमेणैव लक्ष्यसंस्कारकल्पनात् । अत्र च पदान्तग्रहणस्यैतदुदाहरणपरभाष्यमेव मानम् । 'सर्वविधिभ्य' इत्यस्यां परिभाषायां मानाऽभावाच्च । भाष्यादावपठितत्वाच्च ।'—इति पाठः ।

२. ख. पाठः । ग. नास्ति ।　　३. ख. पाठः । क. ग. नास्ति ।

४. इतोऽग्रे—'अग्नीषोमाभ्याम्' इत्यादौ द्वन्द्वोत्तरचतुर्थ्या समुदिते एकप्रदेयनिरूपितैकदेवतात्वबोधवत्, पूर्वपरयोरित्यत्र द्वन्द्वोत्तरषष्ठ्या एकविधेयनिरूपितसमुदायनिष्ठैकस्थानित्वबोधेनाऽऽदेशद्वयाऽप्राप्तेः । 'ज्वरत्वर' (६।४।२०) इत्यादौ 'उपधायाश्च' (७।१।१०१) इति चेन समुदित एव

विधेयत्वेन[1] 'गुणः' इत्यादावेकत्वसङ्ख्याया विवक्षितत्वेन, उभयोरपि पूर्वपरयोरेकवाक्यतयैव विधेयान्वयेन च, 'अनयोः पूलयोः कटं कुरु' इत्यादित इव उभयसम्बन्ध्येकविधेयस्यैव प्रतीतेः। 'रदाभ्याम्' (८।२।४२) इत्यत्र तु भिन्नविभक्तिनिर्देशाच्चकाराच्च वाक्यभेद एवेति चेत् सत्यम्। न्यायसिद्ध एवार्थः सुखप्रतिपत्त्यर्थमेकग्रहणेन सूत्रकृता दर्शित इति बोध्यम्। विस्तरस्तु भाष्यप्रदीपोद्द्योते द्रष्टव्यः।

**आद्गुणः** (६।१।८७)—न च 'अवर्णादचि पूर्वपरयोरेक आदेशः' इत्येतावतैव स्थानेऽन्तरतम(१।१।५०)परिभाषया गङ्गेशाऽऽदिनिर्वाहे, किं 'गुण'ग्रहणेनेति वाच्यम्। 'कृष्ण ऋकारः'[2] इत्यादौ द्विमात्रिकस्य सार्द्धद्विमात्रिकाऽऽरादेशव्यावृत्त्यर्थम्, उक्तोदाहरणेषु ऐकारादिव्यावृत्त्यर्थं च तत्सत्त्वात्। 'वृद्धिरेचि' (६।१।८८) इत्यादेर्वृद्धिरेच्येव' 'ऋति धातावेव' इत्यादिनियमाश्रयणेऽपि 'गङ्गौघः' इत्यादौ गुणाऽऽपत्तिः। 'वृद्धिरेवैचि'

---

स्थानित्वपर्यवसानम्। यत्रतु 'एत्येधति' (६।१।८९) इत्यादौ समुदायस्यैकनिरूपितस्थानित्वाऽसम्भवस्तत्र वाक्यभेदकल्पनयाऽगत्या प्रत्येकमादेशः। 'रदाभ्याम्' (८।२।४२) इत्यत्र तु लक्ष्याऽनुरोधाच्चकाराच्च 'पूर्वस्य च दः' इति वाक्यभेदाश्रयणान्न दोषः। 'उभौ साभ्यासस्य' (८।४।२१) इत्यत्राऽपि 'अभ्यासेन' इत्येव 'व्यवाय'पदाध्याहारेण सिद्धे, बहुव्रीहिरूपगुरुभूत-'साऽभ्यासस्य' इति निर्देशसामर्थ्यान्नद्वयस्य स्थानित्वलाभे, 'उभौ' ग्रहणसामर्थ्यादादेशद्वयसिद्धिः। विधेयत्वेन प्राधान्यात्, लक्ष्यानुसारेण, व्याख्यानाच्च 'गुणः' इत्यादावेकत्वसङ्ख्याया विवक्षितत्वाच्चेति चेत्। सत्यम्। न्यायसिद्ध एवाऽर्थः सुखप्रतिपत्त्यर्थमेकग्रहणेन सूत्रकृता दर्शित इति बोध्यम्। विस्तरस्तु भाष्यप्रदीपोद्द्योते द्रष्टव्यः। अत्र 'पूर्वपरयोः' इतीतरेतरयोगद्वन्द्वनिर्देशेन प्रत्येकं स्थानित्वमपि बोध्यम्। अत एवैकाऽऽदेशस्य ऋकारस्थानिकत्वेन रपरत्वसिद्धिः'—इति ख. पाठः।

१. 'विधेयत्वेन' इत्यारभ्य 'इति बोध्यम्' इत्यन्तोऽयं क. ग. पाठः। ख. नास्ति।

२. 'कृष्ण ऋकार इत्यादौ त्रिमात्रिकस्य' ख. पाठः।

इत्येवंविधनियमे तु गङ्गेशादौ वृद्ध्यापत्तिः उभयविधनियमाश्रयणे तु मानाऽभावः, गौरवम्, खट्वेन्द्रादौ त्रिमात्राद्यापत्तिश्च ।

**उरण्** (**रपरः**) (१।१।५१)—अनुवादे परिभाषाऽनुपस्थानेऽपि 'षष्ठी स्थाने' (१।१।४९) इत्यतः 'स्थाने' इत्यनुवृत्तिमभिप्रेत्याऽऽह—**तत्स्थाने इति**। 'स्थानेऽन्तरतमः' (१।१।५०) इति सूत्राद् द्वितीयमपि 'स्थाने'ग्रहणमनुवर्त्तते । 'प्रसङ्गाऽवस्थायाम्' इति तदर्थः । तदाह—**रपरः सन्नेवेति**।

'रपरः'[१] इति अवयववाचिना परशब्देन षष्ठ्यर्थे बहुव्रीहिः । न तु व्यवस्थावाचिना पञ्चम्यर्थे । तथा सत्यभक्तत्वाऽऽपत्तौ 'वव्रे' इत्यादौ हलादिः शेषो न स्यात् । अभ्यासावयवस्यैवाऽनादेस्तेन निवृत्तिबोधनात् । इदमेव बोधयितुमन्तशब्दानुवृत्त्या पूर्वाऽवयवत्वं बोधितं भाष्ये । किञ्चाऽनवयवत्वे ऋकारस्य गुणवृद्धी जायमाने अरारावेवेति नियमो न स्यात् । गुणशब्देन अकारादेरेव रेफपरस्यैतत्सूत्रैकवाक्यतया विधानम् । गुणत्वादिकं त्वकारादिनिष्ठमेव । तेन तु नाऽऽन्तर्यमिति स्पष्टमेव । अवयवत्वे तु 'यदागमाः' (प० ११) इति न्यायेन विशिष्टे गुणत्वमितीष्टसिद्धिः । वर्णग्रहणे क्वचिदेव तदप्रवृत्तेः ।

एतेन 'अणमनूद्य रपरत्वं विधीयते' इति परास्तम् । उक्तनियमाऽनुपपत्तेः । क्व रपरत्वं क्व लपरत्वमिति व्यवस्थाऽनुपपत्तेश्च ।

**तत्राऽऽन्तरतम्यादिति**। स्थानत इति भावः । रेफशिरस्कतयाऽऽदेशस्याऽपि मूर्द्धस्थानत्वात् । यत्तु 'वृद्धिरारालैच्' 'अरलेङ्गुणः' 'ऋत इर्'

---

१. 'रपर' इत्यारभ्य 'तत्रान्तरतम्यादिति' इत्यन्तोऽयं क. ग. पाठः । ख. पुस्तके तु-'रपरः सन्नेवेति' । ये तु अणमनूद्य रपरत्वं विदधति, तेषां 'क्व रपरत्व'मिति, 'क्व लपरत्व'मितिव्यवस्था न सिद्ध्येत् । अभक्तत्वाऽऽदिशङ्काव्यावृत्त्ये 'यस्य गुणादिशब्दैरण् विहितस्तदन्ताऽवयव' इत्यर्थकाऽन्तग्रहणाऽनुवृत्तिक्लेशश्च । मम त्वान्तरतम्येन व्यवस्थासिद्धिः । अरादिरूपेणैव विधानात् । स्थान्यवयवकाऽवयवत्वलाभश्च । तद्ध्वनयन्नाह—तत्राऽन्तरतम्यादिति'-अयं पाठः ।

'उरोष्ठ्य' इत्येव सिद्धौ 'उरण् रपरः' (१।१।५१) इति सूत्रं व्यर्थमिति। तन्न। 'आपृज्ञप्यृधामीत्' (७।४।५५) इत्यस्य रपरत्वाऽनापत्तेः। 'भृञामित्' (७।४।७६) 'ऋत उत्' (६।१।१११) इत्यादौ दोपाऽऽपत्तेश्च। ('गमुल्'इत्यादेः कपिलकाऽऽदित्वेन साधने तु पृषोदरादित्वाऽऽश्रयणेन सम्पूर्णशास्त्रस्यैव प्रत्याख्यानापत्तिः)। इति दिक्।

अत्राऽण् पूर्वेणैव, न परेण। 'उरञ्रपरः' इत्येव सिद्धेऽण्ग्रहणात्, 'प्रशास्तॄणाम्' (६।४।११) इत्यादिनिर्देशाच्च।

**पक्षे द्वित्वमिति**—ऋधेर्धस्येति भावः।

**झरो झरि**—(८।४।६५) 'हलो यमाम्' (८।४।६४) इत्यतो 'हलः' इति, 'झयो हः' (८।४।६२) इत्यतः 'अन्यतरस्याम्' इति, 'वाऽवसाने' (८।४।५६) इत्यतः 'वा' इति वाऽनुवर्त्तते। इदं च 'हयवरट्' इति सूत्रशेषे भाष्ये स्पष्टम्। 'हलो यमाम्' (८।४।६४) इत्यस्य वैकल्पिकत्वेन तद्विषये 'हर्य्यनुभवः' इत्यादौ चरितार्थम् 'अचो रहा' (८।४।४६) इति द्वित्वमिति, अस्य नित्यत्वे 'शरोऽचि' (८।४।४९) इति तन्निषेधो व्यर्थ इति—अस्याऽप्यनित्यत्वे ज्ञापकम्।

तत्सूत्रस्थमस्य ज्ञापकत्वखण्डनपरम् 'द्वित्वं लोपाऽपवादः स्यात्' इति भाष्यन्तूभयोर्लोपयोर्वैकल्पिकत्वे इदं ज्ञापकमित्यर्थखण्डनपरमिति न तद्विरोध इत्याहुः।

**लोप इति**—ऋधधातोर्झर इति भावः। **असतीति**—'द्वित्वाऽभावे' इत्यनुकृष्यते। **त्रिधमिति**—यत्तु 'द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्धम्' इत्यर्थक'पूर्वत्राऽसिद्धमद्वित्वे' (प० १२८) इत्यनेन धातुधकारस्य जश्त्वे कृते,

---

१. 'ऋत उत्' इति ग. नास्ति। २. ख. पाठः। क. ग. नास्ति।

३. 'वावसाने' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ग. पाठः। ख. पुस्तके तु-अन्यतरस्यामिति चानुवर्त्तते। इदं च नाज्झलाविति सूत्रे भाष्ये स्पष्टम्। व्याख्यानमेव चाऽत्र शरणम्। यद्यपि हलो यमामित्यत्राऽणुदित्सूत्रस्थाऽण्ग्रहणं ज्ञापकमस्ति,तथाऽपि नेह तादृक्किञ्चिदस्ति। न च शरोऽचीति निषेधोऽत्राऽपि ज्ञापकः। लोपस्य नित्यत्वेऽचो रहेति द्वित्वमारम्भसामर्थ्याल्लोपाऽपवाद इति तस्य सार्थक्यात्। लोप इति।'—इति पाठः।

दकारे द्वित्वस्योचितत्वेन, 'त्रिधम्' इति चिन्त्यमिति । तन्न । अस्य वार्त्तिकस्य परिभाषावृत्तिकृद्भिः परिभाषात्वोक्त्याऽदोषात् ।

तथा हि—'पूर्वत्राऽसिद्धम्' (८।२।१) इत्यधिकारभवशास्त्रत्वमस्या लिङ्गम् । नियामकत्वमेव च परिभाषात्वम् । नियमश्च फलविशेषायैवेति—यत्र फलाऽविशेषस्तत्र न प्रवर्त्तते । अत एव 'व्रीहीनवहन्ति' इत्यादौ दृष्टफले विशेषाऽभावान्नियमजन्याऽदृष्टं कल्पयन्ति **वाक्यार्थविदः** । (कृष्णलेषु[1] तु नाऽवघातः । दृष्टफलाऽभावात् । दृष्टद्वारैव चाऽदृष्टकल्पना । त्रिधकारकत्वन्तु प्रक्रियाऽभिप्रायेण बोध्यम्) ।

न ह्यत्र जश्त्वात् पूर्वमनन्तरं वा द्वित्वे रूपे विशेषोऽस्ति । तदनन्तरं जश्त्वप्रवृत्तेः सत्त्वात् । त्रिध[2]कारत्वन्तु प्रक्रियाऽभिप्रायेण बोध्यम् ।

(किञ्च[3] वाक्यसंस्कारपक्षे 'कृष्ण ऋध् ति' इत्यस्यामवस्थायां पूर्वं गुणः । श्रुतवर्णक्रमेण लक्ष्यसंस्कारस्योचितत्वात् । तद्दृष्ट्या धत्व-द्वित्वादीनामसिद्धत्वाच्च । ततो द्वित्वस्याऽसिद्धत्वाद् 'झषस्तथोः' (८।२।४०) इति धत्वम् । ततोऽकृतव्यूह(प० ५७)परिभाषया जश्त्वाऽप्रवृत्तौ, ततः पूर्वं द्वित्वेनाऽदोषात् । द्वित्वे ऋध्धकार–प्रत्ययधकाराऽऽगन्तूनामन्ते निवेशादसति बाधके परत्रैवेति न कश्चिद्दोषः) ।

'यणो मयः' (८।२।२३) इति लक्षणाऽन्तरेण पुनर्द्वित्वे, चतुर्द्धमपि बोध्यम् । एतदुपपत्तिरपि संस्कर्त्तेत्यत्र वक्ष्यते । **पञ्चमीति**—विनिगमकाऽभावाद् व्याख्याद्वयमित्यर्थः । अत एवेदं द्वित्वं वैकल्पिकमिति बोध्यम् ।

**वृद्धिरेचि** (६।१।८८)—नन्वस्य गुणाऽपवादत्वात्, 'एकः' (६।१।८४) इत्यधिकारादन्तरतमपरिभाषया च सिद्धे वृद्धिग्रहणं व्यर्थम् । (न[4] च पाक्षिकगुणवारणार्थम् । 'वा सुपि' (६।१।९२) इत्यत्र 'वा'ग्रहणवैयर्थ्यापत्तेः—) इति चेन्न । 'वृद्धिः' इति योगविभागार्थत्वात् । तेन 'अक्षादूहिन्याम्' (वा० ६।१।८९) इत्यादि नाऽपूर्वमित्याहुः ।

**कृष्णैकेति**—'कृष्ण' इति सम्बुद्ध्यन्तं पृथक् पदम् । एवमग्रेऽपि । एतेन

१. ख. पाठः । क. ग. नास्ति ।
२. 'बोध्यम्' इत्यन्तोऽयमिहैव क. ग. पाठः । ख. तु पूर्वत्राऽयं पाठः ।
३. ख. पाठः । क. ग. नास्ति । ४. क. ग. नास्ति । ख. पाठः ।

'पूरणगुण' (२।२।११) इति निषेधात् समासो दुर्लभ इत्यपास्तम् । गुणेन निषेधस्याऽनित्यत्वाच्च । संख्याया[1] अगुणत्वाच्च ।

**एत्ये (६।१।८९)**—'ऊठ उपघाते' इत्यस्य भ्वादावेकीयमतेन पठ्यमानस्य दीर्घाऽऽदेस्तु न ग्रहणम् । तथा[2] सति 'ऊठिषु' इत्येव स्पष्टप्रतिपत्तये वदेत् । आदेशस्य प्रसिद्धत्वाच्च । अष्टाध्यायीस्थत्वेन प्रत्यासन्नत्वाच्च ।

'एचि' इति नोठो विशेषणम्, व्याख्यानात् । सर्वस्योठस्तत्त्वाऽसम्भवात् । 'विश्वौहः' 'प्रष्ठौहः' इति 'विभाषा पूर्वाह्ण' (४।३।२४) इति सूत्रे भाष्यप्रयोगाच्च ।

(न च[3] 'आ अवति' इति औः । जनस्य और्जनौः । जनोभ्यामित्यादावत्वेः क्वावूठि,आङाऽद्गुणे परादिवत्त्वेनोठ्त्वात् सम्भवोऽस्ति । न च 'वृद्धिरेचि' (६।१।८८) इति सिद्धिः । 'ओमाङोश्च'(६।१।९५) इत्यनेन बाधादिति वाच्यम् । ओमाङोश्चेत्येतद्बाधकल्पनाऽपेक्षया सामर्थ्येन, लक्ष्यानुरोधेन च एचीत्यसम्बन्धस्यैव कल्पयितुमुचितत्वात्) । तदाह—**एजाद्योरिति** । अत एव 'एत्येधत्योः' इति योगं विभज्य, 'तयोरेवैचि' इति विशेषणं कृतं भाष्ये । 'इणीकारादौ प्रतिषेधो वक्तव्यः' इति वार्त्तिके इण्ग्रहणमुपलक्षणमिति तात्पर्यम् ।

अत्र एति-शब्देन इण एव ग्रहणम् । प्रसिद्धत्वात् । (एधतिसाहचर्येणाऽप्रश्लिष्टसानुबन्धकस्यैव[4] ग्रहणाच्च) । तेन 'वी गति' इत्यत्र प्रश्लिष्टस्य न वृद्धिरित्याहुः ।

'उपैति' इत्यादौ 'वृद्धिरेचि' (६।१।८८) इत्यनेन गतार्थत्वमाशङ्क्याह —**पररूपगुणेति** । एत्येधत्योरेङि पररूपस्य, ऊठि चाऽद्गुणस्येति विवेकः ।

---

१. 'संख्याया अगुणत्वाच्च' इति ख. नास्ति ।
२. 'तथा सति' इत्यारभ्य 'भाष्यप्रयोगाच्च' इत्यन्तः क. ग. पाठः । ख. पुस्तके त्वत्र—'दीर्घादेस्तु न ग्रहणम् । अल्पाच्तरत्वेऽप्यूठः परनिपातकरणात् । अत एवैचीति नोठो विशेषणम् । असम्भवाच्च'—इति पाठः ।
३. 'न च' इत्यारभ्य 'कल्पयितुमुचितत्वात्' इत्यन्तः क. पुस्तके कुण्डलितः, ख. पाठः । लघुशब्दरत्ने चाऽयं पाठो दृश्यते । ४. क. ग. नास्ति ।

**प्रष्ठौह** इति—प्रष्ठं वहतीत्यर्थे वहेण्वौ, ततः शसि, वाह् ऊठि, संप्रसारणपूर्वरूपेऽनेन वृद्धिः ।

**प्रेदिधदिति**—(अकृत[1]व्यूह (प. ५७)परिभाषया), वार्णादाङ्ग(प. ५६)-परिभाषया (च[2]) पूर्वं 'णौ चङि' (७।४।१) इति ह्रस्वे कृते, स्थानिवद्भावेन एध्त्वेऽपि, पूर्वपरविधित्वात्,'अच[3]: परस्मिन्' (१।१।५७) इति स्थानिवत्त्वाऽभावेनैजादित्वाऽभावादिति भावः ।

अन्यथा मध्येऽपवाद(प. ६२)न्यायेनाऽऽद्गुणं बाधित्वेहैव स्यात् । 'उपैधते' इत्यादौ तु परत्वात् पररूपमेव स्यादिति बोध्यम् । यद्यपि परशब्देन एधतेरेव ग्रहणेन सम्पूर्णस्यैकादेशः प्राप्नोति, तथाऽपि 'आदेः परस्य' (१।१।५४) इत्यादेर्बोध्यः । न चाऽयमेधयतिर्नैधतिरिति वाच्यम् । प्रकृतिभागस्य एध्रूपत्वाऽनपायात् । अत एव 'अभिषावयति' इत्यादौ सुनोतित्वप्रयुक्तषत्वं भाष्ये उक्तम् ।

[अ[4]त एवोपैधयते इत्यादौ वृद्धिः । नन्वेवमपि 'अजादेर्द्वितीयस्य' (६।१।२) इति धिशब्दस्थाने 'धि-धि'शब्दाऽऽदेशे वस्नसोरिव प्रकृतिप्रत्ययसंमोहः । एधतेरादेशाऽभावेन, अर्द्धाऽधिकविकारेण च एकदेशविकृत (प.३७)-न्यायेनाऽपि नैधतित्वं प्रत्याशेति चेन्न । षाष्ठद्वित्वे 'द्विःप्रयोगो द्विर्वचनम्' इति सिद्धान्तात् । अन्यथेहैव णिलोपो न स्यात् । न च 'णेरनिटि'(६।४।५१) इत्यस्य 'ण्यन्तस्याऽङ्गस्य लोपः' इत्यर्थः । स चाऽलोन्त्यपरिभाषयाऽन्त्यस्य । एवं च प्रकृते न दोषः । 'सर्वे सर्वपदादेशाः' इति न्यायेन 'इधि' इत्यस्य 'इधिधि'इत्यादेशसत्त्वेन, स्थानिनो ण्यन्तत्वाऽऽदेशेऽपि स्थानिवद्भावेन ण्यन्तत्वस्य सुलभत्वादिति वाच्यम् । अलोन्त्य(१।१।५२)परिभाषया, निर्दिश्यमान(प. १२)परिभाषया च 'णेरनिटि' (६।४।५१) इत्यस्य 'ण्यन्तस्याऽङ्गस्याऽन्त्यो यो निर्दिश्यमानो णिस्तस्य लोपः' इत्यर्थस्य सत्त्वेन 'आद्यात्' इत्यादौ सूत्रस्य चारितार्थ्येनाऽत्र तदप्राप्तेः । अन्ते णेर[5]सत्त्वात् । अ[6]र्थवद्ग्रहण(प. १४)परिभाषा त्वनित्यत्वान्न प्रवर्त्तत इति बोध्यम् ।

१. ख. पाठः । क. ग. नास्ति । २. चकारः क. ग. नास्ति ।
३. 'अचः परस्मिन्निति' इति क. ग. पाठः । ख. नास्ति ।
४. क. कुण्डलितः ख. पाठः । ग. नास्ति ।
५. 'अन्ते णिचोऽसत्त्वात्' ख. पाठः ।
६. 'इति बोध्यम्' इत्यन्तोऽयं क. नास्ति ।

तथा–'जिघांसति' इत्यादौ सन्सकारविशिष्टस्य द्वित्वे कृते कुत्वं न स्यात्। हन्त्यवयवहकाराऽभावात्। न चाऽल्पपदार्थाऽपेक्षत्वेनाऽन्तरङ्गत्वान्नित्यत्वाच्च द्वित्वे, 'णौ चङि' (७।४।१) इति ह्रस्वो दुर्लभः। ओणेर्ऋदित्करणेन बहिरङ्गस्यापि णौ चङीत्यस्य प्रथमं प्रवृत्तिज्ञापनात्। ध्वनितं चेदं षष्ठस्य प्रथमाह्निके भाष्ये]।

नन्वेजाद्योरिति व्यर्थम्, 'उपेतः' 'प्रेदिधत्' इत्यत्र निर्दिश्यमानपरिभाषयैव वृद्धिवारणात्। तथाहि–'अवर्णाद् एत्येधत्योः पूर्वस्य, परस्य च निर्दिश्यमानयोरन्त्याद्योर्वृद्धिः' इति सूत्रार्थः। तत्र निर्दिश्यमान एकार एव, न त्विकार इति न तत्र दोषः। अत एव 'पचेयुः' इत्यादौ 'पच-इयुः' इति स्थिते 'उस्यपदान्तात्' (६।१।९६) इति न। अन्यथा 'यदागमाः' (प. ११) इति न्यायेनेयुस उस्त्वेन तद् दुर्वारं स्यात्। मम त्विकारस्याऽनिर्दिश्यमानत्वान्न दोष इति चेन्न। निर्दिश्यमानस्येत्यस्य यतः षष्ठी उच्चारिता तस्य ग्रहणमित्यर्थः। 'आदचि' इत्यत्र च न षष्ठी। 'पूर्वपरयोः इति षष्ठी तु पूर्वपरशब्दाभ्याम्। तयोस्तु न ग्रहणमिष्टम्। तदर्थयोस्तु न उच्चारणेन षष्ठ्युच्चारणमित्यदोषात्। 'येन विधिः' (१।१।७२) इत्यत्र भाष्यकैयटयोर्ध्वनितमेतत्। 'पचेयुः' इत्यादौ तु न दोषः। वाक्यार्थबोधवेलायाम् 'आदेः परस्य' (१।१।५४) इत्येकवाक्यतया 'पूर्ववर्ण-पराद्योरेकादेशः' इत्यर्थे उपस्थितत्वादुकारस्यैव परादित्वेन ग्रहणात्। 'यदागमाः' (प. ११) इति न्यायस्तु लक्ष्यसंस्कारवेलोपस्थितिक इत्यदोष इत्याहुः।

---

१. 'तथाहि अवर्णात्' इति ख. नास्ति। क. ग. पाठः।
२. 'निर्दिश्यमानावयवयोरन्त्याद्योः' ख. पाठ.।
३. 'निर्दिश्यमानावयत्र एकार एव' ख. पाठः।
४. 'अनिर्दिश्यमानावयवत्वान्न' ख. पाठः।
५. 'इत्याहुः' इत्यन्तोऽयं क. ग. पाठः। ख. पुस्तके तु–'मम त्विकारस्याऽनिर्दिश्यमानाऽवयवत्वान्न दोष इति चेन्न। धातुनिर्देशविहितश्तिपा धातोरेव निर्दिश्यमानत्वात्। स्थानिवद्भावेन स्थानिबुद्ध्यैव कार्यप्रवृत्त्याऽदोषाच्च। अत एव उपैतीत्यादौ वृद्धिः। अपरे तु इणीकारादौ'— इत्येवं पाठः।

**अपरे तु**—'इणीकारादौ प्रतिषेधो वक्तव्यः' इति वार्त्तिकात्, 'एत्येधत्यो-रेचि' इति भाष्यस्य एधत्यंशे उपरञ्जकतया विशेषणत्वेनाऽप्युपपत्तेश्च, 'न त्वेधतेरव्यभिचारात्' इति वृत्तेश्च, 'मा भवान्प्रेदिधत्' इत्यादेरनभिधान-मेव। यत्तु क्वचित् कैयटपुस्तके 'मा भवान्प्रेदिधत्' इत्यत्र व्यभिचारादेध-तेरपि विशेषणम्' इति, तद् बहुषु पुस्तकेष्वनुपलम्भादप्रामाणिकम्। वार्त्तिकविरोधाच्चेत्याहुः। **पुरस्तादिति**—'पुरस्तादपवादा अनन्तरान्वि-धीन्बाधन्ते नोत्तरान्' (प. ६१) इति न्यायः। अवश्यं स्व-परस्मिन् बाधनीये, भेदेनाऽपेक्षायां प्रथमोपस्थितबाधेनाऽऽकांक्षानिवृत्तिर्हि तद्बीजम्। **असाधु-रेवेति**—आङिणोरेकादेशस्य पूर्वान्ततया आङि पररूपेण बाधादिति भावः।

**अक्षाद्** (वा० ६।१।८९)—अत्रापि अक्षादूहिनीशब्दे परे वृद्धिः, इति वाक्यार्थे स्थिते 'अलोन्त्यस्य' (१।१।५२) इत्यनेनाऽकारस्य, 'आदेः परस्य' (१।१।५४) इत्यूकारस्य च वृद्धिः। ('तस्मादित्युत्तरस्य' (१।१।६७) इत्येत-द्बोधितपरत्वघटितशास्त्रविषये एवाऽस्य प्रवृत्तिः' इति मतान्तरे तु—)[3] पदाऽस्वैरीतिनिर्देशादक्षशब्दाऽवयवाऽकारादूहिनीशब्दाऽवयवेऽचि, विशेष्य-भूतयोः पूर्वपरयोर्वृद्धिरित्यर्थ इति प्रत्ययलक्षण(१।१।६२)सूत्रस्थभाष्य-स्वरसः।

**अक्षौहिणीति**—ऊहोऽस्त्यस्या—ऊहिनी। अक्षाणामूहिनीति विग्रहः। परिमाणविशेषविशिष्टा सेना। 'पूर्वपदात्' (८।४।३) इति णत्वम्।

---

१. 'वार्त्तिकविरोधाच्च। लेखकप्रमादपतितं वेत्याहुः।' ख. पाठः।

२. क. पुस्तके कुण्डलितोऽयमंशः ख. पाठः। ग. तु नास्ति।

३. 'पदास्वैरीति निर्देशादर्थाऽधिकाराच्च पूर्वपरशब्दाभ्यां वर्णयोः परस्परा-ऽव्यवहितयोरेव ग्रहणेन, 'एकाऽऽदेशोऽवयवभूतयोरचोरेव, न तु कृत्स्नस्येति सामान्याऽपेक्षज्ञापनेन वा, तदवयवेऽचीत्याद्यर्थज्ञापनेन वा, न कश्चिद्दोष इत्याहुः। परन्त्विदं 'ज्यादादीयसः' (६।४।१६०) इत्याद्यसिद्धयाऽयुक्तमिति प्रागेव निरूपितम्। अक्षौहिणीति'—इति ख. पाठः।

(य[1]दा तु 'अक्षाणामूहः' इति विगृह्यते, तदाऽन्तरङ्गत्वाद् गुणे, अक्षौहिणीत्येव । अपवादभूताया अपि वृद्धेरूहिनीशब्देन विग्रहे चारितार्थ्यात् ।

न चैवं विग्रहेऽपि वृद्धिरेव युक्ता । अकृतव्यूह(प. ५७)परिभाषया गुणस्य दुर्लभत्वात् । अस्त्यत्रापि–'यदि गुणो न स्यात् तर्हि वृद्धिः स्यात्' इति सम्भावना । सम्भावनामात्रेण च तत्प्रवृत्तेः प्रागुपपादितत्वादिति वाच्यम् । 'समर्थ'ग्रहणेन कृतसन्धिकार्यादेव तद्धितोत्पत्तिबोधनेन, तद्धितविषये प्रकृत्यंशे तदप्रवृत्तेः । तद्घटकीभूतोहिनीशब्दस्य कल्पिताऽर्थेनाऽप्यर्थवत्त्वाऽभावाच्च । एतेन 'उपजनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते (प. ६६) इति न्यायेन गुणो न स्यात्' इत्यपास्तम् । तस्याऽचरितार्थविषयकत्वाच्चेत्याहुः) ।

**स्वेनेरितुमिति**—यदा त्वीरणमीर इति घञन्तेन 'स्व'शब्दस्य स्वेनाऽभिप्रायेण ईर इति 'साधनं कृते'ति समासे, मत्वर्थीयेनिः, मत्वर्थेन्नन्तेरिन्शब्देन वा समासः, तदा तदवयवीभूतेर–शब्दमादायैव सिद्धिरिति भावः । भाष्यकृत्तु मत्वर्थीयेनिना स्वैरिशब्दं साधयित्वा, णिनेश्चाऽनभिधानं स्वीकृत्येरिन्ग्रहणं प्रत्याचख्यौ । केचित्तु[2]—स्वतन्त्ररूढ-'**स्वैरि**'शब्दे ताच्छीलिकणिनेः प्रसङ्ग एव न । फलापेक्षायामपि स्वेच्छया व्यवहरणम्-**स्वातन्त्र्यम्** । फलाऽनपेक्षश्च व्यापारस्ताच्छील्यमिति भेदादित्याहुः । ('ई[3]रेरिण्योः' इति क्वाचित्कोऽपपाठः । स्वैरीतिणिन्यन्तस्याऽस्त्रियां वृद्ध्यनापत्तेः । स्वैरिणीत्यत्र तु ङीपः प्राग्भागमादायैव वृद्धिः । लिङ्गविशिष्टपरिभाषोपन्यासस्तु निष्फल एव । स[4]मर्थपरिभाषा चेदृशेषु नेति 'ओत्वोष्ठयोः' (वा० १।१।६४) इत्यत्र व्युत्पादयिष्यते) ।

**अर्थवद्ग्रहण** इति (प० १४) अस्या बीजं 'स्वं रूपम्' (१।१।६८) इति

---

१. क. कुण्डलितोऽयं ख. पाठः । ग नास्ति ।

२. 'केचित्तु' इति क. ग. पाठः । ख. नास्ति ।

३. क. कुण्डलितः ख. पाठः । ग. नास्ति ।

४. ख. पाठः । क. ग. नास्ति ।

सूत्रे निरूपितम्। **सीरदेवोक्त**मस्या ज्ञापकं व्रश्चादि(८।२।३६)सूत्रे उपपादयिष्यते, दूषयिष्यते च[1]।

**प्रैष्य इति**—ण्यन्तादिषेः क्त्वो ल्यपि 'प्रेष्य गतः' इत्यादौ पररूपमेव न वृद्धिः। एष-साहचर्येणाऽनव्ययस्यैव एष्यस्य ग्रहणात्। (न[2] च क्त्वान्तेन समासकाले एवाऽन्तरङ्गत्वात् पररूपं भविष्यतीति वाच्यम्। अकृतव्यूह (प० ५७) परिभाषया तदप्राप्तेः। अस्ति चाऽत्राऽपि-'यदि पूर्वं पररूपं न स्यात् तर्हि वृद्धिः स्यादिति सम्भावना' इत्याहुः)।

**सुखार्त्त** इति—कार्यकालपक्षे ऋत[3]शब्द-तृतीयासमाससापेक्षतया बहिरङ्गत्वेन वृद्धेरसिद्धत्वान्न विसर्गः। न च बहिरङ्गत्वस्यान्तरङ्गसापेक्षत्वेनाऽन्तरङ्गस्य च[4] 'पूर्वत्राऽसिद्धम्' (८।२।१) इत्यसिद्धत्वादस्य बहिरङ्गत्वाऽभाव इति वाच्यम्। कार्यकालपक्षे बहिरङ्ग(प० ५१)परिभाषोपस्थितिसामर्थ्येन—पूर्वत्राऽसिद्धत्वस्य बाधात्। अत एव 'नार्कुटः' इत्यादौ न विसर्गः।

न चैवमपि किं कार्यकालपक्षमाश्रित्य 'पूर्वत्राऽसिद्धम्' (८।२।१) इत्यस्य बाधः कार्यः उत यथोद्देशमाश्रित्याऽऽन्तरङ्गपरिभाषाया बाधः? इत्यत्र विनिगमकाऽभावादनया पूर्वाऽसिद्धत्वेन 'पूर्वत्राऽसिद्धम्' (८।२।१) इत्यस्य प्रवृत्तिप्रतिबन्धेन, तेन च परस्याऽसिद्धत्वे, तन्निरूपितबहिरङ्गत्वाऽभावेनाऽस्याः प्रतिबन्धेन, प[5]रस्परविरोधे, द्वयोरप्यप्रवृत्त्या[6]पत्तौ विसर्गो दुर्वारः। स्पष्टं चेदं 'खरवसानयोः' (८।३।१५) इति सूत्रे भाष्ये इति वाच्यम्। लक्ष्याऽनुरोधेनाऽत्र कार्यकालपक्षस्यैव, बहिरङ्गपरिभाषाया एव चाऽङ्गीकारात्। 'हरिः' इत्यादौ पूर्वसवर्णदीर्घादीन् प्र[7]ति विसर्गाऽसिद्धत्वबोधनेन

---

१. 'दूषयिष्यते च' इति क. नास्ति।　　२. ख. पाठः। क. ग. नास्ति।

३. 'सापेक्षत्वेन' इत्यन्तः क. ग. पाठः। ख. नास्ति।

४. 'सामर्थ्येन' इत्यन्तः ख. नास्ति।

५. 'परस्परविरोधे' इत्यतोऽग्रे 'विनिगमकाऽभावाच्च' इत्ययमंशः क. पुस्तके स्थितोऽपि तत्रैव मषीलेपेन दूरीकृतः। 'द्वयोः परस्परविरोधे' इति तु ख. पाठः।

६. 'प्रवृत्त्यापत्तेश्च परत्वाद् विसर्गो' ख. पाठः।

७. पूर्वसवर्णदीर्घाऽसिद्धत्वबोधनेन पूर्वत्रासिद्धमित्यस्य' क. पाठः।

'पूर्वत्राऽसिद्धम्' (८।२।१) इत्यस्य सर्वथा बाधाऽभावाच्च । स्पष्टं चेदं तत्रैव कैयटे । 'संयोगान्तलोप'(८।२।२३)सूत्रे भाष्ये च ध्वनितम् ।

ननु 'नाऽजानन्तर्ये' (प० ५२) इति निषेधः । अत्र च 'षत्वतुकोः' (६।१।८६) इति सूत्रस्थषत्वग्रहणं ज्ञापकम् । अन्यथा । 'कोऽसिचत्' इत्यादौ पदाऽन्तरसापेक्षबहिरङ्गैकादेशस्याऽसिद्धत्वेन षत्वाऽप्रवृत्तौ किन्तेन ? त्रिपादीस्थेऽपि षत्वे कार्यकालपक्षाश्रयेणाऽस्याऽसिद्धत्वमिति चेन्न । पश्चात् प्रवर्त्तमाने विधावषानन्तर्ये तत्प्रवृत्तेः । अत एव 'पचावेदम्' इत्यादि-सिद्धिः ।

न च षत्वविधाविण्ग्रहणम्, तच्च परेणैवेति न तत्राऽजानन्तर्यम् । तन्मध्येऽचामप्यन्तर्भावसत्त्वेनाऽदोषात् । अत एव 'अचोरानन्तर्यम्' इति वदन्तः परास्ताः । धर्मिग्राहकमानादेव चाऽस्याः स्वबोधकोत्तरविभक्ति-बोधिताऽज्निष्ठाऽऽनन्तर्य एव प्रवृत्तिः । अत एव 'ग्रामणि कुलम्' इत्यादौ 'ह्रस्वस्य' (६।१।७१) इति तुक्–असिद्धि(प० ५१)परिभाषया व्यावर्त्तितः 'कृन्मेजन्तः' (१।१।३९) सूत्रे भाष्ये ।

एतेन 'तुग्ग्रहणमपि ज्ञापकम्' इति परास्तम् । 'प्रेत्य' इत्यादौ—(धा[2]तूपसर्गकार्यत्वेनैकादेशस्याऽन्तरङ्गत्वाच्च । किञ्च)—समासोत्तरम् ल्यप्प्रवृत्त्या पूर्वं पूर्वपदसम्बन्धेन समासे जाते, तत्र संहिताया नित्यत्वात्, ल्यबुत्पत्तिपर्यन्तमप्यसंहितयाऽवस्थानाऽसम्भवेन पूर्वमेकादेशे, बहिर्भूतल्य-बपेक्षतु[3]गपेक्षया धातूपसर्गकार्यत्वेन तस्याऽन्तरङ्गत्वेन बहिरङ्गाऽसिद्ध-त्वस्य दुरुपपादत्वाच्च । 'अ[4]कृतव्यूह'(प० ५७)परिभाषाया अन्तरङ्ग-परिभाषाऽपवादकत्वेन तयाऽप्राप्ततुक्प्राप्तयेऽसिद्धत्ववचनस्याऽऽवश्यकत्वाच्च —इति दिक् ।

**वत्सतर**—अत्र 'वत्स'-'वत्सर' शब्दावपि केचित् पठन्ति, तद्भाष्या-ऽनुक्तम् ।

**उपसर्गादृ** (६।१।९१)—ऋतीति तपरकरणमुत्तरार्थम् । येन[5] 'उपऋ-

---

१. 'अस्याऽसिद्धत्वम्' इत्यन्तोऽयं क. ग. पाठः । ख. नास्ति ।
२. क. ग नास्ति । ख पाठः ।
३. 'बहिर्भूतल्यबपेक्षया' ख- पाठः ।
४. 'इति दिक्' इत्यन्तः ख पाठः । क. ग. नास्ति ।
५. 'धातुग्रहणात्' इत्यन्तोऽयं ग्रन्थः ख. नास्ति ।

कारीयति' इत्यादौ न 'वा सुपि' (६।१।९२) इति वृद्धिः। 'ऋकारशब्दादाचारक्विपि 'उपर्कारति' इत्यादौ वृद्धिवारणायेहार्थमपि' इत्यन्ये। सौत्र-ऋतिग्रहणन्तु[1] न। 'ऋतौ' इत्येव सिद्धे धातुग्रहणात्।

'आत्' इत्यनुवृत्तेन विशेषणेन तदन्तविधिमभिप्रेत्याऽऽह—**अवर्णान्तादिति**। 'यस्मिन्विधिः' (प० ३३) इति परिभाषालभ्यमाह—**ऋकारादाविति**।

न च 'गतेर्ऋतिः' इत्येव सूत्र्यताम्। 'अच्छर्छति' 'अच्छौखति' इत्यादौ दोषाऽऽपत्तेः।

**अन्ता** (६।१।८५)—इह 'एकः पूर्वपरयोः' (६।१।८४) इत्यनुवर्त्तते। यथासङ्ख्यं च। अन्ताऽऽदिशब्दावुपस्थितैकादेशस्थानिपरौ। पूर्व-परशब्दौ च तद्घटितसमुदायपरौ[2]।

तदयमर्थः—'पूर्वस्य, परस्य च समुदायस्याऽन्ताऽऽदिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रातिपदिकत्व-सुबन्तत्व-प्रत्ययत्वादयस्ते कृतैकादेशस्याऽपि[3] भवन्ति'। एवञ्च रामावित्यादौ पराऽऽदिवद्भावेन 'औ' इत्यस्य सुप्त्वे, पूर्वमान्तस्यैकदेशविकृत[4](प० ३७)न्यायेन रामशब्दत्वे, यस्माद्विहितस्तदादितदन्तत्वमार्थसमाजग्रस्तम्। तदेतत् फलितमाह—**योऽयमित्यादि**।

इदमल्विधौ[5] न प्रवर्त्तते। तुक्यसिद्धत्ववचनाज्ज्ञापकात्[6]। अन्यथा 'अधीत्य' इत्यादावादिवद्भावेन ह्रस्वप्रयुक्ततुक्सिद्धेरसिद्धवचनवैयर्थ्यं स्पष्टमेव। तेन ह्वेञो 'जुहाव' इत्यादौ 'आत औ णलः' (७।१।३४)

१. 'सौत्रऋतिव्यावृत्तिस्तु आदचीति वर्णप्रकरणात्'—इति क. कुण्डलितः ख. पाठः। ग तु नास्ति।

२. इतोऽग्रे—'यद्यप्यन्ताऽऽदिशब्दाभ्यामेव ससम्बन्धिकत्वात् तौ समुदायावाक्षेप्तुं शक्येते. तथाऽपि 'पूर्वपरयोरित्यनुवृत्तिसामर्थ्यादयमर्थः' इति ख. पाठः।

३. 'एकादेशविशिष्टस्यापि' ख. पाठः :

४. 'पूर्वमान्तस्य' इत्यारभ्य 'यस्माद् विहितः' इत्यन्तोऽयं क. ग. पाठः। ख. नास्ति।

५. 'अत एव इदमल्विधौ' इति ख. पाठः।  ६. 'ज्ञापकाच्च' ख. पाठः।

इत्यौत्वं 'खट्वाभिः' इत्यत्र एस् च न। 'अयजे इन्द्रम्' इत्यादौ सवर्णदीर्घश्च न।

अत एव 'वर्णाऽश्रये चाऽन्तादिवद्भावप्रतिषेधो वक्तव्यः। न वाऽताद्रूप्याऽतिदेशात्' इति भाष्यं सङ्गच्छते।

(यत्तु[1] 'काण्डे' इत्यादौ परादिवद्भावेन प्रत्ययाऽन्तत्वात् प्रातिपदिकाद्यभावः, इत्यर्थवत्सूत्रे भाष्ये उक्तम्। 'प्रातिपदिकाऽप्रातिपदिकयोरेकादेशः प्रातिपदिकग्रहणेन' इति च। तत् सम्यगेव। न च 'प्रत्ययग्रहणे' (प० २३) इति परिभाषया उभयत आश्रयणात् तन्निषेधः। तदन्तग्रहणप्रयुक्ताऽतिप्रसङ्गनिराकरणं हि तत्फलम्। तथा हि 'तदन्त'शब्दे तावत एवाऽन्यपदार्थता बोध्यते। एवं च सुबन्तत्वादिना निमित्तता, न तु यस्माद्विहितत्वादिनाऽपि निमित्ततेति भाष्याशयात्। 'अभीयात्' इत्यादौ तूपसर्गत्वेण्त्वाभ्यां निमित्तता स्पष्टैवेति बोध्यम्। 'यस्माद्विहितत्वादिनाऽपि तदुपस्थितिः' इति वादिनान्तु स्थानिवद्भावेन प्रत्ययान्तत्वं बोद्धव्यम्। 'न लुमता' (१।१।६३) इति सूत्रे भाष्ये—'सुप्तिङन्तम्' (१।४।१४) इति सूत्रे 'यस्मात्प्रत्ययविधिः' इत्याद्यनुवृत्तिरुक्ता, तत्पक्षेऽपि स्थानिवत्त्वेनैव रामावित्यादौ पदत्वं बोध्यम्)।

एवं च 'पूर्वपरयोः' इति द्विवचननिर्देशेनोभयोरपि प्रत्येकं स्थानित्वसत्त्वेन स्थानिवत्सूत्रेणैव सिद्धे, इदं न कार्यम्[2]। (एवं[3] च 'प्राच्छेति'इत्यादौ विसर्गवारणाय ज्ञापकाश्रयणमपि न कार्यम्। यतस्तत्र स्थानिवत्त्वेन रेफान्ते पदत्वं दुर्लभम्। तस्य तत्स्थानिधर्मत्वाऽभावात्।

आनुमानिकवचनकल्पनया[4] 'च ऋषि' इत्यस्य चर्ष्यादेशे तु समुदाये 'च'शब्द[5]धर्माणां स्थानिवत्त्वेन लाभेऽपि, रेफे पदान्तत्वस्य दुर्लभत्वात्) —इति प्राञ्चः।

---

१. ख. पाठः। क. ग. नास्ति।

२. 'न कार्यमिति प्राञ्चः' इत्येवं क. ग. पाठः।

३. ख. ग्रन्थः। ग. नास्ति। क. कुण्डलितोऽयम्।

४. 'वचनकल्पनया 'प्र-ऋच्छेत्यस्य प्रर्च्छादेशे तु' इति क. पाठः।

५. 'समुदाये 'प्र'-शब्दधर्माणाम्' इति क. पाठः।

अत्र वदन्ति—एकादेशे वर्णयोरेव स्थानित्वम्, न समुदायस्येति 'सर्वा'शब्दादेः (पूर्वान्तत्वेन[1] लभ्यमान—) सर्वनामत्वाऽप्रसङ्गः। सर्वनामत्वस्यैकादेशस्थानिधर्मत्वाऽभावात्। आनुमानिकाऽऽदेशकल्पकवाक्यन्तु 'पूर्वपरघटितसमुदायस्यैकादेशघटित आदेशः' इत्येव, न तु तयोः समुदाययोः प्रत्येकं स्थानित्वबोधकम्, मानाभावादिति न तत्पक्षमादायाऽप्युपपत्तिः। तथात्वे च 'स्व[2]ाऽश्व'शब्दस्याऽऽनुमानिकं स्थान्यादेशभावं गृहीत्वा, समुदायस्य स्थानिवत्त्वेन 'स्व'शब्दत्वात् तत 'ईरिन्'शब्दे वृद्ध्यापत्तिरिति। स्थ[3]ानिवत्सूत्रे च यथाकथञ्चित् स्थानषष्ठीनिर्दिष्टस्यैव ग्रहणम्।

किञ्चोभयत आश्रयणे नाऽन्तादिवदित्यस्याऽसङ्गतौ 'अभीयात्' इत्याद्यसिद्धिः। स्थानिवद्भावस्तूभयत आश्रयणे इष्यत एव। अन्यथा (पद[4]-संज्ञायामुभयाश्रयणाऽङ्गीकर्तॄणां मते 'अ'शब्दस्य सप्तम्येकवचने 'ए' इत्यादौ स्थानिवद्भावेन पदत्वाऽनापत्तिः। स्थानिवत्त्वेन लभ्ये कार्ये उभयत आश्रयणे नेत्यर्थेन पदत्वेऽपि तत्सत्त्वात्। अन्यथा 'अभीयात्' इत्यत्र ह्रस्वस्याऽप्यापत्तिः)। 'अचः परस्मिन्' (१।१।५७) इत्यस्याऽप्यु[5]भयत आश्रयणेऽप्रवृत्त्यापत्तौ 'प्लायते'इत्याद्यसिद्ध्यापत्तेः। (भाष्योक्त[6]न्यायसिद्धताऽनापत्त्या वचनाऽऽरम्भे गौरवञ्च। 'अन्तादिवच्च' (६।१।८५) इति सूत्रसत्त्वे तु भाष्योक्तन्यायसिद्धता युक्ता। अन्ताऽऽदिशब्दाभ्यां नानादेशत्वस्य शब्दोपात्तत्वात्। तथा च भाष्यम्—'नास्ति यौगपद्येन सम्भवः। नैक उभयोः प्रेष्योऽविरोधार्थी कस्याऽपि करोति' इति। न चाऽतिदेशेनाऽऽहार्याऽऽरोपबोधनाज्ज्ञानयौगपद्यस्याऽपि स्वीकाराच्च कथं यौगपद्येनाऽसम्भव इति वाच्यम्। ज्ञानयौगपद्याऽनङ्गीकर्तॄमते भाष्यस्य सत्त्वात्। यौगपद्याऽङ्गीकारे तु वचनमावश्यकमेव)।

---

१. क. ग. नास्ति। ख. पाठः।　　२. 'स्वाशब्दस्य' ग. पाठः।

३. 'स्थानिवत्सूत्रे' इत्यारभ्य 'ग्रहणम्' इत्यन्तोऽयं क. ग. पाठः। ख. नास्ति।

४. क. ग. नास्ति। ख. पाठः।

५. 'अचः परस्मिन्नित्यस्योभयत' ख. पाठः। ६. क. ग. नास्ति। ख. पाठः।

इदमेवाऽभिप्रेत्य भाष्यकृताऽन्तादिवत्सूत्रं न प्रत्याख्यातम्। किञ्च 'षत्वतुको:' (६।१।८६) इतिसूत्रे 'पदान्तपदाद्योरेकादेशोऽसिद्धः' इत्यवश्यं वाच्यम्। अन्यथा वेञ आत्वे क्विपि संप्रसारणे 'उत्' इत्यादौ तुगभावापत्तेः। 'शकहूषु' इत्यादौ ह्वेञः क्विपि संप्रसारणे षत्वाऽनापत्तेश्च। एवं च तत्र 'पदस्य' (८।१।१६) इत्येव वाच्यम्। 'अन्ताऽऽदि' (६।१।८५) इत्यनुवृत्त्या, 'पूर्वपरयोः' (६।१।८४) इत्यनुवृत्त्या चेष्टाऽर्थलाभः। पूर्वपर[1]योरित्यनुवृत्त्या उदित्यत्र पदस्य विभज्याऽन्वाख्यानपक्षेऽपि न दोषः। 'पूर्वपदान्त—परपदाद्योः' इत्यर्थात्। 'अभिप्रेत्य'इत्यादौ तुक्सिद्धिस्तु सुबन्तेन समासे बोध्या। 'गतिकारक' (प.७७) इत्यस्याऽनित्यत्वात्। पदशब्देनाऽर्थवत उपलक्षणाद् वेति दिक्।

**निर्देशादिति**—(ध[2]ातूपसर्गकार्यत्वेन वृद्धेरन्तङ्गत्वाद् बहिरङ्गत्वेन समाधानमशक्यमिति भावः। वस्तुतो धातूपसर्गनिमित्तवृद्ध्यपेक्षयोपसर्गाऽवयवमात्रनिष्ठपदान्तत्वनिमित्तकविसर्गेऽन्तरङ्गत्वमस्त्येवेति तदप्यत्र समाधानं वक्तुं शक्यमित्याहुः)। यत्तु 'कर्त्तरि चर्षि' (३।२।१८६) इत्यादौ गुणस्य पदद्वयाऽऽश्रितत्वेन बहिरङ्गत्वाद् रेफाऽभावादेव न विसर्ग.' इति, तन्न[3]।

पदद्वयसम्बन्धिवर्णद्वयाश्रितत्वेन गुणस्येव, पदद्वयसम्बन्धिरेफखरात्मकवर्णद्वयाश्रितत्वेन विसर्गस्याऽपि तत्त्वात्। एवञ्च निर्देशज्ञापकता कृष्णर्द्धिरित्याद्यर्थमावश्यिकैव। परनिमित्तकत्वमप्युभयोः समम्।

न च[4] संयोगान्तलोपसूत्रे-'यणः प्रतिषेधो वाच्यः' (वा० ८।२।२३)। दध्यत्र। 'संयोगादिलोपे च'। काक्यर्थम्। न वा, झलो लोपात्। झलो

---

१. पूर्वपरयोरित्यनुवृत्त्या वेञः क्विपि, सम्प्रसारणे, भ्यामि, उभ्यामित्यादौ पदस्य विभाज्याऽन्वाख्यानपक्षेऽपि 'उत्भ्याम्' इत्यादौ न दोषः' ख. पाठः। क. ग. नास्ति। २ ख. पाठः।

३. इत आरभ्य 'समम्' इत्यन्तोऽयं क. ग. पाठः। ख. तु—'तन्न। गुणशास्त्रेण पदद्वयाऽनपेक्षणात्। न च संयोगान्तलोपसूत्रे' इति ख. पाठः।

४. ख. पाठः।

लोपः संयोगान्तलोपः । बहिरङ्गलक्षणत्वाद् वा' इति भाष्यमसङ्गतं स्यात् । त्वदुक्तरीत्या दध्यत्रेत्यत्र यणो बहिरङ्गत्वाऽनापत्तेरिति वाच्यम् । परस्थानिकमिव परनिमित्तकमपि बहिरङ्गमित्याशयेन तत्सत्त्वादिति यावद्बाधं साधु) ।

**उपसर्गेणैवेति**—तत्संज्ञायाः क्रियायोगनिमित्तत्वादित्यर्थः । अत एव[1] 'यदर्थे क्रियारूपे प्रादीनामन्वयस्तं प्रत्येवोपसर्गत्वम्' इति प्रागुक्तत्वात्, प्रत्यासत्तिन्यायेन ऋकारादिनिमित्तोपसर्गत्वस्य ग्रहणाच्च 'प्रभूत ऋद्धः प्रर्द्धः' इत्यत्र नाऽतिप्रसङ्ग इति[2] बोध्यम् ।

**पुनरिति**—इदं प्रकृतसूत्रे भाष्ये स्पष्टम् । एतेन-'न माङ्योगे' (६।४।७४) इति सूत्रे भाष्ये 'अजादीनामटासिद्धम्' इत्युक्त्वा, 'अटश्च' इति सूत्रं विधाय, 'अस्वपो हसति' इत्यत्र वृद्धिमाशङ्क्य, धातावित्यपकृष्य समाहितत्वेन, धातुग्रहणस्य चारितार्थ्याद् योगविभागे मानाऽभावः, इति परास्तम् । पूर्वसूत्रे एव कर्त्तव्येऽत्र करणेनेदृशफलस्याऽपि वक्तुं शक्यत्वाच्च[3] । अत एव 'उभयोः शेषः' इति भाष्ये उक्तम् ।

**वा सुपि (६।१।९२)—सुब्धाताविति** । 'सुबन्तप्रकृतिके धातौ' इत्यर्थः । 'तुल्यास्य' (१।१।९) इति सूत्रे 'उपार्कारीयति' 'उपाल्कारीयति' इति, वा सुप्यापिशलेरित्यस्य भाष्यकृतोदाहरणात् । 'सुबन्ते धातौ' इत्यर्थे हि तदसङ्गतं स्यात्[4] ।

१. 'अत एव' इति ख. नास्ति ।
२. 'इति भावः' ख. ग. पाठः ।  ३. चकारः ख. नास्ति ।
४. इतोऽग्रे—'प्रर्षभतीत्यादावाचारक्विबन्ते, प्रर्षभयतीत्यादावाख्यानण्यन्ते च नेदं प्रवर्त्तते । सुब्धातुत्वाऽभावादित्याहुः । यत्तु 'सुबन्तस्य धातोरसम्भवः' इति, तन्न । ऋज गतावित्यादेः क्विपि सम्भवात् । तपरकरणं त्वत्र पक्षे ऋकारशब्दादाचारक्विबन्तात् कर्त्तरि क्विपि व्यावृत्यर्थम् । मत्पक्षे तु उपऋकारीयतीति व्यावर्त्यं प्रसिद्धमेव । 'ऋति' इति च श्रूयमाण-सुपीत्यस्यैव विशेषणम्, न त्वाक्षिप्तधातोः । तेन 'ऋकारादिसुबन्तप्रकृतिके' इत्यर्थः । तेन 'ऋषभस्य समीपम्,-उपर्षभम्, तदिच्छति-उपर्षभीयतीत्यत्र न वृद्धि । ऋषभशब्दस्याऽन्तर्वर्तिविभक्त्या सुबन्तत्वेऽपि, क्यचस्तत्प्रकृतिकत्वाऽभावात् । धातुसंज्ञानिमित्ते प्रत्यये कृते

शा[1]स्त्रे सुबन्तस्य धातुप्रकृतित्वेनोक्तेः सुपीत्यस्य तत्प्रकृतिके लक्षणं-वोचिता, न तु तदवयवके इति बोध्यम्। ऋषभस्य समीपम्-उपर्षभम्, तदिच्छति 'उपर्षभीयति' इत्यत्र तु न वृद्धिः। उपेत्यस्य उपसर्गत्वाऽभावात्।

अत्राऽपि धातावित्यनुवर्त्त्य वा[2]क्यभेदेन व्याख्येयम्। तेन सुब्धाता-वपि न प्रकृतिभाव इति बोध्यम्। **प्रार्षभीयतीति**—'अचो रहाभ्याम्' (८।४।४६) इति षस्य द्वित्वन्तु न। 'शरोऽचि' (८।४।४९) इति निषेधात्। अत्राऽनुपन्यासस्तु व्य[3]ञ्जनात् परस्यैकस्याऽऽनेकस्य वोच्चारणे विशेषाऽभा-ववादिमते अचो रहाभ्यामित्यस्य, शरोऽचीत्यस्य चाऽनावश्यकतां ध्व-नयितुमित्याहुः।

**प्रेजत इति**—'एजृ दीप्तौ'। कम्पने तु परस्मैपदी। **वाक्यभेदेनेति**—इदं च वृत्तौ स्पष्टम्। भाष्ये तु न दृश्यते। ([4]औतोऽम् (६।१।९३) इति सूत्रे भाष्ये ध्वनितं चेति भाष्यप्रदीपोद्द्योते निरूपितम्)।

**एवे चेति** (वा० ६।१।९४)—वार्त्तिकम्। एतदारम्भसामर्थ्यादेव सूत्रे धाताविति मण्डूकप्लुत्याऽनुवर्त्तितम्। ओम्यारम्भाच्च। **अवधारणमिति**—नियम इत्यर्थः। (तदु[5]क्तं **वृत्तौ–'एवस्तु विषयो वृद्धेर्नियमेऽयं यदा भवेत्'** इति। एतेन 'नियोगो व्यापारः' इति परास्तम्। शाकटायनस्यैवेत्यादि-निर्देशविरोधाच्च। यत्तु श्लोकवार्त्तिकमिदमिति। तद्भ्रमसात्। 'वृत्तौ भवम्' इति व्याख्याने तु 'वार्त्तिक'शब्दस्य पूर्वनिपाताऽऽपत्तिः)।

---

उपसर्गस्य पृथक्करणाद् धातुत्वं परम्, 'ऋषभीय'शब्दस्यैव। अत एव 'उपाऽऽर्षभीयत' इत्यादौ उपात् पूर्वं नाऽऽट्। पूर्वत्र क्लृप्ततया धातोरेव विशेषणेऽपि न क्षतिः। क्यजन्तं प्रति उपेत्यस्योपसर्गत्वाऽभावात्। एतेन 'सुबन्तावयवके धातौ' इति व्याख्यानमप्युज्जीवितम्' –इति ख. पाठः। क. ग, तु नास्ति।

१. 'उपसर्गत्वाऽभावात्' इत्यन्तोऽयं ख. नास्ति। क. ग. पाठः।

२. 'योगविभागेन' ख. पाठः क. ग. नास्ति। ३. 'नहि व्यञ्जनात् परस्य' ख. पाठः।

४. क. ग. नास्ति। ख. पाठः। ५. क. कुण्डलितः ख. पाठः। ग. नास्ति।

एवशब्दस्याऽर्थद्वयम्—अवधारणम्, अनवक्लृप्तिश्च। तत्राऽवधारणे प्रतिषेधादनवक्लृप्तिरेवाऽत्र एवशब्दार्थ इत्यभिप्रेत्याह—**अनवक्लृप्तावेवेति**। अनवक्लृप्तिः=असम्भवः। 'क्वेव भोक्ष्यसे' इत्युक्ते नास्ति सम्भवस्तव भोजनस्येति गम्यते। असम्भवश्च—स्थलस्य सङ्कीर्णत्वादिना बोध्यः।

'[1]त्वं भोक्ष्यसे इति न सम्भावये' इत्यर्थ इत्यन्ये।

**अचोऽन्त्या** (१।१।६४)—'अचः' इति निर्धारणे षष्ठी। जातावेकवचनम्। अन्ते भवोऽन्त्यः। 'अन्त्यादि' इति नित्यसापेक्षत्वाद् बहुव्रीहिः।

**शकन्ध्वा** (वा० १।१।६४)—विषयत्वं सप्तम्यर्थः। 'शकन्ध्वादिविषये तत् सिद्ध्यनुगुणम्' इत्यर्थः। तत्सामर्थ्यलभ्यमाह—**तच्च टेरिति**। यदि तु आदित्य धिकारादकारस्यैवेष्यते, तर्हि मनीषा–पतञ्जली न सिद्ध्येताम्। य[2]दि तु मनः-पतच्छब्दयोः पृषोदरादित्वादन्त्यलोपेऽकारस्यैव पररूपमुच्यते, तर्हि वचनद्वयव्यापारो व्यर्थः। पृषोदरादिलोपेनैव सिद्धेरित्याहुः।

**शकन्धुरिति**—शकानां=देशविशेषाणामन्धुः कूप इत्यर्थः। 'देश[3]विशेष'-शब्दस्य यौगिकत्वेन जातिवाचकत्वाऽऽभावा[4]द् 'विशेषणानां चाऽजातेः' (१।२।५२) इति न निषेध इत्याहुः।

**कुलटेति**—पचाद्यजन्तेन 'अट'शब्देन कर्मणः शेषत्वविवक्षणात् षष्ठीसमासः। अन्यथा कर्मण्यणि 'कुलाटी' इति स्यात्। **केशवेश** इति—तथा च वार्त्तिकम्—'सीमन्तः केशेषु' (वा० १।१।६४) इति। **मनीषेति**। मनसो, हलस्य चेषेति विग्रहः। 'ईष उञ्छे', 'ईष गत्यादिषु'। आभ्यां 'गुरोश्च' (३।३।१०३) इत्यप्रत्यये–'ईषा'। तालव्योपधे 'ईश'शब्दे परे आद्गुणे 'हलेश'

१. 'इत्यन्ये' इत्यन्तोऽयं क. ग. पाठः। ख. नास्ति।

२. 'न निषेध इत्याहुः' इत्यन्तः क. कुण्डलितः ख. पाठः। ग. नास्ति।

३. एतत्पाठस्थाने 'अत्राऽवयवगतं बहुत्वं समुदाये आरोप्य 'देशविशेषाणाम्' इति बहुवचनम्। 'विशेषणानां चाऽजातेः' इति निषेधस्तु **लुबर्थविशेषणत्वप्रयुक्तप्राप्तलिङ्गवचनादिनिषेधद्वारा** 'अङ्गा जनपद' इत्यादिप्रयोगसाधनाऽर्थो, न तु 'अङ्गा जनपदा' इतिनिवृत्त्यर्थः'—इति ख. पाठः। क. ग. नास्ति ख. पाठः।

४. 'जातिवाचकत्वाऽभावाच्चेत्याहुः' ख. पाठः।

इत्येव । मृताण्डादागतो—**मार्तण्डः** । अण्विषये एव पररूपम् । केचित्तु[1]—'एङि परः' इत्येव सिद्धे 'रूप'ग्रहणं योगविभागेन परग्रहणाऽनुवृत्त्या एतद्वार्त्तिकार्ऽथसंग्राहकम् ।

न च 'शिवाय' इत्यत्र 'अणोऽप्रगृह्यस्य' (८।४।५७) इत्यनुनासिकत्वे, तदनुकरणे, ततः परमोमित्यस्य 'ओमाङोश्च' (६।१।९५) इति पररूपेऽनुनासिकाऽभावार्थं 'परस्य यादृशं रूपं तादृशं यथा स्यात्' इत्येतदर्थं 'रूप'-ग्रहणमिति वाच्यम् । (अभिव्यक्तपदार्था ये' इति न्यायेनाऽर्थपरयोरेव ओमाङोर्ग्रहणेन, तत्साहचर्याच्छब्दभिन्नाऽर्थकाऽवयवस्यैवाऽतो ग्रहणात् । किञ्चैवं)[2]—स्वरिताऽन्तसुब्रह्मण्याशब्दस्य निपातत्वादुदात्तेन 'ओम्'शब्देन ओमाङोरित्येकादेशः 'सुब्रह्मण्यो३मित्यादौ स्वरितः' इति भाष्योक्ताऽसङ्गतेरित्याहुः[3] ।

'एओङ्' 'ऐऔच्' 'इको गुणवृद्धी' (१।१।३) इति सूत्रस्थभाष्यन्तु पूर्व-पक्षस्थत्वात् प्रौढिवाद इति ध्येयम् ।

**ओत्वोष्ठयोः** (वा० १।१।६४)—यत्तु 'समर्थः पदविधिः' (२।१।१) इत्यस्योद्देश्यकोटौ पदगन्धसत्त्वे प्रवृत्तेरङ्गीकारेणैकार्थीभावपरतया भाष्यादौ तस्या व्याख्यानेन च ओत्वादीनामवर्णान्तस्य समासे एवैकार्थी-भावसम्भवेन तयैव समासे प्रवृत्तिसिद्धौ, 'समास'ग्रहणं व्यर्थमिति । तन्न । 'एङि पररूपम्' (६।१।९४) इत्यत्राऽपि तत्प्रवृत्त्या 'प्रेजते' इत्याद्यसिद्ध्या-पत्तेः । 'समासेऽङ्गुलेः सङ्गः' (८।३।८०) इत्यादौ 'समास'ग्रहणेन, पद-विधिरितिसूत्रस्वरसेन च, भाष्याऽऽदिस्वारस्येन च पदत्वेन, सुबन्तत्वेन वा यत्र साक्षादुद्देश्यता, तत्रैव एतत्परिभाषावृत्तिस्वीकारा[4]च्च । [5]ओत्वोष्ठा-दिमात्रस्य पदत्वाऽभावाच्च ।

---

१. 'केचित्तु' इत्यारभ्य 'इति ध्येयम्' इत्यन्तः क. कुण्डलितः, ख. पाठः । ग. नास्ति । २. ख. पाठः । क. ग. नास्ति ।

३. 'भाष्याद्युक्तमसङ्गतं स्यादित्याहुः' ख. पाठः ।

४. एतदुत्तरं—'एतेनोक्तयुक्त्यैव समासे लब्धे समासग्रहणमोत्वोष्ठयोरुत्तर-पदत्वे एव प्रवृत्त्यर्थमिति परास्तम् । 'दन्त्योष्ठ्यो वः स्मृतो बुधैः' इत्यादिप्रयोगविरोधाच्च । तेनोष्ठघटितोत्तरपदेऽपि भवतीत्याहुः'— ख. पाठः । ५. 'भवतीत्याहु ' इत्यन्तोऽयं क. ग. पाठः । ख. नास्ति ।

न चैवमपि प्रत्यासत्त्या ओत्वोष्ठौत्तरपदकसमासे एव प्रवृत्त्यापत्तौ, 'दन्त्योष्ठ्यो वः स्मृतः' इति प्रयोगाऽसङ्गतिरिति वाच्यम् । 'अवर्णादोत्वोष्ठयोरचि परतस्तद्घटितसमासे' इत्यर्थेनाऽदोषात् । ध्वनितं चेदम् 'इन्द्रे च' (६।१।१२४) इति सूत्रे भाष्ये । तेनोत्वोष्ठघटितोत्तरपदेऽपि भवतीत्याहुः ।

**ओतुः** =बिडालः । अत्र प्रत्यासत्त्याऽकारस्यौत्वोष्ठयोश्चैकत्र समासे स्थितौ सत्यामेवेदम् । तेनेह न—'वृषलसुतौष्ठव्रणस्ते' इति ।

**ओमाङो** (६।१।९५)—एतदर्थमेव[1] 'एङ्च्येङ्' इति नाऽसूत्रि । तेनेषदर्थकाऽऽङा सह ऋषभशब्दस्य समासे 'अद्य-अर्षभः' इत्यत्र पररूपे 'अद्यर्षभः' इति भवति । अत एवाऽत्र एङीति नाऽनुवर्त्तते । तदुक्तं भाष्ये[2]—चोऽनर्थकोऽनधिकारादेङः' इति । अत एव 'अव्यक्ताऽनुकरणस्याऽतः' (६।१।९८) इत्यत्र न दोषः । नन्वत्र परत्वाद् दीर्घप्रसङ्गः । न च प्रतिपदविधित्वात् पररूपम् । निरवकाशत्वे सत्येव तस्य बलवत्त्वनियामकत्वादिति चेन्न[3] । लक्ष्यानुरोधेनाऽत्र[4] बाध्यसामान्यचिन्ताश्रयणात् । इदञ्च 'आटश्च'(६।१।९०) इति चांऽशेऽप्यावश्यकम् । अन्यथा सोऽपि 'पुरस्तादपवादाः' (प० ६१)

---

१. 'आत् परे पररूपमिति । अत एव एङ्च्येङिति'—इति ख. पाठः ।

२. 'स्पष्टं चेदं भाष्ये' ख. पाठः ।

३. इतोऽग्रे—'तस्य बलवत्त्वनियामकत्वादिति चेन्न । पुनर्विधानार्थेन चकारेण दीर्घबाधात् । ननु तथापि—मध्येऽपवादन्यायेनाऽऽटश्चेत्यस्यैवाऽनेन बाधः स्यात् । तथा च 'औङ्कारीयत्' इत्यत्र वृद्धिर्न स्यात् । आटश्चेति पुनर्विधानार्थचकारस्तु औस्रोयदित्यत्र 'उस्यपदान्तात्' (६।१।९६) इत्येतद्बाधनेन चरितार्थः । न च परत्वादेवाऽऽटश्चेत्यस्य बाधे सिद्धे चकारवैयर्थ्यस्य तदवस्थत्वम् । आटश्चेति चकारेण उसीत्यस्यैवाऽस्य बाधो माभूदित्येतदर्थं तत्सत्त्वादिति चेन्न । लक्ष्याऽनुरोधेनाऽत्र बाध्यसामान्यचिन्ताऽऽश्रयणादिति हरदत्तः'—इति ख. पाठः ।

४. इत आरभ्य 'मनोरमायामित्याहुः' इत्यन्तोऽयं क. ग. पाठः । ख. नास्ति ।

इति न्यायेन 'ओमाङोश्च' (६।१।९५) इत्यस्यैव बाधकः स्यान्न तु 'उसि' (६।१।९६) इत्यस्य। अत एव 'औस्रीयत्' 'औङ्कारीयत्' इत्यत्र वृद्धिसिद्धिरिति दिक्। इदमेवाऽभिप्रेत्य परग्रहणमुत्तरार्थमित्युक्तं मनोरमायामित्याहुः।

'अव्यक्त' (६।१।९८) शब्दं व्याचष्टे—**ध्वनेरिति**। अविद्यमानकत्वादिशब्दस्येत्यर्थः[1]। तस्य चाऽच्छब्दोऽनुकरणे एव सम्भवतीत्याशयेनाऽऽह—**अनुकरणस्येति**। परिस्फुटाऽकारादिवर्णस्येत्यर्थः। तस्य चाऽनुकरणत्वं किञ्चित्साम्येन बोध्यम्। तदभावे हि भग्नदन्ताद्युच्चारित[2]-व्यक्तशब्देऽनुकार्ये एव स्यात्। अव्यक्तत्वं चाऽर्थबोधाऽजनकत्वेनाऽपि वक्तुं शक्यमित्याहुः।

अत्र 'अलोन्त्यस्य' (१।१।५२) इति न प्रवर्त्तते। 'नाऽनर्थके' (प० ७।२।११३) इति निषेधात्। 'आम्रेडितस्य' इति वक्तव्ये 'नाऽऽम्रेडितस्य' (६।१।९९) इत्यस्याऽऽरम्भाच्च। यत्तु 'पूर्वपरयोः' इत्यत्र समुदायस्य षष्ठीनिर्दिष्टत्वादत इत्यस्य पञ्चम्यन्तत्वान्नाऽन्त्यादेश इति **कैयटादयस्तन्न**[3]। 'अक्षादूहिन्याम्' (वा० ६।१।८९) इत्यादौ दोषाऽऽपत्तेः। अत्र पूर्वपरयोः प्रत्येकं स्थानित्वस्वीकाराच्च।

अत ए[4]व 'कृष्णर्द्धिः' इत्यादौ ऋस्थानिकत्वप्रयुक्तरपरत्वसिद्धिः। ध्वनितं चेदमुपधासंज्ञासूत्रे कैयटे।

[न[5]न्वत इति किमर्थम्। 'आद्गुणः' (६।१।८७)इत्यादिवद्'अनुकरणात्' इति वक्तव्ये षष्ठीनिर्देशेनाऽनुकरणाऽवयवस्य स्थानित्वनिर्देशेन, सर्वाऽऽदेशत्वाऽभावसिद्धेः। स चाऽवयवो नाऽन्त्यवर्णः। 'नाम्रेडितस्य' (६।१।९९)

---

१. 'अविद्यमानकत्वादिवर्णस्येत्यर्थः'—ख. ग. पाठः।

२. 'उच्चारिताऽव्यक्तशब्दे' इति ख. पाठः।

३. इतोऽग्रे—'इतरेतरयोगद्वन्द्वान्ते श्रूयमाणषष्ठ्या प्रत्येकं स्थानित्वस्याऽपि बोधनात्' इति ख. पाठः।

४. 'अत एव वृषाकप्य'नीत्यादौ प्रत्येकमादेशः। कृष्णर्द्धिरित्यादौ ऋस्थानिकत्वप्रयुक्तरपरत्वसिद्धिश्च' ख. पाठः।

५. 'निरालम्बनतेति' इत्यन्तः क कुण्डलितः ख. पाठः। ग. नास्ति।

इति ज्ञापकात् । किन्तूपान्त्यवर्णसहितः । ततोऽधिकग्रहणे मानाऽभावात् । न च[1]ाऽद्भिन्नव्यावृत्त्यर्थम् । अस्य[2]ाऽर्थस्य बालैरपि सुज्ञेयत्वेन प्रश्नोत्तरयोर्निरालम्बनतापत्तेः ।

न च 'अतो गुणे' (६।१।९७) इत्यतो'ऽतः' इति शब्दाधिकारेणाऽनुवर्त्यम् । तेनाऽच्छब्दस्येत्यर्थो भविष्यति, किमत इत्यनेन । न च तत् क्रियमाणं तान्तत्वविवक्षार्थमिति, कृतजश्त्वव्यावृत्तये तदिति वाच्यम् । अनुकार्याऽनुकरणयोरभेदेऽतः सत्त्वेन, भेदविवक्षायां जश्त्वेऽपि तस्याऽसिद्धत्वादत एव सत्त्वेन, सर्वत्र[3] प्राप्तेर्दुर्वारत्वात् । नाऽऽम्रेडितस्येति निषेधे 'पटत्पटदिति' इत्युदाहरणाऽसम्बद्धत्वाऽऽपत्तेश्च ।

एतेन—'जश्त्वस्य सर्वथा प्राप्त्योदाहरणाऽऽसम्भवमाशङ्क्याऽनुकार्याऽनुकरणयोरभेदवि[4]वक्षया (विभक्त्य[5]भावेन) 'गवित्ययमाह' इतिवदपदत्वाज्जश्त्वं न' इत्यपि परास्तम् । उक्तरीत्या जश्त्वेऽपि तस्यासिद्धत्वात् क्षत्यभावेनाऽपदत्वादिति हेतूपन्यासस्याऽयुक्तत्वात् । पररूपस्य नित्यत्वेऽपि संहिताया अविवक्षायां तदभावोऽपि सुलभः ।

न च पुनरद्ग्रहणं श्रौततान्तत्वविवक्षाद्वारा जश्त्वाविषयेऽभेदविवक्षायामेव प्रवृत्तिर्यथा स्यान्न तु भेदविवक्षायां जश्त्वविषये इत्यर्थकमिति वाच्यम् । 'अपदान्तात्' (६।१।९६) इत्यनुवृत्त्यैव सिद्धेरिति चेन्न । शब्दाऽधिकारस्याऽनित्यताज्ञापनार्थत्वात् ।

यत्तु **मनोरमायामत्र** प्रकरणे—'प्रश्नोत्तरयोर्निरालम्बनतापत्तेः' इति दृश्यते । तस्याऽयमर्थः—अद्ग्रहणं तद्भिन्नव्यावृत्त्यर्थमित्यर्थस्य बालैरपि सुज्ञेयत्वेन 'अतः किं ?, वटक् मरुत्' इति प्राचीनग्रन्थस्य निरालम्बन[6]ता' इति] ।

---

१. 'एतेनाऽद्भिन्नव्यावृत्त्यर्थं तदित्यपास्तम्' इति क. कुण्डलितः पाठः ।

२. 'निरालम्बनतापत्तेः' इत्यन्तोऽयं ग्रन्थः ख. इहास्ति । क. तु अग्रे दृश्यते ।

३. 'सर्वत्र सिद्धेः' ख. पाठः ।

४. 'विवक्षायां' ख. पाठः ।　　५. मनोरमापाठोऽयम् ।

६. 'नन्वतः' इत्यारभ्य 'निरालम्बनतेति' इत्यन्तः क. कुण्डलितः ख. पाठः । ग. नास्ति ।

**नाम्रेडि** (६।१।९९)–'अव्यक्ताऽनुकरणस्य' इति 'अतः' इनि च वर्त्तते। (सा[1] चाऽऽम्रेडितस्य'इत्यनेन व्यधिकरणषष्ठी) । एवं चाऽव्यक्ताऽनुकरणाऽवयवीभूताऽऽम्रेडितावयवाऽच्छब्दस्येत्यर्थः ।

**तकारमात्रस्येति**—अत्र[2] केचित्—न चैवं 'नाऽम्रेडितस्य, तस्तु व' इत्येव सूत्र्यतामिति वाच्यम् । 'नाऽऽम्रेडितस्य' इत्यंशस्यान्वाचयशिष्टत्वज्ञापनार्थत्वात् । तेन 'वटक् वटक् इति'—इत्यादावन्त्यस्य पररूपं भवत्येव।

न च[3] 'नाम्रेडितस्य', 'अन्त्यस्य वा' इति योगद्वयेनैव पूर्वस्य नित्यत्वे, उत्तरसूत्रस्य वैकल्पिकत्वे च सिद्धे 'तु'शब्दो व्यर्थ इति वाच्यम्[4] । 'निषेधोऽच्छब्दमात्रविषयः, द्वितीयं तकाराद्यन्त्यमात्रविषयम्' इति विषयविशेषस्य स्पष्टतया बोधनार्थं तस्य सत्त्वात् । एवं च 'पटपट इत्याह' इत्यादावन्त्याऽकारस्य पररूपे 'पटपटित्याह' इत्यपि पक्षे बोध्यमिति वदन्ति । तत्तु भाष्याऽनुक्तत्वाद् वैचित्र्यार्थत्वस्याऽपि सम्भवाच्च चिन्त्यम् ।

ननु डाचोऽभावा'ड्डाची'ति द्वित्वाऽप्राप्तिः । 'नित्यवीप्सयोः' (८।१।४) इत्यस्य तु वीप्साद्यभावादप्राप्तिरेवेत्यत आह—**बहुलेति ।**

**तस्य परम्** (८।१।२)—परशब्दस्य दिशि दृष्टत्वेन पञ्चम्यां प्राप्तायामप्यस्मादेव निपातनादवयववाचिपरशब्दयोगे षष्ठी । 'तस्य' ग्रहणमनन्तरस्य 'सर्वस्य द्वे' (८।१।१) इतिप्रकरणद्विरुक्तस्यैव संज्ञा यथा स्यात्, 'एकाचो द्वे' (६।१।१) इत्यादिप्रकरणद्विरुक्तस्य मा भूदिति। अन्यथा 'द्वे' इत्यनुवर्त्य, षष्ठ्या विपरिणामेन च सिद्धे, तद्वैयर्थ्यं स्पष्टमेव। 'पदस्य' (८।१।१६) इत्यधिकारादाह—**पदान्त इति।** 'अन्तग्रहणं' झलीति निवृत्त्यर्थम् ।

(किञ्चा[5]ऽन्तग्रहणं पदस्य इत्यस्य व्रश्चादि (८।२।२६) सूत्रादौ

---

१. क. ग. नास्ति । ख. पाठः ।

२. 'अत्र केचित्' इति क. ग. पाठः । ख. नास्ति ।

३. 'एतेन' ख. पाठः । ४. 'इति परास्तम्' ख. पाठः ।

५. क. ग. नास्ति । ख. पाठः ।

वैयधिकरण्येन सम्बन्धबोधनार्थम् । तेन तण्डुलभृज्जमाचष्टे-तण्डुलभयति । ततः क्विपि 'तण्डुलभ्' इत्यादौ षत्वं न । अर्द्धाऽधिकस्य नाशेन, एकदेश-विकृतन्यायेन भृज्जतित्वप्रत्यभिज्ञाऽभावात् । स्थानिवत्त्वं तु न । सम्पूर्ण-प्रातिपदिकस्य विकारेऽपि. भृज्जतेर्विकाराऽभावात् । वैयधिकरण्याऽन्वयाच्च 'भृज्जत्यन्ते पदत्वं स्थानिवद्भावेन लभ्यम्' इति वक्तुमशक्यम् । ध्वनितं चेदं प्रत्याहाराऽऽह्निके, 'भोभगो' (८।३।१७) इति सूत्रे च कैयटे) ।

हल्सन्धिप्रकरणे सोदाहरणतया व्याख्यास्यमानमपीदं[1] मत्र स्मारितम् । एवं श्रदितीत्यत्रापि बोध्यम् । तत्रैव[2] कुतो न स्मारितमिति चेत् । शिशिपाचोद्यमेतत् । 'सर्वोपकारकतया प्रकरणान्ते स्मारणम्[3]' इत्याहुः ।

अज्झलोः सावर्ण्यनिषेधादाह—**अचि किमिति । [4]अनिष्पत्तेरिति—** '[5]नाज्झलौ' (१।१।१०) इतिसूत्रविषयज्ञानेऽपवादविषयपरिहारेण तत्तद्वर्णीय-सवर्णपदवाच्यनिर्णयोत्तरं तावतां ग्रहणस्य ग्रहणकशास्त्रेण बोध्यतया, एतद्बोधकाले ग्रहणकशास्त्रस्य तावद्ग्रहणबोधकत्वाऽनिष्पत्तेरित्यर्थः ।

य[6]त्तु-'एतद्वाक्यार्थबोधनिष्पत्तिरेव ताभ्यां विना न' इति । तन्न । तद्वाक्यार्थबोधाय 'सवर्ण'पदार्थज्ञापक'तुल्यास्य'(१।१।९)सूत्रज्ञानापेक्षणेऽपि निषेधाऽनपेक्षणादिति दिक् ।

यदा तु प्रयत्नभेदं व्याख्याय नाज्झलाविति प्रत्याख्यायते, नाज्झला-वित्यत्र जातिपक्षो वाऽऽश्रीयते, तदा अचीति नाऽनुवर्त्तनीयम् ।

सूत्रस्थ'सवर्ण'पदाऽनुवृत्तिमभिप्रेत्याऽऽह—**ऋति सवर्ण** (वा० ६।१।१०१)

---

१. इदं—'झलां जशोऽन्ते' इति सूत्रम् ।

२. तत्रैव=श्रदितीत्यत्रैव । ३. 'स्मरणम्' इति पाठान्तरम् ।

४. अनिष्पत्तेरिति । 'तदुपजीव्यत्वात् ग्रहणकशास्त्रस्येत्यर्थः' इति ख पाठः ।

५. 'अनिष्पत्तेरित्यर्थः' इत्यन्तोऽयं क. ग. पाठः ।

६. 'यत्तु' इत्यारभ्य 'इति दिक्' इत्यन्तोऽयं क. ग. पाठः ।

इति। तत्फलन्तु 'दध्यृकार' इत्यादावेतदप्रवृत्तिः। एतद्विधेययोश्चाऽयोगवाहेषु पाठादच्त्वम्। तेनैतत्स्थाने प्लुतसिद्धिः। स च पाठो[1]ऽइउणसूत्रानन्तरं कार्यः। अन्यथा रपरत्वं स्यादिति बोध्यम्। (वस्तुतस्तु सवर्णपदाऽनुवृत्तिरनावश्यकीति ध्वनयन्नाह—**विधेयमित्यादिना**)।

**द्विमात्रमिति**—अत्र च'अकः सवर्णे' (६।१।१०१) इत्यनेनैव एतत्सिद्धिमभिप्रेत्य, एतद्वार्त्तिकद्वयप्रत्याख्यानपरं 'तुल्यास्य' (१।१।९) इति सूत्रस्थं भाष्यं मानम्।

**द्वौ रेफाविति**—अत्रापि तदेव भाष्यं मानम्। द्विरेफवत्त्वे हि रेफद्वयवति स्थानिन्ययम्, लकारवत्यपर इति व्यवस्था सिद्ध्यति।

**अभित** इति—द्वौ रेफावित्यनुषज्यते। तच्च द्वितीयान्तम्। 'अभितः' पदयोगात्। 'एओङ्'सूत्रभाष्ये–'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' इतिपक्षे '[2]अग्ने इन्द्र' 'प्रलृ[3]य' 'खट्वाभिः' 'वाचा तरति' इत्यादौ सवर्णदीर्घ-तुक्-ऐस्-द्व्यज्लक्षणष्ठनां[4] शङ्कायाः, दीर्घात्परस्य लुग्विधानसामर्थ्य-तपरकरणसामर्थ्य-'नौद्व्यचः' (४।४।७) इतिसूत्रस्थ'नौ'ग्रहणसामर्थ्यैरव्यपवृक्तस्याऽवयवे व्यपवृक्तकार्याऽभावज्ञापनरूपसमाधानस्य च करणवत्, प्रातर्ऋतमित्यत्र 'रो रि' (८।३।१४) इत्यस्य, 'तत् ऌकारः' इत्यादौ 'तोर्लि' (८।४।६०) इत्यस्य च शङ्का-समाधानाद्यकरणेन, 'यत् तद्रेफात्परं भक्तेः' इति हयव[5]रट्सूत्रस्थभाष्येण च 'ऋऌक्'सूत्रस्थयोरर्द्धमात्राऽज्भागस्याऽभितः क्लृप्तत्वेन तथैवोचितत्वादिति भाव इत्याहुः।

द्वौ लकाराविति–हल्द्वयवत् पूर्वसाहचर्यादिति भावः। (एवं च[6] सवर्णपदानुवृत्तावपि रेफद्वयवति स्थानिनि 'होतृ ऋकारः' इत्यादौ चरितार्थं–

१. ख. पाठः। २. 'अग्ने इन्द्र' इति ग. नास्ति। क. पुस्तके तु पुनर्योजितः पाठः। ३. आलृय' ख. पाठः।

४. 'द्व्यच्लक्षणठनाम्' इति पाठ उचितः। 'नौ द्व्यचष्ठन्' (४।४।७) इत्यनेन ठन एव विधानात्। ५. अत्र 'एओङ्सूत्रस्थ' इति पाठः इति तु लघुशेखरस्य चिदस्थिमाला-भट्टीटीकयोः।

५. क. ग. नास्ति। ख. पाठः।

वार्त्तिकं 'दध्य्लृकारः' इत्यादौ न प्रवर्त्तते इति न कश्चिद्दोषः)। वार्त्तिके च व्यवस्थितविभाषा। तेन ह्रस्वऋकारद्वयस्थानिकैकादेशे एव पूर्वस्य साधुत्वम्। ह्रस्वऋकारलृकारस्थानिकैकादेशे एवोत्तरस्य साधुत्वम्। एतेन लृकारद्वयवति 'गम्लृ लृकारः' इत्यादौ चरितार्थमुत्तरवचनं[1] 'होतृ लृकारः' इत्यादौ न प्रवर्त्तेत' इति परास्तम्। 'होतृ लृकारः' इति भाष्योदाहरणाच्च। 'स्थ[2]ानेऽन्तरतमे' इतिसप्तम्यन्तपाठस्य प्रत्याख्यानाच्च। अत एव न लृति ऋकारो नाऽप्यृति लृकारः। अत एव वार्त्तिके ऋतीति तपरकरणम्, उत्तरवार्त्तिके लृतीति च चरितार्थम्। 'तुल्यास्य' (१।१।९) सूत्रे भाष्ये 'यदेतदृती'ति एतदृत इति वक्ष्यामि' इत्येतद्वचनाऽऽश्रयणेन ऋलृवर्णयोः सावर्ण्यं न कार्यमिति च सङ्गच्छते। (न[3] चैवं 'होतृ लृकारः' इत्यत्र पक्षे विवृतो दीर्घ ऋकारो न स्यात्। तस्य 'होतृ ऋकारः' इत्यत्राऽत्यन्ताऽन्तरतमे चरितार्थत्वादिति वाच्यम्। लृ वेति विकल्पसामर्थ्येन प्रवृत्तेः। 'होतृ लृकारः' इति तु संहिताया अविवक्षणेन, प्रकृतिभावेन च सिद्धम्। प्रकर[4]णबाधाय च न यः कश्चिदादेशः। नाऽप्याकारादिः। अत्यन्तवैसादृश्यात्। नाऽपि विवृतो दीर्घ लृकारः। तस्याऽनङ्गीकारात्)।

ईषत्स्पृष्टौ चेमौ। विवृतत्वे हि ऋकारलृकाराभ्यामनयोरपि ग्रहणेऽकः सवर्णे (६।१।१०१) इत्यनेनैव सिद्धौ, वार्त्तिकस्य, अयोगवाह[5]पाठस्य च तत्प्रत्याख्यानभाष्योक्तस्य वैयर्थ्यापत्तेः।

न च यः कश्चिदेव प्रयत्नोऽस्त्विति वाच्यम्। उपस्थितरेफीयप्रयत्नत्यागे मानाभावात्। एतेन संवृतत्वमर्द्धतृतीयमात्रत्वं च षाष्ठकैयटोक्तमपास्तम्। [ए[6]वं च सूत्रेऽपि सवर्णपदमनावश्यकम्। 'अकोऽकि' इत्येव यथासङ्ख्येनेष्टसिद्धेः। 'ऋ[7]ति ऋ वा' इत्यादेरपि दध्यृकारादौ व्यवस्थितविभाषयैवाऽप्रवृत्तिसिद्धेः।] अक्शब्देनाऽकारादीनां क्रमेणोपस्थितत्वाद्

---

१. 'ऋकारः' इति ख. पाठः। २. 'प्रत्याख्यानाच्च' इत्यन्तः क. ग. पाठः।
३. क. ग. नास्ति। ख. पाठः। ४. प्रकरणाऽबाधाय' इत्युचितः पाठः।
५. 'वर्णसमाम्नायपाठस्य च' ख. पाठः।
६. ग. नास्ति। क. कुण्डलितः ख. पाठः। ७. 'सिद्धेः' इत्यन्तः क. पाठः।

यथासङ्ख्य(१।३।१०)सूत्रस्य, स्थानाऽऽख्यप्रमाणस्य च प्रवृत्तेः। संज्ञाशब्दे यथासङ्ख्यार्थं 'परस्मैपदानां णल्' (३।४।८२) इत्यादौ भाष्ये सूत्रान्तरस्थ-क्रमग्रहणात्। तथा चाऽक्शब्देनाऽकाराद्यष्टादशभेदोपस्थित्यनन्तरमि-काराद्यष्टादशभेदोपस्थितिः। तद्वाच्यवाच्यत्वेन लक्षणायामपि, अकार-ककारयोराद्यन्तत्वज्ञानायाऽइउणित्याद्युपस्थितेरावश्यकत्वेन[1], सूत्राऽन्तरस्थ-क्रमाऽनुरोधेन च तथैवोपस्थितेरुचितत्वात्। अष्टादशभेदेषु परं न क्रमेणो-पस्थितिः। तेषां क्रमेण क्वचिदप्यपाठात्।

न च 'ह्रस्वदीर्घप्लुत'इति क्रमेणैव संज्ञाकरणात् तेषां तेनैव क्रमेणो-पस्थितिरुचिता। 'तुल्यास्य' (१।१।९) इति निर्देशेन तत्क्रमस्य नियामकत्वा-ऽनाश्रयणात्। अत एव 'मतीशः'[2] इत्यादौ दीर्घसिद्धिः। अत एव 'संयन्ता' इत्यादौ निरनुनासिके साऽनुनासिकलोप उक्तो भाष्यकृता। जातिपक्षे तु क्रमोपस्थितिः स्पष्टैव। यद्यप्यनया रीत्या 'इको यणचि' (६।१।७७) इत्यत्राऽपि यथासङ्ख्यं सूपपादम्, तथाऽपि ऋकारे लकारस्य, लृकारे रेफस्य चाऽऽपत्त्योपेक्षितम्]।

एतद्वचनद्वयप्रत्याख्यानन्तु 'गमॄन्' इत्येतद्व्याख्याऽवसरे निरूपयिष्याम इत्यलम्। (वक्ष्य[3]त इति। 'ऋत्यकः इति' (६।१।१२८)-इति भावः)।

**एङः** (६।१।१०९)–पदान्तात् किम्? भवति 'ङसिङसोश्च'[4] (६।१।११०) इत्यस्यार[5]म्भात् 'अपदान्ताच्चेन्ङसिङसोरेव' इति नियमेन सिद्धे, 'पदान्तात्' (६।१।७६) इति इकोऽसवर्णे' (६।१।१२७) इत्याद्युत्तरार्थमावश्यकं स्पष्टार्थ-मिहैव कृतमिति **मनोरमा**। 'विभक्तौ चेन्ङसिङसोरेव' इतिविपरीतनियम-शङ्कावारणार्थमिति तदाशयः

---

१. 'आवश्यकत्वेन' इत्यन्तः क. पाठः।

२. 'मतीशो मध्वरिरित्यादौ दीर्घ-तदभावयोः सिद्धिः' ख. पाठः।

३. क. ग. नास्ति। ख. पाठ.।

४. 'तदाशयः' इत्यन्तोऽयं ख. पाठः। क. कुण्डलितः।

५. 'ङसिङसोश्चेतीति नियमेन सिद्धे पदान्तादिति' क. पाठः।

**सर्वत्र वि**—(६।१।१२२) यद्यपीह 'छन्दसि' इति न प्रकृतम्, तथाऽपि 'यजुष्युरः' (६।१।११७) इत्यादिप्रक्रमाच्छन्दस्येवेदमिति सम्भाव्येताऽतः सर्वत्रेत्युक्तम् ।

तद्व्याचष्टे—**लोके वेदे चेति** । 'प्रकृत्याऽन्तः' (६।१।११५) इति सूत्रात् प्रकृत्येत्यनुवर्त्तते । अत्र पाठे-शाकल(६।१।१२७)सूत्रे 'ह्रस्वश्चेति चेन प्रकृत्येत्यनुकृष्यते' इति भाष्यं मानम् । 'प्रकृति'शब्दश्चाऽत्र स्वभाववाची । 'दुस्त्यजा प्रकृतिः' इत्यादौ तथादर्शनात् । अत एव[1] प्रकृतिभावे, न पूर्वरूपम्, नाऽप्ययादय इति भावः ।

(कार[2]णवाची वा 'प्रकृति' शब्दः । का[3]रणरूपेणाऽवस्थानमित्यर्थः । न तु तस्य किञ्चित् कार्यमिति भावः) । 'इको गुण' (१।१।३) इतिसूत्रस्थभाष्यसम्मत–'नान्तःपादमिति पाठे तु अनेन सूत्रेण 'गोशब्दस्य[4] यत् प्राप्तं तन्न' इति व्याख्यानेन 'नान्तः पादम्' इत्यत्रेव पूर्वत्वा[5]दिकं विकल्पेन निषिध्यते इति बोध्यम् ।

अत्र पाठे 'प्लुतप्रगृह्याः' (६।१।१२५) इत्यादावध्याहारेण[6]ाऽन्वयक्लेशः । (बाध्य[7]सामान्यचिन्ताऽऽश्रयणं च । 'नान्तः पादम्' इत्यत्र च भ्रष्टाऽवसरन्यायाश्रयणं बोध्यम्) । न च प्रकृत्येत्यनेन 'गोः' इति षष्ठ्यन्तमन्वयाऽयोग्यमिति वाच्य[8]म् । अवस्थानमित्यध्याहारेणाऽदोषात् ।

'एङः' इति वर्त्तते । तच्च षष्ठ्यन्ततया विपरिणतं गोर्विशेषणम् । अत

---

१ 'अत एव सुजाते ए अश्वसूनृते' इत्यादौ 'प्रकृत्याऽन्त पादम्, इति प्रकृतिभावे' इति ख. पाठः ।

२. ख. पाठः । ३. 'रूपेणाऽव्यवस्थानं' ख. पाठः ।

४. 'गोशब्दस्य' इत्यारभ्य 'नान्तः पादमित्यत्रेव' इत्यन्तः क. पाठः । ख. ग. नास्ति । ५. 'पूर्वत्वं' ख. पाठः ।

६. 'अध्याहारेणान्वयः' ख. पाठः । ७. क. ग. नास्ति । ख. पाठः ।

८. 'अन्वयाऽयोग्यमिति वाच्यम् । 'एङः' इत्यस्य प्रथमान्ततया विपरिणामात् । सामानाधिकरण्याऽन्वयवादिनोऽपि षष्ठ्यन्ततया विपरिणामस्याऽऽवश्यकत्वात्'—इति ख. पाठः ।

एव चित्रग्वग्रमित्यादौ न दोषः[1]।

प्रतिपदोक्त(प० ११५)परिभाषया चैङ् प्रतिपदोक्त एव गृह्यते। वर्णग्रहणे तदप्रवृत्तिज्ञापकस्य 'आदेच' (६।१।४५) इति सूत्रस्थोपदेशग्रहणस्य तदनित्यतामात्रज्ञापकत्वात्। ध्वनितं चेदम् 'ओत्' (१।१।१५) सूत्रे भाष्ये। एङ्ग्रहणा[2]ऽऽवृत्तेर्वा। अत एव 'हे चित्रगोऽग्रम्' इत्यादौ न प्रकृ[3]तिभावाऽवङौ।

तथा च 'स्थानिवत्' (१।१।५६) सूत्रे भाष्यम्—गोः पूर्वत्वे स्थानिवत्त्वप्रतिषेधो वक्तव्यः। चित्रग्वग्रम्। सर्वत्र विभाषा गोरिति पूर्वत्वं प्राप्नोति। नैतत्प्रयोजनम्। 'एङः' इति वर्त्तते। एवञ्चा[4]ऽनल्विधाविति प्रतिषेधो भविष्यति। एवं तर्हि 'हे चित्रगोऽग्रम्' इत्यत्र प्रा[5]प्नोति इति।

---

१. इतोऽग्रे—'पदान्त'ग्रहणसामर्थ्याच्चैङ् प्रतिपदोक्त एव गृह्यते। अन्यथा ङसिङसोश्चेति नियमादेव सिद्धे,'एङः' (६।१।१९९)इति सूत्रे पदान्तादिति व्यर्थम्। न च 'विभक्तौ चेन्ङसिङसोरेव' इति विपरीतनियमस्याऽपि सम्भवेन तच्चारितार्थ्यम्। 'भवतेरः' (७।४।७३) इत्यादिनिर्देशात्, सामान्ये प्रमाणानां पक्षपाताच्च सामान्यतो नियमाऽऽश्रयणात्।

न चैवमपि 'इकोऽसवर्णे' (६।१।१२७) इत्यत्र तस्याऽऽवश्यकत्वेन कथं सामर्थ्यम्। तत्रैव कर्त्तव्येऽत्र करणेन सामर्थ्यस्योपपादयितुं शक्यत्वात्। अत एव मनोरमायाम् 'उत्तरार्थमावश्यकं स्पष्टार्थमिहैव कृतम्' इत्युक्तम्। प्रतिपदोक्त(प० ११५)परिभाषया वा' इति ख. पाठः। क. ग. नास्ति।

२. 'एङ्ग्रहणाऽऽवृत्तेर्वा' इति क. ग. पाठः। ख. नास्ति।

३. 'अत एव 'हे चित्रगोऽग्रम्' इत्यादौ न दोषः। 'न' इति पाठेऽनन्तरत्वात् पूर्वरूपस्यैव निषेधः, न तु यण इत्येङनुवृत्तिरेव प्रतिपदोक्तैङ्ग्रहणाऽर्थेति बोध्यम्। एवञ्च 'गोः पूर्वत्वे स्थानिवत्त्वप्रतिषेधो वक्तव्यः' इति ख. पाठः।

४. 'भविष्यति' इत्यन्तोऽयं क. ग. पाठः।

५. 'प्राप्नोतीति भाष्योक्तं प्रतिषेधवचनं न कर्त्तव्यं भवति'—ख. पाठः।

अत्र[1] 'पूर्वत्व'पदेन तदपवादप्रकृतिभावाऽवङौ बोध्यौ। विनिगमनाविरहात्। सर्वत्रेति चाऽवङित्यस्याऽप्युपलक्षणम्। अत एव वार्त्तिकभाष्ययोः 'प्रकृतिभावे' इति नोक्तम्। चित्रगोशब्दे गोशब्दस्य लाक्षणिकत्वेऽपि, स्थानिवत्त्वात् प्राप्तौ तत्प्रतिषेध इति तदाशयः। एङः प्रतिपदोक्तस्याऽत्र ग्रहणे तु तन्न कर्त्तव्यमित्यन्यत्। ([2]इदं सर्वमुत्तरसूत्रेऽपि बोध्यम्।

ननु[2] 'गोरग्वचनं स्वरसिद्धयर्थम्। अन्यथा कदाचिदवङन्तोदात्तोऽपि स्यात्' इत्यवङ् (६।१।१२३) सूत्रभाष्यप्रामाण्यात् 'चित्रग्वग्रम्' इत्यत्राऽवङभावोऽस्तु। तत्राऽगवङो रूपे विशेषस्य स्पष्टत्वात्। 'चित्रगोऽग्रम्'-इत्यत्राऽवङभावकल्पने किं मानमिति चेन्न। उपदेशे आद्युदात्तत्वनिपातनेनाऽवङ्न्यासस्थापनपरभाष्यस्यैव मानत्वात्। चित्रगोशब्दस्याऽऽमन्त्रिताऽऽद्युदात्तत्वेनाऽन्तोऽनुदात्तः। तत्राऽकि, तस्याऽऽगमाऽनुदात्तत्वे, उभयोरनुदात्तयोरेव श्रवणं स्यात्। आद्युदात्तनिपातने तु गकाराऽकारस्योदात्तस्येति विशेषः स्पष्ट एव। न च 'गवाक्षः' इत्यादाववङ आद्युदात्तस्य श्रवणं मा भूदिति, तस्योपदेशिवद्भावो वाच्य इति, समासान्तोदात्तादिवाऽऽमन्त्रिताऽऽद्युदात्तादपि प्रागवङ्स्वरप्रवृत्तौ, पश्चादामन्त्रितस्वरे, स्वरभेदाऽभाव इति वाच्यम्।

गवाक्ष[3] इत्यादौ समानकालप्रवृत्तिकस्य, परत्वेन प्रथमं प्राप्तस्य समासस्वरस्य प्रागप्रवृत्त्या उपदेशिवद्भाववचनस्य चारितार्थ्येना[4]ऽङ्गसंज्ञासापेक्षबहिरङ्गगुणापेक्षयाऽन्तरङ्गत्वात् पूर्वमेवामन्त्रितस्वरप्राप्त्या तदप्रवृत्तिसम्पादनेऽस्य सामर्थ्याऽभावादित्याहुः)।

---

१. 'अत्र' इत्यारभ्य 'इत्यन्यत्' इत्यन्तः क ग. पाठः। ख. नास्ति।

२. ग. नास्ति। क. कुण्डलितः ख. पाठः। अयं ग्रन्थो लघुशब्दरत्नेऽपि दृश्यते।

३. 'गवाक्ष इत्यादौ' इति ख. नास्ति।

४. 'चारितार्थ्येनावङः पूर्वं प्राप्ताऽन्तरङ्गामन्त्रितस्वराऽप्रवृत्तौ मानाऽभावात्' ख. पाठः।

न चैङः पदान्तात् (६।१।१०९) इत्यत्राऽपि प्रतिपदोक्तस्यैव ग्रहणाऽपत्तिः। 'हलोऽनन्तरा' (१।१।७) इत्यादिनिर्देशात्।

**अवङ् स्फो** (६।१।१२३)—स्फोटोऽयनं यस्य। स्फोटप्रतिपादक इत्यर्थः। 'स्फौटायनस्य' इति पाठे नडादित्वमश्वादित्वं वा कल्प्यम्। अत्राऽपि 'एङन्तस्य गोः' इत्यादि पूर्ववद् व्याख्येयम्।

ननु नित्याः शब्दाः। शास्त्रं चेदं साधुत्वमात्रविधायकम्। 'गोशब्दे गकारात् परोऽचि परेऽवङ् साधुः' इत्याद्यर्थः शास्त्राणाम्। एवं च प्राधान्यादवङः साधुत्वं स्फोटायनेन स्वीकृतम्, न सर्वैरिति स्मृत्यन्तराऽनुसन्धानद्वारेण तस्यैव विकल्पाऽऽपत्तिरिति, 'गोऽग्रम्' इत्यवङभावोऽनुचित इति चेन्न। साधुत्वस्याऽपौरुषेयतयाऽविकल्प्यत्वेनाऽवङादीनां श्रुतत्वेन च, लडादिषु प्रयोगाऽसमवायिषु श्रुत एव सम्बन्धस्य क्लृप्तत्वेन, श्रुताऽवङादिभिरेव सम्बन्धेन तदुपपत्तेः। स्फोटायनोऽवङः स्मर्त्ताऽन्यस्तु तदभावस्येति स्मृत्यन्तराऽनुसन्धानद्वारेण विकल्पसिद्धिः। 'कार्याः शब्दाः' इति मते तु न सिद्धयेत्। नहि तन्मते 'स्फोटायनेनाऽवङ्कृ[1]तोऽतः कर्त्तव्योऽन्येन न कृत इति न कर्त्तव्यः' इति स्मृत्यन्तराऽनुसन्धानेन विकल्पो व्याख्यातुं शक्यः। अन्येनोत्पादितस्य पुनरुत्पादनाऽयोगात्। पाणिनिकृतकार्याणामप्यन्येनाऽकरणात् सर्वत्र विकल्पाऽऽपत्तेश्च। अन्येनाऽपि तेषां कृतत्वे तु पाणिनिशास्त्रे कार्यशब्दत्वस्य हानिरेव। 'देवदत्तेन घटः कृतो न विष्णुना' इत्येतावता घटोत्पत्तेर्विकल्पाऽऽपत्तेश्च' इति 'नवेति विभाषा' (१।१।४४) इत्यत्र भाष्ये स्पष्टम्। न चैवं साध्वनुशासनत्वभङ्गः। शब्दानां सिद्धत्वेन शास्त्रवैयर्थ्याऽऽपत्त्या, 'मृजिप्रसङ्गे मार्जिः साधुर्भवति' इत्यादिवृद्धिसंज्ञासूत्रस्थभाष्यादिप्रामाण्येन च 'यदिह परिनिष्ठितेन ज्ञाप्यं तत्साधु' इत्यर्थापत्तिकल्प्यवाक्येन तत्सिद्धेरित्याहुः।

---

१. *'अवङ् कृतो नान्येनेति स्मृत्यन्तरानुसन्धानेन' इति ख. पाठः।*

**निवृत्तमिति**—अत एव 'इन्द्रे च' (६।१।१२४) इति सामर्थ्येन नित्यम् इति भाष्यकैयटयोः स्पष्टम्। **गवाग्रमिति**—न च सन्निपात(प. ८७)-परिभाषया दीर्घो न स्यात्। अत एव स्त्रीवाचकगोशब्देन समासे 'जातेरस्त्री' (४।१।६३) इति ङीष् नेति वाच्यम्। भाष्याऽऽदिप्रामाण्येन एकादेशे तदप्रवृत्तेः। (एतेन[1] 'गवे' इति प्रत्युदाहरणमिति परास्तम्। सत्यप्यवङि 'अतो गुणे' (६।१।९७) इत्यनेन सिद्धेः। यादेशटापौ तु ङीष्वत् सन्निपात-(प.८७) परिभाषया सुशकवारणावित्याहुः)।

**व्यवस्थितेति**—(अ[2]त एव 'विभाषा'इत्यनुवर्त्तमाने स्फोटायनग्रहणं चरितार्थम्)। व्यवस्थितविभाषात्वं चाऽस्य—

**देवत्रातो गलो ग्राह इतियोगे च सद्विधिः।**
**मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः॥**

—इत्यादिना 'शाच्छोरन्यतरस्याम्' (७।४।४१) इति सूत्रे भाष्ये स्पष्टम्। तेन 'प्राण्यवयवे न भवत्येव' इत्यपि तत्रैव भाष्ये स्पष्टम्।

**गवाक्ष इति**—गवामक्षीवेति विग्रहः। 'अक्ष्णोऽदर्शनात्' (५।४।७६) इत्यच्। वातायने रूढोऽयम्। पुंस्त्वं लोकात्।

**इन्द्रे च** (६।१।१२४)—क्वचिद् भाष्यपुस्तके 'च'शब्दरहितः पा[3]ठोऽपि दृश्यते। षष्ठीतत्पुरुषोत्तर-षष्ठीतत्पुरुषे 'गवेन्द्रयज्ञः' इत्यादाववङ् भवत्येव। 'इन्द्राऽवयवेऽचि' इति व्याख्यानात्। अन्यथा वाक्ये गोशब्दस्येन्द्रपरत्वाऽसम्भवेन, समासाऽऽक्षेपादिन्द्रशब्दस्योत्तरपदत्व एव प्रवृत्तिरिति—अत्र न स्यादिति भाष्ये स्पष्टम्।

---

१. क, कुण्डलितोऽयं ख. पाठः। ग. नास्ति।
२. ख. पाठः। क. ग, नास्ति।
३. 'पाठो दृश्यते' इति ख. पाठः।
४. गवाम्—इन्द्रयज्ञ इत्यर्थे 'गवेन्द्रयज्ञः' इत्यादावित्यर्थः।
५. इतोऽग्रे सर्वत्रेति सूत्रत्रयं 'प्रकृत्याऽन्तः' (६।१।११५) इत्यतः पूर्वमेव

## अथ प्रकृतिभावः

'प्लु[1]तप्रगृह्याः' (६।१।१२५) इत्यस्य 'प्रकृत्या' इतिपाठे एव सामञ्जस्यमिति ध्वनयन्नाह—

**अथ प्रकृतीति**। एतेनाऽयं ग्रन्थः 'सर्वत्र' (६।१।१२२) इति सूत्रात् पूर्वमेव वक्तुं युक्त इत्यपास्तम्। ननु पदार्थबोधस्य वाक्यार्थबोधहेतुत्वात् प्र[2]गृह्यत्वकथनोत्तरं प्रकृतिभावो वक्तुं युक्त इति चेन्न[3]। 'इन्द्रे च' (६।१।१२४) इति सूत्रे प्राचीनपठितनित्यग्रहणस्य प्रामादिकत्वं बोधयितुं तदव्यवहितमेतत्सूत्रलेख[4]नात्। तत्र हि नित्यग्रहणे, तदव्यवहितोक्तैतत्सूत्रे नित्यग्रहणवैयर्थ्यं स्पष्टमेवेत्याशयेनाऽऽह—**प्लुताः प्रगृह्याश्च वक्ष्यन्त** इति।

**अचीति**—न चाऽचीत्यनुवर्त्तमाने पुनरज्ग्रहणं व्यर्थमिति वाच्यम्। प्रत्यासत्तिन्यायेन 'य[5]स्मिन्नचि परतः प्लुतप्रगृह्ययोः प्रकृतिभावो विधीयते,

---

'ख्यत्याद्' (६।१।११२) इत्युत्तरं पाठ्यम्। 'अतो रोः' (६।१।११३) इति सूत्रेऽप्लुतेति पाठ्यम्। एवं च 'यजुष्युरः' (६।१।११७) इत्यतः प्रक्रान्तयजुःपदव्यावृत्तये सर्वत्रग्रहणं न कर्त्तव्यं भवतीति लाघवम्। 'विभाषा गोः' इत्यनेन हि पूर्वरूपस्यैव प्राप्तस्य विकल्पः। न चैवं तदभावेऽव् दुर्वारः। अपवादे निवृत्ते पुनरुत्सर्गाऽप्रवृत्ते। 'नान्तः पादम्' इति पाठे 'सुजाते ए अश्वसूनृते' इत्याद्यर्थमस्याऽर्थस्यावश्यकत्वात्। नहि 'न'-शब्देन निवृत्तौ, 'विभाषा'शब्देन वा निवृत्तौ कश्चिद् विशेषोऽस्ति। प्राप्तविभाषाया निषेध एव तात्पर्याच्च। ध्वनितं चेदं 'गोः पूर्वणित्त्वाऽऽत्त्वे' इति वार्त्तिकव्याख्याऽवसरे स्थानिवत्सूत्रभाष्ये। तदेतद् ध्वनयन्नाह—अथ प्रकृतीति'—इति ख. पाठः।

१. 'प्लुतप्रगृह्याः' इत्यारभ्य 'ध्वनयन्नाह' इत्यन्तः ख. नास्ति। क. ग. पाठः।

२. 'प्लुतप्रगृह्यत्वकथनोत्तरं' ख. पाठः।

३. इतोऽग्रे—'उभयकथनोत्तरमेतत्कथने प्लुतोदाहरणेषु सन्ध्यकरणे बीजांऽशे निराकांक्षता न स्यात्। अन्यतरकथनोत्तरं कथने त्वन्यतराऽज्ञानं तदवस्थमेव' इति ख. पाठः।

४. 'लेखनाच्च' ख. पाठः।

५. 'यस्मिन्नच्यादेशो विधीयते तस्मिन्नेवाचि परतः प्लुतप्रगृह्ययोः प्रकृतिभाव इत्यर्थलाभार्थं तत्सत्त्वात्' ख. पाठः।

तदज्निमित्तककार्यस्यैवाऽभावस्तेनेत्यर्थलाभार्थं तत्सत्त्वात् । तेन 'जानु उ अस्य रुजति'-'जान् अस्य रुजति', 'जान्वस्य रुजति' इत्यादौ सवर्णदीर्घ-रूपसन्धिर्भवत्येवेति भाष्ये एव स्पष्टम् । **एहि कृष्णेति**—'दूराद्धूते च' (८।२।८४) इति प्लुतः । न च प्लुतस्याऽसिद्धत्वम् । प्लुतप्रकृतिभाववचनेन तद्विषये त्रैपादिकाऽसिद्धत्वाऽभावज्ञापनात् । **नित्यमिति किमिति**—वाग्रहण-निवृत्तेरेव नित्यत्वलाभ इति प्रश्नः । **मा भूदिति**—नित्यग्रहणसामर्थ्येन पुनर्विधानाद् बाधकविषयेऽप्ययमेव भवतीति भावः ।

**इकोऽसवर्णे** (६।१।१२७)—'एङः पदान्तात्' (६।१।१०९) इत्यतः पदान्तादित्यनुवृत्तं प्रथमया विपरिणम्यते इत्याह—**पदान्ता इति ।** यत्तु 'शाकल्यग्रहणमुत्तरार्थम् । ह्रस्वयणोर्विधानसामर्थ्यादपि पर्यायसिद्धेः । सवर्णेऽचि दीर्घविधानेनाऽसवर्णाऽच एव यणादेशविषयत्वात्' इति । तन्न । अपदान्ते यणश्चरितार्थत्वेन पदान्ते ह्रस्व-प्रकृतिभावयोरपवा-दत्वाऽऽपत्तेरित्याहुः ।

**सामर्थ्यादेवेति**—एवकारोऽवश्याश्रणीयतामस्य सूचयति । चका-रेण प्रकृतिभावानुकर्षणेऽपि 'ऋत्यकः' (६।१।१२८) इत्यत्र तदनुवृत्तिर्न स्यात् । चाऽनुकृष्टत्वात् । तदर्थं ह्रस्वविधानसामर्थ्यस्याऽऽवश्यकत्वे चकारो व्यर्थ इति भावः ।

**भाष्ये स्थितमिति**—'प्रकृतसूत्रे' इति शेषः । न च ह्रस्वस्य वैकल्पिक-तया ह्रस्वाऽभावे प्रकृतिभावार्थं चकारः । तेन 'चक्री अत्र' इत्यादिसिद्धिः । प्रकृतिभावस्याऽपि वैकल्पिकत्वात् पक्षे 'चक्र्यत्र' इत्यपीति वाच्यम् । 'इको-ऽसवर्णे शाकल्यस्य' (६।१।१२७), 'ह्रस्वः' (७।४।५९) इति सूत्रद्वयकरणेनैव सिद्धौ चकारस्य तथाऽपि वैयर्थ्यादित्याशयात् । किञ्च भाष्यप्रामाण्यान्न ह्रस्वाऽभावे प्रकृतिभावः 'चक्री अत्र' इति तु संहिताया अविवक्षायां

---

१. 'न च प्लुतस्याऽसिद्धत्वात् पूर्वमेव सवर्णदीर्घ.' ख. ग. पाठः ।

२. 'प्रकृतिभावानुकर्षणे 'ऋत्यकः' इत्यत्र' इति ख. पाठः ।

बोध्यम्। चानुकृ[1]ष्टस्योत्तरत्राऽसम्बन्धान्न तद्विषयेऽपि फलमिति बोध्य[2]म्। भाष्यविरुद्धसूत्राऽऽशयकल्पनाऽपेक्षया सामर्थ्यसिद्धाऽर्थाऽनुवादकश्चकार इत्येव सूत्राऽऽशयस्य वक्तुमुचितत्वात्। [3]**चक्रचत्रेति**—इह 'स्कोः' (८।२।२९) इति लोपो यणः कार्यकालपक्षे बहिरङ्गाऽसिद्धत्वान्न। 'पूर्वत्राऽसिद्धे न' (वा० ८।४।१) इत्यस्य 'तस्य दोषः' (वा० ८।४।१) इति निषेधेन स्थानिवद्भा-वाच्च।

**न समासे** इति (वा० ६।१।१२७)—अत्र च ज्ञापकम्-'इको यणेव क्वचिद् यथा स्यात्' इत्यर्थकमिग्ग्रहणम्। अन्यथा ह्रस्वदीर्घपदाऽनुवृत्त्यैव व्यञ्जनव्यावृत्तिसिद्धेः, प्लुतस्य प्रकृतिभावात्, अवर्णेक्षु च यथायथमयवा-यावाम्, दीर्घस्य, गुणवृद्धयोश्च बाधकत्वात् तद्वैयर्थ्यं स्पष्टमेव। अप्लुतव-द्भावे त्वप्लुतशब्दस्य पर्युदासवृत्त्या ह्रस्वदीर्घपरत्वेन, तत्कार्याऽतिदेशात्, प्लुतस्याऽसिद्धत्वाच्च सिद्धिरित्यग्रे निरूपयिष्यामः। एतेन '**सिति च न**' इत्यपि व्याख्यातम्। **पार्श्वमिति**—'पर्शवा णस् वक्तव्यः' (वा० ४।२।४३) इति णस्। 'सिति च' (वा० ६।१।१२७) इति पदत्वम्।

ऋत्यकः (६।१।१२८)—सवर्णाऽर्थमनिगर्थं च[4] वचनम्,—'होतृ ऋकारः 'ब्रह्म ऋषिः' इत्यादौ। **आर्च्छदिति**—आटो धात्ववयवत्वेनाऽपदान्तत्वादिति भावः।

यत्तु—आर्च्छदित्यत्राऽऽटश्चेति पुनर्विधानार्थेन चकारेणोस्योमाङ्क्षु पररूपबाधवत् प्रकृतिभावस्याऽपि बाधेनेष्टसिद्धौ व्यर्थं 'पदान्ता'इति। तन्न। 'अनन्तरस्य' (प. ६३) इति न्यायेन पुनर्वृद्धिविधानस्य पररूपमात्र-बाधकत्वात्। ईषद[5]समाप्त ऋच्छको बहृवृच्छक इत्यादेर्व्यावर्त्यस्य सत्त्वाच्च।

---

१. 'चानुकृष्टस्य' इत्यारभ्य 'फलमिति बोध्यम्' इत्यन्तः पाठः ख. नास्ति। क. ग. पाठः।

२. इतोऽग्रे—'एवं च 'विश्वप ऋषीणाम्' 'विश्वपर्षीणाम्' इत्येव, न तु 'विश्वपा ऋषीणाम्' इति'-इति क. कुण्डलितोऽयं ख. पाठः ग. नास्ति।

३. इत आरभ्य 'स्थानिवद्भावाच्च' इत्यन्तः क. कुण्डलितः ख. पाठः। ग. नास्ति।

४. 'चः' ख नास्ति।

५. 'ईषदसमाप्त' इत्यारभ्य 'सत्त्वाच्च' इत्यन्तः क. ग. पाठः। ख. नास्ति। 'ईषदसमाप्तो ऋच्छकः' इति क. ग. पाठः।

**समासेऽपीति**—पूर्वोक्तज्ञापकपरभाष्यप्रामाण्यात्, सित्साहचर्याच्च 'न समासे' (वा० ६।१।१२७) इत्यस्य पूर्वसूत्रमात्रनिषेधकत्वात्। पूर्वसूत्रस्येवाऽस्याऽभावे प्रमाणाऽभावाच्चेति भावः।

**सप्त ऋषीणामिति**—'दिक्सङ्ख्ये संज्ञायाम्' (२।१।५०) इति समासः।

तत्र प्रकरणशुद्धये प्रकृतिभावविधायकसूत्रद्वयमुपन्यस्य, 'प्लुतप्रगृह्याः' (६।१।१२५) इतिसूत्राऽऽकांक्षितप्लुतप्रगृह्ययोर्मध्ये सूत्रे प्रथमोपात्तत्वात् प्लुतप्रकरणमारभते—

**वाक्यस्य टेः** (८।२।८२)—वाक्यस्येत्यस्याऽभावे 'पदस्य टेः' इत्यर्थाऽऽपत्तावनन्त्यस्याऽपि पदस्य टेः प्लुतः स्यात्। तत्सत्त्वे तु वाक्यस्य टिरन्त्यपदस्यैव सम्भवतीति न कश्चिद् दोषः। टिग्रहणाऽभावे प्लुतश्रुत्याऽच्परिभाषोपस्थितावजन्तस्यैव स्यात्, नपुंसकह्रस्ववत्[1]। टिग्रहणे तु तत्सामर्थ्यात् टिनाऽचो विशेषणाद् व्यञ्जनाऽन्तस्याऽपि भवति।

**प्रत्यभिवादे** (८।२।८३)—प्रणामादिभिराशिषं वाच्यमानो गुर्वादिर्यदाशिषं प्रयुङ्क्ते, स प्रत्यभिवादः। तत्रैव प्रसिद्धत्वात्। 'अशूद्रे' इति सप्तम्यर्थो विषयत्वम्। तथा च 'शूद्रभिन्नविषयके आशीर्वादे इत्यर्थः' इति **हरदत्तादयः**। यथा तु भाष्यं तथा 'प्रतिसम्भाषणमात्रं प्रत्यभिवादः' इति प्रतीयते। तथा च भाष्यम्—'अशूद्र इति किमर्थम्। कुशल्यसि तुषजक' इति। शूद्रे आशीर्वचनरूपप्रत्यभिवादाऽभावेनाऽशूद्रे इत्यस्य वैयर्थ्याऽऽपत्तेश्च। ध्वनितं चेदं **कैयटे**। तस्मादाशीर्वचनरूपं कुशलादिप्रश्नरूपं वाऽभिवादयितर्यनुग्रहद्योतकं वाक्यमात्रं 'प्रत्यभिवाद'शब्देनोच्यते इत्याहुः।

**अभिवादये इति**—नमस्कारपूर्वकमाशीरादि वाचयामीत्यर्थः। **आयुष्मानिति**—आयुष्मत्त्वस्य विधेयत्वात् सम्बोधनविभक्त्यभावः। अत्र[2]

---

१. 'ह्रस्वत्ववत्' ख. पाठः।

२. 'अत्र प्रत्यभिवादे' इत्यारभ्य 'इत्युदाहरणाच्चेति बोध्यम्' इत्यन्तः क. ग. पाठः। ख. नास्ति।

प्रत्यभिवादे शर्मादिप्रयोगो न नियतः। 'एचोऽप्रगृह्यस्य' (८।२।१०७) इति-सूत्रे प्रत्यभिवादेऽन्तस्यैचः प्लुतस्य आद्विधानात्[1]। तदुत्तरार्धस्येदुतोर्विधा-नात्। 'आयुष्मानेधि अग्निभूता३इ' इत्युदाहरणाच्चेति बोध्यम्। यत्तु— **'आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने'** इति मनूक्तेरेधीति प्रयोगश्चिन्त्यः, इति। तन्न। तत्र भवेत्यस्याऽर्थपरत्वादित्याहुः।

**स्त्रियां नेति** (वा० ८।२।८३)—ये तु स्त्रिया नाम्नाऽभिवादनप्रत्य-भिवादने[2] इच्छन्ति, तन्मतेनाऽयं निषेधः। इदमेव भाष्यसम्मतम्। येषां तु 'न स्त्र्यभिवादयते, पादोपसंग्रहणमेव करोति। येपामप्यभिवादयते, न तु स्वनाम गृह्णाति। एवञ्च[3] प्रत्यभिवादेऽपि तदभाव एव। तन्मतेऽयं प्रतिषेधो-ऽनर्थकः। तद् ध्वनयन्नाह—**नाम गोत्रं वेति**। इदं न्यायसिद्धम्। अभि-वादनं तावन्नामगोत्राभ्यामेव। **'असौ नामाऽहमस्मीति स्वं नाम परि-कीर्त्तयेत्'** इति **मनुस्मृतेः**। अत्र नामपदं गोत्रस्याऽप्युपलक्षणम्। प्रत्यभि-वादनञ्च प्रागुक्तमेव। प्लुतस्तु-अधिकृतस्य पदस्येत्यस्य 'प्रत्यभिवादे' इत्यनेन विशेषणात्, प्रत्यासत्तिन्यायाच्च प्रत्यभ्युद्यमानाऽर्थवाचकस्यैव। किञ्चाऽभि-वादयित्रनुग्रहार्थत्वात् प्रत्यभिवादस्य, तेन तस्य संस्कार्यत्वाच्च, प्राधान्येन तद्वाचकस्यैव प्लुतः। स्पष्टं चेदं भाष्ये। एवं च तस्य वाक्याऽन्तत्वमा-वश्यकम्।

तत्र च नामपदेन न बोधकशब्दमात्रम्। किन्तु 'द्वादशेऽह्नि पिता नाम कुर्याद्, द्व्यक्षरं, चतुरक्षरं वा' इत्यादि, शर्माऽन्तं नाम ब्राह्मणस्य, वर्माऽन्तं क्षत्रियस्येत्यादि च श्रुतिस्मृत्याद्युक्तमिति बोध्यम्। अत एव 'आयुष्मान् भव दण्डिन्' इत्यादौ प्लुतो नेति भाष्ये ध्वनितम्।

---

१. 'आद्विधानात्' इत्ययमंश आवश्यकोऽपि न क्वाऽपि दृश्यते।

२. 'अभिवादनमिव प्रत्यभिवादनमिच्छन्ति' ख पाठः।

३. 'एवं च प्रत्यभिवादेऽपि तदभाव एव' इत्यंशः ख. नास्ति।

**भोराजन्येति** (वा० ८।२।८३)—भोशब्दस्य, राजन्यवैश्यवाचकनाम्नश्च टेः प्लुत[1] इत्यर्थः। भोशब्दस्याऽनामगोत्रत्वादप्राप्ते, इतरयोस्तु नामत्वात् प्राप्ते, विभाषेयम्। अत एव भाष्यकृताऽपि–'भोःशब्दस्याऽनामगोत्रत्वादप्राप्तिं मत्वा-'सर्वस्यैव नाम्नः प्रत्यभिवादे भोःशब्द आदेशः' इत्यपर आहेत्यादिनोक्तम्[2]। शर्मवर्मादीनां नाम्न्यन्तर्भाव एव। अत एव शर्मान्तिटेर्नित्यं प्लुतसिद्धिः। 'शर्माऽन्तं नाम ब्राह्मणस्य' इत्यादौ तद्गुणसंविज्ञानबहुव्रीहिः। अन्तशब्दश्चाऽवयववाचीति न दोषः।

**दूरात्समिति**—यावति देशे प्राकृतप्रयत्नोच्चारितं सम्बोद्ध्यमानो न शृणोति, किन्त्वधिकं प्रयत्नमपेक्षते, तावद् दूरम्। दूरादाह्वानं च दूरात्सम्बोधनमात्रोपलक्षणम्। एवं चाऽसत्यप्याह्वाने भवतीति भावः।

तथा व्याख्याने फलमाह—**सक्तूनित्यादि**। अत एव 'अतो रोः' (६।१।११३) इतिसूत्रे 'सुश्रोता३ अत्र न्वसि' इत्युदाहृतम्। [3]परे तु दूरादाह्वानं दूराद्बोधनस्योपलक्षणम्, न तु सम्बोधनविभक्तिनियामकस्याऽभिमुखीकृत्य बोधनरूपस्य सम्बोधनस्योपलक्षणम्। 'आगच्छतु भवान् देवदत्त' इत्येवमाह्वानस्यापि सम्भवात्। अत एव आकडार (१।४।१) सूत्रे नदीगुरुसंज्ञयोः समावेशस्य 'वात्सीबन्धुः' इत्यत्र 'गुरोः (८।२।८६) इति प्लुतः, 'नदी बन्धुनि (६।२।१०९) इति पूर्वान्तोदात्तत्वं च फलमुक्तं भाष्यकृता। अन्यथाऽत्र सम्बोधनाऽभावेन गुरोरित्यस्याऽप्राप्त्या तदसङ्गतिः स्पष्टैवेत्याहुः।

अत्रापि 'दूराद्धूते' (८।२।८४) इत्येतदनुवृत्तस्य पद[4]स्येत्यस्य विशेषणम्।

---

१. 'प्लुतो वेत्यर्थः' इति ख. पाठः।

२. इतोऽग्रे—'इन्द्रवर्मादौ च तथाऽनुक्तेः'–ख. पाठः।

३. 'परे तु' इत्यारभ्य 'स्पष्टैवेत्याहुः' इत्यन्तः क. पाठः। ख. नास्ति। लघुशेखरे च 'परे तु' 'आहु.' इतिवर्जमयं ग्रन्थो दृश्यते।

४. 'पदस्य' इति ख. नास्ति। क. ग. पाठः।

तेन हूयमानाऽर्थवाचिनः पदस्यैव टेः प्लुतः। पदं चाऽविशेषात् पित्रादि-संकेतितप्रकृतिकं पाचकशब्दादिप्रकृतिकं चेत्याहुः। ध्वनितं चेदं भाष्ये।

**हैहेप्रयोगे** (८।२।२२)—पूर्वेण हूयमानाऽर्थस्य पदस्य वाक्यान्तस्य टेः प्लुतविधानादतादृशयोर्न प्राप्नोतीति वचनम्। अयं च हूयमानार्थपदटेः प्लुतस्य बाधकः। तक्रकौण्डिन्यन्यायात्। तदेतद् ध्वनयन्नाह—**हैहयोरेवेति**। हैहयोरिति त्वनन्त्यार्थम्। अन्यथा 'वाक्यस्य टेः' (८।२।८२) इत्यधिकारात् तयोरन्त्ययोरेव स्यात्[1]। तदेतद् ध्वनयन्नुदाहरति—हे ३ रामेति[2]।

नन्वेवमपि 'हैहेप्रयोगे' इति व्यर्थम्। न ह्यप्रयुक्तयोः प्लुतः सम्भवतीति चेन्न। यत्र सम्बोधनोत्तरं तयोः प्रयोगस्तत्र तेनैवाऽभिमुख्यस्य द्योतितत्वेन द्योत्याऽभावादनर्थकयोरपि तयोः[3] प्लुतार्थत्वात्। तदेतद् ध्वनयन्नाह—**राम है ३** इति।

**गुरोरनृतो** (८।२।८६)—'दूराद्धूते' (८।२।८४) इत्यनुवर्त्तते। तेन दूराद् बोधने[4] एव प्रवृत्तिः। तदेतदाह—**दूराद्धूत** इति। दूरत्वं चाऽत्राविवक्षितम्। तेन 'प्रत्यभिवादेऽशूद्रे' (८।२।८३) इत्यस्याऽपि सङ्ग्रहः। तद्विषयेऽप्युपलक्ष्यबोधनस्य सत्त्वात्। 'अनुदात्तं प्रश्नान्त' (८।२।१००) इत्यादिभिस्तु लाघवादनुदात्तत्वादिगुणमात्रं विधीयते, न प्लुतः[5]। स च 'दूराद्धूते' इत्यादिभिरेव।

(अत[6] एव 'चिदिति चोपमार्थे' (८।२।१०१) इति सूत्रे प्लुतसमावेशार्थ-

---

१. लघुशेखरे तु 'यत्तु' 'तन्न' इत्यादिनाऽयं ग्रन्थः खण्डितः।

२. इतोऽग्रे–'ननु हैहयोरिति व्यर्थम्। आरम्भसामर्थ्यादेवाऽनन्त्यस्य भविष्यतीति चेन्न। हूयमानवाचिन एवाऽनन्त्यस्य स्यान्न तु हैहयोः। तदेतद् ध्वनयन्नुदाहरति'–इति क. कुण्डिलतः ख. पाठः। ग. नास्ति।

३. 'तयोर्द्वौ ब्राह्मणावित्यादिवत् प्रयोगे प्लुतार्थत्वात्' ख. पाठः।

४. 'तेन सम्बोधने एव' ख. पाठः।

५. 'न प्लुतः। स्पष्टं चेदं वृत्तौ' ख. पाठः।

६. क. कुण्डलितोऽयं ख. पाठः। ग. नास्ति।

अकारः सार्थकः) । एवं च पूर्वसूत्रद्वयस्यैव शेषोऽयमिति फलितम्[1] । तदे-[2]तद्वृत्तौ पठ्यते 'क्वचित् प्रत्यभिवादे दूराद्धूते चेत्येवमादिना यः प्लुतो विहितस्तस्यैवायं स्थानिविशेष उच्यते' इति प्रकृतसूत्रे । तथा-नाऽनेन प्लुतो विधीयते, किन्तु दूराद्धूतादिषु विहितस्य प्लुतस्यानुदात्तत्वगुणमात्रं विधीयते' इति 'अनुदात्तं प्रश्नान्त' (८।२।१००) इति सूत्रे । आदिना 'भोराजन्य' (वा० ८।२।८३) इत्यस्य सङ्ग्रहः ।

सर्वप्लुतप्रकरणस्य तु न शेषः । तथा हि सति 'वाक्यस्य टेः' (८।२।८२)

---

१. इतोऽग्रे — 'नन्वेवम् 'एचोऽप्रगृह्यस्याऽदूराद्धूते पूर्वस्याऽर्द्धस्याऽऽदुत्तरस्येदुतौ (८।२।१०७)' इत्येतदुहारणभूते विचार्यमाणविषये 'होतव्यं दीक्षितस्य गृहा३इ' इत्यादौ तद्विहितपूर्वार्द्धाऽऽकारस्याऽनन्त्यस्य प्लुतो न स्यात् । यतः 'अदूराद्धूते' इत्युक्तत्वेन दूराद्धूतेऽस्याऽप्रवृत्तिः । अदूराद्धूते च प्लुतो दुर्लभः । न चाऽनेनैव प्लुतो विधेयः । 'उदात्तपदमेचोऽप्रगृह्यस्येति सूत्रेऽनुवर्त्तमानमिदुतोर्विधीयमानयोरेव विशेषणम् । प्लुतस्तु यथाविषय-मनुदात्तादिस्वरकः' इत्युत्तरसूत्रस्थकैयट–प्रकृतसूत्रस्थवृत्ति-हरदत्तादि-विरोधात् । 'प्रश्नान्ताऽभिपूजित–विचार्यमाण-प्रत्यभिवाद-याज्यान्तेषु' (वा० ८।२।१०७) इति परिगणनेनाऽदूराद्धूते इत्यस्य प्रत्याख्यानेप्युक्तो-दाहरणेऽनुपपत्तिरेव । वस्तुतस्तत्र दूराद्धूतपदं न सम्बोधनोपलक्षणम्, किन्तु यथाश्रुतमेवेति दूरादाह्वानसम्बोधनविशिष्टाऽभिपूजिताऽर्थे–'स्वा-गच्छ भो माणवकाग्निभूते' इत्यादौ नाऽस्य प्रवृत्तिरिति परिगणनेन तत्प्रत्याख्यानं युक्तम् । 'अदूराद्धूते' इति न वक्तव्यम्, इत्यनुक्त्या भाष्यात् तथैव लाभादिति चेन्न । अत्र 'दूराद्धूते' इत्यस्य प्लुतविषयोपलक्षण-त्वात् । अत एव क्वचिद् वृत्तौ पठ्यते––'प्रत्यभिवादे दूराद्धूते चेत्येव-मादिना यः प्लुतो विहितस्तस्यैवाऽयं स्थानिविशेष उच्यते' इति । हरदत्तस्त्वेतद्व्याख्यायां सूत्रद्वयविषयमेव प्रदर्श्याऽऽदिशब्दार्थं किमित्यु-पेक्षितवानिति तदाशयं स एव प्रष्टव्यः'–इति ख. पाठः ।

२. 'तदेतद्वृत्तौ' इत्यारभ्य 'व्याख्यानादिति बोध्यम्' (२२२ पृष्ठे) इत्यन्तः क. ग. पाठः । ख. नास्ति ।

इत्यनेन सहैवाऽस्याप्यधिकारत्वमेव कुर्यात्। 'एचोऽप्रगृह्यस्याऽदूराद्धूते पूर्वस्याऽर्द्धस्याऽऽद्रुत्तरस्येदुतौ' (८।२।१०७) इत्यनेनापि आकारः प्लुतविशिष्ट एव विधीयते।

एतेन तदुदाहरणभूते विचार्यमाणविषये 'होतव्यं दीक्षितस्य गृहा३इ' इत्यादौ तद्विहितपूर्वार्द्धाकारस्याऽनन्त्यस्य प्लुतो न स्यात्। यतः 'अदूराद्धूते' इत्युक्तत्वेन दूराद्धूतेऽस्याऽप्रवृत्तिः। 'अदूराद्धूते च प्लुतो दुर्लभः' इत्यपास्तम्। स च प्लुत आकारः प्रश्नान्तादिविषयेऽनुदात्तादिगुणक एव। प्रश्नान्तादौ यः प्लुतः सोऽनुदात्तगुणक इत्यादिक्रमेण तदर्थात्।

यत्त्वत्र 'गुरोः' (८।२।८६) इति प्लुतः। आकारमात्रस्यैव तु तेन विधानम्। तन्न। अदूराद्धूतविषये तदप्राप्तेः। गुरोरिति सूत्रे 'दूराद्धूते' इत्यस्याऽसम्बन्धे तु सर्वत्र प्लुतापत्तेः, इदुतोरपि पर्यायेण प्लुताऽऽपत्तेश्च। उदात्तग्रहणं च व्याख्यानादिदुतोः, प्लुतस्य च विशेषणम्। प्लुतपदं चाऽऽकारेणैव सम्बध्यते। व्याख्यानादिति बोध्यम्।

'अपि'शब्दो यथाप्राप्तटिसमुच्चयार्थः। यदि तु गुरोः संनिधानादन्त्यो गुरुरेव समुच्चीयते, तदाऽन्त्यलघुमत्यनन्त्यगुरावेतस्य, अन्त्यलघौ दूराद्धूते चेत्यादीनां दुर्वारत्वेन प्लुतसमावेशाऽऽपत्तिः।

'एकैक'ग्रहणं त्वेतद्विधिविहितानामेव पर्यायार्थम्। तेन यत्राऽन्त्योऽपि गुरुस्तत्रैव पर्यायः स्यात्। व्या[1]ख्यानाच्चैतदर्थलाभः। तद्ध्वनयन्नाह—**अन्त्यस्यानन्त्यस्यापि गुरोरिति**। अ[2]पिशब्दात्–अन्त्यस्य गुरोरगुरोश्चेत्यर्थः अत एव सूत्रे 'गुरोः' इति 'अनन्त्यस्याऽपि' इत्यग्रे न पठितम्। व्या[3]ख्यानाच्च। एतदेव ध्वनयन्नुदाहरति—**देवदत्ता ३** इति[4]।

१. 'व्याख्यानाच्चैतदर्थलाभः' इति ख. नास्ति। २. 'अपिशब्दात्' इति ख. नास्ति। ३. 'व्याख्यानाच्च' इति ख. पाठः। क. ग. नास्ति।

४. इतोऽग्रे—'यत्त्वनन्त्यग्रहणं व्यर्थम्। पृथग्योगकरणसामर्थ्येनैवान्त्यस्य सिद्धेरिति। तन्न। तथा सति तक्रकौण्डिन्यन्यायेनाऽन्त्यस्य गुरोः प्लुताऽनापत्तिः। तेनैव न्यायेनाऽनन्त्यगुरुमत्यन्त्यलघौ टेः प्लुताऽनापत्तिश्च। 'एकैक'ग्रहणन्त्वनन्त्यगुरूणामेव पर्यायाऽर्थं स्यादिति यत्किञ्चिदेतत्। ख. पाठः।

अस्य[1] 'एहि' इत्यादिः। 'वाक्यस्य टेः', 'एकतिङ् वाक्यम्' इत्युक्तेः।

[2]पर्यायार्थमिति—अन्यथा समावेशः स्यादिति भावः। 'अनुदात्तं

१. 'अस्य' इत्यारभ्य 'इत्युक्तेः' इत्यन्तः पाठः ख. नास्ति।

२. पर्यायार्थमिति—'अन्यथा समावेशः स्यादिति भाव'। न च 'अनुदात्तं पदमेकवर्जम्' (६।१।१५८) इति परिभाषणान्न समावेश इति वाच्यम्। 'अनुदात्तं प्रश्नान्त' (८।२।१००) इत्यादिविहिताऽनुदात्तादिगुणकानां समावेशस्य दुर्वारत्वात्। एकग्रहणस्य विधीयमानोपलक्षणत्वेन 'तवै चान्तश्च युगपत्' (६।२।५१) इत्यादिविधेयाऽनेकाऽबाधवदत्राप्यापत्तेश्च। उक्तपरिभाषायास्त्रिपाद्यामप्रवृत्तेश्च। अत एव 'तव्यतस्तित्त्वं चरितार्थम् तद्धि 'तित्स्वरितम्' (६।१।१८५) इत्यन्तस्वरितार्थम्। तत्र हि 'अन्त' (६।१।८५) इति वर्त्तते। त्रिपाद्यां परिभाषाप्रवृत्तौ प्रत्ययस्वरेणाऽऽद्युदात्ते, शेषनिघातेनाऽनुदात्तस्याऽन्तस्य 'उदात्तादनुदात्तस्य' (८।४ ६६) इति स्वरिते, शेषनिघातेन सिद्धौ, तद्वैयर्थ्यं स्पष्टमेव।

एवं 'यतोऽनावः' (६।१।२१३) इत्यपि ज्ञापकम्। अन्यथा 'यतोऽनावः' इत्याद्युदात्ते कृते, शेषनिघाते, उदात्तादनुदात्तस्येति स्वरिते, शेषनिघाते, तद्वैयर्थ्यं स्पष्टमेवेति प्राञ्चः। तन्न। सन्निपात (प० ८७)-परिभाषयोदात्तादनुदात्तस्येति विषये शेषनिघाताऽप्रवृत्त्याऽपि तयोश्चारितार्थ्येन भवदुक्तार्थे दृढतरमानाऽभावात्। किञ्च 'पूरणगुण' (२।२।११) इति सूत्रे निरनुबन्धक(प० ८३)परिभाषया तव्यतो ग्रहणाऽभावाय तित्त्वं सार्थकम्। न चाऽनेन समासे तत्र तव्यग्रहणं व्यर्थम्। स्वरे भेदात्। न च 'उदात्तादनुदात्तस्य' (८।४।६६) इति स्वरिते न विशेषः। 'ब्राह्मणकर्त्तव्यं तत्र', 'ब्राह्मणकर्त्तव्य क्व' इत्यादौ 'नोदात्तस्वरितोदयम्' (८।४।६७) इति निषेधविषये विशेषात्। एतेन 'अनुबन्धाऽन्तरेणाऽपि तव्यग्रहणेनाऽस्य ग्रहणाऽभावः सूपपादः' इति परास्तम्।

एवं 'कण्ठ्यः तत्र', 'कण्ठ्यः क्व' इत्यदावाष्टमिकस्वरस्यानेन निषेधे 'यतोऽनावः' सार्थकम्। तस्माल्लक्ष्यानुरोधाद् यथोद्देशमाश्रित्य त्रिपाद्यामस्या अप्रवृत्तिः। अत एव 'अनुदात्तं पदम्' (६।१।१५८) इति सूत्रस्या-

पदम्' (६।१।१५८) इति तु त्रिपाद्यां न प्रवर्त्तते। 'प्राचां'ग्रहणन्तु पक्षे सर्वेषां प्लुताऽभावार्थम्।

सा चेयं व्यवस्थितविभाषा। तेनाऽग्नीदग्नीन् विहर इत्यादौ अग्नो-

धिकारत्वे 'षाष्ठ एक. संगृहीतः। ये ये सप्ताध्याय्यां स्वरास्ते न संगृहीताः स्युः' इति षाष्ठभाष्योक्तं सङ्गच्छते। अन्यत्वे षाष्ठस्य प्रतियोगित्वेन, षाष्ठस्याऽपि सप्ताऽध्याय्यन्तर्गतत्वप्रतीतेः। अष्टमे प्रथमे पादेऽनुदात्तस्यैव विधानम्। त्रिपादी त्वसिद्धैवेति तद्भाव इत्याहुः। प्राग्ग्रहणन्तु पक्षे सर्वेषां प्लुताऽभावाऽर्थम्।

तेन सर्व इति—'प्रत्यभिवादे' (८।२।८३) इत्यारभ्य 'अग्नीत्' (८।२।९२) इत्यन्तः। अग्रे तु न सम्बध्यते, 'विभाषा पृष्टप्रतिवचने हेः' (८।२।९३) इत्यादौ विभाषाग्रहणात्। अत्र करणाच्चेत्याहुः, तथा च अग्नीदिति सूत्रे भाष्यम्-'अपर आह-'सर्व एव प्लुतः साहसमनिच्छता विभाषा वक्तव्यः' इति। साहसं-शास्त्रत्यागः, तदनिच्छतेत्यर्थः 'इति कैयटः। 'वैकल्पिकेऽनुष्ठानक्लेशं धर्माऽऽधिक्यफलकमप्यशक्तत्वादनिच्छतेत्यर्थः' इत्यन्ये।

एतेन 'आजुहाव पुत्रेति' इति भागवतं व्याख्यातम्। प्लुतस्य वैकल्पिकत्वात्। आख्यातप्राग्वर्तिनोऽप्यनुकरणसम्भवेन पुत्रशब्दस्य वाक्याऽन्तत्वाभावाच्च। किञ्च तिङन्ताऽसमभिव्याहृत—'पुत्र' इत्यस्याऽनुकरणाद् वाक्यत्वाऽभावेन प्लुताऽप्राप्तेः। किञ्च सत्यपि प्लुते 'अप्लुतवदुपस्थिते' (६।१।१२९) इति प्रकृतिवद्भावाऽप्राप्तेर्न दोषः।

यत्तु 'प्लुते सत्यपि प्रकृतिवद्भावो वैकल्पिकत्वान्न। 'ई ३ चाक्र' (६।१।१३०) इति सूत्रे 'ई ३ ग्रहणेन नाऽर्थः। वशा इयं वशेयम्। प्लुतप्रकृतिभावः सर्वोऽपि चाक्रवर्मणमते नास्तीति भाष्योक्तेः' इति। तन्न। 'चाक्रवर्मणस्याऽऽचार्यस्याऽप्लुतवत्' इत्येव भाष्योक्तेः, प्रकृतिभाववैकल्पिकत्वस्याऽभावात्। अप्लुतवद्भावस्यैव प्रकृतिभावाऽभावप्रयोजकत्वेन तद्वैकल्पिकत्वोक्तेरनुप्रयोगाच्चेत्याहुः।'—इति क. ग. नास्ति। ख. पाठः।

१. 'अन्यथा' (२२३ पृष्ठे)—इत्यारभ्य 'प्लुताऽभावार्थम्' इत्यन्तः क. ग. पाठः। ख. नास्ति।

प्रेषणे' (८।२।९२) इत्यस्याऽप्रवृत्तिरिति स्पष्टं भाष्ये इत्याहुः।[1]

ननु 'क्लृ३प्तशिख' इत्यत्र प्लुतो न स्यात्, 'अनृतः' इति निषेधादिति चेन्न। ऋलृगिति सूत्रे भेदेन निर्देशेन सावर्ण्याऽनित्यत्वज्ञापनात्। ऋकारा-[2]दिप्रयुक्तकार्यस्य क्वचित् लृकारादावप्रवृत्तिज्ञापनाद् वा।

**अप्लुतकार्यमिति—**यत्तु 'प्लुतकार्यं न भवतीत्यर्थः। अत एव वृत्ता-वुक्तम्—अप्लुत इत्युक्ते प्लुत एव निषिध्येत' इति। 'जातस्याऽपि लोपा-ऽऽदिनेव निवृत्तिः' इति तदाशयः। पर्युदासे हि 'अग्नी३इति' इत्यादौ प्रगृह्याऽऽश्रयं प्रकृतिभावं बाधित्वा परत्वादप्लुतवद्भावेन[3] दीर्घाऽऽदिकं स्यात्' इति। तन्न। वाक्यभेदाऽसमर्थसमासाऽऽपत्तेः। प्लुतवदित्यनेन 'प्लुतकार्यम्' इत्यर्थस्य शब्दमर्यादयाऽलाभाच्च। प्लुते प्लुतसादृश्याऽसम्भ-वेनाऽसाधुत्वाऽऽपत्तेश्च। प्लुतेऽप्लुतसादृश्यस्य विधानौचित्याच्च[4]। 'अग्नी ३ इति' इत्यादौ च शास्त्राऽतिदेशाऽश्रयणान्न दोषः। प्रकृतिभावस्य निषेधफलकत्वेन 'निषेधाश्च बलीयांसो भवन्ति' (प० १२३) इति न्यायेन

---

१. इतोऽग्रे–'केचित्तु 'प्रत्यभिवादे'इत्यनेनाऽस्यसम्बन्धः। अत एव 'भोराजन्य' (वा० ८।२।८३) इतिवार्त्तिके 'वा'ग्रहणं चरितार्थम्। विकल्पस्याऽनेनैव सिद्धे। अत एव च—

अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः।
कामं तेषु तु विप्रोष्य स्त्रीष्विवाऽयमहं वदेत्॥

इति भाष्यं सङ्गच्छते, इत्याहुः' इति क. कुण्डलितः ख. पाठः। ग. नास्ति।

२. 'ऋकारादिप्रयुक्तकार्यस्य क्वचित् लृकारादावप्रवृत्तिज्ञापनाद्वा' इति क. ग. पाठः। ख. नास्ति।

३. 'तद्भावः' ख. पाठः।

४. इतोऽग्रे—'वृत्तिस्तु चिन्त्यैव। भुक्तवन्तमित्यादिन्यायविरोधाच्च[1]। मूले तु–'अप्लुत एव विधीयेत' इत्येव पाठ'—इति कुण्डलितः ख. पाठः। ग. नास्ति।

---

1. 'न्यायविरोधात्' इत्येव ख. पाटः। तत्र चकारो नास्ति।

परमपि बाधित्वा प्रगृह्याऽऽश्रयप्रकृतिभावस्यैव प्राप्तेश्च। (अत[1] एव 'नाऽन्तः पादम्' इति पाठेन फलैक्यम्)। अप्लुतवद्भावस्य 'इति'शब्दसाऽऽपेक्षत्वेन[2], तदपेक्षया प्रकृतिभावस्य वर्णमात्राऽपेक्षत्वेनाऽन्तरङ्गत्वा[3]च्च। वृत्तेस्तु[4]—तत्स्थानेऽप्लुतस्य विधानेन स निवर्त्ततेत्यर्थ इति दिक्।

**अग्नी३इतीति**—नन्वग्नी३इतीत्यादौ प्लुतस्य प्रगृह्यत्वं दुर्लभम्। तत्र दीर्घाणामेव ग्रहणेन, तेषां चाऽनण्त्वेन सवर्णाऽग्राहकत्वादिति चेन्न। प्लुतस्याऽसिद्धत्वात्। न च 'प्लुतः प्रकृत्या' इति ज्ञापकात् स्वरसन्धिप्रकरणे प्लुतस्य सिद्धत्व[5]म्। प्रकृ[6]तिभावं प्रत्याश्रयात् सिद्धत्वेनैव रोरुत्व इव तदुपपत्तौ, स्वरसन्धिप्रकरणे सिद्धत्वे मानाऽभावात्। एवं च संज्ञां प्रति प्लुतस्याऽसिद्धत्वेन त्रिमात्रेऽपि द्विमात्रवृद्धेरप्रतिघातात् सिद्धा संज्ञाऽनुकार्ये। अनुकरणे तु 'प्रकृतिवदनुकरणम्' इत्यतिदेशात्। (अ[7]त एव 'अग्नी३' इत्यवसानविषये नाऽनुनासिकः)। न चैवमपि प्लुतस्याऽसिद्धत्वे, प्लुतात् पूर्वमेव च प्रगृह्यत्वप्रवृत्तौ, ततः प्लुते कृते, त्रिमात्रं द्विमात्रत्वेन पश्यन्त्या अपि संज्ञायाः पुनः प्रवृत्तौ बीजाऽभावेन, अल्विधित्वात् स्थानिवद्भावस्य

---

१. ख पाठः। क. ग. नास्ति।

२. 'इतिशब्दरूपपदसापेक्षत्वेन' इति ख. पाठः।

३. इतोऽग्रे—'प्लुतप्रगृह्याः' (६।१।१२५) इति सूत्रस्थनित्यग्रहणेन बाध्यसामान्यचिन्ताऽऽश्रयणेनास्याऽपि बाधाच्चेति दिक्'—इति ख. पाठः।

४. 'वृत्तेस्तु' इत्यारभ्य 'इति दिक्' इत्यन्तः पाठः ख. नास्ति। क. ग. पाठः।

५. इतोऽग्रे—'तत्र प्लुतशब्दस्य तत्स्थानिनि लक्षणयैवोपपत्तेः। श्रुताऽर्थाऽऽपत्तिमूलकवाक्यकल्पनाऽपेक्षया तस्या एव लघुत्वात्। संज्ञायास्तत्प्रकरणस्थत्वाऽभावाच्च। प्रगृह्यसंज्ञायां यथोद्देशपक्षाऽऽश्रयणात्'—इति ख. पाठः।

६. 'प्रकृतिभावम्' इत्यारभ्य 'मानाभावात्' इत्यन्तः क. ग. पाठः। ख. नास्ति।

७. ख. पाठः। क. ग. नास्ति।

दुर्लभत्वेन च 'अग्नी३ इति' इत्यादौ प्रगृह्याश्रयप्रकृतिभावो दुर्लभ एवेति वाच्यम्। संज्ञायाः कार्यार्थत्वेन स्वनिमित्तकार्यसम्भावनायोग्ये एव प्रवृत्त्या, पदान्तरसम्बन्धात् प्रागेवाऽन्तरङ्गत्वात् प्लुतप्रवृत्तेः। लक्ष्यानुरोधेनाऽत्र पदसंस्कारपक्षस्यैवाऽऽश्रयणात्। न च स्वरसन्धिप्रवृत्तिरूपफलायैव पूर्वमत्र संज्ञाप्रवृत्तिरिति वाच्यम्। संज्ञाया अप्रवृत्तावपि तल्लाभेन, तस्याऽन्यथा सिद्धत्वात्। अन्वयव्यतिरेकनिर्णेयत्वात् फलत्वस्य[1]।

अत एव 'अग्नी'३ इत्यादाववसाने प्लुतस्थाने नाऽनुनासिक इति स्पष्टं भाष्यादौ[2]। न चैवं कार्यकालपक्षप्रवेशः। यत्किञ्चित्कार्यविधानकाले[3] शेषपुरस्कारेण संज्ञाप्रवृत्तौ **कार्यकालपक्षः**। कार्यमात्रयोग्यतासंभावनापुरस्कारेण प्रागेव संज्ञाप्रवृत्तौ **यथोद्देशपक्ष**[3] इति 'ईदूदेद्' इति सूत्रे कैयटोक्तेः।

किञ्च[4] प्लुतात् पूर्वमपि प्रवृत्तस्य प्रगृह्यत्वस्य स्थानिवद्भावेन प्लुतेऽपि सत्त्वम्। न चाऽल्विधित्वम्। प्रगृह्यत्वस्यालसमुदायवृत्तित्वेनाल्धर्मत्वाऽभावात्। न हीकारान्तद्विर्वचनत्वमेव प्रगृह्यत्वम्, किन्तु तत्समानाधिकरणो धर्मविशेष इति संज्ञाविधायकेऽलाश्रयणेऽपि, संज्ञानिमित्तप्रकृतिभावादि-

---

१. इतोऽग्रे--विधिस्पृष्टतया प्रगृह्यत्वप्रयुक्तसन्ध्यभावस्यैव फलत्वौचित्येन पश्चात् प्रवृत्तेरेव युक्ततत्वाच्च। तत्राऽप्यनुनासिकस्याऽसिद्धत्वात् प्लुतस्यैव प्राप्त्या, फलाऽभावेन पूर्वं प्रगृह्यत्वाऽप्राप्तेः। अत एव--अग्नी३ इत्यादाववसाने प्लुतस्थाने नानुनासिक इति स्पष्टं भाष्यादौ' ख. पाठः।

२. इतोऽग्रे--'नचैवं कार्यकालपक्षप्रवेशः। कार्यविधायकैकवाक्यतया संज्ञाप्रवृत्त-कार्यकालपक्षः। कार्यमात्रयोग्यतासम्भावनापुरस्कारेण पृथग् वाक्येन संज्ञाप्रवृत्तौ यथोद्देशपक्षः' ख. पाठः।

३. 'यत्किञ्चित्' इत्यारभ्य 'यथोद्देशपक्षः' इत्यन्तोऽयं क. ग. पाठः।

४. 'किञ्च' इत्यारभ्य 'दुरुपपादमित्याहुः' इत्यन्तः क. कुण्डलितः पाठः। ग. नास्ति। ख तु 'अपरे तु' इत्यारभ्य इत्यादिना 'इत्याहुः' इत्यन्तः पाठोऽयमग्रे वर्त्तते।

विधायकस्याऽल्विधित्वं दुरुपपादमित्याहुः। अत[1] एव 'सम्बुद्धौ शाकल्यस्य' (१।१।१६) इति सूत्रे सम्बुद्धिग्रहणं चरितार्थम्। तद्धि 'आहो इति' इत्यादौ परत्वाद् विकल्पो मा भूदित्यर्थम्। त्वदुक्तरीत्या 'इति'शब्दनिरपेक्षत्वेनाऽन्तरङ्गत्वान्नित्यस्यैवापत्तौ तद्वैयर्थ्यं स्पष्टमेव। मम तु कार्यसम्भावना-योग्यतायामेव संज्ञाप्रवृत्त्या पदान्तरसम्बन्धनिमित्तकत्वेन समत्वमेवोभ-योरिति बोध्यम्। न च सम्बुद्धिग्रहणाऽभावे ओदन्तनिपातस्यैव इतौ विकल्पः स्यादिति, तदननुवृत्तिमात्रतात्पर्यग्राहकं तदिति वाच्यम्। ओद्-ग्रहणाऽनुवृत्तौ पुनरोत्करणेनैव तदर्थलाभे सिद्धे, सम्बुद्धिग्रहणवैयर्थ्यस्य तदवस्थत्वात्। न चाऽनेन वैकल्पिकाऽभावे नित्यविधिर्दुर्वारः। 'इति'-शब्दाऽतिरिक्ते ओदित्यस्य, निपाताऽतिरिक्ते सम्बुद्धावित्यस्य चारितार्थ्येन सामर्थ्याभावात्। तथा च फलेऽविशेष इति वाच्यम्। परत्वेन विकल्प-प्रवृत्तावभावपर्यन्तमप्यस्य व्यापारेण सकृद्गति(पृ० ४०)न्यायेन, (भ्र[2]ष्टा-ऽवसरत्वाच्च) नित्यविधेस्तदभावेऽप्राप्तेः। (अत्र[3]ाऽप्यर्थे सम्बुद्धिग्रहणमेव मानम्) अत एव 'न यदि' (३।४।२३), 'विभाषा साकाङ्क्षे' (३।२।११४) इति सूत्रं निषेधीयोभयत्रविभाषेति सङ्गच्छते। अन्यथा परत्वादेतत्प्रवृत्ता-वप्यनेन निषेधाऽभावे पूर्वसूत्रस्य दुर्वारताऽऽपत्तौ सा दुर्लभा स्यात्। स्पष्टं चेदं 'नवेति' (१।१।४४) सूत्रे भाष्ये।

न चैवमपि पूर्वसूत्रे ओदन्तस्य कार्यितया, प्रकृतसूत्रे च विशेष्यासन्नि-धानेन तदन्तविधिविरहादोकारस्य कार्यितया, भिन्नविषयत्वे कथं विप्रतिषेध इति वाच्यम्। नुम्नुटोरिव फलविरोधेन विषयभेदेऽपि विप्रतिषेधसम्भवात्। न चाऽऽकडार(१।४।१)सूत्रेणाऽन्यत्र संज्ञानां बाध्यबाधकभावाऽभावस्य ज्ञापितत्वेन 'परत्वाद्विकल्पः' इत्यसङ्गतमिति वाच्यम्। संज्ञाया एकत्वात्। ज्ञापकस्य विशेषाऽऽपेक्षत्वेन संज्ञाभेदविषयत्वात्। पदान्त[4]रसम्बन्धोत्तरं

---

१. 'अत एव' इत्यारभ्य 'समत्वमेवोभयोरिति बोध्यम्' इत्यन्तः ख. पाठः, क. कुण्डलितः। २. क. ग. नास्ति। ख. पाठः।
३. ख. पाठः। क. ग. नास्ति।
४. 'इति वदन्ति' इत्यन्तः क. पाठः। ख. ग. नास्ति।

प्रवृत्तावपि तत्कार्यस्य वर्णनिमित्तकत्वेन, वैकल्पिकस्य विशिष्टपदनिमित्तकत्वेन बहिरङ्गत्वात्। 'सम्बुद्धौ' (१।१।१६) इति तु निपातपदानुवृत्तये। अन्यथा ओदन्तनिपातस्यैव इतौ विकल्पापत्तेः। न च ओद्ग्रहणानुवृत्त्यैव सिद्धौ पुनरोद्ग्रहणेनैव तन्निवृत्तिः सिद्धेति वाच्यम्। पदलाघवाऽभावात्। तस्मादोद्ग्रहणे कर्त्तव्ये वैचित्र्यार्थमेव सम्बुद्धिग्रहणम्। मनोरमायामपि परत्वादित्यस्य उत्कृष्टत्वादित्यर्थेनाऽपवादत्वमेव विवक्षितमिति वदन्ति।

अस्तु वा प्लुतस्य सिद्धत्वम्, तथापि न दोषः। दीर्घात् परत्र प्लुतस्याऽपि प्रश्लेषात्। अत एवाऽवसानविषये 'अणो प्रगृह्यस्य' (८।४।५७) इति कार्यकालपक्षेऽपि नेति दिक्। **अपरे तु**[1] प्लुतात् पूर्वमपि प्रवृत्तस्य प्रगृह्यत्वस्य स्थानिवद्भावेन प्लुतेऽपि सत्त्वम्। न चाऽल्विधित्वम्। प्रगृह्यत्वस्याऽल्धर्मत्वाऽभावात्। किन्त्वल्समुदायवृत्तित्वमिति स्पष्टमेव। न ह्रीकारान्तद्विवचनमेव प्रगृह्यत्वम्, किन्तु तत्समानाऽधिकरणो धर्मविशेष इति संज्ञाविधायकेऽलाश्रयणेऽपि, संज्ञानिमित्तप्रकृतिभावादिविधायकस्याऽल्विधित्वं दुरुपपादम्। अत एव 'वारिणी' 'द्व्यह्नी' इत्यादौ 'औ'आदेशशीत्यस्य स्थानिवद्भावेन सुप्त्व-प्रत्ययत्वाऽऽदिलाभः। कैयटस्याऽप्यत्रैव तात्पर्यमित्याहुः।

'किं मया चेतव्यम्' इति पृष्टः सन् प्रतिवक्ति—**चिनुहो३इदमिति**। 'विभाषा पृष्टप्रतिवचने हेः' (८।२।९३) इति प्लुतः। 'इदम्'शब्दोऽत्र वाक्यान्तरस्थः, न त्वनेनैकवाक्यतापन्नः। 'वाक्यस्य टेः' (८।२।८२) इत्यधिकाराद्धिकारेकारस्य प्लुताऽभावाऽऽपत्तेरित्याहुः। न चाऽर्थवत्परिभाषयाऽत्र न स्यात्। लक्ष्मीवाचक**ईशब्**[2]दस्य संबुद्धौ ह्रस्वे, प्लुते 'ई३इदम्' इत्यादौ चारितार्थ्यादिति वाच्यम्। वर्णग्रहणे तदप्रवृत्तेः। (ए[3]काक्षरकोशा-

---

१. 'दुरुपपादम्' इत्यन्तोऽयं पाठः (२२७ पृष्ठे) 'किञ्चे'त्यादिना क. पुस्तके पूर्वमप्यागतः।

२. अत्र सन्धिर्नागेशेनैव न कृतः।

३. ख. पाठः। क. ग. नास्ति।

वघृतस्त्वप्रसिद्धत्वान्न झटित्युपतिष्ठते)। अत एव 'नेदमदसोः' (७।१।११) इति निषेधः सार्थकः। अत एव गङ्गोदकादाद्गुणादिकम्।

**उभयत्र विभाषेयमिति**—उपस्थिते प्राप्तेऽनुपस्थिते चाऽप्राप्ते। विभाष्यते = विकल्प्यते इति **विभाषा**। 'गुरोश्च हलः' (३।३।१०३) इत्यप्रत्यये टाप्। न त्विदमव्ययम्। 'द्वयोर्विभाषयोर्मध्ये', 'पयसस्तु विभाषया' इत्यादौ विभक्तेर्दर्शनात्।

यत्तु 'ई३चाक्रवर्मणस्य' (६।१।१३०) इति सूत्रे भाष्ये—'ई३ग्रहणेन नाऽर्थः। अविशेषेण चाक्रवर्मणस्याऽऽचार्यस्याऽप्लुतवद् भवतीत्येव। इदमपि सिद्धं भवति–'वशा३इयं वशेयम्' इति ग्रन्थेन ई३ग्रहणं प्रत्याख्यातम्। एवं च 'सुश्लोकेति' इत्यादाविव 'चिनुही३ति' इत्यादावपि नित्येनाऽप्लुतवद्भावेन वैकल्पिकस्य येन नाऽप्राप्ति (प० ५९)न्यायेन बाधाच्चित्यादुभयत्रविभाषात्वं भाष्यविरुद्धम्। तस्मात् सूत्रमतेऽप्युपस्थिते पूर्वविप्रतिषेधेन नित्याऽप्लुतवद्भाव एवेष्टव्यः। अत एव 'किमर्थमिदमुच्यते ? अनुपस्थितार्ऽथम्' इत्युपक्रमस्थभाष्यं सङ्गच्छते। 'उभयत्रविभाषेयम्' इति **कैयटस्तु** प्रामादिकः इति। तन्न। 'नाऽर्थं' इत्यस्य-'चाक्रवर्मणस्येत्यनेनसम्बद्धेन[1]-**नाऽर्थो** = न सकलप्रयोजनसिद्धिरित्यर्थः। अयं भावः—ई३इति पृथक्कार्यम्। 'उपस्थिते' इति च वर्त्तते। पूर्वेण सिद्धे विकल्पार्ऽथमिदम्। न चोत्तरसूत्रप्राप्तस्य उपस्थिते एवेति नियमोऽयमस्त्विति वाच्यम्। उपस्थिते 'येन नाऽप्राप्ति' (प० ५९)न्यायेन 'अप्लुतवत्' (६।१।१२९) इत्यनेन विकल्पस्य बाधात् तत्र तदप्राप्तेः। ततः 'चाक्रवर्मणस्य' इति। अयमेव च सूत्राऽऽशयः। एवं च सूत्रभाष्ययोर्न विरोधः। भाष्याऽविरोधेन सूत्रस्यैव, सूत्राऽविरोधेन भाष्यव्याख्याया उचितत्वाच्च। एतेन 'भाष्ये ई३ग्रहणसत्त्वे वशेयमित्यसिद्धिवत् 'चिनुही३ति' इत्यादौ नित्याऽप्लुतवद्भावाऽसिद्धिर्नोक्ता। नाऽपि पूर्वविप्रतिषेधाऽऽरम्भगौरवमिति न्यूनता' इत्यपास्तम्। एवं च **कैयटादीनां** प्रामादिकत्वोक्तिरेव प्रामादिकीति दिक्।

---

१. 'सम्बन्धेन' ख. पाठः।

नन्विदम् शब्दस्योद्देश्यकसमर्पकत्वम् । उद्देश्यस्य च 'अप्लुतवत्' (६।१।१३०) इत्यादेर्योगरूपता, सूत्ररूपता वा, उभयथाऽपि स्त्रीलिङ्गनिर्देशोऽनुपपन्न इति चेत् । अत्राहुः—उद्देश्य–प्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनाम पर्यायेण तत्तल्लिङ्गभाग् भवति । यथा 'णेरणौ' (१।३।६७) इति सूत्रे कर्मकारकपरामर्श्यपि तच्छब्दः 'स कर्म'[1] इति वाक्ये विधीयमानकर्त्तृलिङ्गभाग् भवतीत्याहुः ।

विशेषणेन तदन्तविधिमभिप्रेत्याह—**ईदूदेदन्तमिति । द्विवचनमिति**—संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधादिति भावः । (तेन[2] कुमार्योरगारं कुमार्यगारमित्यादौ न) । **एदन्तमिति** व्याख्यातम् ।

तत्फलमाह—**पचेते इति । इवाऽर्थ इति** । सत्यभामेत्यर्थे 'सत्या' 'भामा' इतिवदिवाऽर्थे 'व'शब्दः[3] । (ननु[4] समुदायस्यैव तत्र शक्तिग्रहात् कथमवयवात् तद्बोध इति चेन्न । अनुनिष्पादिनामवयवानामपि समुदायशक्तिग्रहकाले शक्तिग्रहान्न दोषः । न च 'सेन'शब्दादपि भीमसेनबोधाऽऽपत्तिः । व्यवहारस्य शक्तिग्राहकतया, तत्र च व्यवहाराऽभावेन तेषां शक्त्यग्रहाऽनुमानात् । यत्तु 'एकदेशेन स्मर्यमाणसमुदायादर्थबोधः' इति । तन्न । एवं[5] हि उच्चारितपदस्य वृत्त्याऽर्थबोधकत्वाऽभावेन प्रातिपदिकत्वाऽभावात् तदुत्तरं विभक्त्युत्पत्त्यनापत्तेः । तस्याऽर्थे दत्तादिपदोत्तरविभक्त्यर्थाऽनन्वयाऽऽपत्तेः । प्रत्ययानां प्रकृत्यर्थाऽन्वितस्वार्थबोधकत्वात् । तथाऽननुभवाच्च) इत्याहुः । तन्न । 'पूर्वोत्तरपदयोर्विनाऽपि प्रत्ययं लोपो वक्तव्यः' इतिवचनेन तादृशस्थले तथा शक्तिग्रहाऽनुमानेऽप्यखण्डपदे तत्कल्पने मानाऽभावात् । तस्माद्

---

१. 'कर्माकार' इति क. ग. पाठः ।    २. ख. पाठः । क. ग. नास्ति ।

३. 'वशब्द इत्याहुस्तन्न' इति ग. पाठः ।    ४. 'ननु समुदायस्य' इत्यारभ्य 'तथाननुभवाच्च' इत्यन्तः क. कुण्डलितः ख. पाठः । ग. नास्ति

५. 'एवं हि' इत्यारभ्य 'विभक्त्युत्पत्त्यनापत्ते.' इत्यन्तः क. कुण्डलितः पाठः । ख. ग. नास्ति ।

व इत्यादिः स्वतन्त्रो निपात इवाऽर्थक इति बोध्यमिति दिक्। एवं च 'मणीवादीनां प्रतिषेधो वक्तव्यः' इति भाष्याऽनुक्तत्वात्, प्रयोगाणामन्यथा-सिद्धेश्चाऽप्रामाणिकमिति भावः।

**अदसो** (१।१।१२)—इह एकारो नाऽनुवर्त्तते। असम्भवात्। तदाह—**ईदूताविति**। ननूकाराऽनुवृत्तिर्व्यर्था। 'स्त्रियौ, फले वा[1] अमू आसाते' इत्यादौ पूर्वेणैव सिद्धेः। मत्वस्याऽसिद्धत्वेऽप्येकारान्तत्वादत आह—**रामकृष्णाविति**। पुंसि पूर्वेण न सिद्ध्यति, औकाराऽन्तत्वादिति भावः।

ननु 'आसाते' इत्यादिपदान्तरसम्बन्धात् पूर्वमन्तरङ्गत्वेन जातयोरपि उत्व[2]-मत्वयोरसिद्धत्वादायादीनां दुर्वारता। (न च[3] अदसो मादिति सूत्राऽऽरम्भसामर्थ्यात् तदभावः। 'अप्रगृह्यस्य' (८।४।५७) इत्यनुनासिकपर्युदासेन चारितार्थ्यात्)। किञ्चोत्वादीनामसिद्धत्वे प्रगृह्यसंज्ञाया अप्रसङ्गः। न च रोः 'अतो रोः' (६।१।११३) इत्युत्वं प्रत्याश्रयात् सिद्धत्वमिवेत्त्वा[4]-दीनामप्यत्राऽऽश्रयात् सिद्धत्वं भविष्यतीति वाच्यम्। तत्रोत्वशास्त्रस्य वैयर्थ्याऽऽपत्त्याऽऽश्रयात् सिद्धत्वेऽपि प्रकृते कार्यकालपक्षे संज्ञाया अनुनासिकप्रतिषेधे चारितार्थ्येना[5]ऽऽश्रयात् सिद्धत्वे मानाऽभावात्। न च[6] कार्य-

---

१. 'वा' इति ख. नास्ति।

२. 'ऊत्व' इति पाठान्तरम्। ३. ख. पाठः। क. ग. नास्ति।

४. 'मिवोत्वादीनां' क्वचित् पाठः।

५. इतोऽग्रे–'आश्रयात् सिद्धत्वे मानाऽभावादिति चेन्न। कार्यकालपक्षे 'प्लुतप्रगृह्या' इत्यत्र यावतां प्रगृह्यसंज्ञा विहिता, ते सर्वे तेन तेन रूपेणोपस्थिताः। एवं च अदसो मादितिसूत्रोपस्थितिसामर्थ्यादयादीन् प्रत्यप्यसिद्धत्वबाधात्। अत एव 'कर्मणि द्वितीया' (२।३।२) इति सूत्रे 'दिवः कर्म च' (१।४।४३) इत्यस्योपस्थितिसामर्थ्यात् 'अक्षैरक्षान्वा दीव्यति' इत्यादौ पक्षे द्वितीयाऽपीत्याकरः। किञ्च अनुनासिकविधौ 'अप्रगृह्यादसः, इत्येव सिद्धौ' इति ख. पाठः।

६. 'न च कार्यकाल' इत्यारभ्य 'शक्यमेवेति चेन्न' इत्यन्तः क. ग. पाठः, ख. नास्ति।

कालपक्षेऽप्यष्टाध्यायीपाठकृतपूर्वत्वपरत्वयोरनपायेन संज्ञां प्रत्यसिद्धत्वस्य दुर्वारत्वात् कथं तेन चारितार्थ्यमिति वाच्यम्। 'पूर्वत्राऽसिद्धम्' (८।२।१) इत्यस्याऽधिकारसूत्रत्वेन, सञ्ज्ञाशास्त्रस्य कार्यकालपक्षे पृथक्कार्याऽबोधकत्वेनाऽतिदेशस्य कार्याऽर्थत्वेन च, तत्तदेकवाक्यतापन्नसञ्ज्ञापरिभाषाशास्त्रं प्रत्येव तत्तदसिद्धत्वबोधनेनाऽदोषात्।

एवञ्च मूत्वदृष्ट्याऽनुनासिकविधेरसिद्धत्वेन तदेकवाक्यतापन्नस्यापि तद्दृष्ट्याऽसिद्धत्वेन मूत्वशास्त्रेऽनुवृत्त 'पूर्वत्राऽसिद्धम्' इत्यत्रत्यपूर्वग्रहणेन तस्य ग्रहीतुमशक्यत्वेनाऽदोषात्। यथोद्देशे तु स्वातन्त्र्येण संज्ञादिशास्त्राणां कार्यबोधकत्वात् तत्प्रति मूत्वाऽसिद्धत्वबोधनं शक्यमेवेति चेन्न। अनुनासिकविधौ 'अप्रगृह्याऽदसः' इत्येव सिद्धौ, प्रकरणोत्कर्षेण सामान्यसंज्ञासूत्रकरणसामर्थ्येन 'प्लुतप्रगृह्याः' (६।१।१२५) इत्यत्राऽप्युपस्थित्या तत्सा-[1]मर्थ्येनाऽसिद्धत्वबाधात्। 'हेऽसुक' 'असु[2]का' इत्यादौ व्यवस्थितविभा[3]षाश्रयणात् सूत्रमतेऽपि नाऽनुनासिकः। ध्वनितं चेदं भाष्ये।

**केचित्तु** 'अदस इत्यावर्त्य 'न विद्यते दस्य स्थाने सो यस्य तादृशाऽदसः' इत्यर्थेन (असुकेत्य[4]ादौ) अनुनासिको भाष्यमतेऽपि भवत्येव'इत्याहुः। **एकारोऽपीति**—तथा च एकाराऽनुवृत्तितात्पर्यग्रहफलकं माद्ग्रहणमिति भावः।

**शे** (१।१।१३)–'अस्मे इति' इत्यनुकरणाऽर्थं लोकेऽप्यस्त्येवाऽस्योपयोगः। 'अस्मभ्यम्' इत्यत्र भ्यसः 'सुपां सुलुक्' (७।१।३९) इति 'शे' आदेशः। 'शेषे लोपः'। (७।२।९०)।

(अनुक[5]ार्याऽनुकरणयोर्भेदविवक्षासत्त्वेन)–'प्रकृतिवदनुकरणम्' (पृ० ३६)

---

१. 'प्लुतप्रगृह्या इत्यत्राप्युपस्थित्या तत्सामर्थ्येन' इति क. ग. पाठः। ख. नास्ति।

२. 'असुका' इत्यादौ संज्ञापूर्वकविधेरनित्यत्वात् सूत्रमतेऽपि नानुनासिकः, इति ख पाठः।

३. 'व्यवस्थितविभाषाश्रयणात्' इति क. ग. पाठः। ख. नास्ति।

४. ख पाठः। क. ग. नास्ति। ५. ख. पाठः। क. ग. नास्ति।

इत्यतिदेशेन पदत्वात् पदान्तत्वप्रयुक्तोऽपि प्रकृतिभावो भवत्येव । (न चैवमपि प्रातिपदिकत्वाऽऽपत्तौ सुबापत्तिः । तेनैवातिदेशेन प्रत्ययान्तत्वात्) ।

न चात्र 'प्रकृतिवदनुकरणम्' (प० ३६) इत्येव सिद्धम् । 'त्वे राय' इत्यादावनुकार्ये फलाऽभावेन प्रगृह्यत्वाऽप्रवृत्तौ, तदनुकरणेऽतिदेशेनाऽसिद्धयोपदेशप्रवृत्तेरेव वाच्यत्वात् ।

**निपात** (१।१।१४)—निपात इति किम् ? अकारो वासुदेवः । हे अ-इदं पश्य=एदं पश्य । एकाजिति न बहुव्रीहिः । किन्तु कर्मधारयः । वर्त्तिपदार्थ-प्रधानत्वेनाऽन्तरङ्गत्वात्, 'व्याहरति मृगः' इत्यादिनिर्देशाच्च । तेन 'प्रेदम्' इत्यादौ न दोषः । तद् ध्वनयन्नाह—**एकोऽजिति** ।

**आङ्वर्ज** इति—एतेन पर्युदासोऽयमिति ध्वनयति । इत एव 'एकाज् नाऽऽङ्' इति नाऽसूत्रि । यत्तु—'नाऽयं पर्युदासः, किन्तु प्रसज्यप्रतिषेधः । 'आ उ=ओ' इत्यत्राऽऽङ्नाङोरेकादेशस्याऽनाङिति प्रतिषेधे प्राप्ते, प्रतिप्रसवाय 'ओत्' (१।१।१५) इति सूत्रमित्यर्थकेन 'प्रतिषिद्धार्थोऽयमारम्भः' इति भाष्यग्रन्थेन बोधितत्वात् । पर्युदासे[2] त्वनेनैव सिद्धौ भाष्याऽसङ्गतिः स्पष्टैव । अनाङिति पर्युदासेनैवाऽज्रूपत्वे च लब्धे निपातपदस्य, 'एकाच्' पदस्य च वैयर्थ्याऽऽपत्तिश्च । फले विशेषाच्च । तथा हि वासुदेवाऽऽदि-[3]वाचकाऽशब्दस्याऽऽङा सहाऽव्ययीभावे, आ आत्–अम्, ततः समासे,[4] अम् इतः='एतः' इति रूपं **प्रसज्यप्रतिषेधपक्षे** । तस्य पूर्वान्तवत्त्वेन,[5] स्थानिवद्भावाद्[6] वा आङ्त्वेन प्रगृह्यत्वप्रतिषेधात् । **पर्युदासपक्षे** तु स्वत आङ-

---

१. ख. पाठः । क. ग. नास्ति ।

२. 'पर्युदासे तु पूर्वसूत्रेणैव सिद्धौ' ख. पाठः ।

३. वासुदेवादिवाचकस्य 'अ' शब्दस्येत्यर्थः ।

४. 'ततस्तत्पुरुषे' ख. पाठः ।

५. 'पूर्वान्तवत्त्वेन, इति ख. नास्ति ।

६. 'तस्य स्थानिवद्भावादाङ्त्वेन' ख. पाठः ।

भिन्नत्वेन, स्थानिवद्भावेन निपातत्वाच्च प्रगृह्यत्वं दुर्वारमेव। पराऽऽदिवत्त्वेनाङ्भिन्नत्वं तु न लभ्यम्। अशास्त्रीयत्वात्। एवम्—अमित्यादौ प्रगृह्यत्वादमि पूर्वत्वाऽनापत्तिः। पूर्वाऽन्तवत्त्वेन पदान्ततया प्रकृतिभावात्'-इति। तन्न।

'अदोऽभवत्' इत्यादिसिद्धयर्थं प्रतिपदोक्तौकारग्रहणेन, निपातसमुदाये निपातत्वाऽभावेन च, 'ओषु यातम्' इत्यत्र 'ओत्' (१।१।१५) इत्यस्याऽप्राप्तेः, 'आहो' 'उताहो' इत्यादेरखण्डनिपातत्वपक्षस्याऽपि भाष्ये उक्तत्वात्, पर्युदासेऽपि गम्यस्य प्रतिषेधस्य सत्त्वेन 'प्रतिषिद्धार्थः' इति भाष्याऽनुपपत्त्यभावाच्च, लाघव-तर्क-सहितपर्युदासत्यागे मानाऽभावात्। आङ्त्वस्य पूर्वान्तवत्त्वेनातिदेशेऽतिदिश्यमानधर्मविरुद्धस्वाऽऽश्रयधर्मप्रयुक्तकार्यस्य निवृत्तेरुक्तत्वेनाऽऽङ्भिन्नत्वाऽभावात् पर्युदासेऽपि 'एतः' इत्यादौ क्षत्यभावाच्च। 'विधिनिषेधयोरेकवाक्यतायामप्राप्त्यनुमानमेव बाधः' इति 'क्ङिति च' (१।१।५) इत्यादिसूत्रस्थकैयटाद्युक्तरीत्या एकवाक्यतायाः पर्युदासविधयैव वक्तव्यतया, तस्यां च सत्यां त्वदुक्तरीत्या 'सार्वधातुकमपित्' (१।२।४) इत्याद्यतिदेशविषये गुणाऽऽद्यापत्त्या, प्रसज्यप्रतिषेधपर्युदासयोरेवंजातीयफलविशेषस्य मदुक्तरीत्या वारणं सर्वेषामावश्यकम्।

'अनाङ्' इतिपर्युदासादेव निपाते लब्धे, निपातग्रहणमुत्तरार्थमावश्यकं स्पष्टप्रतिपत्तये इहैव कृतम्। एकाज्ग्रहणन्तु एकाज्रूपनिपातमात्रस्य प्रगृह्यत्वार्थम्। तेन गौणानाम्—'ई अभवत्' इत्यादौ संज्ञासिद्धिः।

अत एव 'च्व्यन्तस्य प्रतिषेधः' इति वचनमोत्सूत्रे वार्त्तिककृताऽऽ-

---

१. 'पूर्वान्तवत्त्वेन पदत्वादिति' इति ख. पाठः।
२. 'ओकारग्रहणस्य भाष्यकृतैवोक्तत्वेन ओषु यातमित्यत्र' ख. पाठः।
३. 'आहो उताहो इत्यादेः' इति क. ग. पाठः। ख. नास्ति।
४. 'धर्माऽविरुद्ध' इति ख. पाठः।
५. 'फलविशेषस्य वक्तुमशक्यत्वादित्यपि कश्चित्' इति ख. पाठः।
६. 'अत एव' इत्यारभ्य 'अच्त्वाभावात्' इत्यन्तः क. पाठः। ख. नास्ति। ग. तु मन्ये त्रुटितः।

रब्धम् । एकाच्प्रकृतिकच्व्यन्तानामनभिधाने तु स्पष्टार्थमेव ।

स्वाङ्गसमुदाये स्वाङ्गत्वाऽभाववदच्समुदायेऽच्त्वाभावात्, अजित्येव तद्ग्रहणाऽभावे[1] सिद्धे, एकग्रहणमन्यत्र वर्णग्रहणे जातिग्रहणार्थम् । तेन 'धिप्सति' इत्यादिसिद्धिरिति भाष्ये स्पष्टम् । 'जातिग्रहणार्थम्'[2] इत्यस्योपात्तजात्याश्रयैकाऽनेकव्यक्तिग्रहणार्थमित्यर्थः । तेन 'तितउ'शब्दैकदेशस्य 'अउ' इत्यस्याऽनुकरणे 'अउ अकरोत्' इत्यत्र 'अनुकरणं चाऽनिति' (१।४।६२) इति निपातत्वेऽपि प्रगृह्यत्वाऽभाव इत्याहुः ।

यत्तु कैयटेनाऽच्समुदायग्रहणशङ्कानिरासा[3]र्थम् । अन्यथा 'अइउ अपेहि' इत्यत्र समुदायैकाज्द्विर्वचनवत् समुदायस्यैव प्रगृह्यत्वं स्यान्नावयवानाम् । (सिद्धा[4]न्ते तु तक्रकौण्डिन्यन्यायाऽनित्यत्वात् प्रगृह्योऽपि परे प्रकृतिभावः) इति । तन्न । समुदायसंज्ञयाऽवयवानामननुग्रहात् । उक्तरीत्या[5] निपातसमुदायस्य निपातग्रहणेनाऽग्रहणाच्च ।

ननु ङकारस्य क्वाऽप्यश्रवणेन ङिदङिद्विवेको दुर्ज्ञेय इत्यत आह—**वाक्यस्मरणयोरिति ।** वाक्यशब्देन वाक्याऽर्थगतमन्यथात्वमुच्यते । अन्यथात्वं चाऽनभिमतत्वमेव । पूर्वोदाहरणस्य-'पूर्वमेवं नाऽमंस्थाः, इदानीं त्वेवं मन्यसे' इत्यर्थः । (ए[6]वं पर्यवसाने हि पूर्वोक्ताऽर्थस्याऽनभिमतत्वं स्फुटमेवाऽवगम्यते) । द्वितीये हि—विस्मृतस्य स्मृतिविषयता द्योत्यते । एवं **किल तदिति**—स्मृताऽर्थनिर्देशः । एवं च इतोऽन्यत्राऽङिदित्यर्थादुक्तं

---

१. 'तद्ग्रहणाऽभावे' इति ख. नास्ति ।

२. जातिग्रहणार्थम्, इत्यारभ्य 'ग्रहणार्थमित्यर्थः' इत्यन्तः पाठः ख. नास्ति ।

३. अस्य 'एकग्रहणम्' इति शेषो बोध्यः ।

४. क. पुस्तके कुण्डलितोऽयं ख. पाठः । ग. तु नास्त्येव ।

५. 'उक्तरीत्या निपातसमुदायस्य निपातग्रहणेनाऽग्रहणाच्च' इति पाठः ख. नास्ति ।

६. ख. पाठः । क. ग. नास्ति ।

भवति[1] ।

'निपात' इत्यनुवृत्तम् 'ओत्' (१।१।१५) इत्यनेन विशेष्यते इत्याह—**ओदन्त इति ।** ननु-अनदः अदः समभवत्, 'अदोऽभवद्' अगौर्गौः समभवत्—'गोऽभवत्' इत्यादौ प्रगृह्यसंज्ञा दुर्वारा । लक्षणप्रतिपदोक्त(प० ११५)-न्यायस्य, गौणमुख्य(प० १५)न्यायस्य च वर्णग्रहणेऽप्रवृत्तेरिति चेन्न[2] । निपात[3]सञ्ज्ञा हि चादिपदोपस्थितचादीनां सति सम्भवेऽर्थवतामेवेति, ये साऽर्थकास्तेषां निपातपदेनाऽपि तत्तदर्थविशिष्टानामेवोपस्थितिरिति,—प्रकृतसूत्रस्थनिपातपदेन मुख्याऽर्थकनिपातानामेव ग्रहणम्, न तु गौणार्थ-कानामित्यदोषात् । वर्णग्रहणे हि तदप्रवृत्तावर्थाऽनुपस्थितिरेव बीजम् । तस्याश्चाऽत्राऽनुपस्थितेरसत्त्वात् तत्प्र[4]वृत्तेः सूपपादत्वात् । एवञ्च[5] कार्य-कालपक्षे 'च्व्यन्ता निपाताः' इत्यस्याऽत्राऽनुपस्थितिः, एतत्परिभाषाव-

---

१. इतोऽग्रे—तदुक्तं भाष्ये—

ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः ।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित् ॥

मर्यादाऽभिविधावित्यत्र समाहारद्वन्द्वे 'आगमशासनस्याऽनित्यत्वा-न्नुमभावः । मर्यादासहितेऽभिविधावित्यर्थौ वा । अत्राऽङि ङित्त्वलक्षण एव तात्पर्यम् । अन्यस्य ङित्त्वं त्वर्थतो लब्धम् । 'ईषदर्थे' इत्यादिस्त्वयुत्याऽनु-वादः । एवं च 'अभ्र आँ अपः' इत्यत्र सप्तम्यर्थवृत्तेरप्याकारस्य निरु-क्तोक्तस्य ङित्त्वाद् 'आङोऽनुनासिकः' (६।१।१२६) इति भवति । अव्ययीभावाऽभावश्च छान्दसत्वादित्याहुः' इति ख. पाठोऽयं क. कुण्डलितः । ग. नास्ति ।

२. इतोऽग्रे—'निपात' इत्यनुवृत्त्याऽर्थवद्ग्रहणपरिभाषया चोपस्थितस्याऽर्थस्य गौणमुख्य(प० १५)न्यायेन मुख्यस्यैव ग्रहणात् । वर्णग्रहणे हि तदप्रवृत्तौ' इति ख. पाठः ।

३. 'निपातसंज्ञा हि' इत्यारभ्य 'इत्यदोषात्' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

४. 'प्रवृत्तिः सूपपादा' ख. पाठः ।

५. 'एवं च' इत्यारभ्य 'इति बोध्यम्' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

शात् । अव्ययसंज्ञादौ तु नैतत्परिभाषाप्रवृत्तिः, अनित्यत्वादिति बोध्यम् । ध्वनितं चेदं भाष्ये ।

सादृश्यसम्बन्धेन प्रवृत्तिश्च-गौणत्वम्[1] । तत्रैव च्वेः साधुत्वस्य तद्विधायके वक्ष्यमाणत्वात्[2] । अनर्थकेऽपि[3] निपाते तत्कार्यं भवत्येव । तेषामपि निपातपदेनोपस्थितेरिति दिक् ।

निपातः किम् ? देवोऽसि । वायवायाहि ।

**सम्बुद्धौ** (१।१।१६)—यद्यपि 'सम्बुद्धिपरौकारस्य' इत्यपि व्याख्यातुं शक्यम्, 'तस्मिन्निति' (१।१।६६) परिभाषाबाधे मानाऽभावादुचितं च, तथाऽपि 'त्रपो इति' इत्यादौ प्रगृह्यत्वं यथा स्यादित्येतदर्थं निमित्तत्वेन व्याख्यातम् । तत्र सोर्लुका लुप्तत्वेन सम्बुद्धिपरत्वाऽभावात् । 'न लुमत' (१।१।६३) इति निषेधाऽनित्यत्वन्तु अगतिकगतिरित्याहुः ।

इताविति किम् ? पटोऽत्र । अनार्षे किम् ? 'ब्रह्मबन्धवित्यब्रवीत्' ।

---

१. 'गौणत्वात्' ख. पाठः ।

२. इतोऽग्रे–'प्रातिपदिकसंज्ञाविधौ तु महासंज्ञाकरणेन बोधकमात्रे तत्संज्ञाप्रवृत्तेर्नैतन्न्यायप्रवृत्तिः । अत एव 'अत इञ्' (४।१।९५) इत्यादावपि न प्रवृत्तिः । निपातपदस्य च–निपतन्त्यनेकेष्वर्थेष्विति, निपातयन्ति वा स्वार्थमन्यस्मिन्निति योगेनाऽर्थोपस्थापकत्वम् ।

यद्यप्यन्यत्र निपातग्रहणे [1]सर्वग्रहणमिष्यते' तथाऽपीह शब्दाऽधिकारमाश्रित्य भाष्यप्रामाण्येनाऽर्थवत्परिभाषा प्रवर्त्तते एव । अत एव 'निपात' इति सूत्रं विहाय–ओदिति सूत्रे एव 'ओतश्च्व्यन्तस्य प्रतिषेधः' इति वार्त्तिकाऽऽरम्भ इति दिक्'–इति ख. पाठः ।

३. 'अनर्थके' इत्यारभ्य 'इति दिक्' इत्यन्तः क ग. पाठः । ख. नास्ति ।

---

1. अर्थवदनर्थकमात्रग्रहणमित्यर्थः ।

वस्तुनो वेदे आपाद्यरूपाऽभावात्, सिद्धरूपस्य च विकल्पवृत्तावपि सिद्धत्वाद् व्यर्थमनार्षग्रहणमित्याहुः।

ऋषिर्वेदः। 'तदुक्तमृषिणा' इत्यादौ तथा दर्शनात्।

नन्विदं सूत्रं व्यर्थम्। संहिताया अविवक्षायां 'विष्णो इति' इत्यस्य सिद्धेः। समासे त्वस्याऽप्रवृत्तिरेव। तत्र हि सुब्लुकि तन्निमित्तौकाराऽभावात्, सम्बुद्ध्यन्तेन प्रायः समासाऽभावाच्चेति चेन्न। अर्द्धमात्राकालस्य वर्णोच्चारणे नियतत्वेन, तदधिककालव्यवायाऽभावः **संहिता**। तस्या अविवक्षा नाम तदधिककालव्यवायेन वर्णानामुच्चारणविवक्षा। अधिकः कालोऽपि न यथेच्छम्, किन्त्वर्धमात्राकाल एव। अत एव 'मुहूर्त्ताऽऽदिव्यवधाने न साधुत्वम्, नाऽप्यर्थबोध इति **वृद्धाः**। एवं च मात्राकालव्यवाये संहिताया अविवक्षणेन साधुत्वे सिद्धेऽपि, अर्द्धमात्राकालव्यवायेनोच्चारणेऽवादिरहितप्रयोगाऽर्थं सूत्रस्याऽऽवश्यकत्वात्।

न चैवं 'मयूररोमभिः' इत्यादाववग्रहे संहितानित्यत्वव्याघातः। इष्टाऽऽपत्तेः। अवग्रहेण विशेषविहितेन स्वविषये संहितानित्यत्वस्य बाधात्। वर्णोच्चारणे स्वाभाविकाऽर्द्धमात्राकालापेक्षयाऽधिकाऽर्द्धमात्राकालो ह्यवग्रह इत्याहुः।

---

१. 'इतोऽग्रे 'यत्तु—'गवित्ययमाह' इति इह सम्बुद्धिग्रहणस्य ओदित्यत्र निपाताऽनुवृत्तेश्च प्रत्युदाहरणम्।

ननु 'प्लुतप्रगृह्याः' (६।१।१२५) इति सूत्रे 'पदान्ता' इति सम्बध्यते। अन्यथा 'इकोऽसवर्णे' (६।१।१२७) इत्यादौ मण्डूकाऽनुवृत्त्याऽऽपत्तेः। मण्डूकाऽनुवृत्तिश्च-सम्बन्धतदभावोभयकल्पनाऽऽपत्त्या अन्याय्या। प्रकृते च न पदान्तत्वम्। अनुकार्यानुकरणयोरभेदविवक्षयाऽर्थवत्त्वाऽभावेन विभक्त्यनुत्पत्तेः। अत एव तस्याः श्रवणं न। अभेदविवक्षा नाम सादृश्यसम्बन्धेनोपस्थापकत्वम्। एवञ्च वृत्त्याऽर्थबोधकत्वाऽभावात् प्रातिपदिकत्वाऽभावः स्पष्ट एव। अर्थबोधकत्व-तदभावाभ्यां भेदस्य सत्त्वेन सादृश्याऽनुपपत्तिः।

न च लिङ्गसर्वनामनपुंसकताऽभ्युपगमेन लुका निर्वाहः। ह्रस्वाऽऽपत्तेः। न च नैकधेतिवत् 'सुप्सुपा' (२।१।४) इति समासेन निस्तारः।

सम्बु[1]द्धौ किम् । 'अहो इति' इत्यादावेव प[2]रत्वाद् विकल्पो माभूदितीत्युक्तम् ।

---

'इति'शब्दस्य—(शब्दस्वरूपपरतातात्पर्यग्राहकत्वेन तेनैकार्थीभावरूपसामर्थ्यस्य दुरुपपादत्वात् । इतिशब्दस्य–) प्रकारार्थतया वक्ष्यमाण· त्वेनोपसर्जनत्वात् पूर्वनिपाताऽऽपत्तेरिति चेन्न ।

'गोभ्याम्' 'गोक्षीरम्' इत्यादिलक्ष्यवर्त्ति 'गो'शब्दाऽनुकरणे 'प्रकृतिवदनुकरणं भवति' (पृ० ३६) इत्यतिदेशेन पदत्वस्य सुलभत्वादिति । तन्न । अतिदेशस्याऽनित्यतया तदप्रवृत्तिमाश्रित्याऽपि सुसाधत्वेनाऽसाधारणप्रयोजनत्वाऽभावादिति केचित् ।[1]

परे[2] तु तदतिदेशस्याऽनित्यत्वे मानाऽभावः । 'यत्तदेतेभ्यः' (५।१।३९) इत्यादावेकशेषस्त्वनुकार्यस्वरूपभङ्गभिया न कृतः, 'झलां जश् झशि' (८।४।५३) इत्यादौ जश्त्वाऽऽदिवत् । 'जेः' 'किरः' इत्यादौ विभक्तिस्तु सौत्रत्वादेवेत्याहुः । तन्न । 'क्षियो दीर्घात्' (८ २।४६) इति सूत्रेऽष्टमे तदनित्यत्वस्य स्पष्टत्वात् ।

[3]'यत्तदेतेभ्यः' इत्यादेर्ज्ञापकस्य विशेषाऽपेक्षत्वेन, वतिना सादृश्यस्य भेदघटितस्य बोधनेन च, भेदविवक्षायामेवाऽतिदेशप्रवृत्तेश्च । सा चेहाऽशक्या । विभक्तिश्रवणाऽऽपत्तेः । अत एव इनाऽऽतोः प्रत्याख्यानपरभाष्येण न विरोधः । अन्यथा 'नाऽऽदेशे रामेणेत्येकादेशभूत'रामे' इत्यनुकरणे, 'रामे' इत्यादावयादेशे, अतिदेशात् पदत्वेन पक्षे लोपः स्यात्, सूत्रमते नेति फलभेदात् तदसङ्गतिः स्पष्टैव । एतेन 'अनुकार्याऽनुकरणयोरभेदादेव पदत्वलाभः' इत्यपास्तम् । अभेदबोधनेन भेदप्रयुक्ताऽर्थवत्त्वानिमित्तप्रातिपादिकत्वाऽभावेऽपि, शब्दाऽन्तरनिष्ठधर्मवैशिष्ट्यस्य बोधयितुमशक्यत्वात् । 'सम्बुद्धौ' (१।१।१६) इति तु 'अहो इति' इत्यादौ परत्वादि विकल्पप्रवृत्त्यभावाऽर्थमित्युक्तमेवेति दिक् ।

१. इत आरभ्य 'इतीत्युक्तम्' इत्यन्तः क. पाठः । ख. तु अग्रे वर्त्तते । स च टिप्पण्यां द्रष्टव्यः । २. 'परत्वाद्विकल्पः' इति मनोरमापाठः ।

---

1. 'इति केचित्' इति ख. नास्ति । क. कुण्डलितः ।

2. 'परे तु' इत्यारभ्य 'तदनित्यत्वस्य स्पष्टत्वात्' इत्यन्तः ग्रन्थः ख. नास्ति ।

3. 'यत्तदेतेभ्यः' 'इत्युक्तमेवेति दिक्' इत्यन्तो ग्रन्थः ख. पाठः ।

उञिति न प्रत्याहारः। 'उञ्'ग्रहणसामर्थ्यात्। अन्यथा हल्षु विशेषाऽभावादुज्ग्रहणमेव[1] कुर्यात्। उञ्निपाते ञकारोच्चारणसामर्थ्याच्च।

**'उञ ऊँ'**इत्येकसूत्रत्वे तु-शाकल्यग्रहणाऽननुवृत्तौ 'ॐ इति' इत्येकमेव स्यात्। प्रगृह्यसंज्ञाप्रकरणे पाठेन तद्विशिष्टस्यैव[2] विधानात्। स्थानिवद्भावेन 'निपात एकाऽज्' (१।१।१४) इति प्रगृह्यत्वाच्च[3]। 'उ इति', 'विति' इति च न स्यात्।

तदनुवृत्तौ[4]—आदेशाऽभावे 'निपात एक' (१।१।१४) इति प्रगृह्यत्वेन, 'उ इति' इति सिद्धावपि, 'विति' इत्यस्याऽनापत्तिः।

न च उ इतीतिरूपस्य निरनुबन्धकोकारमादाय सिद्धत्वेन, शाकल्याऽनुवृत्तिसामर्थ्यात् पक्षे वितीति भविष्यतीति वाच्यम्। उ इतीत्यतः साऽनुबन्धबोधकबोधस्याऽपीष्टत्वेन तदनापत्तेः[5]। किञ्च[6] मयः परत्वे—'किम्विति' इत्यादौ मकारसहितवकारघटितरूपाऽसिद्धिः तदनुवृत्तिसामर्थ्यान्निपात इति प्रगृह्यत्वाऽभावेऽपि, 'मय' (८।३।३३) इतिवत्वाऽसिद्धत्वेनेको यणचीति वत्वेऽनुस्वाराऽऽपत्तेः। यद्वाऽनेन प्रकरणात् प्रगृह्यसंज्ञस्य 'ऊँ' (१।१।१८) आदेशस्य विधानेनाऽस्य 'निपात'इति प्रगृह्यसंज्ञापवादत्वादेतदादेशविकल्पे 'ऊँ इति', 'विति' इति च सिध्यति, न तु 'उ इति'। अतो योगविभागेन व्याचष्टे—**उञः** (१।१।१७) इति। उञो वाचकं प्रगृह्यपदमित्यर्थः! 'शाकल्यस्य इतौ प्रगृह्यम्' इत्यनुवर्त्तते। तदाह—**उञ इतौ**

---

१. 'उञ्प्रत्याहारं विहाय उचप्रत्याहारेणैव व्यवहरेदित्यर्थः।
२. 'तस्या अपि विधानात्' ख. पाठः।
३. इतोऽग्रे–'न च दीर्घोच्चारणसामर्थ्याद्यणाद्यभावः। असंहितायां चरितार्थत्वात्'–इति ख. पाठः।
४. शाकल्यपदानुवृत्तावित्यर्थः।
५. इतोऽग्रे–'फलान्तरमपि भाष्यप्रदीपोद्द्योते निरूपितम्'–इति ख. पाठः।
६. 'किञ्च मयः' इत आरभ्य 'उ इति' इत्यन्तोऽयं ग्रन्थः क. ग. पाठः। ख. नास्ति।

**वेत्यादि ।** विकल्पा[1]ऽननुवृत्तौ हि 'निपात एक' (१।१।१४) इत्येव सिद्धे इदं व्यर्थमेव स्यात् । एवं च प्राप्तविभा[2]षेयम् ।

---

१. 'वाग्रहणाननुवृत्तौ' ख. पाठः ।

२. इतोऽग्रे–'ननु योगविभागेऽपि 'ऊँ' (१।१।१८) इति सूत्रे शाकल्यस्य, प्रगृह्यस्येत्युभयमपि नाऽनुवर्त्त्यम् । 'उञः' (१।१।१७) इति विकल्पस्तु सामर्थ्यादादेश एव तत्कार्यप्रवृत्त्या, 'ऊँ इति' 'विति' इतिरूपद्वयाऽर्थे भविष्यति । आदेशस्य स्थानिवत्त्वेन प्रकृतिभावाऽपवादभूत'मय उञः' (८।३।३३) इत्यनेनाऽऽन्तरतम्यादनुनासिकवकारस्य सुलभत्वेन, 'किम्वँति' इत्यपि सिद्धमिति चेन्न ।

प्रगृह्यत्व-तदभावयोरुभयत्राऽऽप्यादेशाऽऽपत्तौ, उ इतीत्यस्य, निरनुनासिकवकारघटित–वितीत्यस्य चाऽनापत्तेः ।

किञ्चाऽप्रगृह्यत्वपक्षे 'ऊँ' (१।१।१८) आदेशे, 'इको यणचि' (६।१।७७) इति यणि,मयः परत्वेऽनुस्वारसहितसाऽनुनासिकवकारघटित-रूपप्रसङ्गात् । एतेन 'अत्र प्रगृह्यग्रहणमात्रमनुवर्त्तते' इत्यपास्तम् । एवं हि 'उञः' (१।१।१७) इत्यनेन पक्षे कृतप्रगृह्यस्यैव 'ऊँ' आदेशः स्यात् । तथा च प्रगृह्यत्वाऽभावे आदेशाऽभावादिको यणित्यनेन यणि, वितीत्यस्य सिद्धावपि, उञर्थक–'उ इति' इत्यस्य, मयः परत्वे मकारसहितनिरनु-नासिकवकारघटितरूपस्य चाऽसिद्धेस्तदवस्थत्वात् ।

न च प्रगृह्यमित्यस्य प्रथमान्ततया आदेशेनैव तत्सम्बन्धः स्यादिति वाच्यम् । एवं हि उञ्मात्रस्य नित्यं प्रगृह्यसंज्ञक––'ऊँ'भावविधाने योगविभागस्य वैयर्थ्याऽऽपत्तेः ।

न च शाकल्यग्रहणमात्रमनुवर्त्तताम् । 'उञः' इत्यनेन उ इतीत्यस्य, वितीत्यस्य च सिद्धेः । 'ऊँ' आदेशस्याऽपि वैकल्पिकत्वात् । न च 'शाकल्यस्यैव प्रगृह्यत्वम्' तस्यैव च तेनाऽऽदेश इति तयोरेकप्रयोगे एव प्रवृत्तिः स्यात् । योगविभागसामर्थ्येन शाकल्यमते एव भावाऽभावकल्प-नात् । तदुक्तं भाष्ये 'ऊँ वा शाकल्यस्य' इति । मयः परत्वे प्रगृह्यत्वपक्षे, आदेशाऽभावे च मकारसहितनिरनुनासिकस्यापि सिद्धेरिति वाच्यम् ।

ऊँ (१।१।१८)—अत्र[1] 'शाकल्य' 'प्रगृह्य'पदयोरसम्बन्धे 'उञः' इत्यर्थाधिकारादप्रगृह्यस्यैवादेशे तस्य इको यणचि यणि, 'ऊँ इति' इत्यस्याऽसिद्धिः। दीर्घोच्चारणवैयर्थ्याऽऽपत्तिश्च। विकल्पमात्रसम्बन्धेऽपि 'ऊँ इति' इत्यस्याऽसिद्धिरेव। तथा 'प्रगृह्य'पदमात्रसम्बन्धेऽप्रगृह्यस्य नित्ये 'ऊँ'आदेशे, ऊँ इतीति, प्रगृह्यस्य उ इतीति सिद्धेऽपि, वितीति न सिध्येत्। योगविभागवैयर्थ्याऽऽपत्तेश्च। तस्माद् योगविभाग-दीर्घोच्चारण-सामर्थ्याद् द्वयोरपि सम्बन्धः।

यत्तूभयाऽसम्बन्धे, प्रगृह्यपदमात्राऽसम्बन्धे वा प्रगृह्याऽप्रगृह्योञ्मात्रस्यादेशाऽऽपत्तिरुक्ता। तच्चिन्त्यम्। अर्थाऽधिकारस्योचितत्वात्। तदाह—**उञ इतौ दीर्घो नुनेत्यादि।** अत्र विशिष्टविधिर्बोध्य इति न वाक्यभेदाऽऽपत्तिर्दोषः। न च शाकल्यस्यैव प्रगृह्यत्वम्, तस्यैव च मते आदेश इति तयोरेकप्रयोग एव प्रवृत्तिः स्यादिति वाच्यम्। योगविभागसामर्थ्येन शाकल्यमत एव भावाऽभावकल्पनात्। तदुक्तं भाष्ये—'ऊँवा शाकल्यस्य' इति।

(इह[2] मय उञ इतौ पञ्च रूपाणि–(१) 'ऊँ' आदेशे 'मय उञः'(८।३।३३) इति वत्वे मकारसहितसानुनासिकवकारोपेतमेकं–किम्वँतीति। (२) वत्वा-

मयः परत्वेऽप्रगृह्यत्वपक्षेऽपि संहिताऽनिमित्तत्वेनाऽन्तरङ्गत्वात् 'ऊँ' आदेशे, तस्य प्रगृह्यत्वाऽभावेनेको यणचीत्याऽऽप्तावनुस्वारघटितसाऽनुनासिकवकारघटितरूपाऽऽपत्तेः। किञ्च 'इकोऽसवर्णे' (६।१।१२७) इति पाक्षिकह्रस्वप्रसङ्ग इत्याशयेनाऽऽह—उञ इतौ दीर्घोऽनुनेत्यादि।

न च विधेयाऽनेकत्वे वाक्यभेदः, 'तद्वाक्यविधेयस्य तद्वाक्यविधेयाऽन्तरे उद्देश्यत्वाऽभावः' इत्यर्थस्य 'अनुदात्तं सर्वमपादादौ (८।१।१८) इति सूत्रस्थ-'सर्व'-ग्रहणेन ज्ञापयिष्यमाणत्वादसम्भवश्चेति वाच्यम्। विशिष्टविधेः सत्त्वेनाऽदोषात्'—इति ख. पाठः।

१. 'अत्र शाकल्यप्रगृह्यपदयोः' इत्यारभ्य 'किं वितीति' इत्यन्तः क. ग. पाठः। ख. नास्ति। ख. तु भिन्नोऽत्र पाठः।

२. क. कुण्डलितः पाठः। ख. ग. नास्ति।

ऽभावे- किमूँ इतीति । (३) 'ऊँ'आदेशाऽभावे प्रगृह्यत्वे (वत्वपक्षे) मकार-सहितनिरनुनासिकवकारोपेतं—किम्वितीति । (४) तद[1]भावे–किमु इतीति । (५) प्रगृह्यत्वाऽभावे'मय उञः' इत्यस्याऽसिद्धत्वादिको यणिति यणि, (तस्य यणः सिद्धत्वात्-) अनुस्वारेऽनुस्वारसहितनिरनुनासिकवकारघटितं–किं वितीति) ।

**मय उञो** (८।३।३३)—अ[2]त्र व्याख्यानान्न 'मयः' धातोर्ग्रहणम् । तद् ध्वनयन्नाह—**किम्वुक्तमिति** । 'प्लुतप्रगृह्याः' (६।१।१२५) इत्यनेन तु नाऽस्य बाधः । त्रिपादीस्थत्वेनाऽसिद्धत्वात् । **नाऽनुस्वार इति**—प्रगृह्य-संज्ञाऽभावे वत्वस्याऽसिद्धत्वात् 'इको यण्' इति यणि, अनुस्वारो भवत्येव[3] य[4]णो बहिरङ्गाऽसिद्धत्वन्तु न । त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया

१. वत्वाऽभावे 'उञः' इति प्रगृह्यत्वे इत्यर्थः ।

२. 'अत्र बहुलक्ष्यसंस्कारानुरोधान्न मयधातोर्ग्रहणम्' ख. पाठः ।

३. एतदग्रे—'न च बहिरङ्गपरिभाषया यणोऽसिद्धत्वम् । त्रैपादिके बहिरङ्ग-परिभाषाया अप्रवृत्तेः । अत्र चेको यणित्यस्याऽनन्तरं 'मय उञो वे' ति पठितव्ये त्रिपाद्यामेतत्सूत्रकरणं मानम् । न च तथा न्यासेऽपि सन्निपात-परिभाषयाऽनुस्वारो दुर्लभः । अनुस्वारस्याऽसिद्धत्वेन [1]सन्निपातवि-घाताऽभावात्—इति ख. पाठः ।

४. 'यणः' इति क. ग. नास्ति । इत आरभ्य च 'एतत्सूत्रकरणात्' इत्यन्तः क. पाठः ।

'बहिरङ्गाऽसिद्धत्वं तु न । त्रैपादिकेऽन्तरङ्गे 'प्लुतप्रगृह्याः' इत्यस्याऽनन्तरं 'मय उञो वे' ति पठितव्ये त्रिपाद्यामेतत्सूत्रकरणात्' इति तु ग. पाठः ।

1. अस्य ख. पाठस्य खण्डनं ग्रन्थकारेणैव 'अनुस्वारस्याऽसिद्धत्वेन संनिपात-विघाताऽभावः' इति तु न युक्तम् । पूर्वत्रेति सप्तमीनिर्देशेन पूर्वत्र कर्तव्येऽसिद्धत्वेऽपि, कृते तस्मिन् परस्याऽसिद्धत्वाऽलाभात्' इत्यादिग्रन्थेन क. पुस्तकपाठे कृतमिति सुधीभिर्विभावनीयम् ।

अप्रवृत्तेः। 'इको यण्' (६।१।७७) इत्यस्यानन्तरं मय उञो वेति पठितव्ये त्रिपाद्यामेतत्सूत्रकरणात्।

न[1] चेको यणित्युत्तरं तथान्यासेऽपि संनिपात(प० १७) परिभाषयाऽनुस्वारो दुर्लभः। तदाऽनेन[2] प्रकृतिभावबाधे बोधिते, 'इकः' इत्यनेन यणि प्राप्तेऽस्य[3] प्राप्तविभाषात्वेनाऽभावे एव तात्पर्येण, वस्य[4] तत्संनिपातलक्षणत्वाऽभावात्। 'अनुस्वारस्याऽसिद्धत्वेन संनिपातविघाताऽभावः' इति तु न युक्तम्। पूर्वत्रेति सप्तमीनिर्देशेन पूर्वत्र कर्त्तव्येऽसिद्धत्वेऽपि, कृते तस्मिन् परस्याऽसिद्धत्वाऽलाभात्।

किञ्चाऽऽतिदेशिकसंनिपातविघाताऽभावमादायैतदप्र[5]वृत्तौ 'गौरी' इत्यादौ सम्बुद्धिलोपेऽपि, स्थानिवत्त्वेन ह्रस्वनिमित्त[6]विघाताऽभावात् तत्रैतस्या अतिव्याप्तिपरभाष्याऽसङ्गतिः संनिपातस्याऽशास्त्रीयत्वाऽन्नात्र स्थानिवत्त्वमिति चेत्। असिद्धत्वस्याऽपि कथमशास्त्रीये प्रवृत्तिरिति तुल्यम्। अशास्त्रीयेऽसिद्धत्वाऽप्रवृत्तिरपीदूदेदिति सूत्रे कैयटेन स्पष्टमुक्ता।

तस्माद् यदि त्रिपादिस्थे संनिपातपरिभाषाप्रवृत्तिरिष्टा तर्ह्यनित्यत्वादेव, न तूक्तयुक्त्येति सारम्। अत एव 'गव्यिता' इत्यादौ संनिपातपरिभाषया यलोपो न। अन्यथा तृज्निमित्तकलोपस्य बहिरङ्गत्वेनाऽसिद्धत्वादिहैव एतत्परिभाषाप्रवृत्तिर्न स्यादिति दिक्।

ननु 'यः शिष्यते स लुप्यमानाऽर्थाभिधायी' इति न्यायेन 'गौरी'शब्दस्य सप्तम्यर्थवृत्तित्वेऽपीकारस्य तत्त्वाऽभावः। तस्य[7] सप्तम्यप्रकृतित्वेन सप्तम्यर्थाऽनन्वितत्वात्) अत आह—**ईदूदन्तमिति।**

---

१. 'न चेको यणित्युत्तरम्' इत्यारभ्य 'स्यादिति दिक्' इत्यन्तः क. कुण्डलितः पाठः। ख. ग. नास्ति २. 'मय उञः' इत्यनेनेत्यर्थः।

३. मय उञो वेत्यस्येत्यर्थः। ४. इको यणचीतिविहितस्येत्यर्थः।

५. सन्निपातपरिभाषाया अप्रवृत्तावित्यर्थः। ६. सम्बुद्धिपरत्वरूपह्रस्वनिमित्तविघाताभावादित्यर्थः।

७. ख. पाठः। क. कुण्डलित. ग. नास्ति।

'सप्तम्यर्थे' इत्युपात्ताऽर्थाऽऽक्षिप्त–तद्वाचकशब्दस्य विशेष्यत्वात् तदन्तविधिरिति भावः।

**मामकी तनू इति**—यद्यप्यत्र संहितायां प्रगृह्यत्वस्य न प्रयोजनम्, तथाऽपि पदकाले बोध्यम्। प्रगृह्येषु 'इति' शब्दप्रयोगस्य पदकारैर्नियमितत्वात्। ईदूतौ किम्? अग्ना भवाति। सप्तम्या डाऽऽदेशः। अत्राऽग्ना इत्यस्य प्रगृह्यत्वे सति 'इति'शब्दप्रयोगः स्यात् पदकाले।

तपरत्वमसन्देहाय। सप्तमीग्रहणं किम्? 'धीती' 'मती'। ह्रस्वाऽन्तेभ्यस्तृतीयैकवचनस्य पूर्वसवर्णे सवर्णदीर्घः।

**वृत्तावर्थान्तरे** इति—नन्वत्र वाप्यादिपदानामाधेयाऽश्वरूपाऽर्थवृत्तित्वेऽपि 'अधिकं तु प्रविष्टम्, न तु तद्धानिः' इति न्यायेन सप्तम्यर्थवृत्तित्वाऽनपायात् प्रगृह्यसंज्ञा दुर्वारा। न चाऽर्थग्रहणसामर्थ्यात् सप्तम्यर्थमात्रे पर्यवसन्नमित्यर्थः। अत्र च न सप्तम्यर्थाऽधिकरणमात्रे'वापी'पदं पर्यवस्यति, किन्तु तत्संसृष्टाऽऽधेयाऽर्थे इति न दोष इति वाच्यम्। अर्थग्रहणाऽभावे ईदूदेतिवदीदूदन्ता या सप्तमीत्यर्थाऽऽपत्तिः। तथा च 'पपी' इत्यादावेव स्यात्, एकाऽऽदेशस्य पराऽऽदिवद्भावेन सप्तमीत्वात्। न तु गौरीत्यादौ। तथा च तत्सिद्ध्यर्थमर्थग्रहणस्याऽऽवश्यकऽत्वात्। न च संज्ञायाम् (२।१।४४) इति स[1]मासे जहत्स्वार्थायां वृत्तावयवानामानर्थक्येन सप्तम्यर्थवृत्तित्वाऽभावान्न दोष इति वाच्य[2]म्। 'सु[3]प्सुपा' (२।१।४) इतिसमासेऽजहत्स्वार्थायां दोषाऽऽपत्तेरिति चेन्न।

---

१. 'संज्ञायामिति समासे' इति क. ग. पाठः। ख. नास्ति।

२. 'न दोष इति वाच्यम्। 'अजहत्स्वार्थायां च न दोषः। समुदायाऽर्थोऽभिधीयते' इति भाष्यविरोधाऽऽपत्तेरिति चेन्न। ऊकारसाहचर्येण ईदूताविल्यत्र दीर्घेण ईकाराद्यन्तरप्रश्लेषेण वा तत्सिद्धावर्थग्रहणसामर्थ्यस्य सूपपादत्वात्'– इति ख. पाठः।

३. 'सुप्सुपेति समासेऽजहत्स्वार्थायां दोषापत्तेरिति चेन्न' इति– क. ग. पाठोऽयम्। ख. नास्ति।

'ईदूतौ सप्तमी प्रगृह्यम्' । 'अदसः' । 'एच्च द्विवचनम्' इत्येव सिद्धे गुरुभूतन्यासकरणेन तत्प्रकरणाऽपेक्षया वैजात्यबोधनात् 'संज्ञाविधौ' (पृ० २७) इति तदन्तग्रहणनिषेधाऽप्रवृत्त्या 'ईदूदन्तं सप्तम्यन्तम्' इत्यर्थेनेष्ट-सिद्धावर्थग्रहणेन प्रागुक्ताऽर्थबोधनेनाऽदोषात्[1] । तदुक्तं[2] भाष्ये–'अजहत्स्वार्थायां च न दोषः । समुदायार्थोऽभिधीयते' इति ।

न चाऽर्थग्रहणं[3] 'बहुश्रेयसीकुलमधिष्ठितः' इत्यर्थके 'बहुश्रेयसी अधिष्ठितः' इत्यत्र प्रगृह्यसंज्ञाऽर्थमावश्यकम्, तत्र सप्तम्यर्थाऽऽधारस्यैव द्वितीयाऽर्थत्वादिति वाच्यम् । नपुंसकह्रस्वत्वेन तादृशरूपस्यैव दुर्लभत्वात् ।

किञ्च 'इकोऽचि' (७।१।७३) इत्यज्ग्रहणेन 'न लुमता' (१।१।६३) इति निषेधाऽनित्यज्ञापनेन, तद्विषये तदप्रवृत्त्या, द्वितीयाऽमो लुक्यपि, नुमि, नलोपे, तस्य संज्ञाविधावसिद्धतया, ईकारान्तत्वाऽभावात् तत्राऽप्राप्तेः । न च 'वातप्रमीश्वरः' इत्यत्र 'स्वामीश्वर' (२।३।३९) इत्यनेन षष्ठीसप्तम्योर्विधानेन, षष्ठ्याः 'सुपां सुलुक्' (७।१।३९) इति लुकि, प्रगृह्यत्वाऽर्थमर्थग्रहणम् । भाष्यप्रामाण्येन वेदे तादृशप्रयोगाऽभावात् । सत्त्यऽपि सप्तम्यैव तादृशप्रयोगनिर्वाहात् । वेदे आपाद्यरूपाऽभावात् । लोके तु सप्तम्यन्तत्वे भवत्येव प्रगृह्यत्वम् । षष्ठ्यान्तु तादृशं रूपं दुर्लभमित्याहुः । लोप द्वारेण लक्षणाया एवाऽन्वाख्यानाद् गौर्यादिपदानां सप्तम्यर्थपर्यवसन्नत्वम् ।

नन्वेवं 'गौरी अधिश्रितः' इत्यादौ विरुद्धविभक्तिरहितनामाऽर्थतया भेदेनाऽन्वयाऽयोगादभेदाऽन्वयाय गौर्यादिपदानां तदधिकरणके लक्षणाया आवश्यकत्वेन सप्तम्यर्थमात्रपर्यवसन्नत्वाऽभावः । 'लुप्तस्मरणाच्छाब्दबोधः'

---

१. 'अदोषाच्च' ख. पाठः ।

२. 'तदुक्तं भाष्ये–अजहत्स्वार्थायां च न दोषः । समुदायार्थोऽभिधीयते इति' इति पाठोऽत्र ख, नास्ति । पूर्वं तु वर्त्तते, स च २४६ पृष्ठे टिप्पण्यां द्रष्टव्यः ।

३. 'अर्थग्रहणं च' ख. पाठ ।

इतिवादिनां मते सप्तम्यर्थपर्यवसन्नत्वस्यैवाऽभाव इति चेन्न[1]। अधिश्रयण-क्रियायामेव गौरीपदार्थबोध्याऽधिकरणत्वस्याऽन्वय इति गौर्यधिकरणके लक्षणायां मानाऽभावात्[2]।

**वाप्यश्व इति**—'संज्ञायाम्' (२।१।४४) इति समासे इति प्रकृतसूत्रे **कैयटः**। ननु वाक्येन संज्ञाऽनवगमादस्य नित्यसमासतया[3] विग्रहो नोचित इति चेन्न। तेषु समाससमानाऽर्थवाक्याऽभावेन नित्यसमाससदृशत्वेन नित्यसमासत्वोक्तेः। नैतावता विभाषाऽधिकारबाधे मानमस्ति। नित्य-समासे हि वृत्तिघटकपदानां पृथक् प्रयोगाऽभाव एव। अत्र तु पृथक्प्रयो-गेऽपि तद्बोध्यविशिष्टाऽर्थाऽप्रतीतिमात्रम्। ध्वनितं चेदं 'द्वितीयतृतीय' (२।२।३) इतिसूत्रे भाष्ये इति समासे निरूपयिष्यामः।

'सुप्सुपा' (२।१।४) इति समासोऽत्रेति 'इकोऽसवर्णे' (६।१।१२७) इत्यत्र **कैयटः**। 'न समासे' (वा० ६।१।१२७) इति प्रकृतिभावनिषेधस्तु

---

१. इति चेन्न। 'राज्ञो देवदत्तस्य यज्ञदत्तः' इत्यादौ प्रकारद्वयेनाऽप्यन्वयस्य दर्शनेन, सप्तम्यर्थमात्रलक्षणया भेदेनाऽन्वये बाधकाऽभावात्। भेदाऽभेदाऽन्वयबोधे च तात्पर्यमेव नियामकमित्याहुः।

अपरे तु एवं हि 'वाप्यश्वः' इत्यत्राऽपि प्रगृह्यत्वव्यावृत्तिः, विशेषश्च दुर्वचः। तस्मात् सप्तम्यर्थमात्रपर्यवसन्नत्वमत्र वचनसामर्थ्यात्,भाष्याऽऽदिबलाच्च समभिव्याहृतपदान्तराऽर्थाऽनन्वयित्वेनोपस्थितिविषयत्वमेव गृह्यते। 'वाप्यश्वः' इत्यादौ तदन्वयित्वेनैवोपस्थितिः। अत एव 'अजहत्स्वार्थायां च न दोषः। समुदायाऽर्थोऽभिधीयते' इति भाष्यं सङ्गच्छते। समुदायरूपोऽर्थोऽभिधाभिरुपस्थाप्यते, न तु तत्तत्पदाऽभिधया इतराऽसंसृष्टपदाऽर्थमात्रोपस्थितिरिति तदर्थः। यथा चैतत् तथा समर्थसूत्रे उपपादयिष्याम इत्याहुः' इति ख. पाठः। क. ग. नास्ति

२. 'अधिश्रयणक्रियायाम्' इत्यारभ्य 'मानाऽभावात्' इत्यन्तोऽयं क. ग. पाठः।

३. 'समासतायाः शाकलसूत्रकैयटोक्तत्वेन विग्रहो नोचितः' ख. पाठः।

नाऽऽशङ्क्यः। तस्य 'इकोऽसवर्णे' (६।१।१२७) इत्येतन्मात्रविषयताया उक्तत्वात् ।

**अणोऽप्र** (८।४।५७) 'अणः' इति किम् ? 'कर्त्तृ' 'हर्त्तृ'। न च परण-कारेणाऽणि अस्याऽप्यणत्वमस्त्येवेति वाच्यम् । 'अप्रगृह्यस्य' इतिपर्युदाससेन हलि अ[1]प्रवृत्तौ, लाघवाय 'अचः' इति वक्तव्येऽण्ग्रहणसामर्थ्येन पूर्वेणैवाऽण्-ग्रहादित्याहुः ।

**अच्सन्धिरिति**—सवर्णसंज्ञाप्रकरणे 'सिद्धमनच्त्वात्' इत्यादिभाष्य-वार्त्तिकादिप्र[2]योगैः, 'अल्पाच्तरम्' (२।२।३४) इति सौत्रप्रयोगेण च वृत्तिघटकाऽच्शब्दे पदान्तकार्यस्य, तत्सन्निधानेन श्चुत्वस्य चाऽभावो बोध्यते। अतोऽत्र न चुत्वकुत्वे।

**इति स्वरसन्धिप्रकरणम्।**

(इत्यच्सन्धिः)

---

१. 'हल्षु अप्रवृत्तौ' ख. पाठः।

२. 'भाष्यवार्त्तिकप्रयोगैः' ख. पाठः।

# अथ हल्सन्धिप्रकरणम्

**स्तोरिति** (८।४।४०)—सौत्रं पुंस्त्वं समाहारद्वन्द्वे इति बोध्यम् । 'श्चुः' इत्यप्येवम् । 'स्' इति लुप्तषष्ठीकम् 'श' इति च भिन्नं पदमिति **केचित् ।** 'श्चुना' इति कर्त्तरि तृतीया, सम्बन्धिनोऽपि कर्त्तृत्वविवक्षणात् । 'विनाऽपि तद्योगं तृतीया' इति वक्ष्यमाणत्वात् 'सहयुक्ते' (२।३।१९) इत्यनेनेत्यन्ये । **'योगे'** इत्यध्याहारलब्धम् । संयोगे इत्यर्थः । 'सत्या'[1] 'भीमः' इतिवद् **'योगे'** इत्युक्तिः । संयोगश्चाऽव्यवहितयोरेवेति 'चितं', 'कटु तैलम्' इत्यादौ श्चुत्व–ष्टुत्वे न । अत एव 'चिततूलभारिषु' (६।३।६५) 'डतरादिभ्यः' (७।१।२५) इत्यादिनिर्देशाः सङ्गच्छन्ते ।

अत्र 'पदस्य' (८।१।१६) इत्यधिकृतमपि न सम्बध्यते, 'शात्' (८।४।४४) इति ज्ञापकात् । तेन 'याच्ञा' सिद्धा । एवमुत्तरसूत्रेऽपि । 'न पदान्तात्' (८।४।४४) इति ज्ञापकात् ।

**हरिश्शेते** इति—'वा शरि' (८।३।३६) इति विसर्गाऽभावे सः । विवृतत्वसाम्यात् सस्य शः । विवाराऽल्पप्राण-विवारमहाप्राण-संवाराऽल्पप्राण-संवारमहाप्राणाऽनुनासिकानां त-थ-द-ध-नानां तादृशा एव च-छ-ज-झ-ञा भवन्ति एवमुत्तरसूत्रेऽपि बोध्यम्[2] ।

**सच्चिदिति**—न च 'झलां जशोऽन्ते' (८।२।३९) 'खरि च' (८।४।५५)

---

१. 'नामैकदेशे नामग्रहणवद् योग इत्युक्तिः' इति ख. पाठः ।

२. इतोऽग्रे—'संज्ञाप्रकरणोक्तरीत्या 'तथदधने'त्यादेरप्यनादितया तमादाय 'परस्मैपदानां णल्' (३।४।८२) इत्यादौ सूत्राऽन्तरस्थक्रमेणेव यथासङ्ख्यप्रवृत्तिरपि सुलभेति [1]केचित् । चुप्रभृतिशब्दैस्तेन क्रमेणोपस्थितौ मानाऽभाव इति चिन्त्यमिदमित्यन्ये । निमित्तकार्यिणोस्तु न तद् । 'शात्' (८।४।४४) इति ज्ञापकात् । एवमुत्तरसूत्रेऽपि न । 'तोः षि' (८।४।४३) इति ज्ञापकादिति बोध्यम्' इति क. कुण्डलितः ख. पाठः । ग. तु नास्ति ।

---

1. 'केचित्' इत्यारभ्य 'इत्यन्ये' इत्यन्तः क. पाठः, ख. नास्ति ।

इति सूत्रे अत्रैव लिखितुं युक्ते। चुत्वष्टुत्वयोरसिद्धत्वाज्जश्त्वेन दत्वे, तस्य चुत्वेन जकारे, तट्टीकेत्यादौ ष्टुत्वेन डकारे च[1] चर्त्वस्य प्रवृत्तेरिति वाच्यम्। उभयसूत्राऽऽकरणेनाऽपि साधयितुं शक्यत्वादित्याशय इत्याहुः।

**शात्** (८।४।४४)—'तोः षि' (८।४।४३) इत्यतः 'तो'रिति वर्त्तते। **विश्न इति**—विच्छप्रच्छोः 'यजयाचयतविच्छप्रच्छरक्षो नङ्' (३।३।९०) इति नङि 'छ्वोः शूठ्' (६।४।१९) इति शादेशे, ङित्त्वाद् गुणाऽभावः। ([2]**प्रश्ने**–) 'प्रश्ने चाऽऽसन्नकाले' (३।२।११७) इति निर्देशात् सम्प्रसारणाऽभावः। न च तत एव ज्ञापकात् श्चुत्वाऽभावस्याऽपि सिद्धौ, 'शात्' (८।४।४४) इति सूत्रं व्यर्थम्। 'विश्नः' इत्यर्थत्वा[3]त्।

**न पदान्ताट्टोः** (८।४।४२) पदाट्टोरित्येव सिद्धेऽन्तग्रहणं स्पष्टार्थम्।

**टोः किमिति**—षकारस्याऽपि पदान्ते जश्त्वविधानादिति प्रश्नः। 'ह्रस्वात्तादौ' (१।३।१०१) इति षत्वस्याऽसिद्धत्वात् तस्य जश्त्वाऽभाव इत्युत्तराशयः।

**षण्णवतिरिति**—षडधिका नवतिरिति विग्रहः।

**षण् णगर्य इति**—पृथक् पदम्। संज्ञात्वे कर्मधारयो वा।

सूत्रद्वयेऽपि 'स्तोः श्चौ श्चुः', 'ष्टौ ष्टुः' इत्येव सुवचम्। 'शात्' 'न पदान्तात्' इतिज्ञापकेन पूर्वत्वाऽङ्गविकल-तस्मिन्निति(१।१।२२)परिभाषोपस्थित्यङ्गीकारेण, 'यज्ञः ईट्टे, कटुतैलम्, चितम्' इत्यादावदोषात्।

**यरो**—(८।४।४५) पदान्तस्येति किम्? वेद्मि। स्पष्टं चेदम् 'एकादिश्चैकस्य' (६।४।७६) इति सूत्रे भाष्ये।

[4]**ननु** 'यरो ञमि ञम्वा' इत्येव सूत्र्यताम्। न च यथासङ्ख्याऽऽपत्तिः। तस्याऽसार्वत्रिकत्वात्, 'आन्महतः' (६।३।४६) इत्यादिनिर्देशाच्चेति चेन्न।

---

१. चकारः क. ख. नास्ति। ग. पाठः। २. तन्त्रेण द्वयोर्निर्देशोऽत्र बोध्यः।

३. इतोऽग्रे–'निमित्तकार्यिणोर्यथासङ्ख्याऽभावज्ञापनार्थं तस्याऽऽवश्यकत्वाच्च। तट्टीकेति–तनोतीति तत्। टीकते' इति विग्रहः' ख. पाठः। क. ग. नास्ति।

४. 'ननु यरो ञमि' इत्यारभ्य 'इत्याहुरिति दिक्' इत्यन्तः क. कुण्डलितः ख. पाठः। ग. नास्ति। लघुशब्दरत्नेऽपि 'ञञ ॐ' इति सूत्रे दृश्यतेऽयं पाठः।

'यदेतत् ॐ पठसि' (यदेतन्ँ पठसि) इत्यत्र ककारस्य नकाराऽनापत्तेः—'अनुनासिके'[1] इत्युक्तम्। अनितेः क्विपि सम्बुद्धौ 'आन्' 'चिनोषी' इती' त्यत्र 'नश्छवि' (८।३।७) इति रुत्वे 'अत्रानुनासिकः' (८।३।२) इति पूर्वस्याऽनुनासिके, कमल् आँश्चिनोषि[2] इत्यत्र लकारस्य नकाराऽऽपत्तेश्च–, [3]विधेयकोटावनुनासिक इत्युक्तम्।

विधिकोटौ हयवरडिति यकारमारभ्य प्रत्याहारे तु 'कमल् नमनम्' 'वृक्षव् नेता' इत्यादावान्तरतम्यान्निरनुनासिकलकारवकारयोरेवाऽऽपत्तिः।

यदि तु यका[4]राऽऽदिविधानसामर्थ्यादनुनासिक एव भविष्यतीत्युच्यते, तर्हि संज्ञापूर्वकविधेरनित्यत्वेन क्वचित् तदभावबोधनाय तत्। तेन 'ककुद्मन्तः' इत्यादौ न दोष इत्याहुरिति दिक्।

**स्पर्शे चरितार्थ** इति—उपलक्षणमिदम्। वलयोरपि प्रवृत्त्यङ्गीकारात्। इदमपि जातिपक्षे। व्यक्तिपक्षे तु-प्रतिलक्ष्यं लक्षणभेदाद् रेफ[5]विषयकलक्षणस्याऽचारितार्थत्वात् तत्राऽपि प्रवृत्तिर्दुर्वारैव। जातिव्यक्तिपक्षयोश्च लक्ष्याऽनुरोधेन व्यवस्थितत्वम्। स्पष्टं चेदं हयवरडिति सूत्रे आक[6]रे।

व[7]स्तुतो व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थोऽस्यां व्यक्तौ न प्रवर्तते इति वक्तुं शक्यम्। तदुक्तम्-इको यणचीत्यत्र कैयटेन-'द्रव्येऽपि पदार्थे उत्सर्गाऽपवादभावः संदिग्धत्वाश्रयोऽस्त्येव' इति।

**अत्र केचित्**—'स्थानेऽन्तरतम' (१।१।५०) सूत्रे सप्तम्यन्तपाठस्य

---

१. 'अनुनासिके इत्युक्तम्' इति ख. नास्ति।

२. अत्र सर्वत्र चिनोतीति पाठो लेखकप्रमादात्। चिनोषीत्येव पाठ इति हि भावप्रकाशे पायगुण्डेवैद्यनाथः।

३. 'विधेयकोटावनुनासिक इत्युक्तम्' इति ख. नास्ति। क. ग. पाठः।

४. 'वकारादि' इति ख. पाठः।

५. 'रेफलक्ष्यविषयक' ख. पाठः। ६. 'कैयटे' इति ख. पाठः।

७. 'वस्तुतः' इत्यारभ्य 'अस्त्येवेति' इत्यन्तोऽयं क. ग. पाठः।

८. 'इति सूत्रे' ख. पाठः। क. तु इतिर्नास्ति।

भाष्यकृता दूषितत्वेन ईदृशयुक्तेरसम्भव:[1]। किञ्च 'महिष्मान्' इत्यादौ षस्याऽनुनासिकाऽऽपत्तिः। न चाऽस्योक्तयुक्त्या वारणम्। सूत्रमते षकारस्य स्थानप्रयत्नाऽन्तरतमऋकारसत्त्वात्। टिलोपस्याऽसिद्धत्वं तु न मतुनिमि-[2]त्तत्वेनोभयोः समत्वात्। जश्त्वं तु न। तस्याऽसिद्धत्वात्। मतुनिमित्तक-[3]पदत्वं बाधित्वाऽन्तरङ्गत्वेनाऽन्तर्वर्त्तिसुबन्तनिमित्तकपदत्वमेव तत्र भवति। (पूर्वंपूर्वमन्तरङ्गम्' इत्यत्र तु नाऽत्र प्राप्तिरित्युक्तमेव)।

किञ्च[4]ाऽशक्त्या केनचित् प्रयुक्तस्य 'कृष् आँश्चिनोषि' इत्यस्यानुकरणे षस्य एतदापत्तिः। न चानुक्रियमाणरूपभङ्गापत्त्या न तत्र शास्त्रप्रवृत्तिः। 'किरश्च पञ्चभ्यः' (७।२।७५) इत्यादावित्त्वादेरप्यनापत्तेः। न चास्याऽसिद्धत्वादत्र 'झलां जशोन्ते' (८।२।३९) इति स्यात्। न्यायप्राप्तजश्त्वाऽकरणप्रयुक्तोपहासेना[5]ऽनुकरणे, तस्य कर्त्तुमयोग्यत्वात्। अत एव ऋलृक्सूत्रेऽनुकरणार्थत्वम् लृकारोपदेशस्य भाष्यकृता स्थापितम्। तस्मादनुस्वारस्य (८।४।५८) इति सूत्रात् सवर्णग्रहणमपकृष्य 'यरः सवर्णोऽनुनासिको भवति' इति व्याख्यानान्न दोषः। तदुक्तं भाष्ये 'रेफेऽनुनासिकपरसवर्णयोः प्रतिषेधो वक्तव्यः। न वक्तव्यः। रेफोष्मणां सवर्णा न सन्ति' इति। त्वदुक्तरीत्या व्याख्याने हि 'ऊष्म'ग्रहणमत्र व्यर्थं स्यात्। तस्याऽप्रकृतत्वात्। मम तूष्मसु तद्वारणायाऽऽवश्यकेन यत्नेन रेफस्याऽपि वारणमित्याशयः। 'सवर्णा न सन्ति' इत्यस्य च 'अनु[6]नासिकत्वविशिष्टसवर्णो नास्ति'इत्यर्[7]थं इत्याहुः।

**चिन्मयमिति**—स्वार्थिकः 'तत्प्रकृतवचने मयट्' (५।४।२१) इति मयट्। अत एव 'चिन्मयं ब्रह्म' इति सामानाधिकरण्यम्। तत्र 'तत्' इति-वाक्यभेदेन क्वचित् प्राचुर्याऽऽदिरूपप्रकृतवचनाऽभावेऽपि मयडर्थम्। अत एव तत्र सूत्रे तदिति चरितार्थमित्यादि निरूपयिष्यामः।

---

१. 'असम्भवात्' ख. पाठः। २. 'मतुब्निमित्त' इति ख. पाठः।
३. क. ग. नास्ति। ख पाठः।
४. 'भाष्यकृता स्थापितम्' इत्यन्त' क. पुस्तके कुण्डलितोऽयं पाठः। ख. ग. नास्ति।
५. जश्त्वशास्त्रस्य अज्ञानेन हि प्रयोक्तुरुपहास इत्यर्थः।
६. 'अनुनासिकत्वविशिष्टोऽनुस्वारान्तरतमश्च सवर्णो नास्ति' ख. पाठः।
७. 'नास्तीत्यर्थः। अनभिधानादिति भाव इत्याहुः' ख. पाठः।

**चिन्मात्रमिति**[1]——क्वाचित्कमसाम्प्रदायिकम् मात्रचः प्रत्ययस्याऽत्रोपपत्त्यभावात् ।

**निपातनादिति**—'यवाऽऽदिगणे 'ककुद्मान्' इदि प्रकृतिप्रत्ययसमुदायः पठ्यते' इति मतेनेदम् । **केचित्तु** 'यचि भम्, तसौ मत्वर्थे' इति संहितापाठे तत् पूर्वं चर्त्वेन दकारं प्रश्लिष्य, भत्वेनाऽप्येतत् सुसाधम् । मृच्छब्दस्य तु यवादिगणे पाठे न मानमिति 'झयः' (८।२।१०) इति वत्वे 'मृद्वान्' इत्येवेत्याहुः ।

**उदः स्था** (८।४।६१)—'तस्मादित्युत्तरस्य' (१।१।६७) परिभाषालभ्यमर्थमाह—**उदः परयोरिति** । **पूर्वसवर्णः स्यादिति**[2]—नन्वत्र 'सवर्ण'-पदमधिकम् । न च 'परसवर्णः' (८।४।५८) इत्यतोऽनुवर्त्तते । तस्य 'पर' पदार्थेनैकाऽर्थीभावाऽऽपन्नत्वेनान्येनाऽन्वेतुमयोग्यत्वात् । न च स्वरितत्वप्रतिज्ञासामर्थ्यादेकदेशाऽनुवृत्तिः । 'तोर्लि' (८।४।६०) इत्यत्र समुदायाऽनुवृत्त्या तस्याश्चारितार्थ्यात् ।

न च 'पूर्वस्येत्यस्य सम्बन्ध्याकाङ्क्षायां यत्किञ्चत्सम्बन्धिकल्पनाऽपेक्षया पूर्वत्रोपस्थिताऽर्थवाचकपदाऽध्याहारस्यौचित्यात् तल्लाभः । 'चुटू' (१।३।७) इत्यादावित्पदादेरप्येवमेव सम्बन्धोपपत्तौ, तत्र तत्र स्वरितत्वप्रतिज्ञाया[3] वैयर्थ्याऽऽपत्तेरिति चेन्न । पकारमात्रे स्वरितत्वप्रतिज्ञयैव तोर्लीत्यादावनुवृत्तिसिद्धौ, पुनः सकारांऽशे तत्प्रतिज्ञया तावतोऽप्यंशस्य पूर्वक्लृप्ताऽर्थरहितस्यैवोत्तरत्राऽनुवृत्तिबोधनान्न दोषः । शब्दाऽधिकारपक्षे तस्य स्वरितत्वप्रतिज्ञानात् तत्सदृशशब्दोच्चारणेनाऽस्मदादीनां[4] बोध इत्याहुः ।

---

१. 'चिन्मात्रम्' इत्यारभ्य 'उपपत्त्यभावात्' इत्यन्तोऽयं पाठः ख. नास्ति । क. ग. पाठः ।

२. 'पूर्वसवर्णः स्यादिति' इत्यारभ्य 'अस्मदादीनां बोध इत्याहुः' इत्यन्तोऽयं ख. ग्रन्थो लघुशब्दरत्ने श्रीनागेशभट्टैर्धृत इति क. कुण्डलितः । ग. नास्त्येव ।

३. 'स्वरितत्वप्रतिज्ञया तावतोऽप्यंशस्य पूर्वक्लृप्तार्थरहितस्यैव' इति क. पाठः । ग. नास्त्येव ।

४. 'तत्सदृशशब्दानुमानमत्रेत्याहुः' ख. पाठः ।

**अत्राऽघोषस्येति**—यत्तु 'अत्र श्वासविवारयोस्त्यागेन न्यूनता' इति । तन्न । समनियतत्वेनाऽन्यतमाऽग्रहणेऽपि बाधकाऽभावात् ।

**यस्याऽसिद्धत्वादिति**—त्रिपाद्यां परत्वादिति भावः ।

न चेदं सूत्रं व्यर्थम् । 'झलो झलि' (८।२।२६) इत्यनेन सस्य लोपे उत्थानस्य सिद्धत्वादिति वाच्यम्[1] । झलादौ[2] प्रत्यये तेन लोप इत्यर्थस्याऽनेन ज्ञापनादिति[3] स्पष्टं 'परेश्च घ' (८।२।२२) इति सूत्रे **कैयटे** । न च उदस्थादित्यत्र 'यदागमाः' (पृ० ११) इति न्यायेनाऽड्विशिष्टस्य स्थात्वात् पूर्वसवर्णाऽऽपत्तिः । निर्दिश्यमानपरिभाषया वारणात् । 'आदेः परस्य' (१।१।५४) इत्यनेन निर्दिश्यमानाऽऽदेरेव स्थानिवत्त्वबोधनम् । स्पष्टं चेदं 'पादः पत्' (६।४।१३०) इत्यत्र भाष्ये ।

ननु 'उत्पूर्वत्वे स्कन्देश्छन्दस्युपसङ्ख्यानम् । 'अघ्न्ये दूरमुत्कन्द' । 'रोगे चेति वक्तव्यम्' । 'उत्स्कन्दो[4] रोगः' इति भाष्यं विरुध्येत । अग्रिमवार्त्तिकस्याऽऽरम्भसामर्थ्येन लोकेऽपि प्रवृत्तेरिति चेन्न ।

भाष्योदाहरणप्रामाण्येन 'न' इति योगविभागेनाऽसिद्धत्वस्य तत्र बाधेनाऽदोषात् । वक्ष्यमाणभाष्यकारीयन्यासरीत्या थस्याऽसिद्धत्वाऽभावेन, वृत्तिसम्मतपाठेऽप्युक्तरीत्यादर आवश्यक इति सर्वत्र चर्त्त्वं भवत्येवेति वस्तुतस्त्वम्[5] ।

झय इति पञ्चमीत्याशयेनाऽऽह—**झयः परस्येति** । 'उदः स्था' (८।४।६१) इति सूत्रात् 'पूर्वस्य' इति, 'सवर्ण'ग्रहणं चाऽनुवर्त्तते । तदाह—**पूर्णसवर्णेति** ।

---

१. 'सिद्धत्वादिति वाच्यम् । पक्षे थकारद्वयश्रवणार्थत्वात् । सिचश्च तेन लोपस्याऽनेन ज्ञापनाच्चेति स्पष्टम्' इति ख. पाठः ।

२. 'झलादौ प्रत्यये' इति ख. नास्ति । किन्तु 'सिचश्च तेन लोपस्यानेन' इति ख. पाठः ।　　३. 'ज्ञापनाच्चेति स्पष्टम्' ख. पाठः ।

४. भाष्ये तु 'उत्कन्दको रोगः' इत्येव पाठः ।

५. इतोऽग्रे—'तस्य चयो द्वितीया' इति तु न । चर्त्त्वस्याऽसिद्धत्वात् । मूलं तु प्राचामनुरोधेनेति दिक् । नाज्झलाविति निर्देशात् झय इति पञ्चम्येवेत्याशयेनाह' इति ख. पाठः । क. ग. तु नास्ति ।

यदि तु 'हस्य सवर्णः' इत्येवोच्येत, तदा 'रेफोष्मणां सवर्णा न सन्ति' इति हस्य ह एव स्यात्। एवं च वचनवैयर्थ्याऽऽपत्त्या तत्सामर्थ्यात् पूर्व-ग्रहणस्याऽपि स्वरितत्वं कल्पते।

'अन्यतरस्याम्' इत्यखण्डो निपातो विकल्पाऽर्थः सूत्रे वेति वक्तव्ये गुरूच्चारणं व्यर्थमिति न शङ्क्यम्। पर्याये लाघवगौरवाऽनादरणात्।

**घोषवतो नादवत इति**—समनियतत्वेऽपि विनिगमनाविरहात्, स्वरूपप्रतिपादनाय च त्रितयग्रहणमित्याहुः। **झयः इति**—पदान्तादित्यपि बोध्यम्। तेन 'विरप्शम्' इत्यादौ लोकेऽपि च्छत्वं नेति स्पष्टमाकरे।

**चकार इति**—पूर्वं 'शश्छोटि' (८।४।६३) इत्यस्य लेखनेऽपि, चर्त्त्वदृ-ष्ट्या तस्याऽसिद्धत्वात् चर्त्त्वोत्तरं छत्वमिति प्रक्रिया बोध्या।

वस्तुतस्तु 'जकारे कृते'[1] इत्यस्य छत्वमिति शेषः। 'दीर्घादाचार्याणाम्' (८।४।५२) इत्युत्तरम्—'अनुस्वारस्य ययि' (८।४।५८) 'वा पदान्तस्य' (८।४।५९) 'तोर्लि' (८।४।६०) 'उदः स्थास्तम्भोः' (८।४।६१) 'झयो हो' (८।४।६२) 'शश्छोटि' (८।४।६३) इति षट्सूत्रीपाठोत्तरं, 'झलां जश् झशि' (८।४।५३) 'अभ्यासे चर्च' (८।४।५४) 'खरि च' (८।४।५५) 'वाऽवसाने' (८।४।५६) 'अणोऽप्रगृह्यस्य' (८।४।५७) इति पञ्चसूत्र्याः पाठस्य भाष्यसम्म-तत्वेन, चर्त्त्वस्य च्छत्वं प्रत्यसिद्धत्वादित्याहुः।

यत्तु[2] तदो 'वाऽवसाने' (८।४।५६) इति चर्त्त्वे, ततो 'झलां जशोऽन्ते' (८।२।३९) इति जश्त्वे, ततः शिवशब्दसम्बन्धे, खरि चेति चर्त्त्वे, श्चुत्वे, शश्छोटी'ति प्रक्रियेति। तन्न। जश्त्वं प्रत्यवसाने चर्त्त्वस्या[3]ऽपवादत्वेन, तत्र कृते भ्रष्टाऽवसरन्यायेन जश्त्वाऽप्रवृत्तेः। अन्यथा चर्त्त्वशास्त्रवैयर्थ्यं स्यात्।

न च जश्त्वे कृते चर्त्त्वस्य चारितार्थ्येन, तस्याऽसिद्धत्वादपवादत्वे न मानमिति वाच्यम्। तत्कालेऽवश्यं तस्य प्राप्तत्वेन, तदप्राप्तिविषये चारि-तार्थ्याऽभावमात्रेण येन नाप्राप्ति(प० ५९)न्यायेनाऽपवादत्वस्य सुलभतया, उक्तयुक्तेरसम्भवात्।

---

१. 'कृते' इति ख. नास्ति।

२. 'यत्तु' इत्यारभ्य 'चर्त्त्वस्यासिद्धत्वादिति दिक्' इत्यन्तः क. कुण्डलितोऽयं ख. पाठः। ग. नास्ति मनोरमाशब्दरत्नयोश्चाऽयं ग्रन्थो दृश्यते।

३. 'स्याप्यपवादत्वेन' ख. पाठः।

एतदेवाऽभिप्रेत्य मिदचोन्त्यात्सूत्रे भाष्ये उक्तम्—सत्यपि सम्भवे बाधनं भवतीति। अन्यथा 'कौण्डिन्याय तक्रम्' इत्यनेन 'ब्राह्मणेभ्यो दधि' इति प्राप्तदधिदानस्याऽपि बाधो न स्यात्। तद्दानोत्तरं[1] तत्पूर्वं वा तद्दानस्य चारितार्थ्यात्। 'दयतेर्दिगि' (७।४।९) इति सूत्रस्थकैयटादिग्रन्थास्तु[2] प्रौढ्येति स्पष्टमेव।

किञ्चैवं सति 'पादोऽन्यतरस्याम्' (४।१।८) इत्यस्य 'टाबृचि' (४।१।९) इत्युपवादो न स्यात्। तस्य वैकल्पिकत्वेन तदभावपक्षेऽस्य चारितार्थ्यात्। अत[3] एव 'अजादेर्द्वितीयस्य' (६।१।२) इतिसूत्रे प्रथमद्विर्वचनोत्तरमस्य चारितार्थ्येन प्रथमद्विर्वचनस्याऽनेन बाधो न स्यादित्याशङ्क्य 'सत्यपि सम्भवे' इति न्यायेन बाधकत्वमुक्तं[4] भाष्ये,

किञ्चैवमपि तदो दान्तत्वेन, जश्त्वोपन्यासो विफलः। चर्त्वस्याऽसिद्धतया, जश्त्वोत्तरं चर्त्वोपन्यासस्यैव युक्तत्वाच्च। भाविन्यवसानभङ्गे 'वाऽवसाने' (८।४।५६) इत्यस्याऽप्रवृत्तेश्च। चर्त्वे कृते चुत्वमित्यपि[5] न न्याय्यम्। चुत्वं प्रति चर्त्वस्याऽसिद्धत्वादिति दिक्।

**मोऽनुस्वा** (८।३।२३)—'पदस्य' (८।१।१६) इत्यधिकृतं 'मः' इत्यनेन विशेष्यते इत्याह—**मान्तस्येति**। 'हलि सर्वेषाम्' (८।३।२२) इत्यतो हलीत्यनुवर्त्तते। हलि किम्? त्वमत्र।

**नश्च** (८।४।२४)—चेन मोऽनुकृष्यते इत्याह—**नस्य मस्य** चेति। अपदान्तस्य किम्? राजन्पाहि। यशांसीति—यशस्शब्दे जसः शौ, 'नपुंसकस्य' इति नुमि, 'सान्ते'ति दीर्घः। **आक्रंस्यते** इति। क्रमेर्लृट्। 'आङ उद्गमने' इति तङ्। स्यः। आत्मनेपदित्वादिडभावः।

**अनुस्वारस्य** (८।४।५८)—ययीति किम्? दंशनमित्यत्र शकारसवर्णस्य दीर्घकारस्याऽननासिकस्य प्रसक्तेः। 'नाऽऽज्झलौ' (१।१।१०) इति निषेधस्तु न दीर्घशकारयोः। प्रयत्नभेदाऽऽश्रयेण सावर्ण्याऽभावाऽङ्गीकारे

---

१. 'दानोत्तर' ख. पाठः।　　२. 'सूत्रस्थाऽऽकरग्रन्थास्तु' ख. पाठः।

३. 'अत एव' इत्यारभ्य 'उक्त भाष्ये' इत्यन्तोऽयं क. पाठः। ख. ग. नास्ति।

४. 'बाधकमुक्तं भाष्ये' इति क. पाठः।

५. 'चुत्वमपि न न्याय्यम्' ख. पाठः।

तु प्रयोजनं चिन्त्यम् । अचि अनुस्वारस्यैवाऽभावात् । शल्सवर्णौ अनुस्वाराऽन्तरतमो नाऽस्त्येवेत्याहुः ।

**मो राजि** (८।३।२५) न च 'न राजि' इत्येवोच्यताम् । अनुस्वारनिषेधेनैवेष्टसिद्धेरिति वाच्यम् । 'हे मपरे' (८।३।२६) इतिसूत्रविषये[1] 'प्रशाम् ह्मलयति' इत्यादौ 'मो नो धातोः' (८।२।६४) इति नत्वबाधनार्थत्वात् । निषेधो ह्यनन्तस्येति (पृ० ६३) न्यायेनाऽनुस्वारस्यैव स्यात् । ध्वनितं चेदम् 'एतदोऽन्' (५।३।५) इति सूत्रे भाष्ये, 'अमो मश्' (७।१।४०) इति सूत्रे च । तत्र हि 'मो राजि' (८।३।२५) इति अनुस्वाराऽऽदिबाधनाऽर्थम्' इत्युक्तमित्याहुः ।

**हे मपरे** (८।३।२६)—'मपरे' इति बहुव्रीहिः, न तु पञ्चमीतत्पुरुषः[2], असम्भवात् । 'मोऽनुस्वारः' (८।३।२३) इत्यतो 'मः' इत्यनुवर्त्तते । तदाह—**मस्येत्यादि** । 'पर'ग्रहणं समुच्चयवारणाऽर्थम् । 'अहरहर्नयमानो गामश्वं पुरुषं पशुम्' इत्यादौ 'च'शब्दं विनाऽपि समुच्चयदर्शनात् ।

**यथासङ्ख्य** (१।३।१०)—सम्यक्[3] ख्यानं सङ्ख्या । क्रमवैशिष्ट्येन ज्ञानम् । 'यत्साङ्ख्यैः प्राप्यते स्थानम्' इत्यादौ 'सङ्ख्या'शब्दस्य ज्ञानाऽर्थताया दृष्टत्वात् । तमनतिक्रम्य—यथासङ्ख्यम् । अनुदेशः—पश्चाद्भववाक्याऽर्थबोधकालिकः सम्बन्धः ।

**समानामिति**—साम्यम्-सङ्ख्यया योग्यत्वाद्, व्याख्यानाच्च । तथा 'समसङ्ख्यानां सम्बन्धो यथाक्रमम्' इत्यर्थः । येन क्रमेण पदज्ञानं पदादुपस्थितिर्वा, तेनैव क्रमेण वाक्याऽर्थबोधविषयः सम्बन्धस्तेषामिति भावः ।

एतेन 'समकर्मकं विधानम्' इत्यपास्तम् । अनुवाद्ययोरपि अस्येष्ट[4]त्वात् । 'समूलाऽकृतजीवेषु हन्कृञ्ग्रहः' (३।४।३६) इत्यत्र यथा ।

---

१. 'हे मपरे' इति सूत्रविषये' इति क. ग. पाठः ।

२. 'तत्पुरुषोऽयम्' ख. पाठः ।

३. 'सम्यक् संख्यानं सङ्ख्या' इति क. पाठः । 'संख्यानं सङ्ख्या' ख. ग. पाठः ।

४. 'यथासङ्ख्यस्येष्टत्वात् । यथासङ्ख्यस्येति ख्यान्तैकदेशेन सूत्रग्रहणं बोध्यम्' इति ख. पाठः । क. कुण्डलितः । ग. नास्ति ।

तत्फलितमाह—**समसम्बन्धीति ।** यद्यपि स्थानाऽऽख्यलौकिकप्रमाणादेव सिद्धम्, तथाऽपि 'परस्मैपदानाम्' (३।४।८२) इत्यादौ शब्दतः[1] सूत्राऽन्तरस्थक्रममादाय सम्बन्धबोधनाऽर्थं सूत्रम् । किञ्च 'आन्द्यन्तौ टकितौ (१।१।४६) इत्यादौ समासनिर्देशे साहित्ये द्वन्द्वविधानादप्राप्त-क्रमाऽन्वयबोधनार्थम् । द्वन्द्वस्तु प्राथमिकबोधमादाय साधुः, द्वितीय-क्रमिकबोधा[2]र्थमिदं सूत्रम् । एवञ्च[3] तत्र यथासङ्ख्येनान्वयबोधकवाक्यकल्पना एतत्प्रामाण्यात्, ततश्च बोध इति बोध्यम् ।

अत्र 'स्वरितेन' (१।३।११) इत्यपकृष्यते । तेन[4] 'ख्यत्यात्' इत्यादौ न दोषः ।

सङ्ख्यासाम्यं च वाचकशब्दकृतं बहुधा । यथा 'स्यतासी लृलुटोः' (३।१।३३) इत्यत्र । क्वचिदर्थकृतमपि 'परस्मैपदानाम्' (३।४।८२) इत्यादौ । अतिप्रसङ्गभङ्गस्त्वस्वरितत्वाद् बोध्यः ।

तत्र प्रतिपत्तिकालिकमेव सङ्ख्यासाम्यमेतच्छास्त्रप्रवृत्त्युपयोगि, न तु लक्ष्यसंस्कारवेलायामपि तदपेक्षेति ञमङणनमिति सूत्रे भाष्ये स्पष्टम् ।

**ङ्णोः** (८।३।२८)–कुक्टुकोः पूर्वाऽन्तत्वात् 'प्राङ्क् साये'इत्यत्र 'सात्पदाद्योः' (८।३।१११) इति षत्वं न । 'सुगण्ट् साये' इत्यत्र 'नपदान्ताट्टोः' (८।४।४२) इति ष्टुत्वं न ।

**चयो द्वितीया इति** (वा० ८।३।२८)—'नादिन्याक्रोशे' (८।४।४८) इति सूत्रे भाष्ये पठितमिदम् । **पौष्करसादिः**–आचार्यः । **सुगण्ठ् षष्ठ** इति—न च ठकारे कृते तस्य चर्त्वं दुर्वारमिति वाच्यम् । 'चयो द्वितीया' इत्यस्य वैयर्थ्याऽऽप[5]त्तेः ।

---

१. 'शब्दतः सूत्रान्तरस्थमर्थतोऽत्रोपस्थितं क्रममादाय' ख. पाठः ।
२. 'बोधनार्थमिदं सूत्रम्' ख. पाठः ।
३. 'एवं च' इत्यारभ्य 'इति बोध्यम्' इत्यन्तोऽयं क. ग. पाठः ।
४. 'तेन ख्यत्यादित्यादौ न स्थानाख्यलौकिकप्रमाणस्यापि प्रवृत्तिः । अपकर्षसामर्थ्यादित्याहुः'–ख. पाठः ।
५. 'वैयर्थ्यापत्तेः । न च 'ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजम्' इति प्रातिशाख्यविरोधात् कथमत्र 'चयो द्वितीया' इत्यस्य प्रसक्तिः ।

न चा[1]ऽत्र 'चयो द्वितीया' इत्यस्याऽसिद्धत्वात् 'झलां जश:' (८।२।३९) जश्त्वे, चर्त्वे, तस्याऽसिद्धत्वात् कथमत्र 'चयो द्वितीया' इत्यस्य प्राप्तिः। एतन्मूलकमेव—**'ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजम्' इति** प्रातिशाख्यम्। ऊष्माण उदये = परे यस्य तादृशं स्पर्शं द्वितीयमेके = व्याकरणवार्त्तिककारा—आहुः पदान्तभिन्नमिति हि तदर्थ इति वाच्यम्। एषामागमानां जश्त्वं प्रत्यसिद्धत्वेन तदप्राप्तेः। तदाह—**कुक्टुकोरिति**। अत एव भाष्ये 'अप्सराः' 'वथ्साः' इति अस्योदाहरणं दत्तम्।

---

'ऊष्माण उदयः=परे यस्य तादृशं स्पर्शं द्वितीयमाहुः, पदान्तभिन्नमिति हि तदर्थः। प्रकृते च पदान्तत्वं स्पष्टमेवेति वाच्यम्। प्रातिशाख्यमिति समाख्याबलेन तस्य च्छन्दोमात्रविषयत्वात्। 'लिट्सु' इत्यादौ तु चर्त्वस्याऽसिद्धत्वाद् द्वितीयस्य प्राप्तिरेव न'—इति ख. पाठः।

१. 'नचाऽत्र' इत्यारभ्य 'तदाह-कुक्टुकोरिति' इत्यन्तः क. ग. पाठः।

'अत एव भाष्ये 'ऽप्सराः' इति,-अस्योदाहरणं दत्तम्। तत्र हि अप्सु सरन्तीत्यर्थेऽप्पूर्वात् सर्त्तेरसिर्विहित इति पकारस्य पदान्तत्वं स्पष्टमेवेत्याहुः।

अन्ये तु 'वथ्साः' 'अप्सराः' इत्युदाहरणद्वयमस्य भाष्ये दत्तम्। तत्राऽऽद्ये वदेः सः, द्वितीये तूक्तमेव। एवञ्चोभयत्राऽपि चर्त्वेनैव चयः सत्वेन, चर्त्वस्याऽसिद्धत्वात् कथमस्य प्राप्तिः। तस्मादव्युत्पत्तिपक्षाऽभिप्रायेणेदमुदाहरणद्वयम्। यद्वा छान्दसमत्रोदाहरणमिदम्। छान्दसत्वाच्च चर्त्वाऽसिद्धत्वं न, नेति योगविभागादत्र चर्त्वस्याऽसिद्धत्वाऽभावो वेत्याहुः'। इति तु ख. पाठः।

'यत्तु भाष्ये 'अप्सराः' 'वथ्साः' इति अस्योदाहरणं दत्तम्। तत्र हि अप्सु सरन्तीत्यर्थेऽप्पूर्वात् सर्त्तेरसिर्विहित.। अन्त्ये वदेः सः। एवञ्च यद्यपि चर्त्वेनैव चयः सत्वेन चर्त्वस्याऽसिद्धत्वात् कथमस्य प्राप्तिः, तथापि अव्युत्पत्तिपक्षाभिप्रायेणेदमुदाहरणद्वयम्। यद्वा छान्दसमत्रोदाहरणमिदम्। छान्दसत्वाच्चर्त्वाऽसिद्धत्वं न'—इति तु ग. पाठः।

**डः सि** (८।३।२९)—'डः' इति पञ्चमी, व्याख्यानात्। 'पदस्य' (८।१।१६) इति वर्त्तते। 'डकारात् परः सकारे परे पदस्य धुट्' इति वाक्यार्थः। तत्र पञ्चमी-सप्तम्यर्थाऽनुग्रहाय धुट् पराऽऽदिरेव। एवमग्रेऽपि। 'डात् सस्य' इत्यादि तु फलिताऽर्थकथनमित्याहुः। तन्न[1]। परस्येत्यादेः षष्ठ्यन्तस्यैव[2] उपस्थित्या तथाऽन्वयाऽसम्भवात्। अत एव 'तस्मिन्निति' (१।१।६६) सूत्रभाष्यादौ 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इत्यादिर्यत्न आस्थितो 'रुधादिभ्यः सार्वधातुके' (७।२।७६) इत्यादौ पराऽऽदित्वसिद्धये। तस्मिन्निति सूत्राऽपेक्षया 'तस्मात्' (१।१।६७) इत्यस्य परत्वादिति[3] हि तस्याऽर्थः।

डकारात् सकारे (परे[4])धुडित्यर्थे 'तस्मिन्' (१।१।६६) इत्यस्य प्रवृत्तावुपस्थितडकारस्याऽऽगमित्वम्, 'तस्मात्' (१।१।६७) इत्यस्य प्रवृत्तावुपस्थितसकारस्याऽऽगमित्वमिति विरोधे[5] परत्वेन व्यवस्थेति सकारस्याऽऽग-

---

१. 'तन्न। विधेयस्याऽविद्यमानत्वेन तद्विशेषणाऽयोगात्' इति क्वाचित्कोऽयं पाठः। क. पुस्तके स्वयं लिखितोऽपि मसीलेपेन दूरीकृतः। ख. ग. तु नास्त्येव।

२. 'षष्ठ्यन्तस्यैव परिभाषाभ्यामुपस्थापनेन तथाऽन्वयाऽसम्भवात्। स्पष्टं चेदं 'परश्च' (३।१।२) इति सूत्रे भाष्ये' इति ख. पाठः।

३. 'परत्वादिति हि तस्यार्थः। एवञ्च डकारात् परस्य सकारे सति धुडित्यर्थे परः कः? इत्याकाङ्क्षायां श्रुतः सकार एव गृह्यते। 'तस्मिन्' (१।१।६६) इत्यस्य प्रवृत्तौ तु सकारे परे पूर्वस्य धुडित्यर्थः स्यात्,–इति द्वयोर्विरोधे तस्मादित्यस्या एवोपस्थानम्। एतेन डकारात् सकारे पूर्वस्येत्यर्थे षट् त्सरुरित्युदाहरणसम्भवाद् विरोधाऽभावेन कथं परत्वेन व्यवस्थेत्यपास्तम्। श्रौतस्थानिलाभायान्यतरपरिभाषाबाधस्यौचित्यात्। वस्तुतो नाऽत्र बाधः, किन्त्वप्रवृत्तिरेव। एवञ्च पञ्चमी स्वार्थे'–इति च. पुस्तकपाठः।

४. क. ग. नास्ति ख. पाठः।

५. 'मिति विरोधे उभयोः प्रवृत्तावुपस्थितवर्णद्वयपरित्यागेन 'षट्त्सरुः' इत्यादावनुपस्थितस्याऽन्यस्याऽऽगमित्वं कल्प्यमिति परत्वेन व्यवस्थेति' इति ख. पाठः।

मित्वनिर्णयः। एवं च पञ्चमी स्वार्थेऽवस्थिता। सीति सप्तमी तु षष्ठ्यर्थे इति फलितम्। तदाह—**सस्येति**।

न च 'ङः' इत्यस्य सन्दिग्धत्वेन, सीत्यस्याऽसन्दिग्धत्वेन विपरीतमुचितम्। तस्याऽपि लाघवार्थत्वेन सन्दिग्धत्वात्।

'पदस्य' (८।१।१६) इति वर्त्तमानं[1] वैयधिकरण्येन सम्बध्यते।

नन्वेवमपि 'धुक् ङः सि' इत्येव सूत्रमस्तु। सप्तमी च यथाश्रुतैवाऽस्तु। 'ङः' इति च षष्ठ्यन्तम्। परमार्थतो वाक्यशक्त्यङ्गीकारेण पूर्वान्तत्वे, पराऽऽदित्वे वा न शक्तताऽवच्छेदकभेदः। (अवग्रहे[2] संहिताऽभावात् धुडाद्यभावेन, तत्राऽपि न विशेषः) इति चेन्न। 'षट्त्सन्तः' इत्यत्र ष्टुत्वाऽऽपत्तेः। पदान्तटवर्गाऽभावेन निषेधस्याऽप्राप्तेरिति दिक्।

**षट् त्सन्त** इति—धुटि, धस्य चर्त्वे, डस्य चर्त्वम्। न चैवं 'लक्ष्ये लक्षणस्य' (प० १२२) ति न्यायेन धस्य चर्त्वे, डस्य तद् दुर्लभम्। चर्त्वस्य हि धकारसकारौ, डकारतकारौ चेत्येव लक्ष्यम्, नाऽधिकम्। मानाऽभावात्। एवं च लक्ष्यभेदान्न क्षतिः।

एतेन 'अचछा, अचशा' इति व्याख्यातम्। चर्त्वस्याऽसिद्धत्वात् 'चयो द्वितीयाः' (वा० ८।३।२८) इति न। अत[3] एव 'ङः सि तुट्' इति नाऽसूत्रि।

'श्चुत्वं धुटि सिद्धं वाच्यम्'। अटतीत्यट् श्चोतति। इह धुण्न।

**नश्च** (८।३।३०)—**नकारान्तादिति**। 'पदस्य' (८।१।१६) इत्यनुवृत्तं पञ्चम्या विपरिणम्यते इति भावः। वैयधिकरण्येनैवाऽन्वय इति 'ङमुट्' (८।३।३२) सूत्रस्थभाष्यस्वरसः[4]।

---

१. 'वर्त्तमानं विभक्तिविपरिणामेन 'ङः' इत्यनेन सम्बध्यते, न सकारेण, डकारात् परस्य सकारान्तस्याऽसम्भवात्, भाष्योदाहरणाऽसङ्गतेश्चेत्याहुः' इति ख. पाठः। २. क. ग. नास्ति। ख. पाठः।

३. 'अत एव वक्ष्यमाणस्तुगिहैव न कृतः। ष्टुत्वापत्तेश्चेति दिक्' ख. पाठः।

४. इतोऽग्रे ङमो ह्रस्वादित्यत्र सम्बन्धस्यावश्यकत्वेन मध्येऽपि सम्बन्धस्यैवौचित्यात्' इति च. पाठ.।

**शि तुक्** (८।३।३१)—'नः' इति पञ्चम्याः पूर्वसूत्रे चरितार्थतया, शीति सप्तम्यनुरोधादत्र षष्ठ्या विपरिणामः। द्वयोरचरितार्थत्वे हि लाघवाऽनुरोधेन निरर्थकविभक्त्युच्चारणं युक्तमित्याशयेनाऽऽह—[1]**नस्येति**।

(न[2] च 'कुर्वन् च्शेते' इत्यत्र णत्वं स्या[3]त्। 'स्तोः श्चुना' (८।४।४०) इति सूत्रे श्चुनेति योगं विभज्य, 'न' इति, 'णः' इति चाऽनुवर्त्त्य निषेधेन भाष्ये समाहितत्वात्। एतद्दृष्ट्या 'श्चुः' इत्यस्याऽसिद्धत्वं तु वचनसामर्थ्यान्न। इदं च नकाराऽर्थमेव। सग्रहणं, शग्र[4]हणं, वर्गग्रहणं चोत्तरार्थम्। ततः 'श्चुः' इति। पूर्वसूत्रमनुवर्त्तते। कार्यकालपक्षे बहिरङ्गतया तुकोऽसिद्धत्वाच्च)।

'नस्य पदान्तस्य' इति क्वाचित्कोऽपपाठः। 'नान्त[5]स्य पदस्य' इति सामानाधिकरण्यस्योचितत्वात्। 'अलोऽन्त्यस्य' (१।१।५२) परिभाषाऽप्रवृत्त्या 'ससजुषो रुः (८।२।६६) इतिवत्फलिताऽर्थकथनत्वस्याऽप्यभावात्। वैयधिकरण्ये तु 'पदाऽवयवस्य नस्य' इत्येव लभ्यते, न तु 'पदान्तस्य' इति।

अ[6]पदान्तनकारेऽनुस्वारप्रवृत्त्या यथाकथञ्चित् फलितार्थकथनपरतया वा नेयः।

ननु धुटमेवाऽनुवर्त्त्य, सीति साहचर्यात् 'शि' इति सप्तम्यपि षष्ट्यर्थे व्याख्येया, षष्ठ्यन्तमेव वा शः इति पाठ्यमित्याशङ्क्याऽऽह-**शश्छोटीति**। अन्यथा 'पदान्ताज्झयः परत्वाऽभावान्न स्यात्। विर[7]प्शम्' इत्यादौ छत्वाऽभावाय 'पदान्तात्' इति तत्राऽऽवश्यकमिति स्पष्टमाकरे।

---

१. इतोऽग्रे 'नान्तस्य पदस्येति (ना) र्थः'-इति च. पुस्तकपाठः।
२. क. कुण्डलितोऽयं ख. पाठः। प्रौढमनोरमायामपि चाऽयं दृश्यते।
३. 'पदान्तस्येति णत्वनिषेधाऽप्रवृत्त्या' इति शेषः।
४. 'शग्रहणम्' इति क्वचिन्न।
५. 'नान्तस्य पदस्य' इति क. ग. पाठः।
६. 'अपदान्त' इत्यारभ्य 'वा नेयः' इत्यन्तः क. ग. पाठः। ख. नास्ति।
७. 'लोके विरप्शमित्यादौ' ख. च. पाठः।

**चतुष्टयमिति**—चुत्व-तुकोरिव च्छत्वस्याऽसिद्धत्वात् 'नश्छवि' (८।३।७) इति रुत्वं न। यत्तु तुकश्चुत्वे छत्वस्याऽसिद्धत्वात् 'चयो द्वितीयाः' (वा० ८।३।२८) इति पक्षे चस्य च्छत्वेन छकार-शकारघटितरूपद्वय-वृद्धेश्चिन्त्यमिदमिति। तन्न। वक्ष्यमाणविकल्पैश्चतुष्टयत्वस्याऽभिमतत्वेन क्षत्यभावात्। अत एवोत्तरार्द्धे तदुक्तिः। अत एव ञकार-छकार-शकारा-ऽनुस्वार-विसर्गाऽऽदीनां द्वित्वविकल्पेनाऽऽधिक्येऽपि न क्षतिः।

यत्तु 'तुकि, तकारस्य पदान्तत्वाच्चुत्वस्याऽसिद्धत्वेन जश्त्वे, ततश्चुत्वेन जकारे, तस्य 'खरि च' (८।४।५५) इति चर्त्वे ह्ययं चकारः। तत्र चर्त्वस्याऽसिद्धत्वात् 'चयो द्वितीयाः' इत्यस्य प्राप्तेरेवाऽभावाद् यत्किञ्चिदेतदिति। तन्न। तुको जश्त्वं प्रत्यसिद्धत्वादिति दिक्।

**ङमो ह्रस्वात्** (८।३।३२)—'मय उञो वः' (८।३।३३)इत्यत्र वाग्रहणादेवास्य नित्यत्वे सिद्धे, पुनर्नित्यग्रहणं स्पष्टार्थम्। न च विकल्पद्वयमध्य-पाठेनैव नित्यत्वकल्पने, तन्मध्यपाति-'नश्च' (८।३।३०) इत्यादीनामपि नित्यताऽऽपत्तिरिति वाच्यम्। स्वरितत्वबलादनुवृत्तस्य पुन'र्वा'ग्रहण-सामर्थ्यान्निवृत्तौ कल्प्यमानायां स्वाऽनन्तर एव तत्कल्पनेनोपपत्तावन्यत्र तत्कल्पने मानाऽभावादित्याहुः।

---

१. 'छकार-छकार-छकार-शकार' इति क्वचित्पाठः। स च. क. पुस्तके मसी-लेपेन निराकृतः। ख. च. ग. पुस्तके तु स पाठो वर्त्तते एव।

२. तुको जश्त्वं प्रत्यसिद्धत्वात्। अतोऽपि घुडनुवृत्तिः कर्त्तुमशक्येति दिक्—इति ख. च. पाठः। क. कुण्डलितः। ग. नास्ति।

३. 'हे मपरे' 'मय उञो वो वा' इति च विकल्पद्वयमध्ये पाठादेव नित्यत्वे सिद्धे' इति ख. च. पाठः।

४. 'न च' इत्यारभ्य 'इत्याहुः' इत्यन्तः लघुशब्दरत्ने धृतोऽयं ग्रन्थ इति क. पुस्तके कुण्डलितः। ग. नास्त्येव। ख. तु वर्त्तते।

५. इतोऽग्रे–'तस्मादुत्तरत्र 'मय उञो वो वे'त्यत्र वाग्रहणसामर्थ्यादव्यवहितपूर्वसूत्रे एव वाग्रहणस्य निवृत्तिरिति भावः' इति लघुशब्दरत्नेऽधिकः। पाठः।

यद्यपि[1] पदस्येतिषष्ठ्यन्तमनुवृत्तं[2] पञ्चम्यन्त'ङमः'इत्यनेन सामानाधिकरण्याऽसम्भवादवयवत्वसम्बन्धेन विशेषणम्। मण्डूकप्लुत्या 'पदे' (८।३।२१) इत्यनुवृत्तेश्चा'ऽजादेः पदस्येत्यर्थः। तेन दण्डिनेत्यादौ नाऽतिप्रसङ्गः।

न च 'पदस्य' (८।१।१६) इत्यधिकारेणैव 'नेड् वशि कृति' (७।२।८) इत्यादाविवाऽजादेः पदस्येत्यर्थसम्भवेन 'पदे' इत्यनुवृत्तिर्व्यर्थेति वाच्यम्। विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्वे एव 'यस्मिन्विधिः' (प० ३३) इत्यस्य प्रवृत्त्या तथाऽर्थाऽलाभात्। अत एव 'लिट्त्सु' इत्यादौ धुडादिसिद्धिः। अन्यथा सादेः पदस्यैव स्यात्। स्पष्टं चेदं भाष्ये। तथापि[3] वैयधिकरण्याऽपेक्षया विभक्तेर्लक्षणया सामानाधिकरण्यमुचितम्। तदेतत् फलितमाह—**पदं तस्मादिति**।

वस्तुतो विभक्तिविषयनियमवैयर्थ्याऽऽपत्त्या विभक्तेर्लक्षणयाऽसाधुत्वाद् व्यत्ययकल्पनाऽपेक्षया भाष्योक्तं वैयधिकरण्यमेव न्याय्यम्। 'अचि' इति सप्तम्याः 'ङमः' इति पञ्चम्या षष्ठ्यर्थकत्वम्। सप्तमीनिर्देशस्तु लाघवार्थः, उत्तरार्थश्च, यस्मिन्विधिरिति प्रवृत्त्यर्थश्च। स्पष्टं चेदं 'तस्मिन्निति' (१।१।६६) सूत्रे भाष्ये।

ननु[4] 'ङमः' इत्यस्य षष्ठ्यन्तत्वमाश्रित्य 'ङमन्तं यत् पदं तदवयवस्य ह्रस्वात् परस्य ङमो ङमुडजादौ पदे' इत्यर्थोऽस्तु। पदस्येति च 'मादुपधायाः (८।२।९) इतिवदवयवषष्ठी[5]। 'अजादौ[6] पदे' इत्युक्तेर्मनन्नित्यादावनन्त्यस्य न। 'म्ना अभ्यासे' इत्यस्य शतरि रूपमिति चेन्न।

---

१. 'यद्यपि' इति ख. च. नास्ति।

२. 'अनुवृत्तमपि पञ्चम्यन्त' ख. च. पाठः।

३. 'तथापि' इत्यस्य स्थाने 'वस्तुत.' इति ख. च. पुस्तकयोः पाठः।

४. ननु 'ङमः' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. च. पाठोऽयं प्रायो मनोरमाशब्दरत्नयोः स्थितत्वात् क. कुण्डलितो ग. नास्ति।

५. 'अवयवषष्ठीति चेन्न। कुर्वन्नास्ते' इति क. पाठः। 'अवयवषष्ठी। ह्रस्वात् परश्च प्रत्यासत्त्या उपस्थितङमेवेति चेन्न' च. पाठः।

६. 'अजादौ पदे' इत आरभ्य 'रूपम्' इत्यन्तः पाठः क. ग. पुस्तकयोर्नास्ति।

'कुर्वन्नास्ते' इत्यत्र णत्वाऽऽपत्तेः । यदि 'कार्यकालपक्षे नुटो बहिरङ्गाऽसिद्धत्वान्न णत्वप्राप्तिः' इत्युच्यते, यद्वा–'यदागमाः' (प. ११) इति न्यायेनाऽऽगमानामागमिधर्मवैशिष्ट्यमपि बोध्यते इति आद्यनस्याऽपि पदान्तत्वमस्त्येव, स्पष्टं चेदं भाष्ये—इत्युच्यते, तदा[1]ऽपि (सा[2]मानाधिकरण्यस्य न्याय्यत्वेन पदस्य विशेष्यत्वे–) 'ह्रस्वात् परस्य ङमन्तस्य पदस्याऽचि परे ङमुट्' इत्येवाऽर्थः स्यात्, न तु त्वदुक्त इति महदनिष्टं स्यादिति बोध्यम् । **स्पष्टं चेदं सर्वं भाष्ये ।**

'ङमो ह्रस्वादचि द्वे' इति तु न सूत्रितम् । यथोद्देशपक्षे पूर्वोक्ते णत्वाऽऽप[3]त्तेरित्याहुः ।

**ङमुडिति**—'ङमः' इति प्रत्याहारे कृतमपि टित्त्वं सामर्थ्यात् संज्ञिन उपकरोति । तेन यथासङ्ख्यं ङुट्-णुट्-नुटः प्रवर्त्तन्ते ।

न च 'ङमः पर उट् यस्मिन्' इतिबहुव्रीह्याश्रयणेन ङुट्-णुट्-नुट उपस्थापनीया इति वाच्यम् । व्यधिकरणबहुव्रीह्यापत्तेः । तेषामुच्चारणाऽभावेन उपदेशाऽन्त्यत्वाऽभावादिसंज्ञाऽनापत्तेश्च । (ङ[4]मुटि उकार उच्चारणार्थः) ।

'ङम[5]न्तं यत् पदम्' इति किम् ? 'दण्डिनित्याह' इत्यादावनुकार्याऽनुकरणयोरभेदविवक्षायां सुबुत्पत्त्यभावे ङमुडापत्तेरिति ।

ननु 'परमदण्डिनौ' इत्यादावन्तर्वर्त्तिविभक्त्या पदत्वान्नुट् स्यात् । न च

---

१. 'तदा ङम इत्यस्यावृत्तौ मानाऽभावेन पदस्य विशेष्यत्वे ह्रस्वात् परस्य ङमन्तस्य'–इति च. पुस्तकपाठः ।

२. क. ग. नास्ति । ख. पाठः ।

३. 'ननु ङमः' (२६५ पृष्ठे) इत्यारभ्य इत्याहुरित्यन्तः ख. च. पाठः । क. तु कुण्डलितः, लघुशब्दरत्ने ग्रन्थकृता धृतत्वात् ।

४. क. कुण्डलितोऽयं ख. पाठः । ग. नास्ति ।

५. 'पदस्येति किम्' ख. ग. पाठः ।

उत्तरपदत्वे च' (वा० ८।२।६८) इति प्रत्ययलक्षणप्रतिषेधः। अपदादिविधाविति पर्युदासेन पदा[1]न्तत्वनिमित्ते विधावेव तत्प्रवृत्तेः, न लु[2]मता' (१।१।६३) इतिसूत्रभाष्ये स्पष्टत्वात्। उत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तेश्च। अ[3]त एव 'माषकुम्भवापेन' इत्यादौ 'पदव्यवायेऽपि' इतिनिषेधसिद्धिरिति चेन्न। 'उञि च पदे' (८।३।२१) इत्यतः 'पदे' इत्यनुवर्त्य 'अजादेः पदस्य' इति व्याख्यानेनाऽदोषात्। प्रकृतसूत्रभाष्ये 'तेन निषेधेन सिद्धम्' इत्युक्तिस्त्वेकदेशिन इति न तद्विरोधः (—इत्यु[4]पपादयिष्यामः)।

नन्वेवमपि विभक्त्यर्थान्वयाऽर्थं तदन्तस्य ङम्पदेन वृत्त्योपस्थितेरावश्यकत्वेन, ङमि ह्रस्वाऽन्वयो न स्यात्, प[5]दार्थैकदेशत्वादिति चेन्न।

ङम्रूपं पदमित्यर्थमुपजीव्य विशेषणत्वज्ञानसापेक्ष-'येनविधिः' (१।१।७२) इत्यस्य प्रवृत्तत्वेन तस्यामवस्थायां ङमि ह्रस्वादित्यन्वये बाधकाऽभावेन, क्लृप्ताऽर्थाऽबाधेनैव तदन्तग्रहस्योचितत्वाच्च। स्पष्टा चेयं रीतिर्येन विधिरिति सूत्रे भाष्ये।

अयं च क्वचिन्न। 'इको यणचि' (६।१।७७) इति निर्देशात्। एतेन 'इकोऽचि यण्' इत्येव वक्तुं युक्तमित्यपास्तमित्याहुः।

**सुगण्णीश इति**—ण्यल्लोपौ न स्थानिवत्। पूर्वविध्यभावात्। (पू[6]र्वत्राऽसिद्धे तन्निषेधाच्च)।

---

१. 'पर्युदासेन पदान्तविधावेव' इति ख. पाठः।

२. 'न लुमतेति सूत्रभाष्ये स्पष्टत्वात्' इति क. ग. पाठः। ख. नास्ति।

३. 'अत एव' इत्यारभ्य 'निषेधसिद्धिः' इत्यन्तः क. ग. पाठः।

४. ख. पाठः।

५. 'पदार्थैकदेशत्वादिति चेन्न। लक्ष्याऽनुरोधेन, व्याख्यानेन च ङम्पदस्येव ह्रस्वपदस्य तात्पर्यग्राहकत्वकल्पनेनाऽदोषात्'—इति ख. पाठः।

६. ख. पाठः। क. ग. नास्ति।

**समः सुटि** (८।३।५)—यद्यपि मोऽनुस्वारेण सिद्धं तथाप्यनुनासिकत्व त्रिसकारत्वसिद्ध्यर्थमिदम् ।

**रुप्रकरण इति—**अत एव समः स्सुटीत्यादौ प्रश्लेषेण सकारविधाने-नैवेष्टसिद्धौ, 'सम्पुम्कानाम्' (वा. ८।३।३४) इति वचनं न कार्यमिति भाष्योक्तं सङ्गच्छते । **'रोः पूर्वस्य'** इत्युपलक्षणं रुप्रकरणविधेयस्य । एव मुत्तरसूत्रे **रोः** [1]**पूर्वस्मादित्यपि** ।

अयं चाऽधिकारः[2] । तेनोत्तरसूत्रविषये एवैतयोः प्रवृत्तिः । 'अत्र' इति तु रुप्रकरण एवाऽस्य सम्बन्धो न त्वग्रे 'ढो ढे लोपः' (८।३।१३) इत्यादा-वित्यर्थसूचनार्थम् । 'तु' शब्दः 'परस्य नित्यं रुत्वम्' पूर्वस्य तु वाऽनुना-

---

१. इतोऽग्रे–'इदं च विधिसूत्रम्' नाऽधिकारो लाघवात् । अधिकारत्वे हि प्रतिसूत्रमावृत्त्यापत्तौ गौरवाऽऽपत्तेः । 'मतुवसोः (८।३।१) इतिसूत्रे सम्बन्धाऽनापत्तेश्च । तद्विषये एतदप्रवृत्तौ हि तत्र 'वसु' ग्रहणं व्यर्थं स्यात् । तदर्थं तत्राऽपकर्षकरणे गौरवम् । अत एवाऽत्रग्रहणं चरितार्थमे-तद्रुप्रकरणे इत्यर्थकम् । अन्यथाऽधिकारादेव रुप्रकरणलाभे तद्वैयर्थ्यं स्पष्टमेव[1] । 'तु' शब्दस्तु–'अन्त्यस्य रुस्ततस्तु पूर्वस्याऽनुनासिकः' इति विशेषस्य स्पष्टबोधनाय 'वा' शब्दवद् बोध्यः' । इति ख. च. पाठः ।

२. 'अयं चाधिकारः' इत आरभ्य 'बोध्यम्' इत्यन्तः ख. पाठखण्डनात्मकः क. ग. पाठः ।

---

1. इतोऽग्रे—'किञ्चाऽत्र पक्षे पूर्वत्वे रोरवधित्वाऽलाभः । रोरनुनासिकस्य च सहैव विधानेन तस्याऽवधित्वेन ग्रहीतुमशक्यत्वात् । रुस्थानिनस्तु शब्दादुपस्थितिर्दुर्लभा । विधित्वे 'मतुवसोरि'त्यतो रुरित्यनुवर्त्य पञ्चम्या विपरिणामात् तल्लाभः स्पष्ट एव । तुशब्दः पक्षद्वयेऽपि व्यर्थः । न चाऽधिकारत्वे परस्मात् कार्यिणो विशेषद्योतनार्थः सः, परस्य नित्यं रुत्वं पूर्वस्य वाऽनुनासिकः' इतीति वाच्यम् । स्वसूत्रोपात्तविधेयसम्बन्धेन निराकाङ्क्षतयाऽन्यत्राऽसम्बन्धात् । वाग्रहणन्तु'–इति च. पुस्तकेऽधिक: पाठः ।

सिकः' इति विशेषद्योतनार्थम् । अत एव 'मतुवसोः' (८।३।१) इत्यत्रोपसङ्ख्यातयोः 'वन उपसङ्ख्यानं' (वा० ६।१।१२) 'विभाषा भवदि (भा० वा०) इत्यनयोरुदाहरणेऽनुनासिकादेरनुच्चारणं भाष्ये । विधिपक्षे तु तत्र प्रवृत्तिर्दुर्वारैव । अत्र च रुस्थानिनः पूर्वस्याऽनुनासिक इति बोध्यम्[1] ।

'वा'ग्रहणन्तु स्पष्टार्थमेव । 'अनुनासिकात् परः' इत्येव सिद्धेः । न हि विकल्पं विना 'अनुनासिकाऽभावपक्षे' इति सम्भवति । (इदमेव[2] ध्वनयितुं वृत्तौ तु वेति शब्दौ नोक्तावित्याहुः) ।

ननु 'अनुनासिकात्' (८।३।४) इति दिग्योगलक्षणा पञ्चम्यस्त्विति चेन्न । (तत्र[3] ह्यनुनासिकपदं यथाश्रुतम् देशविशेषस्थवर्णमात्रोपलक्षणं वा ? नाऽऽद्यः) । 'अत्राऽनुस्वारपराऽनुनासिकः पूर्वस्य तु वा' इति न्यासेन सिद्धौ 'अनुनासिकात् परः (८।३।४) इति सूत्रस्य वैयर्थ्याऽऽपत्तेः । (नान्त्यः[4] । पूर्वसूत्र इवाऽत्रापि 'रु' इत्यनुवृत्त्यैव पूर्वशब्दमनुवर्त्त्य, परशब्दयोगेन पञ्चम्या विपरिणम्य 'रोः पूर्वस्मात् परः' इत्यर्थेनैव सिद्धौ अनुनासिकादित्यस्य वैयर्थ्याऽऽपत्तेः) अतो ल्यब्लोपे पञ्चमीत्याह–**अनुनासिकं विहायेति ।**

एवं च सम्भाविताऽनुनासिक्यगुणक एव परत्वेऽवधिः । संसर्गवद् विप्रयोगस्याऽपि विशेषाऽवगतिहेतुत्वात् । यथा 'अवत्सा धेनुरानीयताम्' इत्यादावित्याशयेनाऽऽह—**रोः पूर्वस्मादिति ।** (रु[5]प्रकरणस्थादित्यर्थः) ।

**अनुस्वारागम इति**—परशब्दादेतल्लाभः । अयमनवयव एव, अवयवत्वे मानाऽभावात् ।

---

१. 'अयं चाधिकारः' (२६८ पृष्ठे) इत आरभ्य 'इति बोध्यम्' इत्यन्तः ख. पाठखण्डनात्मकः क. ग. पाठः ।

२. क. ग. नास्ति । ख. पाठः ।

३. क. ग. नास्ति । ख. च. पाठः ।

४. क. ग. नास्ति । ख. च. पाठः ।

५. क. ग. नास्ति । ख. पाठः ।

**विसर्जनीयस्य** (८।३।३४)—नन्ववसानेऽपि प्रवृत्त्यापत्तिः। विसर्जनीयेन खर इव तस्याऽपि निमित्तस्याऽऽक्षेपात्। न चाऽवसाने संहिताऽधिकारादेव न भविष्यति, अवसानसंज्ञया[1] संहितासंज्ञाया[2] बाधादिति वाच्यम्। संज्ञिभेदेन बाध्यबाधकभावाऽयोगात्। संहिताऽधिकारपठिताऽवसानकार्याणामसम्भवदुक्तिकत्वाऽऽपत्तेश्च।

न च तेषु न संहिताऽधिकारः। 'तोर्लि' (८।४।६०) इत्यादौ मण्डूकप्लुत्यापत्तेः। स्पष्टं चेदमत्रैव भाष्ये। (प्र[3]थमे संहिताऽवसानसंज्ञयोर्द्वयोरपि भाष्ये प्रत्याख्याततत्वाच्च) इति चेन्न। 'खरवसानयोः' (८।३।१५) इत्यतो मण्डूकप्लुत्या एकदेशे स्वरितत्वप्र[4]तिज्ञया 'खरि' (८।४।५५) इत्यनुवृत्तेः। तदाह—**खरीति**।

यत्तु 'रो रि' (८।३।१४) इत्यस्याऽग्रे-'खरि सः', 'रोः सुपि' 'शर्परे विसर्जनीयः' 'अवसाने', 'वा शरि' 'कुप्वोः≍क≍पौ च' इत्यादि 'इडाया वा' इत्यन्तं पठित्वा, 'भोभगो' (८।३।१७) इत्यादिप्रकरणं 'रु'पदघटितं 'मय उञो (वो) वा' (८।३।३३) इत्यन्तं पाठ्यम्। ततो 'अपदान्तस्य' इत्यादि। 'शर्परे' इत्यादौ च 'रोः' इत्यस्य नाऽनुवृत्तिः। अस्वरितत्वात्, 'काम्ये रोरेव' (वा० ८।३।३८) इति वार्त्तिकाच्च। एवं च 'खरवसानयोः' (८।३।१५) इति सूत्रे 'विसर्जनीय'ग्रहणात्, प्रकृतसूत्रं च न कार्यम्। न च कवर्गतृतीयादौ 'कुप्वोः' इति स्यादिति वाच्यम्। मण्डूकाऽनुवृत्त्या 'कुप्वोः' (८।३।३६) इति सूत्रे खरीत्यस्य सम्बन्धेनाऽदोषादिति। तन्न। 'गीर्ष्वि' त्यादौ 'वा शरि' इति पाक्षिकविसर्गाऽऽपत्तेः। 'रोः सुपी' ति चाऽनन्तरस्येति (प०६३)न्यायात् सस्यैव नियमः स्यात्। वा शरीत्यस्याऽसिद्धत्वाच्च।

---

१. इतोऽग्रे-'महासंज्ञाबलात् पूर्वपरयोः संनिकर्षे एव तत्सत्त्वाच्चेतिवाच्यम्' च. पाठः।

२. इतोऽग्रे—'स्वापेक्षया पूर्ववर्णमादाय पूर्वपरयोः संनिकर्षस्य सत्त्वाच्च' इति च. पुस्तके पाठः।

३. ख. पाठः। क. ग. नास्ति।

४. 'प्रतिज्ञया च' च. पुस्तके पाठः।

सिद्धान्ते तु 'वा शरि' (८।३।३६) इत्यस्य विसर्गस्थानिकत्वान्नियमेन 'खरवसानयोः' इतिविसर्गाऽभावे प्राप्तिरेव नास्ति।

यदि तु 'वा शरि' (८।३।३६) इत्यत्र 'रोः सुपि' (८।३।१६) इत्यनुवर्त्य, वाक्यभेदेनाऽर्थाऽधिकारान्नियमपरतया व्याख्याय, तस्याऽपि नियमेन व्यावृत्तिरित्युच्यते, तर्हि पर्यवसन्नैकपदलाघवाय स्वरितत्ववाक्यभेदाऽऽदिकल्पने 'सेयं महतो वंशस्तम्बाल्लट्वाऽनुकृष्यते' इति 'ऋॢक्' सूत्रस्थभाष्यविरोधः। 'कुप्वोः ≍क≍पौ च' इतिवत् 'खरवसानयोरः'इत्येव सिद्धे पर्यायि षुलाघवगौरवाऽनादरेणैव विसर्जनीयपदस्य सत्त्वेन, वर्णकृतलाघवगौरवस्याऽप्रयोजकत्वादित्याहुः।

**सम्पुम्कानां सो वक्तव्य इति** (वा० ८।३।३४)—'समः सुटि' (८।३।५) 'पुमः खय्यम्परे' (८।३।६) 'कानाम्रेडिते' (८।३।१२) इति सूत्रत्रये 'स' इत्युपसङ्ख्याय, समः सुटीत्यत्र सकारं प्रश्लिष्य वा, एतैः सकार एव विधेय इत्यर्थः। एवं चाऽस्याऽसिद्धत्वाद् रुत्वाऽभावेन विसर्गाऽभावे, तत्तद्विधीनामप्राप्तिरेवेति भावः। स्पष्टश्चाऽयमर्थः समः सुटीति सूत्रे भाष्ये।

ये त्वनेन वार्त्तिकेन विसर्गस्य सं विदधति, तेषां गौरवं स्फुटमेव। भाष्यविरोधश्च।

'रुप्रकरणे' इति व्याख्यानस्य फलं दर्शयितुमाह—[1]**समो वा लोपमिति**। यत्तु—

**'उपधारञ्जनं कुर्यान्न-मो रुकरणे सति।**
**लोपे प्रकृतिभावे वा नोपधारञ्जनं मतम्'॥**

**उपधारञ्जनम्**=अनुनासिकाऽनुस्वाराऽऽगमरूपम्। **न-मोः**=नकार-मकारयोः प्रकृतिभावोदाहरणन्तु नॄन्पाहीत्यादीति (–[2]वेदभाष्ये उक्तम्)।

---

१. इतोऽग्रे–'लोपस्यापि रुप्रकरणस्थत्वादिति। प्रकरणपरतया व्याख्याने मानन्तु प्रागवोचाम। एतेनोपधारञ्जनं कुर्यात्' इतिवेदभाष्योक्तमपास्तम्।' च. पाठः।

२. क. ग. नास्ति। ख. पाठः।

तत्तु प्रातिशाख्यत्वात् तच्छाखामात्रविषयमित्याहुः[1][2]।

ननु लोपेऽपि द्वित्वाऽभावेनैकसकारस्य, द्वित्वेन द्विसकारस्य च सिद्धत्वात् 'समः सुटि' (८।३।५) इति सूत्रं व्यर्थमित्यत आह–**त्रिसकारमपी**ति। 'स्कोः' (८।२।२९) इति सलोपस्तु न। समः सुटीत्यादीनामसिद्धत्वात्। (अत[3] एव 'झलो झलि' (८।२।२६) इत्यपि न। सिच एव तेन लोपाच्च)।

ननु पुनर्द्वित्वेन त्रिसकारस्याऽपि सिद्धत्वात् सूत्रं व्यर्थमेव[4]।

न च[5] 'एकः पूर्वपरयोः' (६।१।८४) इत्यधिकारस्य—'संप्रसारणाच्च' (६।१।१०८) इत्यादिसूत्रेषु स्पष्टं भाष्ये पठितेन 'लक्ष्ये लक्षणस्य'(प० १२२) इति न्यायेन न पुनर्द्वित्वम्। एकः पूर्वपरयोरित्यत्राऽपि भाष्ये ध्वनितोऽयमर्थः। तत्र हि—

यथा[6] 'अनयोः पूलयोः कटं कुरु' इत्यादावेकवाक्यतयैव बोधादेकत्वविवक्षणेनोभयसम्बन्ध्येककटकरणप्रतीतिस्तथा 'आदचि पूर्वपरयोर्गुणः' इत्यादावपि द्वन्द्वनिर्देशाद् विधेयगतसङ्ख्याविवक्षणाच्चोभयोः स्थाने एक एवादेशो भविष्यतीत्येकग्रहणं प्रत्याख्यातम्।

ततः शङ्कितम्–शास्त्राऽधिकारिणः पुरुषान् प्रति प्रवृत्तं संस्कारकं तत्तच्छास्त्रम्, प्रतिपुरुषमेकवाक्यतया सकृदेवाऽर्थबोधकम्। यथा 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्याधानेनाऽग्निं संस्कुर्यादित्यर्थकं प्रतिब्राह्मणं सकृदेवाऽर्थबोधकम्, सकृदेव स्वविषये प्रवर्त्तकं च। अत एव पुनः पुनर्ना-

---

१. 'प्रतिशाख्यत्वाच्छन्दोमात्रविषयम्' ख. पाठः।

२. इतोऽग्रे–'यदि तु वेदे क्वचिदनुनासिकाऽभावविशिष्टः प्रयोगो दृश्यते, तर्हि स च्छान्दसत्वात् साध्य इत्याहुः'—च. पाठः।

३. 'अत एव' इत्यारभ्य 'लोपाच्च' इत्यन्तः क. कुण्डलितः पाठः। ख. ग. नास्ति।

४. 'व्यर्थमेवेति चेन्न। लक्ष्ये लक्षणस्येतिन्यायात् इत्येव क. पाठः।

५. 'न च' इत्यारभ्य 'तत्रैव निरूपयिष्यामः' (२७७ पृष्ठे) इत्यन्तस्तु क. कुण्डलितः, प्रायः ख. ग च. पाठः।

६. 'यथाऽनयोः' इत्यारभ्य 'तत्रैकग्रहणमावश्यकम्' (२७३ पृष्ठे) इत्यन्तः क. कुण्डलितः पाठः। ख. ग. च. नास्ति।

ऽऽधानादिसंस्कारः। तथा व्याकरणशास्त्रस्य 'अवर्णादचि पूर्वपरयोर्गुणो भवति, गुणवान् शब्दश्च साधुर्भवति, स च प्रयोक्तव्यः' इत्येतावत्पर्यन्तं व्यापारात् तत्संस्कृतस्यैकस्य खट्वेन्द्रस्य प्रयोगेण शास्त्रार्थस्य करणान्मालेन्द्रादिप्रयोगो न स्यात्। अतस्तत्तल्लक्ष्यविषयवाक्योपप्लवेन वाक्यभेदोऽवश्यं वाच्यः। तद्वत् पूर्वपरविषयेऽपि स्यादिति तत्रैकग्रहणमावश्यकमिति[1]।

तत्र हि जातिपदार्थे तज्जात्याश्रयक्वचिद्व्यक्तौ चरितार्थस्य व्यक्त्यन्तरे प्रवृत्तिर्न स्यात्। यथाऽन्याधानमेकपुरुषं प्रति सकृदेव प्रवर्त्तते। न च तुल्यन्यायात् तस्याऽपि पुरुषान्तरेऽप्रवृत्त्यापत्तिः[2]। आधानस्य यज्ञद्वारत्वेन[3], यज्ञेच्छुत्वात् सर्वेषां, सर्वान् प्रति प्रवृत्तेरित्याशङ्क्य, अत्राऽपि[4] विनिगमना-

---

१. इतोऽग्रे—'तत्र गुणो भवतीत्याद्यंशो लक्ष्यसंस्कारफलक एव। यथाऽऽधानमग्निसंस्कारकम्। शास्त्रतात्पर्यविषयप्रयोगविधिश्च पुरुषसंस्कारक एवेति तदाशयः। ततः सिद्धान्तितम्—यथा नित्यनैमित्तिककाम्यविधीनां तदकरणजन्यप्रत्यवायपरिहाराय, फलाय च वाक्यभेदेन तत्तद्विषयकशास्त्रोपप्लवात् पुनः पुनः प्रवर्त्तकत्वम्, तथा ममाऽप्यसाधुप्रयोगे प्रत्यवायश्रवणान्नित्यसमत्वं प्रयोगविधेः, 'एकः शब्दः सम्यग्ज्ञातः, शास्त्रान्वितः, सुष्ठु प्रयुक्तः, स्वर्गे लोके कामधुग् भवती'त्यनेन काम्यत्वं चेति तत्तद्विषयाऽनन्तवाक्योपप्लवेन भवत्येव मालेन्द्रादिप्रयोग इति। एवं प्रयोगविध्यंशस्य नित्यकाम्यत्वव्यवस्थापनेन गुणविध्यंशस्य शुद्धलक्ष्यसंस्कारार्थत्वमेवोक्तम्। एवञ्च तस्याऽऽधानादिवदेवाग्निस्थानीयलक्ष्येषु सर्वेषु प्रवृत्तावपि, एकाग्नाविवैकलक्ष्ये नाऽऽवृत्तिरिति पूर्वपरयोर्नाऽऽदेशद्वयप्रसक्तिरिति तत्तात्पर्यम्। एवञ्च स्पष्टमेव पूर्वपक्षसिद्धान्तयोरयं न्यायः संस्कारकविधिविषये सिद्धान्तित इति भावः' इति लघुशब्दरत्नेऽधिकः पाठः।

२. इतोऽग्रे-तत्र 'व्यक्तिपक्षस्यैवावश्याश्रयणीयत्वात्' इति च. पाठः।

३. यज्ञोपायत्वेनेत्यर्थः।

४. 'अत्रापि व्यक्तिपक्षे सर्वत्र प्रवृत्तिः किञ्च विनिगमनाविरहात्' च. पाठः।

विरहात् सर्वत्र प्रवृत्तिरिति 'न ब्राह्मणो हन्तव्यः' इत्यादिदृष्टान्तेन समाहितम् ।

एवं च तुल्यन्यायतया एकपुरुषे पुनःपुनराधानाऽप्रवृत्तिवदेकव्यक्तौ शास्त्रस्याऽपि पुनः पुनर्न प्रवृत्तिरिति ध्वनित एवाऽयं न्यायः ।

किञ्च 'झरो झरि' (८।४।६५) इत्यादिलोपानां वैकल्पिकतया, पक्षे द्वित्वानामानन्त्याऽऽपत्त्या, परिनिष्ठतत्वाऽभावरूपदोषवारणाय क्वचिद् विश्रान्तौ कल्पनीयायां, लाघवेन प्रथमप्रवृत्तावेव विश्रान्तिर्युक्तेति वाच्यम् ।

त्वदुक्तरीत्या तत्प्रवृत्तावानन्त्यापत्तिर्बीजम् । न च सा प्रकृतेऽस्ति । द्वित्वस्य वैकल्पिकत्वेन यावच्छक्ति द्वित्वसहितप्रयोगस्य परिनिष्ठितत्वसम्भवात् । अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकाऽनाक्रान्तत्वं हि परिनिष्ठितत्वम् ।

किञ्चाऽऽष्टमिकवर्णद्वित्वस्य स्थाने द्विर्वचनत्वाल्लक्ष्यभेदोऽस्त्येवेति चेत् ।

अत्राऽऽहुः–'आनन्त्याऽऽपत्तिस्तद्बीजम्' इत्येतद्भाष्यविरुद्धम् । तथा हि सति—काशकृत्स्निना प्रोक्ता मीमांसा–काशकृत्स्नी, तामधीते 'काशकृत्स्ना ब्राह्मणी'त्यत्र 'अण्योऽकारः' इति व्याख्यानेन 'प्रोक्ताल्लुक्' (४।२।६४) इत्यनेन लुप्तद्वितीयाऽणमादाय 'टिड्ढाणञ्' (४।१।१५) इत्यस्य प्राप्त्यभावेऽपि, प्रोक्ताऽर्थोत्पन्नाऽलुप्तप्रथममादाय प्राप्तस्य ङीपो लक्ष्ये लक्षणस्येतिन्यायेन वारणम् 'अनुपसर्जनात्' (४।१।१४) इति सूत्रे तत्प्रत्याख्यानाऽवसरे भाष्यकृत्कृतमसङ्गतं स्यात् । न ह्यत्राऽऽनन्त्याऽऽपत्तिः । ङीपि सत्यदन्तत्वाऽभावेन, एकङीपा स्त्रीत्वस्य बोधनाच्च पुनरप्रवृत्तेः ।

अपि चोदवोढामित्यादौ 'उदवह स् तामि'त्यवस्थायां सिज्लोपादेरसिद्धत्वात् सिचि वृद्धावोकारे[1] च कृते, 'लक्ष्ये लक्षणस्ये'तिन्यायेन पुनर्वृद्धिर्नेति'सिचि वृद्धिः' (७।२।१) इतिसूत्रस्थभाष्यं विरुध्येत । आनन्त्याऽऽपत्तेरभावात् ।

न च तत्र 'ओत्' (१।१।१५) इतितपरकरणसामर्थ्यान्न वृद्धिरिति वाच्यम् । अशाब्दत्वात् । अतत्कालव्यावृत्तेरेव तेन शब्दमर्यादया लाभात् ।

---

१. 'सिचि वृद्धौ, वर्णग्रहणसामर्थ्येन ओकारे' इति च. पुस्तकपाठः ।

एतेन दध्यत्रेत्यादौ पूर्वं धस्य द्वित्वे, जश्त्वे, लक्ष्यभेदात् पुनर्द्वित्वमिति परास्तम्। पूर्वमकारस्य, इदानीमोकारस्येत्यादिलक्ष्यभेदस्य उदवोढामित्यादावपि सत्त्वेन, पूर्वोक्तभाष्यविरोधात्। विकाराऽन्याऽऽनुपूर्व्यैक्येन[1] लक्ष्यैक्यन्तु ममाऽप्यस्त्येव। जश्त्वस्याऽसिद्धत्वेन लक्ष्यभेदाऽभावाच्च।

न चैवमपाचितरामित्यादौ 'तशब्दलोपे पुनश्चिणो लुगित्यस्य प्रवृत्त्या तरपोऽपि लुक् स्यादि'त्याशङ्क्य'लक्ष्ये लक्षणस्ये'ति(पृ० १२२) न्यायेन वारणं भाष्योक्तमसङ्गतं स्यात्। विकाराऽन्यानुपूर्व्यैक्याऽभावेन लक्ष्यभेदादिति वाच्यम्। इमामेवाऽनुपपत्तिमुक्त्वा'ऽथवा क्ङितीत्यनुवर्त्य, षष्ठ्या विपरिणमय्य, 'क्ङितो लोपः' इत्यस्य, लक्षणभेदमाश्रित्याऽऽभीयाऽसिद्धत्वरूपस्य च समाधानान्तरस्य भाष्य एव कृतत्वेनाऽदोषात्[2]। एवं च प्रकृते न्यायाऽप्रवृत्तौ बीजाऽभावेन पुनर्द्वित्वाऽप्रवृत्त्या सूत्रमावश्यकमेव।

अत एव 'लिटि धातोः' (६।१।८) इतिसूत्रे 'अनभ्यास'ग्रहणं भाष्ये प्रत्याख्यातम्। 'एकस्यैकाऽचो द्वित्वे कृते, एकाज्व्यपदेशहेतोरचो द्विरुक्तत्वादनेन न्यायेनाऽचः पुनर्द्वित्वाऽप्राप्ताववयवाऽन्तरस्यैकाऽच्त्वाऽभावेन तदप्रवृत्तौ, तद्व्यर्थम्' इति कैयटेनोक्तम्[3]।

नन्वेकेन पुरुषेण ज्योतिष्टोमाऽऽदियज्ञाऽङ्गमग्निसंस्कारफलकमाधानं फलाभावाद् यथा पुनः पुनर्नाऽनुष्ठीयते, तथा शास्त्रमप्येकप्रयोगे सकृत्कृतसंस्कारं फलाऽभावात् पुनर्न प्रवर्त्तत इति हि तन्न्यायबीजं 'सम्प्रसारणाच्च (६।१।१०८) इत्यत्र भाष्ये उक्तम्। यत्तु काम्यम्[4], यदप्यकरणप्रत्यवायपरि-

---

१. 'आनुपूर्व्यैकवाक्येन' ख. पाठः।

२. इतोऽग्रे-'एवं भाष्यव्याख्यानं च तवाऽप्यावश्यकम्' इति च. पाठः।

३. इतोऽग्रे-'सन्नन्तादिभ्यो णिचि, चङि, द्वित्वाऽभावार्थं तदिति च कैयटेनोक्तम्। एवञ्चाऽत्राऽकर्त्तव्यपरं भाष्यं बोध्यम्' इति च. पाठः।

४. 'काम्यवदप्यकरण' ख. पाठः।

हारफलकम्, तदावर्त्तत एव। यथा फलभेदाद् भिद्यमाना ज्योतिष्टोमादयः पुनः पुनरनुष्ठीयन्ते, यथा च नैमित्तिकानि प्रतिनिमित्तमनुष्ठीयन्ते, तद्व-दिहाऽपि शास्त्रज्ञानपूर्वकप्रयोगे स्वर्गाऽऽदिरूपफलोक्तेः काम्यवद्वा, नैमित्तकवद्वा, एकप्रयोगेऽपि लक्ष्यभेदात् पुनः शास्त्रप्रवृत्तिः, इत्यपि तत्रैव **भाष्ये स्पष्टम्।**

अत एव 'न संप्रसारणे' (६।१।३७) इति निषेधश्चरिताऽर्थः। तत्र लक्ष्यभेदादिवत् फलभेदादपि पुनः प्रवृत्तिर्दुर्वारा। एवं च प्रकृते तृतीय-चतुर्थादिश्रवणरूपफलभेदात् पुनः प्रवृत्तिः स्यादेवेति चेन्न।

अच्परयत्त्वावच्छिन्नोद्देशेन हि द्वित्वं विधेयम्। तत्फलं च तद्रूपलक्ष्य-संस्कार एव, न त्वन्यत्। ज्योतिष्टोमाऽऽदेः स्वर्गकामाऽऽदिपदैः फलबोध-नवदत्र तदभावात्। नाऽपि नित्ये प्रत्यवायपरिहारादिवदत्र तथा किञ्चित्फ-लकल्पकमस्ति। स्वर्गादि तु शास्त्रज्ञानपूर्वकप्रयोगस्य फलम्, न तु शास्त्र-प्रवृत्तेः। 'एकः शब्दः सम्यग्ज्ञातः, सुप्रयुक्तः, स्वर्गे लोके कामधुग्भवति' इति श्रुतेः। संस्कारस्य च सकृत्प्रवृत्त्यैव कृतत्वान्न पुनः प्रवृत्तिः।

अच्परयत्त्वावच्छिन्नेऽन्यस्मिंस्तु भवत्येव। यथा 'सुद्ध्युपास्यः' इत्यत्र धसयोर्द्वित्वम्। एवं सम्प्रसारणाऽऽदिविधौ यण्त्वावच्छिन्नं[1] पदान्तसंयोगाऽऽ-दिस्थसत्वाऽवच्छिन्नं चोद्देश्यमिति यावदुद्देश्यं पुनः पुनः प्रवृत्तिर्भवत्येवेति न दोषः।

न चैवं वृद्धिविधावपि हलन्तसम्बन्ध्यन्त्यसमीपाऽच्त्वाऽवच्छिन्नं लक्ष्य-मित्योकारस्याऽपि वृद्ध्यापत्तिः। 'इरयो[2] रे' (६।४।७६) इतिद्विवचननिर्देशेन तत्तत्सम्बन्ध्यागमविकारादिकृतभेदमादाय लक्ष्यभेदस्याऽत्राऽनाश्रयणात्। वर्णश्रवणरूपफलन्तु लौकिकत्वान्न पुनः प्रवृत्तौ प्रयोजकम्। 'समः सुटि' (८।३।५) इतिसूत्राऽऽरम्भाच्च।

येऽप्यग्निर्यथाऽदग्धमेव दहत्येवं शास्त्रमपि कृतसंस्कारमेकत्र प्रयोगे

---

१. 'तत्तद्धातुसम्बन्धि यण्त्वावच्छिन्नं। च. पाठः।

२. एतस्या युक्तेर्लघुशब्दरत्ने 'सुद्ध्युपास्यः' इत्यत्र नागेशभट्टैः स्वयमेव खण्डनं कृतम्—'इरयो रे' इति द्विवचनं तु न मानमित्यादिना।

पुनर्न संस्करोतीत्येतन्न्यायबीजमाहुः। तेषामपि मते भूयादित्यादौ न दोषः। यथा एकस्यैव वस्तुन एकाऽवच्छेदेन दग्धस्याऽपरभागावच्छेदेन दाहायाऽग्नेः पुनः प्रवृत्तिर्दृश्यते, तथा शास्त्रस्याऽपीति।

किञ्च यथा वत्सो दोहनाय पूर्वं पयोग्रहणे प्रवृत्तोऽपि, पुनर्दुग्धपयःशेषग्रहणाय प्रवर्त्तते, यथा वा पर्जन्यः स्वेन पूर्णे कृतेऽपि क्षेत्रे पुनः पुनर्वर्षति, तद्वच्छास्त्रस्याऽपि क्वचिल्लक्ष्याऽनुरोधेन पुनः प्रवृत्तेरप्यङ्गीकारः। स्पष्टं चेदं 'शदेः शितः' (१।३।६०) इत्यत्र भाष्यकैयटयोः।

यदप्युक्तं—वर्णद्वित्वं स्थाने द्विर्वचनमिति। तदपि न। एकस्य विधिविषयतायां लाघवेनाऽतिरिक्ताऽऽदेशकल्पने गौरवेण च, 'पर'इत्यस्योच्चारणक्रियानिरूपितकारकविभक्त्यन्तत्वस्योचितत्वेन च, षाष्ठद्वित्ववद् द्विःप्रयोगपक्षस्यैवाऽत्र न्याय्यत्वात्। आष्टमिक[1]पदद्वित्वे तु यथा स्थानेद्विर्वचनं तथा तत्रैव निरूपयिष्यामः[2]।

ननु 'समः सुटी'ति सूत्रे 'वे'ति पाठेनैव पक्षे मोऽनुस्वारे सिद्धे, 'असुनासिकात् परः' (८।३।४) इति व्यर्थमत आह—[3]**अपि रूपद्वयमिति।** नन्वनुस्वारस्याऽनच्त्वात् ततः परस्य द्वित्वं न स्यादत आह—**अनुस्वारेत्यादि।**

**अकारस्योपरीति**—यद्यपि 'हयवरट्'सूत्रभाष्येऽट्स्विति सामान्यत उक्तम्, तथापि पुंस्वित्यादावुकारं निमित्तीकृत्याऽनुस्वारव्यवधाने षत्वमाशङ्क्य नुम्स्थानिकाऽनुस्वारस्यैव 'नुम्विसर्जनीय' (८।३।५८) इतिसूत्रे ग्रहणान्न' इति समाधानपरभाष्यबलादिदमवसीयते। इकाराद्युत्तरं पाठे हि अनुस्वारमिणं गृहीत्वा 'आदेशप्रत्यययोः' (८।३।५९) इति षत्वं दुर्वारमेव स्यादित्याहुः।

**शर्षुचेति**—(८।३।३७) इदं च हयवरडितिसूत्रे भाष्ये स्पष्टम्। 'कुप्वोः ≍क≍पौ' इति निर्देशश्चाऽत्र प्रमाणम्।

---

१. क. ग. पाठः। ख. तु 'आष्टमिक' इति नास्ति। 'पदद्वित्वे तु' इत्येव तत्र पाठः।

२. 'यथाऽनयोः (२७२ पृष्ठे) इत्यारभ्य सर्वोऽयं ग्रन्थः क. कुण्डलितः। प्रायः ख. ग. च. पाठोऽयम्। ३. 'अपि' इति च. नास्ति।

अयं च पाठोऽनित्यः। 'नुम्विसर्जनीयशर्व्यवायेऽपि' (८।३।५८), 'अट्कुप्वाङ्नुम्व्यवायेऽपि' (८।४।२) इत्यनयोर्विसर्जनीयाऽनुस्वारोपलक्षक-'नुम्'ग्रहणात्। अत एव 'यज्ञः' इत्यत्र यम्परत्वेऽपि'ज'द्वित्वम्। स्पष्टं चेदं 'मुखनासिका' (१।१।८) इतिसूत्रे **कौस्तुभे** इत्याहुः। (एतेन[1] 'हरिः कर्त्ता' इत्यादौ पूर्वसवर्णदीर्घो, 'हरिं स्मरेत्' इत्यादौ यणादिकं च स्यादिति परास्तम्। विसर्गादिनामसिद्धत्वाच्च[2])।

ननु 'व्यञ्जनानामज्व्यतिरेकेण कालाऽन्तरं नाऽस्ती'तिमते व्यञ्जनात् परस्यैकस्याऽनेकस्य [3]वोच्चारणे विशेषा[4]ऽभावोऽत आह—**अनुनासिकवतामिति**। तत्रोच्चारणे विशेषाऽभावकल्पने इदं वचनं व्यर्थमेव स्यात्। तेषां पृथक् कालाऽन्तराऽभावे तत्तत्प्रयुक्तलाघवगौरवाऽऽदिविचाराऽसङ्गतिश्च स्यादिति भावः।

अनुस्वारादीनां शर्षु पाठस्योपसङ्ख्याने फलमाह—**अनुस्वारवतामिति**। अपिना कस्य संग्रहः। (पूर्वोक्ता[5]ऽर्थकल्पनाऽभावे सूत्रवैयर्थ्यमपि दर्शयितु-माह—**एषामष्टादशानामिति**)। लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेराह—**वचनाऽन्तरेणेति**। 'यणो मयः' (८।२।२३)इत्यनेन। एकस्यैव शास्त्रस्य पुनः प्रवृत्तौ हि स न्याय इति भावः। ननु वचनयोर्युगपत्प्रवृत्तौ, क्रमेण वा प्रवृत्तौ, एकस्यैव विधानाऽऽपत्तिः। 'द्वे' इ[6]त्यनेन उच्चारणद्वयस्यैव विधेय-

१. क. कुण्डलितोऽयं ख. च. पाठः। ग. तु नास्त्येव।

२. इतोऽग्रे—अत एव हरिर्जयतीत्यादौ 'झलां जशि'ति न। स्थानप्रयत्नाभ्यामन्तरतमेऽन्यत्र चरितार्थत्वाच्चेत्याहुः' इति च. पाठः।

३. 'चोच्चारणे' इति पाठान्तरम्।

४. 'विशेषाऽभावात् सूत्रं व्यर्थमेवेत्यत आह' इति ख. पाठः।

५. क. कुण्डलितः ख च. पाठः। ग. नास्ति।

६. 'द्वे' इत्यस्य संख्येयपरत्वेन, शब्दद्वयस्योच्चारणसाध्यत्वे, तस्य बुद्ध्यारोहाऽऽवश्यकत्वात् 'परः' इत्यादिषष्ठ्याः कारकविभक्तित्वस्य न्याय्यत्वाच्चो-'च्चारणे' इत्यध्याहारेणोच्चारणद्वयस्यैव विधेयत्वादिति चेन्न। पूर्वत्राऽसिद्धत्वात्' इति ख. च. पाठः, क. पाठस्थाने।

त्वादिति चेन्न । पूर्वत्राऽसिद्धत्वात्[1] शास्त्रयोः क्रमेणैव प्रवृत्तिः। तत्र प्रयोग-समवाय्यन्यवर्णोच्चारणवदेकतकारोच्चारणस्य सिद्धत्वेन, एकस्यैव विधि-तात्पर्यविषयता । (तत्रैकस्य[2] द्वितीयोच्चारणस्यैकेन साधुत्वबोधनेऽपि, द्विती-येन तयोर्मध्येऽपरस्य द्वितीयस्योच्चारणस्य साधुत्वबोधे क्षत्यभावादिति दिक्) ।

(यत्तु[3] 'अनुस्वारपक्षे 'अणोऽप्रगृह्यस्य' (८।४।५७) इत्यनुनासिको न, 'अनुनासिकाऽभावपक्षे' इत्युक्तत्वादित्याहुस्तन्नेति ध्वनयन्नाह— **अण इति।** तस्याऽसिद्धत्वान्नाऽत्र तद्ग्रहणमिति भावः) ।

**पुमः** (८।३।६)—पुंसः संयोगाऽन्तलोपे कृतेऽवशिष्टभागस्येदमनुकरणम् । 'अम्परे' इति बहुव्रीहिः । **क‿पयोरिति**—'कुप्वोः' (८।३।३७) इति-सूत्रविधेययोरित्यर्थः । 'इदुदुपधस्य चाऽप्रत्ययस्य' (८।३।४१) इतिसूत्रे-ऽप्रत्ययस्येत्यस्य प्रत्ययाऽवयवभिन्नस्येत्यर्थादिति[4] भावः ।

([5]**केचित्तु** पूञ उकारादेशो म्सुन्प्रत्ययः। एवं च टिलोपार्थं डित्त्व-सामर्थ्यादि नाऽऽश्रयणीयमित्याहुः। तन्मते 'प्रत्ययभिन्नरूपविसर्गस्य' इति-सामानाऽधिकरण्येनाऽन्वयेऽपि न क्षतिः। सस्य संयोगाऽन्तलोपेऽवशिष्टो

---

१. 'पूर्वत्राऽसिद्धत्वात् परत्वाद्वा' ख. पाठः । 'पूर्वत्राऽसिद्धत्वादन्तरङ्गत्वाद्वा' इति तु सदाशिवभट्टीये पाठः ।

२. क. ग. नास्ति । ख. पाठः । एतत्स्थाने–'सा च व्यक्तिपक्षे एतद्विषयक-लक्षणद्वयवैयर्थ्यापत्तेः पूर्वप्रवृत्तेन 'आगन्तूनामन्ते निवेशः' इति न्यायबाधे मानाऽभावेन च परः, तत्साधुत्वं वा बोध्यते । उत्तरप्रवृत्तेन तु सामर्थ्यात् पूर्वः, तत्साधुत्वं वा बोध्यते । स्वकृतनिमित्तविनाशेनाऽकृतव्यूहपरिभाषा-प्रवृत्तिस्तु नेति त्रितस्य सिद्धिरिति दिक्'—इति च. पाठः ।

३. क. कुण्डलितः पाठः । ख. ग. च. नास्ति ।

४. 'भिन्नस्येत्यर्थं इति पक्षे इदम्' च. पाठः ।

५. क. ग. पुस्तके नास्ति । ख. च. पाठः ।

मकार एव प्रत्यय इति, भवत्येव प्रत्ययरूपो विसर्ग इत्याहुरिति दिक्) ।

**अव्युत्पत्तीति**—तत्पक्षे प्रकृतिप्रत्यविभागाऽभावादिति भावः। अत्र च ज्ञापकम् 'अतः कृकमि' (८।३।४६) इतिसूत्रे 'कमि' ग्रहणेनैव सिद्धे 'कंस'-ग्रहणम् ।

**षत्वेति**—(ष[1]त्वस्याऽपीत्यर्थः) । इ[2]दमनुनासिकपक्षे । अनुस्वारपक्षे तु 'कुप्वोः' (८।३।३७) इत्यस्यैव प्रवृत्तिः । तत्पक्षेऽनुस्वारव्यवधानेनोदुप-धत्वाऽभावात् ।

**पुंक्षीरमिति** । न च 'घसः किच्चे'तीरनि, कित्त्वादुपधालोपे, 'खरीति' चर्त्वस्याऽसिद्धत्वात्खय्परत्वमेव नाऽस्तीति वाच्यम्। अव्युत्पत्तिपक्षा-ऽऽश्रयणात् । व्यु[3]त्पत्तिपक्षे तु 'क्षीरं क्षरतेर्घसेर्वा' इति निरुक्तप्रामाण्यात् क्षरधातोरुपधाया ईत्वम्, अच्प्रत्ययश्चेति व्युत्पादने इ[4]दं बोध्यम् ।

**ख्याञादेशे नेति** (वा० ८।३।६)—इदं न्यायसिद्धम् । आदेशो ह्यपदेशे ख्शादिः । असिद्धप्रकरणाऽन्ते ख्शाञः शस्य यत्वं विक[5]ल्प्यते । तेन सुप्रख्येन निर्वृत्तं सौप्रख्यम् । तत्र भवः–सौप्रख्यीयः । यत्वस्याऽसिद्धत्वात् 'धन्वयोपधात्' (४।२।१२१) इति वुञ् **नेत्याकरः**। एवं च यत्वस्याऽसिद्ध-तयाऽऽम्परत्वाऽभावादस्याऽप्राप्तिरिति भावः ।

**पुंख्यानमिति**—चक्षिङो ल्युट् । ख्याञादेशः । यद्यपि 'असनयोश्च' इति निषेधात् ख्याञादेशो दुर्लभस्तथापि 'बहुलं तण्य[6]न्नगात्रवधकविचक्षणा-ऽजिराद्यर्थम्' इतिबहुलग्रहणाद्बोध्यः । अत एव ख्शादित्वप्रयोजनकथना-ऽवसरे 'रुविधिः पुंख्यानम्' इति भाष्यं सङ्गच्छते । स्वतन्त्रख्यातेस्तु आर्द्ध-धातुके प्रयोग एव नेति तिङन्ते निरूपयिष्यते ।

---

१. क. कुण्डलितः पाठः । ख नास्ति ।

२. 'इदमप्यनुनासिकपक्षे' च. पाठः ।

३. व्युत्पत्तिपक्षे तु 'पुंक्षयः' इति प्रत्युदाहरणम् । क्षीरं क्षरतेर्घसेर्वा' ख. पाठः । ४. 'इदमपि वा बोध्यम्' ख. पाठः ।

५. 'विकल्प्यते' इति ख. नास्ति ।

६. 'तण्' इति संज्ञाच्छन्दसोः संज्ञा । 'तण्यन्नवधकगात्र' इति तु मुद्रितः पाठः ।

न चैवमपि 'बहुपुम् ख्याति' इत्यत्र रुत्वं स्यात् । इष्टाऽऽपत्तेः । संहिताया अविवक्षायां तु रुत्वं न । बहुपुमिति कुलाऽन्यपदार्थो बहुव्रीहिः । उरः प्रभृतिष्वेकवचनान्तपुम्शब्दपाठान्न कबिति दिक् ।

**नश्छवि** (८।३।७)—यत्तु अप्रशानिति पर्युदासेनैव नान्तग्रहणे सिद्धे 'न' इति व्यर्थमिति । तन्न । प्रशानिति हि न 'शान तेजने' इत्यस्य रूपम् । तस्य[1] पदान्ते नलोपेन नाऽन्तत्वाऽसम्भवात् । किन्तु शाम्यतेः क्विपि रूपम् । तथा च पर्युदासेन[2] लक्षणवशसम्पन्ननकारान्त(क)मान्तानामेव स्यादतस्तदित्याहुः । (सूत्रे[3]'प्रशान्'इति प्रयोगस्तु लक्षणवशसम्पन्ननत्वकृतः । 'कृतनकारान्तस्याऽनुकरणम्' इत्यत्र तु न प्रमाणम् । 'दाधे'ति कृताऽऽकारान्ताऽनुकरणवदस्याऽपि तथात्वे तु 'न[4]' इति स्पष्टार्थम्) ।

अप्रशानिति षष्ठ्यर्थे प्रथमा बोध्या ।

**त्रायस्वेति**—'त्राहि मां पुण्डरीकाक्ष' इति तु त्रायते इति त्राः । स इवाऽऽचरेत्यर्थे कर्तृक्विबन्तादाचारक्विपि बोध्यम् । नामधातौ तु यथा 'अनुदात्तङितः' (१।३।१२) इत्यादेरप्रवृत्तिस्तथा तिङन्ते[5] निरूपयिष्यामः ।

'आर्षं परस्मैपदम्' इत्यन्ये ।

**प्रशानिति** (८।२।६४)—प्रपूर्वात् शाम्यतेः क्विप् 'अनुनासिकस्य क्वि' (६।४।१५) इति दीर्घः । 'मो नः' इति नत्वस्याऽसिद्धत्वान्न लोपो न ।

**नॄन्पे**(८।३।१०) नॄनिति द्वितीयान्ताऽनुकरणम् । षष्ठ्याः सौत्रो लुक् । 'प्रकृतिवदनुकरणम्' (प०३६) इत्यतिदेशस्याऽनित्यत्वेनाऽप्रत्ययान्तत्वादनु-

---

१. 'कृन्मेजन्तसूत्रस्थभाष्यप्रामाण्येन तस्मात् क्विब्विचोरनुत्पत्तेः । किन्तु' च. पाठः ।

२. 'पर्युदासेन मान्तस्यैव स्यात्' ख. पाठः ।

३. ख. च. पाठः । क. ग. नास्ति ।

४. 'तथात्वे तु 'न' इति चिन्त्यप्रयोजनम्'–इति च. पाठः ।

५. 'तिङन्ते' इति ख. ग. च. पाठः । क. नास्ति ।

कार्यानुकरणयोर्भेदविवक्षयाऽर्थवत्त्वाच्च प्रातिपदिकत्वम्। नलोपस्तु[1] सौत्रत्वेन वारणीयः। एतेन 'धाद्' इति व्याख्यातम्। पकारोपरि अकार उच्चारणाऽर्थः। तेन 'नॄः पुनाती'त्यपि।

'उभयथक्षु'' (८।३।८) इत्यत उभयथेत्यनुवृत्तेराह—रुः **स्याद्वेति**।

[2]**कुप्वोः** (८।३।३७)—आदेशयोरुत्तरभागे कपावुच्चारणाऽर्थौ। सूत्रे जिह्वामूलीयस्य खर्त्वात् 'खरवसानयोः' (८।३।१५) इति विसर्गः। तस्य शर्त्वात् खर्परे शरीतिविसर्गलोपो वैकल्पिकत्वान्न। सत्वं तु न। 'वा शरि' (८।३।३६) इत्यनेन विसर्गप्रवृत्तेः।

**चाद्विसर्ग** इति[3]— 'शर्परे' (८।३।३५) इति सूत्रात् तदनुकर्षश्चेनेति भावः।

**येन नेति**–'येन नाऽप्राप्ते यो विधिरारभ्यते स तस्य बाधकः (प०५९) इति न्यायेनेत्यर्थः। 'येन नाऽप्राप्ते' इत्यस्य यत्कर्तृकाऽवश्यप्राप्तिरित्यर्थः। नञ्द्वयस्य प्रकृताऽर्थदार्ढ्यबोधकत्वात्। 'प्राप्ते' इति भावे क्तः। तदप्राप्ति-योग्ये विषयेऽचारितार्थ्यं हि बाधकत्वे बीजम्।

**वासः क्षौममिति**—न चाऽस्य विसर्जनीयस्य जिह्वामूलीयोपध्मा-नीयौ दुर्वारौ[4]।

---

१. क. ख. पाठोऽयम्। 'नलोपस्तु अतिदेशप्रवृत्त्या, सौत्रत्वेन वा वारणीयः' इति च. पाठः। ग. पुस्तके तु 'नलोपस्तु अतिदेशप्रवृत्त्या सौत्रत्वेन वारणीयः' इति पाठः।

२. इत आरभ्य 'विसर्गप्रवृत्तेः' इत्यन्तोऽयं मनोरमापाठ इति क. कुण्डलितः। ख. ग. च तु वर्त्तते।

३. इतोऽग्रे 'अनेन हि स्थानिभूतविसर्गः पक्षे स्थाप्यते इति बोध्यम्' इति ग. च. पाठः।

४. 'जिह्वामूलीयोपध्मानीयौ दुर्वारौ। अर्थाऽधिकारेण खरवसानयोरिति सूत्र-मात्रविहितस्यैव तद्विधानात्। अत एव 'शर्परे न' इति न सूत्रितम्। कुप्वोरित्यत्राऽपि चेन 'सत्वं न' इत्यनुकृष्यते। तत्सामर्थ्याच्च पक्षे

किञ्चाऽस्यैव तौ स्याताम् । 'खरवसानयोः' (८।३।१५) इति विहितस्य तु एतयोरसिद्धत्वात् सत्वमेव स्यादिति वाच्यम् ।

'कुप्वोः' इति योगं विभज्य शर्परकुप्वोर्विसर्गस्य विसर्गो जिह्वामूलीयोपध्मानीयाऽपवादः । ततः '≍क≍पौ च' । कुप्वोरित्येव । शर्परयोरिति निवृत्तम् । यद्वा 'शर्परे' (८।३।३५) इति सूत्रं कुप्वोरित्यत्रानुवर्त्य शर्परयोः कुप्वोः≍क≍पाऽपवादो विसर्ग इति वाक्यभेदेन व्याख्यानेनाऽदोषात् । स्पष्टं चेदं भाष्ये । (यद्वाऽत्राऽपि 'शर्परे विसर्जनीयः' (८।३।३५) इत्यनुवृत्त्या न दोषः) ।

**कानाम्रेडिते** (८।३।१२)—'कान् कान्' इति वक्तव्ये 'आम्रेडित' ग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यात्, इह मा भूत्, 'कान्कान्पश्यसि' इति । कान्कुत्सितान् पश्यसीत्यर्थः । एकः प्रश्नेऽपरः क्षेपे[४] ।

वार्त्तिके कान्ग्रहणमकर्त्तुं शक्यमित्याशयवानाह–**यद्वेति** । अनया दिशा 'सम्'ग्रहणमपि त्यक्तुं शक्यम् । 'पुम्'ग्रहणं त्वावश्यकमेव । अनुनासिकपक्षे इणः परत्वेन षत्वप्रसङ्गादित्याहुः ।

**कस्कादिषु च** (८।३।४८)—यद्यपि 'अतः कृ' (८।३।४६) इत्युत्तरम् 'इणः षः' (८।३।३९) इति निवृत्तम्, 'अतः' इति दर्शनात्, तथाऽपि कस्का-

---

विसर्गसिद्धिरिति । तथा हि सति सत्वनिषेधेऽपि, विसर्जनीयस्य तत्सूत्रविहिततया स्यातामेव तौ । 'विसर्जनीय'पदे तु,—तद्विधानद्वारैव सत्वाऽभावबोधनान्न तन्मात्रविहितत्वम् । 'शर्परे न' ति सूत्रं तु 'कः त्सरुः' इत्यादौ चरितार्थम्' इति क. कुण्डलितः, ख. ग. च. पाठः ।

१. 'किञ्चास्यैव' इत्यारभ्य 'स्यादिति वाच्यम्' इत्यन्तः क. पाठः ख. ग. च. नास्ति ।

२. 'कुप्वोरिति' इत्यत आरभ्य 'स्पष्टं चेदं भाष्ये' इत्यन्तः क. पाठः । ख. ग. च. नास्ति ।

३. अयं केवलख. पाठः ।

४. इतोऽग्रे 'शर्परे न' इतिसूत्रन्तु 'कः त्सरु'रित्यादौ चरितार्थम्' इति च. पुस्तकेऽधिकोऽत्र पाठः । ख. पुस्तके तु पूर्वत्राऽयं पाठः ।

दिषु विशिष्टपाठाद्यथापठितविसर्गस्थानिकाः साधव इत्यर्थः । तत्फलितमाह-**एष्विण इति ।**

**⌣क⌣पयोरपवाद** इति[1] । तद्विधायकसूत्राऽपवाद इत्यर्थः[2] । तेन[3] पक्षे तयोरभावे चारितार्थ्यमिति न शङ्क्यम् ।

**कांस्कानिति**—'नित्यवीप्सयोः' (८।१।४) इति द्वित्वम् ।

**कौतस्कुत इति**—पञ्चम्यन्तात् स्वार्थे तसिल्विधानेन, अव्ययादुत्सर्गतः प्रथमैकवचनोत्पादनेन च, पञ्चम्यन्तत्वाऽभावेऽपि गणपाठसामर्थ्यादिव 'तत आगत' इत्यर्थेऽण् । अत एव त्यब् न । 'अव्ययानां भमात्रे'(४।२।१०४) इति टिलोपः । ([4]**सर्पिष्कुण्डिकेति** । 'नित्य समासे' (८।३।४५) इत्येव सिद्धे इह पाठस्य फलं तु वक्ष्यते) ।

**संहितायामिति**—यद्यपि वर्णव्यवाये 'तस्मिन्निति' (१।१।६६) परिभाषया सिद्धम् । व[5]र्णशून्यकालव्यवाये तु[6] कालव्यवधानेनाऽनुष्ठिताङ्गकज्योतिष्टोमाऽऽदीनां फलाऽजनकत्ववत् कालव्यवहिततयोच्चारितव[7]र्णानां

1. इतोऽग्रे–'न च कुप्वोरिति विहितपाक्षिकविसर्गेऽस्य चारितार्थ्यात् कथमपवादत्वमिति वाच्यम् । अर्थाधिकारेण खरवसानयोरितिसूत्रविहितविसर्गस्यैव सत्त्वाद्यङ्गीकारात् । एवञ्च 'सोऽपदादौ (८।३।३८) इत्याद्यपि ⌣क⌣पयोरपवाद एव । एवञ्च '⌣क⌣पयोरपवादः' इत्युपलक्षणम् । तद्विहितविसर्गस्याऽप्यपवाद इति बोध्यम्' इति ग. च. पाठः ।
2. 'तद्विधायक' इत्यारभ्य 'न शङ्क्यम्' इत्यन्तः पाठो ग. च. नास्ति ।
3. 'तेन तयोरभावे पक्षे चारितार्थ्यम्' इति ख. पाठः ।
4. क. कुण्डलितोऽयं पाठः । ख. ग. च. पुस्तकेष्वप्युपलभ्यते ।
5. 'वर्णशून्यकाले तु कालव्यवधाने' इति ग. च. पाठः ।
6. 'तु' इति क. नास्ति ।
7. 'उच्चरितवर्णकशब्दानां भ्रमापादकानाम्' इति ख. पाठः । ग. च. तु–'उच्चारितानां भ्रमापादकानाम्' इति पाठः ।

शब्दानां भ्रमाऽऽपादकानाम् 'एकः शब्दः सम्यग्ज्ञातः' इत्यादिभिः फलजनकत्वबोधने मानाऽभावेन, तादृशशब्दस्याऽसाधुशब्दत्वाच्छास्त्राऽप्रवृत्तौ, संहिताऽधिकारो व्यर्थः, तथाऽपि कालव्यवेतस्याऽपि साधुत्वबोधनद्वारा तद्व्यावृत्त्या सार्थक्यं बोध्यम् ।

अत एवाऽवग्रहाऽऽदौ संहिताऽधिकारबहिर्भूताऽऽनङ्सिद्धिः। अत एव निर्दिष्टपरिभाषया वर्णशून्यकालव्यवायो न व्यावर्त्यते।

कालव्यवायश्च संहितयोच्चारणे सर्वत्राऽर्द्धमात्राकालव्यवायस्य सत्त्वेन तदपेक्षयाऽधिकोऽर्द्धमात्राकालव्यवाय एव। अत एव मुहूर्त्तादिव्यवधाने नाऽर्थबोधो, नाऽपि साधुत्वमित्याहुः।

**केचित्तु** 'निर्दिष्टग्रहणेन[1] वर्णशून्यकालोऽपि व्यावर्त्यते। अवग्रहे तु सम्प्रदाय एव शरणमिति तत्राऽसाधुप्रयोगेऽपि न दोष इतीदं सूत्रं व्यर्थमेव। ध्वनितं चेदं भाष्ये' इत्याहुः।

**छे च** (६।१।७३)—छकारोपरि अकार उच्चारणाऽर्थः। तेन 'अच्छिन्नम्' इत्यादौ तुक् सिद्धिः। 'ह्रस्वस्य पिति' (६।१।७१) इत्यतो ह्रस्वस्येति, तुगिति च वर्त्तते।

**जश्त्वेन द इति**—'स्वच्छ'शब्दस्य निर्मले रूढस्यापि स्वशब्दे उपपदे छ्यतेः कप्रत्ययेन निष्पन्नत्वात् तत्राऽपि पदान्तत्वमस्त्येव। स्पष्टं **चेदममरटिप्पणे**

एवमच्छशब्दोऽपि नञ्पूर्वाच्छ्यतेः के, छादयतेर्डे वा निष्पन्न इति तत्रैव स्पष्टम्।

**आङ्माङो** (६।१।७४)—आङा साहचर्यान्माङ्व्ययमेव गृह्यते। तेन 'माङ् माने' इतिधातोः क्विबन्ताच्छे परे नित्यस्तुग्नेत्याहुः।

**सेनासुरेति**[2] (२।४।२५)—सन्निपातपरिभाषया छस्य चर्त्वाऽप्रवृत्तौ,

---

१. 'ग्रहणेन निर्दिष्टकालोऽपि' च. पुस्तकपाठः।

२. च. पुस्तके तु इतोऽग्रे–'चद्वयं श्रूयेतेति भावः। महाप्राण-छकारोच्चारणापेक्षया चद्वयोच्चारणं लघीयो मन्यते। ध्वनितं चेदं 'तस्मिन्निति-

छकारोपरि चकारः श्रूयेतेति भावः। असिद्धत्वविषयेऽपि तत्परिभाषाप्रवृत्तेरुक्तत्वात्। ध्वनितं चेदं 'तस्मिन्निति निर्दिष्टे' (१।१।६६) इत्यत्र कैयटे। वैकल्पिकेष्वपि भावाऽनुष्ठानस्यैवौचित्यं फलाऽऽधिक्यायेत्याहुः। तथा च इत एव ज्ञापकाद् व्याख्यानाद्[1]वा षष्ठ्यर्थे इयं पञ्चमीति बोध्यम्।

अत एव 'एओङ्',सूत्रे भाष्ये—'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' इतिपक्षे 'आलूय' इत्यादौ तुकमाशङ्क्य'छे च' (६।१।७३) इत्येव सिद्धे 'दीर्घात्' (६।१।७५) इति तुग्विधानं ज्ञापकम्–'न दीर्घाऽवयवस्य ह्रस्वत्वप्रयुक्तस्तुक्' इतीत्युक्तं सङ्गच्छते।

**चेच्छिद्यते** इति—तुको'हलादिः शेषः' (७।४।६०) तु न। अभ्याससंज्ञाप्रवृत्तिकाले स्थानिद्वारा, साक्षाद्वा सन्निहितानां हलामेव तेन निवृत्तेः। अत एव 'नुगतोऽनुनासिकान्तस्य' (७।४।८५) इत्यादि चरितार्थम्।

**पदान्ताद्वा** (६।१।७६)—यद्यपि प्रकृतसूत्रभाष्ये, 'इको यणचि' (६।१।७७) इति सूत्रभाष्ये च 'दीर्घात्पदान्ताद्वा' इत्येकं सूत्रमिति लभ्यते, तथाऽपि 'एओङैऔजि'ति सूत्रे भाष्ये स्पष्टतयैव योगविभागः प्रदर्शित इति बोध्यम्। 'पदात्' (८।१।९७) इत्युक्त्यैव दीर्घान्तात्पदादित्यर्थेनैव सिद्धावन्तग्रहणं पदान्तविधिरयं यथा स्यान्न तु पदविधिरिति। तेन समर्थपरिभाषाऽनुपस्थानात् 'तिष्ठतु कुमारी, च्छत्रं देवदत्तस्य' इत्यादावपि विकल्पो भवत्येवेति **कैयटादयः**। समर्थसूत्रस्थभाष्यस्वरसोऽप्येवमेव।

इति हल्सन्धिः।



---

निर्दिष्टे' इत्यत्र कैयटे। वैकल्पिकेष्वपि भावानुष्ठानस्यैवौचित्यम्, फलाधिक्यायेत्यप्याहुः। यत्तु सन्निपातपरिभाषया छस्य चर्त्वाऽप्रवृत्तौ छकारोपरि चकारः श्रूयेतेति। तन्न। चर्त्वस्याऽसिद्धतया तत्परिभाषाया अप्रवृत्तेः। तथा च इत एव ज्ञापकात्, व्याख्यानाद्वा षष्ठ्यर्थे इयं पञ्चमीति बोध्यम्' इत्येवं पाठो दृश्यते।

1. 'व्याख्यानाच्च' ख. पाठः।

## अथ विसर्गसन्धिः

**विसर्जनीयस्य** ( ८।३।३४ )—प्रकरणाऽनुरोधेन प्राग्व्याख्यातमपि स्मारितम् ।

**शर्परे** (८।३।३५)—**'शर्परे'**[1] इति बहुव्रीहिः। विशेष्यं चाऽव्यव्यवधिमतोः साजात्याद् विसर्जनीयाऽऽक्षिप्तः खरेव, न त्ववसानम् । परग्रहणं तु स्पष्टतया बहुव्रीहिबोधनद्वारा विपरीताऽर्थवारणार्थम् ।

विसर्गस्य विसर्गविधौ फलाऽभावादाह—**नत्वन्यदिति**[2]। अन्यदेव विवृणोति—**इहेति**। (न[3]चाऽनन्तरत्वाद् येन नाप्राप्तिन्यायेन 'कुप्वोः' (८।३।३७) इत्य[4]सिद्धत्वाच्च सत्वस्यैवाऽयमपवादः स्यादिति वाच्यम् । इष्टाऽऽपत्तेः । जिह्वामूलीयस्त्वस्याऽर्थाधिकारान्नेत्यु[5]क्तम्) ।

**त्रैरूप्यमिति**—विकल्पद्वयसामर्थ्यादिति भावः ।

**सोऽप** (८।३।३८)—न[6]न्वपदे इत्युक्त्यैव 'कुप्वो' (८।३।३७) इत्यनुवृत्त्या 'यस्मिन् विधिः' (प० ३३) इति परिभाषया च 'कवर्गपवर्गादा[7]वपदे' इत्येव सिद्धे आदिग्रहणं व्यर्थमिति चेन्न। 'अपदस्यैवादिः' इत्यर्थलाभार्थं तत्सत्वात् । तेन उरः कायतीति विग्रहे सुबुत्पत्तेः पूर्वं समासेऽपि उरः

---

१. 'शर्परे । 'शर्परे ने'ति तु वक्तुमशक्यमिति कुप्वोरिति सूत्रे निरूपितम्' इति ग. च. पाठः । क. ख. नास्ति ।

२. 'अन्यदिति' इत्येव ख. ग. च. पाठः ।

३. क. कुण्डलितः, ख. ग. च. पाठः ।

४. 'कुप्वोरित्यस्यासिद्धत्वात्' ख. पाठः ।

५. इतोऽग्रे—'जिह्वामूलीयश्चे'ति चेन 'सोऽपदादौ' इत्यादेर्ग्रहणम् । 'सोऽपदादौ (८।३।३८) इत्याद्योः पाशकल्पककाम्येष्वेव प्रवृत्त्या खरवसानयोरिति विसर्गे प्रवृत्तिरावश्यकीत्यर्थाधिकार उचित इति दिक्' इति ग. च. पाठः ।

६. 'नन्वपदे' इत्यारभ्य 'असम्भवादिति तदाशयः' इत्यन्तः क. कुण्डलितः ख. पाठः ।

७. 'कवर्गपवर्गादावपदत्वयोग्यप्रातिपदिकानवयवस्यैव ग्रहणात्' इत्येवं ख. पाठः ।

केणेत्यादौ न सत्वम् । आदिग्रहणसामर्थ्येन, तल्लब्धावधारणेन च पदत्व-योग्यप्रातिपदिकाऽनवयवस्यैव ग्रहणात्[1] । एतेन[2] 'सुबन्तेन समासेऽपि 'उत्तर-पदत्वे च' (वा० ८।२।६८) इति प्रत्ययलक्षणनिषेधेनाऽपवादत्वादुरःकेणेति सत्वरहितप्रयोगो भाष्योक्तोऽसङ्गतः' इत्यपास्तम् । ([3]उत्तरपदस्य कार्यित्व एव तन्निषेधात्) ।

तदुक्तं वृत्तौ—'पाशकल्पककाम्येषु' (वा० ८।३।३८) इति । 'सम्भ-वत्प्रदर्शनमिदम्, न तु परिगणनम् । अन्येषामसम्भवात्' इति **पदमञ्जर्यां** च । अन्यस्य प्रत्ययस्याऽसम्भवादिति तदाशयः । [4]अत एव 'इदुदुपधस्य' (८।३।४१) इत्यस्य 'निष्कृतम्' इत्युदाहरणं भाष्ये दत्तम् । अन्यथा तत्राऽपि सुबुत्पत्तेः पूर्वं समासात् 'उत्तरपदत्वे च' (८।२।६८) इति निषेधा-द्वाऽपदादित्वेन इदुदुपधस्येत्यस्याऽसिद्धत्वात् 'इणः ष' (८।३।३९) इत्येवो-चितं स्यादिति दिक् ।

**कुप्वोरिति**—'अपदादौ' इति द्विवचनविषये सौत्रत्वादेकवचनम् । 'प्रत्येकसम्बन्धादेकवचनम्' इति ग्रन्थानामप्ययमेवाऽऽशयः । अन्यथा सह-विवक्षायां द्वन्द्वविधानेन, साहित्यस्यैवाऽन्वयिताऽवच्छेदकत्वेनैकाऽर्थीभाव-सत्त्वेन च निष्कृष्य प्रत्येकं सम्बन्धो दुर्घट इति तेषामसङ्गतिः स्पष्टैव । अत एव 'गच्छति देवदत्तयज्ञदत्तौ' इत्यादेरसाधुत्वमाहुः ।

([5]'खरी'त्यनुवृत्त्येकवचनस्य सामञ्जस्येऽपि, मण्डूकप्लुतया तदनुवर्त्त्यं, सन्निहितं च त्याज्यमिति क्लेशः । अतिशयिता पूः 'पूस्तरा' इत्यादौ 'इणः षः' (८।३।३९) इति षत्वाऽऽपत्तेश्च । 'पयः[6]शः पिब' इत्यादौ दोषाच्च । [7]कुप्वोरित्यनुव[8]र्त्त्यं 'कुप्वोर्विद्यमाने खरि' इति व्या[9]ख्याने तु सुतरां क्लेशः ।

---

१. 'प्रातिपदिक-धात्वनवयवस्यैव ग्रहणात्' ग च. पाठः ।

२. 'एतेन' इत्यारभ्य 'इत्यपास्तम्' इत्यन्तः ख. ग. च. पाठः । क नास्ति ।

३. क. ग. नास्ति । ख. च. पाठः ।

४. 'अत एव' इत्यारभ्य 'इति दिक्' इत्यन्तः ख. ग. च. पाठः । क. नास्ति ।

५. क. कुण्डलितोऽयं ख. ग. च. पाठः ।

६. 'पयःशः' इति शस्प्रत्ययान्तः । अत्र दोषश्च 'सोपदादा'विति सत्त्वा-पत्तिरूपो बोध्यः । ७. 'न च कुप्वोरित्यनुवर्त्त्यम्' ग. च. पाठः ।

८. 'कुप्वोरित्यनुवर्त्त्यं कुप्वन्तर्गते=कुप्वोर्विद्यमाने' इति ग. पाठः ।

९. 'व्याख्यानान्न दोषः । तर्हि क्लेश एव दोषः' इति ग. च. पाठः ।

उत्तरत्र[1] तु तस्य नोपयोगः, खरं विना विसर्गस्य दुर्लभत्वात्[2])।

**अनव्ययस्येति** (वा० ८।३।३८)—'उपपयस्काम्यति' इत्यादौ तु सत्वं भवन्त्येव। 'अव्ययीभावस्याऽव्ययत्वे लुङ्मुखस्वरोपचाराः' इति परिगणनात्। 'उपचार'शब्देन[3] 'अतः कृकमि' (८।३।४६) इति सत्वमेव गृह्यते। अत एव भाष्ये 'उपचार'ग्रहणम् 'अतः कृ' इति सूत्रे 'अनुत्तरपदस्थस्य (८।३।४५) इति सम्बन्धेन प्रत्याख्यातमिति वदन्ति[4]।

---

१. 'उत्तरत्रानुवृत्तेस्तु नोपयोगः' ग. पाठः।

२. 'दुर्लभतया तदनुवृत्तेरुपयोगाऽभावादिति दिक्' इति ग. च. पाठः।

३. 'शब्देन च' ख. ग च. पाठः।

४. इतोऽग्रे—'इदमुत्तरत्र न सम्बध्यते। अत एव 'अत्र प्रकरणे सत्वमेव विधेयम्। तस्य विसर्जनीयस्थानिकसस्य 'इणः षः' इत्यनेन षत्वमितिभाष्योक्तपक्षाऽन्तरं सङ्गच्छते। अस्योत्तरत्र सम्बन्धे तु 'द्विस्त्री' (८।२।४२) इत्यनेन सुजन्तस्य सत्वे कृते, षत्वाऽनापत्त्या तदसङ्गतिः स्पष्टैव। विसर्जनीयस्थानिकेति विशेषणात् 'पुंस्पुत्रः' इत्यादौ न दोषः। तत्र हि मस्थानिकः स इत्युक्तं प्राक्। उत्तरत्र विसर्जनीयपदस्य मण्डूकानुवृत्तिक्लेशश्च न।

'काम्ये रोः' (वा० ८।३।३८) इति तु अत्र पक्षे 'इणः षः' इत्यत्र न सम्बध्यते। तेन दुष्काम्यतीत्यादौ षत्वसिद्धिः। इदुदुपधस्येत्यादीनामेतद्दृष्ट्याऽसिद्धत्वं तु न। तथात्वे सोपदादाविति सत्वे एवाऽस्य प्रवृत्तेः फलितत्वेनाऽपदादौ विसर्जनीयस्य षत्वविधानेनैव सिद्धेः 'स' इत्यस्य विभक्तिविपरिणामेन स्थानित्वकल्पनस्य वैयर्थ्यापत्तेः।

न चोच्चैःकमित्यादौ 'इणः षः' इति षत्व दुर्वारम्, भाष्यमते तु नेति कथमस्योपपत्तिरिति वाच्यम्। 'इणः ष.' इति सूत्रे पूर्वेणैव णकारेण इण्ग्रहाऽङ्गीकारेणाऽक्षतेः। अत तव 'इचः षः' इति न सूत्रितम्। 'इणः' इति प्रत्याहारग्रहणं तु लाघवार्थमेव। प्रकृतपक्षे तु 'काम्ये रोः' (वा० ८।३।३८) इति सम्बध्यते एव। गीः काम्यतीति विसर्गसहितभाष्यो-

**प्रातःकल्पमिति**—नन्वधिकरणशक्तिप्रधानस्याऽपि 'प्रातः'शब्दादेरीषदसमाप्त्याद्यन्वयाय 'दोषाभूतमहः' इत्यादौ दोषादेरिव शक्तिमत्परत्वमवश्याऽभ्युपेयम्। एवं च सत्त्ववाचिनोऽनव्ययत्वात् कथं निषेध इति चेन्न। सामर्थ्येन भूतपूर्वाऽव्ययत्वमादाय निषेधप्रवृत्तेः[1]।

**गीःकाम्यतीति**–इह 'इणः षः' (८।३।३९) इति, 'सोऽपदादौ' (८।३।३८) इति च न। अत्र[2] पाठात्, तत्राऽनुवृत्तेश्च। एवं 'वाः काम्यति' इत्यत्राऽपि न।

**इणः षः** (८।३।३९) पूर्वस्याऽपवादः। 'इदुदुपधस्य' (८।३।४१) इत्यस्यासिद्धत्वात् 'सर्पिष्पाशम्' इत्यादौ सत्वनिवृत्त्यर्थं 'गीष्पाशम्' 'दोष्कल्पम्' इत्याद्यर्थं चेदम्।

इदं सूत्रम् 'सः' (८।३।३८) इति च द्वयमप्युत्तरत्राऽनुवर्त्तते तेन यथासम्भवमिणः परस्य षः, अन्यस्य स इति बोध्यम्। अत्र 'अनव्ययस्य' इति, 'अपदादौ' इति, 'काम्ये' इति च सम्बद्ध्यते। तेन 'उच्चैःकल्पम्' 'दोः पश्य', 'गीःकाम्यति'[3] इत्यादौ न षत्वम्।

अत एव 'अत्र प्रकरणे सर्वत्र सत्वमेव विधेयम्। इण उत्तरस्य विसर्गस्थानिकसस्याऽनेन षत्वम्' इति भाष्योक्तं पक्षाऽन्तरं सङ्गच्छते। तत्पक्षे ह्येषु सकाराऽभावात् षत्वाऽप्रवृत्तिः स्पष्टैव। अत्र पक्षे—उक्तं त्रयमप्यत्र न सम्बद्ध्यते। तेन 'द्विष्करोति' 'चतुष्काम्यति' इत्यादौ षत्वसिद्धिः। विसर्जनीयस्थानिकेत्युक्तेः 'पुंस्पुत्रः' इत्यादौ न दोषः। तत्र हि 'म'स्थानिकः सकारः। विसर्गस्य क्लृप्तस्थानित्वत्यागेन सस्य स्थानित्वकल्पन-

---

दाहरणात्। तद् ध्वनयन्नुदाहरति—प्रातः कल्पमितीति। गीः काम्यतीति च।' इति ग. च. पुस्तकपाठः।

१. 'निषेधप्रवृत्तिस्वीकारात्' इति ग. च. पाठः।

२. अत्र=पोपदादावित्यत्र। पाठात्='काम्ये रोरेव' (वा० ८।३।३८) इत्यस्य पाठात्। तत्र='इणः षः' इत्यत्र च। अनुवृत्तेः='काम्ये रोरेव' इत्यस्यानुवृत्तेरित्यर्थः।

३. 'दोः काम्यति' ग. पाठः।

सामर्थ्यादितद्दृष्टयोत्तरेषामसिद्धत्वमपि न। किञ्च[1]षेण: ष इतिसूत्रस्य 'इडाया वा' (८।३।५४) इत्युत्तरमपि कर्त्तुं शक्यत्वान्न दोष इत्यन्यत्र विस्तरः।

**नमस्पुरसोः** (८।३।४०)—इतः उत्तरम् 'अपदादौ' इति न सम्बद्धयते। पुरसो गत्या विशेषणात्, व्याख्यानाच्च। [2]**साक्षात्प्रभृतित्वादिति**–ऊर्यादित्वाद् गतित्वम्। स्वरादिपठितस्य तु गतित्वाऽभावः। तेन साक्षात्प्रभृतिषु च्व्यर्थवचनेऽपि न क्षतिरित्यन्ये। **पुरः प्रष्टव्या** इति—'पॄ पालनपूरणयोः'। 'भ्राजभास' (३।२।१७७) इत्यादिना क्विप्। तदन्ताज्जस् जसन्ततां स्फुटीकर्त्तुं—'**पूः**' '**पुरौ**' इत्युपन्यस्तम्।

**इदुदुपधस्य**—(८।३।४१) [3]**इकारोकारोपधस्ये**ति। तदुपधकसमुदायाऽवयवस्येत्यर्थः। 'अलोन्त्यात्' (१।१।६५) इतिसूत्रेऽवयववाचकाऽन्त्यशब्देन समुदायाऽऽक्षेपादुपधात्वस्य समुदायनिरूपितत्वेन विसर्गस्य समानाधिकरणं विशेषणम्' इत्यसङ्गतम्। 'विसर्गाऽन्तस्येदुदुपधस्य पद[4]स्येत्यर्थः' इत्यन्ये।

'अप्रत्ययस्य' इति च लाघवात् पर्युदासः। तत्र 'प्रत्यय'पदं तत्सम्ब[5]न्धिपरम्। तेन 'प्रत्ययसम्ब[6]न्धिभिन्नस्य' इत्यर्थः। अत एव 'कविभिः कृतम्' इत्यादौ न दोषः। ([7]'अग्निः करोति' इत्यादौ व्यपदेशिवद्भावेन तत्त्वं बोध्यम्)।

प्रत्यय[8]भिन्नस्य विसर्गस्येत्यर्थस्तु न। प्रत्ययरूपविसर्गाऽप्रसिद्धेः।

---

१. 'किञ्च' इत्यारभ्य 'न दोषः' इत्यन्तः पाठो ग. नास्ति।

२. इत आरभ्य 'न क्षतिरित्यन्ये' इत्यन्तः पाठो ग. नास्ति।

३. मनोरमाशब्दरत्नस्थत्वात् 'इत्यन्ये' इत्यन्तोऽयं ख. पाठः क. कुण्डलितः। ग. च. नास्ति।

४. 'पदस्येति क्वचिन्नास्ति। लघुशब्दरत्ने तु वर्त्तते एव। 'अन्ये' इत्यरुचिस्तु 'पदाधिकारस्य विशेषणत्वम्' इत्युक्तभाष्यविरोधात्।

५. 'तदवयवपरम्' ख. ग. च. पाठः। ६. 'प्रत्ययावयव' ख. ग. च. पाठः।

७. ख. पाठः। क. ग. च. नास्ति।

८. 'प्रत्ययभिन्नस्य' इत्यारभ्य 'अलाभात्' इत्यन्तः क. पाठः।

'भोभगो' (८।३।१७) इतिसूत्रभाष्यसंमतवक्ष्यमाणरीत्या रेफस्थानिकविसर्गे तत्स्थान्यल्रूपरेफवृत्तिधर्मस्य प्रत्ययत्वस्य स्थान्यल्धर्मत्वेन विसर्गे स्थानिवद्भावेनाऽलाभात्। एतेन[1] 'प्रत्ययभिन्नस्य विसर्गस्य' इत्यर्थः। सामानाधिकरण्यस्य न्याय्यत्वात्। 'अग्निः करोति' इत्यादौ विसर्गस्य स्थानिवद्भावेन प्रत्ययत्वाद् व्यावर्त्यं प्रसिद्धमेव। अयमेव च निषेधः स्थानिवत्सूत्रं प्रति त्रिपाद्यसिद्धत्वाऽभावे लिङ्गम्। अत एव 'अग्निः' इत्यादौ रोर्विसर्गः। अन्यथा रोरसुप्त्वेन पदत्वाऽप्रवृत्त्या, अपदान्तत्वान्न स्यात्। विसर्गविधिस्तु 'पुनर्' इत्यादौ च[2]रिताऽर्थः, इति व्याख्याऽऽदर्शाद्युक्तमपास्तम्।

'अग्निःशब्द-पुनःशब्दयोर्वैषम्यस्य दुर्वचत्वाच्च। 'अग्निस्'इत्यवस्थायां प्रवृत्तपदत्वस्य, सुबन्तत्वस्य वा स्थानिवत्त्वेनैकदेशविकृत (पृ० ३७)-न्यायेन वा रान्ते आनयनम्, पुनरित्यत्रापि 'पुनस्' इत्यवस्थायां प्रवृत्तपदत्वादेरुक्तन्यायेन पुनरित्यत्राऽऽनयनमिति किं वैषम्यम्?।

'तत्राऽऽदेशस्य, अतिदेशलभ्यकार्यस्य चाऽसिद्धत्वम्, अत्र च द्वितीयस्यैव' इति विशेषस्त्वकिञ्चित्करः। सर्वथाऽप्यतिदेशा[3]ऽपेक्षणात्। (त्रिपाद्या[4]मतिदेशप्रवृत्तौ 'प्रत्यय'इत्यादिनिर्देशा एव लिङ्गम्)। भोभ[5]गो-इतिसूत्रवक्ष्यमाणरीत्याऽल्विधित्वेनाऽतिदेशाऽप्रवृत्तेश्च। लौकि[6]कैकदेशविकृतन्यायेन, रुत्वादीनामसिद्धत्वेन च पदत्वसिद्धया ज्ञापका[7]ऽनुपयोगाच्च।

---

१. शब्दरत्ने धृतत्वात् 'ज्ञापकानुपयोगाच्च' इत्यन्तः क. कुण्डलितोऽयं पाठः।

२. 'चरितार्थ इत्यपास्तम्' इति ख. ग. च. पाठः।

३. 'अतिदेशाऽप्राप्तेः'—ख. ग. च. पाठः। क. नास्ति।

४. ख. पाठः। क. ग. च. नास्ति।

५. 'भोभगो' इत्यारभ्य 'ज्ञापकानुपयोगाच्च' इत्यन्तः पाठः ख. च. नास्ति। क. पाठोऽयम्।

६. 'लौकिके'ति ग. पाठः। शब्दरत्नटीकायां भावप्रकाशेऽपि च दृश्यते।

७. 'तदनुपयोगाच्च' क. पाठः।

किञ्च 'असोः' इति वक्तव्ये 'अप्रत्यय'ग्रहणसामर्थ्यादस्मदुक्तार्थ एव न्याय्यः। अत एव 'नित्यं समासे' (८।३।४५) इति सूत्रे-'अथाऽव्युत्पन्नं प्रातिपदिकं'सर्पि'रादि, ततो नित्ये प्राप्ते, 'इसुसोः सामर्थ्ये' (८।३।४४) इति विभाषाऽऽरभ्यते' इत्युक्तं भाष्ये। 'प्रत्ययत्वपर्याप्त्यधिकरणभिन्नस्य' इत्यर्थे तु व्युत्पत्तिपक्षेऽपि नित्यषत्वप्राप्तेर्भाष्याऽसङ्गतिः स्पष्टैव। अत्र भाष्ये 'अथ'इति–यद्यर्थे। तेनाऽरुचिर्बोधिता। तद्बीजन्तु 'सर्पिऽषा' 'धनुषा' इत्यादौ षत्वसिद्धये इसुसंशे व्युत्पत्तिपक्ष एव आदरणीयो न त्वयमिति। एवं च इसुसंशे नित्यषत्वाऽप्राप्तिरेवेति। किञ्च[२] 'प्रत्ययभिन्नविसर्गस्य' इत्यर्थे 'नित्यं समासे' इति सूत्रेऽनुत्तरपदस्येत्यस्य वैयर्थ्यम्। 'परमसर्पिः कुण्डिका' इत्यादावनेन नित्यषत्वस्यैव दुर्वारत्वात्। यदि तु तत्सामर्थ्यादुत्तरपदस्थे एतदप्रवृत्तिः कल्प्यते, तर्हि उक्तार्थतात्पर्यग्राहकतैवोचिता। एवं कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठोऽप्येतदर्थज्ञापकः। परेण तु अव्यपेक्षायामनेन षत्व-सिद्धेर्व्यपेक्षायामिसुसोरितिवैकल्पिक षत्वबाधनार्थत्वं वाच्यमिति गौरवम्।

नन्वेवं 'मातुः कार्यम्' इत्यादौ षत्वं स्यात्, सकारसन्निधिकालेऽकारेण नैव लब्धा प्रत्ययसंज्ञा, समुदायनिवेशनीयत्वात् तस्या इति, तदादेशस्योरः प्रत्ययत्वाऽभावात्। यश्चोत्त्वे कृतेऽवशिष्टः सकारः प्रत्ययसंज्ञकः, स तु लुप्त एव। नच 'अन्तादिवच्च' (६।१।८५) इत्यस्य 'पूर्वस्य, परस्य समुदायस्या-

---

१. इतोऽग्रे–'लक्षणैषा स्वारसिक्येव[1]। अत एव 'प्रत्ययलोप'सूत्रे 'प्रत्ययस्ये'–त्यनुवृत्त्यैव सिद्धे आद्यप्रत्ययग्रहणम् 'आघ्नीये'त्यादाववयवलोपेऽनुनासिक-लोपो मा भूदित्यर्थ'मिति भाष्योक्तं सङ्गच्छते'–इति ख. पाठः।

२. 'किञ्च' इत्यारभ्य 'गौरवम्' इत्यन्तः क, पाठः। ख. ग. नास्ति।

---

1. इतोऽग्रे–'वस्तुतस्तु माऽस्तु तदवयवे लक्षणा। 'सात्पदाद्यो'रिति निषेधेन 'समुदायदृष्टाः शब्दा अवयवेष्वपि वर्त्तन्ते' इति न्यायेनावयवेऽपि प्रत्यय-त्वस्य युक्तत्वान्न दोषः' इति ग. पाठः।

ऽन्ताऽऽदिभ्यां वर्णाभ्यां पृथग्व्य[1]वस्थिताभ्यां ये व्यवहाराः प्रत्ययत्वादयस्ते एकादेश विशिष्टस्याऽपि भवन्ति' इत्यर्थादुर्सित्यत्र प्रत्ययत्वस्य सुलभतया, सलोपे, एकदेशविकृत (पृ० ३७) न्यायेन 'उरित्यस्य प्रत्ययतया, विसर्गस्य प्रत्यय[2]सम्बन्धित्वमेवेति वाच्यम्। त्रिपाद्या असिद्धत्वेन तत्राऽन्तवद्भावाऽप्रवृत्तेः।

स्थानिवद्भावेन तु न निर्वाहः। उपात्तस्य स्थानिनोऽकारस्य प्रत्ययत्वाऽभावात्। प्रत्यय[3]सम्बन्धित्वं तु न स्थानिवत्त्वेन लभ्यम्। अशास्त्रीयत्वात्। 'सर्वे सर्वपदाऽऽदेशाः' इत्यनेन तु 'मातृ अस्' इत्यस्य स्थानित्वेऽपि, असित्यस्य स्थानित्वाऽलाभेन, तेन उर्सित्यस्य प्रत्ययताया लब्धुमशक्यत्वादिति 'अन्तादिवच्च' (६।१।८५) इतिसूत्रोक्तरीत्या द्रष्टव्यम्।

तदेतदभिप्रेत्य प्रकृतसूत्रे, 'उरण् रपरः' (१।१।५१) इति सूत्रे च भाष्ये उक्तम्—'इह कस्मान्न भवति 'पितुः करोति'। 'अप्रत्ययविसर्जनीयस्य' इति षत्वं प्राप्नोति। अप्रत्ययविसर्जनीयस्येत्युच्यते, प्रत्ययविसर्जनीयश्चाऽयम्। लुप्यतेऽत्र प्रत्ययविसर्जनीयो रात्सस्येति' इति। अत आह—**एकादेशेति।** एकाऽऽदेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्जनीयस्य एकादेशशास्त्रनिमित्तकत्वं बोध्यम्। तत्र मानमाह—**कस्कादिष्विति।** एवं च त्रिपाद्यामप्यन्तवत्त्वा[4]दिप्रवृत्तिरनेन ज्ञाप्यते इति भावः। तेन 'अमी' 'क्षीरपेण' इत्यादौ मीत्व-णत्त्वे सिद्ध्यतः। अ[5]त्र च एकारस्याऽदस्शब्दसम्बन्धित्वम्, 'पे'इत्यस्य एकाजुत्तरपदत्वं चाऽन्तवद्भावाऽधीनम्।

---

१. 'पृथगवस्थिताभ्याम्' इति तु शब्दरत्नादौ पाठः।

२ 'प्रत्ययाऽवयत्वम्' ख. पाठः।

३. 'प्रत्ययावयवत्वं तु न स्थानिवत्त्वेन लभ्यम्। सर्वे सर्वपदादेशाः' इति ख. पाठः।

४. 'अन्तवत्त्वादेः प्रवृत्तिः' ग पाठः।

५. 'अत्र च' इत्यारभ्य 'अन्तवद्भावाधीनम्' इत्यन्तः क ख. पाठः ग. नास्ति।

([1]नन्वाकरे 'एकाऽऽदेशशास्त्रनिमित्तकात्' इति पाठो दृश्यते। 'ओषधीस्कृधि' इत्यादौ शसा एकादेशे 'कःकरत्करतिकृधि' (८।३।५०) इति षत्वव्यावृत्तिः फलमप्युक्तमिति चेन्न। तत्फलस्य छान्दसत्वात्। 'छन्दसि वा[2] प्र' (८।३।४९) इत्यत 'इणः षः' (८।३।३९) इत्यस्य निवृत्त्याऽदोषाच्च। अतः षष्ठ्यन्तमेव पठितम्[3]।

**यत्तु हरदत्तादिभिः** 'प्रत्ययस्याऽवयवो यो विसर्गस्तस्य न षत्वम्' इति वैयधिकरण्येन, प्रसज्यप्रतिषेधपरतया च व्याख्यातम्। तत्तु वाक्यभेदाऽसमर्थसमास–वैयधिकरण्यान्वय-रूपदोषत्रयग्रस्तत्वेनोपेक्ष्यम्[4]।

प्रत्ययभिन्नाऽवयस्येत्यर्थे तु 'अग्निः करोति' इत्यादावपि प्रत्ययभिन्न[5]-समुदायावयवत्वेन तत्राऽपि षत्वाऽऽपत्तिः। किञ्च 'प्रत्ययरूपविसर्गस्य न' इति सामानाधिकरण्याऽङ्गीकारे 'नित्यं समासे' (८।३।४५) इतिसूत्रस्थाऽनुत्तरपदस्थस्येति व्यर्थं स्यात्। परमसर्पिःकुण्डिकेत्यादौ नित्यषत्वस्याऽनेन दुर्वारत्वात्।

यदि तु तत्[6]सामर्थ्यादुत्तरपदस्थे एतदप्रवृत्तिः कल्प्यते, तर्हि उक्ताऽर्थता[7]त्पर्यग्राहकतैवोचिता। बाधकल्पनातो लघुत्वात्। एतेन 'इदुदुपधौ

१. 'नन्वाकरे' इत्यारभ्य 'बोध्यम्' (२९६ पृष्ठे) इत्यन्तोऽयं पाठः क. पुस्तके नास्ति, प्रायो मनोरमालघुशब्दरत्नस्थत्वात्। ख. ग. तु दृश्यते एव।

२. 'छन्दसि वा प्राऽऽम्रेडितयोः' (८।३।४९) इति हि सूत्रम्।

३. इतोऽग्रे-ध्वनितं चेदमिणः ष इतिसूत्रशेषे भाष्ये' इति ग. पाठः।

४. इतोग्रे–'मदुक्तार्थे तु प्रत्ययपदस्य गौणप्रत्ययपरत्वमात्रम्' इति ग. पाठः। तत्र–'गौणप्रत्ययः' इत्यस्य प्रत्ययसम्बन्धीत्यर्थः।

५. 'प्रत्ययभिन्नसमुदायत्वेन' क. पाठः।

६. 'यदि तु सामर्थ्यात्' ग. पाठः।

७. 'उक्तार्थतात्पर्यग्राहकतैवोचिता। अपि चैवम्' इति क. ख. पाठः। 'ग्राहकतैवोचिता बाधकल्पनातो लघुत्वात्' इत्यारभ्य 'वैयर्थ्यापत्तेश्च' इत्यन्तो ग. पाठः। भावप्रकाशे धृतश्चाऽयमिति प्रामाणिकताऽप्यस्य। क. ख. पुस्तके तु नोपलभ्यते।

परस्परसाहचर्यात् तृतीया-पञ्चमी-षष्ठी-तद्धित-तिङन्ताऽवयवभिन्नौ गृह्येते। यद्वा 'अन्यतरस्यां'ग्रहणस्याऽपकर्षेण व्यवस्थितविभाषां चाश्रित्याऽतिप्रसङ्गो वारणीयः' इत्यपास्तम्। तदपेक्षयाऽस्मदुक्तप्रकारस्यैव न्याय्यत्वात्। अप्रत्ययग्रहणवैयर्थ्यापत्तेश्च।

अपि चैवं 'सर्पिष्कुण्डिका'शब्दपाठोऽपि चरितार्थः। अन्यथाऽव्यपेक्षायामनेन षत्वसिद्धेर्व्यपेक्षायाम् 'इसुसोः' (८।३।४४) इति[1] वैकल्पिकषत्व[2]-शास्त्रबाधनार्थत्वं वाच्यम्। मम तु मते प्रकृतसूत्रस्योक्ताऽर्थकत्वे तात्पर्य-ग्राहक इति न[3] कस्यापि बाधः कल्प्यते इति लाघवम्। 'व्यपेक्षायां नित्या-ऽर्थश्च' इति मूलम्, 'पुमः खय्यम्परे' (८।३।६) इति सूत्रस्थाऽप्रत्ययरूपो विसर्गः, इतिसामानाधिकरण्ये तु' इत्यादि**मनोरमा** च चिन्त्यैव। **व्याख्या-ऽऽदर्शा**ऽऽद्युक्तरीत्या वा तदनुरोधेनेति बोध्य[4]म्)। तपरकरणं किम्?। गीः करोति।

'उपधा'ग्रहणं व्यर्थम्। 'उपधाग्रहणं न करिष्यते। इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्यामः' इति 'हयवरट्'सूत्रस्थभाष्यात्।

**मुहुस** इति (वा० ८।३।४१)—यद्यपि भाष्याऽऽदौ 'पुं-मुहुसोः प्रतिषेधः' इति पठितं तथाऽपि पुम्शब्दः फलाऽभावान्नोपन्यस्तः 'सम्पुंकानाम्' (वा० ८।३।३४) इतिसत्वविधानेनैव षत्वाऽभावसिद्धेः। अनुस्वारपक्षे जिह्वामूलीयाऽऽदिनिवृत्त्यर्थं च तदावश्यकम्। अत एव साऽऽदेशाऽभावे

---

१. 'इसुसोरिति सिद्धे शास्त्रबाधनार्थम्' इति ग. पाठः।

२. 'वैकल्पिकषत्वशास्त्रे' इति क. ग. नास्ति।

३. 'न कस्यापि बाधः कल्प्यते' इति ग. पाठः। क. ख. नास्ति।

४. इतोऽग्रे—'न च इदुदुपधस्येत्यपि लक्षणया सामानाधिकरण्यमस्तु इति वाच्यम्। इष्टापत्तेः। ध्वनितं चेदं 'शेः शितः' (१।४।६०) इत्यत्र भाष्ये। 'वैयधिकरण्यान्वयाऽपेक्षया लक्षणा युक्तेति, पदस्येत्यधिकाराद्वि-सर्गान्तस्य पदस्येति वाच्योऽर्थः। तत्र पदस्येत्यनेन तु विनैव लक्षणां सामानाधिकरण्यमित्यन्ये'-इति ग. पाठः।

पुंस्कामेत्यत्र 'इदुदुपधस्य' (८।३।४१) इति षत्वं प्रसज्येतेति 'पुमः खय्यम्परे' (८।३।६) इतिसूत्रस्थं भाष्यं सङ्गच्छते। अन्यथाऽनेन षत्वाऽभावसिद्धौ तदापादनमसङ्गतमेव स्यात्। षत्वाऽभावार्थं सादेशे आरब्धे तत्र पुम्ग्रहणं माऽस्त्वित्येव हि तदाशयः। तद्वचनैतद्वचनकर्त्रोश्च भेद एवेत्याहुः।

वस्तु[1]तस्तु कात्यायनेनैव पूर्वं सादेशवार्त्तिके कृते, तेनैव पुनरुत्तरत्र षत्वप्रतिषेधारम्भे ऋषेरज्ञताऽऽपत्त्या, पुम्ग्रहणं प्रदेशान्तरस्थ-'ह्रस्वात्तादौ-(८।३।१०१) इतिषत्ववारणायेति, पुंस्त्वमित्यादावनुनासिकपक्षेऽपि षत्वं नेति दिक्।

**तिरसो** (८।३।४२)—अत्र 'गति'ग्रहणमनुवर्त्तते न वेति मतद्वयमपि 'विभाषा कृञि' (१।४।७२) इति सूत्रे **कौस्तुभे**, कृञ्धातौ **माधवग्रन्थे** च स्पष्टम्। तत्र द्वितीयमतमेव ज्यायः। पराभवेऽपि 'तिरस्कारः' इति प्रयोगात्। अन्तर्द्धावेव तिरसो गतित्वात्।

**द्विस्त्रि** (८।३।४३)—'कृत्वोऽर्थे' इति न विसर्गविशेषणम्। चतुःशब्देऽसम्भवात्। किन्तु द्विरादीनामित्याह—**वर्त्तमानानामिति**। उभयत्र विभाषेयम्। चतुरित्यस्य 'इदुदुपधस्य' (८।३।४१) इति प्राप्ते, इतरयोरप्राप्ते। न च तयोः 'इसुसोः सामर्थ्ये' (८।३।४४) इत्यनेन सिद्धिः। इसः प्रत्ययस्यार्ऽर्थवतश्च तत्र ग्रहणात्। अस्य लाक्षणिकत्वाच्च।

**चतुष्कपाल** इति–'इदुदुपधस्य' (८।३।४१) इति नित्यं षः। न च व्युत्पत्तिपक्षे प्र[2]त्ययसम्बन्धित्वात् कथमत्र षत्वम्। भाष्यप्रामाण्येनाऽव्युत्पत्तिपक्ष[3]स्यैव एतद्विषये कल्पनात्। 'चतुष्पञ्चाशत्' इत्यत्राऽपि षत्वं भवत्येव। अत एव 'चतुष्पाद्भ्यो ढञ्' (४।१।१३५) इत्यादिनिर्देशाः सङ्गच्छन्ते।

---

१. 'वस्तुतस्तु' इत्यारभ्य 'नेति दिक्' इत्यन्तः क. कुण्डलितो, ग. पाठः। ख. नास्ति।

२. 'प्रत्ययावयवत्वात्' ख. ग. पाठः।

३. 'एव' इति ख. नास्ति।

न च 'इदुदुपधस्य स[1]स्य यो विसर्गः' इति 'हयरवट्' सूत्रभाष्योक्ते कथमत्र षत्वमिति वाच्यम्। विसर्गस्य पाठाऽभावेनोपधात्वाऽसम्भवात् तत्स्थानिनिमित्तमुपधात्वं ग्राह्यमिति भाष्यतात्पर्यात्। (अ[2]त एवाऽनुपदोपदर्शिततत्सूत्रस्थभाष्योक्तपक्षाऽन्तरेणाऽविरोधः)।

अत एव 'समः सुटि' (८।३।५) इति सूत्रभाष्ये 'सम्पुङ्कानाम्' (वा० ८।३।३४) इत्यनेन रुविधिरेवाऽस्त्वित्याशङ्क्य, पुंस्कामेति षत्वाऽऽपादानं सङ्गच्छते।

न च 'कृत्वोऽर्थे' इत्येव सूत्रमस्तु। 'पदस्य' (८।१।१६) इत्यधिकारात् 'कृत्वोऽर्थे विद्यमानस्य पदस्येदुदुपधस्य यो विसर्गः' इत्यर्थान्न 'पञ्चकृत्वः करोति' इत्यादौ दोषः, नाऽपि 'चतुष्करोति' इत्यादावव्याप्तिरिति वाच्यम्। 'कृत्वोऽर्थे' इत्यस्याऽसिद्धत्वेन 'चतुः'शब्दे 'इदुदुपधस्य' (८।३।४१) इति नित्यषत्वाऽऽपत्तेः।

न च 'उपसर्गात्' (८।४।१४) इति सूत्रस्थाऽसमासेऽपीतिग्रहणज्ञापिते 'प्रकरणे प्रकरणमसिद्धम्' इतिपक्षे न दोषः। तथाहि—'असमासेऽपि' इति न पूर्वपदाऽधिकारनिवृत्तिद्योतनमुखेन समासाऽसमासयोः प्रवृत्त्यर्थम्। अधिकारनिवृत्तेरन्यत्रेवाऽत्राऽपि व्याख्यानादेव सिद्धेः। किन्त्वसंज्ञायां 'पूर्वपदात्' इतिनियमव्यावर्त्तितणत्वप्रतिप्रसवाय समासाऽसमासयोर्विशिष्य विधानाऽर्थम्। योगे योगस्याऽसिद्धत्वे तु 'पूर्वपदात्' इति दृष्ट्या 'उपसर्गादसमासे' इत्यस्याऽसिद्धत्वान्नियमेन व्यावृत्तेरेव कर्त्तुमशक्यत्वाद् व्यर्थमिदमेतत्पक्षज्ञापकमिति वाच्यम्। मध्येऽपवाद(प० ६२)न्यायेन 'उपसर्गात्' इत्यस्य नियमेन व्यावृत्तेः कर्त्तुमशक्यत्वात्। 'रामनयनम्' इत्यादौ णत्वव्यावृत्तये 'समानपदे' इत्यस्याऽखण्डपदे इत्यर्थाऽऽवश्यकत्वेन 'पूर्वपदात्' (८।३।१०३) इत्यस्य विध्यर्थत्वाच्च। (अ[3]त एव 'स्तौतिण्योः' (८।३।६१) इतिसूत्रस्थभाष्यकैयटादिकं सङ्गच्छते)। तथा च ज्ञापकस्यैवाऽसम्भवेन तत्पक्षस्य गर्भस्रावेणैव गतत्वात्। स्पष्टं चेदम् उपसर्गादिति सूत्रे कैयटे, 'पूर्वपदात्' (८।३।१०३) इति सूत्रे भाष्ये च[4]।

---

१. 'सस्य' इति ख. नास्ति। २. क. पुस्तके कुण्डलितोऽयं ख. ग. पाठः।
३. क. कुण्डलितोऽयं ग. पाठः। ४. 'भाष्ये चेति दिक्' ग. पाठः।

किञ्चैवं सति 'पूर्वत्र' (८।२।१) इति सूत्रे 'पूर्व'शब्देन प्रकरणग्रहणे, अव्यवहितप्रकरणे एव त्रिपाद्यसिद्धत्वं स्यान्न सम्पूर्णसप्ताध्याय्याम्। किञ्चाऽधिकारत्वादस्य प्रतिसूत्रमुपस्थित्या प्रतियोगमप्यसिद्धत्वं दुर्वारमिति दिक्[1]।

साहचर्येणैव निर्वाहे सिद्धे 'कृत्वोऽर्थ'ग्रहणं तदनित्यत्वज्ञापनार्थम्। तेन 'दीधीवेवीटाम्' (१।१।६) इत्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणम्[2]।

न[3] च 'रामलक्ष्मणौ' इत्यादौ दृष्टसाहचर्यसम्बन्धस्याऽभिधानियामकत्वमुक्तम्। प्रकृते[4] चैषां न क्वचित् साहचर्यसम्बन्धो गृहीत इति कथमेतदिति वाच्यम्। 'पञ्चम्यपाङ्परिभिः' (२।३।१०) इत्यनेन लक्षणाऽऽदिद्योतकपरियोगे पञ्चमीशङ्कायाम् 'यद्यप्ययं परिदृष्टाऽपचारो वर्जने चाऽवर्जने च, अयं खल्वपशब्दोऽदृष्टाऽपचारो वर्जनाऽर्थ एव कर्मप्रवचनीयः, तस्य कोऽन्यः सहायो भवितुमर्हति–अन्यो वर्जनार्थात् ?, यथा 'अस्य गोः सहायेनाऽर्थः' इति गौरेवाऽऽनीयते, नाऽश्वो न गर्दभः' इति 'कर्मप्रवचीययुक्ते' (२।३।८) इति सूत्रस्थभाष्येण सदृशानामेव प्रयोगे सहायत्वमित्यर्थस्य प्रतिपादनेनाऽक्षतेः।

परिभाषायामपि 'सहचरित'शब्देन सदृशस्यैव ग्रहणम्। सहचरस्य भावः—**साहचर्यम्**=सहचरणम्। तच्च सदृशयोरेवेति 'साहचर्य'शब्देन सादृश्यमुच्यते। रामलक्ष्मणावित्यादावपि सादृश्यमेव नियामकम्।

---

१. इतोऽग्रे—वस्तुतस्तु 'द्विस्त्रि' इत्येव सिद्धे गुरुभूत'कृत्वोर्थे' इत्युक्त्या कृत्वोऽर्थे वर्त्तमानेदुदुपधविसर्गमात्रेऽस्य प्रवृत्तिबोधनेन, तत्सामर्थ्याच्चतुः शब्दांशे नित्यषत्वापवादोऽयमिति द्विरादिग्रहणं शक्यमकर्त्तुम्। ध्वनितं चेदं भाष्ये' इति ग. पुस्तकेऽधिकः पाठः।

२. इतोऽग्रे—'अनुकरणसंज्ञोपसर्जनव्यावृत्तिस्त्वागमस्यैव शास्त्रप्रसिद्धत्वेन सिद्धेति दिक्' इति ग. पाठः।

३. 'न च रामलक्ष्मणौ' इत्यारभ्य 'इत्युत्सर्गाच्चेति दिक्' (पृ० ३००) इत्यन्तोयं ख. पाठः।

४. 'नैवं प्रकृते एषाम्' ख. पाठः।

सदृशयोरेव सहविवक्षेत्युत्सर्गात्, तयोरेव सहप्रयोग इत्युत्सर्गाच्चेति दिक्।

**इसुसोः** (८।३।४४)—इस्साहचर्यादुसोऽतिङन्तस्यैव ग्रहणान्नेह—'पेचुः काष्ठैः'। अत एव 'अथ कृदन्तमेतत्' इति भाष्यम् सङ्गच्छते। अत एव 'सख्युः पाकः' इत्यादौ षत्वं न। लाक्षणिकत्वाच्च। (इसोऽपि प्रत्ययस्याऽर्थवत एव ग्रहणम्। न चाऽव्युत्पत्तिपक्षे सर्पिरादावप्यप्रत्ययत्वमनर्थकत्वञ्चेति वाच्यम्। सर्पिषेत्याद्यनुरोधेन इसुस्विषये व्युत्पत्तिपक्षस्यैवाऽङ्गीकारात्)।[1]

नन्वेवं प्रत्ययग्रहण(प० २३)परिभाषया 'परमसर्पिष्करोति' इत्यादौ षत्वाऽनापत्तिः। न च[2] प्रत्ययग्रहणपरिभाषालब्धतदन्तार्थकस्य पदविशेषणतया पुनस्तदन्तविधौ 'इसुसन्तान्तस्य' इत्यर्थान्न दोष इति वाच्यम्। उ[3]पात्तविशेष्यसत्त्वे तदतिरिक्तविशेष्यमादाय तत्परिभाषाप्रवृत्तौ मानाऽभावात्। न चाऽवयवस्य इसुसन्ततया निर्वाहः[4]। 'उत्तरपदत्वे च' इति निषेधेन तस्य पदत्वाऽभावादिति चेन्न। 'अनुत्तरपदस्थस्य' (८।३।४५) इति निषेधेन क्वचिदुपात्तविशेष्यसत्त्वेऽपि शब्दाऽऽदिरूपविशेष्यमादाय तत्प्रवृत्तिज्ञापनान्न दोषः[5]। अत एव 'वनो र च' (४।१।७) इत्यादौ न दोषः।[6]

---

१. ग. पाठः। क. तु कुण्डलितः।

२. 'नचाऽऽक्षिप्तसमुदायस्य विशेष्यत्वाल्लब्ध' इति ग. पाठः।

३. 'उपात्तविशेष्यसत्त्वे आक्षेपे, आक्षिप्तस्य वा भिन्नतया विशेष्यत्वे मानाऽभावात्' इति ग. पाठः।

४. इतोऽग्रे—एकार्थीभूतस्य निष्कृष्य करोतिना व्यपेक्षाया दुर्वचत्वात्। 'उत्तरपदत्वे च' इति निषेधेन तस्य पदत्वाऽभावाच्चेति चेन्न'—इति ख. पाठः। 'दुर्वचत्वात्' इत्यन्तश्च क. कुण्डलितः पाठः।

५. 'आक्षिप्तस्य पृथग्विशेष्यताज्ञापनान्न दोषः' ग. पाठः

६. इतोऽग्रे 'यद्वा—'प्रत्ययग्रहणे' इत्यस्य विशेष्यनिरपेक्षमपि तदन्तविधिबोधकत्वं ज्ञाप्यते। अतः 'समासप्रत्ययविधौ' (वा० १।१।७२) इति न निषेधः इति' ख. पाठ.। क. ग. नास्ति।

एवं च 'द्विस्त्रिः' (८।३।४३) इतिसूत्रस्थाने 'सुचः' इति सूत्रयितुमुचितम्। 'सुजन्ताऽन्तस्य पदस्य' इत्यर्थात् 'चतु[1]ष्करोति' 'परमद्विष्करोति' इत्यादौ न दोष इत्याहुः।

(उ[2]क्ताऽर्थाऽनित्यत्वज्ञापनार्थं तथाकरणम्। अत एव 'यञिञोश्च' (४।१।१०१) इति फक् सुन्दरगार्ग्यशब्दान्न' इत्यन्ये)।

'सर्पिःकालकम्' इत्यत्र 'अधात्वभिहितं समानाऽधिकरणसमर्थवत्' इति वचनेनाऽसामर्थ्यान्न षत्वम्। 'अधात्वभिहितम्' इत्यनेन 'धातुसहचरितप्रत्ययाऽभिहिताऽर्थेन समानाधिकरणमसमर्थवन्न' इत्यर्थकेन 'सर्पिष्पीयते' इत्यादौ षत्वविकल्पसिद्धिः। इदं च वचनं षत्वे एव, न समासे। स्पष्टं चेदं 'समर्थ' (२।१।१) सूत्रे भाष्ये। न च 'साऽपेक्षमसमर्थवत्' इति वचनेन 'ब्राह्मणस्य सर्पिष्करोति' इत्यादावपि षत्वविकल्पो न स्यादिति वाच्यम्। तद्वचनस्य समासमात्रविषयत्वादिति तत्रैव भाष्ये स्पष्टत्वादित्याहुः।

**व्यपेक्षेति**—एकार्थीभावसामर्थ्यग्रहणे, समासे 'परमस[3]र्पिःकुण्डिका' इत्यादौ विकल्पाऽऽपत्तेः। 'अनुत्तरपदस्थस्य' इतिनिषेधादुत्तरसूत्रस्य न प्रवृत्तिः। अ[4]तो लक्ष्याऽनु[5]सारिव्याख्यानात् उ[6]त्तरसूत्रे समासग्रहणेन, तक्रकौण्डिन्यन्यायाच्च व्यपेक्षाया एव ग्रहणमिति तत्त्वम्।

नन्वनेनैव सिद्धे कस्कादिषु 'सर्पिष्कुण्डिका' शब्दपाठो व्यर्थः। (एवं च) तत्सामर्थ्यादुत्तरपदस्थस्याऽपि षत्वं प्राप्नोतीत्यत आह—**कस्कादिष्विति**।

---

१. 'चतुः करोति। परमद्विः करोति' इति ग. पाठः।

२. कः कुण्डलितः ख. पाठोऽयम्।

३. परमसर्पिष्कुण्डिकेत्यादौ विकल्पापत्तिः' इति ख. पाठः।

४. एतत्पाठस्थाने 'किञ्च व्याख्यानादुत्तरसूत्रे समासग्रहणेन तक्रकौण्डिन्यन्यायाच्च व्यपेक्षाया एव ग्रहणमिति तत्त्वम्' इति ग. पाठः।

५. 'लक्ष्यानुसारि' इति ख. ग. नास्ति। क. पाठः।

६. 'उत्तरसूत्रे समासग्रहणेन, तक्रकौण्डिन्यन्यायाच्च' इति क. कुण्डलितः पाठः।

अत एव 'अनुत्तरपदस्थस्येति किम् ? परमसर्पिः कुण्डिका' इति भाष्यं सङ्गच्छते ।

**व्यपेक्षाविरहेऽपीति**—'आनय सर्पिः, कुण्डिका तिष्ठतु' इत्यादौ ।

**व्यपेक्षायामिति**—'इदं सर्पिष्कुण्डिकायाः' इत्यत्रेत्यर्थः । अत्र यद्वक्तव्यं तद् 'इदुदुपधस्य' (८।३।४१) इत्यत्रोक्तम् ।

**अतः कृ**(८।३।४६)—**करोत्यादिष्विति** । 'करोति' शब्देन तदादेर्ग्रहणम् । समासाऽऽक्षिप्तोत्तरपदस्य विशेष्यत्वात् । 'विष्वग्देवयोः' (६।३।९२) इति सूत्रे 'वप्रत्यय'ग्रहणेन धातोर्विशेषणत्वे तदादिविधिज्ञापनादिति 'सुट् कात्पूर्वः' (६।१।१३५) इति सूत्रे कैयटः[1] । [2] **अयस्कुम्भी**त्यादौ लिङ्गविशिष्टपरिभाषया सत्वम्[3] । [4]**अयःसहितेति**—न त्वयसो विकारः । 'जानपद' (४।१।४२) इति ङीषापत्तेः[5] ।

**अयस्कर्णी**ति—अय इव कर्णौ यस्याः । नासिकोदरौष्ठे' (४।१।५५) इति ङीष् । **अधःशिरसी** (८।३।४७)—सूत्रे षष्ठ्याः स्थाने प्रथमा । तदाह—**एतयोरिति** । **अधस्पदमिति**—मयूरव्यंसकाऽऽदि( २।१।७२ )-समासः । ([5]**शिरस्पदमिति**-षष्ठीतत्पुरुषः) **भास्कर** इति—तपरकरणात् 'अतः कृ' (८।३।४६) इत्यस्याऽप्राप्तिः ।

इति विसर्गसन्धिः ।

---

१. इतोऽग्रे–'यत्तु 'सर्पिष्कुण्डिका'शब्दपाठ उत्तरपदस्थत्वेऽपि षत्वार्थमिति, तद्भाष्यविरुद्धम् । गणे समासैकदेशपाठे मानाऽभावश्च' इति ग. पाठः ।

२. इतोऽग्रे 'यद्यप्यत्र 'समासे' इत्यनुवृत्त्या 'अनुत्तरपदस्थस्य' इत्यनुवृत्त्या च विसर्गान्तस्य पूर्वपदत्वबोधनात् तदाक्षिप्तोत्तरपदस्य प्रत्यासत्तिन्यायात् कंसादिरूपस्यैव ग्रहीतुमुचितत्वेन 'अयस्कुम्भी' इत्यादौ सत्वं न प्राप्नोति, तथापि लिङ्गविशिष्टपरिभाषया' इति ग. पाठः, क. कुण्डलितः ।

३. 'परिभाषया तद्बोध्यम्' ग. पाठः ।

४. 'अयःसहिता' इत्यारभ्य' 'ङीषापत्तेः' इत्यन्तः पाठो मनोरमास्थत्वात् क. कुण्डलितः ।

५. ख. पाठोऽयम् । क. ग. नास्ति ।

## अथ स्वादिसन्धिः ।

यत्तु प्रक्रियालाघवाय 'स्वौजसमौट्' (४।१।२) इत्यनेन रुरेव विधेयः। सर्वत्र 'सु'ग्रहणेषु रुरेव पठनीयः तच्चिन्त्यम्। 'यशोऽत्र' इत्यादौ रोरसिद्धत्वादुत्वाऽनापत्तेः। 'अतो रोः' (६।१।११३) इत्यस्य प्रथमैकवचने चारितार्थ्यात्। तद् ध्वनयन्नाह—स्वौजसेति।

**ससजु** (८।२।६६)–'पदस्य'(८।१।१६) इत्यनुवृत्तं स-सजूभ्यां विशेष्यते। तेन तदन्तविधिः। आदेशस्त्वलोऽन्त्यस्येत्यन्त्यस्य। तत्फलितमाह—**पदान्तस्येत्यादिना।** 'सजूः' इत्यत्राऽपि व्यपदेशिवद्भावेन न दोषः।

'व्यपदेशिवद्भावोऽप्रातिपदिकेन' (प० ३२) 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' (प० ३१) इतिपरिभाषाद्वयमपि प्रत्ययविधिविषयम्। इदं च 'दिव उत्' (६।१।१३१) सूत्रे **हरदत्तग्रन्थे**, 'इन्द्रे च' (६।१।१२४) इत्यत्र[2] [1]**कैयटे** च स्पष्टम्। उपपादयिष्यते चाऽस्माभिर्हलन्तनपुंसके।

**अतो रो** (६।१।११३)—ननूत्वे कृते, तस्य स्थानिवत्त्वेन रुत्वाद् यत्वं स्यादत आह–**यत्वस्यापवाद** इति। विधानसामर्थ्यादुत्वं यत्वस्य बाधकमित्यर्थः।

**सामर्थ्यादिति**—न च त्रिपाद्यामेव 'रोः सुपि' (८।३।१६) इत्यस्याऽनन्तरम् 'अत उरति' इत्येव पाठ्यमिति वाच्यम्। उत्वस्याऽसिद्धत्वेनाऽऽद्गुणस्याऽनापत्तेः।

**प्रथमयोः** (६।१।१०२)—'वा सुपि' (६।१।९२) इत्यतः सुपीत्यनुवृत्तेस्तिङ्प्रथमयोर्ग्रहणं न। सुपामप्यादितः प्रत्यययोर्ग्रहणं न। 'तस्माच्छसो नः' (६।१।१०३) इति लिङ्गात्। अचीत्यधिकाराच्च। यद्यपि 'शिवोऽर्च्यः' इत्यत्रोत्वे कृते प्रथमस्याऽच्सम्भवति, तथाऽपि तत्र 'नादिचि' (६।१।१०४) इति निषेधः। ('ह[3]रिः करोति' इत्यादौ तु विसर्गस्याऽसिद्धत्वान्नैव प्रवृत्तिः)।

---

१. 'असमासे निष्कादिभ्यः (५।१।२०) इति सूत्रे भाष्ये स्पष्टम्' इति च लघुशेखरे पाठः।

२. इतोग्रे–'व्यपदेशिवद्भाव' इत्यस्याः प्रत्याख्यानमपि तत्रैव दूषयिष्यते' इति ग. पाठः। ३. क. कुण्डलितः ग. पाठः।

प्रथमा च प्रथमा चेत्येकशेषः। द्वितीय'प्रथमा'शब्दो द्वितीयां लक्षणया बोधयति। तदाह—**प्रथमाद्वितीययोरिति**। (अचि[1] किम्? रामः। विसर्गस्याऽसिद्धत्वादच्परत्वाऽभावः। अकः किम्? गावौ, नावौ। प्रथमयोः किम्? पित्रे)। 'पूर्व'ग्रहणं किम्? 'अग्नी' इत्यत्र पक्षे परसवर्णोऽपि मा भूत्। 'दीर्घ'ग्रहणं तु त्रिमात्रस्य स्थानिनस्त्रिमात्रो माभूदिति।

ननु 'सवर्ण'ग्रहणं किमर्थम्, 'पूर्व'इत्येतावतैव दीर्घपदाऽनुवृत्त्या[2] पूर्वस्य दीर्घत्वाऽसम्भवेन पूर्वजातीय इत्यर्थेन, पूर्वान्तरतम इत्यर्थेन वा सिद्धेरिति चेन्न[3]। स्पष्टार्थत्वात्। स्पष्टं चेदं भाष्ये।

**आद्गुणः** (६।१।८७) **इति**—(अनित्यत्वेन[4]) अपवादे निषिद्धे पुनरुत्सर्गप्रवृत्तेरिति भावः। अत एव 'तौ सत्' (३।२।१२७) इति निर्देशः सङ्गच्छते। **सुस्रोत** इति—'सुस्रोतस्'शब्दस्य सम्बुद्धौ 'दूराद्धूते च' (८।२।८४) इति प्लुतः। 'सुस्रोत' इति संज्ञा कस्यचित्। ('अनन्त्यस्याऽपि[5] प्रश्नाऽऽख्यानयोः' (८।२।१०५) इति वा प्लुतः)।

**तत्सामर्थ्यादिति**—प्रतियोगित्वेन तदाश्रयणसामर्थ्यादित्यर्थः। तदुक्तं भाष्ये—'आश्रयात् सिद्धम्' इति। (असिद्धत्वाऽभावश्च[6] तद्विशेषणं प्रत्येव। एतेन[7] 'ज्ञापितेऽपि तस्मिन् तपरकरणेनैव व्यावृत्तिसिद्धेरस्य चारितार्थ्या-

---

१. ख. ग. पाठः।

२. 'दीर्घपदानुवृत्त्या जातिनिर्देशेन च सिद्धेः' ग. पाठः।

३. 'चेन्न। 'गम्लृ'शब्दाच्छसि 'गमॄन्' इत्यादौ पूर्वस्य लृकारस्य दीर्घस्याऽभावाद् दीर्घो न स्यात्। सवर्णग्रहणे तु तत्सामर्थ्याद् ॠकारसिद्धिः। इदमेव 'सवर्णग्रहणम् लृकारस्य दीर्घाऽभावे, ॠलृवर्णयोः सावर्ण्ये च ज्ञापकं बोध्यम्' ग. पाठः। क. तु कुण्डलितः।

४. ख. पाठः। क. ग. नास्ति।

५. क. कुण्डलितः' ख. पाठः। ६. ग. पाठः।

७. 'एतेन' इत्यारभ्य 'इति मान्याः' (हरिदीक्षिताः) इत्यन्तः पाठश्चिदस्थिमालायामुद्धृत इति प्रामाणिकोऽयं पाठः।

ऽभावात् कथं ज्ञापकत्वम्। 'यस्मिन् ज्ञापिते यस्य चारितार्थ्यं तत् तेन ज्ञाप्यम्' इति सिद्धान्तात्' इति परास्तम्। 'अप्लुतादप्लुते' इति विशेषण-द्वयं प्लुताऽसिद्धत्वाऽभावप्रतिपादनद्वारा तपरकरणकृतप्लुतव्यावृत्त्यनुवाद-कमिति न दोष इति गुरुचरणाः)।

न[1]न्वेवम् 'आगच्छ पयो३ट्', 'आगच्छ पयो३द' इत्यादावुत्वदृष्ट्या प्लुतस्य सिद्धत्वे, परत्वात् प्लुते, आद्येऽप्लुतपरत्वाऽभावाद्, द्वितीये प्लुतात् परत्वाऽभावादुत्वं न स्यात्। 'पयस्यटति' इति पयोट्। 'पयो ददाति' इति पयोदः। तयोः सम्बोधने इमे। तत्राद्ये 'वाक्यस्य टेः' (८।२।८२) इत्यट्शब्दाऽकारस्य प्लुतः। द्वितीये रेफदकारसंयोगपरस्याऽ-कारस्य गुरुत्वात् 'गुरोरनृतः' (८।२।८६) इति प्लुत इति चेन्न।

एकपदस्थवर्णद्वयसापेक्षत्वेनोत्वस्याऽन्तरङ्गतया, तत्प्रति वाक्यता-सम्पादकपदान्तरसापेक्षस्य प्लुतस्य बहिरङ्गतयाऽसिद्धत्वात्। आश्रयात्तु 'येन नाऽप्राप्ति'(पृ० ५९)न्यायेन, प्रत्यक्षत्वेन च पूर्वत्राऽसिद्धत्वमेव बाध्यते, न त्वानुमानिकम्, क्वचिदेव विषये प्राप्तम्, बहिरङ्गाऽसिद्धत्वमपि। 'सुस्रोता३' इत्यादौ तु एकवाक्यमात्रसापेक्षत्वात् प्लुतोऽन्तरङ्गः, भिन्न-वाक्यस्थाऽकारसापेक्षत्वादुत्वं बहिरङ्गमिति स्पष्टं भाष्ये, इति दिक्।

**उकाराऽनुबन्धेति**—अनुबन्धेत्यनेनाऽनुनासिकत्वं सूचयति। तेन 'देव रुहि' इत्यादौ न दोषः। (अ[2]नुनासिकत्वेऽपि अनुवादत्वेनोपदेशत्वाऽभावा-न्नेत्त्वम्)।

**भोगभो** (८।३।१७)—'रोः सुपि' (८।३।१६) इत्यतो रोरित्यनुवर्त्तते, न तु 'रो रि' (८।३।१४) इत्यतो 'रः' इति। 'प्रातरत्र' इत्यादावतिप्रस-ङ्गात्। 'अ'शब्दान्तद्वन्द्वेन पूर्वशब्दस्य बहुव्रीहिमभिप्रेत्याह—**एतत्पूर्व-स्येति**। (स[3]म्बुद्धौ 'विभाषा भवद्भगवदघवतामोच्चाऽवस्य'इति वार्त्तिक-

---

१. 'नन्वेवम्' इत्यारभ्य 'इति दिक्' इत्यन्तोऽयं क. ग. पाठः।

२. क. कुण्डलितो ग. पाठः।

३. क. नास्ति। ख. ग. पाठः।

निष्पन्नैकदेशानामनुकरणं सूत्रे इति भावः[1]। 'एषामन्त्यस्य रुः स्यादवस्य चौकारः, सम्बुद्धौ' इति वार्त्तिकार्ऽथः। 'अलोऽन्त्यस्य' (१।१।५२) इति न। 'नाऽनर्थके' (प० १०६) इति निषेधात्। 'अव'ग्रहणसामर्थ्याच्च)।

नन्वेवं सूत्रे[2] पूर्वरूपाऽऽद्यापत्तिरत आह—**असन्धिरिति**। भगोऽघो-शब्दौकारयोरकाराभ्यां प्राप्तपूर्वरूपाऽऽत्मकसन्धिकार्याऽभाव इत्यर्थः[3]।

[4]**स्थानिवदिति**—'प्रत्ययः' (३।१।१) इत्यादिनिर्देशैः त्रिपाद्याः स्थानिवत्सूत्रं प्रति असिद्धत्वाऽभावादिति भावः।

ननु रोरुकारस्याऽनुबन्धत्वाद्रेफमात्रं विसर्गस्य स्थानि। एवं च 'अनल्विधौ' इति निषेधः स्यादत आह[5]—

---

१. 'इति भावः' इति ग. पाठः। २. 'सूत्रे' इति क. नास्ति। ख. ग. पाठः।

३. इतोऽग्रे–'इहेति। ननु यत्वस्याऽपरनिमित्तकत्वेनाऽन्तरङ्गत्वादसिद्धं बहिरङ्गमिति, पूर्वत्रेति च वचनद्वयेन, परस्परमसिद्धत्वबोधनात् परत्वाद्विसर्गात् पूर्वं यत्वेनैव भाव्यमिति चेन्न। शब्दविशेषनिमित्तकत्वेन यत्वस्य बहिरङ्गत्वात्' इति ग. पाठः। अशग्रहणाऽभावेऽपरनिमित्तकत्वं यत्वस्येति भावः।

४. इतोऽग्रे–'ननु विसर्जनीय-यत्वयोस्त्रैपादिकत्वेन स्थानिवत्सूत्रदृष्टचाऽसिद्धत्वात् कथं स्थानिवत्त्वमिति चेन्न। अशग्रहणेन स्थानिवत्सूत्रं प्रति त्रिपाद्या असिद्धत्वाऽभावज्ञापनात्' इति ख. पाठः।

५. इतोऽग्रे–'नह्ययमिति। यथाऽग्रहीदित्यत्र ग्रहोऽलिटिदीर्घस्य स्थानिवत्त्वेनेट्त्वात् 'इट ईटि' इति प्रवर्त्तते, एवमिहाऽपि विसर्गस्य रुत्वाद् यत्वं प्रवर्त्ततेति भावः। तथा च स्थानिवत्सूत्रे भाष्ये उक्तं–विशिष्टं ह्येषोऽनलमाश्रयते इटं नाम' इति। न च 'रो रि' इत्यतो 'रः' इत्यनुवर्त्त्य रो रेफस्यैव यत्वविधानेनाऽल्विधित्वादेव सिद्धे किमशग्रहणेनेति वाच्यम्। 'हलि सर्वेषम्' इत्युत्तराऽर्थमावश्यकस्य स्पष्टाऽर्थमिहैवोक्तेरिति तत्त्वम्।

ननु 'विभाषा भवत्, इत्यादिनिष्पन्नैकदेशाऽनुकरणे एव मानाऽभावात् 'विभोरिदम्' इत्यादावतिप्रसङ्गः। लाक्षणिकत्वाऽनर्थकत्वयोस्तुल्यत्वात्।

न च परस्परसाहचर्येण वार्त्तिकोक्तैकदेशानामेव ग्रहणमिति न दोषः।

नह्ययमिति—यद्यपि रेफस्य विसर्गस्थानित्वेन तद्वृत्तिरुत्वाश्रयस्या-

(विभोरिदं) 'सुप्रभगोरिदं' 'रघोरिदम्' इति त्रयाणां तादृशानामपि संभवात्। अतः पक्षान्तरमाह–सकारान्ता निपाता इति[1]। सम्बुद्धयन्त-भवदादिप्रकृतिकाः, स्त्रीपुंनपुंसकैकवचनाऽऽदिसाधारणाः, अखण्डाश्च सान्ता (रान्ता[2] वा) विनिगमनाविरहात्त्रैव सूत्रे निपात्यन्त इत्यर्थः। तत्र द्वितीयानां निपातत्वं बोध्यम्। तच्च चाऽऽदेराकृतिगणत्वात्, विभक्तिप्रतिरूपकत्वाद्वा। विभक्त्यन्तप्रतिरूपकत्वन्तु सम्बुद्धयन्तानामपि निपातनात् स्पष्टमेव। तेन 'भो विद्वद्वृन्द' इति नपुंसके लुका लुप्ते वार्त्तिकाप्रवृत्तौ, 'भो गङ्गे' इति स्त्रियाम्,—'अवस्य सम्बुद्धाविति विशेषणम्' इति पक्षे ङीपा व्यवधानाद् विभक्तौ लिङ्गविशिष्टाऽग्रहणाच्च सम्बुद्धिपरत्वाऽभावेन, लिङ्गविशिष्टग्रहणेऽपि तकारश्रवणाऽऽपत्त्या 'भो' इति रूपाऽसिद्धिर्न। 'हे भवन्' इतिवत् 'हे भो' इति प्रयोगसिद्धिश्च। निपातमात्राऽङ्गीकारे 'स्युः पाट्प्याडङ्गहैहेभो' इत्यमरोक्तनिपातानां सहप्रयोगाऽयोगात्। किञ्च 'तत्र भवान्' इतिवत् 'तत्र भो' इत्याद्यपि निपातमात्राऽङ्गीकारे न सिद्ध्येत्। 'इतराभ्योऽपि दृश्यन्ते' इति सर्वविभक्त्यन्तत्रतसोर्भवदादियोग एवेष्टत्वात्।

किञ्च 'सामन्त्रितम्' (२।३।४८) इति सूत्रे वक्ष्यमाणरीत्या भोस् शब्दस्य निपातस्याऽऽमन्त्रितत्वेऽपि, भगोऽघोशब्दयोरामन्त्रितत्वे माना-ऽभावेनाऽऽमन्त्रितत्व[3]प्रयुक्तकार्याऽसिद्धिः। निपातेभ्यो ह्युत्सर्गत एक-वचनमात्रसत्त्वेऽपि, सम्बोधने प्रथमान्तत्वाऽभावेन तयोरामन्त्रितत्वा-ऽभावात्। संबोधने[4] तयोः शक्तौ मानाऽभावाच्च। ([5]भगवत्त्वादिप्रकारे-णैव हि ततो बोधः)। 'भगो हरिहरौ तिष्ठतः' इत्यादिसिद्ध्यर्थं निपातावपीमावाश्यकौ। अत एव 'धनेनाऽघो' इत्यादौ पराऽङ्गवत्त्वप्रयुक्त-

1. इतोऽग्रे-'इदमुपलक्षणम्, रान्ता इति वा बोध्यम्' इति ग. पुस्तके पाठः।

2. ग. पाठः।

3. 'तत्प्रयुक्त' ख. पाठः।

4. 'तयोः सम्बोधने' ख. पाठः।

5. ग. पाठः।

ऽप्यस्याऽल्विधित्वेन न स्थानिवत्त्वप्राप्तिः, स्थान्यल्वृत्तिधर्माऽऽश्रयत्वात्, अनल्विधावित्यस्य 'स्थानिसम्बन्ध्यल्वृत्तिधर्माश्रये न' इत्यर्थः, 'अग्रहीत्' इत्यादौ तु 'ग्रहोऽलिटि' (७।२।३७) इत्यस्य 'ग्रहेः परस्येटो दीर्घः' इत्यर्थाद्दीर्घे इट्त्वेनैव तस्य स्थानिता, लोपे च तत्त्वेनैव निमित्ततेति विशेषः, स्पष्टं चेदं प्रकृतसूत्रे भाष्ये,

---

षाष्ठाऽऽद्युदात्तत्वसिद्धिः[1]। 'धनेन' इत्यस्य करणत्वेन मत्वर्थसत्तायामन्वयः। 'भगो[2] आगच्छ' इत्यादौ 'वाक्यादेरामन्त्रितस्य' इति द्वित्वम्, 'आम् देवदत्त भगो' इत्यादौ 'आम एकान्तरम्' इति च, सिद्ध्यति।

यदि तु 'युष्मदस्मदोः' (८।१।२०) इत्युत्तरसूत्रस्थयुष्मदस्मत्साहचर्यात् 'आमन्त्रितस्य' (६।१।१९८) इतिनिघातविधायके लिङ्गसंख्याद्यन्वयि सत्त्ववाचकमेवामन्त्रितं गृह्यते, अत एव प्रकरणशुद्धये 'तिङो गोत्रादीनि' (८।१।२७) इत्यतः पूर्वमेव तन्न पठितमिति विभाव्यते, तर्हि भोःशब्दे आमन्त्रितनिघातसिद्धिरपि सम्बुध्यन्तभोःशब्दनिपातनफलमिति बोध्यम्। ([3]किञ्च 'देवदत्तस्य भगो' इत्यादावामन्त्रितनिघातसिद्धिरपि फलम्)।

किञ्च 'आमन्त्रितं पूर्वम्' (८।१।७२) इत्यस्य 'नाऽऽमन्त्रिते समानाधिकरणे' (८।१।७३) इति निषेधो भोःशब्दादौ[4] सिद्ध्यति। निपातस्य तु द्रव्यवाचित्वेन सामान्यवचनत्वेऽपि लिङ्गाद्यनन्वयित्वेनाऽत्यन्तसामानाधिकरण्याऽभावान्नामन्त्रिते इति निषेधो न, समानाधिकरणसामर्थ्यादिति स्पष्टं भाष्ये इति निरूपयिष्यामः।

([5]एतेनामन्त्रितेतिमहासञ्ज्ञाकरणादसत्त्वार्थके सञ्ज्ञा नेत्यपास्तम्)। यत्तु निपातानामव्ययत्वेन 'अव्ययानां प्रतिषेधः' इत्युक्तेः 'भो देवदत्त'इत्यादौ पराऽङ्गवत्त्वप्रयुक्तषाष्ठाऽऽद्युदात्तत्वसिद्धिरपि सम्बुद्ध्यन्त-

---

1. पराङ्गवत्त्वं-'सुबामन्त्रिते पराङ्गवत्स्वरे' इति सूत्रेण। षाष्ठेति। 'आमन्त्रितस्य चे'तिषष्ठाध्यायस्थसूत्रविहितेत्यर्थः।
2. 'भगोऽत्रागच्छ' ग. पाठः।
3. ख. पाठः। ग. पुस्तके नास्ति।
4. 'भोःशब्दे' ग. पाठः।
5. ग. पाठः।

तथाऽप्यशीत्यस्याऽभावे 'पयःसु' इत्यादौ दोषः। तत्र हि 'रोः सुपि' (८।३।१६) इति विसर्गः। नियमशास्त्राणि हि वाच्यार्थमादाय विधायकानि, आर्थिकार्थमादाय निषेधकानीत्यन्यत्र निरूपितम्। तत्र हि विसर्गस्य विशिष्टो रुः स्थानीति स्थानिवद्भावः सुलभः। न च 'रोः सुपि'

---

निपातनफलमिति। तन्न। तत्र षष्ठ्यामन्त्रितकारकवचनात्, तन्निमित्तग्रहणाच्च।

एवं च 'विभाषा भवदि'ति वार्त्तिकं नाऽऽरम्भणीयम्। 'विभोरिदम्' इत्यादौ तु नाऽतिप्रसङ्गः। अनर्थकत्वात्।

एतेन निपातानामभ्युपगमे यत्वविधौ त एव गृह्येरन्, प्रतिपदोक्तत्वात्, न तु सम्बुद्धयन्ताः, लाक्षणिकत्वादित्यपास्तम्। उभयोरप्यत्रैव निपातनात्। वार्त्तिकाऽऽरम्भेऽपि स्वरितपाठात्, 'भुवश्च महाव्याहृतेः' (८।२।७१) इति 'महाव्याहृति'ग्रहणेन प्रतिपदोक्तपरिभाषाया अनित्यत्वाद्वा न दोषः।

(अत्र[1] पक्षे सान्तानामपि कृतरुत्वानामनुकरणान्न दोषः)।

यद्यपि भाष्ये नेदं प्रत्याख्यातम्, तथाऽपि वार्त्तिकस्याऽपूर्वत्वाऽपेक्षया सूत्रसिद्धार्थत्वं वक्तुं युक्तम्। 'स्युः पाट्प्याडङ्गहैहेभोः' इत्यमरस्वारस्याद् 'भोः' शब्दो निपातोऽप्यङ्गीकार्यः। अत एव 'भो हरिहरौ' इत्यादिसिद्धिः। 'भगो-अघो' इति निपातौ, यदि प्रामाणिकौ तर्हि स्ताम्, नो चेन्मा, अत्र मतेऽसन्धिर्न्याय्य एव। ([2]अशब्दपूर्वशब्दयोर्बहुव्रीहिं कृत्वा भो इत्यादिभिर्द्वन्द्वः कार्यः। 'एषां रोर्यत्वम्' इति वृत्तिः कार्येत्यलम्। यद्वा—) एषां त्रयाणां रोर्यः स्यादपूर्वस्य रोश्च, इति वाक्यभेदेन व्याख्येयम्।

ये तु[3] निपातानपि रान्तानिच्छन्ति, तेषां तेषु रोरित्यस्याऽनन्वयः। 'एषामलोऽन्त्यस्य यः स्यादपूर्वस्य रोश्च' इति तैर्व्याख्येयम्। अत्र पक्षद्वयेऽप्यघोऽन्तं लुप्तषष्ठीकं पृथक्पदं न्याय्यम्। व्योर्लघु'—इति ख. ग. पाठः।

---

1. ख. पाठः। ग. नास्ति।
2. 'अशब्दपूर्वशब्दयोः' इत्यारभ्य 'यद्वा' इत्यन्तो ग. पाठः। ख. नास्ति।
8. 'ये तु' इत्यारभ्य 'न्याय्यम्' इत्यन्तः पाठो ग. नास्ति।

इत्यत्र 'रो रि' इत्यतो 'रः' इत्यनुवर्त्त्य रो रेफस्यैव तेन विसर्ग इति वाच्यम्। 'हलि सर्वेषाम्' (८।३।२२) इत्युत्तरार्थमावश्यकस्य स्पष्टार्थमिहैव करणादिति दिक्।

**तेषां रोरिति**—इदं च निपातानास्थाय वक्ष्यमाणवार्त्तिकं प्रत्याचक्षाणस्य वृत्तिकृतो मतेनोक्तम्। **अन्ये तु** 'तेषामपि रोः' इत्यर्थः। **अपिना** 'विभाषा भवद्भगवदघवतामोच्चावस्य' इति वार्त्तिकनिष्पन्नानां संग्रहः। 'एषामन्त्यस्य रुः स्याद्, अवस्य चौकारः, सम्बुद्धौ' इति तदर्थः। 'अव'-ग्रहणसामर्थ्यादलोऽन्त्यस्येति नेति बोध्यम्। न च निपातानाश्रित्य वार्त्तिकं प्रत्याख्येयम्, निपाताश्च 'भो ब्राह्मणाः' 'भगो हरिहरौ' इत्यादिसिद्ध्यर्थमावश्यका इति वाच्यम्। 'तत्र भवान्' इत्यादिवत् 'तत्र भो' इत्यादि सिद्धये, 'धनेन भगो' इत्यादावामन्त्रितनिघातसिद्धये च वार्त्तिकस्याऽत्यावश्यकत्वात्। अत्र सूत्रे उभयोर्ग्रहणे मानन्तु—अत्र वार्त्तिके'भो ब्राह्मणाः' इत्याद्यसिद्ध्याशङ्का, 'अव्ययमेष भोः शब्दः' इति सिद्धान्तपरं भाष्यमिति बोध्यमित्याहुः।

यदि तु निपाता अपि स्त्रीपुंनपुंसकसाधारणसम्बोधनान्तभवदादिसमानार्थकत्वादामन्त्रिता एव, भवदादीत्यत्र भोःशब्दस्याऽप्यादिना ग्रहणात् 'तत्र भो' इत्यादिसिद्धस्तदा वार्त्तिकं मास्त्विति तु वृत्त्याशयः।

न चैवं 'विभोरिदम्', 'सुप्रभगोरिदम्', 'रघोरिदम्' इत्यादावपि यत्वापत्तिः। भोशब्दादीनां लाक्षणिकत्वाऽनर्थकत्वयोः सर्वत्र तुल्यत्वादिति वाच्यम्। प्रसिद्ध्या, 'भोः'इत्यादिपूर्वकरेफान्तानामर्थवतां ग्रहणस्य न्याय्यत्वेन च वार्त्तिकनिष्पन्ननिपातयोरेकदेशभूत'भो'शब्दादीनामेव ग्रहणेनाऽदोषादिति दिक्।

**व्योर्लघु** (८।३।१८)–यद्यपि वर्णसमाम्नाये यस्य प्राथम्याद् 'य्वोः' इति वक्तुमुचितम्, तथाऽपि 'लोपो व्योः' (६।१।६६) इति लोपवारणाय सौत्रत्वाद्याश्रयणीयं स्यादतो व्योरित्युक्तम्। लघुत[1]रः प्रयत्नो यस्योच्चारणे स

---

१. 'लघुतरः' इत्यारभ्य 'साधु' इत्यन्तोऽयं पाठो ग. नास्ति। तत्स्थाने 'लघुप्रयत्नतरशब्दं व्याचष्टे-लघूच्चारणाविति'-इत्येव ग. पाठः।

लघुप्रयत्नतरः। अन्यपदार्थसम्बन्धोत्तरं वर्त्तिपदार्थे प्रकर्षविवक्षायामिदं साधु।

**शैथिल्यमिति**[1]—प्रयत्ने लघुतरत्वं चैषां शैथिल्यजनकत्वमेव। **लघूच्चारणाविति**—लघुतरोच्चारणावित्यर्थः। सूत्रे सौत्रत्वादेकवचनम्। (आन्तरतम्याद् वस्य वः, यस्य य इति बोध्यम्)[2]। वकारोदाहरणम्[3] 'असावादित्यः' इति वृत्तिः।

**ओतो** (८।३।२०)—**ओकारादिति**। 'भो'इत्याद्यनुवृत्तेस्तदवयवादित्यर्थः। तेन 'स्मृतोव् अच्युत' इत्यादौ न। इदं पूर्वसूत्रेऽपि बोध्यम्। 'अपूर्वस्य'[4] इत्यस्य 'ओतः' इत्यनेन विरोधान्न सम्बन्धः। तदाह–यस्येति। वस्य त्वसम्भव इति भावः।

इदं लघुप्रयत्नयोर्न, तद्विधानसामर्थ्यात्, गार्ग्यश्रुतेश्च। तदाह–अलघ्विति। आरम्भसामर्थ्याच्च[5] नित्यम्। अन्यथा 'लोपः शाकल्यस्य'(८।३।१९) इत्यनेनैव सिद्धे एतद्वैयर्थ्यं स्पष्टं भाष्ये। न च गार्ग्यशाकल्ययोः स्वस्वमतप्रच्युत्यभावायेदम्। ताभ्यां[6] लोपस्यैव स्मृतत्वेन, तद्वाक्येऽन्यग्रहणेन तयोरग्रहणात्। न च तदेव नित्यमस्तु, (इदमेव[7] च विकल्पार्थमस्त्विति वाच्यम्)। 'उपनिषदावौपम्ये' (१।४।७९) इतिनिर्देशेन तस्य वैकल्पिकत्वाऽनुमानात्। तदाह—**पूजार्थमिति**।

---

१. 'शैथिल्यमिति' इति ख. ग. पाठः। क. तु केनापि वर्द्धितः। इतोऽग्रे–'मृदुत्वमित्यर्थः। आन्तरतम्याद् वस्य वः' इति ग. पाठः।

२. ख. ग. पाठः। चिदस्थिमालायामयमुद्धृतश्च।

३. 'वकारोदाहरणन्तु' ख. ग. पाठः।

४. 'अपूर्वस्य' इत्यंशस्तु न सम्बध्यते। 'ओतः' इत्यनेन बाधात्। तदाह—पदान्तस्य यस्येति। एतेन 'वकारत्यागे बीजं चिन्त्यम्' इत्यपास्तम्। असम्भवस्यैव तत्त्वात्' ख. ग. पाठः।

५. 'लोपः शाकल्यस्येत्यनेन सिद्धे आरम्भसामर्थ्याच्च नित्यमिति स्पष्टं भाष्ये' इति क. पाठः।

६. 'गार्ग्यशाकल्याभ्यां लोपस्यैव' ख. पाठः।　७. क. नास्ति।

**केचित्तु** 'व्योः (८।३।१८) इति सूत्रे यकारसाहचर्याद् वकारो धात्वनवयव एव गृह्यते। 'ओतः' इत्यत्रार्थाऽधिकारात् तस्यैवाऽनुवृत्तिरतो[1] भो इत्याद्यनुवृत्तिं विनाऽपि 'स्मृतोव् इह' 'हरिव् इह' इत्यादौ[2] न दोष इत्याहुः। तन्मतेनाऽऽह—**पदान्तस्य किम्, तोयमिति**। (एतन्मते[3] लोपः शाकल्यस्येतिसूत्रे 'अवर्णपूर्वयोः' इति, 'अशि' इति च वस्तुसिद्धाऽर्थकथनं बोध्यम्)।

**उञि च** (८।३।२१)–'भो' इत्यादिपूर्वस्य तु[4] पूर्वसूत्रेणैव सिद्धमित्याशयेनाह[5]—**अवर्णपूर्वयोरिति**।

ननु पूर्वसूत्रेणाऽलघुप्रयत्नस्य लोपे सिद्धेऽपि, लघुप्रयत्नस्य लोपाऽर्थमत्राऽपि 'भोभगो' इत्यनुवृत्तिरस्तु। अत एव हलि सर्वेषामित्यत्र मण्डूकाऽनुवृत्तिरपि न। न च लघुप्रयत्नविधानं व्यर्थम्। उञतिरिक्तेऽशि चारितार्थ्यादिति चेन्न[6]। अत्रापि गार्ग्यग्रहणानुवर्त्तनादिति केचित्। वकारोदाहरणन्तु 'असा उ एकाग्निः' इति।

**उत्तरार्थमिति**—'ङमो ह्रस्वादचि' (८।३।३२) इत्येतदर्थमित्यर्थः। तेन 'परमगणौ' इत्यादौ न। 'गण्' इत्यस्याऽन्तर्वर्त्तिविभक्त्या पदत्वात्[7]।

१. 'भो इत्याद्यनुवृत्तिं विनाऽपि' इति क. पाठः। ख. ग. नास्ति।

२. 'हरिव् इह, स्मृतोव् इहेत्यादौ' ख. पाठः।

३. ख. ग. पाठः। क. नास्ति।

४. 'तु' इति क. नास्ति। ख. ग. दृश्यते।

५. 'इत्याशयेनाह' इति ख. पाठः।

६. इतोऽग्रे—'व्योर्लघुप्रयत्नतरः' (८।३।१८) इतिसूत्राद्धि व्योरित्यनुवर्त्तते। तच्च तत्रोद्देश्यसमर्पकत्वादलघुप्रयत्नाऽर्थकम्, अर्थाऽधिकाराच्चेहाऽपि तथैवेत्याशय इत्याहुः। अत्राऽपि गार्ग्यग्रहणाऽनुवर्त्तनादिति तु केचित्' इति ख. ग. पाठः।

७. इतोग्रे–'उत्तरपदत्वे च' (वा० ८।२।६८) इति निषेधस्तु-[1]उत्तरपदसम्बन्धिपदान्तविधावेव। अपदादिविधाविति पर्युदासात्। भाष्येपि 'न लुमता' (१।१।६३) इत्यत्र स्फुटमेतत्। न लुमतेति सूत्रस्थवार्त्तिकाऽर्थनिर्णायक-

1. 'उत्तरपदसम्बन्धिपदान्तत्वनिमित्तविधावेव' ख. ग. पाठः।

'हृलि सर्वेषाम्' (८।३।२२) इत्यादौ तु न सम्बध्यते, व्यवहित'ङमो ह्रस्वात्' (८।३।३२) इत्यत्रैव प्रयोजनकथनपरभाष्यप्रामाण्येन मण्डूकाऽनुवृत्तिस्वीकारात्। अत एव 'गुडलिट्त्सु' इत्यादौ धुडादयः' इति **कैयटादयः**। अत[१] एव 'माभ्याम्' इत्यादौ 'हृलि सर्वेषाम्' इत्यस्य प्रवृत्तिः। अन्यथा हि 'हृलादौ पदे' इत्यर्थाऽऽपत्तौ तदभावान्न स्यादिति दिक्।

**हृलि सर्वेषाम्** (८।३।२२)—'भोभगो' (८।३।१७) इत्याद्यनुवर्त्तते। तत्र ओकारात् परस्य लघूच्चारणस्यैवाऽनेन लोपः। अलघूच्चारणस्य तु 'ओतः' (८।३।२०) इत्येव सिद्धम्। 'अ'पूर्वं तूभयोरपि।

न चाऽलघुप्रयत्नेऽस्याऽसिद्धत्वात् 'लोपः शाकल्यस्य' (८।३।१९) इत्यनेनैव लोप उचित इति वाच्यम्। लघुप्रयत्नस्यैवाऽनेन लोपे 'व्योर्लघुप्रयत्नतरः' (८।३।१८) इति सूत्रे अचीतिग्रहणेन, हृलि विधानाऽभावेनैव सिद्धावेतत्सूत्रवैयर्थ्याऽऽपत्तेः।

न चैवमलघुप्रयत्नयोरेव लोपः स्यात्। एवं च 'व्योः' (८।३।१८) इत्यस्य शब्दाऽधिकाराऽऽश्रयणमपि नेति वाच्यम्। सर्वेषामित्यस्य वैय-

---

भाष्यविरोधेनाऽऽष्टमिकभाष्यस्य ङमो ह्रस्वादितिसूत्रस्थस्य प्रौढिवादत्वात्।'यचि'(१।४।१८)इत्यादियोगविभागेन 'असर्वनामस्थाने'(१।४।१७) इत्यनुवर्त्त्यं,मध्यस्याऽपि पदत्वनिषेध इत्यपि योगविभागस्येष्टसिद्ध्यर्थतया [1]उत्तरपदसम्बन्धिपदान्तविधिविषय एवेति, न फलभेदः। [2]प्रकृते च ङमन्तस्य,पदावयवङमो वा निमित्तत्वेऽपि, पदान्तोद्देश्यकत्वरूपस्य वा पदान्तस्थानिकत्वरूपस्य वा पदान्तसम्बन्धित्वस्याऽभावात्। अत एव 'माषकुम्भवापेन' इत्यादौ 'पदव्यवायेपि' इतिप्रतिषेधसिद्धिः। अत्राऽर्थे 'पदे' ग्रहणमपि ज्ञापकं बोध्यम्। स्पष्टं चेदम् 'उञि च पदे' (८।३।२१) इत्यत्र भाष्ये, 'ङमो ह्रस्वादित्यत्र च' इति क. कुण्डलितः, ख. ग. पाठः।

१. 'अत एव' इति क. ग. पाठः। ख. नास्ति।

---

1. 'उत्तरपदसम्बन्धी'ति ग. नास्ति।

2. 'प्रकृते च' इत्यारभ्य 'अभावात्' इत्यन्तो ग. पाठः।

र्थ्याऽऽपत्तेः। विकल्पस्य विच्छिन्नत्वाऽनुवृत्तिसिद्धेः। तद्धि ऋषिमात्रग्रहणार्थम्। तदाह—**लघ्वलघूच्चारणस्येति।**

ये तु भोसादिसाहचर्येणाऽवर्णपूर्वस्याऽपि यस्यैव, धात्वनवयवस्यैव वा लोप इत्याहुस्तन्मतेनाऽऽह—**यस्येति।**

परे तु वकारमनुवर्त्य वस्याऽपि लोपमाहुः। अत एव 'वृक्षव् करोति' इत्यादावतिप्रसङ्गवारणाय अशा हलो विशेषणं भाष्यकृतां सङ्गच्छते।[1] 'वृक्षव् हसति' इत्यादीनां त्वनभिधानमिति हरदत्तः।

पदान्तस्य किम्?, गव्यम्। गव्यूतिरित्यत्र यथा न लोपस्तथोक्तम्। 'लोपो व्योः' (६।१।६६) इत्यनेन तु न सिद्धिः। तं प्रति यत्वस्याऽसिद्धत्वात्। 'देवा यान्ति' इत्यत्र वल्परत्वाऽभावाच्चेति दिक्।

**न तु सुपीति**—पर्युदासे हि सुप्सदृशे प्रत्यये एव स्यात्। तथा च 'अहर्भाति' इत्यत्र न स्यादिति बोध्यम्। न च प्रत्ययग्रहणे तदन्तग्रहणात् 'सुबन्ते' इत्यर्थो दुर्वार इति वाच्यम्। तस्मिन्निति (१।१।६६) परिभाषया सुपीत्यादीनां 'सुपि परे' इत्यर्थस्याऽऽवश्यकत्वेन, तस्य च नियमेन 'कस्मात्' इत्यवधिसाकाङ्क्षत्वेन, 'अह्नः' इत्यादेरेव चोपस्थितत्वेनाऽवधित्वेनाऽन्वयात्, पञ्चम्यन्तस्य विशेषणत्वेन, 'प्रत्ययग्रहणे चाऽपञ्चम्याः' (प० २४) इति निषेधेन तदन्तविध्यभावात्। 'पञ्चम्यन्ताऽर्थात् परत्वेन विशेषतः प्रत्ययो यत्र कार्यान्तरविधानाय परिगृह्यते, तत्र तदन्तविधिर्न' इति तदर्थः। यथा 'रदाभ्यां निष्ठा' (८।२।४२) इत्यादौ।

य[2]त्तु कैयटेन 'धातोः' (३।१।९१) इत्यधिकारात् 'स्यतासी लृलुटोः' (३।१।३३) इत्यादौ न दोष इत्युक्तम्। तन्न। धातोरित्यस्य स्यतामि-

१. इतोऽग्रे—'एवं च 'वृक्षव् हसति' इत्यादौ लोपो भवत्येव। यत्तु 'एषामनभिधानम्' इति हरदत्तः। तन्न। मानाऽभावात्। 'न पदान्ताः परेऽणः सन्ति' इति भाष्यं त्वन्यतात्पर्यकमिति 'कमल्'शब्दे वक्ष्यते'—इति ख. ग. पाठः।

२. 'यत्तु कैयटेन' इत्यारभ्य 'व्याख्येयः' इत्यन्तः क. कुण्डलितो ग. पाठः। ख. नास्ति।

विशेषणत्वेन, ल्लुडविशेषणत्वात्। तस्मादस्मदुक्तरीत्यैव वारणम्। कैयटोऽपि वा तथैव व्याख्येयः।

'ङ्याब्भ्यः' इत्यादौ तु न दोषः। तत्र 'कस्मात्' इतिनियताऽवध्याकाङ्क्षाया अभावेन, पञ्चम्यन्तस्य प्रत्ययविशेषणत्वाऽभावात्। अत एव 'सुप्तिङन्तम्' इत्यन्तग्रहणं संज्ञाविधौ प्रत्ययग्रहणे तदन्तविध्यभावे ज्ञापकम्' इत्याकरोक्तं सङ्गच्छते इत्याहुः। न च 'रः' इति सामान्येन रत्वं विधाय, सुपि 'अहन्सुपि' इति तदपवादरुत्वेनैव सिद्धौ, असुपीति व्यर्थमिति वाच्यम्। क्वचित् सुबभावेऽपि रुत्वप्रवृत्तिबोधनाऽर्थं तथोक्तत्वात्। एतेन 'रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्' (वा० ८।२।६९) इति नाऽपूर्वमित्याहुः।

**अहरह इति**—'नित्यवीप्सयोः' (८।१।४) इति द्वित्वम्। 'न लुमता' (१।१।६३) इति निषेधात् सुप्परत्वाऽभावः। **अनन्यत्वादिति**—रात्रिशब्दान्ततत्पुरुषादचि समासाऽन्ते, 'यस्येति च' (६।४।१४८) इतीकारलोपेऽपि रात्रिशब्दत्वाऽक्षतेरिति भावः।

**अहोरात्र इति**—'रात्राऽह्नाऽहाः' (२।४।२९) इति पुंस्त्वम्। **अहरादीनामिति**—उभयत्राऽप्यादिशब्दः प्रकारे। तेन 'स्वर्चक्षाः' 'स्वर्चनाः' (वा० ८।२।६९) इत्यादि सिद्धम्।

अनुवादे रेफविशिष्टस्योपादानाद्रेफस्य रेफविधानं व्यर्थमत आह—**विसर्गाऽपवाद** इति। 'प्रचेतसो राजनि वा रेफो, भाषाच्छन्दसोः'। 'प्रचेतो राजन्'। 'प्रचेता राजन्'। स्पष्टं चेदम् 'अम्नरूधर' (८।२।७०) इति सूत्रे भाष्ये।

**ढ्रलोपे** (६।३।१११)—नाऽयं तत्पुरुषः। अनीयरि, 'चचार' इत्यादौ च दोषाऽऽपत्तेः। नाऽपि बहुव्रीहिः। व्यधिकरणत्वात्। अतो णिजन्तात्-कर्मण्यण्युपपदसमास इति दर्शयति—**ढरेफौ लोपयतीति**। न चाऽजर्घा इत्यादौ 'सिपि धातोः' (८।२।७४) इति रुत्वस्य[1], 'पितू राज्यम्' इत्यादौ संयोगान्तलोपस्याऽसिद्धत्वाद्रेफपरत्वाऽभावेन कथं दीर्घः[2]। ढग्रहणेन,

---

१. 'सिपि धातोरिति रुत्वस्याऽसिद्धत्वाद्रेफपरत्वाऽभावेन' क. ख. पाठः।

२. इतोऽग्रे—'ढसाहचर्येण रेफांशेऽप्यसिद्धत्वबाधात्। लण्सूत्रे 'अजर्घा' इति भाष्योदाहरणाच्च' इति ख. ग. पाठः।

लण्सूत्रेऽजर्घा इतिभाष्योदाहरणेन च 'पूर्वत्राऽसिद्धम्' (८।२।१) इति पूर्वग्रहणेनैतत्सूत्राऽग्रहणबोधनात्।

[न च[1] 'गुडलिड्ढौकनम्' इत्यादौ बाधं विनाऽपि सम्भवोऽस्तीति वाच्यम्। 'ढो ढे लोपः' (८।३।१३) इत्यस्याऽसिद्धत्वेन 'झलां जशोऽन्ते' (८।२।३९) इति जश्त्वप्रवृत्तेः। अत एव 'झलां जशोऽन्ते', 'झशि' इतिन्यासः 'खरि च' (८।४।५५) इत्यतः पूर्वं न कृतः। न चैवमपि 'झलां जशोन्ते' इत्यतोऽग्रे एव द्वितीयचरणे 'झशि' इति कुतो न सूत्रितम्। 'ढो ढे लोपः'(८।३।१३)इत्यस्याऽसङ्गतताऽऽपत्तेः। सामर्थ्याज्जश्त्वबाधे तु पदान्ते जश्त्वस्याऽपि बाधाऽऽपत्तिः।

यदि तु 'येन[2] नाऽप्राप्तिः' (प० ५९) न्यायेन (अनन्त[3]रस्य' (प० ६३) इति न्यायेन च) झशि जश्त्वस्यैव बाध इत्युच्यते, तथाऽपि 'अभ्यासे चर्च' (८।४।५४) इत्यत्र 'झलां जश' (८।४।५३) इत्यस्याऽऽवश्यकत्वेन लाघवाऽभावः। खरि चेत्यादीनामपि पूर्वपाठे तु बहूपप्लवः। न च 'लीढः' इत्यादावपि ष्टुत्वस्याऽसिद्धत्वेन ढपरत्वाऽभावाल्लोपवैयर्थ्याऽऽपत्त्या, पूर्वत्राऽसिद्धमित्यस्यैतद्विषये बाधाऽऽवश्यकत्वेन, 'गुडलिड्ढौकनम्' इत्यत्राऽपि लोपाऽऽपत्तिरिति वाच्यम्। जश्त्वा[4]ऽपेक्षया ढलोपस्य बहिरङ्गतयाऽप्यसिद्धत्वेन, तद्बाधे मानाऽभावात्। किञ्च स्वैकवाक्यताऽऽपन्नपूर्वत्राऽसिद्धबाधापेक्षया, पश्चादुपस्थितपराऽङ्गतद्बाधस्यैव न्याय्यत्वादित्य[5]ाहुः]।

अणः **किमिति**—एक्षु विशेषाऽभावेन, 'परिवृढः' इत्यादिनिर्देशात् ऋकारेऽप्रवृत्तेर्ऌकारस्याऽसम्भवेन, दीर्घश्रुत्युपस्थापिताऽच्परिभाषयैव सिद्धे[6]-

१. क. कुण्डलितः ख. ग. पाठः।
२. 'येन नाऽप्राप्तिन्यायेन' इति ग. पुस्तके नास्ति।
३. ख. पाठः।
४. 'जश्त्वापेक्षया' इत्यारभ्य 'मानाभावात्। किञ्च' इत्यन्तः क. ग. पाठः। ख. नास्ति।
५. 'इत्याहुः' इति क. नास्ति।
६. 'सिद्धिरिति' इति ख. पाठः।

रिति प्रश्नः । ज्ञापकसिद्धवचनकल्पने लाघवाऽभाव इत्युत्तराऽऽशयः ।

अत्र अण् पूर्वेणैव[1] । व्याख्यानात् ।

**तृढो वृढ इति**—ऊदित्वेन वेट्कत्वात् 'यस्य विभाषा' (७।२।१५) इति निष्ठायां नेट् । ढत्व-धत्व-ष्टुत्व-ढलोपाः । 'ढो ढे लोपः' (८।३।१३) इत्येतद्दृष्ट्या ष्टुत्वन्तु नाऽसिद्धम् । सामर्थ्यात्[2] ।

तृंहू इति—'नकारजावनुस्वारपञ्चमौ झलि धातुषु' इति वृद्धोक्तेरनिदितामिति नलोपे 'तृढः' इति रूपम् । क्वचित्तु 'तृहू-हिंसायाम्' इत्येव पाठः ।

(यत्तु[3] प्राचा-'दृढः' इति प्रत्युदाहृतम् । तन्न । 'दृढ'निपातनं दृंहेर्नकारलोपाऽर्थम्, परस्य ढत्वाऽर्थं च, अन्यथा घत्वं प्रसज्येत' इति 'दृढः स्थूलबलयोः' (७।२।२०) इति सूत्रस्थभाष्यप्रामाण्येन तत्र ढलोपस्यैवाऽभावात् । न चेडभावो ढत्वं च निपात्यताम्, धत्वष्टुत्वढलोपास्तु भविष्यन्त्येवेति वाच्यम् । 'परिद्रढय्य' इत्यत्र 'ल्यपि लघुपूर्वात्' (६।४।५६) इति णेरयादेशो न स्यात् । तथा 'पारिदृढी कन्या' इत्यत्र ष्यङ् च स्यात् । ढलोपस्याऽसिद्धत्वेन गुरूपोत्तमत्वादित्यनेन भाष्ये एव दूषितत्वात् । अनिदितो दृहेस्तु 'दृहितम्' इत्येवेष्यत इयि **कैयटः** ।

यत्तु **वामनो** 'दृहेरप्येतन्निपातनम्' नलोपवर्जम्, इत्याह । तन्न । 'दृंहेर्नकारहकारलोपाऽर्थम् इति भाष्यविरोधात् । यत्तु **प्रसादकृता**—'दृंहेर्निष्ठायामागमशास्त्रस्याऽनित्वादिडभावे, 'वा द्रुह' (८।२।३३) इत्यत्र 'वेति-योगविभागात् पक्षे घत्वाऽभावे, ढत्वे, ढलोपे चेदं प्रत्युदाहरणम् । अस्य ष्यङि णेरयभावे चेष्टाऽऽपत्तिः' इत्युक्तम् । तदेतेन परास्तम् । त्वदुक्तरीत्या

---

१. **'अत्राऽण् पूर्वेणैव । अचाऽणो विशेषणेन सामर्थ्यात्' इति ख. ग. पाठः ।**

२. **'ढो ढे लोप इत्येतद्दृष्ट्या ष्टुत्वन्तु नासिद्धम् । सामर्थ्यात्' इति पाठः ख. ग. नास्ति । केवलं क. दृश्यते ।**

३. **क. कुण्डलितः, ख. पाठः ।**

दृंहेरपीडभावढत्वयोः सिद्धाविण्निषेधप्रकरणे 'दृढ' इतिनिपातनस्य व्यर्थत्वाऽऽपत्तेरित्यलम्[1] ।

नन्वेवं 'ढ्रलोपे' इतिसप्तमीनिर्देशेनैव पूर्वत्वलाभे 'पूर्वस्य' इति व्यर्थमत आह-**पूर्वग्रहणमिति**। न चोत्तरपदाऽधिकारस्य विच्छिन्नत्वात्, ढसाहचर्येण च सर्वत्र प्रवृत्तिसिद्धौ पूर्वग्रहणं व्यर्थमिति वाच्यम्। तत्सामर्थ्येन रोरसिद्धत्वस्य बाधात्। तेन 'अजर्घाः' इत्यादिसिद्धिरित्याहुः)।

'अजर्घाः' इत्यादौ यद्वक्तव्यं तत्प्रागेवोक्तम्।

**विप्रतिषेधे** (१।४।२)—'वि'-'प्रति' पूर्वात् कर्मव्यतिहारे वर्त्तमानात् सेधतेर्घञि विविधम्=प्रतिकूलं गमनमित्यर्थकतया परस्परविरोधा[2]ऽर्थो 'विप्रतिषेध'शब्दः। तत्र नित्यस्याऽऽवश्यकतया, अन्तरङ्गस्य ज्ञापकादिना, अपवादस्य वचनप्रामाण्याद् बाधकत्वे स्थिते, तद्भिन्नोऽस्य विषय इत्याशयेनाऽऽह—**तुल्यबलेति**। द्वयोः शास्त्र[3]योः क्वचिल्लब्धाऽवकाशयोरेकत्र[4] प्रयोगे युगपदसम्भवि स्वस्व[5]कार्यसमर्पणं च सः। एतच्च[6] प्रकृतसूत्रे भाष्ये स्पष्टम्।

तत्र प्रायेण एकस्य कार्यद्वययोगकृतेऽसम्भवे एवैतस्य प्रवृत्तिः। यथा 'वृक्षेभ्यः' इत्यादौ। तत्र हि दीर्घैत्वयोर्युगपत् स्वस्वनिमित्तेनाऽऽनन्तर्यस्याऽसम्भवः। इदमिको गुणेत्यत्र **कैयटे**। क्वचित् केवलाऽसम्भवेऽपि। यथा-'शिष्टात्' इत्यादौ। अत्र हि तातङ्-शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तेनाऽऽनन्तर्याऽसम्भवः। यद्यपि तातङादेः स्थानिवत्त्वेनाऽस्त्येव तत्,

---

१. मनोरमाशब्दरत्नस्थोऽयं ग्रन्थोऽतोऽत्र क. कुण्डलितः।

२. 'विरोधार्थकः' इति ख. पाठः।

३. 'शास्त्रयोरिति' ख. पाठः।

४. 'रेकस्मिन् विषये' इति ख. पाठः।

५. 'विषये कार्यद्वयसमर्पणं च सः' इति क. ग. पाठः।

६. 'एतच्च' इत्यारभ्य 'कैयटाद्युक्तं चिन्त्यम्' इत्यन्तः क. पाठः।

तथाप्यतिदेशप्रवृत्त्युत्तरमेव, न तु तत्प्रवृत्तिकाले इति, युगपदसम्भवोऽस्त्येवेति, परत्वात् तातङि सकृद्गति (प० ४०) न्यायेन न शाभावः। युगपदसम्भवाऽभावे तु नास्य प्रवृतिरिति 'इको गुणवृद्धी' (१।१।३) 'अदसो मात्' (१।१।१२) 'पुंवत्कर्मधारय' (६।३।४२) इत्यादौ भाष्ये स्पष्टम्। एवञ्चाऽऽदिवृद्धिरन्त्योपधावृद्धी परत्वाद् बाधते इति कैयटाद्युक्तं चिन्त्यम्।

तत्र व्यक्तौ[1] पदार्थे प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयोस्तत्तल्लक्ष्यविषययोरचारितार्थ्येन, पर्यायेण द्वयोरपि प्राप्तौ,'परमेव' इति नियमाऽर्थमिदम्। तेन तिसृणामित्यत्र यौगपद्याऽसम्भवेन[2] (त्रयादेशात्[3] परत्वात्) तिस्रादेशे, पुनः स्थानिवत्त्वेन त्रयादेशो न। तदेतत् पठ्यते 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' (प० ४०) इति।

(अत्र[4] पक्षे तद्विधेयजातीयकार्ययोरवकाशेनैव द्वयोः सावकाशत्वं बोध्यम्)। अत्र[5] पक्षे एतन्नियमसामर्थ्या[6]दितल्लक्ष्यविषयकपूर्वशास्त्राऽनुपप्लव एवेति बोध्यम्[7]।

जातिपक्षे तु-उद्देश्यतावच्छेदकजात्याक्रान्ते क्वचिच्चरितार्थयोर्द्वयोः[8] शास्त्रयोः सत्प्रतिपक्षन्यायेन युगपदुभयाऽसम्भवरूपविरोधस्थले उभयोरप्यप्राप्तौ 'परं भवति' इति विध्यर्थमिदम्। तस्मिन्[9] कृते यदि पूर्वस्याऽपि

---

१. 'व्यक्तिपदार्थे' ग. पाठः।

२. 'यौगपद्याऽसम्भवेन' इति क. पाठः। ख. ग. नास्ति।

३. ख. ग. पाठः।

४. ख. ग. पाठः।

५. 'अत्र पक्षे' इति ख. ग. नास्ति।

६. 'सामर्थ्याच्च' ख. ग. पाठः।

७. 'इति तत्त्वम्' ख. पाठः।

८. 'द्वयोः सत्प्रतिपक्षन्यायेन विरोधस्थले' इति ख. ग. पाठः।

९. 'परस्मिन्कृते' ख. ग. पाठः।

निमित्तमस्ति, तदपि भवत्येव । यथा 'भिन्धि' इत्यत्र धेः परत्वात् तातङि पुनर्धिर्भवति । अत्र[1] हि तातङ्धिभावयोर्न युगपदेकस्थानिसम्बन्धस्य, अङ्गरूपनिमित्तानन्तर्यस्य वा सम्भव इत्यसम्भवोऽस्तीति दिक् । (तदेतत्[2]-पठ्यते 'पुनः प्रसङ्गविज्ञानात् सिद्धम्' इति । अत्र पक्षे लब्धाऽवकाशयोर्द्वयोरेकत्र विषये सत्प्रतिपक्षन्यायेन कार्यद्वयाऽप्राप्तिरेव विरोधः) ।

केचित्तु[3] 'व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोति, न जातिपक्षे' इत्यत्र मानाऽभावः । जात्याश्रयसकलव्यक्तिबोधनार्थमेव जातिपक्षाश्रयणस्य भाष्ये दर्शनात् । तस्मादेकस्मिन् युगपदुभयोः कार्ययोः सम्भवाऽसम्भवात् पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे, नियमार्थमिदमिति सकृद्गतिन्याय (प० ४०) सिद्धिः । 'अयं न्यायो नहि व्यक्तिपक्षे एव सर्वविषयो न जातिपक्षे इत्यत्र मानमस्ति' इति शास्त्रीयदृष्टान्तमूलकोऽयं न्यायो भाष्ये उक्तः ।

यद्वा 'यथा तुल्यबलयोरेकः प्रेष्यो भवति, स तयोः पर्यायेण कार्यं करोति, यदा तमुभौ युगपत् प्रेषयतः, नानादिक्षु च कार्ये, तदोभयोर्न करोति, यौगपद्याऽसम्भवात्, तथा शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्त्यसम्भवादप्रतिपत्तौ प्राप्तायामिदं विध्यर्थमिति पुनः प्रसङ्गविज्ञानसिद्धिः ।

किञ्च व्यक्तिपक्षेऽप्यन्यव्यक्तिविषयलाभेन चरितार्थयोरियं व्यक्तिर्विरोधात् स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यत्वात् । जातिपक्षेऽपि तज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव, नैतद्विषयकत्वमित्यत्र विनिगमनाऽभावाच्च । तत्र लक्ष्यानुसारात् क्वचिच्छास्त्रीयदृष्टान्ताश्रयणम्, क्वचिल्लौकिकदृष्टान्तस्याऽऽश्रयणमिति भाष्यसम्मतः पन्था इत्याहुः । तदाह—**परं कार्यमिति** । कार्ये परत्वं च परशास्त्रविहितत्वम् ।

---

१. 'अत्र हि' इत्यारभ्य 'इति दिक्' ख. पाठः ।

२. ख. ग. पाठः ।

३. 'केचित्तु' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. पाठः । ख. ग. नास्ति ।

**इति लोप इति**—न च 'रो रि' (८।३।१४) इत्यपेक्षया[1] नित्यमुत्वम्, कृतेऽपि[2] तत्र स्थानिवत्त्वेनोत्त्वप्राप्तेरिति वाच्यम्। 'भोभगो'[3] (८।३।१७) इतिसूत्रभाष्योक्तरीत्याऽल्विधित्वात्। किञ्च लोपोत्तरं दीर्घप्रवृत्त्या उत्वाऽप्राप्तेः[4] (कृता[5]ऽकृतप्रसङ्गित्वाऽभावात्), स्थानिवत्त्वेन[6] तद्धर्माऽतिदेशेऽप्युच्चारणप्रसङ्गरूपस्थानषष्ठ्यर्थाऽभावेन, स्थान्यादेशभावस्य निरूपयितुमशक्यत्वाच्च।

अत एव 'नखनिर्भिन्नः' इत्यादावैसादिकं न। न च निरनुबन्धकपरिभाषया नाऽत्र 'रो रि' (८।३।१४) इत्यस्य प्राप्तिः। वर्णग्रहणे तदप्रवृत्तेः। स्पष्टं चेदम् 'औङ आपः' (७।१।१८) इत्यत्र भाष्ये। न च विप्रतिषेधसूत्रं प्रत्यपि त्रिपाद्या असिद्धत्वम्। अस्याः परिभाषात्वेन कार्यकालपक्षेऽदोषात्। अन्यथा 'ङमो ह्रस्वात् (८।३।३२) (अचि[7] ङमुण् नित्यं' 'डः सि धुट्' (८।३।२९)) इत्यादौ कार्यकालपक्षे 'तस्मिन्निति निर्दिष्टे पूर्वस्य' (१।१।६६) 'तस्मादित्युत्तरस्य'(१।१।६७) इत्यनयोर्द्वयोरपि त्रिपादीस्थत्वेन विप्रतिषेधसूत्राऽप्रवृत्तौ,[8] 'उभयनिर्देशे पञ्चमीनिर्देशो बलवान् परत्वात्' इति तस्मिन्निति सूत्रस्थाऽऽकरग्रन्थानामसङ्गतिः स्पष्टैव। न च तत्र यथोद्देशपक्ष एवाऽऽश्रीयते। एवं हि 'ङमः'[9] (८।३।३२) इत्यादीनामसिद्धत्वात् तत्र[10] तयोः परिभाषयोरप्रवृत्त्यापत्तेः। कार्यकालपक्षे तु

---

१. 'रो रीतिलोपापेक्षया' इति ख. ग. पाठः।
२. 'कृतेऽपि लोपे स्थानिवत्त्वेन' ख. ग. पाठः।
३. 'भोभगोइतिसूत्रभाष्योक्तरीत्याऽल्विधित्वात्। किञ्च' इति क. पाठः। ख. ग. नास्ति।
४. 'उत्वाप्रवृत्तेः' ख. ग. पाठः।
५. क. नास्ति। ख. ग. पाठः।
६. 'स्थानिवद्भावेन' ख. ग. पाठः।
७. ख. ग. पाठः।
८. 'सूत्राऽप्रवृत्तौ तस्मिन्निति सूत्रस्थोभयनिर्देशे पञ्चमीनिर्देशो बलवानित्याकरग्रन्थानाम्' इति ख. ग. पाठः।
९. 'एवं हि डः सि धुडित्यादीनाम्' इति ख. ग. पाठः।
१०. 'तत्र परिभाषाऽप्रवृत्त्यापत्तेः' ख. ग. पाठः।

(पार्थक्येन[1] तयोरप्रत्यायकत्वात्) कार्येण स्वसंस्काराय स्ववृत्तिलिङ्ग-चिह्नितपरिभाषा-संज्ञानामाक्षेप इति—अत्रोपस्थितिरिति स्पष्टम् 'पूर्वत्राऽसिद्धम्' (८।२।१) इति सूत्रे भाष्ये[2]।

'कार्यकाल'शब्दस्य चाऽयमर्थः—कार्येण काल्यते=स्वसंस्काराय स्व-सन्निधिं प्राप्यते[3]' इति। 'यथोद्देशम्' इत्यस्य च उद्देशम्=स्वदेशमनति-क्रम्य वर्त्तते इत्यर्थः। दीपवदेकदेशस्थितमेव सर्वस्य[4] संस्कारं करोतीति तात्पर्यम्। प्रधानानि संस्काराय स्वदेशं प्रापयतीति वा।

अयं भावः—यथाश्रुतग्राही 'तस्मिन्निति' इत्यादेः 'यत्र सप्तम्यन्तः शब्दस्तत्र पूर्वस्य कार्यम्' इत्यर्थः प्रतिपद्यते। 'सप्तमीनिर्देशः क्व' इति तु तदा न पर्यालोचयति। पश्चात् 'इको यणचि' (६।१।७७) इत्यादौ दृष्टे, तद्विहितं कार्यं स्वदेशस्थयैव परिभाषया पूर्वस्य प्रतिपद्यते, तद्वाऽत्राऽप-कृष्य वाक्यैकवाक्यतया विशिष्टार्थं प्रतिपद्यते।

व्युत्पन्नस्तु तस्मिन्नित्यादेः (केवलस्य[5]) अत्यन्तपारार्थ्यमवगत्य, यथा-श्रुतमपि तदर्थमविचार्यैव, कार्यप्रदेशे सप्तम्यन्तं दृष्ट्वा[6], तेनैतत् तत्राऽऽ-क्षिप्य एकवाक्यतया वाक्यार्थं प्रतिपद्यते इति तं प्रति कार्यकालपक्ष इति[7]।

तदुक्तम् 'पूर्वत्राऽसिद्धम्' (८।२।१) इति सूत्रे भाष्ये–'त्रिपाद्या असिद्ध-त्वात् तत्र संज्ञापरिभाषाणां कथमुपस्थितिः' इत्याशङ्क्य, सिद्धस्य[8] परि-

---

१. ख. ग. पाठः। क. नास्ति।

२. 'भाष्यकैयटयोः' इति ग. पाठः।

३. 'प्राप्यते तदित्यर्थः' ख. ग. पाठः।

४. 'सर्वस्यापि' ख. ग. पाठः।

५. ख. ग. पाठः।

६. 'दृष्ट्वा तदाक्षिप्तमिदं तत्राऽऽनीय पदैकवाक्यतया वाक्यार्थम्' इति ख. ग. पाठः।

७. इतिः क. नास्ति।

८. 'सिद्धस्य' इत्यारभ्य 'इत्याशयेन' इत्यन्तोऽयं क. पाठः। ख. ग. नास्ति।

भाषादेस्तद्दृष्टयाऽसिद्धेनाऽपि कार्येणाऽऽकर्षसम्भव इत्याशयेन 'यद्यपीदं तत्राऽसिद्धम्, तत्त्विह सिद्धम्' इत्युक्त्वा[1], यथोद्देशाऽभिप्रायेण 'कथम्' इति प्रश्ने, 'कार्यकालं संज्ञापरिभाषम्, यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्' इति। (एत[2]च्च भाष्यप्रदीपोद्द्योते तत्रैव विस्तरेण प्रतिपादितम्)।

न च कार्यकालपक्षे कथं परत्वम्, एकदेशस्थत्वादुभयोः, स्पष्टं चेदम् 'इको गुणवृद्धी' (१।१।३) इत्यत्र **कैयटे** इति वाच्यम्। अत्राऽष्टाध्यायी-पाठकृतपरत्वस्याऽऽश्रयणेनाऽदोषात्। न हि 'कार्यकालपक्ष'इत्येतावता तदपैति। ध्वनितं चेदं 'तस्मिन्निति (१।१।६६) सूत्रे भाष्ये। **कैयटस्तु** प्रौढिवाद एव। अन्यथा सर्वेषां शास्त्राणां प्रयोगाऽर्थत्वेन एकप्रयोगरूपैक-देशस्थत्वात् क्वाऽपि परत्वं न स्यात्। पाठकृतपरत्वाऽऽश्रयणे तु प्रकृतेऽपि न दोषः।

न चाऽस्य परिभाषात्वे विध्यङ्गत्वेन, कथं परिभाषानियामकत्वमिति वाच्यम्। 'कार्य'ग्रहणेन कार्यमात्रे प्रवृत्तिबोधनात्। अत एव 'कार्य'-ग्रहणं चरितार्थमित्याहुः[3]। कार्यका[4]लपक्षेऽपि नैषा इक्परिभाषादिवद् विध्ये-कवाक्यताऽङ्ग[5]त्वात् स्वकार्यनिष्पादिका, किन्तु वाक्यभेदेनैव कार्यं व्यव-स्थापयति। यथा 'वृक्षेभ्यः' इत्यादावेत्त्वदीर्घयोः प्राप्तयोः परमेत्त्वं प्रवर्त्त-यति। एवम् 'असिद्धं बहिरङ्गम्' (प० ५१) इत्यादयोऽपीति 'खरवसा-नयोः (८।३।१५) इत्यत्र कैयटे स्पष्टम्।

त्रिपाद्यान्तु नाऽस्याः प्रवृत्तिः। सिद्धाऽसिद्धयोर्विप्रतिषेधाऽभावात्। तदाह–**असिद्ध[6]त्वादिति**।

न चैवमाभाऽधिकारीयशास्त्रविषये इयङ्णिलोपयोर्विप्रतिषेधाऽस-

---

१. 'इत्युक्त्वा तावताऽस्यसिद्धिरित्यभिप्रायके कथमिति' इति ख. पाठः।

२. ख. ग. पाठः। क. नास्ति।　　३. 'आहुः' इति क. नास्ति।

४. 'कार्यकालपक्षे' इत्यारभ्य 'तदाह' इत्यन्तः क. पाठः। ख. ग. नास्ति।

५. 'विध्येकवाक्यतां गत्वा स्वकार्यं' इति क्वचित् पाठः।

६. इतोऽग्रे–'न च तुल्यन्यायादा भाधिकारीयशास्त्रविषये विप्रतिषेधानुप-पत्तिः। एवञ्चेयङ्णिलोपयोर्विप्रतिषेधाऽसङ्गतिः। एकस्यासिद्धत्वे' इति ग. पाठः।

ङ्गतिः, एकस्याऽसिद्धत्वे तदभावे, द्वयोरसिद्धत्वे तदभावस्य कैमुतिकन्यायेन सिद्धत्वादिति वाच्यम्। वैषम्यात्। एकस्याऽसिद्धत्वे हि सिद्धेन सह तुल्यबलत्वाऽभाव इति तदप्राप्तिः। द्वयोरप्यसिद्धत्वे तु तदक्षतेः। (पर[1]स्परस्मात् परस्परस्यासिद्धत्वेन पर्यायप्रसङ्गे, नियमार्थं शास्त्रप्रवृत्तेर्दुर्वारत्वाच्च)।

न च कार्यकालपक्षेऽस्या अप्याभीयत्वेन विप्रतिषेधेन प्रवर्त्स्यमानसूत्रस्याऽसिद्धत्वात् कथं विप्रतिषेधः? कार्यकालपक्षे तदुपस्थितिसामर्थ्येन तद्विषयेऽसिद्धत्वबाधात्। ध्वनितं चेदं 'जनसनखनाम्' (६।४।४२) इतिसूत्रे भाष्ये।

न[2] चैवं 'लेखाभ्रू'शब्दात् शुभ्रादि (४।१।१२३) ढकि, उवङः परत्वाद् 'ढे लोपोऽकद्र्वाः' (६।४।१४७) इति उलोपे, तस्याऽसिद्धत्वादुवङापत्तिः। सकृद्गति (प० ४०) न्यायाऽऽश्रयणात्)।

**उत्वमेवेति**—सिद्धाऽसिद्धयोरतुल्यबलत्वेन विप्रतिषेधसूत्राऽप्रवृत्तौ, निष्प्रतिपक्षत्वादुत्वमेवेत्यर्थः। (तदु[3]क्तं—'पूर्वत्राऽसिद्धे नाऽस्ति विप्रतिषेधोऽभावादुत्तरस्य' इति। **अभावादि**त्यस्याऽऽहार्याऽभावारोपादित्यर्थः। एतेन 'विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे' इत्यादि व्याख्यातम्)।

**एतत्तदोः** (६।१।१३२)—'प्रकृतिवदनुकरणम्' (प० ३६) इत्यतिदेशस्य वैकल्पिकत्वादत्वैकशेषयोरभावः। किञ्चा[4]ऽनुकार्यस्वरूपभङ्गभिया कोशे इवैकशेषाऽभावः।

**यः सुरिति**—सूत्रे 'सु' इति लुप्तषष्ठीकं पृथक्पदमिति भावः। 'एतत्तदोरनन्तरः' इत्यर्थः। तेन 'परमस ददाति' इत्यादौ न दोषः। न च गौणेऽतिप्रसङ्गः। तत्र त्यदाद्यत्वाऽभावेन हल्ङ्यादिलोपस्य दुर्वारत्वात्।

---

१. ग. पाठः। क. ख. नास्ति।

२. ख. ग. पाठः। क. नास्ति।

३. 'तदुक्तं पूर्वत्रासिद्धे' इत्यारभ्य 'व्याख्यातम्' इत्यन्तः क. कुण्डलितः ख. ग. पाठः।

४. 'किञ्चानुकार्यस्वरूपभङ्गभिया कोशे इवैकशेषाभावः इत्ययं क. पाठः, ख. ग. नास्ति।

'सु' इति तु प्रथमैकवचनमेव गृह्यते, उत्तरसूत्रे तस्यैव[1] सम्भवात्।
[2]अन्ये तु-'एतत्तदर्थगतसङ्ख्याऽभिधायी यः सुः इत्यर्थः। अर्थद्वारकसम्बन्धाऽऽश्रये लिङ्गन्तु 'अनञ्समासे' इति। विहितविशेषणे तु तद्वैयर्थ्यं स्पष्टमेवेत्याहुः।

**एष विष्णुरिति**—न चाऽत्र 'भोभगो' (८।३।१७) इति यत्वे, 'हलि सर्वेषाम्' (८।३।२२) इति लोपेन[3] सिद्धिरिति वाच्यम्। खरि फलस्य सत्त्वात्। तदेतदाह**—स शम्भुरिति। अकोः किमिति**—साऽकच्कस्य शब्दाऽन्तरत्वादप्राप्तिरिति **प्रश्नः। एषक** इति—अयमेव निषेधस्तन्मध्यपतित (पृ० ९१)न्यायज्ञापक इति बोध्यम्। स्पष्टं चेदं 'येन विधिः' (१।१।७२) इतिसूत्रे भाष्ये।

**अनञ्समासे किमिति**—नञ्तत्पुरुषस्य पूर्वपदार्थप्रधानत्वेन तच्छब्दार्थस्योपसर्जनत्वात् त्यदाद्यत्वाऽभावे, हल्ङ्यादिलोपो दुर्वार इति प्रश्नः। इदमेव ज्ञापकम्—नञ्समासे उत्तरपदार्थप्राधान्यस्य, गौणत्वेऽपि नञ्समासे उत्तरपदार्थप्राधान्यप्रयुक्तकार्यस्य वेत्युत्तराऽभिप्रायः।

**हलि किमिति**—तच्छब्दस्य लोपे पादपूर्त्तौ सत्यामेवाऽचि लोपविधानादन्यत्र हल्येव लोपेन, तत्साहचर्यादेतच्छब्दस्याऽपि हल्येव भविष्यतीति **प्रश्नः।** 'साहचर्यमनित्यम्' इत्युत्तराऽभिप्रायः।

**सोऽचि** (६।१।१३४)—'सस्' इति प्रथमान्तस्य लुप्तषष्ठीकमनुकरणमित्याह—**स इत्यस्येति। सेमामविड्ढीति**—द्वादशाऽक्षरपादा 'जगती'-च्छन्दः। **स एवमुक्त्वेति**—लोपेऽत्र पादाऽपूर्त्तेर्न लोप इति भावः। [4]**अवधारणन्त्विति**-वृद्धैर्व्याख्यातमवधारणं त्वित्यर्थः। **बहुलग्रहणानुवृत्त्या लभ्यत**

---

१. 'तस्यैव सम्भवेनाऽनुनासिकोकारविशिष्टत्वानुमानात्' ग. पाठः।
२. 'अन्ये तु' इत्यारभ्य 'स्पष्टमेवेत्याहुः' इत्यन्तः क. कुण्डलितः, ख. ग. पाठः।
३. 'यलोपेन' ख. पाठः।
४. 'अवधारणन्त्विति' इत्यारभ्य 'सूचितमित्यलम्' इत्यन्तः क. पाठः। ख. ग. नास्ति।

इति—गमकाऽन्तराऽभावादिति भावः। एवञ्च तदनुवृत्त्यैव क्वचिदप्रवृत्तौ सिद्धायामवधारणपरतया व्याख्यानं व्यर्थमिति भावः। सर्वमेतत् 'अवधारणन्तु' इति तुना सूचितमित्यलम्।

[1]**बहुलग्रहणादिति**—यत्त्ववधारणाऽङ्गीकारे 'सास्मा अरम्' इत्यस्याऽसिद्धिः 'सः अस्मै अरम्' इतिच्छेदः तत्र रुत्वे, उत्वे, आद्गुणे, 'एङः पदान्तात् (६।१।१०९) इति पूर्वरूपे, लोपं विनाऽपि पादपूर्त्तेः। न च 'प्रकृत्याऽन्तःपादम्' (६।१।११५) इति प्रकृतिभावः शङ्क्यः। 'सोऽयमागात्' इत्यादाविवाऽत्रापि **प्रातिशाख्येन** निषिद्धत्वात्। यदि तु बहुलग्रहणात् क्वचिल्लोपं विना पादपूरणेऽपि भवतीत्यङ्गीक्रियते, तदा किमवधारणेन? बाहुलकात् क्वचिदप्रवृत्तिरेवाऽङ्गीक्रियताम्, तावताऽपि 'सोऽहमाजन्म' इत्यादिसिद्धेरिति। तन्न। छन्दस्यभावदर्शनेन लक्षणानां क्वाचित्कत्वकल्पनायाः क्वाऽप्यदृष्टत्वात्। लोके 'लोपे सत्येव पादपूरणे लोपो,नाऽन्यत्र' इत्येवं नियतशास्त्रार्थाऽर्थं नियमस्याऽऽवश्यकत्वाच्चेति [2]**गुरवः**।

इति स्वादिसन्धिः।

(इति बृहच्छब्देन्दुशेखरे पञ्चसन्धिप्रकरणम्)।

---

१. 'बहुलग्रहणादिति' इत आरभ्य 'गुरवः' इत्यन्तः क. कुण्डलितः ख. ग. पाठः।

२. श्रीभट्टोजीदीक्षितानां पौत्रा बृहच्छब्दरत्नकृतो हरिदीक्षिता एव श्रीनागेशभट्टानां गुरवः। एतेषां नाम्नैव च नागेशभट्टैर्लघुशब्दरत्नं निर्मितमिति प्रसिद्धिः।

# अथाजन्तपुँल्लिङ्गप्रकरणम्

स्वादिविधौ 'ङ्याप्प्रातिपदिकात्' (४।१।१) इत्यधिकारात् तद्घटकप्रातिपदिकत्वं प्रथमतो लक्षयति—**अर्थवदधातुरिति**। 'आरोपितो धातुः' इत्यादिर्वाच्योऽर्थः। 'धातुभिन्नम्' इति तु फलितोऽर्थः। अतो न पुंस्त्वाऽनुपपत्तिः। पर्युदासोऽयम्, न प्रसज्यप्रतिषेधः। वाक्यभेदाऽसमर्थसमासाऽऽपत्तेः।

अधातुः किम्? अहन्। न लोपो मा भूत्। सुबुत्पत्तिस्तु नाऽऽपाद्या। 'भूवादयः' (१।३।१) इत्यस्य लविधौ, तिबादि[1]विधौ चोपस्थितेर्निरवकाशतयाऽपवादैस्तिबादिभिर्बाध[2]ात्।

ननु प्रत्ययान्तत्वेन पर्युदास इति चेन्न। प्रत्ययलक्षणेनोक्तपर्युदासाऽप्रवृत्तेः' 'न ङिसम्बुद्ध्योः' (८।२।८) इतिनिषेधेन ज्ञापितत्वात्। कथमन्यथा राजेत्यादौ नलोपः स्यात्। न च राजेत्यादौ कृदन्तत्वात् प्र[3]वृत्तिः।

---

१. 'तिबादिविधौ' इति ख. ग. पाठः। क. नास्ति।

२. इतोऽग्रे—'प्रकृत्यर्थनिष्ठसंख्याद्यभावाच्च। ननु कार्यकालपक्षे प्रत्ययान्तत्वेन पर्युदासः। यथोद्देशेऽपि प्रत्ययान्तत्वस्य भावित्वेन, 'उपजनिष्यमाणोऽप्यपवादः' (प० ६६) इति न्यायेन, अकृतव्यूह(प० ५७)परिभाषया च, संज्ञाप्रवृत्तिकाले फलाऽभावेन च संज्ञाया अप्रवृत्तेरिति चेन्न। प्रत्ययलक्षणेनोक्तपर्युदासाऽप्रवृत्तेः' इति ख. ग. पाठः।

३. इतोऽग्रे—'कृत्तद्धितपदेनोपस्थितकृत्तद्धितप्रत्ययाऽन्तत्वप्रयुक्तनिषेधबाधेऽपीतरप्रत्ययान्तत्वप्रयुक्तनिषेधबाधे मानाऽभावात्। येन नाप्राप्ति-

अत्राऽप्यप्रत्यय[1] इत्यस्य सम्बन्धात् । अत एव 'दाक्षी' 'दिदक्षू' इत्यादौ न दोषः ।

न च सुब्लोपविषयमेव ज्ञापकमित्यधातुग्रहणं व्यर्थम् । 'असति बाधके प्रमाणानां सामान्ये पक्षपातः' इत्यर्थस्याऽपि ज्ञापनात् । अन्यथा सूत्रोपस्थितविशेषमादाय ङिसम्बुद्धिमात्रविषयकमेव तत् स्यादिति राजपुरुषाऽसिद्धिः स्यादिति सूत्राऽऽशयः । स्पष्टा चेयं रीतिः 'सार्वधातुकमपित्' (१।२।४) इत्यत्र भाष्ये[2] ।

एतेन[3] 'लोपविषयमेव तज्ज्ञापकम्' इत्यपास्तम् । अत एव 'इत्थम्भूतलक्षणे' (२।३।२१) इति सूत्रे 'कमण्डलुपाणिम्' इति समासे 'कमण्डलु'-शब्दात् तृतीयाऽऽपादनं **भाष्यकैयटोक्तं** सङ्गच्छते इति दिक् ।

यत्तु 'अर्थवदधातुरतिप्प्रातिपदिकम्' इत्येव सूत्रं कार्यम्[4] । 'तिप्तस्'

---

(प० ५९) न्यायात् । अस्य प्रतिप्रसवविधित्वात् । न च परत्वात् तस्याऽपि बाधः । 'निषेधाश्च बलीयांसो भवन्ति' (प० १२३) इति न्यायविरोधात् । पर्युदासेऽपि गम्यं प्रतिषेधमादाय न्यायप्रवृत्तिः सूपपादैव । अत एव दाक्षी दिदृक्षू'-इति क. कुण्डलितः ख. ग. पाठः ।

१. 'अत्राऽप्यप्रत्यय इत्यस्य सम्बन्धात्' इति क. पाठः । ख. ग. नास्ति ।

२. इतोऽग्रे—'नाऽसूया कर्त्तव्या यत्राऽनुगमः क्रियते' इति भाष्येणदृशप्रत्याख्यानानामयुक्तताध्वननाच्च । अनिर्णीतस्वरूपकभाविफलोद्देशेनापि पूर्वं संज्ञाप्रवृत्तिरित्येव यथोद्देशपक्षस्वरूपस्य प्रगृह्यसंज्ञाप्रकरणे कैयटेनोक्तत्वाच्चेति दिक्' इति—ख. ग. पाठः ।

३. 'एतेन' इत्यारभ्य 'संगच्छते इति दिक्' इत्यन्तः पाठो ग. नास्ति ।

४. इतोऽग्रे—कृत्समासश्चेत्येव सूत्र्यताम्' इति क. कुण्डलितः पाठः । ख. नास्ति । ग. तु 'अर्थवदधातुरतिप्प्रातिपदिकम्, कृत्समासश्च' इत्येव सूत्र्यताम् । तिप्तसीत्यारभ्य' इति पाठः ।

इत्यारभ्य सुपः पकारेण प्रत्याहार इति 'तिपं तिबन्तं च वर्जयित्वा' इत्यर्थः। 'तद्धित'ग्रहणं चोत्तरत्र न कार्यम्। यद्वा 'अविभक्तिरधातुः प्रातिपदिकम्' इत्यस्त्विति।

तन्न। 'पञ्चनावप्रियः' इत्यादौ 'पञ्चनाव' इत्यस्य प्रातिपदिकत्वाऽऽपत्तौ ङीबाद्यापत्तिः। तद्धिताऽन्तत्वनिमित्ता त्वस्य न प्रातिपदिकसंज्ञा, वक्ष्यमाणप्रशस्ताऽर्थवत्त्वाऽभावादित्युत्तरत्र स्फुटं निरूपयिष्यामः[1]।

य[2]दि त्वर्थाऽधिकाराऽनुरोधादत्र सूत्रेऽपि तादृशार्थवत्त्वमेव गृह्यते, तदा सुकर एव तथा न्यासः। ध्वनितं चेदं प्रकृतसूत्रे भाष्ये।

**प्रत्ययं प्रत्ययान्तमिति**—सूत्रे तन्त्राऽऽदिनोभयं विवक्षितम्। आवर्त्तिते प्रत्ययपदे प्रत्ययग्रहणपरिभाषया तदन्तग्रहणात् तदन्तपर्युदासः। न च संज्ञाविधौ (प० २७) इति निषेधः। प्रत्ययस्य यत्र संज्ञा तत्रैव तन्निषेधाऽङ्गीकारात्। अत एव तद्धितान्तस्य संज्ञाविधानं चरितार्थम्। केवलप्रत्ययपर्युदासे हि तद्वैयर्थ्यं स्पष्टमेव।

न चाऽस्याऽपत्यम्—'इः' 'इयान्' इत्यादौ प्रत्ययत्वप्रयुक्तनिषेधबाधाय तच्चरितार्थम्। 'अ अस् इ' इत्यवस्थायां सुब्लोपाय प्रवृत्तसंज्ञाया एकदेशविकृत(प० ३७)न्यायेन सुलभत्वात्। वक्ष्यमाणप्रशस्ताऽर्थवत्त्वस्य केवलतद्धितेऽभावेन, 'तेन केवलतद्धितस्यैव संज्ञाविधानम्' इति वक्तुमशक्यम्[3]।

---

१. एतदुत्तरम् 'वस्तुतष्टजन्तस्य विभक्तीतराऽनपेक्षयाऽर्थबोधकत्वाऽभावान्न प्रातिपदिकत्वम्। अप्रातिपदिकत्वान्न ङीप्। सुबपि न। सङ्ख्याया अभावात्, उक्तत्वाच्चेति ध्वनितं प्रकृतसूत्रे भाष्ये'—इति क. कुण्डलितः पाठः।

ग. तु—'निरूपयिष्यामः' इत्यतोऽग्रे 'तदेतद्ध्वनयन्नाह—प्रत्ययान्तमिति' इति पाठः।

२. 'यदि तु' इत्यारभ्य 'प्रकृतसूत्रे भाष्ये' इत्यन्तः ख. पाठः।

३. इतोऽग्रे–'न च 'इरियान्' इत्यादौ सम्भवः। यथोद्देशे फलाऽभावात्'

नन्वावृत्त्या केवलप्रत्ययपर्युदासे मानाऽभावः, फलाऽभावश्चेति चेन्न। 'सात्पदाद्योः' (८।३।१११) इति 'साति'ग्रहणस्यैव मानत्वात्। 'हरिषु' इत्यादौ प्रत्ययस्य प्रातिपदिकत्वे तत्सामर्थ्यादौत्सर्गिकैकवचने, तस्य लिङ्ग-सर्वनामनपुंसकत्वाऽऽश्रयेण लुक्यपि 'सात्पदाद्योः' इतिषत्वनिषेधः स्यादिति तद्व्यावृत्तिः फलं प्रत्ययनिषेधस्य। अत एव बहुचश्चित्वं चरिताऽर्थम्। अन्यथा प्रकृतिप्रत्यययोः समासे तद्वैयर्थ्यं स्पष्टमेव।

**केचित्तु** एषामर्थानां नपुंसकत्वं दुर्लभम्, स्वरूपाऽयोग्यत्वात्। 'विभक्त्यर्थप्रधान-क्रियाप्रधानयोर्न लिङ्ग-सङ्ख्याभ्यां योगोऽस्ति' इति 'ह्रस्वो नपुंसके' (१।३।४७) इति सूत्रे भाष्योक्तेः।

तत्र[1] विभक्त्यर्थप्रधानम्-उच्चैर्नीचैरिति। क्रियाप्रधानं-हिरुक्,पृथगिति। एषां क्रियाप्रधानत्वं क्रियामात्रविशेषणत्वरूपम्। स्वरादीनां तु 'स्वः पतिः' इत्यादौ नामार्थेऽप्यन्वयान्न क्रियाप्रधानत्वम्। न तु मुख्यं क्रियात्वं तदर्थस्य, क्रियान्तराकाङ्क्षादर्शनात्। अत एव नैतदर्थे कारकाणामन्वयः। क्रियामात्राऽविशेषणत्वाच्च न लिङ्गसङ्ख्यादिसम्बन्धस्तुमुनन्तादिवत्। स्पष्टं चेदम् 'तद्धितश्च' (१।१।३८) इतिसूत्रे **कैयटे**। 'क्रियाया न सङ्ख्यायोगः' इत्येतद् द्वित्वादिसङ्ख्याऽभावपरम्। 'एका क्रिया' इति तत्र भाष्योक्तेः। वस्तुतो हिरुगादयो वर्जनाद्यर्थाः। तेषां क्रियान्तराकाङ्क्षत्वेऽपि न लिङ्गादिसम्बन्धः। शब्दशक्तिस्वभावात्। 'न चैतयोरर्थयोर्लिङ्गादियोगोऽस्ति' इतिभाष्यस्यापि 'घञाद्यन्ताऽवाच्ययोः' इति शेषो बोध्यः। कल्पाऽऽद्यन्तस्य तु तथात्वेऽप्यस्त्येव। विचित्रत्वात् पदार्थशक्तीनाम्। एवं 'शयितव्यम्' इत्यादीनामपि। अत एव अव्ययाऽर्थस्य नामाऽर्थत्वेऽपि विशेषवचनाऽभावेन न केनाऽपि लिङ्गेन योगः। अत एव 'अव्ययीभावश्च' (१।४।१८)

---

—इति ख. ग. पाठः। क. कुण्डलितः। 'यथोद्देशे फलाऽभावात्। कृत्साहचर्येण तद्धितान्तमात्रे प्रवृत्तेश्च' इति तु ग. पाठः।

१. 'तत्र' इत्यारभ्य 'इति शेषो बोध्य.' इत्यन्तः क. पाठः। ख. ग. नास्ति।

इति नपुंसकत्वविधायकं चरितार्थम्[1]। एवं च तच्छ्रवणाऽऽपत्तिरपि दोष इत्याहुः।

समुदाये तन्निषेधस्तु प्रत्ययाऽन्तपर्युदासस्य फलम्[2]। तस्य प्रातिपदिकत्वे त्वौत्सर्गिकमेकवचनं[3] स्यात्[4]। किञ्च[5] 'सुपो धातु' (२।४।७१) इति लुक्[6] स्यात्।

किञ्च 'पचेरन्' इत्यादौ 'न'लोपः स्यात्। केवलप्रत्ययस्य व्यपदेशिवद्भावेन तु न सिद्धिः। यस्माद् विहितस्तदादित्वस्य दुर्लभत्वात्।

यदि[7] त्वशास्त्रीयधर्मस्याऽपि व्यपदेशिवद्भावेन लाभः, अत[8] एव भवतीत्यादौ 'भू' इत्यादेरङ्गत्वसिद्धिः। तदा व्यर्थैवाऽऽवृत्तिः। ध्वनितं चेदं भाष्ये इति पदसंज्ञा(१।४।१४)सूत्रे निरूपितम्।

अत एव 'इः' 'इयान्' इत्यादौ कार्यकालपक्षे तद्धिताऽन्तत्वप्रयुक्तसंज्ञासिद्धिः। न चैवमपि 'प्रत्ययान्तस्य चेत् तद्धितान्तस्यैव' इतिनियमेनैव सिद्धौ, प्रत्ययान्तपर्युदासो व्यर्थ इति वाच्यम्[9]।

---

१. 'चरितार्थमित्याहुः। समुदाये तन्निषेधस्तु' ग. पाठः।

२. 'फलं बोध्यम्' ख. ग. पाठः।　　३. 'कैकवचनं' ख. पाठः।

४. इतोऽग्रे–'किञ्च फिषोन्त उदात्तः' (फि० सू० १) इत्युदात्तः स्यात्। करोषीत्यादौ पित्त्वन्तु ङित्त्ववारणाय स्यात्। न च 'समासस्य' (६।१।२२३) इत्यन्तोदात्तविधानात् सखण्डेषु तदप्रवृत्तिः। पदपूर्वभागकसमुदायेऽप्रवृत्तिज्ञापनेनापि तस्य चारितार्थ्यात्'—इति ग. च. पाठः।

५. 'किञ्च सुबन्ते सुपो धात्विति' ग. पाठः।

६. 'सुपो लुक् स्यात्' ख. पाठः।

७. 'यदि तु 'पूर्वे पञ्चालाः' इत्यादौ समुदायधर्मस्यावयवे आरोपवदस्यापि समुदायधर्मस्यावयवे आरोपः सुलभः, अयमपि व्यपदेशिवद्भावपदार्थ इत्युच्यते, तदा व्यर्थैवाऽऽवृत्तिः' ग. पाठः।

८. 'अत एव' इत्यारभ्य 'सिद्धिः' इत्यन्तः क. पाठः। ख. ग. नास्ति।

९. एतदुत्तरम्—'विधिमुखेन प्रवृत्तौ सङ्कोचकवाक्यकल्पनाऽपेक्षया, निषेधमुखेन प्रवृत्तौ स्वार्थहानि–परार्थकल्पना-प्राप्तबाधरूप-दोषत्रयसहनाऽपेक्षया

भाष्ये—'अप्रत्यय इति किमर्थम्। काण्डे, कुड्ये। तद्धितनियमादिदं व्यर्थम्' इत्युपक्रमे उक्त्वा, सूत्रान्ते 'अप्रत्ययपदे पर्युदासे 'काण्डे' इत्यादौ पूर्वान्तवद्भावेन प्रादिपादिकत्वं प्राप्नोति' इत्याशङ्क्य, न दोषः। ह्रस्वविधौ 'नपुंसके यत्तस्य' इति वक्तव्यम्। नपुंसके च किम्? । यस्य तद्गुणः। कस्य च तद्गुणः? । 'प्रातिपदिकस्येति' इत्युक्तम्। तत्र 'प्रातिपदिकस्य' इत्यस्य-सत्त्व-प्रधानस्येत्यर्थः। अन्यथाऽन्तवत्त्वेन प्रातिपदिकत्वस्य सत्त्वात्

चाऽप्रत्ययपदस्यैव लघुत्वात्। ([1]ध्वनितं चेदं 'यस्य हलः' (६।४।४९) इति सूत्रे भाष्ये)।

किञ्च नियमस्य प्रातिपदिकविहितप्रत्ययाऽन्तत्वेन सजातीयविषयत्वे, धातुप्रकृतिप्रत्ययाऽन्तवारणाऽनापत्तेः। प्रत्ययत्वेन साजात्यग्रहणे—'पाचकः' इत्यादावपि संज्ञाऽनापत्तिः। कृद्ग्रहणन्तु 'लिट्' इत्यादौ मध्येऽपवाद(प० ६२)न्यायेनाऽधातुरिति निषेधबाधनेन चरिताऽर्थमित्याहुः।

कृदंशे बाध्यसामान्यचिन्ताऽऽश्रयणेन तु नियममाश्रित्याऽप्रत्ययग्रहणं भाष्ये प्रत्याख्यातम्। सा च तवाऽप्यावश्यकी। अन्यथाऽनन्तरत्वाद् येन नाप्राप्ति(प० ५९)न्यायेन च प्रत्ययाऽन्तनिषेधस्यैवाऽयं प्रतिप्रसवः स्यान्न त्वधातुरित्यस्य। परत्वन्तु 'निषेधाश्च बलीयांसः' (प० १२३) इत्यनेन तिरस्कृतम्। 'अधातुः' इति पर्युदासेनैव धातुभिन्नस्याऽप्रत्ययस्यैव ग्रहणम्। धातोरप्रत्ययत्वात्। प्रत्ययाऽन्तपर्युदासस्य तु नाऽनेन गताऽर्थता। पुत्रीयादेः प्रत्ययान्तस्याऽपि धातुत्वात्। एवं चाऽऽवृत्तिर्व्यर्था। किञ्च भाष्ये 'अप्रत्यय इति किमर्थम्। काण्डे कुड्ये' इत्यन्तः ख. ग. पाठः।

१. 'काण्डे इत्यत्र स्वरः प्रत्ययान्तभिन्नत्वात्, पूर्वान्तत्वेन वा प्रातिपदिकत्वं प्राप्नोति। प्रसज्यप्रतिषेधे 'ब्रह्मबन्धूः' इत्यसिद्धिरित्याशङ्क्य, प्रसज्यप्रतिषेधे 'नोङ्धात्वोः, (६।१।१७५) इतिज्ञापकादिना दोषमुद्धृत्य, पर्युदासेऽपि न दोषः। ह्रस्वविधो' इति ख. ग. पाठः।

1. ग. पाठः ख. नास्ति।

तदसङ्गतिः स्पष्टैव। एवं चाऽप्रत्ययग्रहणं व्यर्थमेव। प्रातिपदिकत्वेऽपि ह्रस्वाऽप्राप्तेः। फलाऽन्तरन्तु नाऽस्त्येव प्रत्ययाऽन्ते संज्ञाया इति तद्भाष्याशय[1]ः।

तथा हि—कृत्तद्धितव्यतिरिक्तप्रत्ययाऽन्ताऽर्थे सङ्ख्याकर्माद्ययोगात् सुपोऽप्राप्तिरेव। 'औत्सर्गिकमेकवचनम्' इत्यपि न। तथा सति सर्वतः सोरुत्पत्त्या, 'स्वन्तं पदम्' इत्येव सिद्धे, तत्र 'तिङ्'ग्रहणस्य, 'सुप' इति-प्रत्याहारग्रहणस्य च वैयर्थ्याऽऽपत्त्या, तत्सामर्थ्येन सुबन्त-तिङन्तेभ्यो निरर्थकौत्सर्गिकैकवचनाऽनुत्पत्त्याऽदोषात्।

प्रातिपदिकाऽवयवत्वात् सु[2]पो लुगापत्तिरपि न। धातुसाहचर्यात्, 'स्वमोः' (७।१।२३) इत्यारम्भाच्च विभक्तीतरसमभिव्याहृतप्रातिपदिकाऽवयवस्यैव तेन लुग्विधानात्। फिट्स्वरोऽपि विशेषविहिततत्तत्स्वरैर्बाधान्न भवति। 'समासस्य' (६।१।२२३) इत्यन्तोदात्तविधानेन सखण्डेषु तदप्राप्तेश्च। 'पचेरन्' इत्यादौ रन्तादेशोऽपि वक्तुं शक्यः। एवं स्मिनादेशेऽपि नकारोच्चारणसामर्थ्येन तयोर्नलोपस्य वारयितुं शक्यत्वाच्च। ह्रस्व-विधायकसूत्रस्थं प्रातिपदिकग्रहणं च सत्त्वप्रधानोपलक्षकम्।

एवं च प्रत्ययपर्युदासेऽपि फलाऽभावः। न च करोषीत्यादौ सिपः पित्त्वस्य ङित्त्वनिषेधे चरितार्थतया फिट्स्वराऽऽपत्तिः। 'अनुदात्तौ सुप्पितौ' (३।१।४) इत्यस्य यत् तत्रोपस्थानं तद्वैयर्थ्येन फिट्स्वरस्य तत्राऽप्रवृत्तेरिति सुधियो विभावयन्त्वित्याहुः।

'सप्तम्यधिकरणे च' (२।३।३६) इत्यादिनिर्देशैर्विभक्त्येकाऽऽदेशस्याऽन्तवत्त्वाऽभावज्ञापनात् 'काण्डे' इत्यादावन्तवत्त्वप्रयुक्तो न दोषः'। इति कश्चित्।

'अधातु-प्रत्ययौ' इत्येव सिद्धे नञ्द्वयोपादानं स्पष्टार्थम्।

---

१. 'इति तद्भाष्याशयः' इति ख. ग. नास्ति।

२. 'सुपो लुगित्यपि न सुब्विधिवैयर्थ्यापत्तेः। अर्थसन्देहापत्तेश्च। तस्माद् धातुसाहचर्याद् विभक्तीतरसमभिव्याहृतप्रातिपदिकाऽवयवस्यैव तेन लुक्। फिट्स्वरोऽपि' इति ख. पाठः।

महासंज्ञाकरणम्—'को धातुः, किं प्रातिपदिकम्, कः प्रत्ययः' इत्याथर्वणश्रुत्यनुरोधात्। डित्थादीन्यव्युत्पन्नानीहोदाहरणम्[1]। 'अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकम्' इति प्राञ्चः। **तन्न**। 'बहुपटवः' इत्याद्यर्थं सूत्रस्याऽऽवश्यकत्वात्।

वृत्तौ—**वर्जयित्वेति**। अर्थवच्छब्दस्वरूपस्य प्रातिपदिकसञ्ज्ञकत्वविशिष्टभवने कर्तृत्वात् तस्यैव वर्जने कर्तृत्वान्न क्त्वाऽनुपपत्तिः। 'बहु[2]च्पूर्वः' इत्येव तु सूत्रयितुमशक्यम्। 'बहुपटवस्तिष्ठन्ति' इतिवाक्यस्यापि संज्ञापत्तेरित्यादि वक्ष्यते। अर्थवत्सूत्रं विना समासग्रहणस्य नियमार्थताया वक्तुमशक्यत्वेन 'मूलकेनोपदंशम्' इत्यादावतिप्रसङ्गाच्चेति दिक्।

**पूर्वसूत्रेणेति**—'प्रत्ययग्रहणे यस्मात्' (प० २३) इतिपरिभाषया प्रत्ययाऽन्तत्वाऽभावादिति भावः।

नियमस्य सजातीय[3]विषयत्वात् साजात्यं दर्शयितुमाह—**पूर्वो भाग इति**। एतेन 'यत्तच्छब्दाऽर्थयोरननुगतत्वेन, शब्दाऽनुगमस्याऽप्रयोजकत्वेन, व्यवच्छेद्याऽननुगमेऽपि क्षत्यभावेन च, 'यत्र सङ्घाते' इत्यादि व्यर्थमेव' इत्यपास्तम्।

'पद'शब्देनाऽत्र स्वातन्त्र्येणाऽपि प्रयोगाऽर्हमर्थवद्गृह्यते। सरूप-(१।१।६४)सूत्रे भाष्ये 'सुबन्तानाम्' इत्यनेनेदमेवोपलक्ष्यते। अत एव[4] कृत्तद्धितेतिसूत्रे 'अर्थवत्समुदायानां **समास**ग्रहणं नियमार्थम्' इत्युक्तं भाष्ये। तेन 'गवित्ययमाह' इत्यादौ 'गो' इत्यादीनां सुबन्तत्वाऽभावेन पदत्वाऽभावेऽपि न समुदायस्य प्रातिपदिकत्वम्। [5]अनुकरणस्याऽनितिपरस्याऽपि

१. 'उदाहरणानि' ख. पाठः।

२. 'बहुच्पूर्वः' इत्यारभ्य 'अतिप्रसङ्गाच्चेति दिक्' इत्यन्तो ग. पाठः। क. कुण्डलितः। ३. 'सजातीयाऽपेक्षत्वात्' ग. पाठः।

४. 'अत एव' इत्यारभ्य 'इत्युक्तं भाष्ये' इत्यन्तः क. पाठः ख. ग. नास्ति।

५. एतत्स्थाने–'स्वातन्त्र्यं च विभक्तीतराऽपारतन्त्र्यरूपं विवक्षितमिति न दोषः। बहुपटव इत्यादौ' इति ग. पाठः।

प्रयोगसत्त्वेन तावन्मात्रस्याऽपि पृथक्प्रयोगार्हऽत्वात्। 'बहुपटः' इत्यादौ प्रातिपदिकत्वसिद्धये–स्वातन्त्र्येणेति। तत्र 'पूर्वं' इत्यस्य कस्मादित्याकाङ्क्षायां योग्यतमोपस्थितपरेषामपि स्वातन्त्र्येण प्रयोगाऽर्हाऽर्थवतामेव ग्रहणात् 'पुत्रकाम्या' इत्यादौ न दोषः।

**तदेतद्ध्वनयन्नाह—तेन वाक्यस्य नेति।** प्रातिपदिकत्वे हि वाक्ये सुपः श्रवणाऽनापत्तिः। न चाऽङ्गाधिकारविहितसुप्प्रत्ययनिमित्तकार्याणां वैयर्थ्याऽपत्तेः, सुबादेशविधायकवैयर्थ्याऽऽपत्तेश्च, न लुक्, वाक्यस्यैव प्रयोगादिति वाच्यम्। अलुक्समासविषये तेषां चारितार्थ्येन, तद्विषय-

---

१. 'अर्थवतामेव ग्रहणात् 'जन्मवान्' 'राजा' 'इयान्' इत्यादौ न दोषः। अत एव 'नास्तिकः' इत्यादौ 'न' इत्यस्य पूर्वखण्डत्वेऽपि न दोषः। 'अस्तिक' इत्युत्तरखण्डस्य पृथक्प्रयोगाऽनर्हत्वात्[1]।

केचित्तु 'पूर्वो भागः पदम्' इत्यत्र पदं तत्संज्ञकमेव। 'पूर्वो भागः पदम्' इत्युपलक्षणम्––'उत्तरभागः पूर्वभागप्रकृतिकप्रत्ययभिन्नः इत्यस्य। तेन 'जन्मवान्' 'राजा' 'इयान्' इत्यादौ न दोषः। 'तद्धित'ग्रहणम्-औपगवादौ कृतार्थम्। यद्वा–प्रकृतिप्रत्ययभावाऽनापन्नसङ्घातविषयको नियम इत्याहुः। तन्न। आद्यपक्षे 'गवित्ययमाह' इत्यादौ दोषात्। किञ्च 'वृषण्वसुः' इत्यादिसमासे पूर्वभागस्य भत्वेन, तत्साजात्येन 'पूर्वो भागः पदम्' इत्यर्थलाभाऽसम्भवात्' इति क. कुण्डलितः ख. ग. पाठः।

एतदग्रे च––'न च राजपुरुषावित्यन्तर्गतपुरुषावित्यस्य संज्ञा स्यात्। तत्पुरुषभागस्य पुरुषेत्यस्योत्तरपदत्वे चेतिनिषेधेनाऽपदत्वात्, अर्थवत्त्वाऽभावाच्चेति वाच्यम्। अर्थवत्त्वेनैव वारणात्। प्रत्ययार्थो हि विशिष्ट एवाऽन्वेति, न तूत्तरपदार्थमात्रे, येन पुरुषावित्यादेरर्थवत्त्वं स्यात्'–इति ग. पाठः।

---

1. इत उत्तरं 'समासस्येदृशत्वं तु भूतपूर्वगत्या बोध्यम्' इति ग. पाठः।

वाक्ये लुगापत्तेर्दुर्वारत्वात्। किञ्च[1] 'पिण्डीं प्रवेशय' इत्यादौ केवलपदस्याऽपि प्रयोगेण, तत्र चारितार्थ्यात्[2]। न च वाक्यस्य प्रातिपदिकत्वे विकल्पेन समासविधानं व्यर्थम्। स्वराऽऽद्यर्थत्वात्।

न चैवम्[3]प्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमनिषेधेन 'घटोऽस्ति हे युवते' इत्यस्य तद्धितान्तत्वेन प्रातिपदिकसंज्ञा स्यादिति वाच्यम्[4]। समासग्रहणकृतनियमेन परत्वाद् बाधात्[5]। स्त्रीप्रत्ययविशेषग्रहणे, स्त्रीप्रत्ययत्वसामान्येन चा[6]ऽग्रहणे एव तत्प्रवृत्त्याऽत्राऽप्रवृत्तेश्च।

ननु निरर्थकशशश्रृङ्गादिसमासे विध्यर्थं समासग्रहणं स्यादिति चेन्न। अत्राऽप्यर्थवदित्यनुवृत्तेः। अत एव 'पञ्चनावप्रियः' इति समासे, 'पञ्चनाव' इत्यंशस्य तद्धितान्तत्वेऽपि, समासत्वेऽपि च न प्रातिपदिकत्वम्। तेन न ङीप्। अर्थवत्त्वं हि एतत्सञ्ज्ञासाध्यविभ[7]क्तीतरसमभिव्याहारं विनाऽपि लौकिके प्रयोगे स्वाऽर्थविषयकबोधजनकत्वम्। प्राशस्त्याऽर्थकमतुपो बलात्। अर्थवत्पदसामर्थ्याच्च[8]।

---

१. 'किञ्च पदार्थाऽध्याहारेण बोधस्तदा केवलस्यापि प्रयोगेण' ख. पाठः।

२. एतदग्रे 'न चाऽर्थवत्त्वं वृत्त्याऽर्थबोधकत्वम्। न च वाक्ये वृत्तिमानाऽभावादिति वाच्यम्। वाक्येऽपि वैयाकरणनये संसर्गांशे वृत्तिस्वीकारादिति स्पष्टमस्मत्कृते स्फोटवादे, अर्थवत्सूत्रे भाष्यकैयटयोश्च' इति ग. पाठः।

३. 'एतेनानुपसर्जन' ग. पाठः।

४. 'इति परास्तम्' ग. पाठः।

५. एतदग्रे–'अत्र सूत्रे निषेधमुखेनैव प्रवृत्तेः स्वीकार इति 'नलोपः सुप्स्वर' (८।२।२) इतिसूत्रे निरूपयिष्यामः' इति क. कुण्डलितः, ख. ग. पाठः।

६. 'वाऽग्रहणे' ग. पाठः।

७. विभक्तीतरानपेक्षतया लौकिके प्रयोगे स्वार्थमात्रविशेष्यकबोधजनकत्वम्' इति ग. च. पाठः।

८. एतदुत्तरम्—'एकार्थीभावेन लौकिके प्रयोगे प्रयुज्यमानत्वम्' इत्यादि मनोरमाया अप्यत्रैव तात्पर्यम्। यथाश्रुते हि क्विबन्ते 'शिष्यमाणं

शशशृङ्गादिपदानां चाऽऽरोपितशशसम्बन्धवच्छृङ्गादौ शक्तिर्बौद्धैवाऽतस्मिन्निति पूर्वेणैव प्रातिपदिकसंज्ञा सिद्धा। स्वप्नाऽऽद्यनुरोधेन च बौद्धपदाऽर्थस्याऽऽवश्यकत्वम्।

न चाऽक्षौहिणीरथन्तरादिपदघटकाऽक्षरथादिपदानां सर्वथाऽर्थाऽप्रतिपादकत्वेन तत्र प्रातिपदिकत्वाऽभावात् सुबनुत्पत्तौ, समासादिशास्त्राणां तत्राऽप्रवृत्त्यापत्तिरिति वाच्यम्। तद्धटकपदानामन्यत्र दृष्टाऽर्थाऽरोपेण यथाकथञ्चित् साधुत्वाऽन्वाख्यानेनाऽदोषात्।

प्रशस्ताऽर्थवत्त्वग्रहणादेव च कृतद्धिताभ्यां संज्ञाविधावपि तदन्तग्रहणम्। अत एव 'अर्थवदिति वर्त्तते। कृत्तद्धिताऽन्तं चैवाऽर्थवात्। न

---

लुप्यमानाऽर्थाऽभिधायी' इति न्यायेन धातोरेव विशिष्टाऽर्थोपस्थापकत्वेनाऽर्थद्वितयाऽभावेन, पृथगर्थानामेकोपस्थितिजनकत्वरूपैकार्थीभावादसङ्गतिः स्पष्टैव। किञ्च शशशृङ्गादौ गवादिष्वनुभूतशृङ्गस्य शशवर्त्तितयाऽऽरोपेण बोधनाद् बुद्धिमात्रविषयीकृतस्याऽत्यन्ताऽसतोपि बुद्धिसत्ताविशिष्टस्याऽर्थस्य शब्देन बोधनाच्चार्थवत्त्वस्याऽक्षतेः पूर्वेणैव प्रातिपदिकसंज्ञा सिद्धा। शशशृङ्गादिपदानां च' इति ख. ग. पाठः।

१. 'एतदुत्तरम्—न च वास्तवसम्बन्धेन बहिः सत्ताविशिष्टपदार्थस्य वाच्यत्वम्। 'घटोऽस्ति' इतिप्रयोगानापत्तेः। 'घटः' इत्यत एव च सत्तावगमेनाऽस्तीत्यस्य गतार्थत्वादप्रयोगापत्तेः। 'घटो नास्ति' इत्यस्याऽनापत्तेश्च। सत्तया विरोधात्। अत एवास्य सूत्रस्य शाटकं वयेत्यादि प्रयुज्यते। न च बाह्यां वर्त्तमानादिकालविशिष्टां सत्तां बोधयितुमस्तीत्यादिप्रयोगः, तादृश्या अभावबोधनार्थं च नास्तीत्यप्युपपन्नम्, वाच्यतानियामकं च सत्तामात्रम्, तद् यत्किञ्चित्कालिकमस्तु इति शशशृङ्गस्य न वाच्यत्वम्, तस्य त्रैकालिकसत्ताऽभावादिति वाच्यम्। एवञ्च एतद्व्यवहारानुपपत्त्यैव तथाङ्गीकार इति बोध्यम्। शाब्दबोधे च न बाधज्ञानं प्रतिबन्धकम्। नाप्ययोग्यतानिश्चयः प्रतिबन्धकः। नापि योग्यताज्ञानं कारणम्। बोधकतैव, तादात्म्यमेव वा शक्तिरिति स्पष्टं

केवलाः कृतस्तद्धिता वा' इति 'यत्तद्धित' (१।२।४६) इति सूत्रे,' 'अन्तग्रहणं न कार्यम्' इति 'सुप्तिङन्त'(१।४।१४)सूत्रे च भाष्ये उक्तम्। **अर्थवद्ग्रहणसामर्थ्यादेव चेदृशाऽर्थलाभ** इति **कैयटः ।** पूर्वसूत्रे तु पर्युदासेनैव तत्त्वलाभः[1] । तत्र व्याख्यानादर्थवत्त्वेनेद सादृश्यग्रहणम् ।

न चाऽर्थवद्ग्रहणं तत्र 'समुदायस्यैव यत्राऽर्थवत्त्वम्' इत्यर्थकतया वाक्यव्यावृत्त्यर्थम् । अजहत्स्वार्थायाम् 'बहुपटवः' इत्यत्र संज्ञाऽनापत्तेः । उक्ताऽर्थस्य शब्दमर्यादयाऽलाभाच्च ।

यत्तु 'अर्थवद्ग्रहण(प० १४)परिभाषया पूर्वसूत्रे न दोषः' इति । तन्न । तस्या विशिष्टरूपोपादानविषयत्वात् ।

न[2] चाऽनर्थकयोरपि धातुप्रत्यययोर्दर्शनेन पर्युदासेन तदलाभः, 'अधीते' 'यावकः' इति यथा । तत्र ह्यधिपूर्वस्येङः प्रयोगाद् विशिष्ट एवाऽर्थवान् । 'इङ् अध्ययने' इत्यादि तु क्रियावाचित्वनिबन्धनधातुत्वसिद्धये आरोपिताऽर्थबोधकम् । एवं कनप्यनर्थकः, यावशब्दादेव तदर्थप्रतीतेरिति वाच्यम् ।

प्रकृतिप्रत्ययविभागस्य, तत्त[3]दर्थविभागस्य च सर्वस्य कल्पितत्वेनाऽऽरोपिताऽर्थेनैवेष्टसिद्धेः । परमाऽर्थतस्तु वा[4]क्यरूपस्फोट एवाऽर्थवानिति सिद्धा[5]न्तस्याऽऽकरसम्मतिपूर्वकमन्यत्रोपपादितत्वात् । 'तस्य तस्य' इति

---

निरूपितं वृत्तिवादेऽस्माभिः । न चाऽक्षौहिणीरथन्तरादिपदघटकाऽक्षरथादिपदानाम्'–इति ग. च. पाठः ।

१. 'पूर्वसूत्रे तु न फलम् । । पर्युदासेनैव तत्त्वलाभादिति वदन्ति' ग. पाठः ।

२. 'न चानर्थकयोः' इत्यारभ्य 'औत्सर्गिकप्रवृत्त्यङ्गीकारात्' इत्यन्तोऽयं ख. ग. च. पाठः । मनोरमाशब्दरत्नयोरप्युपलभ्यते इति क. कुण्डलितः ।

३. 'अर्थविभागस्य च' इति क. पाठः ।

४. 'एतद्व्यङ्गोऽतिदेशस्फोट एव' क. पाठः ।

५. 'सिद्धान्तस्याऽन्यत्रोपपादितत्वात् । आकरसंमतत्वाच्च' ख. ग. च. पाठः ।

कृतद्विर्वचनेन षष्ठीसमासे, विभक्तिलुकि, 'तत्तदर्थविभागः' इति साधु। 'स स अर्थविभाग' इति कर्मधारयो वा प्राग्वत्[1]। अत एवेङः 'अधिजगेऽध्यगीष्ट' इत्यादौ द्विर्वचनाऽडादिसिद्धिः। प्रत्याहाराऽऽह्निके च 'अर्थवन्तो वर्णाः' इति प्रघट्टके 'अधीते' इत्यादौ 'इकारोऽर्थवान्' इति स्पष्टमेवोक्तम्। स्वार्थिकानामपि प्रकृत्यर्थेनाऽऽरोपिताऽर्थवत्त्वम् 'प्रत्यय' इतिमहासंज्ञया सूत्रकृत्सम्मतमेव। अत एव पूरणात् स्वार्थेऽन्प्रत्ययस्य पूरणाऽर्थता 'द्वितीयतृतीय' (२।२।३) इति सूत्रे भाष्यकृतोक्ता। न च 'अकर्त्तरि च कारके' (३।३।१९) इत्यनेन 'नञिवयुक्त'(प० ७६)न्यायस्याऽनित्यत्वान्नेह [प्रवृत्तिरिति वाच्यम्। न्यायस्य निर्विषयत्वाऽऽपत्तेरिष्टस्थले औत्सर्गिकप्रवृत्त्यङ्गीकारात्[2]। ( केचित्तूत्तराऽर्थमावश्यकमप्यर्थवत्पदमिहकरणसामर्थ्यात् तन्न्यायाऽनित्यत्वस्याऽपि ज्ञापकम्। उत्तरत्र प्रशस्ताऽर्थवत्त्वलाभस्तु स्वरितत्वप्रतिज्ञासामर्थ्याद् भविष्यति। कारक'ग्रहणं न कार्यम् 'अकर्त्तरि' (३।३।१९) इति सूत्रे। एकस्याऽप्यर्थस्याऽनेकधा[4] बोधनाय वा, प्रसज्यप्रतिषेधेऽपि समासस्य साधुत्वबोधनाय वा[5] तदिति वदन्ति।

१. 'तदिति विभक्तिप्रतिरूपकाऽव्ययेन वा प्राग्वत्' ग. च. पाठः।

२. 'नचाऽनर्थकयोः' इत्यारभ्य 'प्रवृत्त्यङ्गीकारात्' इत्यन्तः क. कुण्डलितः पाठः।

३. ख. पाठः। क. ग. च. नास्ति।

४. 'अनेकधा बोधनाय वा तदिति केचित्' इति ग. पाठः।

५. 'वा तदित्यन्ये' ग. पाठः। 'वा तदिति केचित्' इति च. पाठः।

६. एतदुत्तरम्—'न चार्थवत्पदेनेदृशप्रशस्ताऽर्थवत्त्वग्रहे पूर्वसूत्रे धातुप्रत्यययोः पर्युदासो व्यर्थः। न हि तयोः [1]स्वार्थविषयकबोधजनने इतराऽनपेक्षा, प्रकृतिप्रत्ययसापेक्षत्वादिति वाच्यम्। 'अहन्' 'व्यतिसे' इत्यादौ धातुप्रत्ययोरपि तादृशार्थवत्त्वस्य सत्त्वेन तत्पर्युदासावश्यकत्वात्। किञ्च मानाऽभावेन पूर्वसूत्रे ईदृशाऽर्थाऽग्रहणम्। अत एव प्रादीनां द्योतकानां स्वेतरधात्वादिसापेक्षतयैव बोधकानां प्रातिपदिकसंज्ञासिद्धिः। प्रकृते तु

1. 'स्वार्थमात्रविशेष्यकबोधजनने इतराऽनपेक्षा' इति च. पाठः।

वस्तुतः[1] सूत्रद्वयेऽप्युक्तप्रशस्ताऽर्थवत्त्वग्रहणे न क्षतिः। शब्दाऽधिकारश्च न। एवं च प्रत्ययस्य प्राप्तिरेव नेति प्रत्ययपर्युदासो न कार्य एवेति दिक्। 'असूर्यं' इत्याद्यसमर्थसमासे तु धर्मिग्राहकमानादेव प्रातिपदिकत्वम्। असूर्य-शब्दप्रकृतिकसुबन्ते उपपदे हि दृशेः खश् विधीयते। 'सुपि' (७।३।१०२) इत्यधिकारात्, 'उपपदम्' (२।२।१९) इतिमहासंज्ञाकरणाच्च[2]। अत एव[3] तत्र समाससिद्धिः अन्यथा हि परस्पर[4]मसम्बन्धेनैकार्थीभावाऽभावात् स दुर्लभः स्यात्।

(न[5] चैकक्रियाऽन्वयित्वमेव सामर्थ्यम्। तावताऽप्येकार्थीभावाऽनुपपादनात्। सर्वत्र परस्पराऽन्वय[6]पूर्वकस्यैव तस्य दर्शनात्। 'कृतः सर्वो मृत्तिकया' इत्यादौ 'कृतः' सर्वमृत्तिकः' इति समासाऽऽपत्तेश्च[7])।

पूर्वसूत्रेऽर्थवद्ग्रहणफलन्तु 'धनम्, वनम्' इत्यादौ प्रतिवर्णं संज्ञाऽभावः। ऐकाज्द्विर्वचनन्यायस्य तु नाऽयं विषयः। समुदायकार्येणाऽवयवानामननु-

---

कृदादीनामर्थवत्त्वाऽव्यभिचारात् तदनुवृत्तिसामर्थ्येनैवेदृशार्थवत्त्वम्। 'असूर्यं' इत्याद्यसमर्थसमासे तु धार्मिकग्राहकमानादेव प्रातिपदिकत्वम्'—इति ग. च. पाठः।

१. 'वस्तुतः' इत्यारभ्य 'एवेति दिक्' इत्यन्तः क. ख. पाठः ग. नास्ति।

२. इतोऽग्रे—'सुप् च द्वितीयैव। प्रकृत्यर्थैकदेशस्य कर्मत्वेनाऽन्याऽपेक्षाया युक्तत्वात्। ललाटसाहचर्याच्च। अत एव तत्र' इति ग. पाठः।

३. 'अत एव च तत्र' ख. पाठः।

४. 'परस्परमनन्वयेन' ग. पाठः।

५. 'न च' इत्यारभ्य 'समासापत्तेश्च' इत्यन्तः ख. ग. च. पाठः। क. नास्ति।

६. 'परस्परसम्बन्धपूर्वक' ख. पाठः।

७. इतोऽग्रे—'अत एवाऽसूर्यमित्यत्र प्रकृत्येकदेशे विभक्त्यर्थान्वयः। अत एव दृश्यन्तप्रत्ययेनाऽभावाश्रयबोधः। नञो द्योतकत्वाद् वा तदंशे न दोषः। तस्मात् पूर्वसूत्रे केवलार्थवत्त्वमेव गृह्यते। तत्फलन्तु धनं वनमित्यादौ प्रतिवर्णं संज्ञाऽभावः'—इति ग. च. पाठः।

ग्रहात्। तत्फलन्तु 'हुं फडादि'निरर्थकेभ्य इव एभ्योऽपि संज्ञाविधानसामर्थ्यादौत्सर्गिकैकवचने, तस्य हल्ङ्यादिलोपेऽपि[1] नलोपाऽभावः। उच्चारणन्तु धनाऽऽदिभ्यो ल्यपि तुगभावार्थं स्यात्। अतो[2] लोपाऽभावार्थं च[3]।

नन्वेवमप्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमनिषेधात् प्रत्ययाऽन्तत्वेन 'राजकुमारी' इत्यादौ विध्यर्थमेव समासग्रहणम्। न चाऽत्र प्रातिपदिकत्वस्य न फलम्, लिङ्गविशिष्टपरिभाषयैव तत्कार्यसिद्धेरिति वाच्यम्। वक्ष्यमाणरीत्या तया परिभाषया प्रातिपदिकत्व-तद्व्याप्यधर्माणां लिङ्गप्रत्ययरहिते दृष्टानां तद्विशिष्टेऽतिदेशेन तस्या अत्राऽप्रवृत्तेः। न ह्यत्र ङीब्-

---

१. 'अपि' इति ख. ग. नास्ति।		२. अतः=अकारस्येत्यर्थः।

३. इतोऽग्रे–'अजुत्तरं सुपः श्रवणं तु न। अवयवसंज्ञोत्तरं स्वाद्युत्पत्त्या सुबुत्पत्तौ कृदन्तत्वेन, समुदायस्यापि संज्ञायां, प्रातिपदिकाऽवयवत्वाल्लुक्प्राप्तेः। तिङन्ते तु सुपः श्रवणमपि दोषः। तत्र धातुत्वेन, प्रत्ययान्तत्वेन च समुदायप्रातिपदिकत्वस्य दुर्लभत्वात्। एतेन 'पर्युदासेनैवार्थवत्त्वे लब्धे पुनरर्थवद्ग्रहणं समुदायस्यैव यत्रार्थवत्त्वं तत्रैव यथा स्यात्, अतो वाक्यस्य न' इत्यपास्तम्। 'बहुपटवः' इत्यत्र संज्ञाऽनापत्तेः। त्वदुक्तस्याऽशब्दार्थत्वाच्च।

यत्तु असत्त्वाऽर्थकत्वेनापि सादृश्यसंभवाद्घटादौ प्रातिपदिकत्वं न स्यादिति। तन्न। पूर्वोक्तभाष्यविरोधात्। अनेकार्थसंभवेऽभियुक्तोक्तेरेव प्रमाणत्वात्। बहुलक्ष्यसंस्काराऽनुरोधेन तथैव युक्तत्वात्। न च 'दाक्षी' इत्यत्र पूर्वान्तवत्त्वेन तद्धितान्तत्वात् प्रातिपदिकत्वापत्तिः। विभक्तिप्रयोजकतद्धितान्तत्वनिमित्तप्रातिपदिकत्वस्य सकृत्प्रवृत्त्या, लक्ष्ये लक्षणस्य (प० १२२) इतिन्यायेन पुनरप्रवृत्तेः। 'सप्तम्यधिकरणे च' (२।३।३६) इत्यादिनिर्देशैर्विभक्त्येकादेशस्यान्तवत्त्वाऽभावज्ञापनाच्च। एतेनान्तवद्भावेन 'काण्डे' इत्यादौ प्रातिपदिकत्वे ह्रस्वत्वं स्यादिति परास्तम्। कार्यकालपक्षे परादिवत्त्वेन 'ए' इत्यस्य प्रत्ययत्वे, प्रत्ययान्तत्वस्याऽऽर्थसमाजग्रस्ततया निषेधाच्च, लिङ्गाऽभावाच्चेति 'ह्रस्वो नपुंसके' (१।३।४७) इत्यत्र निरूपयिष्यामः' इति ग. च. पाठः।

रहिते 'राजकुमार' इत्यादौ तदस्ति। अतः सुबुत्पत्तये प्रातिपदिकत्वमेष्टव्यम्। ङ्याब्ग्रहणन्त्वन्यार्थमिति वक्ष्यते।

न चाऽस्य निषेधस्य स्त्रीप्रत्ययसामान्यग्रहणे, विशेषग्रहणे वा प्रवृत्तिः, न चाऽत्र तथेति वाच्यम्। वचनसंकोचकल्पने मानाऽभावात्। 'कृद्ग्रहणे' (प० २८) इति परिभाषायामिवाऽत्र 'ग्रहण'पदाऽभावाच्चेति चेन्न। अस्य प्रत्ययग्रहणपरिभाषाशेषत्वेन, सा यथा न प्रत्ययाऽप्रत्ययग्रहणे इति 'उगितश्च' (४।१।६) इत्यत्र भाष्ये उक्तम्, तथाऽस्यापि स्त्रीप्रत्ययाऽप्रत्ययग्रहणेऽप्रवृत्तेरदोषात्। तत्रत्यग्रहणपदस्याऽत्राऽपि सम्बन्धात्। अन्यत्र प्रवृत्तौ फलाऽभावाच्च।

केचित्तु[२] अन्तरङ्गस्याऽपि हल्ङ्यादिलोपस्य लुग्विषयेऽप्रवृत्त्या, श्रूयमाण एव सुपि समासे जाते, तत्राऽप्रत्ययान्तत्वेन प्रवृत्तसंज्ञाया एकदेशविकृत(प० ३७)न्यायेन विभक्तिलुक्यपि सुलभत्वम्[३]। लक्ष्याऽनुरोधेन यथोद्देशपक्षस्यैवाऽङ्गीकारात्। अत एव 'गोमत्प्रियः' इत्यादौ नुमादयो न। लुकः प्रागन्तरङ्गप्रवृत्तौ तु स्युरेव। न[४] चैवमपि क्विबन्तकुमारीशब्देन 'प्र'शब्दस्य 'गतिकारकोपपद' (प० ७७) इति वचनात् सुबुत्पत्तेः प्राक्समासे, प्रत्ययान्तत्वात् पूर्वसूत्राऽप्रवृत्तौ, समासग्रहणं विध्यर्थमेवेति वाच्यम्। उपसर्जनस्त्रीप्रत्यये तदादिनियमसत्त्वेन प्रत्ययान्तत्वाऽभावादि[५]त्याहुः)।

न च 'समासग्रहणं न नियमार्थम्। किन्तु विध्यर्थमेव। अर्थवत्त्वं वृत्त्याऽर्थबोधकत्वम्। वृत्तिश्च शक्तिर्लक्षणा वा। न च सा समासे, वाक्ये

१. इतोऽग्रे—'नियमपरभाष्यप्रामाण्येन सङ्कोचकल्पनात्। अस्य प्रत्ययग्रहणपरिभाषाशेषत्वेन तत्रत्यप्रत्ययग्रहणपदस्याऽत्राऽपि सम्बन्धाच्च। अन्यत्र प्रवृत्तौ फलाऽभावाच्च' इति ख. ग. च. पाठः।

२. 'केचित्तु' इत्यारभ्य 'अन्तरङ्गप्रवृत्तौ तु स्युरेव' इत्यन्तः क. कुण्डलितः, ख. ग. च. पाठः।

३. 'सुलभत्वात्' ग. च. पाठः।

४. 'न चैवमपि' इत्यारभ्य 'प्रत्ययान्तत्वाऽभावात्' इत्यन्तः क. कुण्डलितो ग. च. पाठः। ख. नास्ति।

५. 'इत्याहुः' इति क. नास्ति।

वाऽस्ति' इति नैयायिकोक्तं युक्तम् । वाक्य-समासयोरपि शक्तेरन्यत्रोपपादितत्वात् । 'सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति च स्थितम्' इतिमीमांसकमते लक्षणासत्त्वात्[1] । वैयाकरणनये विशेष्यत्वाद्यंशे[2] वाक्यस्य[3] शक्तिरित्यर्थस्याऽर्थवत्सूत्रभाष्यकैयटयोः स्पष्टमुक्तत्वाच्च । 'बहुपटवः' इत्याद्यसिद्धेश्च । तद्रीत्या समासवत् त[4]द्धितेऽपि शक्तिलक्षणयोरभावात् । तत्र[5] हि प्रातिपदिकत्वाऽभावे, पूर्वोत्पन्नजसो लुगभावे, 'चितः सप्रकृते'रितिवचनाज्जसकारस्योदात्तत्वापत्तिः ।

तद्धितग्रहणं तद्विशिष्टपरमिति चेन्न । 'पचतकी' इत्यादावतिव्याप्तेः । न च 'बहुच्पूर्वः' इति सूत्रणीयम् । गौरवाऽऽपत्तेः । किञ्चैवं 'बहुपटवस्तिष्ठन्ति' इति वाक्यस्याऽपि संज्ञा स्यात् । समुदायस्याऽपि बहुच्पूर्वत्वात् । न हि प्रत्ययान्तत्वाऽऽदिव्यवहाराऽतिप्रसङ्गवारणाऽर्थम् 'प्रत्ययग्रहणे यस्मात्' (प० २३) इति वचनवदत्र तादृशं वचनमस्ति ।

एतेन 'पूर्ववर्त्तित्वोत्तरवर्त्तित्वाभ्यामेव वैशिष्ट्यं निवेशनीयमिति 'पचतकी' इत्यादौ न दोषः' इत्यपास्तम् । विनिगमनाविरहेण मध्यवर्त्तित्वसम्बन्धस्याऽपि ग्रहणाऽऽपत्तेश्च ।

किञ्चैवं कृद्ग्रहण(प० २८)परिभाषया 'मूलकेनोपदंशं भुङ्क्ते' इत्यादावतिव्याप्तिर्दुर्वारैव स्यात् । उ[6]पदंशे मूलकस्य कर्मत्वेनाऽप्यन्वयः,

---

१. 'लक्षणासत्त्वाच्च' ख. ग. च. पाठः ।

२. 'वैयाकरणनये संसर्गांऽशे' ख. ग. च. पाठः ।

३. 'वाक्यस्याऽपि' ख. पाठः ।

४. अत्र 'तद्धितेऽपि' इत्यंशः सर्वत्र खण्डितः, अस्माभिर्लघुशब्दरत्नात्पूरितः ।

५. 'तत्र हि' इत्यारभ्य 'उदात्तत्वापत्तिः' इत्यन्तः क. पाठः ।

६. 'उपदश्यमानस्यापि मूलकस्य 'रोटिकां मूलकेनोपदंशमि'त्यादौ 'पयसा ओदनं भुङ्क्ते' इतिवत्करणतृतीयासत्त्वेनोपदंशननिरूपितकारकत्वादित्यादि कृदन्ते वक्ष्यते' ग. च. पाठः ।

विभक्तिस्तु प्रधानाऽनुरोधिकरणत्वकृता तृतीयैवेत्युपदंशननिरूपितमपि कारकत्वमस्त्येवेति कृदन्ते वक्ष्यते इति, मूलकस्य भुजौ करणत्वात् प्रत्यासत्तिन्यायेन न दोष इति न शङ्क्यम्। न चाऽर्थवत्त्वाऽभावाद् वारणम्। 'पाचकः' 'औपगवः' इत्यादावपि संज्ञाऽनापत्त्या **नैयायिकै**रुत्तरसूत्रेऽर्थवत्सम्बन्धस्य वक्तुमशक्यत्वात्।

न चैवं 'तृतीयाप्रभृतीनि' (२।१।२१) इति विकल्पविधानं व्यर्थम्, 'अमैव' (२।१।२०) इत्यनेनैव सिद्धेरिति वाच्यम्। स्वरे विशेषात्। 'दधिउपदंशम्' इत्यादौ पक्षे प्रकृतिभावप्रवृत्तेरपि फलस्य वक्तुं शक्यत्वाच्च। मम तु समासग्रहणकृतनियमेन परत्वाद् बाध इति न दोषः।

एवं च 'कृत्तद्धित' (१।२।४६) इति सूत्रे कृद्ग्रहण(प० २८)परिभाषा नोपतिष्ठते एव, निष्फलत्वादिति तत्त्वम्। ध्वनितं चेदं 'पुंयोगात्' (४।१।४८) इतिसूत्रे **भाष्यकैयटयोरिति** दिक्।

नन्व[1]र्थवत्त्वं वृत्त्याऽर्थबोधकत्वं चेन्निपातानां प्रातिपदिकत्वाऽनापत्तिः, तेषां शक्तिलक्षणाऽन्यतराऽभावादिति चेन्न। तेषा[2]मपि परम्परया वृत्तिमत्त्वात्। तेषां परवृत्त्युद्बोधकत्वरूपतात्पर्यग्राहकत्वात्।

'वृत्त्या[3], वृत्त्युद्बोधकत्वेन वाऽर्थबोधकत्वमत्राऽर्थवत्त्वम्' इत्यन्ये। 'धन[4]म्' इत्यादौ प्रत्येकवर्णानां समुदायसम्पादनेन चरितार्थानां वृत्त्युद्बोधकत्वाऽभावान्न दोषः। पादपूरणार्थानान्तु 'निपातस्याऽनर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या' इति वचनात् सा[5]। अनुक्तसमुच्चयाऽर्थकचका[6]रेण वा।

---

१. 'नन्वर्थवत्सूत्रेऽर्थवत्त्वम्' ख. ग. च. पाठः।
२. 'परवृत्त्या तेषामप्यर्थबोधकत्वेन परम्परया वृत्तिमत्त्वस्य तत्रापि सत्त्वात्' इति ग. च. पाठः। ३. 'एवञ्च वृत्त्या' ख. पाठः।
४. 'न च धनमित्यादौ समुदायवृत्त्या प्रत्येकवर्णानामप्यर्थवत्त्वापत्तिः। समुदायसम्पादनेन चरितार्थेषु वृत्त्युद्बोधकत्वरूपतात्पर्यग्राहकत्वाऽभावात्' ग. च. पाठः।
५. 'सा बोध्या' ख. ग. च. पाठः।
६. 'चकारेण वेति दिक्' ख. ग. च. पाठ.।

साध्वनुशासनाद्[1] धातुपयुदासाच्च न भाषाशब्देषु प्रातिपदिकत्वम्। अनुकरणविषये त्वग्रे निरूपयिष्यामः।

**अधिकारोऽयमिति—** संज्ञाऽधिकार[2] इत्यर्थः। संज्ञा-संज्ञिभावाऽवगमस्तु विधेयसामानाधिकरण्याद् विध्येकवाक्यतयैव।

नन्वेवम् 'हृरतेर्दृतिनाथयोः, कर्मणोरुपपदयोः पशौ कर्त्तरीन्प्रत्ययो भवति' इति वाक्याऽर्थे यद्यपि प्रकृत्युपपदोपाधीनां न संज्ञाऽतिप्रसक्तिः, विरुद्धविभक्त्यवरुद्धानां प्रथमाऽन्तेन 'प्रत्ययः' (३।१।१) इत्येनन सामानाधिकरण्याऽसम्भवात्,वाक्यभेदे मानाऽभावाच्च, अप्रधानत्वाच्च, तथापि— विकाराऽऽगमानां 'हनस्त च' (३।१।१०८) 'त्रपुजतुनोः षुक्' (४।३।१३८) इत्यादीनां प्राप्नोतीति[3] चेन्न[4]। 'प्रत्यय' इति महासंज्ञया स्वीयार्थप्रत्यायकस्यैव संज्ञाकरणात्। न च विकाराऽऽगमास्तथा।

---

१. 'न चैवं भाषाशब्देष्वपि बोधकतारूपशक्तेः सत्त्वात् प्रातिपदिकत्वं स्यादिति वाच्यम्। तन्निमित्तकार्ये कृते वर्णानां न्यूनाधिकभावेन भाषात्वभङ्गापत्तेः। साध्वनुशासनाच्चेत्याहुः' इति ग. च. पाठः।

२. 'संज्ञात्वेनाऽधिकार इत्यर्थः' ख. ग. च. पाठः।

३. 'प्राप्नोतीति चेन्न। फलाऽभावात्। प्रत्यय इति महासंज्ञया' ख. पाठः। क. तु-'फलाऽभावात्' इत्ययमंशो मसीक्षेपेण दूरीकृतः।

४. 'इति चेन्न। प्रतियन्त्यनेनाऽर्थमित्यन्वर्थसंज्ञाविज्ञानात्, विकारागमयोश्चाऽनर्थकत्वाददोषः। स्वार्थिकानामपि प्रकृत्यर्थेनाऽर्थवत्त्वमस्त्येव। विकरणानामपि द्योत्याऽर्थेन तत्त्वम्। न चैवमपि 'हनश्च वधः' (३।३।७६) 'नाभि नभ च' (ग० सू० ५।१।२) 'विरागविरङ्ग च' (ग० सू० ५।१।६४) इत्यादावादेशानां संज्ञा स्यात्। अर्थवत्त्वाद् योग्यविभविभक्तिकत्वाद् विधेय[1]त्वाच्चेति वाच्यम्। फलाऽभावात् स्थानषष्ठीनिर्देशाद्

---

1. 'विधेयत्वाच्च। प्रयोजनन्तु स्थानिन आदेशेन निवर्त्तितत्वेऽपि शब्दाऽन्तराऽपेक्षया परत्वमस्त्विति वाच्यम्। पूर्वोक्तरसाहचर्येण स्थानार्थकविभक्त्य-

न चैवमत्यन्तस्वार्थिकानां संज्ञा न स्यात्, तेषां प्रकृत्यर्थेनाऽर्थवत्त्वेऽपि लोके तत्प्रत्यायकत्वाऽभावादिति वाच्यम्। 'यस्याऽर्थः प्रकृत्या प्रत्याय्यते स प्रत्ययः' इत्यर्थस्याऽपि तन्त्रेणाऽङ्गीकारात्। तत्र यथासम्भवं व्यवस्थेति स्पष्टं भाष्ये। द्वितीयपक्षे निपातनादच्चि णिलुग्बोध्यः। अन्तर्भावितण्यर्थाद् वा कर्मणि एरच्। 'वध' 'नभ' 'विरङ्गा'द्यादेशानामपि न स्वीयाऽर्थप्रत्यायकत्वम्। तेषां हि स्थान्यर्थेनैवाऽर्थवत्त्वम् न तु स्वीयोऽर्थोऽस्ति। अत एव कोशेषु तदर्थाऽनिर्देशः। अत एव नाभिशब्दप्रकारक एव ततस्तदर्थबोधो 'नाभिहितः' इति, न तु कदाचिदपि 'नभहितः' इति।

येऽप्यवैयाकरणास्तेऽपि वृद्धव्यवहारात् तथैव प्रतियन्ति। एतदर्थमेव भाष्ये 'स्वीयमर्थं प्रत्याययन्ति' इति विग्रहे 'स्वीय'पदोपादानम्। भाष्यप्रामाण्याच्च तदर्थाऽन्तर्भाविण प्रत्ययशब्दस्य वृत्तिः। स्वीयत्वं च स्वप्रकारकप्रतीतिविषयत्वम्। तच्च प्रक्रियाकालिकमिति न दोषः।

---

देशांशे निराकांक्षतया 'परश्च' (३।१।३) इत्यस्याऽनुपस्थितौ, तत्सहचरितप्रत्यय इत्यस्याऽप्यनुपस्थितेश्च। पूर्वोत्तरसाहचर्येण स्थानार्थकविभक्त्यन्तवाच्याऽर्थभिन्नोद्देश्यकविधेयसम्बन्धस्य क्लृप्तत्वेनैष्वसम्बन्धात् (च)। योगविभागस्तु क्वचित् परस्येत्यस्यानुपस्थितावपि तदुपस्थित्यर्थः। अत एवाऽक्जादीनां प्रत्ययत्वम्। अत एव 'न यासयोः' (७।३।४५) इति 'प्रत्ययस्थात्' (७।३।४४) इतीत्वस्य निषेधः सार्थक इति दिक्' इति ग. च. पाठः।

---

न्तवाच्यार्थभिन्नोद्देश्यकविधेयसम्बन्धस्य क्लृप्तत्वेन एष्वसम्बन्धात्। स्थानषष्ठीनिर्देशाद् देशांऽशे निराकाङ्क्षत्वेन 'परश्च' (३।१।२) इत्यस्याऽनुपस्थितौ तत्सहचरित 'प्रत्ययः' (३।१।१) इत्यस्याऽप्यनुपस्थितेश्च। अत एव 'परश्च' (३।१।२) इति सूत्रे चकारः सार्थकः। श्रमादीनां तु 'तृणह' (७।३।६२) इत्यादिनिर्देशात् प्रत्ययत्वम्। अन्यथा 'तृश्नह' इति निर्दिशेत्। अत एव योगविभागः सार्थकः। स हि क्वचित् तस्य (=परस्येत्यस्य) अनुपस्थितावपि तदुपस्थित्यर्थः। अत एवाऽक्जादीनां प्रत्ययत्वम्' इति च. पाठः।

अन्ये तु विकाराऽऽगमानां स्थानषष्ठीनिर्देशेन देशांऽशे निराकाङ्क्षत्वात् 'परश्च' (३।१।२) इत्यस्याऽनुपस्थितौ, तत्सन्नियोगशिष्टप्रयत्यसंज्ञाया अप्रवृत्तिः[1]। क्वचित्तु 'तृणह इम्' (७।३।६२) 'न यासयोः' (७।३।४५) इति ज्ञापकात् तदनुपस्थितावपि प्रत्ययसंज्ञाप्रवृत्तिः। यथा श्नम्-अकच्-बहुष्विति बोध्यमित्याहुः[2]।

**परश्च** (३।१।२)—'गुप्तिज्किद्भ्यः' (३।१।५) इत्यादावपादानत्वाऽसम्भवाद् दिग्योगलक्षणा पञ्चमी। तत्र 'परः, पूर्वो वो इत्यनियमेनाऽध्याहारे प्रसक्ते, 'पर एव' इति नियमाऽर्थमिदम्। 'गापोष्टक्'(३।२।८) इत्यादावपि षष्ठ्यर्थाऽऽनन्तर्यस्य पूर्व-परसाधारणत्वादनियमोऽस्त्येव। अत्र 'तस्मादित्युत्तरस्य' (१।१।६७)इति परिभाषा उत्तराऽङ्गविकला प्रवर्त्तत इत्युक्तं प्राक्।

ननु 'गुप्तिज्किद्भ्यः' (३।१।५) इत्यादौ भ्यसादीनां परत्वदर्शनेनाऽङ्गसंज्ञासूत्रे 'प्रत्यये' इति सप्तमीबलेन च, 'सुपि च' (७।३।१०२) 'नस्तद्धिते' (६।४।१४५) 'यस्येति च' (६।४।१४८) 'आर्धधातुके' (६।४।४६) 'तुरुस्तुशम्यमः सार्वधातुके' (७।३।९५) इत्यादिसप्तमीबलेन च प्रत्ययविधिपरायामष्टाध्याय्यां न पूर्वपदाऽध्याहारो न्याय्यः। किञ्च यथा सूत्रसत्त्वेऽव्यवधानांशलाभाय उत्तराऽङ्गविकला 'तस्मात्' (१।१।६७) इति परिभाषा प्रवर्त्तते, तथा तदभावेऽपि प्रागुक्तनिर्देशादिभिः प्रथमान्तैः प्रत्ययैः सामानाधिकरण्यात् त्यक्तषष्ठीकमङ्गीकृतप्रथममुत्तरपदमुपतिष्ठतामिति व्यर्थं परश्चेति सूत्रमिति चेत्। अत्राऽऽहुः—यद्यपि प्रकृतिविशेषोद्देशेनैव प्रत्ययानां विधानात् प्रत्ययाऽर्थमात्रविवक्षायां 'किमस्य द्रयसम्' इति प्रयोग आपादयितुं न शक्यते, तथाऽपि प्रकृत्यर्थमात्रविवक्षायां केवलप्रकृतेः 'पच्' 'पत्' इत्यादेः प्रयोगः स्यात्, अतः 'प्रत्ययः परो भवत्येव' इति नियमाऽर्थमिदम्। तेन 'न केवला प्रकृतिः प्रयोक्तव्या, नाऽपि केवलः प्रत्ययः' इति सिद्धम्।

न च 'गवित्ययमाह'इत्यादिप्रयोगाणामनुपपत्तिः। अनुकार्याऽनुकरणयोरभेदविवक्षयाऽर्थवत्त्वाऽभावात् प्रातिपदिकत्वाऽभावेन, 'स्वौजस्' (४।१।२)

---

१. 'अप्रवृत्तेश्च' ख. पाठः।

२. लघुशब्देन्दुशेखरे तु 'तन्न' इत्यादिना खण्डितोऽयं ग्रन्थः।

इतिसूत्राऽप्रवृत्या प्रकृतित्वाऽभावात्। प्रकृतित्वं च प्रत्ययविधावुद्देश्यतावच्छेदकाऽऽक्रान्तत्वम्।

अयं च न्यायः शास्त्राऽबोधिताऽन्यतरप्रयोगविषये। अतएव 'लिट्' 'व्यतिसे' इत्यादौ न दोषः। एतदर्थ एव पठयते 'अपदं न प्रयुञ्जीत' इति। अपरिनिष्ठितमित्यर्थः। **परिनिष्ठितत्वं** चाऽप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकाऽनाक्रान्तत्वम्। निहते तिङन्तादावव्याप्तिवारणाय 'अप्रवृत्ते'ति। वैकल्पिकेडागमोद्देश्यताऽवच्छेदकाऽऽक्रान्ते 'सेद्धे'त्यादावव्याप्तिवारणाय 'नित्य' इति। अत एव 'पच्-लट्' इत्यादीनामलौकिकतेति सिद्धान्त इति दिक्।

**ङ्याप्प्रा** (४।१।१)—समाहारद्वन्द्वे एकवचनम्। स्यादेतत्—'परश्च' (३।१।२) इत्यनेन प्रकृतेराक्षेपात् प्रातिपदिकाऽधिकारो व्यर्थः। न च 'पचति पश्ये' इत्यादौ क्रियायाः कर्माऽऽदित्वेन, तद्वाचकतिङन्ताद् द्वितीयाद्यापत्तिरिति वाच्यम्। सङ्ख्याऽभावात्। सर्वत्रौत्सर्गिकैकवचनाऽऽपत्तौ तु सुबन्तत्वेनैव पदत्वे सिद्धे 'सुप्तिङन्तम्' (१।४।१४) इति सूत्रे तिङ्ग्रहणवैयर्थ्याऽऽपत्तिः।[1]

न च धातुभ्यः सुप्व्यावृत्त्यर्थम्। तिङामपवादत्वात्। 'भू सत्तायाम्' इत्यादिनिर्देशैः स्वादिविधेरनित्यत्वज्ञापनाच्च। अतो 'गवित्ययमाह' इत्यादौ न दोषः। 'तस्य'इत्यादिसमर्थविभक्तिनिर्देशात्, तमप्विधौ 'तिङश्च' (५।३।५६) इतिज्ञापकाच्च न तेभ्यस्तद्धितव्यावृत्त्यर्थः। ज्ञापकसिद्धाऽत्यन्तस्वार्थिकतरबादेः क्वाचित्कत्वाच्च। अन्येषां प्रकृतिविशेषादेव विधानाच्च।

एतेन 'वाक्यादत्यन्तस्वार्थिकनिरासार्थं तत्' इत्यपास्तम्।[2] न च सुबुत्पत्तेः प्राक् केवलप्रातिपदिकादेव तद्धितोत्पत्त्यर्थं तत्।[3] स्वार्थद्रव्यलिङ्गसंख्याकारकप्रयुक्तकार्यैः संस्कृतस्य बहिर्भूताऽपत्याऽऽदियोग इति केवल-

१. 'तिङ्ग्रहणवैयर्थ्यापत्तेश्च। औत्सर्गिकैकवचनस्य क्वाचित्कताया अव्ययप्रकरणे वक्ष्यमाणत्वाच्च' इति ग. च. पाठः।

२. 'एतेन सुबुत्पत्तेः' ग. च. पाठः।

३. 'तदित्यपास्तम्' ग. च. पाठः।

प्रातिपदिकात् तद्धितानां विधातुमशक्यत्वादिति[1] चेन्न। प्रातिपदिकाऽधिकाराऽभावे 'अत इञ्' (४।१।९५) इत्यत्रत्या'ऽत' इत्येतदुक्तयुक्त्या[2] सार्थकतद्धितानां सुबन्तादुत्पत्तेः, 'तस्याऽपत्यम्' (४।१।९२) इत्यादेः तत्सम्बन्ध्यपत्यमित्याद्यर्थे 'सूत्रे प्रथमोच्चारितबोध्यात् प्रत्ययः' इत्यर्थस्य सत्त्वेन चोपस्थितस्य सुबन्तस्यैव विशेषणं स्यात्। ततश्च दक्षस्याऽपत्यमित्यत्रैव स्यात्, 'दक्षाणाम्' 'दक्षयोः' इत्यत्र न स्यात्।

किञ्च 'अनुदात्ताऽऽदेः' (४।२।४४) इत्यस्य सुबन्तविशेषणत्वाऽऽपत्तौ, सर्वस्य विकारः 'सार्वं' इत्यत्राऽञ्न स्यात्। 'सर्वस्य सुपि' (६।१।१९१) इत्याद्युदात्तत्वात्। प्रातिपादिकाऽधिकारे तु तत्सामर्थ्यात् तस्यैव विशेषणान्न दोषः। सर्वशब्दस्योञ्छादिपाठाद् गणे निपातनाद् वाऽन्तोदात्तत्वात्। न चाऽस्याऽन्तोदात्तत्वे मानाऽभावः। अत्रत्यभाष्यस्य, 'सार्वः' इत्यञन्तप्रयोगस्य च मानत्वात्। 'सर्वस्य सुपि' (६।१।१९१) इत्यारम्भाच्च।

न च 'अन्तरङ्गानपि' (प.५३) इतिन्यायेन लुक्स्थानिभूतप्रत्ययनिमित्तकार्याऽपेक्षया लुकः, तन्निमित्तप्रत्यय-समासादीनां च प्राबल्यबोधनेन, पूर्वं सुब्निमित्ताऽऽद्युदात्ताऽप्राप्तौ[3] 'अनुदात्ताऽऽदेः' (४।१।४४) इत्यस्य सुबन्तविशेषणत्वेऽपि न दोष इति वाच्यम्। तेनाऽपि न्यायेनाऽन्तरङ्गनिमित्तविनाशकलुकः[4] प्राबल्यबोधनमित्यस्य परिभाषाप्रकरणे उपपादितत्वेन दोषसत्वात्।

---

१. 'विधातुमशक्यत्वाच्च। केचित्तु 'तिङश्च' (१।३।५६) इति ज्ञापकं न तिङन्तात् स्वादयो भवन्तीत्यर्थे सामान्यापेक्षं वर्णयन्ति। ननु प्रातिपदिकाधिकाराऽभावे' ग. च. पाठः।

२. 'अत इत्येतद्विभक्तिमन्तरेण सामर्थ्यानवगमात् सुबन्तात् तद्धितोत्पत्तेश्च 'तस्याऽपत्यम्' (४।१।९२) इत्यादेस्तत्सम्बन्ध्यपत्यमित्याद्यर्थसत्त्वात् सूत्रे प्रथमोच्चारितबोध्यात् प्रत्यय इत्यर्थस्य सत्त्वेन च' ख ग. पाठः।

३. 'अप्राप्तिरिति वाच्यम्। अस्याऽकृतव्यूहपरिभाषाऽनतिरिक्तत्वस्याऽचः परस्मिन् (१।१।५७) इति सूत्रे कौस्तुभे उक्तत्वेन तस्य चाऽप्राप्त्या आद्युदात्तप्राप्तेः साम्राज्यात्। 'सर्वस्य सुपि' (६।१।१९१) इत्यादौ सौवर्यः सप्तम्यः' इति ग. च. पाठः।

४. 'लुगादीनाम्' ख. ग. पाठः।

'सर्वस्य सुपि' (६।१।१९१) इत्यादौ 'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इति सिद्धान्तात् प्रत्यये परतः पूर्वकार्यत्वाऽभावेन 'न लुमता' (१।१।६३) इत्यस्याऽप्राप्तौ, प्रत्ययलक्षणेन सुबन्तत्वसत्त्वात् तस्य नाऽन्तरङ्गनिमित्तविनाशकता ।

अत एव 'सर्वस्तोमः' 'अतिरात्रः' इत्यादिबहुव्रीहौ पूर्वपदप्रकृतिस्वरेणाऽऽद्युदात्तसिद्धिः । अन्यथा बहुव्रीहिकालेऽन्तोदात्तत्वाद् बहुव्रीहिस्वरेण तस्यैव प्रकृतिभावः स्यान्नत्वाद्युदात्तस्य । सुप्ग्रहणन्त्वत्यन्तस्वार्थिके तरपि तस्य प्रातिपदिकादेवोत्पत्तेङ्याप्सूत्र-पुंयोगसूत्र-भाष्यादावुक्तत्वेन तत्राऽन्तोदात्तार्थं भविष्यति । (अत एव 'उपमानं सञ्ज्ञायां' इति सूत्रे 'सर्वस्य सुप इति वक्ष्यामि' इति भाष्यं सङ्गच्छते) किञ्च सर्वस्य स्त्री 'सर्वी' इत्यत्र लिङ्गविशिष्टपरिभाषयाऽऽद्युदात्तत्ववारणाय तत् । सुप्ग्रहणे तु विभक्तौ लिङ्गविशिष्टाऽग्रहणान्न दोषः । विभक्तिसम्बन्धिकार्यमात्रे तत्प्रवृत्तेः 'युवोरनाकौ' (७।१।१) इतिसूत्रे भाष्ये स्पष्टमुक्तत्वात्[२] । न च 'गर्गादिभ्यः' (४।१।१०५) इत्यादौ गर्गादिपदानां लक्षणया गर्गादिप्रकृतिकसुबन्तादिति-

---

१. क. नास्ति । ख. च. ग. पाठः ।

२. 'स्पष्टमुक्तत्वादिति चेन्न । 'गर्गादिभ्यो यञि'त्यादौ सुबन्तात्तद्धितोत्पत्तेः सर्वत्र समासतद्धितविधौ तत्प्रकृतिके लक्षणायाः सत्त्वेना'ऽनुदात्तादेश्चे' त्यत्रापि 'अनुदात्तादिप्रकृतिकसुबन्तादि'त्यर्थे दोषाऽभावात् । अत एवात इञित्यादावपि न दोषः । लक्षणाऽनङ्गीकारे विभक्त्यन्तस्याऽकारान्तप्रातिपदिकत्वाऽभावेन, आकारान्तप्रातिपदिकस्य च सुबन्तत्वाऽभावेन, 'सर्वस्ये'त्यादावाद्युदात्तत्वे कृतेऽनुदात्तादिप्रातिपदिकाऽभावाच्च प्रातिपदिकाधिकारेऽपि दोषस्तदवस्थ एव । न च प्रातिपदिकाधिकाराऽभावे लक्षणायां तात्पर्यग्राहकाऽभावः । पूर्वोत्तरसाहचर्यस्यैव तत्त्वादिति चेदत्राहुः,—सर्वत्र लक्षणाया आवश्यकत्वेऽपि समर्थानामित्येतत्सुबन्तस्यैव विशेषणं स्यात्' इति ग. च. पाठः ।

३. न च 'गर्गादिभ्य' इत्यादौ सुबाक्षिप्तप्रकृतिविशेषणतया गर्गादिरूपप्रकृतेः परो यः सुस्तदन्तादितिवदनुदात्तादिरूपप्रकृतेः परो यः सुप् षष्ठ्यादिरूपस्तदन्तादित्यर्थेनाऽदोष इति वाच्यम् । तत्र सुबन्तेन'—इति ख. पाठः ।

वदनुदात्तादिप्रकृतिकषष्ठ्याद्यन्तादित्यर्थेनाऽदोष इति वाच्यम्। तत्र सुबन्ते गर्गादीनां विशेषणत्वाऽसम्भवादगत्या लक्षणास्वीकारेऽपि[1], प्रकृतेऽसम्भवाऽभावेन लक्षणायां[2] मानाऽभावात्[3]।

किञ्च 'समर्थानाम्' (४।१।८२) इत्येतत्सुबन्तस्यैव विशेषणं स्यात्, तस्यैवोपस्थितत्वात्[4]। एवं च सुबन्तादेव कृतवर्णाऽनुपूर्वीनिबन्धकार्यादुत्पत्त्यापत्तौ 'भानोरपत्यं भानवः' इत्यसिद्धापत्तेः लुका ओकारसहितस्य निवर्त्तनात्। प्रातिपदिकाऽधिकारे तु तत्सामर्थ्यात् तस्यैव तद्विशेषणम्। अत एव 'ङ्याप्प्रातिपदिकांशे एव परिनिष्ठितत्वमपेक्षितम्' इति प्राचामुद्घोषः। एवं चाऽन्तरङ्गानपीति न्यायेन पररूपगुणाऽऽदि बाधित्वा पूर्वमेव लुकीष्टसिद्धिरिति दिक्।

**प्रातिपदिकग्रहणे—**इति (पृ.७३) अस्याश्च ज्ञापकं 'युवा खलति' (२।१।६७) इति सूत्रे 'जरती'इति स्त्रीलिङ्गनिर्देश इति वक्ष्यते। **लिङ्गविशिष्टस्येति**—लिङ्गबोधकप्रत्ययविशिष्टस्याऽपीत्यर्थः। फलन्तु-अयस्कुम्भी। 'अतः कृकमि (८।३।४६) इतिसत्वम्। तद्धि कंसादिषूत्तरपदेषु

---

१. 'तथाऽन्वयस्वीकारेपि' ख. पाठः।

२. 'तथाऽन्वये मानाऽभावात्' ख. पाठः।

३. इतोऽग्रे–'गर्गादिशब्दानां तत्प्रकृतिके लक्षणा' इति तु न युक्तम्। मानाऽभावात्। उक्तरीत्योपपत्तेश्च। किञ्च प्रातिपदिकाऽधिकाराऽभावे, तत्सत्त्वे लक्षणाऽभावे, यत्र प्रातिपदिकस्य टे प्रागकच् 'सर्वकाभ्याम्' इत्यादौ, तत्र चित्वाज्जायमानमन्तोदात्तत्वं विभक्त्यन्तस्यैव स्यात्, 'चितः सप्रकृतेः' इति वचनात्। तदधिकारे तु प्रातिपदिकस्यैव प्रकृतित्वं ततः परत्वं च। तस्मात् सुप्व्यवहितमिति न दोषः'–इति ख. पाठः।

४. 'तस्यैवोपस्थितत्वादर्थाऽभिधाने समर्थत्वाच्च' ख. ग. च. पाठः।

५. 'समासे' इत्यारभ्य 'ग्रहणात्' इत्यन्तो ग. च. पाठः क. कुण्डलितः।

विधीयते। 'समासे' (८।३।४५) इत्यनुवृत्त्या विसर्गान्तस्य पूर्वपदत्वबोधनात्। उत्तरपदस्याऽऽक्षेपेण प्रत्यासत्त्या कंसादिरूपस्यैव ग्रहणात्)।

किञ्च कुमारीमाचष्टे 'कुमारयति' इत्यत्र 'प्रातिपदिकाद्धात्वर्थे' (ग. सू. ७।४।९७) इति णिच्, टिलोपः, पुंवद्भावश्च। न च ज्ञापकस्य विशेषाऽपेक्षत्वाद् विशिष्य प्रातिपदिकग्रहणे एवाऽयं न्याय इति वाच्यम्। 'एतस्यां च सत्यां नाऽर्थो ङ्याब्ग्रहणेन' इति प्रकृतसूत्रस्थभाष्यविरोधात्।

'श्वश्रूः' इत्यादौ सुबुत्पत्तिरप्यस्याः फलं बोध्यम्।

[1]केचित्त्वनया परिभाषया स्त्रीप्रत्ययसमभिव्याहारे प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टेऽपि पर्याप्तत्वमतिदिश्यते। अत एव 'बहुव्रीहेरूधसः' (४।१।२५) इति सूत्रस्थभाष्यं सङ्गच्छते[2]। तत्र हि 'कुण्डोध्नी' इत्यत्र 'नद्यृतश्च' (५।४।१५३) इति कबापादितः 'नद्यन्तबहुव्रीहेः' इत्यर्थात्। ङ्यन्तस्य च बहुव्रीहित्वाऽभावात् तदसङ्गतिः स्पष्टैव। 'नद्यन्तानां यः समासः' इत्यर्थेन च परिहृतः। 'नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः समासः' इति तदर्थ इत्याहुः।

**सिद्धे** इति—ननु 'दृष्टा माला' 'दृष्टा गौरी' इत्यादौ वाक्यात् सुबुत्पत्त्यर्थं तदस्तु। न चाऽत्र लिङ्गविशिष्टपरिभाषया सिद्धिः। आप्रहितस्य 'दृष्टा माला' इति समुदायस्य प्रातिपदिकत्वाऽभावेन, तस्य तया प्रकृतेऽतिदेशाऽभावात्। 'लिङ्गविशिष्टप्रातिपदिकस्य' इत्यर्थाच्च। अनुपसर्जनस्त्रीप्रत्यये तदादिविध्यभावेन ङ्याबन्तत्वस्य सुलभत्वादिति चेन्न। प्रकृतसूत्रस्थैतद्भाष्यप्रामाण्येन, प्रातिपदिकसाहचर्येण च पृथगर्थोपस्थापकविभक्त्यन्ताऽनवयवकङ्याबन्तस्यैव ग्रहणेनाऽदोषात्। न च 'स्त्रीप्रत्ययान्ताच्चेन्ङ्याबन्तादेवे' इति नियमार्थं तदिति वाच्यम्[3]। 'युवतिः' 'श्वश्रूः' इत्यादौ त्यूङन्ते दोषाऽऽपत्तेः।

---

१. 'वस्तुतस्तु अनया' ग. पाठः। २. 'सूत्रस्थं भाष्यं' ग. पाठः।

३. इतोग्रे—'श्वशुरः श्वश्र्वा' (१।२।७१) इत्यादिनिर्देशविरोधापत्तेः' इति क. कुण्डलितो ग. च. पाठः।

**ङ्याबन्तादिति**—तत्फलं तु आर्यशिब्दात्[1] कुत्साऽऽदिविवक्षायां के 'आर्यका' 'आर्यिका' इत्यादिसिद्धिः। अन्यथाऽन्तरङ्गत्वात् पूर्वं कप्रत्यये[2]; एकाज्द्विर्वचनन्यायेन समुदायादेव टापि, आतः स्थानिकत्वाऽभावात् 'उदीचामातः' (७।३।४६) इतिविकल्पाऽप्रवृत्तिः स्पष्टैव। समुदायोत्तरटापै[3]वोभयोर्लिङ्गसम्बन्धबोधनसम्भवात्। तथा लोहितिका, लोहिनिकेति सिद्धिः[4]। अन्यथा स्वार्थिकत्वेनाऽन्तरङ्गः, परश्च 'लोहितान्मणौ' (५।४।३०) इति कन् ङीपं बाधेत। ततश्च लोहितिकेत्येव स्यात्। ङीग्रहणे[5] तु सामर्थ्यान्ङ्यन्तात् कनि रूपद्वयं सिद्धम्, 'वर्णादनुदात्तात्' (४।१।३९) इत्यस्य वैकल्पिकत्वात्। एवं च 'लोहितात्लिङ्गमबाधनं[6] वा' (वा०५।४।३१) इति न कार्यम्। न चैवं 'बहुगोमत्का' इत्यत्राऽन्यपदार्थस्य स्त्रीलिङ्गत्वेन (द्योतकाऽपेक्षणेन[7] च) कपः प्राक् ङीप्स्यादिति वाच्यम्। 'अकृत एव समासेऽलौकिकप्रक्रियावाक्ये एव समुदायस्याऽवयवीभूय[8] समासान्तः प्रवर्त्तते' इति 'समासान्ताः' (५।४।६८) इति सूत्रे वक्ष्यमाणत्वात्[9]।

---

१. 'आर्यशब्दात्' इति क. पाठः।

२. इतोग्रे–'कुत्साद्येकार्थीभावाऽऽपन्नस्याऽऽर्यशब्दस्य निष्कृष्य स्त्रीत्वेन सम्बन्धस्य वक्तुमशक्यत्वान्मध्ये टाबभावे, आतः स्थानिकत्वाऽभावात्' ख. पाठः।

३. 'समुदायोत्तरटापैव' इत्यादिः 'सम्भवात्' इत्यन्तः क. पाठः। ख. ग. च. नास्ति।

४. 'लोहितिका, लोहिनिका च सिद्ध्यति' इति ख. ग. च. पाठः।

५. 'ङीप्ग्रहणे तु' ख. पाठः।

६. 'लिङ्गबाधनं च' इति पाठान्तरम्।

७. ख. ग. पाठः। क. नास्ति।

८. 'उत्तरपदस्य, समुदायस्य चाऽवयवीभूय' ख. पाठः।

९. इतोग्रे–'स च विभक्तेः परस्तात् पुरस्ताद्वेति। 'परस्तात्' इति पक्षेऽपि तद्धितान्तत्वात् प्रातिपदिकत्वे, सुपोर्लुकि, पुनः सुपि, ततः प्रागेव वा समाससज्ञेति च तत्रैव विचारयिष्यते' इति क. कुण्डलितः, ख. पाठः।

एतेन[1] 'स्वाऽर्थे परिपूर्णस्य बहिर्भूतकुत्साऽऽदियोगः। परिपूर्णाऽर्थत्वं हि लिङ्गसङ्ख्याकारकाऽऽदिविषयकनिवृत्ताऽऽकाङ्क्षत्वम्। एवं च सुबुत्पत्त्यनन्तरमेव कुत्साऽऽद्यर्थकतद्धितोत्पत्तिः। तदुक्तं 'कुत्सिते' (५।३।७४) इति सूत्रे भाष्ये—'प्रियकुत्सनाऽऽदिषु ततः प्रवर्त्ततेऽसौ विभक्त्यन्तः' इति। तथा च बहिर्भूतपदार्थाऽपेक्षसङ्ख्याकारककार्यसुबपेक्षया लिङ्गकार्यस्याऽन्तरङ्गत्वेन पूर्वप्रवृत्तेङ्यार्ब्ग्रहणाऽभावेऽपि न क्षतिः। अत एव 'स्वार्थद्रव्यलिङ्गसङ्ख्याकारकाणां क्रमिको[2] बोधः' **इत्यभियुक्ताः**।

युक्तं चैतत्। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् पूर्वं जात्यादिज्ञानम्। ततो धर्मित्वेन प्रधानत्वाल्लिङ्गादिभिरप्याकाङ्क्षितत्वात् तदवच्छिन्नद्रव्यज्ञानम्। ततः सङ्ख्याकारकयोर्भिन्नपदार्थाऽपेक्षत्वात्, स्वमात्राऽपेक्षत्वाच्च लिङ्गस्य पूर्वमाकाङ्क्षितत्वेन तस्य ज्ञानम्। ततो विजातीयःक्रियारूपपदाऽर्थाऽपेक्षकारकाऽपेक्षया, सजातीयपदार्थाऽपेक्षसङ्ख्यायाः प्रथममुपस्थितत्वेन तज्ज्ञानम्। ततः[3] कारकरूपविभक्त्यर्थाऽऽकाङ्क्षा। एवं परिपूर्णाऽर्थस्य कुत्साऽऽदिभिर्योगः। एवं च ज्ञानक्रमाऽनुरोधेनैव तत्तत्वयुक्तकार्यप्रवृत्तेरुचितत्वेनाऽन्तरङ्गत्वं स्पष्टमेव।

यद्यपि बोधो न क्रमेण, तथाऽपि[4] शास्त्रप्रक्रियायां शास्त्रकल्पितोऽयं क्रमः। अर्थवदुद्देशेन प्रातिपदिकत्वविधानात्, प्रातिपदिकोद्देशेन ङीबादिविधानात् ङ्यन्ताद्युद्देशेन च स्वादिविधानादिति बोध्यम्। स्पष्टं चेदम् 'अचः परस्मिन्' (१।१ ५७) इत्यत्र **भाष्यकैयटयोः**।

'तस्याऽपत्यम् (४।१।९२) इत्यादेस्तत्सम्बन्ध्यपत्यमित्यर्थे प्रत्ययः'

---

१. अस्य ३५६ पृष्ठस्थेन 'परास्तम्' इत्यनेनान्वयः। 'न च स्वार्थे' इति ख. च. पाठः। 'ननु स्वार्थे' इति ग. पाठः।

२. 'क्रमिको बोधः' क. ख. पाठः।

३. 'तत इतरान्वयार्थं विभक्त्यर्थाकाङ्क्षा' ग. पाठः।

४. 'तथाप्युपायतया प्रत्यक्षज्ञाने दृष्टं क्रमं शब्दजन्ये बोधे आरोप्य, लक्ष्यं साध्यते। स्पष्टं चेदमचः परस्मिन्नित्यत्र भाष्यकैयटयोः' इति ग. पाठः।

इत्यर्थेन, तादृशेषु सम्बन्धाऽऽदिबोधाय विभक्तेरावश्यकत्वाच्च । सुबुत्पत्त्यनन्तरं जायमानश्च तद्धितः सुपः परस्तादेव । अत एव 'घकालतनेषु च' (६।३।१७) इत्यलुग्विधानं चरितार्थम् । प्रातिपदिकात् परत्वन्तु सामर्थ्याद् व्यवधानेऽपि सुलभम् । तदतिरिक्तव्यवधानन्तु न सह्यते, मानाऽभावात् ।

एवं च 'तद्धितविधौ गर्गादिपदानां तत्प्रकृतिके लक्षणा' इति **प्राचां** ग्रन्थाः प्रामादिका एव । लक्षणायां फलाऽभावान्मानाऽभावाच्च । ध्वनितं चेदं मतुप्सूत्रे भाष्ये[१] । **कैयटेन च** स्पष्टमुक्तम् ।

तत्र हि भाष्ये 'चित्रा गावोऽस्य' इति समुदायान्मतुप् कस्मान्न भवतीति शङ्कायाम् 'अप्रातिपदिकत्वात्' इत्युक्तम् । लक्षणावादिनां त्वसुबन्तत्वादिति वक्तव्यं स्यात् । 'सुबन्तादुत्पत्तावपि समर्थात् प्रत्ययः । प्रातिपदिकात्तु परं श्रूयते इत्यर्थाऽभिप्रायेणेदम्' इति च **कैयटेन** व्याख्यातमिति[२]

---

१. 'भाष्ये, कैयटे च स्पष्टमुक्तम्' इति ख. पाठः ।

२. 'इति च कैयटेन व्याख्यातमिति परास्तम् । न च 'न सामिवचने' (५।४।५) इति निषेधेन ज्ञापयिष्यमाणेऽप्यस्वार्थिके कनि 'आर्यका' इत्यस्य सिद्ध्यर्थं तदावश्यकम्, तस्य (हि) सर्वतोऽप्यन्तरङ्गत्वादिति[1] वाच्यम् । अत्यन्तस्वार्थिकत्वेनाऽतिरिक्ताऽर्थाऽभावेन, एकाऽर्थीभावकल्पने मानाऽभावेन, केवलप्रकृतेरपि स्त्रीत्वाऽऽदिसम्बन्धसत्त्वेन, मध्येऽपि स्त्रीप्रत्ययोत्पत्तेस्तत्र वक्तुं शक्यत्वेन, क्षत्यभावादिति चेन्न । समुदायोत्तरटापा स्त्रीत्वस्योक्तत्वेन मध्ये तदुत्पत्तौ मानाऽभावात् । 'एकाज्द्विर्वचन'न्यायेन तस्यैव युक्तत्वाच्च । तेन हि प्रकृतिप्रत्ययाऽर्थयोरुभयोरपि लिङ्गसम्बन्धो बोधयितुं शक्यते, उभयोरपि तत्प्रकृत्यर्थत्वात् । पूर्वोत्पन्नेन तु प्रत्ययाऽर्थो न बोधयितुं शक्यः । [2]अपृथगुपस्थापकत्वरूपैकाऽर्थीभावस्य तत्राऽपि वक्तुं शक्यत्वाच्च ।

---

1. 'सर्वतोऽप्यन्तरङ्गत्वात् । यद्वा न्यायसिद्धाया अप्युक्तयुक्तेरेव तज्ज्ञापकमुक्तं स्पष्टत्वाय । ङ्याप्ग्रहणं स्त्रीप्रत्ययमात्रोपलक्षणम्' इति क. कुण्डलितः पाठः ।

2. 'मिलित्वैवार्थबोध इत्येवंरूपैकार्थीभावस्य' ग. पाठः ।

परास्तम्[1]।

ङ्याब्ग्रहणं च स्त्रीप्रत्ययमात्रोपलक्षणम्। तेन[2] 'ब्रह्मबन्धूतरा' 'युवतितरा' इत्यादेः सिद्धिः। 'जातेश्च (६।३।४१) इति निषेधान्न पुंवद्भावः। युवत्वादेरपि वैकल्पिकजातिकार्यस्य वक्ष्यमाणत्वात्। **तद्धित**[3] इति—न चैवं 'यूनीतिः' इति स्यात्। किञ्च 'युवन्' शब्दात् प्रकृतिविशेषाऽपेक्ष'ति'-प्रत्ययाऽपेक्षयाऽन्तरङ्गत्वान्ङीपि, 'प्रातिपदिकग्रहणे' (प० ७३) इति परि-

---

न च 'अत्यन्तस्वार्थिकप्रत्ययो निरर्थकः' इति भ्रमितव्यम्। 'स्वार्थिकः' इति व्यवहाराऽनुपपत्तेः। 'प्रत्ययः' इति महासंज्ञाऽनुपपत्तेश्च। प्रकृत्यर्थाऽपेक्षयाऽतिरिक्तः परं वाच्यो द्योत्यो वा नास्तीत्यन्यदेतत्। 'द्वौ' इत्यादिवच्च नाऽन्यतरवैयर्थ्यम्। अत एव 'आर्यकस्य स्त्री' इति पुंयोगविवक्षायां[1] न ङीब्द्वयम्। न चैवमपि 'विभाषा पूर्वाह्णाऽपराह्णाभ्याम्' (४।३।२४) इति सूत्रे भाष्ये 'घकालतनेषु' (६।३।१७) इतिसूत्रेण सुबन्तात् तद्धितोत्पत्तेर्ज्ञापितत्वाद् व्यर्थमेव तदिति वाच्यम्। पूर्वोक्तरीत्या साऽर्थकतरबादिविषये तस्य चारितार्थ्येन ज्ञापकस्यैवाऽसम्भवादिति सूत्राऽऽशयः। ङ्याब्ग्रहणं च स्त्रीप्रत्ययमात्रोपलक्षणम्' इति ख. ग. च. पाठः।

१. 'इति परास्तम्' इति ख. नास्ति।

२. 'तेन 'ब्रह्मबन्धूतरा' 'युवतिका' इत्यादेः सिद्धिः। 'पुम्वद्भावाद्ध्रस्वत्वं विप्रतिषेधेन' इतिवार्त्तिके 'दारदकः' इत्यत्र पुम्वद्भावावकाशदर्शनपरभाष्यप्रामाण्येन 'क'प्रत्ययस्यापि तसिलादिषु पाठावश्यकत्वेन 'युवतिका' इत्यत्र पुंवद्भावस्य दुर्वारत्वान्न कश्चिद् विशेष इति वाच्यम्। 'केऽण.' (७।४।१३) इति ह्रस्वत्वेन परत्वाद् बाधात्' इति ग. च. पाठः।

३. 'तद्धित इति। अत्र च तद्धितशब्देन समासान्ता न गृह्यन्ते। 'समासान्ताः' इति बहुवचने तेषामाभ्यामपि पूर्वं प्रवृत्तेरिति वक्ष्यते। स च तक्रकौण्डिन्यन्यायेन स्त्रीप्रत्ययत्वाऽनाक्रान्त एव। एतेन युवतिरित्यसिद्धिरित्यपास्तम्। न चैवमपि युवन्शब्दात् प्रकृतिविशेषाऽपेक्षतिप्रत्ययाऽपेक्षया' ग. पाठः।

---

1, 'विवक्षायां ङीब्द्वयं स्यादिति परास्तम्' ग. पाठः।

भाषया 'ति' प्रत्यये, 'यूनीतिः' इत्येव स्यात्। न चोक्तार्थत्वादन्यतरस्याऽनापत्तिः। 'कुण्डोध्नी' इत्यादावनङादिभिरुक्तत्वेऽपि ङीप्स्वीकारात्। अत एव 'कृदिकारात्' (वा० सू० ४।१।४४) इत्यत्र क्तिन्पर्युदासश्चरितार्थ इति वाच्यम। अपवादत्वात् 'ति'प्रत्ययस्यैवोत्पत्तेः।[1] एवञ्च[2] तद्धितग्रहणं समासान्त-तिप्प्रत्ययाद्यतिरिक्तपरं बोध्यम्। व्याख्यानाच्च।

[3]वस्तुतः सूत्रे ङ्याब्ग्रहणमुक्तन्यायसिद्धाऽर्थानुवाद एव। अत्यन्तस्वार्थिकान् आरभ्य तस्य निवृत्तेश्च समासाऽन्तेषु न दोषः। अर्थाऽभावेनोक्तन्यायाऽप्रवृतेश्च। तेनाऽत्यन्तस्वार्थिके कनि 'आर्यिका' 'एतिका' इत्येव, यद्यभिधानमस्ति। एतेन[4]ाऽत्यन्तस्वार्थिके कनि 'आर्यका' इत्यस्यापि सिद्ध्यर्थमेतदित्यपास्तम्।

लोहिनिकेत्येतत्सिद्धये च 'लोहिताल्लिङ्गबाधनं वा' (वा० ५।४।३१) इति वचनं कार्यमेव।

अत एव भाष्ये—'ङ्याबन्तात् तद्धितोत्पत्तिर्यथा स्यादिति ङ्याप्ग्रहणम्। तत्र समासाऽन्तेषु दोषः। 'बहुगोमतीका' इति स्यात्[5]। न दोषः। समासान्ता अपि स्वार्थिकाः। तत्र परत्वात् समासान्ता इ[6]ति प्रत्याख्याने-

---

१. 'अपवादत्वात् तिप्रत्ययस्यैवोत्पत्तेः। यस्य स्त्रीप्रत्ययस्य स्त्रीप्रत्ययान्तरनिमित्तता तत्रोक्तार्थानामित्यस्य बाधेऽप्यन्यत्र तद्बाधे मानाऽभावाच्च। अत एव 'अजाद्युक्तिर्ङीषो ङीपश्च बाधनाय' इत्याद्याकरग्रन्थाः सङ्गच्छन्ते। वस्तुतस्तु सूत्रे ङ्याब्ग्रहणमुक्तन्यायसिद्धाऽनुवाद एव' ग. च. पाठः।

२. 'एवञ्च' इत्यारभ्य 'व्याख्यानाच्च' इत्यन्तः क. ग. पाठः। ख. च. नास्ति।

३. 'केचित्तु' इति ख. पाठः। 'वस्तुतस्तु' इति ग. च. पाठः।

४. 'एतेन' इत्यारभ्य 'अपास्तम्' इत्यन्तः क. ग. पाठः। ख. च. नास्ति।

५. इतोऽग्रे–'अत्र समासान्तग्रहणमत्यन्तस्वार्थिकोपलक्षणम्। एतिका एनिकेति च (न) स्यादित्यपि बोध्यम्। यदि तु तत्रात्यन्तस्वार्थिकस्य नाऽभिधानं तदा मास्तूपलक्षणत्वम्। न दोषः। समासान्ता अपि स्वार्थिकाः' इति ग. च. पाठः।

६. 'इति' ख. च. नास्ति।

नेदमुत्तरम्, अत्यन्तस्वार्थिकानारभ्य सूत्रमतेऽपि तन्निवृत्तिरित्याशयेन वा ? कथं कालिकेति। 'कालाच्च' (५।४।३३) इति स्वार्थे कन्। 'प्रत्ययस्थात्' (७।३।४४) इतीत्त्वं भविष्यति। कथं 'हरिणिका' इति ? हरिण-[1]शब्दः प्रकृत्यन्तरमस्ति। कथं 'लोहिनिका' इति ? वक्ष्यत्येतल्लोहिताल्लिङ्गबाधनं वा' इत्युक्तम्।

एवं च 'एनिका' 'आर्यका' इत्यादेरप्यस्वार्थिके कनि अभावः स्पष्ट एव। वचनाऽभावात्। 'एन'शब्दस्य प्रकृत्यन्तरस्याऽभावाच्च। ङ्याप्-ग्रहणस्याऽत्यन्तस्वार्थिकेष्वसम्बन्धाच्च। अन्यथा 'कथम् कालिका' इत्यादिग्रन्थाऽनुत्थानमेव स्यात्। एकदेशयुक्तिपरतयाऽपि व्याख्यानं तदा स्याद् यदि तादृशप्रयोगसाधकं भाष्याऽन्तरमुपलभ्येत। 'लोहिताल्लिङ्ग-बाधनं वा' (वा० ५।४।३१) इति वचनमेवाऽत्यन्तस्वार्थिकेषु तदसम्बन्धे ज्ञापकम्[2]। अत्यन्तस्वार्थिकतरबा ङ्याबाद्यन्तादनभिधानमेवेति बोध्य-मित्याहुः। (एवञ्च[3] ङ्याब्ग्रहणं व्यर्थमेवेत्याहुः)। विवृतं चैतद् भाष्यप्रदी-पोद्द्योते इति दिक्।

**स्वौज** (४।१।६)–सूत्रे समाहारद्वन्द्वः। **टङ्पाश्चेति** इति न च संज्ञाग्रहः कार्याऽर्थत्वेन प्रकृते चेत् संज्ञाप्रयुक्तकार्याऽभावेन कथं सेति वाच्यम्। लोप-स्यैव कार्यत्वात्। न च लोपमात्रफलिकेत्संज्ञा नाऽस्ति, अन्यथा काम्यचः कस्याऽपि तत्त्वाऽऽपत्तिरिति वाच्यम्। यत्र लोपे सति वर्णोच्चारणवैयर्थ्यम्, तत्र तन्मात्रफलकेत्संज्ञाऽनङ्गीकारेऽपि, तत्र तत्रेतरव्यावृत्तिसम्पादने चरि-तार्थोच्चारणानामेषां वर्णानां तत्स्वीकारे बाधकाऽभावात्। अत एव 'शी' प्रभृतीनामनेकाल्त्वात् सर्वाऽऽदेशत्वेऽपि तदवयवशादीनामित्संज्ञोक्ताऽऽकरे। सोरुकारो 'अर्वणस्त्रसौ' (६।४।१२०) इत्यादौ विशेषणा[4]ऽर्थः। 'असि'

---

१. 'हरिणीका' इति क्वचित् पाठः।

२. 'ज्ञापकं बोध्यम्' ख. पाठः।

३. ग. च. पाठः।

४. इतोऽग्रे–'अर्वणः' (६।४।१२०) इत्यत्राऽप्यनुनासिकविशिष्टो बोध्यः' इति ग. च. पाठः। क. कुण्डलितः।

इत्युक्तेऽसकारादावित्यर्थाऽऽपत्तौ 'वाजमर्वत्सु' इत्यादि न सिद्ध्येत्। ङसे-रिकारो 'टाङसी' (७।१।१२) इत्यत्र विशेषणार्थः। तत्रेकाराऽनुच्चारणे एकशेषापत्तौ इष्टयथासङ्ख्याऽनापत्तेः। यदि[2] तु सौत्रत्वादेकशेषो न करिष्यते, तदा चिन्त्यप्रयोजनम्।

जसो जकाराऽभावे 'औ' इत्यस्याऽऽव् स्यात्। ततश्च तस्य वकारान्तताऽपि सम्भाव्येत। एवं शसः शकाराऽभावे औटो ङित्त्वं सम्भाव्येत। एवं च डाऽऽदेशे इवाऽभत्वेऽपि टिलोपः स्यात्[3]।

औटष्टकारः 'सुटि' इति प्रत्याहारार्थः। 'टा' टकारस्तु 'टाङसि' (७।१।१२) इतिविशेषणार्थः। तत्फलन्तु 'सुपां सुलुग्' (७।१।३९) इति सूत्रेणाऽऽकाराऽऽदेशे इनाऽऽदेशाऽभावः।

'ङे' प्रभृतीनां ङकारो 'घेर्ङिति (६।३।१११) इत्यर्थः। न च 'घेः' इत्येव सूत्रमस्तु। 'सुपि' इत्येवाऽनुवर्त्यताम्। 'जसि च' (७।३।१०९) इति नियमाच्च नाऽङिति प्रवृत्तिरिति वाच्यम्। तत एव 'आण्नद्याः' (७।३।११२) इत्यादौ 'ङिति' (७।३।१११) इत्यनुवृत्तेः। 'पतयः' इत्यर्थं 'जसि च' (७।३।१०९) इत्यस्याऽऽवश्यकत्वाच्चेत्याहुः। सुपः पकारः प्रत्याहारार्थः।

'न विभक्तौ' (१।३।४) इति निषेधोपयोगिनीं विभक्तिसंज्ञामाह—**विभक्तिश्च** (१।४।१०४)—चकारः पुरुषवचनसंज्ञाभ्यां समावेशार्थः। अन्यथा एकसंज्ञाऽधिकारात् वचनप्रामाण्येन पर्यायः स्यात्। 'सुपः'

---

१. 'ङसेरिकारो 'ङसोऽशि' इत्यत्राऽस्य ग्रहणं मा भूत्। यदि 'एकवचनस्य' (७।१।३२) इत्यत्र तृतीयाव्यावृत्तये 'पञ्चम्याः' (७।१।३१) इत्यनुवृत्तेरावश्यकतया परिशेषादन्यस्य ङसो ग्रहणमित्युच्यते, तर्हि 'टाङसि' (७।१।१२) इत्यत्र विशेषणार्थः' इति ख. ग. च. पाठः। क. कुण्डलितः।

२. 'यदि तु' इत्यारभ्य 'चिन्त्यप्रयोजनम्' इत्यन्तः क. कुण्डलितः, ख. ग. च. पाठः।

३. इतोऽग्रे—'जसः शी' (७।१।१७) 'तस्माच्छसो नः' (६।१।१०३) इत्यनयोर्विषयविभागस्त्वन्यतरस्य निरनुबन्धकत्वेनाऽपि सुवचः। औटष्टकारः'—इति ख. ग. च. पाठ.। क. कुण्डलितः।

(१।४।१०३) इति सूत्रम् 'तिङस्त्रीणि त्रीणि' (१।४।१०१) इति सूत्रात् 'तिङः' इति चाऽनुवर्त्तते तदाह **सुप्तिङाविति**–'त्रीणि त्रीणि' इत्यप्यनुवर्त्तते इति 'तद्धितश्चाऽसर्वे' (१।१।३८) इतिसूत्रस्थभाष्यस्वरसः। 'अष्टन आ विभक्तौ' (७।२।८४) इत्यादौ सामर्थ्यात्, वचनग्रहणम्। अननुवृत्तिपक्षे 'प्रथमयोः' (६।१।१०२) इत्यत्राऽचीत्यनुवर्त्तनात्, 'तस्माच्छसः' (६।१।१०३) इति लिङ्गाच्च, औस्वोः स्वरूपग्रहणेनैव सिद्धे 'प्रथमयोः' इत्युक्तेश्च, त्रिकयोः प्राचां वैयाकरणानां प्रथमाद्वितीयापदवाच्ययोर्ग्रहणम्। 'न विभक्तौ तुस्माः' (१।३।४) इत्यादि प्रयोजनम्।

न च विभक्तिप्रदेशेषु सुप्तिङ्पदाभ्यामेव व्यवहारोऽस्तु, किं विभक्तिसंज्ञयेति वाच्यम्। 'तत्र' 'यत्र' इत्यादौ त्यदाद्यत्वाऽनापत्तेः न च तेषामपि सुप्संज्ञाऽस्तु। 'एतर्हि' इत्यत्र 'सुपि च' (७।३।१०२) इति दीर्घाऽऽपत्तेः।

**सप्तम्यन्ता इति**—स्त्रीलिङ्गा इति बोध्यम्। **प्राचाम्**=वैयाकरणाऽन्तराणाम, **इहापि**—अस्मिन् व्याकरणेऽपि।

**सुपः** (१।४।१०३)–सुबिति प्रत्याहारः, न सप्तमीबहुवचनमेव। एकस्याऽनेकसंज्ञाविधानवैयर्थ्याऽऽपत्तेः। 'सुपः' इति च षष्ठी। 'तानि' इतिपदरहितं 'तान्येकवचन' (१।४।१०२) इति सूत्रमनुवर्त्तते। तिङस्त्रीणि त्रीणि इति सूत्रात् 'त्रीणि त्रीणि' इति वर्त्तते। तदाह—**सुप इत्यादि**। **एकश इति**—एकैकमित्यर्थः। 'सङ्ख्यैकवचनेऽत्' (५।४।४३) इति शसो 'येन नाऽप्राप्ति(प० ६९)न्यायेन वीप्साद्विर्वचनाऽपवादत्वान्न द्विर्वचनम्। न चैवम् 'ऋषिसहस्रमेकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वा तया सर्वे ते सहस्रदक्षिणाः सम्पन्नाः' इत्यइउण्सूत्रस्थभाष्ये 'एकैकशः' इति प्रयोगाऽनुपपत्तिरिति वाच्यम्। एकशब्दस्य प्रधानाऽर्थकस्य 'एक' इतिसम्बोधनमित्यदोषात्। 'एकदशः' इत्यस्य तु प्रत्येकमित्यर्थः।

---

१. इतोऽग्रे–'सम्पूर्णमेव वाऽनुवर्त्तते। तच्छब्दस्य बुद्धिस्थपरामर्शकतया व्याकरणाऽन्तरोक्तसंज्ञानामपि परामर्शः' इति क कुण्डलितः ग. च. पाठः। अत्र 'परामर्शः' इत्यस्य स्थाने 'परामर्शात्' इति ग. च. पाठः।

२. इतोऽग्रे–'किञ्चैतद्भाष्यप्रामाण्यात् स्वार्थे शस्कल्पने, स्वार्थिकस्य तस्याऽऽन्तरङ्गत्वेन पूर्वं प्रवृत्तौ, शसन्तस्य द्वित्वाऽऽपत्तौ, भाष्याऽसङ्गतेस्तदवस्थत्वात्। न च स्वार्थिकं द्विर्वचनमेव कल्प्यते शस्विषये, तच्च 'एकशः'

कि[1]ञ्चैतद्भाष्यैतत्सूत्रप्रामाण्यात् स्वात् स्वार्थे वैकल्पिकद्विर्वचनकल्पनाऽपेक्षयाऽस्मदुक्तप्रकारस्यैवोचितत्वात्। किञ्च नाऽयं भाष्यप्रयोगः, किन्तु-गौण्यप्युत्तरा सङ्ख्या व्यवहारबाधिकेत्यर्थे श्रौतोऽयं व्यवहारो दृष्टान्तत्वेनोक्तो भगवतेति तत्र च्छान्दसत्वान्न दोष इत्याहुः। अ[2]तएव 'सर्वस्य द्वे' (८।१।१) इति सूत्रस्थैकैकश इति भाष्यप्रयोगोऽल्पार्थकैकशब्दमादाय शसः कारकाद् विधानेन, मङ्गलाऽमङ्गलादिरूपाऽर्थाऽपेक्षणेन च शसोऽपि बहिरङ्गतया परत्वाद् द्विर्वचने, ततः 'सस्' इति साधितः **कैयटेन**। यद्यप्युक्ताऽर्थानामपि क्वचित् प्रयोगो दृश्यते, तथाऽपि 'यत्र तद्धितेनाऽनुक्ता वीप्सा, तत्र द्विर्वचनम्' इति भाष्योक्त्या, प्रकृते तद्वक्तुमशक्यम्[3]।

**द्व्येकयो** (१।४।२२)—नियमाऽर्थे इमे। इह द्व्येकशब्दौ सङ्ख्यापरौ, न सङ्ख्येयपरौ, बहुवचनाऽऽपत्तेरित्यभिप्रेत्याऽऽह—**द्वित्वैकत्वयोरिति**। 'सङ्ख्ययाऽव्यय' (२।२।२५) इतिसूत्रस्थभाष्यसंमतम् 'राचशतः सङ्ख्याः सङ्ख्ये इ[4]ति तु 'बहुषुव' (१।४।२१) इति सूत्रस्थभाष्यप्रामाण्यादेकद्विबहुशब्दातिरिक्तविषयमिति भाव[5]ः। अत एव 'सुपां कर्मादयोऽप्यर्थाः सङ्ख्या

---

(४।१।१०२) इति सूत्रनिर्देशाद् वैकल्पिकमिति वाच्यम्। ईदृशक्लिष्टकल्पनाऽपेक्षयाऽस्मदुक्तप्रकारस्यैवोचितत्वात्'—इति ख. ग. च. पाठः।

१. 'किञ्चैतद्भाष्यैतत्सूत्रप्रामाण्यात्' इत्यारभ्य 'न दोष इत्याहुः' इत्यन्तः क. पाठः। 'केचित्तु नायम्' इत्यादिनाऽग्रे ख. पुस्तकेऽपि अयं पाठो वर्त्तते।

२. 'अत एव' इत्यारभ्य 'तद्वक्तुमशक्यम्' इत्यन्तः क. कुण्डलितः ख. ग. च. पाठः।

३. इतोऽग्रे—'केचित्तु पूर्वोक्तभाष्यप्रयोगे 'अबाधे च' (८।१।१०) इति द्विर्वचनमित्याहुः' च. पाठः। 'केचित्तु नाऽयं भाष्यप्रयोगः, किन्तु गौण्यप्युत्तरा सङ्ख्या पूर्वसङ्ख्याव्यवहारबाधिकेत्यर्थे श्रौतोऽयं व्यवहारो दृष्टान्तत्वेनोक्तो भगवतेति तत्र च्छान्दसत्वान्न दोष इत्याहुः'—इति ख. पाठः।

४. 'इति तु प्रायोवादमात्रमिति भावः' ख. पाठः।

५. इतोऽग्रे—'सूत्रे लक्षणया प्रयोग इत्यन्ये' इति क. कुण्डलितः, च. पाठः। ख. ग. तु नास्ति।

चैव तथा तिङाम्' इतिवार्त्तिकं सङ्गच्छते। अत एव ज्ञापकात् पूर्वनिपातप्रकरणस्याऽनित्यत्वान्न एकशब्दस्य पूर्वनिपातः। 'सङ्ख्याया अल्पीयायाः (वा० २।२।३५) इत्यस्याऽनित्यत्वात्[1]। एकशब्दस्तु द्विसाहचर्यात् सङ्ख्यावाच्येव, न केवलाऽऽदिवाचीत्याहुः।

**केचित्तु**[2] एकशब्दो द्वित्वबहुत्वाऽभावपरः। अत एवाऽव्ययेभ्योप्येकवचनमात्रोत्पत्तिः सङ्गच्छते। न च 'घटः' इत्युक्ते एकत्वनिश्चयो न स्यादिति वाच्यम्। द्विवचनबहुवचनाऽभावेन द्वित्वबहुत्वयोरबोधे, तन्निश्चयात्। 'घटः' इति जातावेकवचनम्, व्यक्त्यभिप्रायेण वेत्यर्थनिश्चयवत् प्रकरणादिना तस्याऽपि निर्णयसम्भवाच्च। अत एव 'पचतिकल्पम्' इत्यादौ व्यर्थनियतप्रथमैकवचनप्रयोगसिद्धिः। तत्र व्यर्थं क्वाचित्कम्, 'एकवचनम्' इति महासंज्ञाकरणात्। ध्वनितं चेदं 'तद्धितश्चाऽसर्वे' (प० १।३८) इति सूत्रे भाष्ये इति वदन्ति[3]।

**बहुषु** (१।४।२१)—अयमपि सङ्ख्यापर एव, 'द्व्येकयोः' (१।४।२२) इति साहचर्यात्। बहुवचनन्तु आश्रयगतं बहुत्वं धर्मे आरोप्य कृतम्। तत्फलन्तु 'बहुः पर्वतः' इति वैपुल्यवाचिनोऽत्राऽग्रहणमिति सूचनम्। न च तत्र परत्वादेकवचनम्। 'स्वौजस्' (४।१।२) इतिवाक्ये बहुवचनस्यैव परत्वात्। एषां च नियमशास्त्रत्वेन तदेकवाक्यत्वादिति सूत्रहृदयम्। 'दाराः' इत्यादौ त्ववयवगतबहुत्वस्याऽवयविन्यारोपो बोध्यः। ([4]अवयवाऽवयविनोरभेदविवक्षा वा)। स च कोशवृद्धव्यवहाद्यनुसारेणैव। तेनैकस्मिन् वृक्षे बहुवचनं न शङ्क्य[5]म्।

---

१. 'इत्यस्याऽनित्यत्वादित्याहुः' च. पाठः।

२. 'वस्तुतस्तु एकशब्दो द्वित्वबहुत्वाऽभावपरः' इति च. पाठः।

३. इतोऽग्रे–'एतेन महासंज्ञयैव सिद्धे सूत्रत्रयं व्यर्थमित्यपास्तम्' इति च. पाठः।

४. क. कुण्डलितः ख. च. पाठः।

५. इतोऽग्रे–'द्रव्यपक्षेऽभिधेयगतबहुत्वस्यैवाऽऽश्रयणात्। जातिपक्षेऽपि प्रत्यासत्त्या तदाधारद्रव्यगतस्यैव ग्रहणात्। जात्याधारश्चाऽवयव्येव, नाऽव-

बहुत्वं च त्रित्वादिपरार्द्धाऽन्ताऽन्यतमसङ्ख्याव्यापको धर्मविशेषः। एतावतैव बहुत्वे सङ्ख्यात्वव्यहारः।

एतेन 'वहवः' इत्युक्ते 'कति' इति सङ्ख्याविशेषाऽऽकाङ्क्षाया जायमानत्वेन बहुत्वस्य नियतपरिच्छेदकत्वाऽभावान्न सङ्ख्यात्वम्, अत एव बह्वादीनुद्दिश्य 'असङ्ख्यां सङ्ख्येत्याह' इति 'बहुगुणे' (१।२।२३) इति सूत्रे भाष्यम्, अत एव 'बहुगुण' (१।२।२३) इति तस्य सङ्ख्यासंज्ञाविधानं चरितार्थमित्ययमपि सङ्ख्यापर एवेत्यपास्तम्।

'भर्त्तृदारयोः' इत्यादौ तु द्विवचनमेव। आरोपे मानाऽभावात्। एतदेवाऽभिप्रेत्य 'अप्तेजसोः' इति शङ्करभगवत्पादैः प्रयुक्तम्। एवं सङ्ख्यापरद्विबहुशब्दयोः सङ्ख्येयगतद्वित्वाद्यारोपेण द्विवचनाद्यन्तत्वमेव।

अत एव 'कस्य द्वित्वे' इत्यर्थे 'कस्य द्वयोः' 'कस्य बहुषु' इति भाष्ये प्रयुक्तम्। समासे तु 'द्व्येकयोः' (१।४।२२) इत्यादौ द्विवचनमेव। तत्राऽऽरोपे मानाऽभावात्।

एतेन[1] एकस्मिन्नपि 'गुरवः समागताः' 'आचार्याः कथयन्ति' इत्यादि प्रयोगाः समर्थिताः। न चाऽन्वर्थसंज्ञयैव सिद्धे इदं सूत्रम्, आद्यसूत्रे 'द्वयोर्द्विवचन' इति च व्यर्थम्। स्पष्टाऽर्थत्वादिति दिक्।

**राम इति** –अव्युत्पत्तिपक्षेऽर्थवत्सूत्रेण, 'रमन्ते योगिनोऽस्मिन्' इत्यधिकरणे '**हलश्च**' (३।३।१२१) इति घञा व्युत्पन्नत्वे तु 'कृत्तद्धित' (१।२।४६) सूत्रेणैव प्रातिपदिकत्वमिति बोध्यम्।

**सरूपाणाम्** (१।२।६४)—'वृद्धो यूना' (१।२।६५) इति सूत्रादेवकारोऽ

---

यवाः। वृक्षशब्दवाच्योऽपि स एवेति बोध्यम्'–इति क. कुण्डलितः, च. पाठः।

१. 'तेनैकस्मिन् वृक्षे बहुवचनं न शङ्क्यम्। तेन एकस्मिन्नपि 'गुरवः समागताः' इति ख. पाठः।

त्रापकृष्यते इत्यभिप्रेत्याऽऽह—**सरूपाण्येवेति**। न तु विरूपाणीत्यर्थः। (एव[1] श्चाऽन्वयितावच्छेदकावच्छेदेनान्वये एवकारस्तात्पर्यग्राहक इति विभक्तित्वाऽवच्छेदेन सारूप्यान्वयो लभ्यते। अन्यथा सामानाधिकरण्येन स्यात्। एकशब्दस्वारस्यात्)। अतो जननीवाचिपरिच्छेत्तृवाचिनोर्मातृशब्दयोर्भ्यामि[2] नैकशेषः। औजसादौ वैरूप्यात्[3]। स्त्रीपुंसयोर्भ्यामि 'ताभ्याम्' इत्यनुप्रयोगस्य समत्वान्नाऽनुप्रयोगविरोधः। 'पुमान् स्त्रिया' (१।२।६७) इत्येकशेषोऽपि न। तत्रापि 'एकविभक्तौ सरूपाण्येव' इत्यनुवृत्ते[4]रित्यादि। वक्ष्यते।

न चैकविभक्ताविति व्यर्थम्, 'यानि सरूपाण्येव' इत्युक्त्या पूर्वोक्तदोषवारणसम्भवादिति वाच्यम्। हरिणस्त्रीवाचकहरिणीशब्दस्य, हरितवर्णविशिष्टस्त्रीवाचकहरिणीशब्दस्य चैकशेषाऽनापत्तेः। पुंवद्भावेन तद्धितादौ वैरूप्यात्।

**दृष्टानीति**—'लौकिके प्रयोगे' इति शेषः[5]। एकशेषस्त्वन्तरङ्गत्वाद् विभक्त्युत्पत्तेः प्रागेव, तत्र विभक्तेर्निमित्तत्वाऽनाश्रयणात्, सारूप्ये तस्या उपलक्षणमात्रत्वात्। एवं चैकशेषविषये द्वन्द्वाऽप्राप्तिरेव। 'द्वन्द्वाऽपवादक एकशेषः' इति तु 'यद्येतन्न स्यात् तर्हि विभक्तिः प्रत्येकं स्यात्, तथा च

---

१. क. कुण्डलितः पाठः। ख. ग. च. नास्ति।

२. 'श्यामादावपि' ख. च. पाठः।

३. इतोऽग्रे—'यत्तु 'तैः' इत्युक्ते स्त्र्यर्थस्याऽनवगमात्, 'ताभिमः' इत्युक्ते पुनरर्थस्याऽनवगमादनुप्रयोगविरोधेन नैकशेषः' इति। तन्न। 'त्यदादितः शेषे पुनपुंसकत' (वा० १।२७२) इत्यस्य सत्त्वेन 'तैः' इत्युक्तेऽपि स्त्र्यर्थावगमात्, प्रकरणाऽऽदिगृहीततात्पर्यवशेन तथाऽवगमाच्च' इति क. कुण्डलितः ख. पाठः।

४. 'अनुवृत्तेः' इतोऽग्रे—'विभक्तौ तदितरकृतविशेषविरहाऽभावाच्च' इति क. कुण्डलितः, च. पाठः।

५. इतोऽग्रे—'एतेनाऽङ्गकार्यत्वेन दीर्घादीनामसिद्धत्वादेवकारापकर्षेऽपि मातृशब्दयोरेकशेषो दुर्वार इत्यपास्तम्' इति च. पाठः, क. कुण्डलितः।

द्वन्द्वोऽपि स्यात्, कृते त्वप्राप्तिरेव' इत्येतावतैव[1]।

**स्यादेतत्**। इदं सूत्रं व्यर्थम्, तन्त्रेणैव सिद्धेः। यथा–'अक्षा भज्यन्ताम् भक्ष्यन्ताम् दीव्यन्ताम्' इत्यत्र 'अक्षाः' इति कारकस्य सकृदुपादाने(ऽपि)[2] सर्वत्राऽन्वयः। तन्त्रकारणन्तु शब्दानां तुल्यरूपता। तदुक्तम्—

**अक्षादिषु यथा भिन्ना भक्षि-भञ्जि-दिविक्रियाः।**
**प्रयोगकालाऽभेदेऽपि प्रतिभेदं पृथक् स्थिताः।**
**अक्षाणां तन्त्रिणां तन्त्रे उपायस्तुल्यरूपता॥ इति।**

एवम् 'अक्षो भज्यताम्, भुज्यताम्, दीव्यताम्' इत्यादि भवति।

तत्र तन्त्रं 'द्विविधम्–शब्दतन्त्रम्, अर्थतन्त्रं च। शब्दस्य पर्यायपरिवृत्त्यसहत्वे शब्दतन्त्रम्। तत्सहत्वेऽर्थतन्त्रम्। आद्यम्—'अक्षाः' इत्यादौ। अन्त्यम्—'पटाः' इत्यादौ। प्रकाराऽन्तरेणैव तत्पक्ष[3]निरूपणं तद्दूषणं चैकशेषवादे **मञ्जूषायां द्रष्टव्यम्**।

त[4]त्र 'अक्षा भज्यन्ताम्' इत्यादौ समभिव्याहृताऽनेकपदप्रयोगरूप-

---

१. इतोऽग्रे—'वैरूप्याऽभावश्च प्रातिपदिकांऽशे एव। अत एव सञ्ज्ञाभूतप्रथमशब्दस्य, सर्वनामसञ्ज्ञकप्रथमशब्दस्य चैकशेषो भवत्येव। अन्यतरस्य जसि 'प्रथमे' इत्यस्यापि सत्त्वेऽपि, प्रातिपदिकांशे वैरूप्याऽभावस्यैव सत्त्वादित्याहुः। 'विभक्त्यन्तानामेकशेष' इति पक्षेऽपि प्रयोगे सरूपप्रकृतिकविभक्त्यन्तानामित्यर्थान्न फलभेद इति दिक्' इति च. पाठः, क. कुण्डलितः।

२. 'सकृदुपादानेऽपि शब्दप्रतिपत्तिभेदसमाश्रयणेन प्रत्येकमन्वयः' इति च. पाठः, क. कुण्डलितः।

३. 'पक्षद्वयनिरूपणम्' ख. पाठः।

४. 'तत्र 'अक्षा भज्यन्ताम्' इत्यादौ विभक्त्यन्तानामेव तन्त्रम्। 'अनेकानि शब्दव्याख्यानानि, अनेकाश्च तदर्थोपस्थितयो युगपत् इति प्रत्येकाऽन्वयविषयः समूहालम्बनाऽऽत्मको बोधः। ज्ञानयौगपद्यस्याऽपि पातञ्जलेऽङ्गीकारात्। 'परान् पश्य' 'अक्षान् पश्य' इत्यादौ त्वेकमेव शब्दज्ञानम्,

तात्पर्यग्राहकात् साहित्याऽनवच्छिन्नतयोपस्थितिः। तथाभूतैकपदप्रयोगे तु साहित्याऽवच्छिन्नतयोपस्थितिरिति बोध्यम्[1]।

'अनेकाऽर्थतात्पर्यग्राहकप्रकरणादीनां क्रमेण ज्ञानात् क्रमेणोपस्थितौ, बोधे चाऽऽवृत्तिः। 'अक्षा भज्यन्ताम्' इत्यादावप्यावृत्तिरेव। उच्चारणैक्यमात्रेण तन्त्रव्यवहारः' इति[2] कश्चिदिति[3] चेत्। सत्यम्। 'सरूपाणामेकशेष एव' इति नियमाऽर्थत्वात्। तत्फलन्तु[4] 'अक्षा दीव्यन्ताम्' 'अक्षा भज्यन्ताम्' इत्यादौ प्रत्यर्थंशब्दनिवेशस्याऽपि दर्शनेन, कदाचित् तादृशप्रयोगे प्राप्तद्वन्द्वस्य निवृत्तिः। सहविवक्षाविषयप्राप्तस्यैव बाधबोधनाय 'तन्त्र'पदं त्यक्त्वा, 'एकशेष' पदप्रयोगः सूत्रे।[5]

---

अर्थोपस्थितिश्चैकैव समूहालम्बनाऽऽत्मिकेति प्रातिपदिकानामेव तन्त्रम्। क्वचिद् विभक्त्यन्तानां तन्त्रमनेकत्रानययौगपद्यम्, क्वचित् प्रातिपदिकतन्त्रम्, समूहाऽऽलम्बनाऽऽत्मकमेव तदर्थज्ञानमित्यत्राऽन्वय्यनेकपदसमभिव्यवहारः, तादृशैकपदसमभिव्याहारश्च नियामक इति बोध्यम्' इति ख. पाठः। क. कुण्डलितः।

१. 'समभिव्याहृत' इत्यारभ्य 'इति बोध्यम्' इत्यन्तः क. ग. पाठः।

२. 'इत्यपि कश्चित्। न चाऽत्रापि शास्त्रीयैकशेषेण निर्वाहः' इति ख. च. पाठः।

३. इतोऽग्रे–'न चाऽक्षा भज्यन्तामित्यत्राऽपि शास्त्रीयैकशेषेण निर्वाहः। 'एकशेष'शब्दमर्यादया इतरनिवृत्तिपूर्वकाऽवस्थितेरेव प्रतीत्या, लोपाऽऽदिविषय इव, शिष्यमाणस्यैव लुप्यमानाऽर्थाभिधायकताया आवश्यकत्वेनैकपदजन्यैकोपस्थितिविषयाणां च 'पुष्पवन्ता'दिपदवदेकज्ञानान्वयस्यैवौचित्येन, विभक्त्यर्थव्यासज्यवृत्तिसङ्ख्या या अन्वये व्यासज्यवृत्त्यन्वयिताऽवच्छेदकधर्माऽवश्यकत्वेन साहित्यभानाऽऽवश्यकता चाऽनेकत्रान्वयस्य दुरुपपादत्वादिति चेत्। सत्यम्' इति क. कुण्डलितः, ख. च. पाठः।

४. 'तत्फलन्तु प्रत्यर्थशब्दनिवेशस्यापि' ख. च. पाठः।

५. इतोऽग्रे 'सरूपाणामेकशेष एवेत्यर्थात्। ध्वनितं चेदं पृथक् सर्वेषां विभक्तिपराणामेकशेषः' इति ख. च. पाठः।

अ[1]र्थावर्थौ प्रति यत्, अर्थानर्थान् प्रति च यत्, तदपि प्रत्यर्थमेवेत्याश्रित्य भाष्ये सूत्रं प्रत्याख्यातम्। वा[2]क्ये त्वसहविवक्षैव। कदाचिच्चेतः साहित्य-प्रतीतावपि घटादिपदानां तदर्थत्वाऽभावः स्पष्ट एव। घटादिपदानामनेकेषां साहित्ये वृत्तिरेव नास्ति। अनभिधानात्। एकस्यैव त्वनेकार्थस्य साहित्ये वृत्तिः, अभिधानस्वाभाव्यादिति तदाशयः। असहविवक्षायामेकशेषाऽभावश्च 'पृथक् सर्वेषां विभक्तिपराणामेकशेषः' इति पक्षे, 'विभक्त्यन्तानामेकशेषः' इति पक्षे च 'द्वन्द्वप्रतिषेधो वक्तव्यः' इत्याशङ्क्य, 'अनवकाश एकशेषो द्वन्द्वं बाधिष्यते' इति ग्रन्थेन ध्वनितः। अत ए[3]व ज्ञायते 'सहविवक्षायामेव एकशेषः' इति। द्व[4]न्द्वविषये इति यावत्। यत्र ह्यनेकाऽर्थस्य मिलित[5]स्यैकरूपेणैकस्मिन्नितरत्राऽन्वयः स तथाभूतो(ऽस्य[6]) विषयः। 'अत एव 'इदितो नुम् धातोः' (७।१।५८) इति निर्देशः सङ्गच्छ[7]ते। अत्र[8] हि अन्यपदार्थे उपसंक्रमादभेदेन परस्पराऽन्वयाच्च भेदघटितसाहित्य-निमित्तकैकशेषाऽप्रवृत्तिः। पुष्पवन्तादिपदन्यायोऽपि प्रागुक्त एव।

यद्वा—पूर्वसूत्राद् 'द्वन्द्वे इत्यनुवर्त्य 'द्वन्द्वे प्रसक्ते सति' इति व्याख्येयम्। 'द्वन्द्वे कृते' इति तु नाऽर्थः। समासाऽन्ताऽऽपत्त्या 'पन्थानौ' इत्याद्य-

---

१. 'अर्थावर्थौ' इत्यारभ्य 'एकशेषाऽभावश्च' इत्यन्तः क. ग. पाठः। ख. च. नास्ति।

२. 'वाक्ये त्वसहविवक्षयैव कदाचिच्चेत् साहित्य' इति क. पाठः।

३. 'अत एव च' इति ख. च. पाठः।

४. 'इतरेतरयोगद्वन्द्वविषये' इति ख. च. पाठः।

५. 'मिलितस्येतरान्वयः' इति ख. च. पाठः।

६. औचित्यादस्माभिर्योजितोऽयमंशः।

७. इतोऽग्रे–'साहित्यस्य भेदघटितत्वेनाऽभेदेनाऽत्र परस्पराऽन्वयात् साहित्य-निमित्तैकशेषाऽभावस्तत्र। 'यः शिष्यते स लुप्यमानार्थाऽभिधायी' इति पुष्पवन्तादिपदन्यायोऽपि प्रागुक्त एव' इति ख. च. पाठः।

८. 'अत्र हि' इत्यारभ्य 'एकशेषाऽप्रवृत्तिः' इत्यन्तः क. ग. पाठः, ख. च. नास्ति।

सिद्धापत्तेः। 'करौ' इत्यादावेकवत्त्वाऽऽपत्तेश्च। 'सर्वे' 'सर्वेषाम्' इत्यादौ 'द्वन्द्वे च' (१।१।३१) 'विभाषा जसि' इत्यनयोरापत्तेश्च। 'जसः शी'त्यत्र 'वे'ति वक्तव्ये 'विभाषा जसि' (१।१।३२) इति तु उद्भूताऽवयवभेदविवक्षया बहुवचने एकशेषाऽभावात् तत्र विकल्पवारणाय, उत्तरार्थं चेति बोध्यम्। असहविवक्षाविषयेण विभक्त्यन्ततन्त्रेण 'ब्राह्मणाभ्यां[1] कृतं, देहि', '(पयः[2]) पयो जरयति' इत्यादि 'नीलोत्पलस्पर्द्धिनी नेत्रे, तनुर्वा हरेः' इतिवत्, 'विद्वन्मानसहंस' इतिवच्च इष्टमेवेति बोध्यम्।

किञ्चाऽसहविवक्षायामपि सूत्रप्रवृत्तौ, सहविवक्षायां द्वन्द्वस्येवाऽन्यत्र कर्मधारयस्याऽपि बाधाऽऽपत्तौ, 'साऽऽरवसारवौर्मिज'[3] इत्यादिप्रयोगविरोधाऽऽपत्तिः[4]। यथा च सहविवक्षायामेवैकशेषे विरूपाऽनेकशेषाऽऽरम्भपरभाष्यविरोधो न भवति, तथा भाष्यप्रदीपोद्योते निरूपितम्।

'एकशेष एव' इत्ययं नियमो 'विभक्तौ यानि सरूपाण्येव तद्विषयः' इत्युक्तम्। एवं च 'प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः' इतिपूर्वपक्षवार्तिके, प्रातिपदिकैकशेषस्य 'एकविभक्तौ' इतिपदाऽभावे एवोपपत्तिं मत्वा कृते, 'मातृ'ग्रहणं विभक्तौ विरूपाणामुपलक्षणम्। न च[5] प्रागुक्तविशिष्टनियमेन व्यावृत्तिसिद्धौ वार्त्तिकं व्यर्थम्। विभक्तिपदाऽभावे[6] 'यानि सरूपाणि तेषामेकशेष एवः' इत्यर्थस्यैव प्राप्तेः। प्रयोगमात्राऽवच्छेदेन

---

१. ब्राह्मणाभ्यां कृतम्, ब्राह्मणाभ्यां च धनं देहीत्यर्थे तृतीयाचतुर्थीद्विवचनान्तयोर्ब्राह्मणाभ्यामित्यनयोस्तन्त्रेण निर्देशोऽयम्।

२. पयः=दुग्धं कर्तृ, पयः=जलं कर्म, जरयतीत्यर्थे (पय) पयो जरयति' इति प्रथमान्तद्वितीयान्तयोस्तन्त्रमिदमित्याशयः।

३. आरवेण=कलकलेन सहिता याः सारवाः=सरयूनद्या ऊर्मयस्तत्र जात इत्यर्थः। ४. 'विरोधापत्तिरिति ध्येयम्' ख. च. पाठः।

५. 'न च प्रागुक्तद्विविधनियमेन व्यावृत्तिसिद्धौ' ग. च. पाठः।

६. 'विभक्तिपदाऽभावेन सरूपाणामेवैकशेष एवेति' इति ग. च. पाठः।

सारूप्यस्य हरिणीशब्दादावसम्भवेन, एव[१]काराऽपकर्षाऽसम्भवात् प्रयोग-सामानाधिकरण्येनैव सारूप्यस्य ग्राह्यतया, तस्याऽत्राऽपि सत्त्वात् । प्रतिषेधेन च सहविवक्षाविषयैकशेषस्य [२]निषेधे, तद्विषये द्वन्द्वः, पक्षे वाक्यं च सिद्ध[३]यति ।

ननु वार्तिके 'प्रातिपदिकानामेकशेषे' इत्यसङ्गतम्, विभक्त्यन्तानामेकशेषेऽपि 'जननीभ्यां देहि, धान्यमातृभ्यां च' इ[४]त्यर्थे एकशेषे 'मातृभ्यः' इति स्यादिति प्रतिषेध आवश्यकः । न च तत्पक्षे इष्टाऽऽपत्तिः, अत एव 'किमुच्यते प्रातिपदिकानामेकशेषे इति, न पुनर्यस्याऽपि विभक्त्यन्तानामेकशेषस्तेनाऽपि प्रतिषेधो वक्तव्यः, तस्याऽपि ह्येतानि क्वचिद्विभक्त्यन्तानि सरूपाणि, मातृभ्यां च, मातृभ्यां चेति । अथ मतमेतद् विभक्त्यन्तानां सारूप्ये भवितव्यमेकशेषेण' इति भाष्ये उक्तमिति वाच्यम् । सूत्र[५]व्याख्यानपक्षभेदेन एकलक्ष्यस्य साधुत्वाऽसाधुत्वयोरनुचितत्वा[६]त् । अत एव 'अथ मतमेतत्' इति प्रतीकमुपादाय 'अभ्युपगम्यवादेन त्वेतदुच्यते' इति **हरिकैयटादिभि**र्व्याख्यातमिति चेन्न । ईदृशविरुद्धमभ्युपेत्यैव वा[७]र्त्तिके तदुक्तेः । अत एव 'भवितव्यमेवैकशेषेण' इत्युत्तरम्–'एवं च कृत्वा चोद्यते' इत्युक्तं भाष्ये । अस्य 'प्रातिपदिकानामेकशेषे इत्यादि' इति शेषः । अनेनैव चाऽस्य पूर्वपक्षवार्त्तिकत्वं सूचितम् ।

---

१. 'एवकाराऽपकर्षाऽसम्भवात्' इति क. ग. पाठः । ख. नास्ति ।

२. 'निषेधेऽपि' ख. पाठः ।

३. इतोऽग्रे—'असहविवक्षाविषयं तन्त्रन्तु भवत्येव मातृभ्यां कृतम्, देहीति च, अक्षा भज्यन्ताम्, भुज्यन्तामित्यादिवत्' इति ग. च. पाठः ।

४. 'चेत्यर्थेऽपि' ग. च. पाठः ।

५. 'सूत्रव्याख्यानपक्षभेदेन लक्ष्याऽनुचितत्वात्' ख. ग. च. पाठः ।

६. इतोऽग्रे—'विरूपाणामनेकशेष इत्यादिभाष्यविरुद्धत्वाच्च' इति ग. च. पाठः ।

७. 'वार्त्तिकेऽपि' ग. च. पाठः ।

अत एव तत्खण्डनाय विभक्तिग्रहणसत्त्वेऽपि तदुपलक्षणं सारूप्ये आश्रित्य प्रातिपदिकैकशेष उत्तरत्र स्थापितः[1]। एवं च सूत्रकृत[2] नियमेनैव सिद्धे, वार्त्तिकं व्यर्थमिति तदाशयः।

एतेनैकविभक्तावित्यावर्त्त्य 'एकविभक्तौ सरूपाणामेकविभक्तौ विवक्षितायामेकशेषः' इत्यर्थे, 'यस्यां विभक्तावेकशेषस्तस्यां विभक्तौ सरूपाणाम्' इत्यर्थस्य प्रत्यासत्त्या लाभेन, भ्यामादावेकशेषः, न औजसादौ। एवं च वार्त्तिकं व्यर्थमिति तद्भाष्याशय इत्यपास्तम्। आवृत्तेर्भाष्याऽनारूढत्वाच्च। वार्त्तिकमते[3]ऽपि प्रातिपदिकैकशेषे 'मातृभ्याम्' इत्यादावपि तदभावस्य प्राप्तत्वाच्च। सहविवक्षाऽभावविषये 'द्विर्वचनेऽचि' (१।१।५९) 'अक्षा भज्यन्ताम्' इत्यादौ भाष्ये 'एकशेष'शब्दस्तु समानफलकत्वात् तन्त्र[4]लक्षकः।

'एकविभक्तौ' इत्यत्रैकप[5]दन्तु स्पष्टार्थम्; 'एकस्यामपि विभक्तौ यानि विरूपाणि न' इत्यर्थं बोधयितुम्। ध्वनितं चेदम् 'विभक्तिः सारूप्ये उपलक्षणम्' इतिभाष्ये 'एक'पदाऽनुच्चारणेन। 'तन्त्राऽऽवृत्त्येकशेषाणामन्यतमम्' इत्यादौ गोबलीवर्दन्यायेन तन्त्रैकशेषयोः सहप्रयोगः [6]क्रमेण बोधे आवृत्तिः।

( ननु[7] 'विभक्त्यन्तानामेकशेषः' इति पक्षस्याऽपि भाष्याऽऽरूढत्वे स एव किमिति नोपन्यस्तः ?। न च 'वृक्षश्च' इत्येकशेषे 'सु'सहितस्यैव

---

१. 'स्थापिते मात्रादिविषये प्रतिषेधारम्भादि भगवता नोक्तम्। सूत्रकृतनियमेनैव सिद्धेरिति तदाशयः' इति ग. च. पाठः।

२. 'सूत्रकृताऽनियमेनैव सिद्धे वार्त्तिकमिति तदाशयः' क. पाठः।

३. 'अपिः' ख. ग. च. नास्ति।

४. 'तन्त्रादिलक्षकः' ख. ग. च. पाठः।

५. 'एकपदन्तु व्यर्थमेव। ध्वनितं चेदम्' इति ख. ग. च. पाठः।

६. 'क्रमेण बोधे आवृत्तिः' इति क. ग. पाठः। ख. च. नास्ति।

७. 'ननु' इत्यारभ्य 'द्वन्द्वविधानं सङ्गच्छते' (२७६ पृष्ठे) इत्यन्तोऽयं क. कुण्डलितः, ख. ग. च. पाठः।

शेषे, द्विवचनाद्यनुपपत्तिः। इत्थमुपपत्तिसम्भवात्,–'युगपदधिकरणवचनतायां द्वन्द्वः' इति पक्षे एकैकमनेकाऽर्थाऽभिधायि, परस्परसमभिव्याहारसत्त्वात्। एवं[1] चाऽलौकिके द्वन्द्वाऽऽदिप्रवृत्तेस्तत्राऽपि तत्कल्पनेन द्विव[2]चनाऽऽदीनामेव प्रवेशः।

न चैवम् 'रामकृष्णौ' इत्यादौ 'विरूपाणामपि' इत्येकशेषाऽऽपत्तिः। द्वन्द्वविधानसामर्थ्येन सहविवक्षाप्राक्कालिकस्यैव समानाऽर्थत्वस्य तत्र निमित्तत्वात्। तत्रैकस्य विभक्त्यन्तस्य निवृत्तावपरस्य तद्विशिष्टस्य श्रवणं भविष्यतीति चेन्न। अलौकिके तत्कल्पनेऽपि, प्रत्येकं सुबुत्पत्त्यनन्तरमेव तत्कल्पना, तदनन्तरमेव तत्कल्पकद्वन्द्वैकशेषयोः प्रवृत्तेः। ततः प्राक् परस्परसमभिव्याहाराऽभावेनाऽन्तरङ्गत्वादुत्पन्नैकवचत्यागेन द्विवचनाद्युत्पत्तौ मानाऽभावात्। अत एव व्यपेक्षावादे षष्ठीतत्पुरुषाऽऽदयः सङ्गच्छन्ते। अन्यथा तन्नये पूर्वपदस्य राजसम्बन्धिनि लक्षणायां भेदनिबन्धनषष्ठ्याद्यनापत्तौ, तदुच्छेदः स्पष्ट एव।

किञ्च वृद्धव्यवहाराद्धि शब्दार्थाऽध्यवसायः। न[3] च 'प्लक्षशब्दस्य न्यग्रोधाऽभिधायित्वं लोके दृश्यते। न च[4] लक्षणा। न्यग्रोधशब्देन तल्लाभात्[5]। अपि चाऽस्यां प्रमाणाऽभावः। समुच्चयाऽन्वचययोः समासस्याऽसामर्थ्येनैव वारयिष्यमाणत्वात्[6]। न चाऽन्यत्रोपपादयितुमशक्यत्वेऽपि, एकशेषे 'कस्य

---

१. 'एवञ्चाऽलौकिकेऽपि तत्सत्त्वात्। द्वन्द्वादिप्रवृत्तेस्तत्रैव सत्त्वाच्च। तत्रापि तत्कल्पनेन' ग. च. पाठः।

२. इत आरभ्य 'सर्वत्राऽपत्यादिषूपसङ्ख्यानम्' (३७५ पृष्ठे) इत्यन्तः क. ग. च. पाठः। क. तु त्रुटितः।

३. न च=नहि।

४. न चेत्यस्य नहीत्यर्थः।

५. इतोऽग्रे—'चार्थे द्वन्द्वः' (२।२।२९) इति सूत्रविरुद्धा च सा' इति ग. च. पाठः।

६. इतोऽग्रे—'जहत्स्वार्थायां वृत्तौ तस्योक्तिसम्भवाऽभावाच्च' इति ग. च. पाठः।

शेषः' इत्यत्र विनिगमकाऽभावात् सर्वेषां सर्वाऽर्थत्वमावश्यकमिति वाच्यम् । शिष्टस्य लक्षणयोपपत्तेरिति दिक् ।

ननु मिलितेनाऽर्थप्रतीतेः समुदायस्य प्रातिपदिकत्वे समुदायादेकविभक्तौ परत एकशेषः । न च समासग्रहणस्य नियमार्थत्वात् कथं समुदायस्य प्रातिपदिकत्वम् । 'यत्र सङ्घाते पूर्वो भागः पदम्' इत्येवं सजातीयविषयत्वान्नियमस्याऽदोषः । एतत्पूर्वभागस्य स्वातन्त्र्येण प्रयोगाऽनर्हत्वात् । अत एव 'बहुपटवः' इत्यादेः प्रातिपदिकत्वम् । एवं च एकाज्द्विर्वचनन्यायेन समुदायादेव विभक्तिर्न प्रत्येकम् । समुदायादुत्पन्नयाऽप्यवयवानां सङ्ख्याऽन्वयरूपाऽनुग्रहसम्भवात् । 'रामकृष्णौ' इत्यादौ तु न द्वन्द्वं विना समुदायाद् विभक्तिः । द्वन्द्वविधौ 'अनेकं सुबन्तम्' इत्यस्यानुवृत्त्या एकाज्द्विर्वचनन्यायस्य बाधात् । अत एव नलोपाऽऽदिसिद्धिः । सा च समुदायस्यैकसङ्ख्याकारकाऽऽवेश एव भवतीति 'पयः पयो जरयति' इत्यादौ न तत्प्राप्तिः । 'एकविभक्तौ' इत्युक्तेः 'पय पयो नयति' इत्यत्र गौणमुख्यकर्मणोरेकशेषो न ।[1]

न चाऽत्रैकशेषे तदुत्पन्नद्वितीयया विरुद्धयोर्गौणमुख्यकर्मणोः कथं प्रतीतिः ?। तन्त्रेणोपपत्तेः । किञ्चाऽसहविवक्षायामप्येकशेषे तत्पुरुषाऽऽदिविषयेऽपि 'देवदेवः' इत्या[2]दौ तदापत्तिः ।

न च 'राम राम औ' इत्यादौ परत्वान्नित्यत्वाच्च 'वृद्धिरेचि'

१. अस्याऽग्रे—'प्रत्यासत्त्या सरूपसमुदायार्थान्वयिन्या एकविभक्तेरेव ग्रहणात् । अत्र पक्षे एकविभक्तावित्येवाऽस्य सहविवक्षायां प्रवृत्तिरित्यर्थे तात्पर्यग्राहकम् । अत एव 'पयः पयो नयति' इत्यत्र गौणमुख्यकर्मणोरेकशेषो न' इति ग. च. पाठः ।

२. 'इत्यादौ तुगापत्तिवारणपरकृदतिङ्सूत्रस्थभाष्यरीत्या तदापत्तिः' इति ग. च. पाठः ।

(६।१।८८) इत्येकादेशे[1], उभयत आश्रयणेऽन्तवद्भावविरहादेकशेषो न स्यादिति[3] वाच्यम्[2] । पराऽऽदिवद्भावेन 'औ' इत्यस्य प्रत्ययत्वेन, मान्तसमुदायस्य चैकदेशविकृतन्यायेन तत्प्रकृतितयाऽक्षतेः । स च न्यायोऽशास्त्रीयस्याऽप्यतिदेशक इत्यर्थस्य, स्थानषष्ठ्यबोधितविकारस्याऽपि तत्र ग्रहणमित्यर्थस्य च प्रागुपपादितत्वात् ।

किञ्च वृद्ध्यादिप्रवृत्तावेकशेषशास्त्राऽप्रवृत्त्या नित्यविध्युद्देश्यताऽवच्छेदकाऽनाक्रान्तत्वेव तावदेव परिनिष्ठितं स्यात् । तच्च न लोके प्रयुज्यते । 'प्रयुक्तानां चेदमन्वाख्यानम्' इति, न तत्प्रक्रियावाक्ये वृद्ध्यादिप्राप्तिः ।

---

१. 'इत्येकादेशादौ' च. पाठः । २. 'अन्तवद्भावादिविरहात्' च. पाठः ।

३. 'एकशेषो न स्यात्—('चिकीर्षति' इत्याद्यावपि स्थानिभूतादचः पूर्वत्वेन दृष्टस्य कीर्षशब्देन ?) अचः परस्मिन्नितिस्थानिवद्भावेऽपि न सिद्धिः । विभक्त्यव्यवहितस्यैव स्थितिः' इत्यर्थे मानाऽभावेन तस्यापि कदाचिन्निवृत्तौ विभक्तिसाहित्येनैव निवृत्त्यापत्तौ द्विवचने 'राम' इत्यस्याऽव्याप्तेरिति वाच्यम् । अवशिष्टरामशब्दस्यापि प्रातिपदिकत्वेन ततोऽप्यनुवादकविभक्तौ रामावित्यादिसिद्धेः । लक्ष्ये लक्षणस्येति न्यायस्य तु न विषयः । लक्ष्यभेदात् । किञ्चैकशेषपदे(न) उपस्थितैकस्य प्रत्यासत्त्या विभक्त्यव्यवहितस्यैव ग्रहणे(न) विभक्तिव्यवहितस्य कदापि शेषाऽभावात् । इतरनिवृत्तेस्स्वार्थं विधेयत्वम्, न तु शाब्दम्' इति ग. पाठः । एतत्पाठस्थाने—

'अचः परस्मिन्निति स्थानिवद्भावोऽपि न । एकशेषशब्दार्थस्य स्थितिनिवृत्त्युभयघटितत्वेन स्थानिभूतरामसम्बन्ध्यजपेक्षया पूर्वस्यैव विध्यभावात् । विभक्त्यव्यवहितस्यैव स्थितिरित्यर्थे मानाऽभावेन तस्यापि कदाचिन्निवृत्तौ विभक्तिसाहित्येनैव निवृत्त्यापत्तौ 'द्विवचने राम' इत्यस्याऽव्याप्तेश्चेति वाच्यम् । 'तौ सत्' (३।२।१२७) इत्यानिनिर्देशैरेकशेषस्य विभक्तिनिमित्तकार्याऽपवादकत्वनिर्णयात् । अत एव च कदाचिद् विभक्तिव्यवहितस्य शेषेऽपि न क्षतिः । किञ्च वृद्ध्यादिप्रवृत्तावेकशेषशास्त्राऽप्रवृत्त्या नित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वेन'— इति तु च. पाठः ।

एतेन 'प्रयुक्तानेव ह्यन्वाख्यातुमलौकिकमुत्प्रेक्ष्यते, शास्त्रीयं च कार्यं सर्वमलौकिके एव प्रवर्त्तते, न परिनिष्ठिते' इत्यपास्तम्। यच्छास्त्रीयकार्य-प्रवृत्त्या परिनिष्ठितं सल्लोके प्रयोगाऽर्हम्, तदीयाऽलौकिके कल्पिते शास्त्र-प्रवृत्तावप्यत्र ततो वैषम्यात्। एतेन 'परत्वान्नित्यत्वाच्चाऽऽवादौ 'नावौ'[1] 'अनड्वाहौ' इत्यादिसिद्धिः, वैरूप्यादिति निरस्तम्' इति चेन्न[2]। मातृ-मात्रोरेकशेषाऽभावाय वचनस्य, 'एकविभक्तौ' इत्यस्याऽऽवृत्तेर्वा करणे गौरवात्।

किञ्चाऽऽवृत्तौ प्रत्यासत्तिन्यायप्रवृत्तौ 'मातृभ्याम्' इत्यादावेकशेषाऽऽ-पत्तिः। सहविवक्षायामित्यर्थस्य प्रागु[3]क्तरीत्या लाभेनैकविभक्तावित्यस्यै-कशेषविशेषणत्वे फलाऽभावाच्च।

किञ्च[4]ाऽनेकबोधकैकभिक्षाशब्दादणि 'भैक्षम्' इतिसिद्धावपि, 'भिक्षा भिक्षाभिक्षा आम् अ' इति स्थिते 'अन्तरङ्गानपि' (प० ५३) इति न्यायेन, अकृतव्यूह (प० ५७)परिभा[5]षया वा पूर्वं लुकि, विभक्तिपरत्वाऽभावात् परत्वान्नित्यत्वाच्चाऽऽदिवृद्धौ, सारूप्याऽभावाच्च एकशेषाऽभावे, 'भैक्ष-भिक्षाभिक्षम्' इति स्यात्। 'अव्यविक'न्यायेन समाधानन्तु लक्षणैकचक्षु-ष्कैर्दुर्ज्ञेयत्वादुपेक्ष्यम्।

न च समर्थग्रहणेन परिनिष्ठितप्रातिपदिकात् तद्धितोत्पत्तेः, पूर्वमेकशेषे

---

१. 'नावावित्यसिद्धिः' च. पाठः।

२. 'इति चेन्न। 'सरूपाणाम्' (१।२।६४) इत्येकशेषाऽनापत्तेः। अत्र सरूपौ च सरूपाश्चेत्यर्थे एकशेषः। अन्यथा द्वयोरेकशेषो न स्यात्। 'तौ सत्' (३।२।१२७) इत्यादिनिर्देशैः प्रातिपदिकैकशेषपरतया व्याख्यानस्यैवा-श्रयितुमुचितत्वाच्च। किञ्चाऽत्र एकविभक्तावित्येकशेषस्यैव विशेषणम्, उत आवृत्त्योभयविशेषणम्? नाद्यः। मातृमात्रोरेकशेषाऽऽपत्तेः। नाऽन्त्यः। गौरवात्। आवृत्तौ मानाऽभावाच्च। किञ्चाऽऽवृत्तौ' इति च. पाठः।

३. प्रागुक्तरीत्या एकशेषशब्दबलेनैव लाभेन' ग. च. पाठः।

४. 'किञ्चैवमपि अनेक' ग. च. पाठः।

५. 'अकृतव्यूहपरिभाषया वा' इति ग. च. पाठः।

कृते, पश्चात् तद्धित इति वाच्यम्। प्रातिपदिके[1]ऽधिकारात्, 'किं तत्सम-र्थम्, कृतवर्णाऽनुपूर्वीकम्' इति भाष्याच्च प्रातिपदिकसम्बन्धिवर्णमात्राऽऽश्रयतत्सम्बन्धिवर्णनिमित्तकार्येण परिनिष्ठितत्वस्यैवाऽऽश्रयणात्। अत एव 'अश्विमानण्' (४।४।१२६) इत्यादिनिर्देशाः सङ्गच्छन्ते[2]। अन्यथा प्रकृत्यंशे दीर्घश्रवणं स्यात्। अयं दोषः 'प्रत्येकं द्विवचनाद्यन्तानामेकशेषः' इति पक्षेऽपि बोध्यः। 'भिक्षा आम्, भिक्षा आम्, भिक्षा आम्' इत्यतः समुदायात् यद्यपि 'प्रातिपदिकात्' (४।१।१) इत्येकत्वविवक्षणादेकप्रातिपदिकप्रकृतिकसुबन्ताऽभावेन न प्रत्ययः प्राप्नोति तथाऽपि तदवयवादेकस्मात् तस्य दुर्वारत्वेन, तत्र कृते, परत्वादादिवृद्धौ, वैरूप्यादेकशेषो न प्राप्नोति।

न च विनिगमनाविरहेण प्रत्येकमुत्पत्तावणत्रयाऽऽपत्तिः[3]। तथाऽपि भैक्षाऽसिद्धेः। अण्त्रयस्य श्रवणाऽऽपातात्। प्रत्ययोत्पत्तेः पूर्वं तु नैकशेषः अकृतव्यूह(प० ५७)परिभाषयाऽप्राप्तेः। प्रत्येकमणुत्पत्तावपि एकपदार्थे त्रयाणामन्वयाऽभावेन सहविवक्षाया व्याहतेः। प्रातिपदिकैकशेषपक्षे तु नाऽकृतव्यूहपरिभाषाप्राप्तिः। विभक्तौ[4] सारूप्यस्योपलक्षणत्वेनाऽऽश्रयणात्। अत एव 'सर्वत्राऽपत्याऽऽदिषूपसङ्ख्यानम्'। भिक्षाणां समूहो भैक्षम्। 'सर्वत्रेत्युच्यते, प्रातिपदिकानां चैकशेषे सिद्धम्' इति भाष्ये उक्तम्।

---

१. 'प्रातिपदिकादित्यधिकारात्' ग. च. पाठः।

२. इतोऽग्रे—'अत एव विश्वौह इदं 'विश्ववाड्रूप्यम्' इत्यादि 'विभाषा पूर्वाह्ण' (४।३।२४) इतिसूत्रस्थभाष्यप्रयोगाः सङ्गच्छन्ते'—इति ग. च. पाठः।

३. इतोऽग्रे —'अन्त्यादेकस्मादुत्पन्नेन सर्वेषां प्रत्ययार्थाऽन्वयानुग्रहस्य सिद्ध्या तत एवोत्पत्तेः। उत्सर्गतः परभूतप्रत्ययार्थान्वयस्यैव व्युत्पन्नत्वात्। न च विनिगमनाविरहेण प्रत्येकमण्त्रयापत्तिः। तथापि भैक्षाऽसिद्धेश्च'—इति ग. च. पुस्तकपाठः।

४. 'विभक्तौ परतः' ग. च. पाठः।

किञ्च[1] विभक्तिसहितप्रयोगरूपाऽनुग्रहाय प्रत्येकं विभक्तेर्दुवारत्वम्। अत एव द्वन्द्वविधानं सगच्छते।

समाहारद्वन्द्व[2]विषये[3] तु नैकशेषः। 'एकवच्चाऽस्यान्तरस्याम्' (१।२।६९) इत्यनेन एकशेषविषयपदानां समाहारे वृत्त्यभावस्य कल्पनात्।

'न[4] ब्राह्मणं हन्यात्' इत्यादौ जातिपदार्थाश्रयणेनैव निर्वाहो भाष्ये उक्तः। व्यक्तिपक्षे 'यं कञ्चिद्ब्राह्मणमहत्वा कृती स्यात्' इति दूषणमेवोक्तम्। एकशेषस्य तु नायं विषयः। सकलब्राह्मणव्यक्तिबोधकतावच्छब्दज्ञानस्याऽतिदुर्घटतया तत्रैकशेषेण साधुत्वाऽन्वाख्यानस्य कर्त्तुमशक्यत्वात्।

न चाऽसहविवक्षायामपि तन्त्रसत्त्वे 'इदितो नुम्' (७।१।५८) इत्यादौ गुरुभूतनिर्देशो व्यर्थः। अन्यपदार्थाऽनवगमस्य दुरुद्धरत्वात्। (अन्य[5]पदार्थवृत्त्यनेकसुबन्तनिमित्तकसमासे कृते तन्त्रे त्वकृतव्यूह (प० ५७)परिभाषया

१. 'किञ्च' इत्यारभ्य' 'सङ्गच्छते' इत्यन्तः क. कुण्डलितो ग. च. पाठः।

२. 'कल्पनात्' इत्यन्तोऽयं क. पाठः। ख. ग. च. तु एतद्विरुद्धः पाठः। स च अत्रैव ३ चिह्नितटिप्पण्यां द्रष्टव्यः।

३. 'एवं समाहारद्वन्द्वविषयेऽप्येकशेषो बोध्यः। लौकिकन्यायसिद्धतन्त्रस्य दुर्वारत्वाच्च। न च नपुंसकताऽऽपत्तिः। समाहारद्वन्द्व एव तदनुशासनात्। अत एव 'घटघटम्' इति प्रयोगो न। एवं च प्रत्यर्थं शब्दनिवेशपक्षेऽपि 'न ब्राह्मणं हन्यात्' इत्यादौ सकलव्यक्तिसङ्ग्रहस्यैकशेषेणेव सिद्धेः प्रतिव्यक्ति लक्षणं नाऽऽवश्यं भवतीत्यपरमनुकुलम्। एकवचनन्तु समुदायस्यैकत्वाऽभिप्रायेण बोध्यम्। हननक्रियाऽन्वयस्तु तत्र बाधितत्वाद् व्यक्तिष्वेव भवति, 'ब्राह्मणानां शतं भोज्यम्' इतिवत्। 'एकवच्चास्याऽन्यतरस्याम्' (१।२।६९) इत्यस्य सार्थक्यन्तु विशेषसूत्राणां समाहारविषयेऽप्रवृत्तिज्ञापनेनेति, तत्रैव वक्ष्यते'—इति ख. ग. च. पाठः।

४. 'न ब्राह्मणम्' इत्यारभ्य 'कर्त्तुमशक्यत्वात्' इत्यन्तः क. पाठः। ख. ग. च. नास्ति।

५. क. कुण्डलितो ग. च. पाठः।

समासस्यैवाऽनापत्तिः। 'इद्यस्य धातोः' इति सूत्रप्रणयने तु लाघवाऽभावः। असन्देहाय यथान्यासमेव युक्तत्वाच्च।

एकशेषशब्दार्थश्चेतरनिवृत्तिपूर्वकमवस्थानम्। तदाह—**एक एवेति**। अत्र 'एक' इति लुप्तविभक्त्यन्तं पृथक् पदम्। अत एव 'सरूपाणाम्' (१।२।६४) इत्यस्य तत्राऽन्वयः। तत्र चाऽवस्थानस्य स्वतःसिद्धत्वेनाऽविधेयत्वान्निवृत्तिरेव विधेया। तत्र च 'शिष्यमाणं लुप्यमानाऽर्थाऽभिधायी' इति सिद्धान्तात् श्रूयमाणपदवृत्त्या बोधः।[1]

यत्तु 'घटाऽऽदिशब्दस्मरणाद् बोधः' इति। तन्न। प्रत्ययानां प्रकृत्यर्थाऽन्वितस्वार्थबोधकत्वभङ्गाऽऽपत्तेः। इतरनिवृत्तिशास्त्रमजानतो बोधाऽनापत्तेश्च।

धातुविषये तु नाऽस्य प्रवृत्तिः। एकनिष्ठाऽनेकव्यापाराणामेकधातुना बोधवत्, अनेकनिष्ठानामपि तत्फलाऽनुकूलत्वेनैकधातुत एव बोधसम्भवेनाऽनेकधातुप्रयोगस्याऽप्रसक्तेः। शब्दशक्तिस्वभावेन धातुवाच्यक्रियायाः कर्त्रादिभेदेऽपि निवृत्तभेदाया एव प्रत्ययात्।

न चैवमपि कर्त्तृद्वयादौ लद्वयादि स्यादिति वाच्यम्। 'वर्त्तमाने लट्' (३।२।२२३) इत्यादावेकत्वस्य विवक्षणादेकस्यैव विधानात्। (किञ्च लत्वजातेः परत्वमाश्रित्याऽनेकस्य परदेशे विधानेऽपि, 'लस्य' (३।४।७७) इत्यत्रापि तद्विवक्षया लद्वयादेस्तसादयो भविष्यन्तीत्यदोषः)[2]। ध्वनितं चेदं 'प्रातिपदिकानामेकशेषः' इति पक्षोपन्यासभाष्येण।

'गर्गा' इत्यादावपि पितुरेकत्वात् प्रकृतिरेका, यञस्तु बहवः प्राप्नुवन्ति यद्यपि[3], तथापि 'यञ्' इत्यत्र व्यक्त्यैक्यविवक्षया वारणीया[4] इति दिक्।

---

१. 'पदलक्षणया बोधः' ख. ग. च. पाठः।

२. क. कुण्डलितः ख. ग. पाठः।

३. 'यद्यपि' इति, 'तथापि' इति च. ग. चः नास्ति।

४. इतोऽग्रे—'सन्तु वा बहवो यञः। तेषां 'विरूपाणामपि समानार्थानाम्'

सरूपाणामिति किम् ? 'घटपटौ' । 'शेषः' इत्येतावन्मात्रोक्तौ द्विबह्वो-रपि शेषः प्रसज्येत । 'एकः' इत्येतावदुक्तौ त्वेक आदेश इत्यर्थः स्यात् । तथाचाऽश्वाश्चाऽश्वश्चेत्यादौ कदाचिद् द्व्युदात्तवत्त्व-द्व्यनुदात्तवत्त्वरूप-[1] साम्यमादायोभयस्वरितैकादेशः प्रसज्येत[2] । न च 'अक्षस्याऽदेवनस्य' (३५) इति फिट्सूत्रेण शकटाक्षे आद्युदात्तस्याऽक्षशब्दस्य, देवनाक्षे 'फिषः' (१) इत्यन्तोदात्तस्य चैकशेषे, कदाचिदाद्युदात्तस्य, कदाचिदन्तोदात्तस्य च शेषः स्यादिति वाच्यम् । स्वरभिन्नानां यस्योत्तरः स्वरविधिः' इति वचनेनैव निर्वाहात्[3] ।

'द्वौ च द्वौ च' 'एकश्च एकश्च' इत्यादावेकशेषद्वन्द्वावनभिधानान्न भवतः । 'विंशती' इत्यादौ त्वेकशेष इष्ट एव[4] ।

---

इत्येकशेषः । वैरूप्यं चैषां केवलेभ्यो विभक्त्यभावेन विभक्तौ सारूप्याऽभावात्' इति क. कुण्डलितो ग. च. पाठः ।

१. 'द्व्यनुदात्तवत्त्वादिसाम्य' ग. च. पाठः ।

२. इतोऽग्रे—'केचित्त्वश्वशब्दे श्रूयमाणोदात्ताऽनुदात्तयोरुभयोरनुग्रहायाऽन्तरतम-परिभाषयोभयस्वरक एवादेशो भविष्यति । किञ्च द्व्युदात्त—द्व्यनुदात्तयोरुभयोः पर्यायेऽप्टदोषदुष्टविकल्पापत्तिः । त्रयाणामेकशेषे त्र्युदात्तादीनामसम्भवाच्च । अतः–इश्च इश्चेत्येकशेषे, एक आदेशोऽल्-रूपत्वादन्त्यस्यैव स्यात् । सूत्रन्त्वनेकाल्षु चरितार्थम् । ततः सवर्णदीर्घे, 'दीर्घाज्जसि च' (६।१।१०५) इतिपूर्वसवर्णदीर्घनिषेधाद् यणि 'यौ' इति स्यादित्याहुः' इति ग. च. पाठः ।

३. 'भिन्नस्वरकाणां तन्त्राऽप्राप्तेः 'स्वरभिन्नानाम्' इत्यपूर्वमेवेति तत्त्वम्' इति ग. पाठः । भिन्नस्वरकाणां तन्त्राऽप्राप्तेश्च । 'स्वरभिन्नानाम्' इति त्वपूर्वमेवेति तत्त्वम्' इति तु. च. पाठः ।

४. 'इतोऽग्रे—'व्यक्तिः पदार्थ इति पक्षे प्रत्यर्थं शब्दनिवेशाद् यावद्व्यक्ति शब्दप्रयोगे प्राप्ते इदं सूत्रमावश्यकम् । यद्यपि केवला जातिः पदार्थः, व्यक्तिद्वारा च लिङ्गसंख्यादीनां जातावेवाऽन्वयः । 'आक्षिप्तव्यक्तौ

यद्यपि जातिपक्षे एकाऽऽकृतियुक्ताऽऽकृत्यविनाभूताऽनेकव्यक्तिप्रतीतेरेकस्माच्छब्दादपि सम्भवान्नार्थोऽनेन, तथापि 'अक्षाः पादाः क्षमयोः' इत्यादौ नानाऽऽकृतियुक्ताऽनेकव्यक्तिबोधाऽर्थं तत्रापि सूत्रमावश्यकम् ।

तन्त्रेण निर्वाहेऽपि 'सर्वं तन्त्रेणैव बोधनीयम्' इति नियामकाऽभावाद् 'घटोऽयम् घटोऽयम्' इति नानाशब्दप्रयोगदर्शनाच्च पाक्षिको द्वन्द्वः सूत्रं

---

वः-ऽन्वयः' इति पक्षे तु एकाकृतियुक्ताऽऽकृत्यविनाभूताऽनेकव्यक्तिप्रतीतेरेकस्माच्छब्दादपि सम्भवान्नार्थोऽनेन इति प्राञ्चः, तथापि 'अक्षाः पादाः क्षमयोः' इत्यादौ नानाऽऽकृतियुक्ताऽनेकव्यक्तिबोधार्थं (तत्रापि) सूत्रमावश्यकम् ।

तन्त्रादिनाऽनेकार्थप्रतीतिसम्भवाद् व्यर्थमिति चेत् । व्यक्तिपक्षेऽपि तुल्यम् । अत एव 'न ब्राह्मणं हन्यात्' इत्यादावेकेनापि ब्राह्मणशब्देन तन्त्रेणाऽनेकार्थबोधः । तस्मात् पक्षद्वयेऽपि 'सर्वं तन्त्रेणैव बोधनीयम्' इति नियामकाऽभावात् 'घटोऽयम् इति नानाशब्दप्रयोगदर्शनाच्च पाक्षिको द्वन्द्वः सूत्रं विना दुर्वारः स्यादिति पक्षद्वयेऽपि सूत्रमावश्यकम् । 'घटकलशौ' इत्यादिद्वन्द्ववारणाय 'विरूपाणामपि समानार्थानाम्' इति वचनमेव कृतम् । रूप्यते-बोध्यते इतिव्युत्पत्त्या रूपशब्दस्याऽर्थपरत्वमाश्रित्य वार्त्तिकार्थस्य क्रोडीकाराच्चेत्याहुर्नव्याः । न च द्वन्द्वोऽनभिधानाद् वारणीयः । तथा प्रत्याख्यानस्याऽचमत्कारित्वात् । किञ्चैवं सर्वत्रानेनैव द्वन्द्ववारणे सम्भवति, 'त्यदादीनि सर्वैः' (१।२।७२) इतिसूत्रे द्वन्द्वनिवृत्त्यर्थत्वमाशङ्क्य, सामान्यविशेषवाचिनो द्वन्द्वो नेति वचनेन तं वारयता अन्यत्र तद्वारणोपायमकथयता च भाष्यकृता तद्वारणार्थत्वस्याऽन्यत्र ध्वनितत्वादिति दिक् ।

मातृमात्रोः सह-विवक्षायां तन्त्रवारणाय सर्वपक्षेऽपि सूत्रमावश्यकमिति तत्त्वम्' इति ख. ग. च. पाठः । क. पुस्तके त्वयं पाठो मसीक्षेपेण प्रायोऽपसारितः ।

१. 'यद्यपि' इत्यारभ्य 'सर्वपक्षेऽपि सूत्रमावश्यकमिति तत्त्वम्' (पृ० ३८०) इत्यन्तः क. पाठः । ख. ग. पाठस्त्वत्रत्यष्टिप्पण्यां द्रष्टव्यः ।

विना दुर्वारः स्यादिति सूत्रमावश्यकम् । 'घटकलशौ' इत्यादिद्वन्द्ववारणाय 'विरूपाणामपि समानार्थानाम्' इति वचनमेव कृतम् । न च द्वन्द्वोऽनभिधानाद् वारणीयः । तथा प्रत्याख्यानस्याऽचमत्कारित्वात् । मातृमात्रोः सहविवक्षायां तन्त्रवारणाय सर्वपक्षेऽपि सूत्रमावश्यकमिति तत्त्वम् ।

**चुटू** (१।३।७)—'आदिर्ञिटुडवः' (१।३।५) इत्यतः 'आदिः' इति, 'षः प्रत्ययस्य' (१।३।६) इत्यतः 'प्रत्ययस्य' इति चाऽनुवर्त्तते । तदाह-**प्रत्ययाद्याविति** । तेन 'वाचाटः' इत्यत्र नेत्त्वम् । प्रत्ययेति किम् ? डा-णलादीनां डादेः पूर्वमेवेत्त्वे, लोपे च सर्वाऽऽदेशत्वाऽनापत्तेः । न च णलः प्रत्ययाऽधिकारे पाठेनोपदेशेऽपि प्रत्ययाऽऽदित्वात् सर्वाऽऽदेशत्वाऽनापत्तिः । वाक्याऽर्थबोधोत्तरमेव प्रत्ययत्वज्ञानेनोपदेशे तदप्राप्तेः । 'चुटुषः प्रत्ययस्य' इति सूत्रयितव्ये योगविभागादनित्यमिदम् । तेन चुञ्चुप्-चणपोश्चस्य नेत्त्वम् । भाष्ये तु 'यकारादी चुञ्चुप्चणपौ' इति समाहितम् । तस्याऽयं भावः—'उदेशे' इत्यनुवर्त्तते । 'उपदेशकाले विद्यमानौ प्रत्ययादी चुटू' इतिवाक्याऽर्थः । यद्वा सनैमित्तिक 'लोपो व्योः' (६।१।६६) इतिलोपस्य बहिरङ्गत्वाद् यकारोच्चारणसामर्थ्याच्चाऽसिद्धत्वात् प्रत्ययाऽऽदित्वाऽभावः' इति ।

**न विभक्तौ** (१।३।४)—'हलन्त्यम्' (१।३।३) इति प्राप्तस्य निषेधोऽयम् । अनित्यमिदम् । थमो मकारपरित्राणाऽर्थादुदित्करणाल्लिङ्गात् । तेन 'किमोऽत्' (५।३।१२) क्वेति सिद्धम् । अन्यथा प्राग्दिशीयत्वेन विभक्तित्वादिसंज्ञा न स्यात् । अत एव 'तदानीम्' इत्यादौ 'तदो दा च' (५।३।१९) इति चकारेण दानीमि, तदीय-मस्येत्त्वनिषेधो भवत्येवेति दिक् । विभक्तौ किम् ? 'अचो यत्' (३।१।९७) ।

**अतो गुणे** (६।१।९७)—'उस्यपदान्तात्' (६।१।९६) इत्यतोऽपदान्तादिति, 'एङि पररूपम् (६।१।९४) इत्यतः पररूपमिति चाऽनुवर्त्तते ।

---

१. इतोऽग्रे—'आदेशानामधिकारेण प्रत्ययत्वे मानाऽभावात् फलाऽभावाच्च' इति ग. च. पाठः ।

२. इतः परं 'यत्तूपदेश इत्यनुवर्त्तते इति । तन्न । डाणलादीनां डकाराद्यावित्त्वाऽनापत्ते.' इति ग. च. पाठः ।

**पुरस्तादिति** (पृ० ८१)—अत एव 'नादिचि' (६।१।१०४) इतीज्ग्रहणं चरितार्थम्। तद्धि 'रामाः' 'रामान्' इत्यादौ निषेधाऽभावाय। पररूपेण पूर्वसवर्णदीर्घबाधे हि तद्वैयर्थ्यं स्पष्टमेव।

**नोत्तरानिति**—अनन्तराऽपेक्षयोत्तरान्=व्यवहितानित्यर्थः।

**एकवचनं सम्** (२।३।४९)—ननु 'सु सम्बुद्धिः' इत्येव सूत्र्यताम्[1]। सप्तमीबहुवचने तु 'सम्बोधने च' (२।३।४७) इत्यतः 'सम्बोधने' इत्यनुवृत्तेर्न दोषः[2][3]। 'सम्बुद्धौ गुणः' इति व्यवहाराच्च न तदन्तस्य संज्ञेति चेन्न। भाष्यकृदविचारितप्रयोजनानां सौत्रपदानां पारायणादावदृष्टार्थत्वेनाऽक्षतेः[4]।

**सम्बुद्धयाक्षिप्तेति**—आक्षेपोऽत्राऽनुमानम्। स्पष्टं चेदम् 'अङ्गस्य' (६।४।१) इति सूत्रे **कैयटे**। तत्र हि 'परस्परं प्रत्यङ्गप्रत्ययसंज्ञाऽभावात्' इति भाष्यमुपादाय 'प्रकृतिमन्तरेण प्रत्ययस्याऽभावात्, तद्विधौ निमित्तत्वेनाऽऽश्रयणाच्च प्रकृतिः प्रत्ययनिमित्तम्। प्रत्यये परतोऽङ्गसंज्ञाविधानादङ्गं प्रत्ययाऽपेक्षम्। तत्राऽन्यतरस्मिन्नुपादीयमानेऽव्यभिचारादितराऽऽक्षेपः' इत्युक्तम्[5]।

---

१. 'अनुवृत्तेर्महासंज्ञाकरणाच्च न दोषः' ग. च. पाठः।

२. 'न दोष इति चेन्न। 'सामन्त्रितम्' (२।३।४८) इतिवन्महासंज्ञाबलात् साहचर्याच्च सुप्रत्ययाऽन्तस्य संज्ञाभ्रमव्यावृत्त्यर्थमेकवचनग्रहणम्। तदन्तस्य संज्ञित्वे हि 'एङ्ह्रस्वात्' (६।१।६९) इत्यत्राऽङ्गाऽऽक्षेपाऽभावेन 'हे कतरत्' इत्यसिद्धिः' इति ख. पाठः।

३. 'न दोष इति चेन्न। 'सुपां सुलुक्' (७।१।३९) इतिस्वादेशस्यापि ग्रहणापत्तौ छान्दसाऽन्यसूत्राणामिवाऽस्याऽप्यावश्यकत्वाच्च। 'सामन्त्रितम्' (२।३।४८) इतिवन्महासंज्ञाकरणन्तु 'सम्यग्बुद्धिर्लोके यस्य' इत्यर्थबोधनद्वारा क्वचिच्छिष्टप्रयोगानुरोधेन सम्बोधनविभक्तेरभावबोधनाय। तेन 'त्यदादीनां सम्बोधनं नास्ति' इति सिद्धमित्याहुः' इति ग. च. पाठः।

४. 'सम्बुद्धौ गुणः' इत्यारभ्य 'अक्षतेः' इत्यन्तोऽयं क. पाठः।

५. इतः परं--'परन्त्विदं प्रकृते नोपयुक्तम्। वृत्त्यनुपस्थिततया शाब्देऽन्वयाऽसम्भवात्। तस्मात् कार्यकालपक्षे' इति ख. ग. च. पाठः।

यद्वा—कार्यकालपक्षे 'प्रत्ययग्रहणे यस्मात् स विहितस्तदादि' इत्यस्योपस्थितस्योद्देश्यसमर्पकत्वेन, तस्यैव चाऽङ्गपदार्थत्वेन, तद्विशेषणत्वमेङादीनाम्। अयमेव चाऽऽक्षेपपदार्थः। तदन्तांऽशस्तु न[1]। प्रत्ययविधौ चाऽपञ्चम्याः' (प० २४) इत्यनेनेदृशे विषये तदन्तविधिनिषेधात्[2]। इदमेव सूचयितुमङ्गसंज्ञासूत्राऽनुपन्यासः।

**हे कतरदिति**—प्रकृत्यकारस्य टिलोपेनाऽपहारादिति भावः।

ननु 'अङ्गात् परस्याः सम्बुद्धेरवयवस्य हलो लोपः' इत्येव व्याख्यातुमुचितम्, न तु 'अङ्गात् परं हल्लुप्यते, सम्बुद्धेश्चेत्' इति, सम्बुद्ध्याक्षिप्तस्य सम्बुद्ध्यैवाऽन्वयस्योचितत्वादत आह—**कुलेतीति**। अत्र परत्वादन्तरङ्ग[3]त्वाच्च पूर्वरूपे कृते, उभयत आश्रयेऽन्तादिवद्भावविरहात् ता[4]द्रूप्याऽनतिदेशाच्च ह्रस्वान्ताङ्गात् परसम्बुद्धेरभावान्मलोपो न स्यादिति भावः[5]।

न च सम्बुद्धिसंज्ञायाः सकारमात्रनिष्ठतयाऽल्विधित्वेनाऽमः सम्बुद्धित्वाऽभावे कथं मस्य सम्बुद्ध्यवयवत्वमिति वाच्यम्। सुप्संज्ञाया उकारविशिष्टे सत्त्वेन, तदुपस्थाप्यस्य जायमानैकवचनसंज्ञाया विशिष्टे सत्त्वेन,

---

१. 'तदन्तांऽशस्तु न 'एङ्ह्रस्वात्' (६।१।६०) इतिपञ्चम्यन्तात् परत्वेन प्रत्ययस्य विशेषणात्, 'प्रत्ययविधौ चाऽपञ्चम्याः' (प० २४) इत्यनेनेदृशे विषये तदन्तविधिनिषेधात् प्रकृत्याक्षेपेणापि सिद्धि सूचयितुमङ्गसंज्ञासूत्राऽनुपन्यासः। अर्थाऽध्याहारवादे क्वचिद् वृत्त्याऽनुपस्थितस्यापि शब्दबोधविषयत्वाङ्गीकारादित्याहुः' इति च. पाठः।

२. इतः परम्—'सम्बुद्धेर्हल्विशेषणत्वेऽपि, अङ्गविशेषणत्वाऽभावात्' इति ग. च. पाठः।

३. 'अन्तरङ्गत्वाच्च' इति क. ग. पाठः। ख. नास्ति।

४. 'ताद्रूप्याऽनतिदेशाच्च' इति क. पाठः।

५. इतोऽग्रे—'एवञ्चाऽत्र हल्ग्रहणाऽभावे 'आदेः परस्य' (१।१।५४) इत्यमकारलोपे 'सुपि च' (७।३।१०२) इतिदीर्घे 'कुण्डाम्' इति स्यादिति भाष्यं प्रौढ्येति बोध्यम्' इति च. पाठः।

सम्बुद्धिसंज्ञाया अप्युकारविशिष्ट एव सत्त्वात्[1]। एतेनाऽद्डादेशेनैव नपुंसकत्वाऽभिव्यक्तौ 'कुलेति' इति व्यर्थमिति परास्तम्। एवं च लक्ष्याऽनुरोधादन्याऽऽक्षिप्तस्याऽप्यन्यत्राऽन्वयः इति भावः।

**एङ्ग्रहणमिति**—'हरे'[2] 'विष्णो' इत्यादौ गुणात् पूर्वं ह्रस्वान्तत्वादेव सिद्धिः। न च इना सहितः से, अस्य स्त्री ई=लक्ष्मीस्तया सहिता वा सेः, तस्य सम्बोधने लोपाऽनापत्तिः। 'ए'ग्रहणेनैव सिद्धे प्रत्याहारग्रहणस्य तथाऽपि व्यर्थत्वादिति प्रश्नः। इदमेव ध्वनयितुं प्रत्युदाहरणान्तरमाह—**विष्णो इति**[3]।

न[4] च गुणे कृते सन्निपात (पृ० ८७)परिभाषया लोपो न[5] स्यादिति वाच्यम्[6]। प्रत्याहारग्रहणस्य वैयर्थ्याऽऽपत्तेः। 'गुणात् सम्बुद्धेः' इति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्याच्चाऽत्र तत्परिभाषाया अप्रवृत्तेः। अत एव 'हे लक्ष्मि' इत्यादौ लोपसिद्धिरिति दिक्।

[7]**अभ्यचीति**—तत्राऽवयविन आधारत्वविवक्षायां 'वृक्षे शाखा' इति-

---

१. एतदुत्तरम् 'अन्यादृशस्यापि सम्बुद्धिसम्बन्धस्य ग्रहणे बाधकाऽभावाच्च' इति ग. पाठः।

२. हरे विष्णो इत्यादौ तु 'लोपो व्योर्वलि' (६।१।६६) इति लोपपदस्य पूर्वनिर्देशेन कार्याऽन्तराऽपेक्षया पूर्वं लोपप्रवृत्तेर्बोधितत्वेनाऽर्थाऽधिकारात् साहचर्याच्चाऽस्याऽपि कार्याऽन्तरात् पूर्वमेव प्रवृत्तेर्गुणात् पूर्वम्' इति ख. ग. पाठः।

३. 'विष्णो इति। नित्यत्वादिति। एवं चाऽकृतव्यूह(पृ० ५७)परिभाषया गुणात् पूर्वमपि न स्यादिति भावः' इति ख. च. पाठः।

४. 'एतेन' ख. ग. पाठः।

५. 'लोपो न स्यात्। प्रत्ययलक्षणेन तु न सन्निपातः। अशास्त्रीयत्वादिति परास्तम्' इति ग. च. पाठः।   ६. 'परास्तम्' ख. ग. पाठः।

७. 'अभ्यचीति। अजादावमीत्यर्थः। उत्तराऽर्थमनुवृत्तस्याऽज्ग्रहणस्योपरञ्जकतयाऽप्यसम्भवे सर्वथा त्यागे मानाऽभावादिति भावः।

वदमीति सप्तमी । [1]अमोऽवयवेऽचीत्यर्थः । 'एकः पूर्वपरयोः' (६।१।७४) इत्यधिकृतपरशब्देन विशेष्यत्वादजेव गृह्यते इति बोध्यम् । अत[2] एव 'गव्यति' इत्यत्र 'औतोऽम्' (६।१।९३) इत्यात्वं प्रत्ययलक्षणेन न । वर्ण-प्राधान्ये तदभावात् । एवञ्च तत्रेदृशार्थस्यौचित्येन, ऐकरूप्याय सर्वत्र तथैवोचितम् । स्पष्टं चेदं प्रत्ययलक्षणसूत्रे भाष्ये ।

ननु 'पूर्वसवर्णः' (६।१।१०२) इत्यनुवृत्त्यैव सिद्धे, पूर्वग्रहणं व्यर्थमिति चेन्न । 'रामम्' 'कुमारीम्' इत्यादावान्तरतम्याद् द्विमात्राद्यापत्तेः । नन्वेवमप्येकाऽऽदेशस्य पूर्वान्तत्वेन ग्रहणान्मकारे सुपि परतः 'सुपि च (७।३।१०२) इति दीर्घो दुर्वार इति चेन्न । मस्य सुप्त्वाऽभावात् । अर्थाऽधिकस्याऽदर्शनेन एकदेशविकृत(प० ३७)न्यायाऽभावात् । स्थानिवद्भावोऽपि न । स्थानषष्ठीनिर्देशेन मकाररूपविकारस्याऽविधानादित्याहुः ।

**लशकु** (१।३।८)–समाहारद्वन्द्वः । अतद्धिते किम् ? 'कर्णललाटात् कनलङ्कारे' (४।३।६५) । 'कर्णिका' । कित्त्वफलन्तु वृद्धिः स्यात् । प्रत्ययाद्या इति किम् ? वराकः । वृङः षाकनः कित्त्वे गुणो न स्यात् ।

**तस्मा (च्छ)** (६।१।१०३)—पुंसीति प्रकृतिविशेषणम्, सामर्थ्यात् । सा च प्रत्ययाऽऽक्षिप्ता । 'त'च्छब्देन सन्निहितः पूर्वसवर्णदीर्घः परामृश्यते । 'शसः' इत्यवयवाऽवयविभावस[3]म्बन्धे षष्ठी ।

('अव[4]यवषष्ठी' इत्याकरोक्तावपि भावप्रधानो निर्देशः । अ[5]वयवनिष्ठ-

---

आदेशस्त्वादेः परस्येत्यनेनाऽऽदेरेवेति बोध्यम् । 'पदाऽस्वैरी' इतिनिर्देशादेतादृशेष्वचो विशेष्यत्वमेवेति मते यथाश्रुतमेव मूलं सम्यक्' इति क. कुण्डलितः ख. ग. पाठः ।

१. 'अमोऽवयवेऽचीत्यर्थः' इति क. मात्रपाठः ।

२. 'अत एव' इत्यारभ्य 'तथैवोचितम्' इत्यन्तः क. पाठः ।

३. 'अवयवत्वसम्बन्धे' ख. पाठः । ४. क. कुण्डलितः ख. ग. च. पाठः ।

५. 'इति वार्थः' इत्यन्तोऽयं पाठः, च नास्ति ।

सम्बन्धबोधिका षष्ठी' इति वाऽर्थः। यद्वा 'शस्' इत्यवयवे लाक्षणिकम्[१]। स चाऽवयवः परत्वेन विशेष्यते—) पूर्वसवर्णदीर्घात् परस्य शसोऽवयवस्येति। तदाह—**परो यः शस इति।** 'परो यः शस्' इति तु नोक्तम्। असम्भवात्। न हि पूर्वसवर्णदीर्घे, ततः परः शस् अस्ति। तस्मादिति किम्?। 'एतान् गाः पश्य'। पुंसि किम्?। मतीः।

**अट्कु**(८।४।२)–'रषाभ्याम्' इतिपञ्चमीनिर्देशाद् व्यवहितेऽप्राप्तौ वचनम्। यथा 'वृषलैर्न प्रवेष्टव्यम्' इत्युक्ते प्रत्येकम्, संहतानां च प्रवेशो न भवति, एवमेतैर्व्यवाये णत्वमित्युक्ते विशेषाऽनुपादानादेकेन, द्वाभ्याम्, त्रिभिरपि व्यवाये भविष्यति। अत एव क्षुभ्नाऽऽदिषु 'क्षुभ्न'शब्दपाठः, 'सरूपाणाम्' (१।२।६४) इत्यादिनिर्देशाश्च सङ्गच्छन्ते। अत एव नुम्ग्रहणं चरितार्थम्। 'एकैकमात्रव्यवाये' इत्यर्थे तु तदसङ्गतिः स्पष्टैव। सर्वैर्व्यवायस्त्वसम्भवीत्याशयेनाऽऽह—**व्यस्तैरित्यादि**[२]। तत्र 'रषाभ्याम्' (८।४।१) इतिपञ्चम्योपस्थितनिर्दिष्टपदस्याऽडाद्यतिरिक्ताऽव्यवहितपरतया 'व्यवाये' इत्यनेन विरोधाऽभावेन 'आदर्शेन', 'आर्त्नी' इत्यादौ न णत्वप्रसङ्गः।

'नृणाम्' इत्यादावुत्तराऽज्भागेन व्यवधानेऽपि 'ऋवर्णान्नस्य' (वा० ६।४।८४) इति वचनेन 'प्रशास्तॄणाम्' इत्यादिनिर्देशसिद्धेन णत्वम्।

(न[३] चाऽट्कुप्वाङित्यस्य विधायकत्वे व्यवायपदश्रुत्या विरोधान्निर्दिष्टांऽशाऽप्रवृत्तिः। तदुपस्थितावपि[४] निर्दिष्टपदस्याऽडाद्यतिरिक्ताऽव्यवहित-

---

१. लाक्षणिकं बोध्यम्' च. पाठः।

२. इतः परं क. पाठस्थाने–'तत्र रषाभ्यामिति पञ्चम्या लब्धस्याऽव्यवहितपरत्वस्य वचनादडाद्यंशे बाधेऽप्यन्यांशे बाधे मानाऽभावेनाऽऽदर्शेनेत्यादौ न णत्वप्रसङ्गः' इति ख. पाठः।

३. 'औचित्यात्' इत्यन्तोऽयं ख. ग. पाठः।

४. 'निर्दिष्टांऽशोपस्थितावपि तस्याट्कुप्वाङ्नुमतिरिक्तव्यवायपरत्वेनाऽविरोधादिति केचित्। लक्षणायां तात्पर्यग्राहकाऽभावेन तदनुपस्थितिरेवाऽश्रेत्यन्ये' इति ग. च. पाठः।

परतया विरोधाऽभावात्। कार्यकालपक्षे स्वलिङ्गोपस्थितपरिभाषायाः पश्चाद् विरोधोपस्थितावुपसञ्जातविरोध(प० ६६)न्यायेन लक्षणया व्याख्यानस्यौचित्यात्)।

(यद्वा[1] 'व्यवाये' इति योगं विभज्य, तस्य व्यवाये विधायकत्वं कृत्वा उत्तरांऽशस्य नियमार्थत्वादादर्शेनेत्यादौ न दोषः। एवं चाट्कुप्वित्यादिना सजातीयाऽऽक्षरसमाम्नायिकविषयकनियमा 'नृणाम्' इत्यादावुत्तरभागेन व्यवधानेऽपि णत्वसिद्धौ, वचनाऽन्तरं न कल्प्यमिति लाघवम्) स्पष्टं चेदं सर्वं प्र[2]कृतसूत्रस्थभाष्यादौ।

**बाधितुमिति**–तेन 'पर्याणद्धम्' इत्यत्र 'उपसर्गादसमासेऽपि' (८।४।१४) इति णत्वं सिद्ध्यतीति भावः। **नुम्ग्रहणमिति**—नुम्स्थानिकस्य, तद्भिन्न-स्थानिकस्य चाऽनुस्वारस्योपलक्षणमिति भावः (स्वाभाविकोऽनुस्वारस्तु दुर्लभः। 'नकारजावनुस्वार' इति वृद्धोक्तेः)। अत एव 'तृंहू' इत्यस्य नलोपे 'तृढः' इत्यादिसिद्धिः।

**तच्चाऽकर्त्तु[3]मिति**—न च 'नुम्विसर्जनीयशर्व्यवायेऽपि' (८।३।५८) इति-वन्नुम्स्थानिकाऽनुस्वारस्योपलक्षणाऽर्थं तदस्तु, तत्र हि 'सुहिन्सु' 'पुंसु[4]' इत्यादौ षत्ववारणाय तादृशोऽर्थ आवश्यक इति वाच्यम्। 'तृंहू हिंसायाम्' इत्यस्य 'तृंहणम्' इत्यत्र णत्वाऽनापत्तेः। स्पष्टं चेदं भाष्यादौ। अत एव ('इवि प्रीणने' इत्यस्य भ्वादौ स्वतन्त्रपठितस्य) 'हिवि-दिवि-धिवी'ति द[5]ण्डकपठितस्य (वा[6]) इवेः 'प्रेन्वनम्' इत्यादौ 'कृत्यचः' (८।४।२९) 'इजादेः सनुमः' (८।४।३२) इति णत्वं न। उपलक्षणीयस्याऽनुस्वारस्याऽभावात्।

---

१. क. कुण्डलितः ख. ग. पाठः।

२. 'प्रत्याहाराह्निक—प्रकृतसूत्रस्थभाष्यादौ' ख. ग. पाठः।

३. क. कुण्डलितः ख. ग. पाठः।

४. क. नास्ति। ख. ग. पाठः।

५. भ्वादौ तु सम्प्रति 'इवि व्याप्तौ' इत्यस्यैव पाठः। दण्डके तु इवेः पाठो नोपलभ्यते।

६. 'वा' इति क. नास्ति। ख. ग. पाठः।

नुमो नस्य तु क्षुभ्नादित्वान्न णत्वम् ।

**अयोगवाहानामिति**—न विद्यते योगो वर्णसमाम्नाये येषां तेऽयोगाः। अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्चेत्यर्थः। ते च ते वाहयन्ति–प्रयोगं निर्वाहयन्ति ते वाहाः। यद्वा वहन्ति=प्रयोगं प्राप्नुवन्ति ते वाहाः। बाहुलकात्-कर्त्तरि घञ्। ते चाऽनुस्वार-विसर्गजिह्वामूलीयोपध्मानीययमाः। अत एव 'उरःकेण' इत्यादौ विसर्गव्यवधानेऽपि णत्वसिद्धिः।

ननु 'व्यूढोरस्केन' इत्यादौ स्थानिवद्भावेन विसर्गतयाऽट्त्वाण्णत्वाऽऽपत्तिः। (न[1] च नियमशास्त्राणां निषेधमुखेन प्रवृत्तावेतद्भिन्नव्यवाये नेत्यर्थः, एवं च स्वाश्रयमड्भिन्नत्वमस्त्येवेति न दोष इति वाच्यम्। विधिमुखेन प्रवृत्तौ दोषस्य सत्त्वात्। विरुद्धधर्मप्रयुक्तस्वाश्रयस्याऽभावकथनाच्च। अट्त्वाऽन्यत्वयोर्विरोधात्) इति चेन्न। 'अनल्विधौ' इतिनिषेधात्। **णत्वे प्राप्त इति**—णशब्दे इत्यर्थः। 'स्वं रूपम्' (१।१।६८) इतिशास्त्रबलाण्णादीनां संज्ञाशब्दत्वेन, संज्ञाशब्दे च शब्दस्यैव प्रवृत्तिनिमित्तत्वेन, शब्दस्वरूपस्यैव भावप्रत्ययवाच्यत्वात्।

**पदान्तस्य** (८।४।३७)—'न भाभूपू' (८।४।३४) इति सूत्रान्नेति वर्त्तते। अत्र सूत्रेऽनन्तरस्येत्यादिव्यवस्थापकन्यायानामप्रवृत्तिर्बोध्या, 'अपदान्तस्य' (८।३।५५) इत्यनुवर्त्यैतस्य भाष्ये प्रत्याख्यानात्।

**यस्मात् प्रत्यय** (१।३।१३)—**यस्मादिति**—'तदादि' इति 'त'च्छब्देन संज्ञिघट[2]कप्रतिनिर्देशाय। **तदादीति**—तत्=प्रकृतिरूपम्, आदिर्यस्येत्यर्थः। प्रत्यासत्तिन्यायलब्धाऽर्थमाह—**तस्मिन् प्रत्यये इति**। अत्र च 'गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवति' इति न्यायेन गुणभूताया अपि 'तस्मिन्निति'(१।१।६६) परिभाषाया अन्योपकारकतया गुणभूतेऽप्यस्मिन्सूत्रे प्रवृत्तिः। एतदाश्रयणे च भाष्यादिकमेव मानमित्याहुः। अत्र च प्रत्ययग्रहणे तदन्तग्रहणं न, 'प्रत्ययविधौ चाऽपञ्चम्याः' (प० २४) इति तन्निषेधा-

---

१. क. कुण्डलितः ख. ग. पाठः।

२. 'घटक' इति ग. नास्ति।

दिति 'रोऽसुपि' इत्यत्राऽवोचाम । **इत्यादाविति**—आदिना 'चिनोती'-त्यादिसङ्ग्रहः ।

**तदादिग्रहणमिति**—प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदादित्वं बोध्यम् । (न च[1] विकरणविशिष्टस्याऽङ्गत्वाऽभावेऽपि 'अतो दीर्घो यञि' (७।३।१०१) इत्यारम्भसामर्थ्याद् दीर्घ इति वाच्यम् । 'पय वय गतौ' आभ्यां यङ्लुकि 'पापामि' 'वावामि' इत्यादौ चारितार्थ्यात्) ।

**स्त्री इयतीति**—यत्त्विदम्-शब्दाद् वतुपि, वस्य 'किमिदंभ्यां वो घः' (५।२।४०) इति घादेशे, तस्य इयादेशे, 'इदंकिमोः' (६।३।९०) इतीशि, 'यस्येति च' (६।४।१४८) इति लोपे, ङीपि, 'इयती' इति रूपम् । तत्र परतः स्त्रीशब्दस्य इयङाद्यापत्तिरूपो दोषो वक्तुमशक्यः । 'यस्य' (६।४।१४८) इतिलोपस्याऽऽभीय[2]त्वादसिद्धत्वेनाऽत्र तदप्राप्तिरिति । तन्न । व्याश्रयत्वेनाऽऽभीयाऽसिद्धत्वाऽप्र[3]ाप्तेः । तत्र हि समानाश्रय[4]त्वम्–'असिद्धत्वाश्रयशास्त्रीयनिमित्तसमुदायाऽन्यूनाऽनतिरिक्ताऽऽश्रयकत्वम्' इत्यसिद्धवत् (६।४।४२) सूत्रे उपपादयिष्यते । अस्ति चाऽत्र 'यस्य' (६।४।१४८) इतिलोपाऽपेक्षया 'स्त्रिया' (६।४।७९) इति सूत्रेऽधिक'स्त्री'शब्दस्याऽपेक्षा । न च स्त्रीशब्दात् तस्याऽविधानेऽपि, सोर्विधानेन विधिग्रहणे कृतेऽपि दोषः । 'यस्माद्यः प्रत्ययो विधीयते, तदादि तस्मिन्नङ्गं भवति' इत्यर्थेन प्रत्यासत्तिन्यायेनाऽजादिप्रत्ययनिरूपिताऽङ्गे एवेयङ्प्रवृत्तिस्वीकारात् । विधिग्रहणादेव च 'भनक्ति' इत्यादौ 'अतो दीर्घो यञि' (७।३।१०१) इति दीर्घो न । ध्वनितं चेदं भाष्ये श्नम्विधायके ।

**प्रत्ययविशिष्टस्येति**—त[5]था सति तस्याः प्रत्ययनिमित्तत्वाऽभावेना-

---

१ क. कुण्डलितः पाठः ।

२. 'व्याश्रयाऽऽभीयत्वात्, 'पूर्वं पूर्वमन्तरङ्गम्' इति पक्षे बहिरङ्गत्वाऽसिद्धत्वेन' इति ग. पाठः ।

३. इतोऽग्रे–'यथा चास्य व्याश्रयत्वं तथाऽसिद्धवत्सूत्रे उपपादयिष्यते । 'पूर्वं पूर्वम्' इत्यस्य क्वाचित्कत्वाच्च । बह्वपेक्षत्वेनेयङो बहिरङ्गत्वाच्च' इति ग. पाठः ।

४. 'समानाश्रयत्वं तत्प्रयोगप्राप्ताऽसिद्धत्वाश्रयशास्त्रीय' ख. पाठः ।

५. 'तथा सति' इत्यादेः स्थाने—'यस्मात् प्रत्ययविधिः' इत्यंशस्य 'तदादि'

ऽङ्गेन प्रत्ययाऽऽक्षेपाऽनापत्तौ 'वव्रश्च' इत्याद्यसिद्ध्यापत्तिः। किञ्च 'राजपुरुषः' इत्यादौ 'न लुमताङ्गस्य' (१।१।६३) इति निषेधात् पूर्वपदे पदत्वाऽभावेन, नलोपाद्यनापत्तिरिति भावः।

**ततोप्यधिकस्य वेति**—'देवदत्त ओदनमपाक्षीत्' इत्यादौ देवदत्ताऽऽदिशब्दोत्तरसुपं निमित्तीकृत्य लुङ्पूर्वभागस्याऽप्यङ्गत्वात् तस्य च लुङ्परत्वेन, देवदत्तशब्दापूर्वमप्यडापत्तिरिति भावः न च प्रत्यासत्त्या लुङादिनिमित्ताऽङ्गस्य ग्रहणमिति वाच्यम्। अङ्गसंज्ञायाः प्रत्ययनिमित्तत्वाऽभावेन[1] 'तन्निरूपिताऽङ्ग' इत्यर्थस्य दुर्लभत्वा[2]त्।

(य[3]त्तु 'यस्माद्धातोः, प्रातिपदिकाद्वा' इति। तन्न। 'याथाकथाचम्' इत्यादौ 'यथाकथाचहस्ताभ्यां णयतौ' (५।१।९८) इत्यनेन वचनसामर्थ्यात् पदसमुदायात् प्रत्ययेऽङ्गत्वाऽनापत्तौ वृद्ध्यनाप[4]त्तेः। संकोचस्य निर्मूलत्वाच्च। तरबादौ तिङन्तानामङ्गत्वाऽनाप[5]त्तेः। न चेष्टाऽऽपत्तिः। 'अपाचितराम्' इत्यादौ चिणो लुगापादनाऽऽदिपरभाष्यविरोधाऽऽपत्तेः। अन्यथा 'चिणः परस्याऽङ्गसंज्ञानिमित्तस्य प्रत्ययस्य लुक्' इत्यर्थेनैव तद्वारणे, तत्रत्यपूर्वपक्षसिद्धान्तयोरुभयोरपि निर्दलत्वाऽऽपत्तेः) इति दिक्।

---

इत्यंशार्थनिर्णये उपक्षयात् प्रत्ययविशिष्टेऽप्यङ्गसंज्ञायाः प्रवृत्तेस्तस्याः प्रत्ययनिमित्तत्वाऽभावेन' इति ग. पाठः।

१. 'प्रत्ययनिमित्तत्वाऽभावेन सामर्थ्यात्' ग. पाठः।

२. 'दुर्लभत्वादिति दिक्' क. पाठः।

३. ख. ग. पाठः। क. कुण्डलितः।

४. इतोऽग्रे—'किञ्चौपगव इत्यादौ समर्थपरिभाषोपस्थितये पूर्वोक्तन्यायात्, 'घकालतनेषु' (६।३।१७) इतिज्ञापकाच्च सुबन्तात् तद्धितोत्पत्तावङ्गत्वाऽनापत्तेः। अत एव 'आमुष्यायण' (वा० ६।३।२१) इतिनिर्देशः सङ्गच्छते' इति ग. पाठः। क. कुण्डलितः।

५. 'अङ्गत्वानापत्तेश्च' ख. ग. पाठः।

**टाङसि**—'अङ्गस्य' (६।४।१) इति षष्ठ्या 'अतो भिसः' (७।१।९) इत्यतोऽनुवृत्तेनाऽत इत्यनेन पञ्चम्यन्तेन सामानाधिकरण्याऽनुरोधात् पञ्चम्या विपरिणाम इत्याशयेनाऽऽह—**अकारान्तादित्यादि**।

**सुपि च** (७।३।१०२)—'अतो दीर्घो यञि' (७।३।१०१) इत्यतो यञीत्यनुवर्त्तते। अल्त्वाच्च तेन तदादिविधिरित्याह—**यञादाविति**।

**अतोभिसः**(७।१।९)—अकारान्तादङ्गादिति। यद्यपि 'अङ्गनिमित्तस्य भिसः' इत्यादिरीत्या भाष्ये व्याख्यातम्, तथाऽपि विशेष्याऽसन्निधानात् तदन्तविधिर्न स्यादिति विभक्तिविपरिणामेनैव व्याख्यातम्। अन्यथा हि प्रत्यासत्त्या यत्राऽकारोऽङ्गसंज्ञकस्तत्रैव स्यात्। न च तपरकरणवैयर्थ्यम्। 'अकारो वासुदेवः स्यादाकारस्तु पितामहः' इत्यादिकोशसिद्धाऽशब्दव्यावृत्त्यर्थत्वात्। 'नेदमदसोः' (७।१।११) इति ज्ञापकेन[1] तदन्तग्रहणे तु प्रतिपत्तिगौरवमिति भावः।

(ननु[2] 'एस्' इत्येवास्तु। 'अतो गुणे' (६।१।९७) इति तु न। एकारोच्चारणात्। अन्यथा इसमेव विदध्यादिति चेन्न। द्विमात्रत्वाऽविशेषेण लाघवाऽभावात्। एवं च पररूपशङ्कैव नास्तीति महल्लाघवम्। 'नद्यैः' इत्यादिसिद्धये उत्तरार्थं तदित्यन्ये। 'निर्जरसैः' इत्यर्थन्तु न। सन्निपात-(प० ८७)परिभाषया जरसादेशाऽप्रवृत्त्या निर्जरैरित्यस्यैव भाष्यसंमतत्वात्)।

**ङेर्यः**[3] (७।१।१३)—ङेरिति चतुर्थ्येकवचनस्यैव ग्रहणम्, व्याख्यानादित्यभिप्रेत्याह–ङे इत्यस्येति। **सन्निपातेति** (प० ८७)—उपजीव्यविरोधन्या-

---

१. 'ज्ञापकादिना तदन्त' ग. पाठः।

२. क. कुण्डलितः ख. ग. पाठः।

३. ङेर्यः। 'सर्वनाम्नः स्मै' (७।१।१४) इत्यत्र चतुर्थ्येकवचनस्यैव ग्रहणम्। सप्तम्येकवचनस्य स्मिन्नादेशविधानात्। न च विकल्पोऽस्तु 'सर्वनाम्नः स्मैस्मिनौ' इत्येव सिद्धे 'ङसिङ्योः' (७।१।१५) इतिसूत्रे ङिग्रहणस्य वैयर्थ्यापत्तेः। एवञ्चाऽर्थाऽधिकारानुरोधादिहापि तस्यैव ग्रहणम्' व्याख्यानाच्चेत्यभिप्रेत्याह—ङे इत्यस्येति' इति क. कुण्डलितो, ग. पाठः।

यमूलिकैषा । ज्ञा[1]पकमपि—'वाऽचि ह्रस्वश्च' इत्येव सिद्धौ 'ङिति ह्रस्वश्च' (१।४।६) 'वाऽऽमि' (१।४।५) इति सूत्रद्वयम् । तद्धि 'भ्रूणाम्' इत्यादौ नुट् स्यादित्येवमर्थम् । नुटि अजादित्वस्य विनाशात् । सन्निपातः=संश्लेषः, तन्निमित्तो यो विधिः, स तं सन्निपातं यो विहन्ति स तद्विघातः, तस्याऽनिमित्तमित्यर्थः । (उप[2]जीव्यविरोधस्याऽन्याय्यत्वमप्येतद्बीजम्) । अ[3]सिद्धस्याऽपि तद्विघातकविधेरनेन निवृत्तिः । आरोपिताऽसिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेनोपजीव्यविरोधस्य दुर्वारत्वात् । ध्वनितं चेदम् 'कृन्मेजन्तः' (१।१।३९) इति सूत्रे भाष्ये इत्यष्टन्शब्दे निरूपयिष्यामः ।

स[4]न्निपातलक्षणविधित्वमस्या लिङ्गम् । 'य[5]योः संनिपातो निमित्तं कार्यस्य तयोः सूत्रे उपादानमपेक्षितम्' इति तु नाऽऽग्रहः । अत एव 'दाक्षिः' इत्यत्राऽकारान्तप्रकृतोऽसंनिपातनिमित्तकाऽङ्गसंज्ञा एतत्परिभाषयाऽल्लोपस्य निमित्तं न स्यादित्याशङ्क्याऽनित्यत्वेन समाहितं कृन्मेजन्तसूत्रे भाष्ये । न ह्यङ्गसंज्ञायामदन्तस्याऽङ्गसंज्ञेत्युक्तमस्तीति दिक् ।

**निर्देशेनेति—**न चाऽस्य निर्देशस्य 'अकृत्सार्व' (७।४।२५) इति दीर्घेणोपपत्तेः कथमनित्यत्वे ज्ञापकत्वमिति वाच्यम् । तस्याऽपि सन्निपात (प०८७)-परिभाषयाऽप्रवृत्तेः । न च परत्वात् 'अकृत्सार्व' इत्यस्यैवोचितत्वेन, 'सुपि चेति दीर्घः' इत्यसङ्गतमिति वाच्यम् । कार्यैक्ये विप्रतिषेधाऽभा[6]वेन दोषाऽभावात् । फले विशेषाऽभावेनाऽत्राऽसाधारणप्रयोजनाऽभावाच्च न तदुपन्यास इति तत्त्वम् । तस्य 'अकृत्' इत्यादिपर्युदासेनाऽसुप्येव प्रवृत्तिः, इति **केचित्** ।

---

१. 'अत्र ज्ञापकं वाऽचि' ख. ग. पाठः ।

२. ख. ग. पाठोऽयम् । 'त्वमेतद्बीजम्' इत्येवं तु ग. पाठः ।

३. 'अत एव असिद्धस्यापि' ख. पाठः ।

४. 'सन्निपातलक्षणविधित्वमस्या लिङ्गम्' इति ग. नास्ति ।

५. 'ययोः' इत्यारभ्य 'दिक्' इत्यन्तोऽयं क. पाठः । ख. ग. च. नास्ति ।

६. 'विप्रतिषेधाभाववादिनां मते दोषाऽभावात्' ख. ग. पाठः ।

**झलि किम् रामाणामिति**—यत्तु 'झलीत्यस्याऽभावे यञीत्यस्याऽनुवृत्तौ, 'उतो वृद्धिः' (७।३।८९) इत्यतो हलीत्यनुवृत्तौ वा, सन्निपात(प०८७) परिभाषया एत्वाऽप्राप्तेश्चिन्त्यमिदम्' इति। तन्न। यञीत्यस्याऽनुवृत्तौ 'रामेषु' इत्यादावनापत्तेः। हलीत्यनुवृत्तौ तु झल्ग्रहणं सन्निपातपरिभाषाया एत्त्वेऽप्रवृत्तिज्ञापनार्थम्। अत एव 'सर्वेषाम्' इत्यादावेत्त्वसिद्धिः। एतेन बहुवचने किम् ?, रामो रामस्य इत्यपि व्याख्यातम्। अन्यथा सन्निपातपरिभाषया एत्त्वाऽप्रवृत्तौ, 'रामस्य' इति प्रत्युदाहरणमसङ्गतं स्यात्। 'रामाभ्याम्' इत्यपि प्रत्युदाहरणम्। न च 'बहुवचने झलीक्' इत्येव सूत्र्यतामिति वाच्यम्। 'ज्ञानयोः' इत्यादौ नुमापत्तेः।

**जश्त्वम्। वावसाने** इति (८।४।५६)—न चाऽवसाने चर्त्त्वस्य पदान्तजश्त्वाऽपवादतया, जश्त्वोत्तरं चर्त्त्वोपन्यासो न युक्त इति वाच्यम्। 'जश्त्वम्' इत्यस्य वाधित्वेति शेषेणाऽक्षतेः। **द्वित्वे इति**—'पूर्वत्राऽसिद्धमद्वित्वे' (प०१२८) इति न्यायाच्चर्त्त्वोत्तरं द्वित्वं बोध्यम्। **तादेश इति**—अन्यथा 'खरि च' (८।४।५५) इति चर्त्त्वेनैव सिद्धाविदं व्यर्थं स्यादिति भावः।

**ह्रस्वनद्या**(७।१।५४)—'ह्रस्वनद्यापः' इति पञ्चमी। 'नामि' (६।४।३) इति लिङ्गात्। 'आमि सर्वनाम्नः' (७।१।५२) इत्यत आमीति वर्त्तते। तच्च सप्तमीनिर्देशस्य 'त्रेस्त्रयः' (७।२।५३) इत्यादौ कृतार्थत्वादनवकाशत्वेन पञ्चमीनिर्देशस्य बलवत्त्वात् पष्ठ्या विपरिणम्यते, 'अङ्गस्य (६।४।१)

---

१. 'रामस्येति प्रत्युदाहरणम्' इत्ययं पाठो ग. नास्ति।

२. इतोऽग्रे—'सन्निपातपरिभाषयाऽऽद्गुणाऽनापत्तेश्च' ग. पाठः।

३. इत उत्तरं—'न च सवर्णत्वं द्वित्वे सिद्धं वक्तव्यम्', 'संय्यन्ता' इत्यादिवार्त्तिकबलादस्य वर्णद्वित्वेऽप्रवृत्तिरिति वाच्यम्। 'वाक् वाक्क्' इति भाष्योदाहरणेन तस्य तत्प्रपञ्चत्वबोधनादित्यन्यत्र विस्तरः' इति ग. पाठः।

५. 'अनवकाशत्वेन परत्वाच्च पञ्चमीनिर्देशस्य' ग. पाठः।

६. 'बलीयस्त्वात्, 'षट्चतुर्भ्यः' (७।१।५५) इतिसाहचर्येण, 'नामि (७।४।३) इतिज्ञापकेन च पञ्चमीनिर्णयाच्च षष्ठ्या' इति ख. ग. पाठः।

इति, 'ह्रस्व' (७।१।५४) इत्यादिसामानाधिकरण्याऽनुरोधात् पञ्चम्या। इत्याशयेनाऽऽह–**ह्रस्वान्तादित्यादि**। आम् चाऽत्र षष्ठीबहुवचनमेव, न तु ङेरामादीति स्पष्टं भाष्ये।

यत्तु 'नुट्' इति योगं विभज्य, नुड् विधेयः। 'नद्यापः' इत्यनेन 'दीर्घान्ताच्चेन्नद्याप एव' इति नियमाऽर्थकेन दीर्घेषु न दोषः। 'हलन्ताच्चेत् षट्चतुर्भ्य एव' इत्यर्थकेन 'षट्चतुर्भ्यश्च' (७।१।५५) इत्यनेन हलन्तेषु न दोषः। एवं च 'ह्रस्व'ग्रहणं न कार्यम् इति। तन्न। 'नद्यापः' इत्यस्य स्त्रीलिङ्गानां चेन्नद्याप एव इतिनियमपरतयाऽपि व्याख्यातुं शक्यत्वेन, नदीत्वाऽऽप्त्वयोर्ह्रस्वेऽपि दृष्टतया त्वदुक्तनियमे दृढतरमानाऽभावेन च 'मतीनाम्' इत्यादौ नुडनापत्तेः।

**नामि**—(६।४।३) 'ढ्रलोपे'(६।३।१११)इत्यतो 'दीर्घः' इत्यनुवर्त्तते।

(अङ्गस्येति किम्?। चर्मणाम्)।

नन्वामीत्येव सूत्र्यताम्, किं सनुम्कनिर्देशेन? न च नित्यत्वात् पूर्वं दीर्घे, ह्रस्वाऽऽश्रयो नुट् न स्यादिति वाच्यम्। 'ह्रस्वाऽन्तान्नुट्' इत्येतत्सामर्थ्याद् भूतपूर्वगत्या ह्रस्वाऽन्तत्वमादाय तत्प्रवृत्तिस्वीकारात्। यद्यपि 'नृणाम्' इत्यत्र ह्रस्वप्रयुक्तो नुट् चरितार्थः, 'नृ च' (६।४।६) इति दीर्घविकल्पात्, तथाऽपि 'नृनद्यापः' इत्येव सिद्धेर्ह्रस्वग्रहणसामर्थ्यं सूपपादमेव। न च 'चतसृणाम्' इत्यवकाशः। 'षट्चतुर्भ्यः' इत्येव तत्र सिद्धेः। न च तिसृणाम्' इत्यवकाशः। 'त्रेः' (७।१।५३) इत्यस्य 'षट्' (७।१।५५) इत्यत्राऽनुवृत्त्या तत्सिद्धेः। न च 'प्रियचतसृणाम्' इत्यवकाशः, गौणे 'षट्चतुर्भ्यः' (७।१।५५) इत्यस्याऽप्राप्तेरिति वाच्यम्। गौणे तदप्रवृत्तौ मानाऽभावात्।

---

१. इत उत्तरम्—'किञ्च नियमस्य सजातीयाऽऽपेक्षत्वेन 'षट्' (७।१।५५) इत्यनेन प्रधानविषयकनियमस्यैवापत्तौ गौणहलन्तेषु नुडापत्तिर्दुवारा। निर्देशादीनां ज्ञापकत्वाश्रयणे तु विपरीतं गौरवम्। 'प्ररीणाम्' इत्यादौ, सन्निपात(पृ० ८७)परिभाषया आत्वाऽभावः' इत्याकरोक्तस्याऽसङ्गतताऽऽपत्तिश्चेति यत्किञ्चिदेतत्' इति ग. पाठः। क. कुण्डलितः।

२. क. कुण्डलितः ख. ग. पाठः।

बहुवचनन्तु लाघवार्थं स्यात् । द्विवचने हि 'चतुर्भ्याम्' इति गुरुनिर्देशः स्यात् ।

न च 'अङ्गाऽधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवति' इत्युक्तं सर्वादिसूत्रे भाष्ये, 'गृह्यमाणविभक्तेः' इत्यस्य 'गृह्यमाणाऽर्थगतसङ्ख्याबोधकविभक्तेः इत्यर्थः' इति कैयटः, अतोऽस्य नुटस्तत्राऽप्रवृत्तिरिति वाच्यम् । तस्य 'युष्मदस्मद्भ्यां ङसोऽश्' (७।१।२७) इत्यादौ 'अस्थिदधि' (७।१।७५) इत्यादौ च व्यभिचारात् । अत एव तत्र 'षड्भ्यो लुक्' (७।१।२१) इत्येव तदुदाहरणत्वेनोपन्यस्तम् । तत्र हि 'षषः' इत्येव सिद्धे गुरुभूतबहुवचननिर्देशात् तस्याऽर्थप्राधान्ये एव प्रवृत्तेः । न चोदाहृतसूत्रद्वये 'मपर्यन्तस्य' (७।२।९१) 'सर्वादीनि' (१।१।२७) इत्यादिसूत्रभाष्यप्रामाण्यात् तन्न्यायानङ्गीकारेऽप्यत्राऽनङ्गीकारे मानाऽभाव इति वाच्यम् । 'नामि' (६।४।३) इतिसूत्रस्थेन 'नृणाम्' इत्यत्राऽवकाशमाशङ्क्य 'नैकमुदाहरणम्' इत्यादिभाष्येणाऽत्राऽप्यनङ्गीकारस्यैवौचित्यात् ।

न च 'ऋन्नद्यापः' इति सूत्रं कार्यमिति तदाशयः । तथा सति त्रिशब्दाऽनुवृत्तिपरभाष्याऽसङ्गतेः । 'नैकमुदाहरणं योगाऽऽरम्भं प्रयोजयति' इत्यस्याऽसङ्गतेश्च । न चात्राऽपि समाहारद्वन्द्वेनैकवचननिर्देशे कर्त्तव्ये, बहुवचनं तदर्थम् । बहुषु सूत्रेषु व्यभिचारात् । गौणे नुटोऽप्रवृत्तिसाधकभाष्याऽन्तराऽभावाच्च । येऽपि 'गृह्यमाणविभक्तेः' इतिभाष्यस्य 'गृह्यमाणात् विहितविभक्तेः' इत्यर्थः । 'त्यदादोनामः' (७।२।१०२) इत्यादेरपि त्यदादीनामो भवति, प्रत्यासत्त्या 'त्यदादिविहितविभक्तौ' इत्येवाऽर्थः । 'षड्भ्यः' (७।१।२२) इत्यत्रापि विहितविशेषणमेव ।

न चैवम्, 'परमपञ्च' इत्यादौ समुदायस्य गणनायां लोके सङ्ख्यात्वेन प्रसिद्धाभावेन, तस्य षट्त्वाऽभावात् ततो विहितविभक्तेर्लुक् न स्यादिति वाच्यम् । तस्य समासस्य षट्प्रधानत्वेन सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकतया षट्त्वाऽव्याघातादिति तद्भाष्यं व्याचक्षते, तेषामप्यत्र

१. 'गृह्यमाण' इत्यारभ्य 'कैयटः' इत्यन्तः क. पाठ- । ख. ग. च. नास्ति ।

२. 'येऽपि' इत्यारभ्य 'तत्रैव भाष्यप्रदीपोद्द्योते' (३९५ पृष्ठे) इत्यन्तः क. पाठः । ख. ग. च. नास्ति ।

विहितविशेषणत्वे मानाऽभावः। किन्तु परविशेषणत्वमेव। 'तस्मादित्युत्तरस्य' (१।१।६७) इतिपरिभाषाबाधे मानाऽभावात्। लुग्विधायके तदाश्रयणे तु सर्वादिसूत्रस्थं भाष्यमेव मानमिति निरूपितं तत्रैव भाष्यप्रदीपोद्द्योते।

न[1] च 'पदाम्' 'दताम्' इत्यादावतिप्रसङ्गः। ह्रस्वत्वं नाम मात्राकालिकाऽच्त्वम्। तत्र सामर्थ्याद् विशेषणभूतमात्राकालिकत्वांऽशे एव भूतपूर्वगत्याश्रयणम्, न तु विशेष्यभूताऽच्त्वांशेऽपीत्यदोषादिति चेन्न। 'नोपधायाः' (६।४।७) इत्युत्तरार्थत्वात्। तेन 'चर्मणाम्' इति दीर्घाऽभावः सिद्ध इति दिक्।

[2]**यद्यपि पर इति**—'नामि' (६।४।३) इति कृते 'सुपि च' (७।३।१०२) इत्यस्याऽप्राप्त्या, उभयाऽसम्भवरूपो विरोधोऽस्तीति भावः।

**परिभाषाविरोधादिति**—यद्यप्यस्याः 'सुपि च' (७।३।१०२) इत्येतद्विषयेऽनित्यत्वं क्लृप्तम्, 'कष्टाय' (३।१।१४) इत्यादिनिर्देशात्, तथाऽपि सर्वविषयेऽनित्यत्वाश्रयणे मानाऽभावः, नामीत्यनेन दीर्घसिद्धेः फलाऽभा[3]वश्चेति तात्पर्यम्। कृताऽकृतप्रसङ्गित्वमात्रेणाऽपि नित्यताऽभ्युपगमे 'नामि' (६।४।३) इति नित्यमित्यपि बोध्यम्। इदं च 'रुधादिभ्यः श्नम्' (३।१।७८) 'श्नान्नलोपः' (६।४।२३) इति सूत्रयोर्भाष्ये ध्वनितम्। मूलकृता तु परिहाराऽन्तरसम्भवान्न निपुणमीक्षितम्।

**आरम्भेति**—यत्तु 'कतीनाम्' इत्यत्र परत्वात् 'षट्चतुर्भ्यश्च' (७।१।५५) इति नुटि, सन्निपात(प० ८७)परिभाषाया अप्राप्तेः, सावकाशत्वमस्य, इति। तन्न। 'न ह्येकं प्रयोजनं योगारम्भं प्रयोजयति' इति न्यायेन 'कतेर्नामि' इत्येव सिद्धे सामान्यसूत्रप्रणयनवैयर्थ्यात्। एवं च 'न तिसृचतसृ' (६।४।४) इति न कर्त्तव्यमिति महल्लाघवम्। तस्मात् सामान्यसूत्रस्य निषेधसहितस्य प्रणयनं सर्वत्र प्रवृत्त्यर्थम्। तस्य च परिभाषाबाधं विनाऽनुपपन्नत्वेन दोषाऽभावात्। 'सुपि च' (७।३।१०२) इत्यस्य तु न सामर्थ्यम्। 'रामाभ्याम्' इत्यादौ सावकाशत्वादिति भावः।

---

१. 'न चैवम्' ग. ख. पाठः।
२. 'यद्यपि' इत्यारभ्य 'इति भावः' इत्यन्तोऽयं क. पाठः। ख. ग. च. नास्ति। ३. 'फलाऽभावाच्चेति' ख. पाठः।
४. 'नित्यताभ्युपगमेन' ख. पाठः।

ननु 'नुटि' इत्येव सूत्रमस्तु। न च 'भृञो नुट् च' इतिनिष्पन्न'भृङ्ग'-शब्दे दीर्घाऽऽपत्तिः। उणादीनामव्युत्पन्नत्वात्। न च 'अनश्वः' इत्यादौ दीर्घः स्यादिति वाच्यम्। अनङ्गत्वात्। प्रत्यासत्तिन्यायेन नुडवयवक-निरूपिताऽङ्गस्यैव ग्रहणाच्च। न च 'अक्षण्वन्तः' इत्यत्र 'अन्नन्तात् परस्य मतुपो नुट्' इत्यर्थकेन 'अनो नुट्' (८।२।१६) इति सूत्रेण नुटि दीर्घः स्यात्। नुटस्त्रिपादीस्थत्वेनाऽसिद्धत्वात्। न च तस्याऽपि सन्निपात(पृ० ८७)परि-भाषाबाधवद् बाधः। उभयबाधकल्पनस्याऽन्याय्यत्वादिति चेन्न। 'पूर्व-त्राऽसिद्धम्' (८।२।१) इत्यस्याऽनित्यत्वज्ञापनार्थत्वादिति स्पष्टम् 'न पदान्त' (१।१।५८) सूत्रे **कौस्तुभे**।

**अपदान्तस्य** (८।३।५५)—'षः' इत्येव सिद्धे 'मूर्द्धन्य'ग्रहणम् 'इणः षीध्वम्' (८।३।७८) इत्यादौ ढविधानार्थम्। न च तत्र ढकारः कर्त्तव्यः। उत्तरत्र पुनः षग्रहणस्य कर्त्तव्यताऽऽपत्तेः। 'रषाभ्याम्' (८।४।१) इत्यत्राऽ-नुवृत्त्यर्थं च। एवं च तत्र 'ण'ग्रहणम्, 'पदान्तस्य न' इति च न कर्त्तव्यं भवतीति लाघवमिति भाष्ये स्पष्टम्।

**इण्कोः** (८।३।५७)—'वर्ग'ग्रहणम 'गवाङ्षु' इत्यादौ, चर्त्त्वस्याऽ-सिद्धत्वेन 'स्रक्षु' इत्यादौ च षत्वार्थम्।

**आदेश** (८।३।५९)—'प्रत्यय'शब्दस्तदवयवे लाक्षणिकः[1]। 'सात्प-दाद्योः' (८।३।१११) इति सातिग्रहणाल्लिङ्गात्[2]। अत एव 'रामेषु' इत्यादौ षत्वम्। आदेशपदे तु न लक्षणा, मानाऽभावात्। 'तिसृणाम्' इत्यादौ षत्वाऽऽपत्तेश्च।

([3]अन्ये तु जघन्यवृत्तिकल्पनाऽपेक्षया द्वन्द्वसाधुत्वाय 'आदेशप्रत्यय-सम्बन्धि-सस्थाने षः' इति प्राथमिकबोधे सम्बन्ध[4]त्वेनैव षष्ठ्या जनिते, पश्चात् तत्तल्लक्ष्यविषयकलक्षणकल्पनायाम्, तत्तदुत्तरं भिन्ना भिन्ना षष्ठी तेन तेन[5] रूपेण सम्बन्धम्—'सकाररूपाऽऽदेशस्य स्थाने, प्रत्ययाऽवयवसस्य

---

१. इतोऽग्रे 'अत एव प्रत्ययशब्दस्य परनिपातः। अन्यथा प्रत्ययस्य स्वात-न्त्र्येण बोधकत्वादादेशाऽपेक्षयाऽभ्यर्हितत्वेन पूर्वनिपातः स्यात्' इति ग. पाठः। २. 'लिङ्गाच्च' ग. पाठः।

३. 'तात्पर्यग्राहकमित्याहुः' इत्यन्तोऽयं क. कुण्डलितः ख. ग. पाठः।

४. 'सम्बन्धित्वेनैव' ख. पाठः। ५. 'भिन्नभिन्नरूपेण' ग. पाठः।

स्थाने च षो भवति' इत्येवं बोधयति। अत एवोक्तम् 'एकाऽपि षष्ठी विषयभेदाद् विद्यते' इति। अत्रैवाऽर्थे 'सात्पदाद्योः' (८।३।१११) इति तात्पर्यग्राहकमित्याहुः। 'सहविवक्षाविरहेऽपि सौत्रत्वाद् द्वन्द्वः' इत्यन्ये। वस्तुतस्तु 'सात्पदाद्योः' इति लिङ्गादवयवेऽपि प्रत्ययत्वप्रयुक्तं कार्यम्, 'समुदाये दृष्टाः शब्दाः' इति न्यायेनेति ज्ञाप्यते)[1]।

**केचित्तु** 'तिस्रादेशे सकारोच्चारणसामर्थ्यादादेशपदे न लक्षणा, नाऽपि तदंशेऽवयवत्वं सम्बन्धः' इत्याहुः। तन्न। 'तिस्रः' इत्यादौ 'न रपरसृपि' (८।३।११०) इति षत्वनिषेधेन तत्र सकारोच्चारणसार्थक्यात्। न च रादेशो बहिरङ्गतयाऽसिद्धः। यथोद्देशे तदप्राप्तेः। विधिविषयस्य[2] इणः परत्वाऽऽक्षेपेण 'नाऽजानन्तर्ये' (पृ० ५२) इति निषेधाच्च। तदाह—**आदेशप्रत्ययावयवसस्येति। विवृताघोषस्येति**—विवृतत्वमात्राऽभ्यन्तर-प्रयत्नवतः, अघोषरूपबाह्यप्रयत्नवतश्चेत्यर्थः। ठकारवारणायाऽऽद्यम्[3]। ऋकारवारणाय द्वितीयम्।

(यत्तु[4] 'सोष्मणोऽघोषस्य सस्य तादृश एव षः' इति। तन्न्यूनम्। ठकारेऽतिप्रसङ्गात्। 'सोष्मणः[5] सोष्माण इति द्वितीया' इति स्थानेऽन्तर-तम(१।१।५०)सूत्रस्थभाष्येण तस्याऽपि सोष्मत्वबोधनात्। **'सोष्मणः'** इत्यस्योष्मत्वसहितस्येत्यर्थः। तथा च शिक्षाऽपि[6],—**'शादय ऊष्माणः, सस्थानेन द्वितीयाः, हकारेण चतुर्थाः' इति**। 'सस्थानेन' इति भावप्रधानो निर्देशः। हेतौ तृतीया। 'यतः शादिसस्थानत्वं द्वितीयानामतो द्वितीया

---

१. 'ज्ञाप्यते' इत्यन्तोऽयं ख. ग. पाठः, क. नास्ति।

२. 'विधिविषये इणः' ग. ख. पाठः।

३. इत उत्तरं 'तस्य प्राङ्निरूपितमन्तररीत्या विवृतत्वेऽपि, स्पृष्टत्वस्यापि सत्त्वान्न दोषः' इति ग. पाठः।

४. क. कुण्डलितः ख. ग. पाठः।

५. 'सोष्मणः' इत्यारभ्य 'ऊष्मत्वसहितस्येत्यर्थः' इत्यन्तः पाठः क पुस्तके केनापि पश्चाद् वर्द्धितः।

६. अपिः—ग. नास्ति।

अपि उष्माणः, हकारेण सह तत्सस्थानो द्वितीय-खश्चोष्मा, वर्गचतुर्थी-श्चेति तदर्थः' इति **तद्व्याख्यातारः**। फकारस्य यद्यपि सस्थान ऊष्मा नास्ति, तथाऽपि विशिष्यैवोष्मत्वं बोध्यम्। तथा च प्रातिशाख्यम्—**'वर्गे वर्गे च प्रथमावघोषौ युग्मौ सोष्माणावनुनासिकोऽन्त्यः' इति।**

**रामेष्विति**—'पदादादिः' इति पक्षेऽपि 'सात्पदाद्योः' (८।३।१११) इति सूत्रेण यथाऽत्र न षत्वनिषेधस्तथा हलन्तनपुंसके उपपादयिष्यते। 'पदस्याऽऽदिः' इति पक्षे च यथा 'व्यतिसे' इत्यादौ षत्वनिषेधप्रवृत्तिस्तथा 'सुप्तिङन्तम्' (१।४।१४) इत्यत्रोपपादितम्[1])।

**रामस्येति**—यत्तु 'टाङसि' (७।१।१२) इति सूत्रे षकारे एवोच्चारणीये, सकारोच्चारणसामर्थ्यान्न षत्वम्' इति। तन्न। तस्य 'इण्कोः' (८।३।५७) इत्यनुवृत्तावेव तात्पर्यग्राहकत्वकल्पनात्। किञ्च सकारोच्चारणसामर्थ्यात् षत्वाऽभावकल्पने 'अमुष्य' इत्यादावप्यनापत्तिः। 'आमुष्यायण' (वा० ६।३।२१) इत्यादिवार्त्तिकनिर्देशाऽऽदिभिस्तत्कल्पने तु विपरीतं गौरवमिति दिक्।

**सर्वादीनि** (१।१।२७)—तद्गुणसंविज्ञानो बहुव्रीहिः (क्व[2]चित् तथा, क्वचिन्नेत्यत्र शब्दशक्तिस्वभावो बीजमित्याहुः)। प्रायः संयोग-समवायाऽन्यतरसम्बन्धेन सम्बन्धी यत्राऽन्यपदार्थस्तत्र तद्गुणत्वम्। तदतिरिक्तस्व-स्वामिभावादिसम्बन्धेन सम्बन्धिनस्तत्त्वेऽतद्गुणत्वम्। 'तस्य=अन्यपदार्थस्य, गुणाः=विशेषणानि, संविज्ञायन्ते-कार्यित्वेन, कार्यसन्निहितत्वेन वा यस्मिन्' इत्यर्थः। अत्राऽपि सर्वाद्यवयवकसमुदायेनाऽवयवानां संयोगः, समवायो वाऽस्त्येव[3]। 'नागयज्ञोपवीती भोज्यताम्' इत्यादौ यज्ञोपवीतस्य कार्यित्वाऽभावेऽपि, तत्सन्निहितत्वमस्त्येवेति बोध्य[4]म्।

---

१. 'यत्तु' इत्यारभ्य 'उपपादितम्' इत्यन्तः क. कुण्डलितः ख. ग. पाठः।

२. क. ग. पाठः।

३. 'अस्त्येवेति प्राञ्चः' इति ख. ग. च. पाठः। क. नास्ति।

४. इतोऽग्रे—'तस्य=अन्यपदार्थस्य, गुणत्वेन=तद्विशेषणत्वेन संविज्ञानमत्रेत्यर्थः' इति ख. च. पाठः।

आदिशब्दोऽवयववाची। तेन सर्वशब्दघटित उद्भूतावयवभेदः समुदायः समासार्थ इति बहुवचनम्। तत्र वैयर्थ्यादप्रवृत्तावप्यवयवानां प्रवर्त्तमाना अविशेषात् सर्वशब्दस्याऽपि संज्ञा भवति। अत एव 'अदः सर्वेषाम्' (७।३।१००) इत्यादिनिर्देशाः सङ्गच्छन्ते।

'सर्वनामानि' इत्यत्र 'पूर्वपदात्संज्ञायाम्' (८।४।३) इति णत्वमत एव निपातनान्न। नाऽप्राप्ते णत्वे निपातनस्य तद्बाधकत्वाल्लोकेऽपि णत्वसहितप्रयोगोऽसाधुः। 'बाधकान्येव च निपातनानि' इत्यत्रैव भाष्ये स्पष्टम्।

**तदन्तस्यापीति**—न च विशेष्याऽसन्निधानात् कथं तदन्तग्रहणमिति वाच्यम्। विशेष्याऽन्तराऽभावेऽपि शब्दशास्त्रोपस्थिताऽव्यभिचारिशब्दरूपविशेष्यमादायाऽपि क्वचित् तदन्तविधिस्वीकारात्। तत्र मानमाह—**द्वन्द्वे चेतीति**। एवं च ज्ञापकं विना न शब्दरूपविशेष्यमादाय तदन्तविधिरिति बोध्यम्।

अयं भावः—'तदन्तसंज्ञाऽभावे हि 'द्वन्द्वे' इत्यस्य प्रधाननिषेध्य-'भवति'क्रियाऽन्वयो न स्यात्। 'विद्यमानानि' इत्याद्यध्याहारश्चाऽऽपद्येत न हि तदन्तविधिं विना समुदाये संज्ञाप्रवृत्तिरस्ति या निषिध्येत' इति।

किञ्च 'द्वन्द्वे च' (१।१।३१) इत्यवयवमात्रनिषेधे 'येन विधिस्तदन्तस्य' इतिभाष्यस्य प्रामाण्यात्[1] तदन्तस्य संज्ञायाम्, 'वर्णाश्रमेतराणाम्' इति भाष्यप्रयोगाऽनुपपत्तिः। न ह्यत्र 'सर्वाऽर्थवाचकत्वं नास्ति' इति वक्तुं शक्यम्। मानाऽभावात्। न ह्यनेन लोकव्युत्पत्तिसिद्धं सर्वार्थवाचकत्वं निषेद्धुं शक्यम्। न च निषेधवैयर्थ्यम्। अवयवनिष्ठकुत्साबोधकाऽकज्व्यावृत्त्या चारितार्थ्यात्।

([2]न चैकशेषेण बाधितत्वात् त्यदादीनां द्वन्द्वाऽभावेन, ततः प्राचीनानामदन्तत्वेन, तेषु काऽकचोर्न विशेषः। न च 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्रे-

---

१. सूत्रस्थभाष्यप्रामाण्यात् तदन्तस्य संज्ञायाम्' ग. च पाठः।

२. 'स्पष्टत्वाच्च' इत्यन्तः क. कुण्डलितः ख. ग. च. पाठः।

ष्टमपि पुंवत्त्वं निषेद्धुमिदं स्यात्। 'सर्वनाम्नो वृत्तिमात्रे' (वा० २।१।५१) इत्यत्र मात्रग्रहणस्य क्वचित् सर्वनामत्वेन दृष्टानां सम्प्रति संज्ञाभावेऽपि प्रवृत्त्यर्थतया, तस्य वारयितुमशक्यत्वात्। अत एव 'दक्षिणपूर्वायै' इत्यत्र पुंवद्भाव इति वाच्यम्। 'दक्षिणोत्तरपूर्वकाणाम्' इत्यादौ 'क'प्रत्यये समुदायसंज्ञाऽसिद्धेर्विशेषस्य स्पष्टत्वात्। 'त्वच्छब्दस्तान्तः' इति पक्षे तेन द्वन्द्वे काऽकचोर्विशेषस्य स्पष्टत्वाच्च)। मम तु 'द्वन्द्वे सर्वनामता न स्यात्' इत्यर्थः। संज्ञिनोऽपि द्वन्द्वस्याऽधिकरणत्वविवक्षया सप्तमी।

न[1]नु बहुलक्ष्यसंस्कारानुरोधादत्र विद्यति क्रियाऽध्याहारः। तत्फलं चाऽवयवसर्वनामत्वप्रयुक्तोऽपि नाऽकच्। (न चेत[2]रकशब्देन समासे तच्छ्रवणं दुर्वारम्। अकृतव्यूह (प० ५७)परिभाषया द्वन्द्वाऽलौकिके तदप्रवेशात्)। न चैका[3]र्थीभूतस्याऽवयवस्य निष्कृष्य कुत्सादिभिः सम्बन्धाऽभावादवयवप्रयुक्ताऽकचः प्रा[4]प्तिरेव नास्तीति वाच्यम्। निष्कृष्यैकार्थीभावस्य तन्निमित्तत्वे मानाऽभाव इत्यग्रे निरूपयिष्यमाणत्वात्। एवं च तेन समुदायस्याऽवयवस्य च निषेध इति कथमस्य ज्ञापकत्वम्? अत एव 'विभाषा जसि' (१।१।३२) इति सूत्रं चरितार्थम्। अवयवमात्रनिषेधकत्वे हि समुदायनिष्ठसर्वनामत्वमादाय नित्यमेव शीभावस्य प्राप्तेरतद्वैयर्थ्यं स्पष्टमेव। न च सर्वादिसूत्रे तदन्तविध्यभाव एव ज्ञाप्यताम्। 'येन विधिः' (१।१।७२) इति सूत्रस्थभाष्यविरोधात्, तदन्तविधौ फलस्य वक्ष्यमाणत्वाच्च। अत एव 'जसः कार्यं विभाषाऽकज्झि न भवति' इति भाष्यं यथाश्रुतमेव सङ्गच्छते।

---

१. 'ननु गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवति, तत्रात्मनोऽपि संस्कारमनुभूय प्रधानेन सम्बध्यते—इति न्यायात्' ग च. पाठः।

२. क. कुण्डलितः। ग. च. पाठः।

३. 'एतेनैकार्थीभूतस्यात्रयवस्य' इति ख. ग. च. पाठः।

४. 'प्राप्तिरेव नास्तीति परास्तम्। समासोत्तरमप्राप्तावपीतरकशब्देन प्राप्तसमासस्याऽकृतव्यूहपरिभाषया वारणार्थमावश्यकत्वात्। एवञ्च तेन समुदायस्य' इति ग. पाठः।

सर्वनामसंज्ञायां तदन्तविधिस्तु—'प्रयोजनं सर्वनामाऽव्ययविधौ' इति तदन्तविधिसूत्रस्थवार्त्तिकेन वाचनिक एव। एवं 'तृतीयासमासे' (१।१।३०) इत्यादीनामप्युभयत्र निषेधकत्वम्। अत एव 'द्वन्द्वे च' (१।१।३१) इति गुरुभूतसप्तमीनिर्देशः सङ्गच्छते। अन्यथा हि प्रधानक्रियाऽन्वयविवक्षायाम् 'द्वन्द्वश्च' इत्येव वदेत्। 'द्वन्द्व'शब्दस्य द्विशब्दप्रकृतिकत्वेऽपि स्मिन्नादिरूप-सर्वनामकार्यं न। संज्ञात्वात्। समुदायस्य द्वन्द्वाऽऽदौ विद्यमानत्वन्तु व्यपदेशिवद्भावेन। आधाराऽऽधेयभावस्थलेऽपि व्यपदेशिवद्भावस्य 'अनद्यतने लङ्' (३।२।१११) 'तुल्यास्यप्रयत्नम्' (१।१।९) 'प्रत्ययस्थात्' (७।३।४४) इत्यादिसूत्रस्थभाष्याऽऽदौ स्पष्टमेवोक्तत्वादिति चेन्न।

इतर[1]कशब्देन समासे तच्छ्रवणस्य दुर्वारत्वेनाऽवयवनिषेधे फलाऽभावात्। अकृतव्यूहपरिभाषा तु समासे न, 'न बहुव्रीहौ' (१।१।२९) इति ज्ञापकादिति वक्ष्यते। तस्या अभावाच्च। किञ्च 'विभाषा जसि' (१।१।३२) इत्यनेन फलाऽभावादवयवनिषेधाऽभावे, तत्साहचर्येणाऽर्थाधिकाराऽनुरोधेन च 'द्वन्द्वे च' (१।१।३१) इत्यादेरप्यवयवनिषेधकत्वाऽभावात्। 'अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयौ' इति प्रकरणविषयस्मृत्यन्तरेण, तद्विषय-'न बहुव्रीहौ' (१।१।२९) इतिसूत्रसाहचर्येण वा एतत्प्रकरणस्थसप्तमीनिर्देशानां प्रथमार्थकत्वस्यैवौचित्याच्च। 'विभाषा दिक्समासे' (१।१।२८) इतिसूत्रस्थ-बहुव्रीहिपदवत् 'न बहुव्रीहौ' इतिसूत्रवच्चाऽत्रत्यसप्तमीनिर्देशानामपि सम्भावितत्वेन, विद्यत्यध्याहारे दृढतरमानाऽभावाच्च। 'विभाषा जसि' (१।१।३२) इतिसूत्रस्थम् 'जसः कार्यं प्रति विभाषाऽकज्झि न भवति' इति भाष्यन्तु समुदायनिष्ठकुत्साबोधकोऽकज्न भवतीत्यर्थपरम्। एवं च समुदाय-निष्ठकुत्साविवक्षायाम् 'वर्णाश्रमेतरकाः' इत्येव। अवयवमात्रनिष्ठतद्विव-वक्षयाम् 'वर्णाश्रमेतरके' 'वर्णाश्रमेतरकाः' इत्युभयम्।

ननु तदन्तसंज्ञायां फलाऽभावः। न च 'परमसर्वस्मै' इत्यादौ स्माया-

---

१. 'इतरकशब्देन' इत्यारभ्य 'अभावाच्च। किञ्च' इत्यन्तः क. पाठः। ख. ग. च. नास्ति।

दि: फलम् । अङ्गाधिकारे तदन्तविधेः सत्त्वेन तदन्तात् परत्वेनाऽपि सिद्धेः । न च सर्वनाम्नो विहितत्वाऽभावः । तदन्तसंज्ञाऽभावे हि 'द्वन्द्वे च' (१।१।३१) इत्यादिनिषेधानां सामर्थ्येनाऽवयवसंज्ञानिषेधकत्वाद् विहितविशेषणे फलाऽभावादत आह–**तेनेति** । न चाऽवयवसर्वनामत्वेन निर्वाहः । सर्वनामप्रकृतिक[1]सप्तम्याद्यन्तत्वाऽभावात् 'स[2]प्तम्याः' (५।३।१०) 'पञ्चम्याः' (५।३।७) इत्यनेन प्रकृत्याक्षेपात् । अकज्विधावपि 'कुत्सिते' (५।३।७४) इति सूत्रोक्तेन 'परिपूर्णाऽर्थस्येतराऽर्थयोगः' इतिन्यायेन सुबन्तादेव तद्धितोत्पत्तेः । प्रत्यासत्त्या 'सर्वनामप्रकृतिकसुबन्तात् तदर्थगतकुत्साविवक्षायां सर्वनामाऽवयवटेः प्रागकच्' इत्यर्थात् । न च त्रलादिविधौ तदन्तविधिः । समासप्रत्ययविधौ प्रतिषेधात् ।

ननु तदन्तस्याऽपि सर्वनामत्वे 'सर्वनाम्नः स्मै' (७।१।१४) इत्यादिषु 'सर्वनाम्नः' इत्यस्य षष्ठ्यन्तत्वमाश्रित्य 'सर्वनामाऽर्थगतसङ्ख्याऽभिधायिनोऽङ्गात् परस्य ङे स्मै' इत्यर्थाऽऽश्रयणेनाऽतिसर्वादौ दोषाऽभावादुपसर्जनप्रतिषेधो न कार्य इति भाष्योक्तं विरुध्येत । स[3]र्वनामाऽर्थगतत्वं च पर्याप्तिसम्बन्धेन । तेन 'वर्णाश्रमेतराणाम्' इत्यादौ न दोषः । तदन्तस्य सर्वनामत्वेनाऽर्थद्वारकविशेषणाऽऽश्रयणेऽपि दोषस्योद्भटत्वादिति चेन्न । 'प्रयोजनं सर्वनामाऽव्ययसंज्ञायाम्' इति तदन्तविधिसूत्रस्थभाष्य[4]विरोधेन तद्भाष्य[5]स्यैकदेश्युक्तित्वेनाऽक्षतेः ।(अ[6]त एवारुचेर्भाष्ये पक्षाऽन्तरोपन्यास[7]:) ।

---

१. 'प्रकृतिकसुबन्ताऽभावात्' ख. ग. च. पाठः ।

२. 'सप्तम्याः' इति ग. च. नास्ति ।

३. 'सर्वनामार्थगतत्वम्' इत्यारभ्य 'न दोषः' इत्यन्तः पाठो ग. च. नास्ति ।

४. 'भाष्यविरोधात्, 'आ सर्वनाम्नः' (६।३।९१) 'त्यदादीनि च' (१।१।७४) 'त्यदादीनि सर्वैर्नित्यम्' (१।२।७२) इत्यादावुपायान्तरस्याऽभावाच्चोपसर्जनप्रतिषेधस्यावश्यकत्वेन तद्भाष्यस्य तवाप्यसङ्गतेः' ग. च. पाठः ।

५. 'तद्भाष्यस्य प्रौढ्या प्रवृत्तेः' ख. पाठः ।

६. ख. पाठः ।

७. इतोऽग्रे—'ननु त्रलादिविधौ 'सर्वनाम्नः' इत्यस्यार्थद्वारकविभक्तिविशेष-

न चाऽवयवनिष्ठसर्वनामत्वेनैवाऽकच् सिध्यतीति वाच्यम्[१]। उक्तरीत्याऽसम्भवात्।

अत्र[२] केचित्—भवकच्छब्देन **समासे** (समु[३]दायनिष्ठकुत्साबोधनाय) अल्पत्वादिबोधनाय (वा[४]) द्वितीयाऽकच् तु नाऽऽपाद्यः। 'अव्ययसर्वनाम्नाम्' (५।३।७१) इत्यस्य वाक्याऽर्थबोधसमये तादृशसुबन्तानामकज्रहितानामेवोपस्थितेः, न त्वेतन्निष्पाद्याऽकच्सहितानाम्। तेषामेतद्वाक्यार्थबोधात् पूर्वं मानाऽन्तरेण[५]ऽसिद्धेः। पुनः प्रवृत्तौ तु मानाऽभावः। न चैवं 'शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः' (भा० ८।३।६२) इत्यादेर्वैयर्थ्यम्, 'शाला-शालीय' शब्दयोः, 'पठति—पिपठिषत्योः' एककालिकोपस्थित्यभावादिति वाच्यम्। 'छान्तस्य प्रातिपदिकत्वं भवति' 'सन्नन्तस्य धातुत्वं भवति' इत्यादेः सुप्तिङ्विधाविव कार्यकालपक्षे छ-सन्विधावप्युपस्थितत्वेन ('अ[६]क्षान् दीव्यति' इत्यादौ 'दिवः कर्म च' (१।४।४३) इत्यादेः 'कर्मणि द्वितीया'

---

णत्वमाश्रित्य 'सर्वनामार्थंगतसङ्ख्याभिधायिनी या (पञ्चमी) सप्तमी, तदन्तं यच्छब्दरूपम्' इत्याद्यर्थाङ्गीकारेण समुदायस्याऽसर्वनामत्वेपि त्रतसिलादिसिद्धिः। यद्वा 'सर्वनाम्नः परा या पञ्चमी(सप्तमी)त्येवाश्रीयताम्। तावतापि तसिलादिसिद्धिरित्यत आह—अकच्चेति। अकचि 'सर्वनाम्नाम्' इत्यस्य षष्ठ्यन्तत्वेन, समर्थविभक्तेरनिर्देशाच्च. त्वदुक्तार्थो वक्तुमशक्य इति भावः'—इति ग. च. पाठः।

१. इतोऽग्रे—'भवच्छब्देन समासे समुदायमिष्ठकुत्साबोधकाऽकचोऽनापत्तेः। अप्रकृत्यर्थकुत्साबोधने त्वतिप्रसङ्गः। एकार्थीभूतस्य निष्कृष्य कुत्सादिनाऽन्वयाऽयोगाच्च। अत एव 'कौम्भकारेयः' इत्यत्र 'केवलकारीशब्दाद् ढक् न' इत्याकरोक्तं सङ्गच्छते' इति ग. च. पाठः।

२. 'अत्र केचित्' इति क. पाठः। ख. पुस्तके तु 'अत्र केचित्—न चाऽवयवनिष्ठ' इतिरीत्या पूर्वत्रैव 'केचित्' इति पठ्यते। ३. क्वाचित्कः पाठः।

४. क्वाचित्कः पाठः।   ५. 'मानान्तरेण सिद्धेः' ख. ग. च. पाठः।

६. ख. पाठः।

(२।३।२) इत्यादावुपस्थितिसामर्थ्याद् द्वितीयेव) छ-सनाद्यापत्त्या, तन्निषेधेन चारितार्थ्यात् । तस्मिन् हि सति कार्यकालपक्षेऽप्युक्तवाक्यानामनुपस्थिति-रेव कल्प्यते, तत्सामर्थ्यात् ।

(ईदृशे[1] विषये यथोद्देशपक्षाश्रयणमेव वा) । अत एव 'घटत्वम्' इत्यादौ त्वप्रत्ययान्तात् त्वप्रत्ययसिद्धिः । न ह्येवमत्र 'अकज्विशिष्टस्य प्रातिपदि-कसंज्ञा भवति' इति वाक्यमस्ति । (माना[2]ऽभावात्) ।

न चैवं 'यूनि लुक्' (४।१।९०) इतिसूत्रस्थ-'ग्लौचुकायनः' इति प्रयोगो-ऽसङ्गतः स्यात् । ग्लुचुकशब्दात् फिनि यून्यणि रूपमेतत् । त्वद्रीत्या फिन्नन्तात् पुनः फिन एवाऽऽपत्तेरिति वाच्यम् । फिनो वैकल्पिकत्वेना-ऽक्षतेः । लक्ष्याऽनुरोधेन तद्विषये यथोद्देशपक्षस्यैव वाऽऽश्रयणम्' इत्या[3]हुः ।

परे तु[4] प्रातिपदिकत्वधातुत्वादिनैवोपस्थितात्प्रत्ययविधानं, न तु त[5]त्तद्रूपेण तेषामुपस्थितिः कस्याऽपि । असम्भवात् । कार्यकालपक्षेऽपि 'छान्तस्य प्रातिपदिकसंज्ञा' 'सनन्तादेर्धातुसंज्ञा' इत्यादिवाक्यार्थज्ञानं छादिविध्यनन्तरमेवेति, पूर्वं तदुपस्थितिर्दुर्लभैव । तस्मात् यद्यकच्सहिता-दकज्नेष्यते, तर्ह्यनभिधानेनैव वारणीयः । 'शैषिकात्' इत्याद्यप्यनभिधान-सिद्धार्थानुवाद एव । फिनन्तात् फिनपि तत एव नेत्याहुः[6] ।

**जसः शी** (७।३।१७)—दीर्घोच्चारणमुत्तरार्थम्—'वारिणी' इति । **अदन्तादिति**—'परस्य' (६।३।८) इत्यनेनाऽन्वेति । 'अतः' (७।१।९) इत्यस्याऽङ्गविशेषणतया तदन्तविधिः । 'अदन्तादङ्गात् परस्य' इत्यर्थः ।

---

१. ग. च. पाठः । क. ख. नास्ति । २. ग. च. पाठः । क. कुण्डलितः ।

३. 'स्यैवाश्रयणमित्यन्ये' ख. ग. च. पाठः ।

२. 'परे तु' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. पाठः ।

५. 'तत्तद्रूपेणैव' क्वचित् पाठः ।

६. इतोऽग्रे-'यदि तु 'सर्वादयस्तन्मध्यपतितविशिष्टाश्च सर्वनामसंज्ञकाः' इत्यस्योपस्थितिसामर्थ्याद् प्राप्नोत्येव (अकच्) इत्युच्यते, तदाऽस्तु लक्ष्यानुरोधाद् यथोद्देशपक्षाश्रयणमेवेति दिक्' इति ग. च. पाठः ।

'सर्वनाम्नः' इति तु विहितविशेषणमेव। तस्य तु नाऽङ्गं विशेष्यम्। आवृत्तौ मानाऽभावात्। तेन 'वर्णाश्रमेतराः' इत्यत्र न। (अत[1] एव 'विभाषा जसि' (१।१।३२) इति सूत्रं चरितार्थम्)[2]। न चाऽङ्गसंज्ञकाददन्तात् सर्वनाम्नो विहितस्येत्यर्थोऽस्तु। 'ये' 'ते' इत्याद्यसिद्ध्यापत्तेः। न चाऽत्वादिविधौ विषयसप्तम्याश्रयणात् तेषां पूर्वं प्रवृत्त्या[3] न दोषः। 'तस्मिन्नि'ति (१।१।६६) परिभाषाबाधे मानाऽभावात्।

**अनेकाल्त्वादिति**—न तु शित्त्वादिति भावः। **नाऽनुबन्धकृतमिति** (पृ० ६)—(उपदेश एव ऋकारस्येत्सञ्ज्ञकत्वादिति भावः)। अत्र चाऽनेकाल्सूत्रस्थं शिद्ग्रहणं ज्ञापकमित्युक्तं प्राक्।

**सर्वादेशत्वादिति**—प्रत्ययाऽऽदित्वाऽभावादिति भावः।

**अतः सर्वनाम्न इति**—'अ[5]दन्तादङ्गात् परस्य सर्वनाम्नो विहितस्य' इत्यर्थः। स्पष्टं चेदं कौस्तुभे।

---

१. क. नास्ति।

२. इतोऽग्रे–'न च 'सर्वनाम्नः' इत्यस्याऽङ्गविशेषणत्वेन 'सर्वनामान्ताद् विहितस्य' इत्यर्थस्यापत्तिरिति वाच्यम्[1]। 'विहितविशेषणम्' इत्यस्याऽधिकृतमङ्गस्येति विशेषणमित्यत्राऽन्वयात्' इति ग. पाठः।

३. पूर्वं प्रवृत्त्या न दोषः। 'असकौ' इत्यादौ 'प्रत्ययस्थात्' इतीत्वाऽऽपत्तेः। तेषु विषयसप्तम्या वक्तुमशक्यत्वादिति हलन्तशेषे निरूपयिष्यामः' इति क. कुण्डलितः, ख. ग. च. पाठः।

५. 'अतः सर्वनाम्नो विहितस्येत्यर्थः। तेन [2]मासपूर्वायेत्यत्र स्मै न' इति च. पाठः।

---

1. 'इत्यर्थस्यापत्तिरिति वाच्यम्। विधानात् पूर्वमङ्गसंज्ञाया अभावेन विहितविशेषणपक्षे तदसम्भवात्। 'सर्वनाम्नः' इत्यस्य जस्विशेषणतया कृतार्थत्वेन, पुनरङ्गविशेषणत्वे मानाऽभावाच्च। न चाऽदन्तादित्यपि तथैवाऽस्तु। ये ते इत्याद्यसिद्ध्यापत्तेः' इति च. पाठः।

2. 'अतिपूर्वायेत्यत्र' इति ग. पाठः।

**आमि सर्वनाम्नः** (७।१।५२)—'आज्जसेरसुक्' (७।१।५०) इत्यतः 'आत्' इत्यनुवर्त्तते। **अवर्णान्तादिति**—तदन्तादङ्गात् परस्येत्यर्थः। तेन 'तेषाम्' इत्यादौ नाऽव्याप्तिः। **विहितस्येति**—'परस्य' इति तु नोक्तम्। 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र सुडापत्तेः। 'द्वन्द्वे च' (१।१।३१) इति समुदायस्य निषेधो, न त्ववयवानाम्। न च तस्मादाम् विहितः, किन्तु समुदायादिति न सुट्। विहितविशेषणे प्रमाणन्तु 'दक्षिणोत्तरपूर्वाणाम्' इति भाष्यप्रयोग एव।

([1]**सर्वेषामिति**—न च परत्वान्नुडापत्तिः। सुटोऽपवादत्वा[2]त्। अत एव 'हलि सर्वेषाम्' (८।३।२२) इतिनिर्देशः सङ्गच्छते)।

ननु के सर्वादयः ?। न च 'सर्वेषां नामानि' इत्यन्वर्थत्वाद् विश्वादय एव संज्ञिनः, 'आदि'शब्दश्च प्रकारे इति वाच्यम्। कृत्स्नादिष्वतिव्याप्तेरित्यत आह—**पञ्चत्रिंशदिति**। तेन सर्वार्थप्रतिपादकत्वेऽपि कृत्स्नसकलादिशब्दानां नेति भावः। पञ्च च, त्रिंशच्चेति द्वन्द्वः। 'पञ्चाऽधिका त्रिंशत्' इति तत्पुरुषो वा। समासभेदेन स्वरभेदश्चेष्ट एव। अत एव 'बहुव्रीहौ सङ्ख्येये' (५।४।७३) इति सूत्रे 'एकाऽधिका विंशतिरेकविंशतिः' इत्याद्युक्तं भाष्ये।

नन्वेवं सर्वादीनां बुद्धिस्थाऽनेकाऽर्थवाचकत्वेन बहुवचनमेव स्यान्न त्वेकवचनादीति चेन्न। 'बुद्धिस्थाऽनेकसङ्ख्याकाऽवयवाऽऽरब्धसमुदाये सर्वादयः शक्ताः' इत्यावश्यकम्, प्रत्यव[3]यवं सर्वशब्दाऽप्रयोगात्। तत्र यदाऽनुद्भूताऽवयवः समुदायस्तदैकवचनम्। यथा 'सर्वो लोकः' इति। तादृक्समुदायद्वयाऽऽदिविवक्षायां द्विवचनाऽऽदि–'सर्वौ व्यूहौ' इति। यदा चोद्भू-

---

१. अयं पाठः क. नास्ति।

२. इतोऽग्रे—'न च तत्र कृतेऽस्य चारितार्थ्यम्। निर्दिश्यमान (प० १२) परिभाषयाऽप्राप्तेः। निर्दिश्यमानस्य व्यवहितत्वाच्च। स्पष्टा चेयं रीतिः 'पादः पत्' (६।४।१३०) 'हुझल्भ्यो हेर्धिः (६।४।१०१) इत्यत्र भाष्यकैयटयोः' इति च. पाठः।

३. 'प्रत्यवयवे' इति पाठान्तरम्।

ताऽवयवभेदसमुदायविवक्षा, तदा च बहुवचनं 'सर्वे घटाः' इतीति दिक्।

**पूर्वपराऽवर** (ग०)—व्यवस्थाऽसंज्ञावर्त्तिन एवेमे सर्वादय इत्यर्थः। एवमुत्तरसूत्रत्रयेऽपि। **नित्यं द्विवचनान्त इति**—द्विवचनान्त एवेत्यर्थः। सजातीयवचनान्तरस्यैव व्यवच्छेदाट्टाबादिकं भवत्येव। अर्थस्य द्विरूपत्वान्न्यायसिद्धोऽयमर्थः। अत एव शब्दपरत्वे 'उभात्' इत्यादि भवत्येव।

ननूभशब्दस्य द्विवचनाऽन्तत्वे सर्वादिषु पाठो व्यर्थः, स्मायादेर्द्विवचनेऽभावात्। न च 'स्वाङ्गशिटामदन्तानाम्' (फि० २९) इत्याद्युदात्तार्थः पाठ इति वाच्यम्। गणे एवाऽन्तोदात्तत्वनिपातनात्। 'उभे भद्रे' इत्यादौ तथैव पाठात्। 'वृषादीनां च' (६।१।२०३) इत्यत्राऽऽदिशब्दस्य प्रकारार्थत्वेनाऽऽद्युदात्तत्वसिद्धेश्चेत्यत आह—**अकजर्थ** इति।

ननु काऽकचोः को विशेषः ?। प्रत्ययस्वरेण, चित्स्वरेण वाऽन्तोदात्तत्वेन विशेषाऽभावात्। न च सुबन्तात् तद्धितोत्पत्तेः सत्त्वेनाऽकचि चित्त्वाज्जायमानमन्तोदात्तत्वम् 'उभकाभ्याम्' इत्यादौ सुबन्तस्य स्यात्, कप्रत्यये तु प्रकृतेरिति विशेषोऽस्त्येवेति वाच्यम्। तद्धितविधौ 'प्रातिपदिकात्' (४।१।१) इत्यधिकारेण प्रातिपदिकस्यैव प्रकृतित्वात्। स च जायमानो ज्ञापकान्न्यायाद् वा सुबन्तात् पर इत्यन्यत्। युष्मदस्मद्विषये तु 'विभाषा सुपः' (५।३।६८) इत्यनुवृत्तेः सुबन्तस्यैव प्रकृतित्वम्, तस्यैव टेः प्रागकजिति बोध्यम्।

न च 'उभाभ्यां हेतुभ्याम्' इत्यादौ 'सर्वनाम्नस्तृतीया च' (२।२।२७) इति तृतीयाषष्ठ्यौ तत्फलम्। 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शम्' इति 'हेतौ' (२।३।२३) इति सूत्रपठितेन गताऽर्थत्वात्। न च 'प्रायग्रहणादसर्वनाम्नः प्रथमाद्वितीये न स्तः' इति कैयटाद्युक्तेरसर्वनामत्वे दोषः स्फुट

---

१. इतोऽग्रे—'अकज्विधौ युष्मदस्मदतिरिक्तसर्वनामविषये प्रातिपदिकादेवाऽकज्विधानात्। तत्प्रकृतिके लक्षणायां मानाऽभावाच्च। एवञ्च 'चितः सप्रकृतेः' (वा० ६।१।६३) इतिवार्त्तिके प्रकृतिग्रहणेन तस्यैव ग्रहणम्। अत्र च प्रकृतभाष्यमपि मानम्। न चोभाभ्यां हेतुभ्याम्'—इति ग. च. पाठः।

एवेति वाच्यम् । 'प्राय'ग्रहणेन लक्ष्याऽनुरोधात् तस्येवोभ[1]शब्दाऽतिरिक्ता[2]-ऽसर्वनाम्न इत्यर्थस्याऽपि कल्पयितुं शक्यत्वात् । न चाऽकचि तन्मध्यपतित-(प० ९१) न्यायेन तस्योभग्रहणेन ग्रहणे, 'उभकाववयवौ यस्य' इत्यर्थे 'उभक' शब्दादयचि 'उभकयः' इति प्रयोगः सिघ्यति, के तु नेति विशेष[3] इति वाच्यम् । उभग्रहणेन तद्ग्रहणेऽपि, तस्य सङ्ख्यामात्राऽर्थकत्वाऽभावेन, लोके तथाऽप्रसिद्धत्वेन चाऽकज्विशिष्टे 'उभादुदात्तः' (५।२।४४) इत्यस्या-ऽप्राप्तेः । 'कश्चेदानीं काऽकचोर्विशेषः' इतिभाष्यप्रामाण्येनाऽनभि-धानाद् वा ।

अत एव **हरिणा** 'उभयोऽन्यत्र' (वा० ७।१।५२) इतिवार्तिकमूलभूतम् 'उभयस्य द्विवचनम्, टाप् च, लोपश्च यस्य' इति व्याकरणान्तरसूत्रमुदाहृ-तम् । तन्मते चैषां प्रयोगाणामभावः स्पष्ट एवेति शङ्कते–**न चेति** ।

**समाधत्ते—द्विवचनपरत्वाऽभावेनेति** । अकच्प्रत्ययस्य टेः प्राग् जायमानत्वेन, तन्मध्यपतित(प० ९१)परिभाषया न उभ[4]शब्दस्य द्विवचन-परत्वव्याघातः । कप्रत्यये तु तस्य प्रातिपदिकात् परत्र जायमानत्वाद् द्विवचनपरत्वविघातोऽस्त्येवेत्यर्थः ।

अयं भावः–'उभादुदात्तः' (५।२।४४) इति सूत्रे 'नित्यम्' इति योगो विभज्यते । 'उभशब्दान्नित्यमयच् स्यात् स्वार्थे' इति हि तदर्थः । न चैवं पूर्वसूत्रे 'नित्यम्' इत्यस्याऽसम्बन्धे 'द्वित्रिभ्यां तयस्याऽयज्वा' (५।२।४३) इत्यतो विभाषाऽनुवृत्तिः स्यादिति वाच्यम् । अस्वरितत्वात् । महाविभाषा-यास्तु फलाऽभावादसम्बन्धः । तस्याऽयचस्तयप्स्थानिकत्वेन तद्विकल्पेनैव वाक्यसिद्धेः । अत एव च ङीब्विधायकसूत्रे मात्रशब्दादारभ्याऽयचश्चकारेण 'मात्रच्' इतिप्रत्याहारमाश्रित्याऽयचः प्रत्ययाऽन्तरत्वं स्वीकृत्य 'उभये' इत्यत्र सर्वनामसंज्ञाविकल्पवारणम् 'नवेति' (१।१।४८) सूत्रस्थभाष्योक्तं सङ्गच्छते । तद्रीत्या हि वाक्यसिद्धये विभाषासम्बन्धस्याऽऽवश्यकत्वेन

---

१. 'उभय' ख. ग. पाठः । २. 'तिरिक्तसर्वनाम्नः' च. पाठः ।

३. विशेषस्य सत्त्वात् कथं केनेष्टसिद्धिः' ग. च. पाठः ।

४. 'उभय' ख. ग. पाठः ।

'नित्य'ग्रहणवैयर्थ्यं स्पष्टमेव[1]। उभावतिक्रान्ताऽत्युभयेत्यादौ तु न ङीप्। उभशब्दात् स्वार्थे विहितत्वेन तस्योपसर्जनत्वा[2]त्। 'नित्यम्' इति सूत्रे तु प्रत्ययान्तरमेव। स्वार्थे तयपोऽविधानात्।

अयमयच् तद्विषये सुबुत्पत्तेः पूर्वमेव। अ[3]त्यन्तस्वार्थिकत्वेनाऽन्तरङ्गत्वात्। अत्र नित्यशब्दस्य वाच्यार्थविरोधाद् विकल्पाऽननुवृत्तिः। अयमप्याद्युदात्त एव। प्रत्ययसम्बद्धोदात्तग्रहणस्याऽनुवृत्तेः। इदं च सूत्रम् 'उभौ साभ्यासस्य' (८।४।२१) इति निर्देशेन, योगविभागस्येष्टसिद्धार्थत्वेन च यत्रोभशब्दस्य, उभयशब्दस्य वा (सु[4]प्) द्विवचनविषयत्वाऽभा[5]वसम्भावना तत्रैव प्रवर्त्तते।

(उभा[6]वित्यत्रैकादेशेऽपि भान्तस्यैकदेशविकृत(प० ३७)न्यायेनोभशब्दत्वात् ततोऽव्यवहितद्विवचनमस्त्येव। 'सुपद्विवचने'त्युक्तेराचारक्विबन्तात् तिङ्द्विवचनेऽयज्भवत्येव। एवं च 'उभशब्दादुत्पन्नं द्विवचनं लुका नाऽपहृतं यत्र, ततोऽन्यत्राऽयच्' इति **मनोरमायां** प्रयासः किमर्थ इति चिन्त्यम्)।

तदुक्तं वार्त्तिककृता—'अन्याऽभावो, द्विवचनटाब्विषयत्वात्'। 'उभयोऽन्यत्र' (वा० ७।१।५२) इति। ([7]अन्येषाम्—सर्वनामकार्याणाम्, अभाव

---

१. इतोऽग्रे—'तत्र हि तयप्साहचर्यादवयवाऽर्थाऽयच एव ग्रहणम्। अत एव उभावतिक्रान्ता अत्युभयेत्यादौ न ङीप्। उभशब्दात् स्वार्थे विहितत्वेन तस्योपसर्जनत्वाच्च' इति क. कुण्डलितो, ग. च. पाठः।

२. 'उपसर्जनत्वाच्च' ग. च. पाठः।

३. 'अत्यन्तस्वार्थिकत्वेनाऽन्तरङ्गत्वात्' इति क. पाठः।

४. 'सुप्' इति क. नास्ति। 'अव्यवहितद्विवचनपरत्वविषयाऽभाव' ग. च. पाठः।

५. 'यत्र उभशब्दादव्यवहितद्विवचनपरत्वविषयाऽभावसम्भावना तत्रैव प्रवर्त्तते। 'उभशब्दादुत्पन्नं द्विवचनं लुका नापहृतं यत्र, ततोऽन्यत्राऽयम्' इति मनोरमाया अप्यत्रैव तात्पर्यम्। उभावित्यत्रैकादेशेऽपि ततः पूर्वं तादृशविषयसत्त्वात्। लुका तु विषयस्यैवापहारान्न दोषः। तदुक्तं वार्त्तिककृता' ग. पाठः

६. प्रायः क. कुण्डलितः ख. पाठः।

७. क. नास्ति।

इत्यर्थः) । अन्यत्रेत्यस्य द्विवचनविषयत्वाऽभावे इत्यर्थः[1] । टाब्विषयत्वमपि द्विवचने एव बोद्धव्यमिति **कैयटः** । न चोभस्य पाठाऽभावेऽसर्वनामत्वेन, ततस्त्रलादिविवक्षायाः कर्त्तुमशक्यत्वाद्[2] द्विचनपरत्वस्यैव सत्त्वेन, ततोऽयजुत्पत्त्यनापत्तौ 'उभयत्र' इत्याद्यसिद्धिरिति वाच्यम् । 'यद्ययच् स्यात् तदा त्रलादि स्यात्, तस्मिंश्च लुगपि स्यात्' इति सम्भावनया तद्विषया-[3]ऽभावसम्भावनासत्त्वादक्षतेः । उक्तज्ञापकेन वृत्तिविषयेऽयजिति तु न युक्तम् । (अर्क[4]च्यप्ययजापत्तेः) । 'उभयोर्वासः' इत्यादौ 'शयवासे' (६।३।१८) इत्यादिना विभक्त्यलुक्यप्ययजापत्तेश्च । न चेष्टाऽऽपत्तिः ।'द्विवचने उभशब्द एव साधुः, अन्यत्रोभयशब्दः' इत्यर्थपरभाष्यवार्त्तिकविरोधाऽऽपत्तेः ।

स चाऽयमयजन्तरङ्गत्वात् समासतद्धिताद्युत्पत्तेः पूर्वम्, सुबुत्पत्तेश्च[5] पूर्वं प्रवर्त्तते । अत एवाऽयज्विशिष्टस्योभस्य[6] सर्वनामत्वात् सर्वनामप्रकृतिसप्तम्याद्यन्तत्वेन त्रलाद्युत्पत्तिः । न चैवमुभयो मणिरित्यादावपि स्वार्थिकाऽयजापत्तिः, 'लिटयभ्यासस्योभयेषाम्' (६।१।१७) इत्यादिनिर्देशात् । तदेतदाह-**अयच्प्रसङ्गादिति** ।

न चाऽयचि सर्वनामत्वेनाऽपवादत्वादकच्प्राप्तौ, द्विवचनस्य श्रूयमाणत्वसत्त्वेन कथमयचः प्रसङ्ग इति वाच्यम् । उपजीव्यत्वेनाऽन्तरङ्गत्वेन च

---

१. इतोऽग्रे--'टाब्ग्रहणन्तु टाबादीनां स्त्रीत्वं वाच्यमिति पक्षाऽभिप्रायेण । अत एव टाब्विषयत्वमपि' इति च. पाठः ।

२. 'कर्त्तुमशक्यत्वेन, ततोऽव्यवहितद्विवचनपरत्वविषयस्यैव सत्त्वेन, ततोऽयजुत्पत्यनापत्तौ' ग. च. पाठः ।

३. 'विषयाऽभावसम्भावनासत्त्वादक्षतेः' क. ग. च. पाठः । 'तत्परत्वाऽभावसम्भावनासत्त्वादक्षतेः' इति तु ख. पाठः ।

४. क. कुण्डलितो ग. पाठः ।

५. 'भाष्यप्रामाण्यात् सुबुत्पत्तेश्च' इति ग. च. पाठः ।

६. 'उभयस्य' ग. च. पाठः ।

कप्रत्ययस्यैव प्राप्तेः । अपवादस्त्वन्यत्र चरितार्थः[1]। न च कप्रत्ययेऽवान्तर-पदत्वसत्त्वादवग्रहोऽप्यापादयितुं युक्त इति वाच्यम् । 'ईयिवांसमतिस्रिधः' इत्यादौ पदत्वाऽभावेऽपीयिवांसमित्यादौ तत्करणेन, 'राजका इदन्यके' इत्यादौ पदत्वसत्त्वेऽपि तस्याऽकरणेन च तत्र सम्प्रदायस्यैव शरणत्वादिति स्पष्टं संयोगसंज्ञा(१।१।७)सूत्रे **कौस्तुभे** ।

अत्रेदं चिन्त्यम्—'अकज्विधावेवोभग्रहणेन सिद्धे, तन्मात्राऽर्थं संज्ञाप्रण-यनं किमर्थम्' इति ? । अ[2]नभिव्यक्तपदार्थकत्वाच्च संज्ञाव्यावृत्तिः, सर्वनाम-साहचर्याच्च । एतेनोपसर्जनस्याऽपि व्यावृत्तिः ।

**भाष्यानुसारिणस्तु**—कप्रत्ययस्य स्वार्थिकत्वेन द्व्यर्थाऽभिधानसमर्थ-त्वात्, 'अन्याऽभावो द्विवचन' इतिवार्त्तिके द्विवचनशब्देन च यौगिकस्यैव ग्रहणात् सा[3]ङ्केतिकद्विवचनस्याऽग्रहणात् केऽप्ययजभावः सिद्धः । न च 'उभयतः' 'उभयत्र' इत्यादावप्ययजनापत्तिः, तेषामपि स्वार्थिकत्वेन द्विवचनत्वादिति वाच्यम् । त्र-तसिलोः सप्तम्यन्तात् पञ्चम्यन्ताच्च स्वार्थे विधानेनाऽव्ययत्वात् । सप्तम्यन्तार्थघटकधर्म एव तद्विधानेन च[4] द्विवचन-त्वमक्षतमेव ।

न चैवं तरबादावप्ययजनापत्तिः । तरबादीनां प्रवृत्तिनिमित्तगतप्रकर्षा-ऽऽदौ, तत्समानाधिकरणगुणगतप्रकर्षाऽऽदौ वोत्पत्त्या, तयोरत्राऽसम्भवे-

---

१. इतोऽग्रे—'वस्तुतस्तु कप्रत्यये चिकीर्षितेऽयच्प्रसङ्गेनापवादविषयसम्भा-वनया काऽप्राप्तौ, अकचि तु अयचोऽप्राप्त्या, सर्वनामत्वाऽभावेन तद-प्राप्तौ च उभकावित्यस्याऽसिद्धिरिति मूलतात्पर्यमिति प्राहुः' इति च. पाठः ।          २. 'अनभिव्यक्तपदार्थत्वाच्च' ख. पाठः ।

३. 'साङ्केतिकद्विवचनस्याऽग्रहणात्' इति क. कुण्डलितः ख. पाठ. ।

४. 'विधानेन च द्विवचनत्वाऽभावात् । उभशब्दार्थे तयोरविधानात् । यौगिक-द्विवचनत्वं द्वित्वसङ्ख्येयविशेष्यकबोधविषयाऽर्थाऽनुवादकत्वमिति ।

नोभशब्दात् तदनुत्पत्तेः । यद्यप्येकस्यैवोभयसमबल[1]त्वादिप्रतिपादनाय क[2]ल्पप् प्राप्नोति, तथापि तत्रा[3]ऽयच् नैव, सत्यभिधाने इत्याहुः ।

**द्विवचनपरत्वाऽभावे** इ[4]ति—अत्र वार्त्तिके तयप्समानार्थकोऽप्ययच्

---

[1]कस्य त्वज्ञाताद्यर्थविशिष्टोभार्थे विधानेन द्विवचनत्वमक्षतमेव । अत एव ईषदसमाप्त्यादिविवक्षायामुभकल्पौ उभतरावित्यादौ नाऽयच् । तदुक्तं भाष्ये–'केऽप्यन्तरेण वचनं द्विवचनपरो भविष्यति । कथम् ? स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्तीति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति' इति । इति=हेतोः, प्रकृतेः=कादिप्रकृतेरुभशब्दस्य ग्राहकेण द्विवचनशब्देन स्वार्थिकस्यापि ग्रहणमिति तदर्थः । टाप्साहचर्याच्च द्विवचनपदेन प्रत्ययस्यैव ग्रहणम् । एतदर्थमेव टाब्ग्रहणम् । अत एवोभयो रुभावुभाभावित्यादौ नाऽयच् ।

यत्तु—'इत्यन्तेन ग्रन्थेन उभशब्दपाठो व्यर्थ इति पूर्वपक्षे, प्रकृतिग्रहणे नेत्यादिना समाधानम् । अपिर्भिन्नक्रमः । प्रकृतिग्रहणेन तन्मध्यपतितत्वात् प्रत्ययानां ग्रहणमपि भवति अकजादीनाम्, तत्तु न सिध्येदतः पाठः कर्त्तव्यः । तेन प्रागुक्तोभकयादिसिद्धेः' इति । तन्न । अत्रत्यवार्त्तिकमूलभूतहरिप्रदर्शितव्याकरणान्तरस्मृतिविरोधादित्याहुः' ख. ग. च. पाठः ।

१. 'बलवत्त्वादि' ख. पाठः ।

२. 'कल्पप् प्राप्नोति, तथापि तेन तत्समपुरुषाऽन्तरस्यैव विशेष्यतया प्रतिपादनेनोक्तद्विवचनत्वाऽभावादयज्भवत्येवेत्याहुः । केचित्तु योगविभागस्येष्टसिध्यर्थत्वादयमयच् अव्यवहितद्विवचनपरत्व इवोभयो मणिरित्याद्ययज्वत इव च कप्रत्ययव्यवहितद्विवचनपरत्वेऽप्यसाधुरिति पाठं प्रत्याचख्युः' इति ख. पाठः । क. ग. नास्ति ।

३. 'तत्रायच् नैव, सत्यभिधाने इत्याहुः' इति क. पाठः ।

४. इतोऽग्रे 'वस्तुतस्तु द्विवचनविषयाऽभावे इत्यर्थः । पूर्ववार्त्तिके 'द्विवचनटाब्विषयत्वात् इत्यत्र विषयशब्दस्यैव प्रयोगात् । एतेनोभावित्यादौ द्विव-

---

1. 'कादेस्त्वज्ञाताद्यर्थ' ग. च. पाठः ।

गृह्यते । अत एवोभयो मणिरुभये देवमनुष्या इति तदुदाहरणपरभाष्यं सङ्गच्छते। स्वार्थिकस्य तु तदुपक्रमेण वार्त्तिकस्य प्रवृत्तेर्ग्रहणम्[1]। एवं चाऽवयवद्वयाऽऽरब्धमणिद्वयविवक्षयोद्भूतावयवभेदैकमणिविवक्षया वा द्विवचनमसाध्वेव[2] । अत्र चाऽनभिधानमेव शरणम्[3] । अत एवोभयशब्दस्य द्विवचनाऽभावादसर्वविभक्तिकत्वेनाऽव्ययत्वे प्राप्ते, 'तद्धितश्च' (१।१।३८) इति सूत्रस्थं परिगणनपरं 'कृत्तद्धितानां ग्रहणं च पाठे'[4] इति भाष्यं कैयटेनाऽवतारितम् । यद्यपि तद्भाष्यम् 'पचतिकल्पम्' इत्यादिवारणायेत्यपि व्याख्यातुं शक्यम्, तथाप्युक्तमेव भाष्यं तत्र प्रमाणम् । तदाह[5]—**द्विवचनं नास्तीति** ।

**हरदत्त इति**—अत्राऽरुचिबीजं[6] प्रागुक्तभाष्यविरोधः । **तस्मादिति**—उभशब्दादित्यर्थः[7] । **जसीति**—अवयवद्वयाऽऽरब्धसमुदायवहुत्वविवक्षायामित्यर्थः ।

**अन्तरङ्गत्वादिति**[8]–'निषेधाश्च बलीयांसः'(पृ० १२३) इत्यस्य तु नाऽत्र विषयः । प्रथमाऽऽदिसाहचर्येणैतत्सूत्रविषये निषेधाऽसम्बन्धात् । एवं[9] च

---

चनपरत्वं दुरुपपादम्, उभयत आश्रयणेऽन्तादिवत्त्वविरहादित्यपास्तम् । अत्र वार्त्तिकम्' इति ग. च. पाठः ।

१. 'तदुपक्रमेणैवाऽस्य वार्त्तिकस्य प्रवृत्तत्वाद् ग्रहणम्' ग. च. पाठः ।

२. इतोऽग्रे–'अत एव भाष्ये एकवचनबहुवचने एवोदाहृते' ग. च. पाठः ।

३. 'शरणम् । परिगणनमिति' (?) ख. पाठः ।

४. 'सूत्रे कृत्तद्धितानां ग्रहणं च पाठे' ख. च. पाठः ।

५. 'तदेतदाह' ख. पाठः ।

६. 'बीजन्तु' ख. पाठः ।

७. 'तस्मात्=उभयशब्दादित्यर्थः' इति क. ग. पाठः ।

८. इतोऽग्रे–'न च प्रथमचरमेत्यस्य निषेधविकल्पतया 'निषेधाश्च बलीयांसो भवन्ति' (पृ० १२२) इतिन्यायेन 'न लुमता' (१।१।६३) इतिसूत्रादिभाष्यपठितेन तसिलादिषु जातीयदेशीयपाठज्ञापयिष्यमाणेन विकल्प एव स्यादिति वाच्यम्' ग. पाठः ।

९. 'अप्राप्तविभाषैवेति भावः' इत्यन्तोऽयं पाठो ग. नास्ति ।

तयांऽशेऽप्येषाऽप्राप्तविभाषैवेति भावः। न च सर्वाऽर्थवाचकत्वरूपाऽर्थस्य पूर्वसूत्रे निमित्तकोटौ प्रवेशेन समत्वमिति वाच्यम्। महासंज्ञया तादृशार्थबोधकानामेव गणेऽनुकरणमित्यर्थबोधनेऽपि, तस्य संज्ञानिमित्तत्वे मानाऽभावात्। आधुनिकसंज्ञोपसर्जनप्रथमादिवारणायेह[1]ऽपि[2] तदावश्यकत्वा[3]च्च। न चोभादुदात्त (५।२।४४) इतिविहितोऽयच् प्रत्ययान्तरमेवेति वाच्यम्। 'उभयी' इत्यत्र ङीबनापत्तेः। 'टिड्ढाणञ्' (४।१।१५) इति सूत्रे मात्रशब्दादारभ्याऽयचश्चकारात् प्रत्याहाराश्रयणे तु तयबादिग्रहणवैयर्थ्याऽऽप[4]त्तिरिति[5] भावः।

**केचित्तु** न 'अन्तरङ्गं बलीयः' इत्यस्या अत्र विषयः। युगपत्प्राप्तेरभावात्। 'असिद्धं बहिरङ्गम्' (प० ५१) इत्यपि न। अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेः। अन्त[6]रङ्गं प्रति बहिरङ्गाऽसिद्धत्वेऽपि, स्वं प्रत्यसिद्धत्वाऽभावेन, तत्प्रवृत्युत्तरं बहिरङ्गप्रवृत्तेरनया वारयितुमशक्यत्वात्। बहुशस्तथा दृष्टत्वात्। तदुत्तरमप्येतत्प्रवृत्त्या पक्षे तदभावविशिष्टस्य साधुत्वबोधनं पूर्वादिष्विव।

न च कार्यकालपक्षे एतयोर्विषयः। तत्पक्षे द्वयोरपि 'जसः शी' (७।१।१७) इत्यत्रोपस्थित्या बहिरङ्गत्वस्य दुरुपपादत्वात्। तत्पक्षे हि

१. 'संज्ञाप्रथमादिशब्दवारणाय' ग. च. पाठः।

२. 'वारणायोत्तरत्रापि तस्यावश्यकत्वात्' ग. ख. पाठः।

३. इतोऽग्रे—'विभक्त्यर्थापेक्षया स्वार्थद्रव्यलिङ्गादेरन्तर्भूततया विभक्तिनिमित्तकस्येदृशार्थापेक्षत्वेन बहिरङ्गत्वस्य वक्तुमशक्यत्वाच्च। न च प्रथमादिसाहचर्यात् सर्वाद्यपठित एव तयप्प्रत्ययान्तो ग्राह्य इति वाच्यम्। सर्वार्थवाचकनेमशब्दस्यापि ग्रहणाऽनापत्तेः। भाष्यविरोधाच्च'—इति ग. च. पाठः।

४. 'तयबादिग्रहणवैयर्थ्यापत्तिः। स्वरूपस्य शास्त्रे प्रसिद्धत्वेन निराकाङ्क्षत्वेन प्रत्याहारग्रहणे मानाऽभावश्चेति सूत्रमतेनेदम्। 'अतिदिष्टादुपदिष्टं बलीयः' इति न्यायेनाऽन्यत्र नित्या संज्ञा सुलभा। विकल्पो ह्यतिदेशः प्राप्त इत्यपि केचित्' ग. च. पाठः।

५. 'वैयर्थ्यापत्तेरिति भावः' ख. पाठः।

६. 'अन्तरङ्गं प्रति' इत्यारभ्य 'पूर्वादिष्विव' इत्यन्तः क. पाठः। ख. ग. च. नास्ति।

'विभाषा जसि' (१।१।३२) इत्यादौ जसीत्येतत् 'जसः शीत्यत्रैवोपस्थितिः' इत्येतदर्थमात्रबोधकम् । किञ्चैवमद्धाऽर्थकसर्वाऽऽदिपठित'नेम'शब्देऽपि नित्यसंज्ञाया आपत्तिः । 'नेम'ग्रहणन्तु 'नेमः कीलेऽवधौ, गर्त्ते, प्राकारे, कैतवेऽपि च' इत्यर्थान्तरे सावकाशम् । एवं च नेमांऽशे उभयत्र विभाषैवेयम् । अत एव 'नवेति' (१।१।४४) सूत्रभाष्येऽयचः प्रत्ययान्तरत्वेनैवोभये इत्यत्र नित्यसंज्ञोक्ता । प्रत्याहाराऽऽश्रयणेन च ङीप्साध्यः, तयबादिग्रहणं च न कार्यमिति लाघवमेवेति तदाशयः । सूत्रमते तु पूर्वविप्रतिषेधोऽङ्गीकार्य इत्याहुः ।

**केचित्तु**[1] गणव्याख्याने 'नेम इत्यर्द्धे' इति तदर्थमात्रोपलक्षणमिति तदंशे प्राप्तविभाषैवेत्याहुः ।

**नित्यैवेति**—'परेऽवरे, उभया अमित्रा' इति तु च्छान्दसं बोध्यम्[2] । **तदन्तग्रहणमिति**—'प्रत्ययग्रहणे तदन्तग्रहणम्' (प० ७।१।५२) इति, 'प्रयोजनं सर्वनामाऽव्ययसंज्ञायाम्' इति च तदन्तविधिद्वयेन 'डतरान्तान्त' इत्याद्यर्थे परमकतरस्य, व्यपदेशिवद्भावेन कतरस्य च संज्ञा सिद्धेति भावः ।

तत्र मानमाह—**केवलयोरिति** । प्रयुज्यतेऽनेनेति[3] **प्रयोजनम्**=संज्ञा-

---

१. 'केचित्' इत्यारभ्य 'आहुः' इत्यन्तः पाठो ग. नास्ति ।

२. एतदग्रे--'डतरडतमाविति । ननूक्तरीत्या शब्दविशेष्यमादाय डतरादेर्विशेषणात् तदन्तविधिना प्रत्ययान्तस्य सञ्ज्ञा, उत प्रत्ययाक्षिप्तस्वप्रकृतिघटितसमुदायविशेषणात् तदन्तविधिना ? नाद्यः । परमकतरशब्दादीनां सर्वनामसञ्ज्ञाऽनापत्तेः । 'प्रत्ययग्रहणे यस्मात्' (प० २३) इतितदादिविधिप्राप्तडतरान्तत्वाऽभावान्न द्वितीय इत्याह--यद्यपीति । तदन्तग्रहणमिति—प्रत्ययाक्षिप्तस्वप्रकृतिघटितसमुदायविशेषणतया लब्धतदन्तविधिप्राप्तडतरान्तस्य, शब्दरूपविशेष्येणाऽन्वयात् पुनस्तदन्तविधौ—परमकतरस्य, व्यपदेशिवद्भावेन च कतरस्य संज्ञा सिद्धेति भावः' इति ग. पाठः ।

३. 'प्रयुज्यतेऽनेनेति प्रयोजनम्, तदभावादित्यर्थः । तद्धि सर्वार्थवाचकत्वम् ।

प्रवृत्तिप्रयोजकसर्वाऽर्थवाचकत्वम्, तदभावादित्यर्थः । (संज्ञा[1]करणेनाऽर्थस्य प्रवृत्तिनिमित्तत्वम्) । प्रत्ययमात्रस्य सर्वाऽऽदिगणपठितत्वेऽपि, तावन्मात्रस्य लोकेऽप्रयोगेण, तस्य सर्वाऽर्थवाचकत्वात् । सर्वनामशब्दो हि योगरूढ्या सर्वाऽर्थबोधकत्वसमानाधिकरणसर्वनामपदवत् सर्वाऽऽदिप्रतिपादकः । ए[2]तद्विषये सर्वनामपदस्य केवलरूढत्वमेव प्रत्ययस्य संज्ञाविधानसामर्थ्यात् कल्प्यमिति चेत् तर्हि 'अतिकतराय' इत्याद्यसिद्धिरिति दिक् । फलाऽभावादिति वाऽर्थः ।

नन्वन्यतरशब्दपाठो गणे व्यर्थः, डतरग्रहणेनैव सिद्धेरत आह— **अन्यतरेति**—कियत्तद्भ्य एव तयोर्विधानेनाऽन्यशब्दात् तयोरभावादिति भावः । एतच्च पस्पशायां **कैयटे** स्पष्टम् ।

**एके इति**—वृत्तिकाराः । 'एतं त्वं मन्ये' इत्याद्युदात्तस्य, 'उत त्वः पश्यन्' 'उतो त्वस्मै तन्वम्' इत्यनुदात्तस्य च दर्शनादिति भावः ।

**एकस्तान्त इति**—एकश्रुत्या पाठेनैव निर्वाहे, वारद्वयोच्चारणादेकस्तान्तश्छेत्तव्यः । एकः । प्रथमः । 'स्तरीरुत्वात्' इति प्रयोगोऽत्र मानम् । अस्य सर्वनामत्वफलन्तु 'अन्यतः' इत्यर्थक-'त्वत्तः' इत्यादिसिद्धिः ।

अत एव'त्वदधरमधुरमधूनि पिबन्तम्'इति **जयदेवः** प्रायुङ्क्त । तत्र हि अन्यस्या इत्यर्थः, न तु 'तवाऽधरः' इति । 'पश्यति दिशि दिशि रहसि भवन्तम्' इतिवाक्यशेषेण कृष्णस्याऽसम्बोध्यत्वाऽवगत्या, सम्बोध्यस्य (च) युष्मदर्थत्वेनाऽनन्वयाऽऽपत्तेः । अत्र पक्षे 'त्व' इत्येकश्रुत्योदात्ताऽनुदात्तयो-

---

महासञ्ज्ञाकरणेनार्थस्य प्रवृत्तिनिमित्तत्वाङ्गीकारात् । प्रत्ययमात्रस्य सर्वादिगणपठितत्वेपि सर्वार्थवाचकत्वाऽभावात् । प्रत्ययान्तस्यैव लोके प्रयोगेण तत्रैव सर्वार्थवाचकत्वकल्पनात् । सर्वनामशब्दो हि' ग. पाठः ।

१. क. नास्ति । ख. ग. पाठः ।

२. 'न च सञ्ज्ञाविधानसामर्थ्यादेतद्विषये सर्वनामपदस्य केवलरूढत्वमेवाऽङ्गीकार्यम् । तथा सत्यतिकतरा इत्याद्यसिद्ध्या इष्टानुरोधेन तदन्तविधिनिषेधबाधस्यैव कल्पनादिति भावः' ग. पाठः ।

निर्देश इति भावः। **'सिमः कृत्स्ने च, शक्ते च, स्यान्मर्यादाऽवबद्धयोः'**।

**गणसूत्रे इति**—इदं च सप्तम्यन्तोदाहरणपरभाष्याल्लभ्यते।

**अपुरीति**—पूःशब्दार्थस्य विशेष्यत्वे नेत्यर्थः। स च स्त्रियामेव। तेन स्त्रीत्वविशिष्टस्यैव बोधनेन तत्त्यागे मानाऽभावात्। अत एव भाष्ये 'अन्तरायाम्' इति स्त्रियामेवोदाहृतम्। अत एव जसि विभाषाविधायके नाऽस्योपयोगः, अदन्तादेव जसः शीविधानेन, टाबन्तात् प्राप्त्यभावात्।

**अन्तरायामिति**—प्राकाराद् बाह्यायाम्, तदन्तर्वर्त्तिन्यां वेत्यर्थः। एकाऽऽदेशस्य पूर्वान्तत्वेन ग्रहणात् प्राप्तिः। 'त्यद्' 'तद्' एतावुक्तपरामर्शकौ। (यत्तु[1] 'आद्यश्छान्दसः' इति। तन्न। 'स्यश्छन्दसि' (६।१।१३३) इति सूत्रे छन्दोग्रहणवैयर्थ्याऽऽपत्तेः)।

**'एकोऽन्यार्थे, प्रधाने च, प्रथमे, केवले तथा।**

**साधारणे, समानेऽल्पे, सङ्ख्यायां च प्रयुज्यते'॥**

**केवले**=असहाये इत्यर्थः। 'एकाकिभिः क्षुद्रकैर्जितम्' इत्यादौ तथाप्रयोगात्। स्पष्टं चेदं 'बहुषु' (१।४।२१) इति सूत्रे भाष्ये।

**स्वाभिधेयाऽपेक्ष इति**—स्वस्य=पूर्वाऽऽदिशब्दस्य, अभिधेयेनाऽपेक्ष्यत इति **स्वाभिधेयापेक्षः**। कर्मणि घञ्। स्वाऽभिधेयेनाऽपेक्ष्यमाण इत्यर्थः। नियमे चैतद्विशेषणमवधिद्वारा बोध्यम्। अवधिशब्दस्य नित्यसापेक्षत्वाद् वा न समासाऽनुपपत्तिः। 'स्वाभिधेयाऽपेक्षाऽवधि' इति समस्तमेव क्वचित् पठ्यते। एवं[2] च 'व्यवस्थायाम्' इत्यस्य 'नियमेनाऽवधिसापेक्षाऽर्थे वर्तमानपूर्वादीनाम्' इत्यर्थः।

**उत्तराः कुरव इति**—स्यादेतत्। द्व्यङ्गविकलमेतत्। प्रयोगस्य निरूढत्वात् प्रयोक्तृभिरवधेर्नियमेनाऽनपेक्षणाद्[3] व्यवस्थाया अप्यभावात्[4]।

---

१. क. कुण्डलितः ख. पाठः।

२. 'एवञ्च' इत्यारभ्य 'इत्यर्थः' इत्यन्तः पाठो ग. नास्ति।

३. 'अनपेक्षणाच्च' ख. ग. पाठः।

४. इतोऽग्रे—'किञ्च महासञ्ज्ञालब्धस्यैकरूपेण सर्वार्थप्रकाशनयोग्यस्वरूप-

किञ्च दिग्वाचकपूर्वाऽऽदिशब्दानामपि संज्ञाऽनापत्तिः। तेषामपि तासु सङ्केतितत्वात्। अपि च 'दिङ्नामान्यन्तराले' (२।२।२६) इतिसूत्रे 'दक्षिणपूर्वा' इत्यत्र पुंवद्भावो न प्राप्नोति। समानायामाकृतौ भाषितपुंस्कत्वाऽभावात्। आकृत्यन्तरे चैतौ भाषितपुंस्कौ, 'दक्षिणा, पूर्वा' इति दिक्शब्दौ, 'दक्षिणः' 'पूर्वः' इति व्यवस्थाशब्दौ। एवं तर्हि 'सर्वनाम्नो वृत्तिमात्रे' (वा० २।१।५१) इति पुंवद्भावः—इति भाष्यसन्दर्भेण, 'व्यवस्थानिमित्तो यो न भवति, स्वभावत एव यो दिशि वर्त्तते, स्वरूपव्यतिरिक्तप्रवृत्तिनिमित्तनिरपेक्षो यो दिशो वाचकः पूर्वादिशब्दः, स दिक्शब्द आश्रीयते। दिशि वर्त्तमानाः पूर्वादयो निमित्ताऽन्तरनिरपेक्षाः। देशकालयोस्तु व्यवस्थाऽपेक्षप्रवृत्तिनिमित्ताः। दिशि वर्त्तमानानां व्यवस्थाप्रवृत्तिनिमित्तकत्वे हि 'दिक्शब्देभ्यः सप्तमीपञ्चमी' (५।३।२७) इत्यादौ दिक्शब्दत्वेन व्यवहाराऽनुपपत्तिः।

'दिग्वाचकशब्दप्रवृत्तिनिमित्तकत्वं हि दिक्शब्दत्वम्'[1] इत्याद्यस्तातिप्रकरणस्थ**कैयटहरदत्तादिग्रन्थ**बलेन च, दिग्वाचिपूर्वादिशब्देषु व्यवस्थाऽभावस्य स्पष्टमभिधानात् कथं तत्र संज्ञा ?। अपि च 'दक्षिणा गाथकाः' इत्यत्राऽप्युत्कर्षस्याऽवधिसापेक्षत्वेन व्यवस्थायाः सत्त्वात् कथं न तत्र सर्वनामसंज्ञा ?।

न च 'यावद्द्रव्यमनपायो व्यवस्था' इत्येव लक्षणमत्राऽश्रीयते। 'द्रव्योत्पत्तिक्षणमारभ्य नाशक्षणपर्यन्तं यत्र पूर्वादिव्यवहाराऽनपायः' इति हि तदर्थः। एवं च दिक्ष्वस्त्येव व्यवस्था। 'उत्तराः कुरवः' इत्यादौ च। 'दक्षिणा गाथकाः' इत्यादौ तु न। दक्षिणत्वस्य तेषु यावद्द्रव्यमसत्त्वात्।

---

सर्वार्थवाचकत्वस्य कुरुवाचकोत्तरशब्देऽभावात् तेनैव व्यावृत्तिसिद्धौ, पुनरसंज्ञायामिति व्यर्थम्' इति क. कुण्डलितो ग. पाठः।

१. इतोऽग्रे—'न च विशेष्यतया दिग्बोधकत्वमेव तत्त्वम्। तथा सति 'रमणीया दिग्' इत्यादावप्यस्तात्यापत्तिः। 'दिग्भ्यः' इत्येव सिद्धे शब्दग्रहणवैयर्थ्यापत्तेश्च' इति क. कुण्डलितो ग. पाठः।

पूर्वोत्तरवयसोस्तदभावात्। 'पूर्वस्मिन् गुरौ' इत्यादौ 'परेषां युधि' इत्यादाविव लक्षणयैवोपपत्तिरिति वाच्यम्। 'अधरे ताम्बूलरागः' इत्यादावपि संज्ञाऽऽपत्तेः। देशकालयोः पुरुषभेदेनाऽवधिभेदेन चाऽनियतपूर्वादिव्यवहारदर्शनेनाऽव्याप्तिग्रस्तं चैतदिति चेन्न। यद्यपि संज्ञाशब्दत्वं रूढ्या बोधकशब्दत्वम्, अत एव 'संज्ञायां समजनिषद' (३।३।९९) इत्यादिना समूहार्थक-'समज्या'शब्दस्य साधुत्वमुक्तं सूत्रकृता, अत एवाऽऽकडारसूत्रे इन्द्रादीनां, कुशूलादीनां च संज्ञात्वमुक्तं भाष्ये, अत एव पञ्चमे पशुनामत्वेन गवादयो व्यवहृता 'गोगोष्ठम्' इत्यादिसिद्धये, न ह्येतेषु पदप्रवृत्तिनिमित्तक[1]त्वरूपं तत्, इन्द्रशक्रादीनां पर्यायित्वाऽनापत्तेः, भिन्नप्रवृत्तिनिमित्तकत्वात्, तथाऽपि 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इत्यत्राऽऽधुनिकसङ्केतविषये संज्ञाशब्दो वर्त्तते, सामर्थ्यात्। अन्यथा सर्वा[2]ऽऽदीनां केवलरूढत्वेन तस्या[3]ऽसङ्गत्यापत्तेः। 'दिक्षु त्वैश्वर एव सङ्केतो नाऽऽधुनिकः, कुरुषु त्वाधुनिक एव' इत्यत्र व्याख्यातृवचनमेव प्रमाणं लक्ष्यदर्शनं च। एवं देवगणविशेषे विश्वशब्दस्याऽप्यैश्वर एव सङ्केत इति 'विश्वेषां देवानाम्' इति सिद्ध[4]म्।

---

१. 'पदप्रवृत्तिनिमित्तकत्वरूपम्, आधुनिकसङ्केतरूतं वा तत्' ग. पाठः।

२. 'पूर्वादीनां' ग. पाठः

३. 'तस्य' इति क. नास्ति। ख. ग. पाठः।

४. इतोऽग्रे—'स्वस्वविषयापेक्षसर्वार्थवाचकत्वस्यापि सत्त्वाच्च। अन्यथा द्व्यादीनामपि सर्वार्थवाचकत्वाऽनापत्तिः। अत्र सूत्रेऽसंज्ञायामिति स्पष्टार्थम्, महासञ्ज्ञयैव सिद्धेः। न च दिशि व्यवस्थाया अप्यभावः। दिक्शब्दस्य प्रवृत्तिनिमित्तत्वेन व्यवस्थाप्रवृत्तिनिमित्तत्वाऽभावेऽपि,विशेष्याया दिशः सुमेरुरूपाऽवध्यपेक्षा नियमतोऽस्त्येव। शब्दशक्तिस्वभावात्। प्रसिद्ध्या तु नाऽवधिवाची शब्दः प्रयुज्यते। अत एव तदवधेरुदयाचलसंनिहिता पूर्वा,अस्ताचलसंनिहिता परशब्दवाच्येत्यादिव्यवहारः। अत एव 'स्वाभिधेयापेक्ष' इत्येवोक्तम्, न तु 'स्वप्रवृत्तिनिमित्त' इति। अत एव न बहुव्रीहाविति निषेधे प्राप्ते 'विभाषा दिक्समासे' (१।१।२८) इतिसूत्रम्

अत्र सूत्रे 'असंज्ञायाम्' इति तु स्पष्टार्थम् । महासंज्ञयैव सिद्धेः । न च दिशि व्यवस्थाया अप्यभावः, दिक्षु शब्दस्य प्रवृत्तिनिमित्तत्वादिति वाच्यम्। पूर्वा[1]ऽऽदयः शब्दा आकाशवदेकस्या दिश उपाधिकृतं भेदं प्रतिपादयन्ति। उपाधिश्च तत्र पृथ्वीमध्यम्, तत्प्रान्तवर्त्तिनश्चत्वारः पर्वताश्च । रा[2]मायणे किष्किन्धाकाण्डे सुग्रीवेण मध्यदेशावधिकस्यैव दिग्विभागस्योक्तत्वात् । एवं च 'तन्मध्यभागाऽवधिकोदयाऽचलाऽऽदिपर्यन्तदेशरूपोपाधिविशिष्ट-दिशि पूर्वाऽऽदीनां तत्तच्छब्दं प्रवृत्तिनिमित्तीकृत्य प्रवृत्तिः इत्युपाध्यन्तर्गत-तया मर्यादाया अपि भानेन, व्यवस्थाविषयत्वाऽक्षतेः । उदयाऽचलपर्यन्त-रूपोपाधेस्तदभिधेयस्य तदाकाङ्क्षत्वेन मूलोक्तलक्षणाऽनुपपत्तिरपि न । 'व्यवस्थायाम्' इति च विषयसप्तमी । स्पष्टं चेदम् 'दक्षिणोत्तराभ्याम्' (५।३।२८) इति सूत्रे भाष्यकैयटयोरिति तत्रैव भाष्यप्रदीपोद्द्योते निरूपितम् ।

देशवृत्तीनान्तु तत्तदवधिकोदयाचलसन्निहित[3]त्वाऽऽदि प्रवृत्तिनिमित्त-मित्यादि बोध्यम् । 'उत्तराः कुरवः' इत्यत्राऽपि सुमेर्ववधिकपरदेशत्वरूपो-पाधिविशिष्टकुरुषूत्तरशब्दः शब्दं प्रवृत्तिनिमित्तीकृत्य वर्त्तते इति व्यवस्था-विषयत्वमस्त्येव । 'उत्तराः कुर[4]वः' इत्यस्य उत्तरनामानः कुरव इत्यर्थ' इति केचित् । 'ये के चन हिमवन्तं परेण जनपदाः 'उत्तरकुरवः' 'उत्तर-मद्राः' इति तु ब्रा[5]ह्मणे श्रूयते । कपिञ्जलाधिकरणे शाबरभाष्ये तु 'उत्तराः

---

इति भाष्योक्तं सङ्गच्छते इत्याहुः । 'उत्तराःकुरवः' इत्यत्रापि विशेष्यस्य शब्दशक्तिस्वभावेनैव सुमेरुरूपाऽवध्यपेक्षत्वेन व्यवस्थाविषयत्वमस्त्येव ।

ये के चन हिमवन्तम्' इति ग. च. पाठः ।

१. 'पूर्वादिशब्दैराकाशवदेकस्या एव दिश उपाधिकृतभेदप्रतिपादनात्' इति क. पाठः ।

२. 'रामायणे' इत्यारभ्य 'दिग्विभागस्योक्तत्वात्' इत्यन्तोऽयं कः पाठः ।

३. 'सन्निहितत्वं प्रवृत्तिनिमित्तम्' ख. पाठः ।

४. 'कुरवः' इति क. नास्ति । ५. 'तैत्तिरीये श्रूयते' ख. ग. पाठः ।

कुरवो दक्षिणान् कुरूनुपेक्ष्योत्तरा इत्युच्यन्ते' इत्युक्तम्। ('द[1]क्षिणा गाथका:' इत्यत्रोत्कर्षविवक्षायामाकाङ्क्षासत्त्वेऽपि, तदविवक्षायामसत्त्वेन नियमाऽभावान्न दोष:)। एव[2]म् 'उत्तरे प्रत्युत्तरे च शक्त:' इत्यपि 'व्यवस्थायाम्' इत्यस्य प्रत्युदाहरणं बोध्यम्।

'अधरे ताम्बूलराग:' इत्यादौ तु संज्ञात्वात् तत्प्रयुक्तव्यवस्थाऽभावाद् वा न प्रवृत्ति:। 'परेषां युधि' इत्यादौ तु परदेशनिष्ठत्वाऽऽदिभिरेव बोधाद् व्यवस्थाऽस्त्येव। शत्रुत्वादिकं त्वार्थिकोऽर्थ:।

(केचि[3]त्तु देशबोधकतया, तत्स्थबोधकतया वा व्यवस्थाविषययोरेव पराऽपराशब्दयोरुपचाराच्छत्रौ, प्रतिवादिनि च प्रयोग: न चैवमुपसर्जनत्वम्। लाक्षणिकत्वेऽपि, तत्त्वाऽभावात्। स्वार्[4]थविशिष्टपदान्तराऽर्थोपस्थापकत्वे एवोपसर्जनत्वाऽङ्गीकारात्। ध्वनितं चेदम् 'ञितश्च तत्प्रत्ययात्'(४।३।१५५) इति सूत्रे भाष्ये। अत एव भूवादिसूत्रे 'एतान्यपि' इत्यस्यैतत्प्रतिपाद्यानि वस्तूनीत्यर्थ इति **कैयट इति वदन्ति। तत्र दृष्टान्तोऽसिद्ध:**। एतच्छब्देन शक्त्यैव तस्य बोधयितुं शक्यत्वात्। बुद्धिस्थत्वन्तु शक्यतावच्छेदकतावच्छेदकम्। बोधश्च प्रातिस्विकरूपेणैव। बुद्धिस्थत्वस्यापि शक्यतावच्छेदकतावच्छेदकाक्रान्तत्वादप्रकरणज्ञस्य क्वचिद् बुद्धिस्थत्वेन बोधेऽपि न क्षति:। 'तदा[5]दिभिस्तत्तद्रूपेणैव बोधजननात्' इत्यन्ये। यत्तु 'पूर्वादीनां परस्परसाहचर्येण दिग्देशकालवृत्तीनामेव ग्रहणात् 'दक्षिणा गाथका:' इत्यादौ दोषो न इति। तन्न। दक्षिणसाहचर्यात् कालवाचकानामपि ग्रहणाऽनापत्तेस्तस्याऽत्राऽनाश्रयादित्याहु: )।

---

१. 'न दोष:' इत्यन्त: क. कुण्डलित: ख. ग. पाठ:।

२. 'एवम्' इति ख. पाठ:।

३. 'केचित्तु' इत्यारभ्य 'अनाश्रयादित्याहु:' इत्यन्त: क. कुण्डलित: ख. ग. पाठ:।

४. 'स्वार्थविशिष्टाऽर्थान्तरोपसंक्रमे एवोपसर्जनत्वा' ग. पाठ:।

५. 'तदादिभि:' इत्यारभ्य 'इत्यन्ये' इत्यन्तोऽयं पाठ: क नास्ति।

**स्वमज्ञा**(१।१।३५)—'आख्या'ग्रहणमात्मीयत्वेन ज्ञात्यादिविवक्षायामपि संज्ञा यथा स्यादित्यर्थम्, धनत्वेनाऽऽत्मीयस्य बोधे मा भूदित्यर्थं चेत्याहुः । न च 'आत्माऽऽत्मीयाऽऽख्यायाम्' इत्येव वाच्यम् । लाघवाऽभावात् ।

आत्माऽऽत्मीयज्ञातिधनवाचो स्वशब्दः । तत्र ज्ञातिधनयोः पर्युदासादात्माऽऽत्मीयौ परिशिष्टौ । तत्राऽऽत्मनि '[1]स्वो ज्ञातावात्मनि स्वम्' इत्यमरान्नपुंसकत्वेऽपि, 'स्वः स्यात् पुंस्यात्मनि'इति **मेदिनीकोशात्** पुंल्लिङ्गोऽपि[2] स्वशब्द[3] इत्यभिप्रेत्याऽऽह—**आत्मान** इति **वेति** । ('[4]स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये, स्वो धनेऽस्त्रियाम्' इत्यमरान्न पुंसकोऽपीत्येके ।

**अन्ये** तु 'कोशयोरविरोधे संभवति भिन्नार्थकल्पनस्याऽन्याय्यत्वादमरे 'आत्मनि' इति पूर्वान्वयि, स्वमिति चोत्तरान्वयीत्याहुः । एवं हि 'स्वो ज्ञातावात्मनि धने त्वस्त्री आत्मीयके त्रिषु' इति पाठेनैव सिद्धे, त्रिःस्वग्रहणस्य वैयर्थ्याऽऽपत्तेः । अत एव—

**'बन्धूकबन्धूभवदेतदस्या मुखेन्दुनाऽनेनसहोज्जिहाना ।**
**रागश्रिया शैशवयौवनीयां स्वमाह सन्ध्यामधरोष्ठरेखा'** ॥

इत्यत्राऽऽत्मानमित्यर्थक'स्वम्'इत्यस्य 'बन्धूभवत्' इति नपुंसकं विशेषणमुपात्तं **श्रीहर्षेणे**त्य[6]न्ये) ।

---

१. 'स्वो ज्ञातावात्मनि स्वमित्यमरान्नपुंसकत्वेऽपि' इति ख. ग. च. नास्ति, क. पाठः । २. अपिर्नास्ति ख. पुस्तके ।

२. इतोऽग्रे–'अत एव 'विभाषा जसि' इतिप्रकरणे 'स्वमात्मात्मीयाख्यायाम्' इत्येव नोक्तम् । केशनखादौ तु न । पूर्वोत्तरसाहचर्येण प्राप्तविभाषात्वस्यैव न्याय्यत्वात्' इति ग. पाठः ।

४. 'स्वो ज्ञातावात्मनि' इत्यारभ्य 'श्रीहर्षेणेत्यन्ये' इत्यन्तः क. कुण्डलितः ख. पाठः ।

५. 'इत्याहुः, एवं हि' इति क. नास्ति । ख. ग. च. पाठः ।

६. 'त्यपरे' ग. पाठः ।

**'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये। छिद्राऽऽत्मीयविना-बहिरवसरमध्येऽन्तरात्मनि च'** इति कोशोक्तार्थाऽन्तरव्युदासार्थमाह—**अन्तरं बहिर्योगेति** ((१।१।३६)। बहिःशब्देनाऽनावृतो देशः, तद्देशस्थं वस्तु चोच्यते। तत्राऽऽद्यमर्थं गृहीत्वाऽऽह—**बाह्या** इति। द्वितीये त्वाभ्यन्तरा इत्यर्थः। बाह्येन ह्याभ्यन्तरस्य योगोऽस्ति। अर्थद्वयमप्याकरे स्थितम्। 'उपसंव्यान'शब्दोऽपि कर्म-कारणव्युत्पत्तिभ्यामन्तरीयपरः।

नन्वेवमुपसंव्यानग्रहणं व्यर्थम्, बहिर्योगेनैव गताऽर्थत्वादिति चेत्। उप-संव्यानत्वप्रकारकशाब्दबोधार्थं तद्ग्रहादिति सूत्रहृदयम्।

अयं च त्रिसूत्र्या क्रियमाणो विकल्पो जसाधारे कार्ये एव,न त्वकजादावति बोध्यम्। वक्ष्यमाणयुक्तेः। तेनैषामकजाद्युदात्तत्वादिकं च नित्य-मेव। अत एव 'प्रथमचरम' (१।१।३३) इति सूत्रे 'प्रथमके' इति रूपं न भवति' इति **कौस्तुभ**कृतः। **नेम**शब्दस्य तु **'नेमके' नेम**काः' इति भवत्येवेति दिक्।

ननु 'पूर्वादिभ्यो नवभ्यो वा' (७।१।१६) इति सूत्रवदत्रापि 'पूर्वादीनि नव वा' इत्येव[1]ाऽस्त्विवति चेन्न। भ[2]ावतात्पर्यकतालोभेन अर्थान्तरेऽप्राप्तविभा-षाऽऽपत्तेः।.(प्र[3]ाप्तविभाषायामुक्ताऽनुवाददोषादप्राप्तविभाषायामपूर्वविधानात् सैव स्यात्। भावतात्पर्यकतालोभेन चाऽप्राप्तविभाषैव स्यात्। य[4]दि तु तत्र 'व्यवस्थायाम्' इत्यादि पाठविशेषणम्, तदा चिन्त्यो न्यास इति वदन्ति। अन्ये तु 'पूर्वादिभ्यो नवभ्यो वा' इति 'जसः शी' (७।१।१७) इत्यत्राऽनु-वर्त्त्य, वाक्यभेदेन व्याख्येयम्। एवं चाऽष्टाध्याय्यां त्रिसूत्री न कार्या। 'व्यवस्थायाम्' इत्यादि तु पाठविशेषणमेवेत्याहुः)।

**न बहु** (व्रीहौ) (१।१।२६)—अयं हि न समासे कृते निषेधः, अन्वर्य-

---

१. 'तथैवास्त्विवति' ख. ग. पाठः।
२. 'भावतात्पर्यं' इत्यारभ्य 'आपत्तेः' इत्यन्तोऽयं क. पाठः।
३. क. कुण्डलितः ख. ग. पाठः।
४. 'यदि तु' इत्यारभ्य 'वदन्ति' इत्यन्तोऽयं क. ग. पाठः।

संज्ञयैव सिद्धेः। न च 'एकद्वा' इति बहुव्रीहावुभयपदार्थप्रधाने'सङ्ख्ययाऽव्यय' (२।२।२५) इति सूत्रकृते उपसर्जनत्वाऽभावेन, तत्र सर्वनामत्वनिषेधार्थं सूत्रम्। समासाऽवयवसमासान्ते कृते विशिष्टस्य सर्वाद्यन्तत्वाऽभावात्। समासान्तानामुत्तरपदावयवत्वन्तु नेति[1] वक्ष्यते। 'अतो बहुव्रीहिशब्दस्य तदर्थे विग्रहवाक्ये लक्षणा, चिकीर्षितपदाध्याहारो वा' इति **वृत्तिकृतः।** अत एव 'बहुव्रीहौ' इति गुरुभूतसप्तमीनिर्देशः। अन्यथा 'न बहुव्रीहिः' इत्येव वदेदित्याशयेन व्याचष्टे—**चिकीर्षित इति**।

**प्रक्रियावाक्ये** इति—अलौकिके इत्यर्थः। न चाऽलौकिकवाक्ये समासाऽऽदिप्रवृत्त्यैकार्थीभावस्यापि तत्रैव कल्पनादुपसर्जनत्वादेव निषेधसिद्धिरिति वाच्यम्। अत्रैका[2]र्थीभावस्याऽऽहार्याऽऽरोपेऽपि, स्वार्थविशिष्टाऽर्थाऽन्तरबोधकत्वरूपोपसर्जनत्वाऽभावादतिभवकानित्यत्रैव प्राप्तस्याऽकचोऽभावार्थं संज्ञानिषेध इत्यत्र तात्पर्यात्। एतेन 'त्वं पिता यस्य' इति विग्रहवाक्ये प्राप्ता संज्ञा निषिध्यते, इत्यपास्तम्। तस्य लौकिकत्वात्। 'प्रक्रियावाक्येऽयं निषेधो न तु लौकिके' इ[3]ति **कैयटोक्तेः।**

नन्वस्तु तत्राऽकच्, अत आह—**स चेति**। अतिकान्त[4] इति। पूर्वोक्तस्य लौकिकवाक्यस्य, समासस्य च दृष्टान्तद्वयमनेनोच्यते (इति[5] न दोषः)।

अकृतव्यूह(प० ५७)परिभाषा त्वनित्यत्वान्न प्रवर्त्तते। तत्र चेदमेव सूत्रं ज्ञापकम्। फलन्त्वतिभवकानिति।

---

१. 'न सार्वत्रिकमिति वक्ष्यते' ख. पाठः।

२. 'अलौकिकविग्रहवाक्ये एकार्थीभावकल्पनात् पूर्वमतिभावकानित्यत्रैव' ग. पाठः।

३. 'इति कैयटविरोधात्। 'एतदर्थके प्रक्रियावाक्ये' इति व्याख्यानन्तु क्लिष्टम्' इति ख. ग. पाठः।

४. इतोऽग्रे—'इदं च समासार्थकथनम्। अकच्प्राप्तिविषयीभूतन्त्वेतन्मूलकमलौकिकं बोध्यम्। तस्य प्रयोगानर्हत्वात् परमस्य प्रयोगः। यद्वा पूर्वोक्तस्य लौकिकवाक्यस्य' इति ग. पाठः। ५. ग. पाठः।

तस्या[1] अभावाच्च । '(अन्तरङ्गा[2]नपि विधीन्' (प०५३) इति न्यायोऽप्यकृतव्यूहपरिभाषाऽन्तर्गत एवेति सोऽपि न प्रवर्त्तते । लुक्स्थानिभूतप्रत्ययनिमित्तकार्यस्यैव तेन बाधाच्च) इत्याहुः ।

**भाष्यकारस्त्विति**—'अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयौ' इतिभाष्योक्तेरिति भावः । न चैवं स्मृतिद्वयप्रामाण्याद् विकल्पोऽस्तु, कथं 'न[3] बहुव्रीहौ' (१।१।२९) इत्यस्य प्रत्याख्यानमत आह—**यथोत्तरमिति** । न[4] चेदं नोदासीनायाः श्रुतेः, स्मृतेर्वा वाक्यम् । येन प्रमाण[5]मिति वाच्यम् । सूत्र[6]कारेण खण्डितप्राचीनऋषिवाक्यानामप्रामाण्य[7]वत् सूत्रकारवचःखण्डनप्रवृत्तभाष्यवार्त्तिकवचनप्रामाण्यात् तदंशे सूत्रकारवचसोऽप्यप्रामाण्यकल्पनौचित्य[8]ात् ।

ए[9]तदेवाऽभिप्रेत्य 'धिन्विकृण्व्योः' (३।१।८०) इति सूत्रे 'किमर्थमत्वं विधीयते, वलोप एवास्तु' इत्याशङ्क्याऽत्वेऽल्लोपे तस्य स्थानिवत्त्वेन गुणाऽभावाय तत् । न च वलोपेऽपि 'न धातु' (१।१।४) इति गुणनिषेधः सिद्ध इति वाच्यम् । तत्प्रत्याख्याने गुणप्राप्तेः' इत्युक्तम् । एतेन सूत्रमतात् प्रत्या-

---

१. 'तस्या अभावाच्चेत्याहुः' क. पाठः ।
२. क. कुण्डलितः ख. पाठः ।
३. 'न बहुव्रीहौ' इत्यस्य प्रत्याख्यानमिति वाच्यम् । भाष्यस्याऽसन्दिग्धत्वेन, सन्दिग्धार्थस्य सूत्रस्याऽन्यथा व्याख्याया उचितत्वात् । इतिहासपुराणाद्यैर्वेदाऽर्थवद् वार्त्तिकभाष्याऽऽदिग्रन्थैः सूत्राऽर्थस्य वर्णयितुं युक्तत्वाच्च । तदेतद् ध्वनयन्नाह—यथोत्तरमिति' इति क. कुण्डलितः पाठः ।
४. 'एतेन नेदमुदासीनायाः' ख. ग. पाठः ।
५. 'प्रमाणं स्यादित्यपास्तम्' ख. ग. पाठः ।
६. किञ्च यथा सूत्रकारेण' ख. ग. पाठः ।
७. 'अप्रामाण्यं कल्प्यते, तथा सूत्रकारवचःखण्डन' ख. ग. पाठः ।
८. 'कल्पनमेवोचितम्' ख. ग. पाठः ।
९. 'एतदेव' इत्यारभ्य 'विपरीतमिति च ध्वनितम्' इत्यन्तोऽयं क. पाठः ।

ख्यानवादिमतं प्रबलमिति ध्वनितम् । एवञ्च तद्भाष्यमूलकमेवेदं 'यथोत्तरम्'इति । किञ्च प्रत्याख्यानवादिसंमतलक्ष्यमेव यथाकथञ्चित् सूत्रमतेऽपि साध्यम्, न तु विपरीतमिति च ध्वनितम् ।

[ वस्तुतस्तु महासंज्ञयैव सिद्धे सूत्रे बहुव्रीहिपदमुपसर्जनोपलक्षणम्, तेनोपसर्जनत्वे जात एव निषेधो न तु ततः प्रागप्यकृतव्यूहपरिभाषया तदभाव इत्येतद्बोधनद्वारा 'अतिभवकान्' इतिरूपसिद्ध्यर्थम् । **प्रत्याचख्या**वित्यस्य च वृत्तिकाराद्युक्तार्थकतया प्रत्याचख्यावित्यर्थ इति न कश्चिद्दोषः ।

**अन्ये** तु 'च्छ्वोः शूठ्' (४।१।१९) इति सूत्रे सतुक्कग्रहणादकृतव्यूहपरिभाषाऽनित्या, तदभावो वा । तद्धि 'प्रष्टा' इत्यादावन्तरङ्गत्वाज्जातस्य तुकः श्रवणं मा भूदिति क्रियते । न च सतुक्कनिर्देशेऽप्यन्त्यस्य स्यात् । अनर्थकेऽलोन्त्यस्य निषेधात् । सतुक्निर्देशसामर्थ्याच्च । न च वाञ्छादेः क्विपि तुग्रहिते शादेशनिवृत्त्यर्थं सतुक्निर्देश इति वाच्यम् । तत्र शादेशयोग्यप्रत्ययपरत्वस्यैवाऽभावात् । अत एव तत्सूत्रे सतुक्कनिर्देशमुक्त्वाऽलोन्त्यस्येत्याशङ्क्य 'सन्निपातग्रहणसामर्थ्यात् सर्वस्य भविष्यति' इत्युक्त्वा 'यद्येवं-वाञ्छतेरप्रत्ययः 'वान्' 'वांशौ' 'वांशः' इति न सिद्ध्यति । 'यथालक्षणमप्रयुक्ते' इति भाष्यं सङ्गच्छते । 'अप्रयुक्तत्वेन लक्षणस्याऽयमविषयः' इति तदर्थः । 'रात्लोपः' (६।४।२१) इति सूत्रे तु 'न ध्याख्या' (८।१।५७) इति नत्वनिषेधाल्लिङ्गात्, 'मूर्तौ घनः' (३।२।७७) इत्यादिनिर्देशाच्च केवलस्यैव छस्यानुवृत्तिः । एतेन 'छकारान्तरं प्रश्लिष्य, समाहारद्वन्द्वगर्भं द्वन्द्वञ्चाऽऽश्रित्याऽऽदेशोऽपि शद्वयं प्रश्लिष्य, यथासङ्ख्यमाश्रित्य, वाञ्छतेः क्विपि शादेशो भवत्येव' इति हरदत्तोक्तमपास्तम्, भाष्यविरोधात्' इति वदन्ति । तन्मते एकस्याऽर्थस्याऽनेकधा बोधनायेदं सूत्रमिति बोध्यम् ।

**परे** तु 'कंसं घातयति' इत्यादौ क्वल्लुकि, तन्निमित्तकादेशनिवृत्तये

---

१. क. कुण्डलितोऽयं 'दिक्' (४२९ पृष्ठे) इत्यन्तो ख. ग. पाठः । 'एवञ्च महासंज्ञयैव' ग. पाठः । २. 'तदभावो वा' इति क. ग. पाठः ।

३. इत आरभ्य 'मञ्जूषायां विस्तरेण प्रतिपादितम्' (४२८ पृष्ठे) इत्यन्तोऽयं ख. ग. पाठः ।

क्रियमाणं 'प्रकृतिप्रत्ययापत्ति'वचनं तदनित्यत्वे ज्ञापकमिति वदन्ति । तच्चिन्त्यम् । तत्र सन्नियोगशिष्ट(प० १७)परिभाषाप्राप्त्या, तदनित्यत्वज्ञापनस्य तेनौचित्येऽप्येतदनित्यत्वज्ञापने मानाभावात् । न च संनियोगशिष्टपरिभाषा एतदन्तर्भूतैव । मानाऽभावात् । किञ्च 'पञ्चेन्द्रः' इत्यादौ, प्रकृते च प्रत्ययलक्षणेन प्रत्ययसत्त्वादकृतव्यूहाः (प० ५७) इत्यस्याऽप्रवृत्तेः । 'न लुमता' (१।१।६३) इति निषेधस्तु न । प्रत्यये परतो जायमानपूर्वकार्य एव तत्प्रवृत्तेः ।

वस्तुतस्तु 'पुष्ययोगं जानाति, पुष्येण योजयति' इत्येतत्साधक 'पुष्ययोगे ज्ञी'ति वचने भाष्यकृत्कृतप्रकृतिप्रत्ययापत्त्यनुवृत्तिस्तदनित्यत्वज्ञापिका बोध्या । यत्तु[1] 'बहुव्रीहौ सर्वनामता न । प्रियविश्वाय । सूत्रमते बहुव्रीहौ न सर्वनामता । भाष्यमते गौणत्वमात्रे । 'त्वत्कपितृकः' 'मत्कपितृकः' इत्यत्र समासावयवयोर्युष्मदस्मदोः सर्वनामत्वादनङ्गकार्यत्वेनाऽकच् स्यात्, स मा भूत् । क एव यथा स्यात्' इत्यर्थं सूत्रम्[3]' इति **न्यासकृन्मत**म्' इति । तन्न[2] । बहुव्रीह्यवयवानामुपसर्जनतया (सर्वादिबहिर्भावे) तदन्तस्य तदवयवस्य चाऽप्राप्त्या,'सूत्रमते' इत्यादेरसङ्गतत्वात् । तस्य हि बहुव्रीहेस्तदवयवानां वेति द्वेधा व्याख्यानसम्भवः । अन्वर्थसंज्ञया गौणप्रतिषेधस्य सूत्रसंमततया, वचनाऽऽरम्भेण वार्त्तिकसंमततया च, विशिष्य 'भाष्यमते' इत्यस्याऽसङ्गतत्वाच्च ।

एतेन 'समासाऽवयवयोः सर्वनामत्वात्' इत्याद्यपास्तम् । स्वाऽर्थविशिष्टाऽन्यपदार्थवृत्तित्वेन गौणत्वात् । एतेन 'समुदायो हि विशेषेऽवतिष्ठते, पूर्वपदन्तु सर्वार्थत्वादनपेतमेव, समुदाये एकार्थीभावाऽङ्गीकारेण समुदायस्य क्रान्ताद्यर्थोपसर्जनत्वेऽप्यवयवस्य तत्त्वे मानाऽभावात्' इत्यपास्तम् । (समुदायस्य[4] प्रत्येकाऽनतिरिक्तत्वात् । अत एवाऽनेकसुबन्तस्याऽन्यपदार्थवृत्तित्वाद् बहुव्रीहिः सङ्गच्छते) अवयवाऽर्थस्याऽप्यन्यपदार्थविशेषणतयैवोपस्थि-

१. 'एतेन' ग. पाठः ।　　३. ग. पाठः ।

२. 'इत्यपास्तम्' ग. पाठः ।　　४. 'सङ्गच्छते' इत्यन्तोऽयं ग. पाठः ।

त्योपसर्जनत्वाऽक्षते:[1]। इ[2]तराऽर्थविशेषणत्वेनोपस्थितिविषयत्वस्यैवोपसर्जन-पदार्थत्वात्। अन्यपदार्थोपसर्जनीभूते निष्कृष्याऽज्ञाताद्यर्थविवक्षायाः कर्त्तु-मशक्यत्वेन, समासे कृतेऽकचः प्राप्त्यभावाच्च)। किञ्चैवं तुल्यरीत्योत्तरपद-स्याऽपि सर्वाऽर्थत्वाऽनपायेन सर्वनामत्वात्। 'अतिसर्वाय' इत्यत्र स्मायादेशो दुर्वारः। सर्वनामसंज्ञायां तदन्तग्रहणात्।

न च 'उत्तरपदे एव लक्षणा, पूर्वपदं तात्पर्यग्राहकम्' इतिमते पूर्वपदे सर्वाऽर्थवाचकत्वमस्ति, नोत्तरपदे इति, नाऽत्र दोष इति वाच्यम्। तत्र मते पूर्वपदं निरर्थकम्, स्वाऽर्थप्रतिपादकं वा ?। नाऽऽद्यः। नैरर्थक्येन सर्वाऽर्थ-वाचकत्वाऽभावादेवाऽप्राप्तेः। नाऽन्त्यः। पूर्वपदे विशेषणाऽन्वयाऽऽपत्तेः। ('[3]पूर्वपदं तात्पर्यग्राहकम्' इत्युक्तेरसङ्गताऽऽपत्तेश्च। जहत्स्वार्थायां वृत्तौ तदसम्भवेनेष्टापत्तिः कर्त्तुमशक्या)। विनिगमनाविरहेण पदद्वयेऽपि लक्ष-णाया युक्तत्वाच्चेति **समासवादे मञ्जूषायां** विस्तरेण प्रतिपादितम्। एकार्थीभाववादिभिस्तथा वक्तुमयोग्यत्वाच्च। एवं च तद्धटकाऽवयवाना-मपि सर्वनामत्वाऽभाव एवोचितः। अनयैव दिशाऽन्येऽपि तदीयानां व्या-ख्यानाऽऽभासा निराकार्याः।

ए[4]तेनाऽवयवानां समुदायार्थं प्रत्युपसर्जनत्वेन समुदायनिष्ठसंज्ञाया-मनिमित्तत्वेऽप्यवयवानां स्वार्थमात्रप्रधानत्वेन स्वार्थं प्रत्यनुपसर्जनतया, तन्मात्रनिष्ठा संज्ञा भवत्येव। 'अतिसर्वाय' इत्यत्र तु सर्वनाम्नोऽङ्गात् परस्य स्मायादिविधानेनाऽवयवस्य सत्यपि सर्वनामत्वे दोषाऽभावः। ङेनिरूपिताङ्गस्याऽसर्वनामत्वात्। इदमेव ध्वनयितुमनङ्गकार्यत्वादित्युक्त-

---

१. 'अक्षतेश्च' ग. पाठः।

२. 'इतरार्थं' इत्यारभ्य 'प्राप्त्यभावाच्च' इत्यन्तोऽयं ग. नास्ति।

३. 'कर्त्तुमशक्या' इत्यन्तोऽयं ग. पाठः।

४. 'एतेन' इत्यारभ्य 'इत्यपास्तम्' इत्यन्तः क. ग. पाठः।

मित्यपास्तम् । ईदृशार्थस्य[1] सञ्ज्ञाप्रवृत्तावनिमित्तत्वात् । न चार्थान्तर-सङ्क्रमात् प्राक् प्रवृत्ता संज्ञाऽर्थान्तरोपक्रमे सति गताऽतो न 'अतिसर्वाय' इत्यादौ दोषः । अतिसर्वशब्दे स्मायाद्यर्थं पुनः संज्ञा तु दुर्लभा । संज्ञो-पसर्जनानां तन्निषेधात् । पाठात् पर्युदासेन तदन्तग्रहणेनाऽपि न संज्ञा । अर्थाऽन्तरसंक्रमात् पूर्वं तु स्मैभावस्य नैव प्रवृत्तिः । अकच्प्रवृत्तिस्तु ततः प्रागस्त्येवेति तन्निवृत्तयेऽकृतव्यूह(प० ५७)परिभाषाऽनित्यत्वबोधनद्वारा इदं सूत्रं सार्थकमित्याशय इति वाच्यम् । 'अनङ्गकार्यत्वेन' इति हेतूपन्या-सवैयर्थ्याऽऽपत्तेः । तस्य हि पूर्वाऽपरन्यासग्रन्थपर्यालोचनयाऽङ्गसंज्ञा-ऽनपेक्षत्वेनेत्येवाऽर्थो लभ्यते । 'स्मैप्रभृतीनामङ्गकार्यत्वाद् विश्वादिशब्दा-नामनङ्गत्वात्' इत्यादिर्हि **न्यासग्रन्थो मनोरमायां** द्रष्टव्यः । एतेन 'अङ्ग-प्रधानं बाध्यम्, तद्विरुद्धमनङ्गं बाधकम् । एवं च कप्रत्ययाऽपवादत्वादक-जिति 'अनङ्गकार्यत्वेन' इत्यस्याऽर्थः' इत्यपास्तमिति दिक्[2] ] ।

**तदनुगुणानामिति**—प्राधान्येन[3] स्वविषय-प्रसिद्ध-सर्वाऽर्थवाचकत्व-समानाऽधिकरण-सर्वनामपदत्वेन बोधकमहासंज्ञया सर्वाऽर्थोपस्थापक-सर्वादीनामनुकरणाऽऽवश्यकत्वेनेतरेषामनुकरणे मानाऽभावः । (तत्र[4] संज्ञायास्तत्त्वाऽभावः स्पष्ट एव । उपसर्जनस्याऽपि न तद्वाचकत्वम्) । नाम-पदस्वारस्येन प्राधान्येन तदुपस्थापकत्वस्य[5] लाभात् । उपसर्जनं हीतर-

१. 'ईदृशार्थस्य संज्ञाप्रवृत्तावनिमित्तत्वाच्च' इति ग. पाठः ।

२. 'वस्तुतस्तु' (४२६ पृष्ठे) इत्यारभ्य 'दिक्' इत्यन्तोऽयं क. कुण्डलितः ख. ग. पाठः ।

३. एतत्स्थाने—'विशेषणतयोपस्थितस्याऽप्यर्थस्य महासंज्ञाकरणद्वारा पृथ-गुपादानादितराऽनुपसर्जनीभूतप्रसिद्धप्रवृत्तिनिमित्त(क)कार्यबोधकानामनु-करणावश्यकत्वेनेतरेषामनुकरणे मानाऽभावेन, तेषामेव गणेऽनुकरणा-दित्यर्थः । अत्र च प्रमाणम्' (४३० पृष्ठे) इति ग. पाठः ।

४. अयं पाठः क. नास्ति ।

५. 'तदुपस्थापकस्यैव' ख. पाठः ।

विशेषणतयैव स्वाऽर्थोपस्थापकमिति भावः। पूर्वादिसङ्ग्रहाय[1]'स्वविषय'इति। 'अभिव्यक्त' इति न्यायेन प्रसिद्धेत्यस्य लाभः। तेन संज्ञाव्यावृत्तिः। अत्र च प्रमाणं 'पाठात् पर्युदासः, संज्ञोपसर्जने च विशेषेऽवतिष्ठेते' इत्यादि भाष्यमेव। 'वि[2]शेषे' इत्यस्योपसर्जनांऽशे विशेषणे, अप्रधाने इत्यर्थः। अत एव 'भूतपूर्व आढ्य आढ्यपूर्वः' इत्यत्राऽपि न। पूर्वत्वस्याऽऽढ्यविशेषणत्वेनोपसर्जनत्वात्। स्पष्टं चेदं 'न बहुव्रीहौ' (१।१।२७) इति सूत्रे **भाष्यकैयटयोः।**

सर्वादिसूत्रस्याऽयमर्थः–'सर्वाऽऽदीनि, तदन्तानि च प्राधान्येन प्रसिद्धसर्वाऽर्थवाचकत्वसम[3]ानाऽधिकरणसर्वनामपदवन्ति'इति। तत्र 'प्राप्ताऽप्राप्तविवेक'न्यायेन सर्वनामपदवत्त्वांऽशे एव विधिः। सर्वाऽर्थवाचकत्वस्य लोकतः सिद्धत्व[4]ात्। (स[5]र्वार्थवाचकत्वं च प्राधान्येन बुद्धिस्थत्वाद्यनुगतीकृताऽनेकधर्मवद्बोधकत्वम्। दिग्देशकालाद्यनेकबोधकत्वात् पूर्वादिष्वपीदमक्षतमेव। सर्वाद्यन्ते त्ववयवनिष्ठसर्वाऽर्थवाचकत्वस्य समुदाये आरोपेण तत्सिद्धिः। तत्फलन्तु 'परमभवकाद्' इत्यादिसिद्धिः। 'अतिसर्वाय' इत्यादौ त्ववयवस्योक्तसर्वार्थवाचकत्वाऽभावान्न समुदाये तदारोप इति न दोषः। येषान्तूक्तसर्वाऽर्थवाचकत्वाऽसम्भवस्तेषामपि तादृशसर्वाऽऽदिसाहचर्यात् संज्ञोपसर्जनभिन्नानामेवाऽनुकरणमिति न दोषः)। एतेनाऽन्वर्थसंज्ञाक्षिप्तसर्वा-

---

१. 'संज्ञाव्यावृत्तिः' इत्यन्तः क. पाठः २. 'इत्यर्थः' इत्यन्तो ग. नास्ति।

३. 'सर्वार्थवाचकत्वविशिष्टसर्वनामपदवन्तीति। वैशिष्ट्यञ्च-सर्वाद्यंशे सामानाधिकरण्येन। तदन्तांशे स्वाश्रयघटितवृत्तितासम्बन्धेन। न तूभयत्रापि सामानाधिकरण्येन'—इति ग. पाठः।

४. इतोऽग्रे—'यद्यपि सर्वनामपदेन योगरूढ्या सर्वादेस्तदन्तस्य च बोधनम्, तथापि तदन्तांशे उपस्थितस्य सर्वार्थवाचकत्वरूपयोगार्थो विशेषणीभूतसर्वाद्यंशे एवाऽन्वेति। अत एव 'द्वन्द्वे च' (१।१।३१) इति सार्थकम्। एतेन सर्वाद्यन्तस्य 'वर्णाश्रमेतराणाम्' इत्यादौ सर्वार्थवाचकत्वाऽभावादेवाऽप्राप्तौ 'द्वन्द्वे च' इत्यादीनां वैयर्थ्यमित्यपास्तम्'–इति ग. च. पाठः।

५. क. नास्ति।

ऽर्थवाचकस्य विशेष्यतया, 'सर्वादीनि' इत्यस्य तद्विशेषणत्वात् तदन्तविधिः' इत्यपास्तम् । एकपदोपस्थाप्ययोरर्थयोः परस्परमुद्देश्यविधेयभावेनाऽन्वयस्याऽव्युत्पन्नत्वात् ।

**सन्निवेशादिति**—तदनुमानादित्यर्थः । अत्र हेतुः—**महासंज्ञाकरणेनेति** । महासंज्ञया तेषां तदर्थवत्त्वाऽनुमानेऽतिरिक्ताऽर्थाऽनुकरणे मानाऽभावादिति भावः । अत्रोपसर्जनपदेन कृत्रिमम्, अकृत्रिमं च गृह्यते । महासंज्ञामाश्रित्य भाष्ये वार्त्तिकप्रत्याख्यानात् । अ[1]त एव 'नञ्' (२।२।६) सूत्रे नञ्समासस्य पूर्वपदाऽर्थप्राधान्ये 'असः' इत्यादावत्वसत्वयोरनापत्ति**राकरोक्ता** सङ्गच्छते । एतेन 'तदोः सः सौ' (७।२।१०६) इति सूत्रेऽनन्त्ययोरिति न वक्तव्यम् । एवं वक्ष्यामि 'तदोः सः सौ' । (ततः) 'अदसः' । अदसश्च दकारस्य सो भवति' इति । इदमिदानीं किमर्थम् ? । नियमाऽर्थम्—'अदस एव दकारस्य, नान्यस्य दकारस्य' इति । यदि नियमः क्रियते द्वीयतेरप्रत्ययः, 'द्वः' इति प्राप्नोति । 'स्व' इति चेष्यते । 'यथालक्षणमप्रयुक्ते' इति भाष्यात् कृत्रिमोपसर्जने एव निषेधः । अन्यथा सिद्धान्तेऽप्युपसर्जनत्वादत्वसत्वयोरप्राप्तौ 'इष्यते' इत्युक्तिरसङ्गतैव स्यात्' इति परास्तम् । न्या[2]ययुक्ताऽनेकभाष्यविरोधेन च[3]ाऽस्यैकदेश्युक्तित्वात् ।

**संज्ञाकार्यमिति**—सर्वनामत्वप्रयुक्तं स्मायादिकमित्यर्थः । **अन्तर्गणेति**—'अदड् डतरादिभ्यः' (७।१।२५) 'त्यदादीनामः' (७।२।१०२) 'तदोः सः सौ' (७।२।१०६) इत्यादिकमित्यर्[4]थः ।

---

१. 'अत एव' इत्यारभ्य 'सङ्गच्छते' इत्यन्तः क. ख. पाठः ।

२. एतत्स्थाने —'सूत्रार्थप्रतिपिपादयिषाप्रवृत्तेन पूर्वभाष्येणाऽस्यैकदेश्युक्तित्वबोधनात् । सर्वनामसंज्ञासूत्रादौ 'अतिसर्वाय' 'अतितत्' इत्याद्युदाहरणपरभाष्याच्च' इति ग. पाठः ।

३. चकारः क्वचिन्नास्ति ।

४. इतोऽग्रे—'अतिसर्वायेति । न च सर्वनामसंज्ञाविषयेऽकृतव्यूह (पृ० ५७)

**तृतीयासमासे** (१।१।३०)—अयमपि सर्वाद्यन्ततृतीयासमासस्यैव निषेधो नाऽवयवानाम्। सर्वाऽऽदिसूत्रोक्तयुक्तेः। ननु 'तृतीयया' इत्येव सूत्रमस्तु। (पूर्वोत्तरसाहचर्यात् समास एव ग्रहीष्यते)। एकदेशाऽनुवृत्त्या 'दिक्समासे' (१।१।२८) इत्यत्रत्यं 'समास'ग्रहणमनुवर्त्त्यं वा। एवं च 'समासे' इति व्यर्थमिति चेत्। सत्यम्। 'समासे' इति योगविभागार्थं तत्। तत्र च सामर्थ्यात् समासाऽर्थकं वाक्यं गृह्यते। तच्च नाऽलौकिकम्। अदन्ते काऽकचोरविशेषात्। समासस्वरेण शिट्स्वरस्य वाधाच्च। हलन्ते तु नैतत्सूत्रप्रवृत्तिरित्यनुपपदमेव वक्ष्यते। इत्यभिप्रेत्याह—**तृतीयासमासार्थेति**। 'क्वा[2]पि स्थितस्य सर्वादिः संज्ञा न' इत्यर्थः। तृतीयासमासश्चाऽत्र 'पूर्वसदृश' (२।१।३१) इति पूर्वघटितवाक्यविहित एव गृह्यते। यदन्तत्वमादाय स[3]र्व-नामसंज्ञाप्राप्तिस्तमुच्चार्य विहितत्वेन, तृतीयापदमुच्चार्य च विहितत्वेन प्रतिपदोक्तत्वात्। वाक्यमपि तत्सम्बन्ध्येव। प्रत्यासत्तिन्यायात्। ध्वनितं चेदमत्रैव भाष्ये।

तेन 'करोति'द्वारा सामर्थ्ये 'मासेन कृतः पूर्वो मासपूर्वस्तस्मै 'मास-पूर्वस्मै' इति समासे, तत्सम्बन्धिनि 'मासकृताय पूर्वस्मै' इति वाक्ये च निषेधो न। 'पूर्वसदृश' (२।१।३१) इति सूत्रन्तु हेत्वादितृतीयायां परस्परा-ऽन्वये चारितार्थ्येन 'करोति' द्वारके सामर्थ्ये न प्रवर्त्तते। 'तृतीया तत्कृत' (२।१।३०) इति तु 'कृत'ग्रहणसामर्थ्यात् 'करोति'द्वारा सामर्थ्ये प्रवर्त्तते'

---

परिभाषाया अप्रवृत्तेः पूर्वमुक्तत्वादत्रापि पूर्वं सर्वशब्दे सर्वनामसंज्ञायाः प्रवृत्तेस्तदन्तविधिना स्मायादिकं दुर्वारमिति वाच्यम्। 'सर्वनाम्नो विहि-तस्य' इति विहितविशेषणाश्रयणात्। समुदायस्य तु न सर्वनामत्वम्। अनुपसर्जनसर्वार्थवाचकान्तत्वाऽभावात्। एवञ्च कार्याऽभावादपि न पूर्वं संज्ञायाः प्रवृत्तिरित्याहुः' इति ग. पाठः। क. कुण्डलितः।

१. क. कुण्डलितो ग. पाठः। २. 'नेत्यर्थः' इत्यन्तोऽयं क. पाठः।

३. 'यस्य सर्वनामसंज्ञाप्राप्तिः' ग. पाठः।

इति समासे निरूपयिष्याम: । ('स[1]र्वकेण सदृश:' इत्यत्राऽपि न । य[2]स्य सर्वनामसंज्ञा तमुच्चार्याऽविहितत्वात् । समासस्यैवाऽनेन निषेधेनाऽस्य च समासस्य सर्वाद्यन्तत्वाऽभावेन तत्प्राप्त्यभावाच्च[3] । तदर्थवाक्येऽपि न । प्रत्यासत्त्या यत्र समासे निषेधस्तदर्थवाक्ये एव प्रवृत्त्यङ्गीकारात् ।

एतेन 'कर्त्तृकरणे' (२।३।३२) इति समासे 'त्वयका कृतम्' इत्यत्र नेति प्रतिपदोक्तसमासग्रहणफलं वदन्त: परास्ता[4]:) । एवं 'मासाऽवराय' इत्यप्युदाहरणं बोध्यम् । तत्राऽपि 'अवरस्योपसङ्ख्यानम्' (वा० २।१।३१) इति प्रतिपदोक्त: समास इति दिक् ।

(द्व[5]न्द्वे **च** (१।१।३१)—अयं निषेध इतरेतरयोगे एव, न समाहारे । तत्र समाहारस्य विशेष्यत्वेन उपसर्जनत्वादेवाऽप्राप्ते: । अत एव वृक्षश्च इतरश्चेतिविग्रहे 'वृक्षेतरम्' इत्यादावदड् नेत्याहु:) ।

**समुदायस्येति**—अत्र यद् वक्तव्यं तत् सर्वादिसूत्रे एवोक्तम् ।

**सुट्प्रसङ्ग इति**—'वर्णाश्रमेतराणाम्' इत्यादाविति भाव:। न च निषेधसामर्थ्यम् । अनाङ्ग-त्र-तसिलादिव्यावृत्त्या चारितार्थ्यात् ।

**जसाधारमिति**—जस इ:-जसिस्तस्मिन्नित्यर्थे सौत्र: सप्तम्या लुगित्यर्थ इति भाव: । यद्वा 'जसि' इत्याधारसप्तमी । यद्यपि शीभावेन जस् अपहृतस्तथाऽपि औपचारिकमाधारत्वमिति भाव: । **नाऽकजिति**—समुदायनिष्ठकुत्साबोधकाऽकज्नेत्यर्थ: । (अ[6]वयवस्य तु सर्वनामत्वेऽप्येकार्थीभूतस्य कुत्साऽऽदिभिर्निष्कृष्य सम्बन्धो वक्तुमशक्य इति भाव: । यदा तु वर्णश्चा-

१. क. कुण्डलित: प्राय: ख. ग. च. पाठ: ।

२. अविहितत्वात्' इत्यन्त: क. नास्ति । ख. ग. च. पाठ: ।

३. चकार: क. नास्ति ।

४. इतोऽग्रे—'न च 'पूर्व: समासे' इत्येव सूत्रमस्त्विति वाच्यम् । 'मासावराय' इत्यादौ निषेधाऽनापत्ते: । तत्र हि–'अवरस्योपसंख्यानम्' (वा० २।१।३१) इति प्रतिपदोक्त: समास इति दिक्'–इति ग. च. पाठ: ।

५. ग. पाठ: । ६. ख. ग. च. पाठ:, क. नास्ति ।

ऽऽश्रमश्चेतरकश्चेति द्वन्द्वः क्रियते, तदा 'वर्णाश्रमेतरके' 'वर्णाश्रमेतरकाः' इति भवत्येव)।

**प्रथम** (१।१।३३)—अत्र सूत्रे 'न' इति न सम्बध्यते। प्रथमादिषु प्राप्त्यभावात्[1]।

'**जसि**' इत्यर्थाऽधिकाराज्जसाधारे शीभावे एवाऽयं विकल्प इत्याशयेनाह—**जसः कार्यं प्रतोति**। [2]**तयः प्रत्यय इति**—'सङ्ख्याया अवयवे तयप्' (५।२।४२) इति। **तदन्ता इति**—अत्र हेतुः प्रागुक्त एव। **द्वितीयतृतीय**शब्दौ 'द्वेस्तीयः' (५।२।५४) 'त्रेः संप्रसारणं च' (५।२।५५) इति साधू। इदं च वार्त्तिकम् अन्प्रत्ययान्ते न प्रवर्त्तते। तीयशब्दस्य लाक्षणिकत्वात्। तेन 'द्वितीयाय भागाय' इत्येवाद्युदात्तस्य। अनभावे तु 'स्मै' भवत्येव। अयं च विकल्पो 'विभाषा जसि' (१।१।३२) इतिसाहचर्यात् तत्रैवोपसङ्ख्यातत्वाच्च ञित्प्रत्ययकार्ये एव, न त्वकचीत्याहुः।

**जराया (ज)** (७।२।१०१)—'अष्टन आ' (७।२।८४) इत्यतो 'विभक्तौ' इत्यनुवृत्तस्य 'अचि र ऋतः' (७।२।१००) इत्यतोऽनुवृत्तेनाऽचीत्यनेन विशेषणात् तदादिविधिरित्याशयेनाऽऽह-**अजादाविति**। तेन 'जराभ्याम्' 'जराया इदं जारम्' इत्यादौ न। न च 'जरसौ' इत्यादौ जरसादेशाऽप्रसङ्गः। विभक्तेरज्रूपत्वेनाऽजादित्वाऽभावादिति वाच्यम्[3]। व्यपदेशिवद्भावेन सिद्धेः। एवं चाऽऽद्यन्तवत्सूत्रं न कार्यम्। इदमेव ध्वनयितुमिह तदनुपन्यासः। न च जराया असुङेवाऽस्तु, किमनेन जरसादेशविधानेनेति वाच्यम्। प्रतिपत्तिलाघवाऽनुरोधेनाऽर्द्धमात्रालाघवे[4]ऽनभिनिवेशात्। (जरा[5]शब्दात् तत्करोतीतिण्यन्ताट्टिलोपे, क्विपि, णिलोपे, एकदेशविकृत(पृ० ३७)-

---

१. इतोऽग्रे—'नेमशब्दे नित्यं प्राप्ते, इतरेष्वप्राप्ते उभयत्र विभाषेयम्'—इति ग. पाठः। २. 'तयप्' ख. पाठः।

३. इतोऽग्रे–'येन विधिः' इत्यत्र हि स्वमिति वर्त्तते। तच्च षष्ठ्या विपरिणम्यते। एवञ्च तदपवादभूतायां 'यस्मिन्विधिः' इत्यस्यां तत्सूत्रपठितायां तदनुवृत्त्यैव सिद्धेः। व्यपदेशिवद्भावेन सिद्धेश्च' ग. पाठः।

४. 'लाघवेऽनभिनिविष्टं सूत्रकृतेत्यन्ये' ग. पाठः।

५. ग. च. पाठः। क. कुण्डलितः।

न्यायेन जराशब्दत्वाद् दोषापत्तेः। णिलोपस्य स्थानिवत्त्वन्तु न। 'क्वौ लुप्तम्' (वा० ६।४।८५) इति निषेधात्। अत्र चाऽस्याश्रयणे, 'अभिव्यक्त-पदार्था ये' इत्यस्याऽनाश्रयणे च जरसादेशकरणमेव प्रमाणमित्याहुः)।

**पदाङ्गाधिकारे** इति (पृ० २९)-पदमङ्गं च विशेष्यम्। विशेषणेन च तदन्तविधिरिति भावः। (अत्र[1] च 'युजेरसमासे' (७।१।७१) इत्यसमासग्रहणं ज्ञापकम्)। 'येन विधिः' (१।१।७२) इत्यस्याऽयं प्रपञ्चः' इति 'येन विधिः' इत्यत्रैव भाष्ये स्पष्टम्[2]।

अत एव 'तदुत्तरपदस्य' इति पाठेऽपि उत्तरपदशब्दो न रूढः, किन्तु यौगिकः। तेन 'परमाऽतिमहान्' 'बहुजरसौ' इत्यादिसिद्धिरित्याहुः।

'अत्र 'पद'शब्देनोत्तरपदाऽधिकारो गृह्यते। तत्रैव भाष्ये उदाहरणात्' इति **कैयटः**। 'केवलपदाऽधिकारोऽपि' इत्यन्ये। इदमपि तत्सूत्रशेषे भाष्ये ध्वनितं **कैयटेन** च स्पष्टमुक्तम्।

नन्वनेकाल्त्वादुपसर्गविशिष्टस्य जरसादेशः स्यादत आह-**निर्दिश्य-मानस्येति** (पृ० १२)—'षष्ठी स्थानेयोगा' (१।१।४७) इति सूत्रमावर्त्तते। द्वितीयस्याऽयमर्थः—'षष्ठयन्तमुच्चार्यमाणमेव स्थानेन युज्यते, न प्रतीय-मानम्' इति। तेनेदं सिद्धमिति भावः।

नन्वयम् 'जर'शब्दो,[1] न 'जरा'शब्दोऽत आह—**एकदेशेति। अनन्य-त्वादिति**—छिन्नपुच्छे शुनि श्वत्वावच्छिन्नैकदेशे पुच्छे पुच्छत्ववच्चाऽत्राऽपि

---

१. ग. च. पाठः।

२. इतोऽग्रे-'न च येन विधिरितिशास्त्रबलात् तदन्तस्य वृत्योपस्थितत्वेपि 'जरारूपाऽङ्गस्य स्थाने' इत्यर्थमुपजीव्यैव तस्य प्रवृत्त्या, तदविरोधेना-वयवद्वारा निर्जरादीनां स्थानित्वकल्पनेनापि तदुपपत्त्याऽधिकस्य स्था-नित्वे मानाऽभाव इति न्यायसिद्धमिदमिति वाच्यम्। 'णचः स्त्रियामञ्' (५।४।१४) इत्यादौ 'णजन्तात् प्रातिपदिकात्' इत्यर्थमुपजीव्यैव 'णज-न्तान्तात्' इत्यर्थस्य प्रवृत्त्या, तत्राप्यवयवद्वारैव णजन्तान्तस्य प्रकृतित्वात् 'व्यवक्रोशी' इत्यस्याऽप्यापत्तेः' इति ग. च. पाठः।

जराशब्दत्वमिति भावः। 'स्थानिवत्सूत्रन्तु यत्राऽर्द्धं विकृतम्, ततोऽप्यधिकम्, सम्पूर्णं वा, तत्र जातिव्यञ्जकभूयोऽवयवदर्शनाऽभावेन तत्त्वाऽप्रतीतावारोपेण कार्यसिद्ध्यर्थम्, विकृताऽवयवत्वप्रतीत्यर्थं च। प्रकृते[1] त्विदं स्थानिवत्त्वोपलक्षणम्। (इदमेव ध्वनयितुमनन्यवत्त्वादिति वतिघटितं नोक्तम्। वतिघटितपाठेऽपि अन्यवन्नेत्यर्थः। तत्सादृश्यनिषेधे तत्त्वनिषेधस्त्वर्थात् सिद्ध इति बोध्यम्)। नन्वेकदेशविकृत(प० ३७)न्यायेन जराशब्दत्वेऽपि, जरशब्दस्य निर्दिश्यमानत्वाऽभावात् कथमादेश इति चेन्न। स्थानिबुद्ध्यैव कार्यप्रवृत्त्या निर्दिश्यमानस्येतिपरिभाषाबाधाऽभावात्। 'येन विधिस्तदन्तस्य' (१।१।७२) इत्यस्य तु संज्ञासूत्रत्वात् सूत्रस्थजराशब्दो जराशब्दाऽन्तपरः[3], इत्यर्थपरत्वम्। एवं च तदन्ते आदेशप्रवृत्तौ परिभाषाविरोधः स्पष्ट एव[4]।

एवं 'यदागमाः'(प० ११) इति बोधितस्याऽप्यादेशे निवृत्त्यभावः। एतन्न्यायबलात्। अत एव 'हुझल्भ्यः' (६।४।१०१) इति धेः 'रुदिहि' इत्यादौ 'निर्दिश्यमानस्य' (प० १२) इति परिभाषया भाष्यकारैर्निवारणं कृतम्[5]।। न च 'अस्य च्वौ' (७।४।३२) इत्यादौ दीर्घादीनामादेशाऽनापत्तिः,

---

१. 'प्रकृते त्विदं स्थानिवत्त्वोपलक्षणम्' इति क. पाठः, ख. ग. च. नास्ति।

२. ग. पाठः।

३. 'परोऽपीत्यर्थपरत्वम्' ख. ग. च. पाठः।

४. इतोऽग्रे—'श्रूयमाणवर्णातिरिक्तवर्णस्थानित्वबोधकशास्त्रसहकृतलक्ष्यसंस्कारकवाक्ये स्थानित्वेन बोधितस्य श्रूयमाणातिरिक्तवर्णस्यादेशेन निवृत्त्यभावः' इत्यर्थस्य तेन बोधनात्। अत एव 'यदागमाः' (प० ११) इतिबोधितवर्णस्याप्यादेशेन निवृत्त्यभावः। अत एव 'पचेयुः' इत्यादौ न पररूपम्' इति ग. पाठः।

५. इतोऽग्रे–'न च 'स्वाङ्गमव्यवधायकम्' इतिन्यायेन इकाररहितहेरादेशो दुर्वारः। तन्न्याये मानाऽभावाद्। आगमविशिष्टस्य तद्ग्रहणेन ग्रहणस्यैव तद्बीजत्वाच्च' इति ग. च. पाठः।

तेषां निर्दिश्यमानत्वाऽभावादिति वाच्यम्। जातिपक्षे दोषाऽभावात्[1]। किञ्च[2] 'न भूसुधियोः' (६।४।८५) इतिनिषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानकार्यबोधनान्न दोषः।

अनया च सह स्वस्वनिमित्तसन्निधापितानाम् 'अलोन्त्यस्य' (१।१।५२) इत्यादीनां समावेश एव, न बाध्यबाधकभावः, विरोधाऽभावात्। नाऽप्यङ्गाऽङ्गिभावः, उभयोरपि परार्थत्वेन, तदयोगात्। यत्तु 'आदेः परस्याऽलोन्त्यस्येत्येतावेतद्बाधकौ' इति। तन्न। 'उदःस्थास्[1] (८।४।६१)सूत्रे भाष्यकारैरस्याः सञ्चारितत्वात्। बाधकत्वे मानाऽभावाच्च[3]। नाऽप्येत[4]योरियं बाधिका। एतयोर्निर्विषयत्वप्रसङ्गादिति विंशतीति सूत्रे **कैयटः**।

इयं चाऽवयवषष्ठीविषयेऽपि प्रवर्त्तते। अत एव 'तदोः सः सौ' (७।२।१०६) इति सत्वम् 'अतिस्यः' इत्यत्रोपसर्गतकारस्य नेति स्पष्टम् 'पादः पत्' (६।४।१३०) इति सूत्रे भाष्ये। अनेकाल् (१।१।५५) सूत्रे सर्वश्चैतत्परिभाषाबोधित एव गृह्यते[5] इति दिक्।

'निर्जरसा'[6] इत्यादौ 'स्वादिषु' (१।४।१७) इति पदत्वे रुत्वं न, भत्वेन

---

१. इतोऽग्रे--'किञ्च 'रीङृतः (७।४।२७) इत्यादौ रीङादीनां ङित्करणेनाऽस्या अनित्यतया क्वचिद् वर्णग्रहणेऽप्रवृत्तेः। अत एव 'गम्लृ'शब्दात् क्यचि 'गम्रीयते' इत्यादौ रीङादेशसिद्धिः। एतेनेगागमेन यणा रूपसिद्धौ रीङादेशविधानं व्यर्थम्' इत्यपास्तम्। अत एव 'एरनेकाचः' (६।४।८२) इति यण् दीर्घान्ते प्रध्यावुन्न्यावित्यादावपि सिध्यति। यण् तु जिव्यतुर्विव्यतुरित्यादौ चरितार्थः। अत एव हयरवट्सूत्रेऽयोगवाहानामुपदेशेऽलोऽन्त्यविधिः प्रयोजनम्, वृक्षस्तत्र, नैतदस्ति प्रयोजनम्। निर्दिश्यमानस्येत्येव सिद्धम्' इत्युक्तं सङ्गच्छते' इति ग. च. पाठः। 'रिङ्शयगित्यादौ'। 'रिङादीनाम्'। 'गम्रियात्'। 'रिङादेशः' इति तु च. पाठभेदः।

२. 'किञ्च' इत्यारभ्य 'न दोषः' इत्यन्तोऽयं पाठो ग. च. नास्ति।

३. इतोऽग्रे—'निर्दिष्टस्य, तदवयवस्य वा, निर्दिष्टावयवोऽनिर्दिष्टाऽवयवो वेत्याकाङ्क्षासत्वेन समावेशस्यैवोचितत्वाच्च' इति ग. च. पाठः।

४. 'नापि' इत्यारभ्य 'कैयटः' इत्यन्तोऽयं पाठो ग. च. नास्ति।

५. 'गृह्यते' इत्यतोऽग्रे--'अवरोधे सम्भवति विरोधस्याऽन्याय्यत्वात्'—इति ग. च. पाठः।

६. 'निर्जरसा' इत्यारभ्य 'इति बोध्यम्' इत्यन्तः क. पाठः। ख. ग. च. नास्ति।

पदत्वस्य बाधात्। किञ्च यस्मात् स्वादिविधिस्तस्य स्वादौ पदत्वम्। न चाऽस्मात् स्वादिविधिः। स्थानित्वन्तु न। निर्जरस्यादेशाऽभावात्। जर-शब्दस्यैवाऽयमादेशः। तस्याऽप्यर्थवत्त्वेनाऽर्थवत आदेश इत्येतत्परेण 'सर्वे सर्वपदादेशाः' इत्यनेन न तस्यादेशं प्रत्या[1]शा। 'एकदेशविकृतम्' (प० ३७) इत्यादि तु 'स्थानिवत्' (१।१।५६) इत्येतत्समानार्थमित्यभिमानेन तयोरत्राऽल्लेख इति बोध्यम्।

**पक्षे** इति—जरसादेशाऽभावपक्षे इत्यर्थः। **पूर्वविप्रतिषेधेनेति**—'विप्रतिषेधे परम्' (१।४।२) इत्यत्र परशब्दस्येष्टवाचित्वादिति भावः।

**तथा भिसीति**—एसि वक्तव्ये ऐस्करणं सन्निपातपरिभाषाऽनित्यत्वे मूलमिति तद्भावः। एवमिनाऽतोरिकारदीर्घोच्चारणमपि बोध्यम्। **तदनु-सारिभिरिति**—एतत्सूत्रोपात्तत्वात् पूर्वविप्रतिषेधवाक्ये स्यादेशोऽपि ग्रहीतुमुचित इति तद्भावः।

**निर्जरस्येत्येवेति**-पूर्वविप्रतिषेधेन स्यादेशेऽनजादित्वाज्जरसादेशाऽभाव इति भावः।

**भाष्येति**—तथा च प्रकृतसूत्रे एव भगवान् भाष्यकारैः 'अतिजरैः' इति भवितव्यम्, सन्निपात(प० ८७)परिभाषया' इति। पूर्वप्रतिषेधस्य निर्मूल-त्वाच्च। एसैसोरुच्चारणे लाघवाऽभावात्। 'नद्यैः' इत्याद्यर्थम् 'बहुलं छन्दसि' (७।१।१०) इत्यत्रैस आवश्यकत्वाच्च।

नन्विनादेशे इकारोच्चारणमेव मूलम्। अन्यथा नादेशं विधाय 'आङि चापः' (७।३।१०५) इत्यत्र 'आङि च' इति योगविभागेनाऽत इत्यनुवृत्त्यैत्त्व-विधानेनैव सिद्धौ किं तेन?। 'अनेन' इत्यादि तु 'अनाप्यकः' (७।२।११२) इति नकारप्रश्लेषेण नकारे परतोऽप्यन्विधानात् 'हलि लोपः' (७।२।११३) इत्यस्य बाधेन सिद्धम्। सूत्रे च 'अ' इति नान्तस्य नपुंसकनिर्देश इति चेन्न। परत्वान्नाऽऽदेशात् पूर्वमेत्त्वाऽऽपत्तौ, नाऽऽदेशविधायकस्य वैयर्थ्या-पत्तेः। तत्सामर्थ्यात् पूर्वविप्रतिषेधाऽऽश्रयणे विपरीतं गौरवम्। भाष्ये इकारस्य प्रत्याख्यानाच्च। प्रत्याख्यानेन चेदमेव ध्वन्यते—'इकारस्य फलाऽ-

१. 'आदेशप्रत्याशा' इति क. ख. पाठः।

न्तरकल्पने नाऽभिनिवेष्टव्यम्, किन्त्वेतत्क्लेशपरिहारार्थ एव 'इकारः' इति। आदंशे तु 'अत्' इतिच्छेद एव सूत्रतात्पर्यम्। भाष्याऽनुरोधात्। **वृत्तिकारास्तु** पररूपवारणाय सामर्थ्याऽनुसरणक्लेशमसहमाना 'आत्' इतिच्छेदमाहुः। एतेनाप्यैस् व्याख्यात इति दिक्।

परे[1] तु 'विभक्त्यादेशेभ्यः परत्वाज्जरस्'इत्यसङ्गतम्[2]। विभक्त्यादेशा[3]नामन्तरङ्गत्वात्। अधिकविभक्तित्वज्ञानसापेक्षत्वेन जरसादेशस्य बहिरङ्गत्वात्। इनादीनां प्रत्ययविशेषाऽपेक्षत्वमित्यप्यस्य प्रकृतिविशेषाऽपेक्षत्वेन समम्। 'पूर्वस्थानिकत्वेन जरसोऽन्तरङ्गत्वम्' इत्यपि न। पूर्वनिमित्तकत्वेन विभक्त्य[4]देशानामपि तत्त्वात्। 'स्था[5]न्यपेक्षया पूर्वनिमित्तमन्त-

---

१. 'अपरे तु' ख. ग. पाठः।

२. इतोऽग्रे—'जरसादेशस्य विभक्तिज्ञानसापेक्षत्वेन बहिरङ्गतया, इनादीनां च तन्निरपेक्षत्वेनान्तरङ्गत्वात्। न चेनादीनां प्रत्ययविशेषापेक्षत्वेन बहिरङ्गत्वम्। 'विशेषाऽपेक्षं बहिरङ्गम्' इति न वचनम्, किन्तु विशेषधर्मापेक्षया सामान्यधर्मस्य प्रथमोपस्थितत्वेन तन्निमित्तकस्य पूर्वं प्रवृत्तिरिति हि तद्बीजम्, तन्निमित्तसमुदायापेक्षयाऽधिकविशेषधर्मनिमित्तकत्वं वा। एवञ्च यद्विशेषधर्मस्य सामान्यधर्मज्ञानं विना न ज्ञानम्, तादृशविशेषापेक्षस्याऽस्तु बहिरङ्गत्वम्। यथा 'रुदश्च पञ्चभ्यः'(७।३।९८) इतीटाऽपेक्षितसार्वधातुकत्वज्ञानं धातुविहितप्रत्ययत्वज्ञानसापेक्षमिति, पूर्वं तज्ज्ञानमावश्यकमिति, यासुटः सार्वधातुकत्वज्ञाननिरपेक्षप्रवृत्त्याऽन्तरङ्गत्वं युक्तम्। नचैवं प्रकृते। विभक्तित्वज्ञानोत्तरप्रवृत्तिकजरसः प्रागेव 'टा' इत्याद्याकारकस्वरूपज्ञानमात्रापेक्षेनादीनां प्रवृत्तेस्तेषामेवान्तरङ्गत्वाद्। एतेन 'पूर्वं पूर्वमन्तरङ्गम्' इति सर्वतो जरसादेशोऽन्तरङ्गः' इत्यपास्तम्। युगपत्प्राप्तावेव तदन्तरङ्गत्वप्रवृत्तेः। अत एव 'जराया' (७।२।१०१) इति सूत्रे अजरांसीत्यत्र'–इति ग. पाठः।

३. 'आदेशानामन्तरङ्गत्वात्' इत्येव ख. पाठः।

४. 'निमित्तकत्वेन आदेशानाम्' ख. पाठः।

५. 'केचित्' इत्यन्तोऽयं क. पाठः।

रङ्गम्, परनिमित्तकञ्च बहिरङ्गम्' इत्यपि **केचित्**। अत एव 'जरायाः' (७।२।१०१) इतिसूत्रे 'अजरांसी'त्यत्र नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरस्, इति भाष्योक्तं सङ्गच्छते। अन्यथा त्वद्रीत्या शिभावात् पूर्वमेव जरसः प्रवृत्तौ, तदा च सर्वनामस्थानत्वाऽभावान्नुमा[1] विप्रतिषेधविचाराऽसङ्गतिः स्पष्टैव। मम त्वन्तरङ्गत्वाज्जरसः पूर्वं शिभावे प्रवृत्ते, तत्सङ्गतिः स्पष्टैव[2]। अत एव 'टाङसि' (७।१।१२) इति सूत्रे **कैयटेनोक्तम्**—भाष्यकारस्तु सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नतिजरेणाऽतिजरादिति भाव्यम्, न त्वतिजरसिनाऽतिजरसादितीति मत्वा गौरवमुद्भावितवान्' इति। भवद्रीत्या[3] पूर्वं जरसादेशे, इनाद्यप्राप्त्या, तदभावपक्षे च तस्याऽप्राप्त्या, सन्निपातपरिभाषयाऽनभ्युपयन्' इत्यसङ्गतिः स्पष्टैव। असिद्धवि-

---

१. 'नुमा विप्रतिषेधविचारस्य नाऽसङ्गतिः' ग. पाठः।

२. इतोऽग्रे–'न च 'शि सर्वनामस्थानम्' (१।१।४२) इत्यत्र शिपदस्य लक्षणया शिस्थानिपरत्वेन जश्शसोरेव सर्वनामस्थानत्वमिति तद्भाष्याशयः। लक्षणायां मानाऽभावात्। मुख्यार्थे बाधाऽभावाच्च'–इति ग. पाठः।

३. असिद्धविषयेऽपि' इत्यादिमूलस्थ–क. पाठस्थाने–'न च जरसादेशस्य बहिरङ्गतयाऽसिद्धत्वेन तद्विषये कथं सन्निपात(प० ८७)परिभाषाप्रवृत्तिः? 'असिद्धस्यापि तद्विघातकस्याऽनया निवृत्तिः' इत्यर्थस्य क्न्मेजन्तसूत्रभाष्यसम्मतिपूर्वकमष्टशब्दे उपपादयिष्यमाणत्वात्। एवञ्च टा-भिस्-ङे-ङसि-ङस्- आम्सु विभक्तिनिमित्तककार्ये कृते जरस् न भवत्येव। क्वचित् सन्निपातपरिभाषाविरोधात्, क्वचिदजादित्वविघातात्। एवं जराशब्दे स्त्रीलिङ्गे औ-ङे-ङस्-आम्-ङिषु न। 'औङ आपः' (७।१।१८) 'याडापः' (७।३।११३) 'ह्रस्वनद्यापः' (७।३।१४) इत्येतेषु कृतेषु क्वचित् सन्निपात(प० ८७)परिभाषाविरोधात्, क्वचिदजादित्वविघातात्। टौसोस्तु 'आङि चापः' (७।१।१०५) इत्येत्वे कृतेऽपि स्थानिवद्भावेन भवत्येव जरस्। नपुंसकनिर्जरशब्दे औ-जस्-शस्-ओस्-ङिष्वेव जरस्, नान्यत्र। यद्यपि टा-ङे-ङसि-ङस्-आम्सु पुंलिङ्गवत्, सोरमि च सन्निपातपरिभाषया तदभावेऽपि द्वितीयैकवचने तदभावे न मानम्, तथापि तस्याऽप्यन्तरङ्गत्वादतोऽमित्यमि, सन्निपातपरिभाषया

पयेऽपि तत्परिभाषाप्रवृत्तिः प्रागुपपादिता, उपपादयिष्यते च। नपुंसकद्वितीयैकवचनेऽप्यन्तरङ्गत्वादतोऽमित्यमि, संनिपात (प०८७)परिभाषया जरसभावः। न च तत्र नाऽकारान्तसन्निपातकृतमेवाऽजादित्वम्, किन्तु तदभावेऽपि। एषा[1] तु सन्निपातलक्षणविधिं विना न यस्य प्रवृत्तियोग्यता, तत्रैवेति भवत्येवाऽत्र जरस्' इति युक्तम्। मानाऽभावात्। टाङसि' (७।१।१२) इति सूत्र[2]स्थेनाऽतिजरेणेत्येतद्विषय**कैयटेन** विरोधाच्च।

[3]एतेन 'परत्वान्नित्यत्वाद् वाऽम्भावं बाधित्वा जरस्' इति परास्तम्। अत एव 'जरायाः' (७।२।१०१) इति सूत्रे 'इष्टमेवैतत्संगृहीतम् 'अतिजरस्, अतिजरैः' इति प्रथमा द्वितीयासाधारण्येनैवोक्तम्)। [4]एवं च स्त्रियां जरसादेशे 'याडापः' (७।३।११३) इत्यादीनामाकारप्रश्लेषेण वारणं विफलमेव। (तेषां प[5]रत्वात्)। अ[6]तिखट्वशब्दे–'अत्तिखट्वौ', 'अतिखट्वेन' 'अतिखट्वाय', 'अतिखट्वे' इत्यादौ 'औङ आपः' (७।१।१८) 'आङि चापः'(७।३।१०५) 'याडापः' (७।३।११३) 'ङेराम्नद्याम्' (७।३।११६) इत्येतेषां वारणाय तु प्रश्लेष आवश्यक एव।

यद्यप्यनया रीत्या तिस्रादेशोऽपेक्षया त्रयाऽऽदेशस्याऽन्तरङ्गत्वम्, तथाऽपि 'न तिसृचतसृ' (६।४।४) इति ज्ञापकादन्तरङ्गत्वस्य क्वचिदनाश्रयणात् परत्वेनैव व्यवस्था। एवमेव नुमनुटोर्विप्रतिषेधस्याऽप्युपपत्तिरित्याहुः।

---

तदप्राप्तिः'–इति क, पाठस्यैव प्रपञ्चस्वरूपो ग. पाठः।

१. 'सन्निपातपरिभाषा तु' ग. पाठः।

२. 'सूत्रस्थाऽतिजरेणेत्येव रूपमिति प्रागुक्तकैयटविरोधाच्च' ग. पाठः।

३. क. कुण्डलितः, ख. ग. पाठः।

४. 'एवं च' इत्यारभ्य 'विफलमेव' इत्यन्तोऽयं पाठो ग. नास्ति।

५. लघुशब्देन्दुशेखरस्थोऽयं पाठः।

६. एतत्स्थाने—'अनङ्गकार्य-नसादीनां तेभ्योऽन्तरङ्गत्वेन, नसादिषु कृतेषु, 'याडापः' (७।३।११३) इत्यादीनां वारणाय तु प्रश्लेष आवश्यक एव। 'नसादयस्त्वङ्गसंज्ञानपेक्षत्वेनौङ आप इत्यादिप्रवृत्तेः प्रागेव भवन्ति। तेषु कृतेषु स्थानिवद्भावेनाऽऽबन्तत्वमादाय प्राप्ता अपि ते विधय आकार-

**पद्दन्नो** (६।१।६३)—अत्र शस्प्रभृतयो निमित्ततयोपात्तास्ते स्वप्रकृतिभूतान् पदादयश्च स्वाऽर्थबोधनसमर्थान्, स्वसदृशवर्णवतश्च, स्थानिन आक्षिपन्तीत्याह—**पाद-दन्तेति**। (एवञ्चा[1]ऽऽक्षिप्तस्थानिनामेव 'शस्प्रभृतिषु' इति विशेषणमिति भावः)। 'अनुदात्तस्य चर्दुपधस्य' (६।१।५९) इत्यतोऽन्यतरस्यामित्यनुवर्त्तत इत्याशयेनाऽऽह—**शसादौ वेति**। यद्यपि 'वा'ग्रहणं नाऽनुवर्त्तते, लोके शसादौ पादादीनां प्रयोगोऽसाधुरेव, अत एव 'ये च तद्धिते' (६।१।६१) इति सूत्रस्थ—'वा केशेषु' (वा०६।१।६१) इति वार्त्तिके 'वा'ग्रहण चरितार्थम्। (मण्डूका[2]नुवृत्तौ मानाऽभावाच्च। भाष्याऽनुक्तत्वाच्च)। छन्दसि सर्वविधीनां वैकल्पिकत्वेन वेदे पादादीन् साधयता **कैयटेन, हरिणा** च तदनुवृत्त्यभावस्यैव ध्वनितत्वादिति बहवः, तथाऽपि 'तुल्याऽऽस्य' (१।१।९) सूत्राऽऽदिभाष्ये 'आस्ये' 'पादेनोपहतम्' 'मासेन पूर्वाय' इत्यादिप्रयोगदर्शनेन, 'हृदयस्य प्रियः' इत्यादिसौत्रप्रयोगेण चाऽस्य वैकल्पिकत्वमावश्यकम्। कैयटादयश्चिन्त्या एव। वार्त्तिके 'वा'ग्रहणं स्वस्य नित्यत्व[3]बोधकमिति भावः।

नन्वत्र 'च्छन्दसि' इत्यनुवर्त्तते' इति प्राञ्चः, तत्कथमस्याऽत्रोपन्यास इति चेत्। अत्राऽऽहुः—'छन्दसीति नाऽनुवर्त्तते। भाष्येनु[4]क्तेः।

---

प्रश्लेषान्न भवन्तीति कौमुद्यामेव स्त्रीलिङ्गे स्पष्टम्। न चैवम् 'तिसृणाम्' इत्यादावन्तरङ्गत्वात् त्रयादेशापत्तिः, तिस्रादेशस्य विभक्तिनिमित्तकत्वेन बहिरङ्गत्वादिति वाच्यम्। नुमनुटोः पूर्वविप्रतिषेधपरवार्त्तिकेनेदृशान्तरङ्गत्वस्य क्वचिदनाश्रयणपूर्वकम् 'विप्रतिषेधे परम्' (१।४।२) इत्यस्य प्रवृत्तेर्ज्ञापनेनाऽदोषादिति मात्सर्यमुत्सार्य सुधियो विभावयन्त्विति प्राहुः।' इति क. कुण्डलितः ख. ग. च. पाठः।

१. ग. च. पाठः। २. ग. च. पाठः।

३. 'व्यवस्थितविभाषात्वबोधकम्' इति क. कुण्डलितः ख. ग. पाठः।

४. एतत्स्थाने—'ये च तद्धिते (६।१।६१) इति सूत्रे 'छन्दस्यतद्धितेऽजादौ शीर्षभावो वक्तव्यः' इत्यत्र च्छन्दोग्रहणेन 'शीर्षश्छन्दसि' (६।१।६०) इत्यत्र छन्दसीत्यस्य स्वरितत्वाऽभावबोधनात्' इति ख. ग. पाठः।

अत एव 'मासश्छन्दसि' (वा० ७।४।४५) इत्यत्र 'च्छन्दो' ग्रहणं चरितार्थम्। दृश्यन्ते च लोकेऽपि बहुशः प्रयोगा इति दिक्।

निशाशब्दस्य निश्प्रकृतिकत्वेनाऽऽपो वैकल्पिकत्वेन च 'वाक्' 'वाचा' इत्युभयवन्निश्निशयोरुभयोर्यद्यपि सूत्रं विनापि सिद्धिस्तथाऽपि सुटि हलन्तस्याऽसाधुत्वबोधनायात्र ग्रहणम्। **प्रामादिकमेवेति**—'आस्नो वृकस्य चिद्वर्त्तिकामभीके' 'हव्या जुह्वान आसनि' इत्यादौ मुखादित्याद्यर्थस्य **वेदभाष्ये** उक्तत्वादिति भावः।

**प्रत्याहार इति**—औटष्टकारेणेति भावः। 'टा'टकारेण तु न। व्याख्यानात्[1]। औटष्टस्याऽनन्याऽर्थत्वाच्च। 'टा'टकारस्तु 'टाङसि' (७।१।१२) इत्यादौ विशेषणाऽर्थः। सुडागमस्य तु न ग्रहणम्। प्रत्ययाऽप्रत्यययोः प्रत्ययस्यैव ग्रहणात्। 'सर्वनामस्थाने च' (६।४।८) इत्यत्राऽसम्बुद्धाविति पर्युदासाच्चेत्यभिप्रेत्याह—**स्वादिपञ्चेति**।

**अक्लीबस्येति**—एतेन पर्युदासत्वं ध्वनयति। वाक्यभेदाऽसमर्थसमासाऽऽपत्त्या प्रसज्यप्रतिषेधस्य गुरुत्वात्। यत्तु 'सुट् स्त्रीपुंसयोः' इति वक्तव्ये, 'नपुंसकस्य' इत्युक्तिः प्रसज्यप्रतिषेधम्, असामर्थ्ये समासं च ज्ञापयति' इति **कैयटः**। तन्न। विपरीतं तवैवाऽर्द्धमात्रागौरवादित्याहुः। ध्वनितं चेदं भाष्ये।

यत्तु 'व्रतं'(३।२।८०)इति सूत्रे 'अनपुंसकस्य' इत्यसमर्थसमासे उदाहरणं भाष्ये दत्तम्, तदप्येतत्सूत्रे प्रसज्यप्रतिषेधव्याख्यातृमताऽभिप्रायेणेति न तद्विरोधः।

**स्वादिषु** (१।४।१७)—'सुः' अत्र प्रथमैकवचनम्, न तु सप्तमीबहुवचनम्। प्रथमोपस्थितत्वात्। 'असर्वनामस्थाने' इति पर्युदासाच्च। 'आदि' ग्रहणसामर्थ्याच्च सुप्व्यतिरिक्तानामपि ग्रहणम्। अन्यथा 'सुपि' इत्येव वदेत्। ते चाऽविशेषात् सर्वेऽपि कबन्ता इत्याशयेनाऽऽह—**कप्प्रत्ययावधीति**।

**यचि भम्** (१।४।१८)—'य् च, अच्च' इति समाहारद्वन्द्वः। समासान्तविधेरनित्यत्वान्न टच्। 'यचि' इत्यनेन स्वादेर्विशेषणात् 'यस्मिन्विधिस्त-

---

१. एतत्स्थाने–'प्रत्यासत्तिन्यायात्' इति ख. ग. च. पाठः।

दादावलुग्रहणे' (प०३३) इति तदादिविधिः। **असर्वनामेति**—तेन 'सुपादौ' इत्यादौ 'पादः पत्' (६।४।१३०) इत्यादिपदादेशादयो न। अयं च पर्युदासो लाघवात्। (यत्तु 'प्रसज्यप्रतिषेधे 'राजा' इत्यादौ 'सुप्तिङन्तम्' (१।४।१४) इति पदत्वस्याऽपि निषेधाऽऽपत्तौ, नलोपाऽसिद्धिः' इति। तन्न। 'अनन्तरस्य' (प०६२) इति न्यायविरोधात्।

एषा च पदत्वकार्यप्रतिबन्धरूपाऽशास्त्रीयेऽपि कार्ये भवति। 'न पदान्त' (१।१।५८) सूत्रस्थभाष्यप्रामाण्यात्।

**आ कडा** (१।४।१)—'प्राक्कडारात् समासः' इति तु नाऽवधिः। व्याप्तिन्यायात्। 'तत्पुरुषो' (२।४।१९) 'द्विगुश्च' (२।१।२३) इति लिङ्गाच्च। समावेशाऽर्थं हि तत्। इत्यभिप्रेत्याह—**कडाराः कर्मधारये** (२।२।३८) इति।

'आ चाऽर्थात्' इति वक्तुं युक्तम्। न हि 'चाऽर्थे द्वन्द्वः' (२।२।२९) इत्यतः परमप्यस्योपयोगोऽस्ति। **केचित्तु** 'एका संज्ञा' इत्यधिकारादेव सिद्धाववध्युपादानं निरर्थकमेव, अन्यत्रेवाऽत्राऽपि तदुपादानं विनैव तन्निवृत्तिसिद्धेः। 'राजदन्तादिषु परम्' (२।२।३१) इत्यादावनन्वयादुत्तरत्राऽननुवृत्तिसिद्धेश्च। इदमेव ध्वनयन् वक्ष्यति—**एकसंज्ञाधिकारात् सिद्धे शेषग्रहणं स्पष्टार्थमिति** 'शेषो घि' (१।४।७) इति सूत्रे इति। तन्न। प्रतिसूत्रं तस्याऽसम्बन्धात्, अनन्यत्वाच्च।

तस्मात् पारार्थ्यसाम्यात् परिभाषायामधिकारशब्दो बोध्यः। ध्वनितं चेदम् 'षष्ठी स्थाने' (१।१।४९) इति सूत्रे **भाष्यकैयटयोः**। एवमेकेति स्त्रीलिङ्गनिर्देशात्, प्रकरणाच्च संज्ञालाभे, संज्ञाग्रहणमपि चिन्त्यप्रयोजनमिति दिक्।

---

१. क. कुण्डलितो ग. पाठः।

२. 'एषा च' इत्यारभ्य 'भाष्यप्रामाण्यात्' इत्यन्तोऽयं क. ख. पाठो ग. नास्ति।

३. 'वस्तुत एका संज्ञेति' ख. ग. पाठः।

४. 'स्पष्टार्थमिति 'शेषो घि' (१।४।७) इति सूत्रे। यथान्यासे तु पारार्थ्यसाम्यात्' इति ख. ग. पाठः।

५. 'इति तन्न' इत्यारभ्य 'तस्मात्' इत्यन्तः क. पाठः।

**एकैवेति**—सङ्ख्यावाच्येकशब्दोपादानादवधारणं संपद्यते इति भावः। यद्यपि परत्वाऽनवकाशत्वाभ्यां बाधकत्वेनाऽपीदं सिद्धयति' तथाऽपि संज्ञानां विरोधाऽभावाद् विप्रतिषेधाऽप्रवृत्तिः। भिन्नफलत्वेन सामान्यविशेषभावाऽभा-वान्नाऽपवादत्वम्। (एवं चैक[1]संज्ञाधिकारादन्यत्र संज्ञानां परस्परं बाध्यबाध-कभावाऽभावः)। अत[2] एव तव्यदादीनां कृत्य–कृत-प्रत्यय-संज्ञाऽऽदयः सिद्धय-न्तीति बोध्यम्।

**या परेति**—द्वयोः सावकाशयोः परा, निरवकाशत्वे तु सैवेति विवेकः। **तेनेति**—अनवकाशत्वेनेत्यर्थः। परोदाहारणन्तु 'अपादानमुत्तराणि कार-काणि बाधन्ते' इत्याद्याकरे स्पष्टम्। न[3] चैवमौपगव इत्यादौ 'सुप्तिङन्तम्' (१।४।१४) इति पदसंज्ञाया अन्तरङ्गत्वात् परत्वेन बाधोऽनया न स्यात्। उत्तरकालप्रवृत्तिकेऽजानन्तर्येण 'नाजानन्तर्ये' (प० ५२) इति निषेधात्। 'राजन्यः' इत्यादौ सामर्थ्यादेवाऽन्तरङ्गबा[4]धः।

न चाऽङ्गसंज्ञाऽपि भ-पदसंज्ञाभ्यां परत्वाद् बाध्येतेति वाच्यम्। पदसंज्ञादिविधावङ्गमित्यनुवर्त्तनात् 'अङ्गं सत् पदं भवति, भं भवति' इत्याद्यर्थाऽङ्गीकारेण समावेशस्वीकारात्। न च पर्यायः स्यात्, एवं चाऽनुवृत्तिरपि चरितार्था, नियमबाधश्च नेति वाच्यम्। अ[5]ङ्गप्रकरणे 'भस्य' इत्यस्य पाठेन, 'सु[6]पि च' (७।३।१०२) 'तद्धितेष्वचामादेः'

---

१. क. नास्ति। ख. ग. पाठः।

२. 'अत एव' इत्यस्य स्थाने 'तेन' इति ख. ग. पाठः।

३. 'न चैवम्' इत्यारभ्य 'अन्तरङ्गबाधः' इत्यन्तः क. पाठः।

४. एतदुत्तरम्—'औपगवः' इत्यादौ 'सुप्तिङन्तम्' (१।४।१४) इतिपदसंज्ञाया भसंज्ञया बाधश्च परत्वेन बोध्यः। तेन 'राजन्यः' इत्यादौ न नलोप इति बोध्यम्। न च तस्या अन्तरङ्गत्वात् परत्वेन बाधोऽनया नोचितः। एवं तर्हि बाध्यसामान्यचिन्तया तस्या अप्येषा अपवाद इत्यदोषात्। अत्राऽपि सुप्तिङन्तमित्यनुवृत्तेर्वा। न चाऽङ्गसंज्ञापि भपदसंज्ञाभ्याम्' इति ख. ग. पाठः।

५. 'अङ्गप्रकरणे भस्येत्यस्य पाठाच्च' ग. पाठः।

६. 'सुपि च' इत्यारभ्य 'अङ्गकार्यविधानेन' इत्यन्तः क. ग. पाठः।

(७।२।११७) इत्याद्यङ्गकार्यविधानेन समावेशज्ञापनात्। पुरुषसंज्ञापरस्मैपदसंज्ञयोरपि 'णलुत्तमो वा' (७।१।९१) इतिज्ञापकात् समावेशः। अन्यत्र इष्टसमावेशस्थाने चः पाणिनिना कृत एवेति ध्येयम्।

गुरु-लघुसंज्ञे वर्णस्य, नदी-घिसंज्ञे तदन्तस्य, इति विभिन्नाऽवधिकत्वात् समाविशतः। 'तयोरपि वर्णसंज्ञात्वम्' इतिपक्षे[1] 'ह्रस्वं लघु' (१।४।१०) इत्यत्र 'असखि'पदसहितं 'घि' पदमनुवर्त्य, गुरुसंज्ञाविधायके। 'स्त्र्याख्य'-पद-'यू'पदसहितं 'नदी'पदं चाऽनुवर्त्त्य, वाक्यभेदेन 'तत्संज्ञकयोस्ते संज्ञे विधीयेते' इति समावेशः। पर्यायस्तु घिपद[2]-नदीपदरहिताऽनुवृत्त्याऽपि सिद्ध इति दिक्। (न[3] चैतानि सूत्राणि 'निर्जर'शब्द एव वक्तुं युक्तानि। न च फलाऽभावः। पदान्तत्वप्रयुक्तरुत्वववारणेन भसंज्ञाफलसत्त्वादिति वाच्यम्। पदसंज्ञाया अकरणेनाऽपि तस्य सुलभत्वात्। इह तु 'दद्भ्याम्' इत्यादौ जश्त्वाद्यर्थं पदत्वस्याऽऽवश्यकत्वे, 'दतः' इत्यादौ तद्वारणाय भत्वमप्यावश्यकम्[4]) इति दिक्।

**यलोप इति**—'ह[5]लि सर्वेषाम्' (८।३।२२) इतीत्यर्थः। अङ्गाऽऽक्षिप्तस्य, भसंज्ञाक्षिप्तस्य च एकत्वे एव एतत्सूत्रप्रवृत्तिः, प्रत्यासत्तिन्यायादित्याशयेनाऽऽह—**यजादिस्वादिपर इति**।

एतेन 'भत्वस्य 'वृषण्वस्वश्वयोः' (वा० १।४।९) इत्यादावप्रत्ययेऽपि विधानाद् भत्वेन न प्रत्ययाऽऽक्षेपः', इति परास्तम्। अङ्गसाचिव्येन सम्भ-

---

१. 'इति पक्षेऽपि' ख. ग. पाठः।

२. 'यूपद-शेषपदानुवृत्त्यापि' ग. पाठः।

३. क. कुण्डलितः ख. ग. पाठः।

४. 'भत्वमप्यावश्यकम्। न च 'दतः' इत्यादौ 'स्वादिषु' (१।४।१७) इति पदत्वाज्जश्त्वं दुर्वारम्। न च भत्वेन बाधः। कार्याऽभावेन तदप्रवृत्तेरिति वाच्यम्। पदत्वप्रतिबन्धस्यैव कार्यस्य सत्त्वात्। न चेदमशास्त्रीयम्। 'न पदान्त' (१।१।५८) इतिसूत्रस्थभाष्यप्रामाण्येनाऽशास्त्रीयेऽप्येतत्प्रवृत्त्यङ्गीकारादित्याहुः' इति ग. पाठः।

५. 'हलि सर्वेषाम्' (८।३।२२) इति 'लोपः शाकल्यस्य' (८।३।१९) इति वेत्यर्थः इति ग. च. पाठः।

वात्। नन्विदम् असङ्गतम्। भत्वेनाङ्गनिष्ठयजादिस्वादिपरत्वाऽऽक्षेपेऽप्यवयवनिष्ठस्य तस्याऽऽक्षेपे मानाऽभावात्। 'यचि भम्' (१।४।१८) इत्यत्र 'यस्मात् प्रत्ययविधिः' (१।४।१३) इत्यनुवृत्तेरङ्गस्यैव तद्विधानात्। (संज्ञा[1]-विधिभिरस्यैकवाक्यत्वेऽपि, प्रत्ययस्याऽङ्गांशे उत्थिताकाङ्क्षत्वेन तत्रैवाऽन्वयस्यौचित्यत्वात्)।

किञ्चाऽनो विशेषणेऽपि 'अनस्तक्ष्णा' इत्यादौ दोषो दुर्वारः। 'विधौ परिभाषोपतिष्ठते नाऽनुवादे' (प०१०३) इति परिभाषया निर्दिष्टपरिभाषाऽनुप[2]स्थितेः। ('अ[3]नन्त्यविकारे' (प० १०५) इति परिभाषा तु नाऽस्त्येव। सत्त्वे तु यजादिस्वादिप्रत्ययस्याऽन्विशेषणत्वे फलाऽभावः। 'अनस्तक्ष्णा' इत्येतदेव हि तत्फलमाहुः) इ[4]ति चेत्। अत्राऽऽहुः 'ष्यङः संप्रसारणम्' (६।१।१३) इति सूत्रे भाष्यकाराः–'एवं तर्हि कार्यकालं संज्ञापरिभाषम्

१. क. कुण्डलितो ग. पाठः।

२. 'अनुपस्थितेरिति चेदत्राहुः' क. पाठः।

३. क. नास्ति। ख. ग. पाठः।

३. इति चेदत्राहुः—कार्यकालपक्षे पदैकवाक्यतायाः सर्वसंमतत्वेनोपस्थितपदानां यथेष्टमभिसम्बन्धाङ्गीकारात्। अयं भावः—तत्पक्षे 'यचि भम्' (१।४।१८) इत्यादेरयमर्थः—'यत्र भशब्दस्तत्र यचीत्युपस्थितं भवति, 'यस्मात् प्रत्ययविधिस्तदादि' (१।४।१३) इत्यनुवर्त्तमानं च। तत्र 'यस्मात् प्रत्ययविधिस्तदादि' इत्युपस्थाप्यांशस्योपस्थापकं समानविभक्तिकत्वम्। 'यचि' 'प्रत्यये' इत्यादीनां संज्ञासूत्रे उपात्तविभक्त्यन्ततैव। सप्तम्यन्तादिपाठस्य वैयर्थ्यापत्तेः। प्रथमायास्तु साधुत्वार्थत्वेनाप्युपपत्तेः। तत्रोपस्थितप्रथमान्तपदोपस्थाप्यार्थस्योपस्थापकाऽर्थ एवान्वयः। सप्तम्यन्तस्य त्वन्येनापि। अत एव प्रकृतसूत्रे 'यस्मात् प्रत्ययविधिस्तदादि' इत्यंशस्य 'भस्य' (६।४।१२९) इत्यत्रान्वयमभिप्रेत्याऽङ्गावयव इति व्याख्यातम्। 'यचि' इत्यंशस्तु 'यजादिस्वादिपरो योऽन्' इत्यन्विशेषणतया व्याख्यातः। 'यचि भम्' (१।४।१८) इत्यादिकं तु 'इको गुणवृद्धी' (१।१।३) इतिवदुपस्थापकमेव। उपस्थाप्यस्योपस्थापकेन प्रदेशेषु वृत्त्या बोधनात् परं संज्ञासूत्रव्यवहारः। वृत्त्या बोधकत्वमपि सामानाधिकर-

(प० ३) यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यम् । 'भस्य' (६।४।१२९) इत्युपस्थितमिदं भवति-'यचि भम्' (१।४।१८) इति । तत्र यजादिपरतयाऽन्कारं विशेषयिष्यामः, अनाऽकारम्–'यजादिस्वादिपरस्याऽनो यो अकारः' इति[1]। तस्याऽयं भावः–कार्यकालपक्षे 'भस्य' इति श्रुते, भपदार्थजिज्ञासायां 'यचि भम्' इत्युपस्थितेन शक्तिग्रहे वृत्ते, एतद्वाक्याऽर्थबोधकाले लक्ष्याऽनुरोधेन तन्त्राऽऽदिन्यायाऽऽश्रयणाद्[2] यचीत्यस्याऽन्विशेषणताऽपीति । 'विधौ परिभाषा' (प० १३३) इति न्यायस्तु नाऽस्त्येव। तज्ज्ञापकभूतेन 'उदीचामातः' (७।३।४६) इति सूत्रस्थ-'स्थाने'ग्रहणेन परिभाषाणामनित्यत्वमात्रकल्पनात् । अत एव उदात्तस्वरितयोर्यणः' (८।२।४) इत्यादौ 'उदात्तस्वरितस्थानिकस्य यणः' इति वृत्त्याद्युक्तं सङ्गच्छते । (स[3]त्त्वेऽप्यनित्यत्वाच्च) । 'षष्ठी स्थाने' (१।१।४९) इति सूत्रं 'निर्दिश्यमानस्य' (प० १२) इति परिभाषापरम् । स्थानसम्बन्धलाभस्त्वन्तरङ्गत्वादिना, 'स्थानिवदादेशः' (१।१।५६) इति ज्ञापकेन वेति । भाष्यमते स्थानसम्बन्धस्य परिभाषालभ्य-

---

ण्यादवसीयते । 'इको गुणवृद्धी' (१।१।३) इत्यादौ तु नैवमिति स्पष्टमेव । न च यथोद्देशपक्षेऽपि भत्वाऽङ्गत्वयोः प्रत्ययनिमित्तत्वादव्यभिचारिहेतुना यजादिप्रत्ययपरत्वानुमानं भविष्यत्येवेति किं विशिष्य कार्यकालपक्षोपादानेनेति वाच्यम् । तथा सत्याक्षेपकविशेषणत्वस्यैव न्याय्यत्वेनाऽनो विशेषणताऽनापत्तेः । अनुमित्युपस्थितस्य वृत्त्याऽनुपस्थितत्वेन शाब्देऽन्वयाऽनापत्तेश्च । 'धूमोऽयं ज्वलति' इतिवत् । अत्र प्रमाणम्—एवं तर्हि कार्यकालं संज्ञापरिभाषम्' (प० ३) इति ग. च. पाठः ।

१. इतोऽग्रे––'तेनाऽनस्तक्षणेत्यादावनोऽकारादेर्न लोप इति 'ष्यङः सम्प्रसारणम्' (६।१।१३) इति सूत्रस्थं भाष्यमेव । 'आगन्तूनामन्ते निवेश' इतिन्यायेन 'अनः' इत्यस्योत्तरं यचीत्यस्योपस्थितौ सन्निधानेन तद्विशेषणत्वस्यैव न्याय्यत्वाच्च । एवञ्च भाऽऽक्षिप्तः प्रत्ययविशेषोऽङ्गं चेति द्वयमनो विशेषणम् । अन् त्वकारस्येति नोक्तदोषः । विधौ परिभाषेति न्यायस्तु' इति ग. च. पाठः ।

२. 'अचीत्यस्य' ख. पाठः : ।

३. ग. च. पाठः ।

स्वाऽभावेन ज्ञापकस्यैवाऽसम्भवाच्चेति दिक्। [1]केचित्तु 'अनन्त्यविकारेऽन्त्यसदेशस्य' (प० १०५) इत्यनयेदं सिद्धम्। न चैषा 'ष्यङः संप्रसारणम्' (६।१।१३) इति सूत्रे भाष्ये प्रत्याख्यातेति भ्रमितव्यम्। वार्त्तिकोक्तफलानामन्यथा सिद्धिं प्रदर्श्याऽपि, 'यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थं परिभाषा कर्त्तव्या' इत्युपसंहारात्। अदमुयङ्, मिमार्जिषतीत्यर्थं च परिभाषावश्यकत्वम्। यत्तु 'न सम्प्रसारणे' (६।१।३७) इतिसूत्रे 'नैतस्याः परिभाषायाः सन्ति प्रयोजनानि' इत्युक्तम्, तत्तु 'न सम्प्रसारणे' इत्यादेरेव ज्ञापकात् प्रयोजनाऽस्त्यल्पत्वसूचकम्। 'अल्लोपोऽनः' (६।४।१३४) 'सान्तमहतः' (६।४।१०) इत्येतयोरन्याय्याऽनेककल्पनाऽपेक्षया परिभाषाया एव ज्यायस्त्वादित्याहुः।

तपरकरणं किम्?। अनितेः क्विपि 'आन्' इत्यादौ लोपो मा भूदिति। अन्त्वं त्वत्रैकदेशविकृत(प० ३७)न्यायेन बोध्यम्। (न च[2] लोपस्य सम्भावितत्वेनाऽकृतव्यूह(प० ५७)परिभाषया 'अनुनासिकस्य क्वि' (६।४।१५) इति दीर्घाऽप्राप्तौ, लोपे इष्टाऽऽपत्तिरिति वाच्यम्। तस्या अनित्यत्वात्। इदमप्यनित्यत्वे ज्ञापकमित्यन्यदेतत्)।

**रषाभ्याम्** (८।४।१)—निमित्त-निमित्तिनोरपदस्थयोरसम्भवात् 'पदे' (६।२।७) इत्यनेन सामर्थ्यादिकपदत्वे लब्धे, समानग्रहणमखण्डत्वलाभार्थम्। तेन समासे न, 'रामनाम' इति। अखण्डत्वं चाऽत्र निमित्ताऽनधिकरणनिमित्तिमत्पदाऽघटितत्वम्। तेन 'मातृभोगीणः' इत्यादौ णत्वसिद्धिः। केवल-'भोगीन' इत्यस्य, प्रत्ययमात्रस्य वा पदत्वाऽभावात् लोकेऽर्थबोधकत्वाभावाच्च। अत एव 'आचार्यादणत्वं च' (ग० ४।१।४९) इति सार्थकम्। 'सु[3]पर्वणा' इत्यादिसिद्धये निमित्तानधिकरणेति।

'पद'शब्देन चाऽत्र लोकेऽर्थप्रतीतिकृदुच्यते, पद्यते बोध्यते इति

---

१. केचित्तु' इत्यारभ्य 'ज्यायस्त्वादित्याहुः' इत्यन्तः क. पाठः।

२. क. कुण्डलितः ख. ग. पाठः।

३. 'निमित्तानधिकरणेति' इत्यन्तोऽयं पाठो ग. नास्ति।

व्युत्पत्तेर्लक्षणया वा । एवं च 'गन्धर्वगानम्' इत्यादौ 'गतिकारकोपपदानाम्' (प० ७७) इति सुबुत्पत्तेः पूर्वं समासेऽपि, णत्वं न भवत्येव । (अत[1] एव 'ब्रह्माणमानयति' इति विग्रहे 'ब्रह्माणी' इत्यादौ 'पूर्वपदात्संज्ञायाम्' (८।४।३) इति णत्वमुक्तं **मनोरमायाम्**) ।

न चैवं क्षुभ्नादिषु 'नृनमन'शब्दपाठो व्यर्थः । संज्ञाभूताऽखण्डार्थं तस्याऽऽवश्यकत्वात् । न च तत्र 'छन्दस्यृदवग्रहात्' (८।४।२६) इत्यनेन प्राप्तिः । ईदृशे विषयेऽवग्रहाऽभावात् । अत एव 'वर्णैकदेशानां वर्णग्रहणेनाऽग्रहणम्' इति पक्षे 'नृनमन'शब्दपाठो ऋवर्णात् परस्य णत्वे ज्ञापक उक्त 'एओङ्'-'ऐ औच्' सूत्रयोर्भाष्ये । यूषो—मण्डविशेषः । ('मु[2]द्गाऽमलकयूषस्तु भेदी दीपनपाचनः' इति दर्शनात्) । न च ष्टुत्वेनैव सिद्धेरस्येहोपन्यासो व्यर्थः । अत एव 'षग्रहणमुत्तरार्थम्' इत्याकर इति वाच्यम् । 'पुष्ट' इत्यादौ चरिताऽर्थस्य ष्टुत्वस्याऽसिद्धतयाऽस्यैव प्रवृत्त्यौचित्यात् । **आकरेऽपि** 'इह षग्रहणं विनाऽपि लक्ष्यसिद्धिरस्ति' इत्येतावति तात्पर्यमिति दिक् ।

**पूर्वस्मादिति**—पूर्वस्मान्निमित्तत्वेनाऽऽश्रितादित्यर्थः । अत एव 'हे गौः' इत्यत्र गकारात् परस्य 'एङ्ह्रस्वात्' (६।१।६९) इति सम्बुद्धिलोपरूपे विधौ वृद्धेः स्थानिवद्भावो न । 'अचः परस्मिन्' (१।१।५७) इतिसूत्रे 'पूर्वविधौ' इत्यत्र आवृ[3]त्त्या पञ्चमीसमासस्याऽप्याश्रयणादयमर्थो लभ्यते इति भाव[4]ः ।

**पक्षे त्विति**—तुनाऽरुचिर्बोधिता । तद्बीजन्तु (षष्ठ[5]्याः सम्बन्धसामान्यार्थकत्वेऽपि, निमित्तनिमित्तिभावसम्बन्धार्थकतया) त[6]दाश्रयणे फला-

---

१. क. कुण्डलितः ख. ग. पाठः । २. क. कुण्डलितः ख. ग. पाठः ।
३. 'आवृत्त्या पञ्चमीसमासस्याश्रयणात्' इति क. ख. पाठः ।
४. इतोऽग्रे-'अचः परस्मिन्नितिसूत्रे पूर्वस्येति सम्बन्धसामान्यार्थकषष्ठ्यन्तेन वा कर्म—किप्रत्ययान्तविधिशब्दस्य समासाश्रयणादयमर्थो लभ्यते इति भाव.' इति क. कुण्डलितो ग. पाठः । ५. क. कुण्डलितो ग. पाठः ।
६. 'सम्बन्धार्थकत्वाश्रयणे फलाऽभावः' पाठः ।

ऽभावः। न च बेभिद्यतेर्यङन्तात् तृचि 'उपजनिष्यमाणोऽप्यपवादः' (प० ६६) इति न्यायेन (निषेध[1]विषयाऽभावस्यापि निमित्तत्वेन, अकृतव्यूह (प० ५७)-परिभाषया वा) पूर्वमिडभावेऽल्लोपे, यलोपे, 'एकाच उपदेशे' (७।२।१०) इति निषेधादिण्न स्यात्। पञ्चमीसमासे त्वल्लोपस्य स्थानिवत्त्वान्निषेधाऽप्रवृत्ताविट् सुलभ इति वाच्यम्। 'एकाच उपदेशे' (७।२।१०) इत्यत्र विहितविशेषणाऽऽश्रयणादल्लोपेऽपि निषेधाऽप्रवृत्तेः। स्पष्टं चेदमेकाचो द्वे (६।१।१) इति सूत्रे भाष्ये।

तत्र हि 'यङ्लोपे बेभिदिता' इत्यत्र यङन्तात् तृचि, इट्प्रतिषेधमाशङ्क्य, 'एकाचोऽङ्गात्' इति व्याख्यानेन परिहृतम्। 'प्रत्ययविधानाऽवधेरेकाचः परस्य' इति व्याख्येयमित्यर्थः। प्रत्ययविधानाऽवधेरेव प्रायेणाऽङ्गत्वात्। एवं च विहितविशेषणत्वं फलितम्। उपदेशग्रहणं च एकाजंशेन सम्बध्यते एव। विहितविशेषणेनैव 'बिभित्सति' इत्यादावदोषात्। किञ्च तद्भाष्यस्य यथाश्रुतत्वे 'बिभित्सति' इत्यादौ दोषवारणाय उपदेशग्रहणस्य एकाजंशेऽपि सम्बन्धे, 'बेभिदिता' इत्यादावपि परिहाराऽसम्भवेन, तद्भाष्यस्य विहितविशेषणत्वे तात्पर्यमावश्यकमिति। अधिकं भाष्यप्रदीपोद्द्योते द्रष्टव्यम्।

(व[2]सत्यादीनामनुदात्तपाठसामर्थ्यात् सूत्राऽऽरम्भसामर्थ्याच्च धातुस्वरेणोदात्तत्वेऽप्यस्य प्रवृत्तौ सिद्धायामुपदेशग्रहणं न कार्यमित्यवरं लाघवमत्र पक्षे बोध्यम्)। एतेन 'गोधुक्शब्दादाचारक्विबन्तात् तृजादौ विहितविशेषणत्वे इण्निषेधो न स्यात्' इत्यपास्तम्। परविशेषणेऽपि 'दुह्' इत्यस्याऽङ्गत्वाऽभावेनाऽप्राप्तेः। हलन्तेभ्य आचारक्विबभावाच्चेत्यलम्।

न चैवमपि 'मथितं पण्यमस्य' इति विग्रहे ठकि, इकादेशे 'यस्य' (६।४।१४८) इत्यल्लोपे, 'इसुसुक्तान्तात्' (७।३।५१) इति कादेशे 'माथितिकः' इत्यसिद्धिः, पञ्चमीसमासे त्वल्लोपस्य स्थानिवत्त्वान्न दोष इति वाच्यम्। सन्निपात(प० ८७)परिभाषया वारणात्। 'ठस्येकः' (७।३।५०) इत्यत्र स्थानिन्यकारस्योच्चारणार्थत्वेन ठस्याऽभावाच्च। स्थानिवत्त्वन्त्व-

---

१. क. कुण्डलितो ग. पाठः। २. क. कुण्डलितः ख. ग. पाठः।

ल्विधित्वान्न। आदेशे तु अकारो विवक्षितः। प्रत्ययेषु च सर्वत्राऽविवक्षितः। एवं हि लाघवं भवति। अठचि च नाऽतिप्रसङ्गः। ठस्याऽङ्गसंज्ञानिमित्तत्वाऽभावात्।

एतेनाऽऽदेशेऽप्यकारोऽविवक्षित इत्यपास्तम्। बहुषु प्रत्ययेषु विवक्षितत्वकल्पनाऽपेक्षयैकत्राऽऽदेशे एव विवक्षितत्वकल्पने लाघवात्। किञ्चैवम् 'निषादकर्षू'शब्दात् 'ओर्देशे' (४।२।११९) इति ठञि, व्यञ्जनमात्रस्य व्यञ्जनरूप'क'आदेशे, 'क'शब्दस्य लाक्षणिकत्वात् 'केऽणः' (७।४।१३) इति ह्रस्वाऽनापत्तिः। स्पष्टं चेदम् 'अव्ययात्त्यप्' (४।२।१०४) सूत्रे भाष्यकैयटयोः।

('स्था[1]न्यादेशयोः' इति **मनोरमायां** 'स्थानि'पदेन इकादेशस्थानिभूताष्ठगादयः, आदेशपदेन च तद्विधायकं सूत्रमिति न दोषः)। ध्वनितं चैतत् समाधानद्वयस्य मुख्यत्वम् 'ठक्छसोश्च' (वा० ६।३।३५) इति वार्त्तिके भाष्ये। नन्वेवमपि 'अपीपचन्' इत्यत्र णिलोपस्य, चङन्त्यकारयोरेकादेशस्य च स्थानिवद्भावाऽनापत्तौ, अन्तेः 'सिजभ्यस्त' (४।४।१०९) इति जुसापत्तिरिति चेन्न। 'यस्य विभाषा' (७।२।१५) 'वित्तो भोगप्रत्यययोः' (८।२।५८) इतिसूत्रस्थ**कैयटो**क्तरीत्या परसाहचर्यस्य बलवत्त्वेन विदिसाहचर्यादभ्यस्तादपि लङ एव झेर्जुस्विधानात्।

परन्त्विदं चिन्त्यम्। विप्रतिषेध(१।४।२)सूत्रे कार्यशब्देन शास्त्रीयस्यैव ग्रहीतुमुचितत्वेन तदप्राप्तेः।

**नित्यः परयणादेशः, परश्चाऽसौ व्यवस्थया।**
**युगपत् सम्भवो नास्ति, बहिरङ्गेण सिद्ध्यति॥**

—इत्यचः परस्मिन्नितिसूत्रभाष्योक्तरीत्या पूर्वसाहचर्यस्याऽन्तरङ्गत्वेन, तस्यैव ग्रहीतुमुचितत्वाच्च[2]।

प्रत्यैषिषन्नित्यादावेवमपि दोषाच्च[3]। ('वि[4]भाषा गमहनविदविशाम्'

---

१. क. कुण्डलितः ख. ग. पाठः। २. चकारः ख. नास्ति।
३. 'दोषाच्च' इत्यन्तः क. पाठः। ४. क. कुण्डलितो ग. पाठः।

(७।२।६८) इत्यत्र लुग्विकरण(प०९२)परिभाषाऽनुग्रहाय परसाहचर्यस्यैवाश्रयणमिति बोध्यम्। 'नुदविदोन्दत्रा' (८।२।५६) इत्यत्रापि 'विद्लृ लाभे' इत्यस्य तौदादिकस्यैव भोगप्रत्यययोर्वृत्तिसम्भवेन तस्य 'वित्तो भोग' (८।२।५८) इतिसूत्रे ग्रहणेन तक्रकौण्डिन्यन्यायेनाऽत्र तस्याऽग्रहणे, परसाहचर्येण रौधादिकस्यैव ग्रहणमिति बोध्यम्)।

वस्तुतस्तु पूर्वोत्तरसाहचर्येणाऽभ्यस्ता[1]दपि परस्याऽनादिष्टझेरेव ग्रहणेन दोषाऽभावात्। 'सुट् तिथोः' (३।४।१०७)इतिवत् 'झेर्जुस्' (३।४।१०८) इत्यत्रेकारस्योच्चारणार्थत्वेन 'झ'मात्रस्य स्थानित्वेनाऽल्विधौ स्थानिवत्त्वनिषेधादन्तेर्झत्वाऽभावेनाऽदोष इत्यन्ये। 'तन्वन्ती' इत्यत्रेडागमस्तु न। बहिरङ्गतया यणोऽसिद्धत्वादिति बोध्यम्।

'न[2] च तदाश्रयणे विधिग्रहणं किमर्थम्?। पूर्वस्माद् विधिरित्यर्थलाभार्थम्' इत्यादिना सप्रपञ्चं तत्प्रयोजनानि व्याख्याय, 'पूर्वस्येति सम्बन्धसामान्याऽर्थकषष्ठ्यैव सिद्धे पुनर्विधिग्रहणं व्यर्थम्' इत्याशङ्क्य, विधिमात्रे—शास्त्रीयेऽशास्त्रीये च स्थानिवद्भावो यथा स्यात्। वाय्वोः। 'लोपो व्योर्वलि' (६।१।६६) इति लोपो मा भूत्' इत्युक्त्वा 'अस्ति प्रयोजनमेतत्?। किं तर्हीति। 'अपरविधाविति तु वक्तव्यम्। कि प्रयोजनम्?। स्वविधावपि स्थानिवद्भावो यथा स्यात्। कानि पुनः स्वविधौ स्थानिवद्भावस्य प्रयोज[3]नानि?। आयन्नासन्' इति भाष्याऽसङ्गतिः। 'बेभिदिता' इत्यादीनामस्मिन् न्यासेऽसिद्धेरिति वाच्यम्। तत्रापि पञ्चमीसमासे बाधकाऽभावात्।

---

१. 'अभ्यस्तस्यापि भावरूपादेशाऽनपहृतविकरणकाऽभ्यस्तग्रहणम्' इत्यत्यतिक्लिष्टम्। तस्मात् पञ्चमीसमास एवोचितः (परे त्वीदृशसाहचर्याश्रयणाऽपेक्षया पञ्चमीसमासाश्रयणे गौरवाऽभावः। ईदृशसाहचर्यस्य दुर्ज्ञेयत्वं च') इति क. पाठः।

२. 'अत एव विधिग्रहणं किमर्थम्' ख. ग. पाठः।

३. इतः परं—'आयन्' 'आसन्' इति भाष्योक्तं सङ्गच्छते। अन्यथा 'बेभिदिता' इत्यादीनामस्मिन् न्यासेऽसिद्धत्वेनाऽसङ्गतिः स्पष्टैव' इति ख. ग. पाठः।

न्यासान्तरं तु स्वविधेरपि संग्रहायेति स्पष्टमेव। अत्रत्य**कैयटस्य** तु प्रमाद इति **भाष्य**प्रदीपोद्द्योते निरूपितम्।

'तन्वन्ती' इत्यादाविट् तु न। उकारवृत्त्यार्द्धधातुकत्वस्याऽल्विधित्वेन स्थानिवत्त्वाऽभावात्। स्पष्टा चेयं रीतिः 'भोभगो' (८।३।१७) इति सूत्रे भाष्ये इति तत्रैव सूत्रे निरूपितम्। अधिकं **भाष्य**प्रदीपोद्द्योते निरूपितम्।

(अस्मदुक्तरीत्या[1] साधने तु पञ्चमीसमासाऽऽश्रयणं व्यर्थमेव। न च निमित्ताऽपेक्षया परत्वविज्ञानात् तत्सिद्धिः, अकारलोपाऽऽदेर्निमित्तं ह्यार्ध-धातुकादि, न च तस्मात् परस्य विधिः, किन्तु तस्यैव' इति **कैयटोक्त**रीत्या निर्वाह इति वाच्यम्। 'तर्हि वक्तव्यम्?। न वक्तव्यम्। 'पूर्वविधौ' इत्येव सिद्धम् कथम्?। पूर्वग्रहणेन नाऽऽदेशोऽभिसम्बध्यते—कुतः पूर्व-स्मात्?। आदेशादिति। किं तर्हि?। निमित्तमभिसम्बध्यते' इत्युत्तर-भाष्येऽणावधित्वेनाऽऽदेशस्यैव सम्बन्ध इत्यभिप्रायेणैव न्यासाऽन्तरप्रवृत्ति-रित्यर्थस्य स्पष्टतयाऽभिधानात्।

निमित्त[2]स्याऽवधित्वेनाश्रयणे यणाद्यादेशनिमित्ताऽन्त्यादेः पूर्वस्य धात्वा-देराडादिरूपे कार्ये कर्त्तव्ये स्थानिवद्भावस्य पूर्वविधावितिन्यासेऽपि सिद्धत्वेन, न्यासाऽन्तरेऽप्रवृत्त्यापत्तेश्च। किञ्चाऽपरविधावितिन्यासे निमित्ताऽ-पेक्षया परत्वविज्ञाने, '**बाभ्रवीयः**' इत्यादौ 'हलस्तद्धितस्य' (६।४।१५०) इति यलोपेऽवादेशस्य स्थानिवत्त्वापत्तिः। न च 'न पदान्त' (१।१।५८) इति निषेधः। स्वरदीर्घयलोपेषु लोपाऽजादेशस्यैव स्थानिवत्त्वनिषेधात्। अभा-वाऽतिदेशस्याऽनुपदमेव विधिग्रहणेन सिद्धान्तितत्वात्, स्थानिनि सति यन्न, तदादेशेऽपि न' इत्यभावाऽतिदेशाऽऽकारात्, 'योऽत्रा[3]श्रीयते नाऽसावादेशो, यश्चादेशो, नाऽसावाश्रीयते' इतिभाष्योक्तरीत्या न निर्वाहः। अत एव

१. इत आरभ्य 'असङ्गततापत्तिः' (४५५ पृष्ठे) इत्यन्तः क. कुण्डलितः ख. ग. पाठः।

२. 'निमित्तस्य' इत्यारभ्य 'अप्रवृत्त्यापत्तेश्च' इत्यन्तः क. ग. पाठः।

३. 'योऽत्र' इत्यारभ्य 'न निर्वाहः' इत्यन्तः क. ग. पाठः।

'पटयति' इत्यादौ वृद्ध्यभावसिद्धिः। न च 'अपरविधौ' इति-न्यासे, आदेशाऽपेक्षया परत्वविज्ञाने 'नैधेयः' इत्यसिद्धिः, अल्लोपस्य स्थानिवत्त्वेन द्व्यचः' (४।१।१२१) इति ढगनापत्तेः, न ह्ययमादेशाऽपेक्षया परस्य कस्यचिद् विधिरिति वाच्यम्। निमित्ताऽपेक्षया परत्वविज्ञानेऽपि, दोषस्य तदवस्थत्वात्। परदेशे जायमानत्वेन परसम्बन्धिविधित्वम्' इति तूभयोः समम्। एतेन 'मथितमाचष्टे मथित्, ततष्ठकि, काऽऽदेशाऽभावार्थं पञ्चमीसमास आवश्यकः' इति निरस्तम्। 'अपरविधौ' इति न्यासे आदेशस्य, निमित्तस्य वाऽवधित्वेऽपि, लोपात्, तन्निमित्तभूतणिच एव वाऽपरस्य विधि-सत्त्वेन स्थानिवद्भावाऽनापत्त्या, कादेशसहितरूपस्यैव भाष्यकृत इष्टत्वा-ऽनुमानात्।

किञ्च 'पूर्वस्य' इति सम्बन्धसामान्यषष्ठ्या स्थानित्व-निमित्तत्व-सम्बन्धवत्कर्मत्वस्याऽपि ग्रहणे, 'पूर्वकर्मकविधौ' इत्यर्थेन 'आयन्' इत्यादीनां सिद्धौ, वार्त्तिकाऽऽरम्भस्यैवाऽसङ्गतताऽऽपत्तिः)।

न[1]नु पञ्चमीसमासाऽङ्गीकारे 'प्रविगणय्य' इत्यादावल्लोपस्य स्थानिव-त्त्वादयादेशो न स्यात्। 'वचनसामर्थ्यात् स्थानिवद्भावकृतव्यवधाने प्र[2]वृत्तिः। इति तु न। 'प्रशमय्य' इत्यादौ चारितार्थ्यादिति चेन्न[3]। 'निष्ठा[4]यां सेटि' (६।४।५२) इति सेड्ग्रहणेन तदनित्यत्वेनाऽदोषात्। तथाहि—तत्र सेटीतिपदं नाऽनिड्व्यावृत्त्यर्थम्। णि[5]जन्तात् तदभावात्। न च ज्ञपेः 'सनीवन्तर्ध' (७।२।४९) इतीड्विकल्पात् 'संज्ञपितः' इत्यादौ 'यस्य विभाषा' (७।२।१५) इतीण्निषेधे[6] सम्भवतीति वाच्यम्। 'यस्य विभाषा' इत्यत्रैकाच इत्यनुवृत्तेः। अन्यथा 'तनिपतिदरिद्राति' (वा० ७।४। ५६) इति सनि विकल्पितेट्त्वेन 'दरिद्रितः' इतीण्न स्यात्। 'वा दान्त'

---

१. 'किञ्च' इति ख. ग. पाठः।

२. 'प्रवृत्तिरिति चेन्न' ग. पाठः। ३. अत्र 'इति चेन्न' इति ग. नास्ति।

४. 'ननु निष्ठायां सेटीति सेड्ग्रहणात् तदनित्यम्। तथाहि' ख. ग. पाठः।

५. 'णिजन्तात् तदसम्भवात्' ख. ग. पाठः। ६. निषेधः' ख. ग. पाठः।

(७।२।२७) सूत्रे 'ज्ञप्ता' इति निपातनेनेडभावस्येव, णिलोपस्याऽपि निपातनाच्च। तस्मात् तद्योगविभागेन कालाऽवधारणार्थम्–'इटि कृते एव णिलोपो, न तु ततः प्राक्' इति। अन्यथा 'कारितम्' इत्यादौ पर[1]मपीटं बाधित्वा नित्यत्वाण्णिलोपे, 'एकाच उपदेशे' (७।२।१०) इतीण्निषेधः स्यात्। पूर्वस्माद् विधौ स्थानिवत्त्वे त्वप्राप्त एव निषेधः। णिचा व्यवधानात्। तस्मात् सेट्ग्रहणमनित्यतां ज्ञापयति। (इ[2]ति चेन्न। सेट्ग्रहणेन लाघवात् तदभावस्यैव ज्ञापयितुमुचितत्वात्। अपि च सूत्रे पूर्वग्रहणवैयर्थ्याऽऽपत्तिः। षष्ठीसमासेन पूर्वस्य, पञ्चमीसमासेन स्वस्य, परस्य च विधौ स्थानिवद्भावस्य प्राप्तत्वेन, 'विधौ' इत्येव सिद्धेः। पूर्वशब्दश्च व्यवहिताऽव्यवहितसाधारणस्तवाऽपि। अतिप्रसङ्गस्त्वनित्यत्वेन त्वयेव, मयाऽपि सुपरिहर इति दिक्।

वस्तुतः 'एकाच उपदेशे' (७।२।१०) इत्यत्र विहितविशेषणपक्षे—'सेटि' इति चिन्त्यप्रयोजनमेवेति बोध्यम्। त[3]दा तु 'प्रविगणय्य' इति भाष्योदाहरणादेव तदनित्यत्वं बोध्यम्।

[4]**पूर्वत्रासिद्धे** नेति (वा० ८।४।१)—अतिदेशदृष्टया त्रिपाद्या असिद्धत्वेन न्यायसिद्धमिदम्। तस्य दोष इति— 'न मु ने' (८।२।३) इत्यत्र नेति योगविभागेन एतदपि तथेति भावः।

**संयोगादिलोपेति**—तक्षिरक्षिभ्यां ण्यन्ताभ्यां क्विपि लोपाऽभावार्थम्। लत्वे—'निगाल्यते'। न चाऽत्र णिलोपात् पूर्वम् (अ[5]न्तरङ्गत्वात्) लत्वम्। सपादसप्ताध्यायोस्थकार्यप्रवृत्तियोग्यतयाऽप्र[6]वृत्तेः। न च स्थानिवदादेशः।

---

१. 'परमपीटं बाधित्वा नित्यत्वात्' इति ग. नास्ति।

२. 'इति चेन्न' इत्यारभ्य 'इति दिक्' इत्यन्तः क. कुण्डलितः ख. ग. पाठः।

३. 'तदा तु' इत्यारभ्य 'बोध्यम्' इत्यन्तः क. पाठः।

४. क. ख. नास्ति। ग. पाठः।

५. क. नास्ति।

६. 'अकृतव्यूहपरिभाषाऽप्रवृत्तेः' ग. पाठः

अल्विधित्वात् । प्रत्ययलक्षणन्तु नियमार्थम् । एवं 'प्लायते' (८।२।१९) इत्यपि 'अयतौ' इत्यस्योपसर्गाविशेषणत्वे[1] फलं बोध्यम् ।

**णत्वे**—'माषवपनी'[2] । ङीबुत्पत्तेः प्राक् समासे समासरूपप्रातिपदिकान्तत्वाण्णत्वं प्राप्तम् । 'यस्य' (६।४।१४८) इति स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्तत्वाऽभावान्न ।

**केचित्तु**[3]—'णत्वग्रहणं व्यर्थम्, बहिरङ्गतयाऽल्लोपस्याऽसिद्धत्वात्'[4] इति । तन्न । पूर्वपदाऽऽक्षिप्तसमासरूपप्रातिपदिकान्तस्य तेन णत्वविधानेन, तस्याऽपि पूर्वपरोभयसाऽपेक्षत्वेन, समासत्वज्ञानसापेक्षत्वेन च समत्वादिति वार्त्तिकाऽऽशयः । 'निगाल्यते' इत्यत्राऽपि नाऽसिद्धत्वम् । 'नाऽजानन्तर्ये' (५०५२) इति निषेधात् इत्यन्ये (—इति[5] दिक् ) ।

**नलोपः** (८।२।७)

**विशेष्यमन्तस्येत्यस्य 'ने'त्येतदविभक्तिकम् ।**
**तथैव प्रातिपदिकेत्येतत् पदविशेषणम् ॥**

—इत्याशयेनाऽऽह—**नेतीत्यादि**[6] । सौत्रत्वात् तल्लोपः, न तु षष्ठी-

---

१. 'उपसर्गस्यायतिविशेषणत्वे' ग. पाठः ।

२. 'माषवपनी । ङीबुत्पत्तेः प्राक् समासोऽत्र कर्त्तव्यः । अन्यथा समासरूपप्रातिपदिकान्तत्वाऽभावाण्णत्वं न प्राप्नुयात् । इह 'यस्य' (६।४।१४८) इति लोपस्य स्थानिवत्त्वेन, नकारस्य प्रातिपदिकान्तत्वाऽभावाण्णत्वं न' इति ख. ग. पाठः ।

३. 'वस्तुतो णत्वग्रहणम्' इति ग. पाठः ।

४. 'अल्लोपऽस्यासिद्धत्वात् । इदं च 'प्रनिरन्तः' (८।४।२५) इत्यत्र भाष्ये ध्वनितमिति शब्दकौस्तुभे स्पष्टमिति दिक्' ग. पाठः ।

५. 'इति दिक्' इति क. ग. नास्ति ।

६. 'प्रातिपदिकेत्यादि' ग. पाठः ।

तत्पुरुषयोः पूर्वपदे । असामर्थ्येन समासाऽसम्भवात् । 'तदन्तस्य' इति षष्ठी-तत्पुरुषः । यदि तु 'न' इत्यनेन पदं विशेष्यते तदा विशेषणेन[1] तदन्तविधौ लब्धेऽन्तग्रहणम्[2] 'पदस्य' (८।१।१६) इत्यस्य वैयधिकरण्येनाऽन्वये तात्पर्य-ग्राहकमिति भाष्यकृत इति हलन्ते निरूपयिष्यामः ।

**विभाषा ङिश्योः** (६।४।१८०)—'नपुंसकाच्च' (७।१।१९) इति विहितः शी इह गृह्यते, न तु 'जश्शसोः शिः' (७।१।२०) । तस्य सर्वनामस्थानत्वेन तस्मिन् भत्वाऽसम्भवात् ।

**प्रकारार्थमिति**—प्रकारः—सादृश्यम् । तच्च सुप्त्वेन[3] । 'मांस्पचनी' इत्यादावपि 'न लुमता' (१।१।६३) इति निषेधाऽनित्यत्वाच्छसादिपरत्वं बोध्यम् ।

अत्र 'सुप्रभृतिषु' इति वाच्ये, 'शस्प्रभृतिषु' इत्युक्त्याऽन्यत्र[4] क्वचि-देव प्रवृत्तिर्बोध्यते । अत एव पत्-हृत-निशां ग्रहणं चरितार्थम् । तेषां द्विविधानामपि कोशसिद्धत्वेन, तत्र व्यवस्थाऽर्थताया एव वक्तव्यतया, प्र[5]त्य-यमात्रे प्रवृत्तौ तस्या असम्भवेन, तद्वैयर्थ्यं स्पष्टमेव[6] ।

प्रकाराऽर्थत्वे प्रमाणमाह—**भाष्ये** इति । तत्र हि 'शस्प्रभृतिषु' इत्यु-च्यते, अशस्प्रभृतिष्वपि दृश्यते, 'शलादोषणी' 'ककुद्दोषणी याचते महादेवः' इत्युक्तम् । आद्यस्याऽध्रिगुप्रैषे पठ्यमानस्य शलाकाऽऽकारे दोषणी इत्यर्थः । छान्दसः कादिलोपः । एतेन 'दोषेत्यकारान्तस्य दूषणवाचिनो दोषन्नादेशः' इत्यपास्तम् ।

**तेन पदङ्घ्रिरिति**—ए[7]तेन कोशस्थपदादीनां पादाद्यादेशत्वे, पादादिभ्यः पृथक् पदादिवचनं तत्र व्यर्थम् । न हि स्थान्यादेशयोः पृथगुपादाने प्रयोज-

---

१. **'विशेषणत्वेन'** क. पाठः ।

२. **'अन्तग्रहणं स्पष्टार्थम्'** ख. पाठः ।

३. **'प्रत्ययत्वेन'** ख. पाठः । ४. **'अन्यत्र प्रत्यये क्वचिदेव'** ख. पाठः ।

५. **'प्रत्ययमात्रे एवावश्यकतया'** ख. पाठः ।

६. **'स्पष्टमेवेति दिक्'** ख. ग. पाठः । ७. **'न च'** ख. ग. पाठः ।

नमस्ति । स्थान्युपादानेनैव तदर्थाऽभिधानसमर्थाऽऽदेशस्याऽप्यर्थबोधनात्[1] । अत एव नसाद्यादेशानां कोशेऽनुपन्यासः, [2] इति परास्तम् । भिन्नत्वेऽपि[3] 'तृज्वत् क्रोष्टुः' (७।१।९५) इतिवद् व्यवस्थाऽर्थमत्याऽऽवश्यकत्वेन, सौ परतो हृदादीनां प्रयोगार्थं प्रकारार्थत्वस्यावश्यकत्वात् । स्पष्टं चेदं समासकौमुद्याम् 'वा शोकष्यञ्रोगेषु' (६।३।५१) इति सूत्रे ।

ननु कोशे पदादयः शब्दपराः । वाच्यवाचकयोर[4]भेदोपचाराच्च प्रसिद्धार्थपदोपस्थित[5]ऽर्थेनाऽभेदाऽन्वयः । अर्थपरत्वं तु न सम्भवति । इतः पूर्वं शक्तिग्रहाऽभावात् । एवं चैकशेषप्राप्तिरेव न । अभेदश्च वाच्यवाचकभावमादाय पर्यवस्यतीति कोशादेः शक्तिग्राहकताऽपि सङ्ग[6]च्छते । एवं च[7] नाऽत्र क्षतिः प्रकारार्थत्वाऽभावेऽपीति चेन्न । कोशे तेषामर्थपरत्वात् । शक्तिग्रहस्तु पदत्वे हेतुकानुमानेन सामान्यत एव पदप्रकारकः । एवञ्च 'विष्णुपदार्थाऽभिन्नः कृष्णपदार्थः' इति क्रमेण बोधः । 'विनायको विघ्नराजः' इत्यादौ द्वन्द्वविषये 'एते विनायकपदार्थाऽभिन्नाः' इति बोधः । सर्वपर्यायद्वन्द्ववति कोशे 'एते पदार्था अभिन्नाः' इत्यध्याहारेण बोधः । 'एतत् पदममुकवाचकम्' इति

---

१. '०प्यर्थबोधनेन तदनुपादानेऽपि क्षत्यभावात्' ग. पाठः ।

२. 'इति वाच्यम्' ख. पाठः ।

३. 'भिन्नत्वेऽपि' इति क. नास्ति ।

४. 'अभेदोपचाराच्चाऽभेदान्वयः' ग. पाठः ।

५. 'पदोपस्थापितार्थेन' ख. पाठः ।

६. 'ग्राहकतापि सङ्गच्छते । यद्वा पदादयः तत्तत्पदमात्रप्रकारकार्थबोधकाः । सूत्रञ्चाऽभिव्यक्तेतिन्यायेन हृदयत्वादिना हृदयाद्यर्थकानामेव व्यवस्थापकम् । तथा च प्रकारार्थत्वस्य कथमेतत्प्रयोजनमिति । तन्न । तस्य न्यायस्य विशिष्टरूपोपादानविषयत्वेन, पदकार्यविषयत्वेन चाऽत्राऽप्राप्तेरित्याहुः । –ति ग. पाठः ।

७. 'एवञ्च' इत्यारभ्य 'इत्याहुरिति दिक्' (४६१ पृष्ठे) इत्यन्तः क. पाठः ।

शक्तिग्रहस्तु स्वस्वप्रसिद्धपदार्थमादाय तत्तत्पुरुषस्याऽनियतः । पश्चान्मनसैव । आदावेव वा । अत एव तृतीयाध्यायतृतीयपादे **शङ्करभगवत्पादैरु**द्गोथाधिकरणे 'सामानाधिकरण्यं चतुर्द्धा, अध्यासाऽपवादैकत्वविशेषणत्वैः' इत्युक्त्वा, एकत्वे--'द्विजोत्तमो ब्राह्मणो भूदेवः' इत्युदाहृतः । नेदं लौकिकवाक्यम् । तत्रैकेनैव विवक्षिताऽर्थसमर्पणाच्छब्दद्वयोच्चारणवैयर्थ्यस्याऽग्रे तैरवोक्तत्वात् । तस्मात् कोशवाक्यमेवैतत् । तच्च तस्याऽर्थपरत्वे एव सङ्गच्छते । (अत एव 'नामन्त्रिते समानाधिकरणे' (८।१।७३) इति सूत्रे 'सामान्यवचनम्' इत्यस्य प्रत्युदाहरणं भाष्ये—'अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये, एतानि तेऽघ्न्ये नामानि' इति दत्तम् । अन्यथैकार्थबोधकत्वरूपसामानाधिकरण्यस्याऽप्यत्राऽभावात् तदसङ्गतिः स्पष्टैव) ।

एकशेषस्तु न । तथा सति तत्तच्छब्दस्वरूपस्य सम्यग्बोधाऽनापत्तेः । कोशस्य चाऽनेकशब्दानां स्वरूपबोधनपूर्वकं तेषामेकार्थबोधने तात्पर्यात् । एतदेवाऽभिप्रेत्योक्तम्—'भेदाख्यानाय न द्वन्द्वो, नैकशेषो, न सङ्करः' इति ।

'उक्तलिङ्गभेदाख्यानाय 'खं नभः श्रावणो नभाः' इत्यस्य स्थाने 'खश्रावणौ तु नभसी' इति न कृतम् । 'विष्णुर्नारायणः कृष्णः' इत्यादौ स्वरूपभेदाऽऽख्यानायैकशेषो न कृतः' इति तदर्थः । अत एव 'यत्तदेतेभ्यः' (५।२।३९) इत्यादौ पाणिनिनैकशेषो नाऽकारि । 'कृतोऽत्र भिन्नलिङ्गानामनुक्तानां क्रमादृते' इत्यस्य 'अनुक्तानाम्—स्थानान्तरेऽनिर्दिष्टानां भिन्नलिङ्गानां द्वन्द्वः' एकशेषश्च न कृतोऽन्येषान्तु कृत एव, यथा 'अप्सरोयक्षरक्षोगन्धर्वकिन्नराः' इति । तथा 'मातापितरौ' इति, 'पितरौ' इति चैकशेषः। भिन्नलिङ्गानाम्, भिन्नस्वरूपाणामपि । 'विरूपाणाम्' इति च तत्र प्राप्तिः । एवं भिन्नलिङ्गानां मिश्रतारूपः सङ्करोऽपि न कृतः । पूर्वपरत एकलिङ्गानां मध्ये भिन्नलिङ्ग इति न कृतमिति यावत् । यथा 'स्तवः स्तोत्रं

---

१. क. कुण्डलितः पाठः ।

२. 'स्थानान्तरनिर्दिष्टानाम्' इति क. पाठः । स त्वशुद्धः ।

नुतिः स्तुतिः' इत्येव कृतम् न तु 'स्तुतिः स्तोत्रं स्तवो नुतिः' इति। 'क्रमादृते' इत्यस्य 'वर्गाः पृथ्वीपुरक्ष्माभृद्वनौषधि' इत्याद्युदाहरणम्। तत्र द्वन्द्वसङ्करौ कृतावेवेति स्वामी' इत्याहुरिति दिक्।

([1]शास्त्रस्य च न पदपरेषु प्रवृत्तिः। 'उभात्' (५।२।४४) इत्यादिनिर्देशात्। न चाऽत्र संज्ञात्वम्। आधुनिकसङ्केताऽभावात्। 'अभिव्यक्त' इति न्यायोऽप्यत्र नास्ति। अपदकार्यत्वात्। अत एव सर्वनामसंज्ञायां संज्ञाप्रतिषेधो वार्त्तिककृताऽऽरब्धः। एवं च नाऽत्र क्षतिः प्रकाराऽर्थत्वाऽभावेऽपीत्यरुचेराह—**आसन्यमिति**)।

**भाष्यादिति**—'ककुद्दोषणी' इति पूर्वोक्तादेवेत्यर्थः। न चाऽत्र प्राण्यङ्गत्वादितरेतरयोगाऽभावेन, समाहारद्वन्द्वे, एकशेषे च कृते भाष्यं सुयोजमेव, एतस्य केवलस्य नपुंसकत्वाऽभावेऽपीति वाच्यम्। अल्पाऽच्तरत्वेन दोःशब्दस्य पूर्वनिपाताऽऽपत्तेः।

किञ्च[2] तदन्ते आदेशो दुर्लभः, विशेष्याऽसन्निधानात्। सत्यपि तस्मिन् सम्पूर्णस्याऽऽदेशाऽऽपत्तिः। निर्दिश्यमानस्य कस्याऽप्यभावात्। स्थानिनामाक्षेपेणेव लाभात्। न चाऽवयवाऽनन्यत्वात् सिद्धिः। 'शस्प्रभृतिषु' इत्युक्त्या तत्प्रकृतिभूतानामेवाऽऽदेशौचित्यात्। तस्मात् 'ककुद्' इति पृथक् पदम्। ध्वनितं चैतत् **कैयटेन** 'ककुद्' इत्येतद्रहितम् 'दोषणी याचते' इति प्रतीकं गृह्णता। 'शला दोषणी' इत्यत्राऽपि भिन्ने पदे। **दक्षिणं दोरिति**—'तमुपाद्रवदुद्यम्य' इति पूर्वपादघटकोद्यम्येत्यनेन कर्मतयाऽन्वेति।

**दोषं तस्येति**—दोषम्=हस्तम्, दूषणं च, भजत इति तदर्थः। 'दोर्दोषा च भुजो बाहुः' इति**निघण्टौ** दर्शनात् स्त्रि[3]यां भागुरिमते टाबित्याहुः।

---

१. क. ग. नास्ति।

२. 'किञ्च' इत्यारभ्य 'औचित्यात्' इत्यन्तः पाठो ग. नास्ति।

३. 'स्त्रियामपि' ख. ग. पाठः।

**द्वयोरह्नोरिति**—'तद्धितार्थ' (२।१।५१) इति समासः। 'कालाट्ठञ्'। (४।३।११)। 'द्विगोर्लुक्' (४।१।८८) इति लुक्। 'राजाहः' (५।४।९१) इति टच्। अह्नादेशः।

**सङ्ख्यावि** (६।३।११०)—'सायेभ्यः' इति वक्तव्ये पूर्वग्रहणमुत्तरपद इत्यस्याऽधिकृतस्य षष्ठ्यन्तत्वलाभाय। (पू[1]र्वशब्दो हि 'भीमो' 'भीमसेनः' इतिवत् पूर्वपदार्थकः)। तदेतद् ध्वनयन्नुदाहरति—**द्व्यह्नीति**। एतेनोत्तर-पदाऽधिकारबाधे। मानाऽभावात्, 'न लुमता' (१।१।६३) इत्यनित्यत्वस्य क्लृप्तत्वाच्च, द्व्यह्नस्थितः' इत्येवैतदुदाहरणमिति ('द्व्यह्नि[2]' इत्युदाहरणं चिन्त्यमिति) परास्तम्।

**अह्नः साय इति**—स्यतेर्घञि अवसानवचनः 'साय' शब्दः। 'सङ्ख्या-विसाय' (६।३।११०) इति ज्ञापकादेकदेशिसमासः।

**विश्वपा इति**—'विश्वं पाति' इति विग्रहे 'आतोऽनुपसर्गे' (३।२।३) इति के प्राप्ते, वाऽसरूपन्यायेन क्विप्।

**दीर्घाज्जसि च** (६।१।१०५)—चकारादिचीत्यनुवृत्तिः। यत्तु 'दीर्घा-च्छसि' इत्येव सूत्र्यताम्। 'दीर्घाच्छस्येव' इति च नियमः। एवं च चकारो न का[3]र्यः। 'न' इति च नाऽनुवर्त्तनीयमिति महल्लाघवम्' इति। तन्न। 'दीर्घादेव शसि' इति विपरीतनियमाऽऽपत्तेः।

**न्याय्य[4]त्वादिति**—जसि पूर्वसवर्णदीर्घनिषेधस्य न्याय्यत्वादित्यर्थः।

[न[5]नु अक्पदोपस्थापिताऽऽकारादीनामण्त्वेन )अ[6]ण्पदोच्चारणेन तेषाम-प्युच्चरितत्वेन च) तैरणुदित्सूत्रबलाद् दीर्घादीनामुपस्थानेऽपि, तेषामक्-

---

१. ग. पाठः।

२. क. कुण्डलितः ख. ग. पाठः।

३. 'न कर्त्तव्यः' ख. पाठः।

४. 'इत्यर्थः' इत्यन्तोऽयं क. पाठः।

५. क. पुस्तके मसीलेपननिस्सारितोऽयम् 'विरोध इति मतेनेदम्' (४६३ पृष्ठे) इत्यन्तो ग्रन्थः। ख. ग. तु वर्त्तते।

६. ग. नास्ति। ख. पाठः।

पदोत्तरषष्ठ्या स्थानित्वबोधे मानाऽभावः। प्रत्ययानां प्रकृतिवृत्त्युपस्थाप्ये एवाऽन्वयात्। सवर्णिनां प्रकृतवाक्यघटकपदजन्यपदार्थोपस्थितिविषयत्वा-ऽभावेन शाब्दबोधविषयत्वस्य वक्तुमशक्यत्वाच्च। तथा चाऽणुदित्सूत्रे भाष्यम्-'ऋक्' इत्युक्ते संपाठमात्रं गम्यते' इति। अस्य भावः—'ऋचं वद' 'ऋक् पठ्यताम्' इत्यादौ शब्दानुपूर्वीरूपायाः 'अग्निमीळे' इत्यादिकाया ऋच एव कर्मत्वं प्रतीयते, न तु तदर्थस्येति। न च 'द्विरेफमानय' इत्यादौ द्विरेफपदोपस्थितभ्रमरपदेनोपस्थितषट्पदस्य द्विरेफपदोत्तरद्वितीयया कर्मत्व-बोधवदत्राऽपि भविष्यतीति वाच्यम्। अनयैवाऽनुपपत्त्या तत्र 'द्विरेफ'पदेन स्वशक्य-वाच्यत्वसम्बन्धेन षट्पदस्यैवोपस्थितेर्नव्यैरङ्गीकारात्। तथा च दीर्घेषु प्राप्तेरभावाद् व्यर्थो निषेध इति चेन्न। अस्मादेव ज्ञापकात् प्रत्याहार-पदानां तद्वाच्यवाच्ये लक्षणाऽङ्गीकारात्।

न चैवं ह्रस्वादीनां शक्त्या, दीर्घादीनां लक्षणयोपस्थितौ, युगपद् वृत्तिविरोध इति वाच्यम्। तस्याऽदोषत्वात्। अत एव 'गङ्गायां मीन-घोषौ' इत्यादितोऽपि बोधः। ह्रस्वानामपि तद्वाच्यवाच्यत्वेन लक्ष्यतावच्छेद-काऽऽक्रान्तत्वाच्च। न च ह्रस्वस्य ह्रस्ववाच्यता कथम्, अभेदे तदयोगा-दिति वाच्यम्। पुरुषभेदादिना भेदमादाय सवर्णत्ववत् तस्याऽप्युपपत्तेः। यत्तु 'स्ववाच्यसवर्णित्वं लक्ष्यतावच्छेदकम्' इति। तन्न। 'पुंगानम्' इत्यादौ 'पुमः खय्यम्परे' (८।३।६) इत्याद्यापत्तेः। [1]**अन्ये** त्वस्मादेव ज्ञापकात् सति तात्पर्यग्राहके क्वचित् प्रकृतिवृत्तिप्रयोज्योपस्थितविषयेऽपि प्रत्ययाऽन्वयस्य, समभिव्याहृतपदप्रयोज्योपस्थितिविषयस्य च शब्दबोधविषयत्वं ज्ञाप्यते। एवं च द्विरेफपदेऽपि न लक्षणा। वार्त्तिककृता तूक्ताऽनुपपत्त्यैव जातिग्रहण-माश्रित्याऽणुदित् (१।१।६९) सूत्रेऽण्ग्रहणं प्रत्याख्यातमिति दिक्। **न्याय्यत्वा-दिति**—परत्वेनेत्यर्थः। 'परस्परलब्धाऽवकाशयोरेकत्र प्रवृत्तिमात्रं विरोधः' इति मतेनेदम्]।

---

१. 'अन्ये तु' इत्यारभ्य 'न लक्षणा' इत्यन्तोऽयं पाठो ग. नास्ति।

**धातोः किं, हाहानिति**—गन्धर्वविशेषवाच्यव्युत्पन्नं प्रातिपदिकम्। यदि तु 'हा' इति शोकव्यञ्जकशब्दं जहातीति 'हाहा' इत्ययमपि क्विबन्तो[1] विजन्तो वा क्रियाशब्दः, तदा—अकारेण सह वर्त्तते इति साः, तान् 'सान्' इति प्रत्युदाहरणं बोध्यम्।

**अपरे** तु 'क्त्व.' 'श्नः' इत्यादिसिद्ध्यर्थम् 'आतोऽनाप इति वक्तव्यम्' इति वार्त्तिककृतोक्तम्। भाष्यकृता च[2] 'हलः श्नः' (३।१।८३) इत्यादिनिपातनेन, योगविभागेन वा तत्सिद्धिमाश्रित्य प्रत्याख्यातम्। एवं च 'सा' शब्दादेर्यद्यभिधानम् तदा योगविभागेन लोपः सूत्रकृत इष्ट एवेत्येव युक्तम्।

सूत्रे धातुग्रहणं 'खट्वा' इत्याद्याबन्तनिवृत्त्यर्थमेव। भाष्यवार्त्तिककृतोरज्ञानकल्पनाऽपेक्षया ईदृशाऽर्थकल्पनस्यैवौचित्यात्। अत एव 'हाहा' शब्दस्याऽव्युत्पन्नत्वेऽपि योगविभागेनाऽऽतो लोप इत्युक्तं **मुकुटेन**।

([3]आबन्तप्रकृतिकाऽऽचारक्विबन्तेभ्यः कर्त्तृ क्विप् तु अनभिधानान्न भवतीति भाष्यप्रदीपोद्द्योते निरूपितम्) अत एव 'प्रथमयोः' (६।१।१०२) इतिसूत्रस्थभाष्यं सङ्च्छते। तत्र हि 'पररूपं बाध्यसामान्यचिन्तया दीर्घमात्रस्य बाधकम्' इति पक्षे 'रामान्' इत्यादिसिद्ध्यर्थम्, 'अतो दीर्घः' (७।३।१०१) सुपि च' (७।३।१०२) इति च[4]ाऽनुवर्त्तमाने, 'बहुवचने झल्येत्' (७।३।१०३) इति सूत्रे 'बहुवचने' इति योगविभागेन पररूपबाधकं दीर्घं विधाय, 'रामाणाम्' इत्यादावनेन दीर्घे परत्वात् कृते 'अग्नीनाम्' इत्यादौ सावकाशस्य नुटोऽप्राप्तिमाशङ्क्य, 'ह्रस्वनद्यापः' (७।१।५४) इति सूत्रे 'आज्जसेः' (७।१।५०) इत्यत आद्ग्रहणाऽनुवृत्त्या समाधाय, 'कीलालपाम्' इत्यादौ नुड्विधायके 'आतो धातोः' (६।४।१४०) इत्यनुवर्त्त्य, लोपेन नुड्बाध[5]केन

---

१. क्विबन्तः' इति क. पाठः।

२. 'भाष्यकृता च तत् 'हलः श्न' इति ख. पाठः।

३. क. कुण्डलितः। ख. पाठः।

४. 'वाऽनुवर्त्तमाने' ख. पाठः।

५. 'नुड्बाधनेन' ग. पाठः।

समाहितम् । नुड्विधायके आब्ग्रहणं च न कार्यमिति तदाशयः । अधात्ववयवाऽऽकारान्तहाहादीनां लोपाऽभावे तु तदसङ्गतिः स्पष्टैवेत्याहुः ।

**क्त्वः श्न इति**—'क्त्व इट्' 'श्नः शस्येत्वम्' इत्यादिप्रयोगस्थान्युदाहरणान्यत्र । एतेन 'आचारक्विबन्तात् कर्त्तरि क्विपा प्रयोगाणामुपपत्तौ, योगविभागो व्यर्थः' इति परास्तम् । 'क्त्वाप्रत्ययस्येट्' इत्यर्थे साधुत्वाऽन्वाख्यानाय तदावश्यकत्वात् । आचा[1]रक्विबन्तस्य भाष्ये क्वाऽप्यनुपन्यासेन, तेभ्यः कर्त्तृक्विपोऽनभिधानस्यैव लाभाच्च ।

**शेषो घि** (१।४।७) 'यूस्त्र्याख्यौ' (१।४।३) इत्यतो 'यू' इति, 'ङिति ह्रस्वश्च' (१।४।६) इत्यतो 'ह्रस्वः' इति चाऽनुवर्त्तते । व[2]चनविपरिणामेनाऽन्वयः । 'शेषः' इत्यस्याऽर्थमाह—**अनदीत्यादि** । **तदन्तमिति**—अनुवृत्तयुभ्याम[3]सखीति—पर्युदासलभ्यस्य, शेषपदोपस्थाप्यस्य वा विशेषणात् तदन्तलाभ इति भावः ।

**सखिवर्जमिति**—'सखिभिन्नावयवौ' इति वर्णसंज्ञापक्षेऽर्थः, न तु 'सख्यवयवभिन्नौ' इति । तेन 'अतिसखिना' इत्यादिसिद्धिः । 'सखिभिन्नौ' इति तदन्तपक्षे । न चाऽऽद्ये 'कृतं सख्या' इति वाक्ये संज्ञाऽऽपत्तिः । पर्युदासेन तद्भिन्नप्रातिपदिकान्त्यवर्णस्यैव ग्रहणादिति भावः । पर्युदस्यमानसमर्पक'सखि'शब्देन तदन्तविधिस्तु दुर्लभः । विशेष्याऽसन्निधानात् । शब्दरूपविशेष्यमादाय तदन्तविधिस्तु न, नियामकाऽभावात् । तस्याऽतिप्रसक्तत्वाच्च । कार्यकालपक्षेऽङ्गरूपविशेष्यसन्निधानेऽपि, नञैकार्थीभावाऽऽप[4]न्नस्य तदन्वयो वक्तुमशक्यः । (अ[5]त एव 'सुसखे' इत्यादि सिद्ध्यति) इति ध्येयम् ।

---

१. 'आचारक्विबन्तस्य भाष्ये' क. पाठः । 'आचारक्विबन्तप्रकृतिककर्त्तृक्विबन्तस्य' ख. पाठः । 'क्विबन्तप्रकृतिककर्त्तृक्विबन्तस्य' ग. पाठः ।

२. 'विभक्तिविपरिणामेन' ख. ग. पाठः ।

३. 'युभ्यां शेषस्य विशेषणात्' ग. पाठः ।

४. 'आपन्नस्य निष्कृष्य तदन्वयो' ख. ग. पाठः । ५ क. कुण्डलितो ग. पाठः ।

ननु 'यस्येति च' (६।४।१४८) इति सूत्रे भाष्ये[1] 'इवर्णस्य ईति किमुदाहरणम्' इत्युक्त्वा, 'दाक्षी' इत्यादीनां सवर्णदीर्घेणाऽन्यथासिद्धि निरूप्य, इदं तर्हि 'अतिसखेरागच्छति'। 'अत्र यदि लोपो न स्यात् तदोपसर्जनह्रस्वत्वे कृतेऽपि, दीर्घस्य पूर्वाऽन्तवद्भावेन सखिशब्दत्वात् 'असखि' इति घिसंज्ञाप्रतिषेधः प्रसज्येत। लोपे तु लक्षणप्रतिपदोक्त(प० ११५)परिभाषया न दोषः' इत्युक्तम्[2]। तत्कथं पर्युदासो व्याख्यायते ? तस्मिन् हि विशिष्टस्य[3] सखिभिन्नत्वेन घिसंज्ञा निर्बाधैवेति भाष्यमसङ्गतं स्यात्। यद्वा पर्युदासेऽपि 'अत्वसन्तस्य'[4] (६।४।१४) इति सूत्रेऽधातोरित्येतद्घटकधातुपदस्य 'पिण्डग्रः' इत्यादिसिद्धयर्थं धात्ववयवे इव, सखिशब्दस्य तदवयवे लक्षणामाश्रित्य, 'सख्यवयवभिन्नौ' इत्यर्थो वाच्यः। घिसंज्ञायां वर्णसंज्ञापक्ष एव युक्तः। अत एव 'घ्यन्तादजाद्यदन्तं विप्रतिषेधेन' (वा० २।२।३३) इति वार्तिकव्यवहारः। एवं च 'शोभनस्य सख्युः सुसखेः' इति वक्ष्यमाणमयुक्तम्। न चेकारलोपेऽपि लिङ्गविशिष्ट(प० ७३)परिभाषया दोषः। कार्यकालपक्षे 'घेर्ङिति' (७।३।१११) इत्यादिभिरेकवाक्यतया विभक्तौ लिङ्गविशिष्टाऽग्रहणात्'। तस्या[5] अनित्यत्वाच्च। 'ख्यत्यात्' (६।१।११२) इतिसूत्रे 'किमर्थं विकृतनिर्देशः ?। न 'सखिपतिभ्याम्' इत्येवोच्येत ? गरीयांश्चैव निर्देशः स्यात्, इह च स्यात्-'अतिसखेरागच्छति' इति। अत्र ङ्यन्तप्रकृतिक एवाऽयम्,। लक्षणप्रतिपदोक्तपरिभाषामनाश्रित्येदम्, विहितविशेषणाऽनाश्रयणवत्। तदाश्रये तु वक्ष्यमाणे 'सख्युः' 'लून्युः' इत्यादावव्याप्तिरेव दोषः, 'भूपतेः' इत्यादावतिव्याप्तिरपीति न तद्विरोधोऽस्य भाष्यस्य।

(यत्तु[6] 'विहितविशेषणाऽऽश्रयणात् 'भूपतेः' इत्यादौ न दोषः' इति

---

१. 'भाष्ये' इति ग. नास्ति।

२. 'इत्युक्तं भाष्ये' ग. पाठः। ३. 'शिष्टस्य' ख. पाठः।

४. 'अत्वसन्तस्येति' इत्यारभ्य 'धात्ववयवे इव' इत्यन्त' पाठो ग. नास्ति।

५. 'तस्या अनित्यत्वाच्च' इति ग. नास्ति। ६. क. नास्ति।

**कैयटः**। तन्न। सिद्धान्ते फलाऽभावात्। त[1]दन्तसंज्ञापक्षेऽपि 'असखि' इति घ्योरेव विशेषणम्। अवाऽन्तरवाक्यार्थबोधोत्तरमेव तदन्तविधिप्रवृत्तेः)। त[2]दन्तसंज्ञापक्षे ततस्तदन्तविधिः, 'उतश्च प्रत्ययात्' (६।४।१०६) इतिवत्। तच्च सख्यवयवभिन्नत्वेनैव। तदन्तविधिस्तु शेषपदार्थविशेषणतया बोध्यः। तत्प्रत्याख्यानेऽपि शब्दरूपं विशेष्यमादाय पूर्वसाहचर्यादिति चेत्।

सत्यम्। प्रकृतसूत्रस्थ**हरदत्त**ग्रन्थाऽनुरोधेन मूलस्य सत्त्वात्। अत्र तत्त्वं महद्भिर्निर्णेयम्[3]।

**मत्यै इति**—न चाऽनवकाशत्वान्नदीसंज्ञैव भविष्यतीति वाच्यम्। 'आ कडारात्परं कार्यम्' इति पाठे समावेशसम्भवात्। तद्धि पूर्वयाऽनवकाशया बाधे प्राप्ते परस्या विधानार्थम्, न तु पूर्वाबाधनाऽर्थम्। एवं च यत्र पराऽनवकाशासमावेश इष्टस्तत्र विपरीतपाठेन निर्वाहः कार्य एतत्पक्षे। कार्यं चाऽत्र प्रकरणात् संज्ञैव। 'परा संज्ञा' इति वक्तव्ये 'परं कार्यम्' इत्युक्तिस्तु 'विप्रतिषेधे' (१।४।२) इत्युत्तरसूत्राऽर्था। अत एव 'वर्णयोर्नदीसंज्ञा' इति पक्षे 'हे प्रियवात्सी३का' इत्यत्र कप्, 'गुरोरनृतः' (८।२।८६) इति प्लुतश्च सिद्धयति। अत एव विश्च ना च विनरौ। तावाचष्टे विनयति। 'प्रविनय्य गतः' इत्यादौ 'ल्यपि लघुपूर्वात्' (६।४।५६) 'द्वन्द्वे घि' (२।२।३२) इतिसूत्राभ्यामयादेश-पूर्वनिपातसिद्धिः। इदमेव चाऽस्मिन् प्रकरणे संज्ञानां बाध्यबाधकभावस्य ज्ञापकम्। तेनाऽनवकाशया सावकाशा बाध्यते। द्वयोस्तु सावकाशयोर्विप्रप्रतिषेधे परया पूर्वेति बोध्यम्। तथा च नदीत्वादाडागमे, घित्वाच्च गुणे, 'मतयै' इति स्यादिति भावः।

---

१. 'तदन्तसंज्ञापक्षेऽप्येतद्भाष्यप्रामाण्यात् घिशब्दस्य तदन्तविधिप्रवृत्तेः। तच्च सख्यवयवभिन्नत्वमेवेति चेत् सत्यम्। प्रकृतसूत्रस्थहरदत्तग्रन्थानुरोधेन' इति ग. च. पाठः।

२ 'तदन्तसंज्ञापक्षे ततस्तदन्तविधिः' इति ख. नास्ति।

३. 'ननु यस्येति चेति' (४६६ पृष्ठे) इति शङ्काग्रन्थस्य इदमुत्तरम्।

ननु 'एका संज्ञा' इत्येव पाठो युक्तः। पूर्वपाठे 'पार्श्वम्' इत्यस्याऽसिद्ध्यापत्तेः। 'पर्श्वा' (वा० ४।२।४३) णसि, भत्वाऽपवादतया 'सिति च' (वा० ६।१।१२७) इति पदत्वे प्राप्तेऽनेन[1] भत्वापत्तावोर्गुणाऽऽपत्तेः। पदत्वन्तु 'लोपः शाकल्यस्य' (८।३।१९) इतिलोपप्रवृत्त्या चरितार्थमित्यभिप्रेत्याऽऽह— **एकसंज्ञेति**। तथा चाऽनवकाशत्वात् स्त्रियां ङिति नदीसंज्ञैव भविष्यतीति भावः।

यत्तु 'परं कार्यम्' इति पाठेऽपि शेषग्रहणं व्यर्थमेव, नदीसंज्ञावचनसामर्थ्येन घिसंज्ञाबाधात्। ह्रस्वलक्षणनदीसंज्ञायाः प्रत्ययाऽपेक्षत्वेन बहिरङ्गत्वादन्तरङ्गायां घिसंज्ञायां सत्यां 'घेर्ङिति' (७।३।१११) इति गुणे, ह्रस्वाऽभावात्, नदीसंज्ञा निर्विषया स्यात्' इति। तन्न। भूतपूर्वगत्याश्रयणेन चारितार्थ्यसम्भवात्। ('ए[2]का संज्ञा' इति पाठेन फलैक्याय बाधकल्पनमेवोचितम्' इत्यन्ये)।

**अधिकारादिति**—अत्र यद्वक्तव्यं तदुक्तमाकडारसूत्रे। **स्पष्टार्थमिति**[3]—'तदन्तसंज्ञा' इति भाष्यनये स्पष्टतया तदन्तविधिलाभाऽर्थमित्यर्थः।

**मात्रे इति**—न च 'ऋतो ङि' (७।३।११०) इति नियमाद् गुणाऽभावे न दोष इति वाच्यम्। 'पित्रा' इत्यादौ 'ना'भावस्य दुर्वारत्वात्। 'यू'-ग्रहणाऽनुवृत्तावेव तात्पर्यग्राहकत्वस्योचितत्वाच्च।

**आङो ना** (१।३।१२०)—(ऊँ[4]रुया' 'धृष्णुया' इत्यादौ प्रकृतिविशेषसुब्विशेषसापेक्ष-नाभावापेक्षयाऽन्तरङ्गत्वात् पूर्वं 'सुपां सुलुक्' (७।१।३९) इति यादेशे कृते, नादेशो न, भ्रष्टावसरत्वादित्या[5]हुः)।

---

१. 'प्राप्ते पुनरनेन' ग. पाठः।

२. क. नास्ति। ख. ग. पाठः।

३. इतोऽग्रे—'अत्र सूत्रे करणं स्पष्टार्थम्' इति ख. पाठः। 'पतिः समासे' इत्येतदर्थमावश्यकमिति तत्रैव निरूपयिष्यामः' इति ख. ग. पाठः।

४. क. कुण्डलितो ग. पाठः। ५. 'इत्याहुः' इति क. नास्ति।

'पुंसि' इति तु नोक्तम् । 'अमुना कुलेन' इत्यसिद्ध्यापत्तेः । न च नुमेष्टसिद्धिः । मुत्वस्याऽसिद्धत्वेन नुमोऽप्राप्तेः । नाऽऽदेशे तु मुत्वं नाऽसिद्धम् । 'न मु ने' (८।२।३) इति निषेधात् । स[1] हि 'न मु टादेशः' इतिवार्त्तिकस्वारस्येन नादेशे एव । एतेन 'तन्त्रेण नादेश-नकारयोर्विषये तौ प्रति, अन्यं प्रति च, मुत्वमसिद्धं नेति तदर्थः' इत्यपास्तम् । किञ्च ['नन्वा[2]ङो नुट् पुंसीति ('नुमा[3]ङि पुंसि' इति वा) सूत्रं कार्यम् । 'न मु ने' इत्यस्य चाऽकारस्योच्चारणार्थतया 'नकारे कर्त्तव्ये' इत्यादिरर्थः । न च नपुंसके 'अमुना' इत्याद्यसिद्धिः । 'इकोऽचि' (७।१।७३) इति नुमैव सिद्धेः । (न च[4] 'प्रियत्रि'शब्दे नाभावे हलादिविभक्तित्वात् 'षट्त्रिचतुर्भ्यः' (६।१।१७९) इति विभक्तेरुदात्तत्वं प्राप्नोति, नुमि तु नेति, कथं 'नुमाङि पुंसि' इति न्यासः, कथं वा नपुंसके नुमेष्टसिद्धिरिति वाच्यम् । तस्य गौणेऽप्रवृत्तेः । स्पष्टं चेदं 'चतुरः शसि' (६।१।१६७) इति सूत्रे भाष्ये) । न च मुत्वस्याऽसिद्धत्वेनेनादेशे, गुणे, नुमादेरप्राप्तिः । नकारविषये तं प्रति, अन्यं प्रति च, मुत्वाऽसिद्धत्वाऽभावस्य 'न मु ने' (८।२।३) इत्यनेन बोधनात् । अत एव 'न मु ने' (८।२।३) इति सूत्रं चरितार्थम् । यथान्यासे चाऽमुनेत्यादिसिद्धिः । अन्यथा इनादेशे गुणेऽसिद्धिः स्पष्टैव ।

न[5] चैवमपीनादेशगुणयोः संभावितत्वेनाऽजादिविभक्तिपरेगन्ताङ्गरूपनिमित्तविनाशसम्भावनेन, पुंसि च घ्यन्तरूपनिमित्तविनाशसम्भावनेनाऽमुनेत्यसिद्धिरिति वाच्यम् । यथान्यासेऽपि दोषात् । 'न मु ने' (८।२।३) इतिसूत्रारम्भसामर्थ्यात् परिभाषाऽप्रवृत्तिरिति तूभयोः समानमिति चेन्न] । 'अमुष्मै कुलाय' 'अमुयोः' 'अमू कुले' इत्याद्यसिद्ध्यापत्तेः । 'न मु ने' (८।२।३) इति सूत्रविषये पूर्वं विभक्तिनिमित्तकार्याऽप्रवृत्तौ, मुत्वे, तस्य

---

१. 'स हि न मुटा' इत्यारभ्य 'इत्यपास्तम्, किञ्च' इत्यन्तः क. पाठः ।

२. 'इति चेन्न' इत्यन्तोऽयं क. कुण्डलितः ख. ग. पाठः । ३. क. नास्ति ।

४. ख. ग. पाठोऽयं नुम्न्यासविषयः । क. तु नास्ति ।

५. 'न चैवमपि' इत्यारभ्य 'उभयोः समानम्' इत्यन्तः क. कुण्डलितो ग. पाठ ः।

नकारविषये कमपि प्रत्यसिद्धत्वाऽभावेन, विभक्त्यादेशं प्रत्यसिद्धत्वेऽपि वा, स्मैभावात् परत्वेन नुमापत्तेः। अन्त्ययोरप्येत्वस्याऽप्रवृत्तौ, मुत्वे, नुमि चाऽनिष्टं स्पष्टमेव। किञ्च[1] गौणेऽपि 'षट्त्रिचतुर्भ्यः' (६।१।१७९) इत्यस्य प्रवृत्तिः' इति मते 'प्रियत्रिणा कुलेन' इत्यत्र तत्स्वरसिद्धये नपुंसकेऽपि परत्वान्नाभाव आवश्यक इति दिक्।

**आङितीति**—ङका[2]रविशिष्टा संज्ञा, न त्वस्य ङस्येत्त्वम्। अत एव 'हरिणा' इत्यादौ न गुणः। एवमौङ आप इत्यत्रापि बोध्यम्।

**घेर्ङिति** (७।३।१११)—अत्र 'सुपि च (७।३।१०२) इत्यतः 'सुपि' इति वर्त्तते। 'पट्वी' इति तेन सिद्धम्। अत्रेत्संज्ञकङकारादावित्यर्थ इति 'औङ आपः' (७।१।१८) इति सूत्रस्थभाष्ये स्पष्टम्। 'सुपां सुलुक्' (७।१।३९) इति सूत्रभाष्ये तु 'आङ्याजयारामुपसङ्ख्यानम्' (वा० ७।१।३९) इति विभक्तेराङादेशे, 'प्रवाहवा' इत्यत्र गुण उपन्यस्त इति बोध्यम्।

ननु 'घेर्ङि' इत्येव सूत्रमस्तु। 'ङकारादौ' इत्यर्थेनाऽदोषात्। आङादेशस्तु 'ङा' इत्येव वक्तुं शक्यः। न च 'आण्नद्याः (७।३।११२) इत्यादौ षष्ठ्यर्थतया विपरिणामेन 'यस्मिन्विधिः (प० ३३) इत्यस्याऽप्रवृत्तावर्थाऽसङ्गत्यापत्तिः, तत्प्रवृत्तौ स्वरूपतः सप्तम्या एव निमित्तत्वमित्यर्थस्य 'औङ आपः' (७।१।१८) इति सूत्रे भाष्ये ध्वनितत्वादिति चेन्न। 'बहुश्रेयस्याम्' इत्यादावामि 'आण्नद्याः' (७।३।११२) इत्यस्याऽनापत्तेः। ङकारादित्वस्याऽल्विधित्वेन स्थानिवत्त्वाऽयोगात्। तथा च नुडापत्तिः। इद्ग्रहणे त्वनुबन्धकार्यत्वात् स्थानिवत्त्वं स्पष्टमेवेति दिक्।

**ङसि** (६।१।११०)–इह एङो द्वित्वेऽपि यथासङ्ख्यं न। अस्वरितत्वात्। 'ङसोः' इत्येव सिद्धे 'ङसि' ग्रहणं चिन्त्यप्रयोजनम्।

**अच्च घेः**(७।३।११९)–'इदुद्भ्याम्' (७।३।११७) इति, 'ङेः' (७।३।११६) इति, 'औत्' (७।३।११८) इति च पदत्रयमनुवर्त्तते इत्याशयेनाऽऽह—

---

१. 'किञ्च गौणेऽपि' इत्यारभ्य 'नाभाव आवश्यकः' इत्यन्तः क. पाठः, ख. ग. नास्ति।

२. 'ङकारविशिष्टा' इत्यारभ्य 'इत्यत्रापि बोध्यम्' इत्यन्तः क. ग. पाठः।

**इदुद्भ्यामित्यादि**। 'घेरुत्तरस्य' इति तु नोक्तम्। आवृत्तौ मानाऽभावेन, तस्य षष्ठ्यन्तत्वेन च तथाऽन्वयाऽसम्भवात्।

इदुद्भ्यामिति किम्?। घेः[1] परस्य ङेरौद[2]च्चेति, ङिप्र[3]कृतेर्घेरौदच्चेति वाऽर्थो मा भूदिति।

औतस्तकार उच्चारणार्थः, न स्वरितत्वाऽर्थः, '[4]स्तीर्णे बर्हिषि समिधानेऽग्नौ' इत्यादौ स्वरितत्वाऽदर्शनात्।

नन्वौतः स्वरितत्वेऽपि नाऽग्नावित्यत्र, स्वरितश्रवणम्, अग्निशब्दस्याऽन्तोदात्तत्वेन 'एकादेश उदात्तेनोदात्तः (८।२।५) इत्यनेनोदात्तत्वादिति चेन्न।

वृत्तौ 'अनुदात्तस्य' इत्यस्य तत्राऽनुवर्तितत्वात्। 'अनुदात्तं पदमेकवर्जम्' इति परिभाषया औकारस्वरितत्वमादायाऽग्निशब्दस्य सर्वाऽनुदात्तत्वाच्च। अत एव 'औपगवत्वम्' इत्यादौ त्वप्रत्ययोदात्तत्वं निमित्तीकृत्याऽणन्तस्य निघात इति स्पष्टं भाष्यादौ। न च 'तस्य लोपः' (१।३।९) इति सूत्रस्थभाष्यरीत्या, 'दिव औत्' (७।१।८४) सूत्रे उपपादयिष्यमाणाऽस्मद्रीत्या चोच्चारणाऽर्थानामपीत्संज्ञकत्वेन दोषः। न च 'न विभक्तौ' (१।३।४) इतीत्त्वनिषेधाऽऽपत्तिः, इत्संज्ञाप्रवृत्तिकाले विभक्तित्वाऽभावादिति वा[5]च्यम्। 'प्रत्ययाऽप्रत्यययोः' इत्येव सिद्धे पुनः'तिति प्रत्ययग्रहणं कर्त्तव्यम्'

---

१. 'घेः परस्य' इत्यारभ्य 'अर्थो मा भूदिति' इत्यन्तः क. पाठः। 'इदुद्भ्यामिति किम्?। ङेरेवाऽकारो मा भूदिति। यत्तु 'ङित् घेः' इत्येव सूत्रं कार्यम्। ङितीति टिलोपेन रूपसिद्धेरिति। तन्न। विंशतौ तिलोपापत्तेः' इति तु ग. पाठः।

२. 'ङेरेवाऽकारो, घेरेवौकारो वा मा भूदिति' ख. पाठः।　३. ग. नास्ति।

४. 'स्तीर्णे' इत्यारभ्य 'इत्याहुः' (४७३ पृष्ठे) इत्यन्तः क. कुण्डलितः पाठः।

५. इतः परम्—'औदित्यादेस्तपरसूत्रबलेन संज्ञात्वात् संज्ञायां तित्त्वम्, न च तत्र तत्प्रयुक्तं, कार्यम्, यत्र च संज्ञिनि कार्यम्, न तत्र तित्त्वम्। एवञ्च 'तित्स्वरितम्'(६।१।१८५)इत्यस्य साक्षात् तिति चारितार्थ्येनाऽऽदेशेऽप्रवृ-

इति वार्त्तिकेन औपदेशिकप्रत्ययत्ववत्येव तत्प्रवृत्त्या, नाऽत्र स्वरितत्वप्रवृत्तिरितीत्संज्ञकत्वेऽपि न दोषः ।

किन्त्वाऽऽदेशेषु तकारस्य दकारस्थाने चर्त्वनिष्पन्नतया, दित्त्वस्यैव सत्त्वेन, न स्वरप्राप्तिरित्याहुः । 'अत्' इति वा तपरत्वमप्येवम् । न च 'बुद्धौ' इत्यादौ टाब्निवृत्त्यर्थम् । सन्निपात(प० ८७)परिभाषया तद्वारणस्य 'कृन्मेजन्त'(१।१।३९)सूत्रे भाष्यादौ कृतत्वात् । किञ्च भिन्नकालव्यावृत्त्यर्थेन तपरत्वेन भाविदीर्घव्यावृत्तेरिव, टाबभावस्य वाच्यवृत्त्योपपादनमशक्यम् । एवं च तपरकरणाट्टापा सह दीर्घो मा भत्, टाप् तु स्यादेव ।

न च 'ज्ञोऽविदर्थस्य' (२।३।५१) इति प्रकरणेन समासबाध इवाऽनेन टापोऽपि बाध इति वाच्यम् । 'प्रतिपदविधाना षष्ठी न समस्यते' (वा० (२।२।१०) इतिवार्त्तिकाऽनुरोधेन तत्र तथा कल्पनेऽपीह तथा कल्पने मानाऽभावादित्यग्रे निरूपयिष्यामः । अत एव भाष्ये औकारं ङितमाश्रित्याऽदिति प्रत्याख्यातम्—'अथ वा ङिदौकारः करिष्यते, 'औ ङिच्च घेः' इति ग्रन्थेन । अत एव न्यासप्रदर्शनभाष्ये 'औत्' इति तकाराऽनुच्चारणम् । न च ङित्त्वे विंशतौ तिलोपाऽऽपत्तिः । 'टेर्ङिति' 'ति विंशतेस्तद्धिते नः' 'अह्नष्टखोरेव' इति न्यासे दोषाऽभावादित्याहुः ।[2]

---

त्तेरदोषात् । 'तिति प्रत्ययग्रहणं कर्त्तव्यम् । इह मा भूत् द्युभिः' इति 'तित्स्वरितम्'(६।१।१८५)इतिसूत्रस्थभाष्यन्तु प्रत्ययग्रहणाऽभावे इत्संज्ञायां परम्परया स्वरेण फलवत्त्वं स्यादिति 'कृत्वा चिन्ता' न्यायेन नेयम् । प्रत्ययाऽप्रत्यय( प. ११२ )परिभाषाऽनाश्रयणेनेवैतदनाश्रयणेनापि तत्प्रवृत्तिरिति वा बोध्यम् । किञ्च संज्ञापि तकारानन्तरिकैव । न तु तितः । संज्ञाया इव, तस्यापि प्रयोगाऽसमवायित्वेनेत्संज्ञायां मानाऽभावात् । फलाऽभावाच्च । 'तस्य लोपः' (१।३।९) इति सूत्रस्थं भाष्यन्तु प्रौढ्येत्याहुः । यदि त्वौदित्यादौ फलाऽभावात् तपरसूत्राऽप्रवृत्त्या नास्य संज्ञात्वमित्युच्यते, तदा प्रत्ययाऽप्रत्यययोरित्येव सिद्धे' इति ग. पाठः ।

१. 'ङित् औ करिष्यते' इति पाठान्तरम् ।

२. 'स्तीर्णे बर्हिषि' (४७१ पृष्ठे) इत्यारभ्य 'इत्याहुः' इत्यन्तो ग्रन्थो लघुशब्दरत्ने स्थापितो नागेशेनेति क. पुस्तके तेन कुण्डलनया निःसारितः ।

**अनङ् सौ** (७।३।९३)—'सोडा' इत्येव सिद्धेऽनङ्विधानफलम् (हलन्त-[1] शेषे) उशनस्शब्दे निरूपयिष्यामः। 'सौ' इति न सप्तमीबहुवचनम्। 'असम्बुद्धौ' इति पर्युदासात्। ङकारोऽन्त्यादेशार्थः। नकाराऽकारस्तू-च्चारणार्थः।

**अलोऽन्त्यात्** (१।१।६५)—अवध्यवधिमतोः साजात्यमभिप्रेत्याह—**पूर्वो वर्ण इति**। अत एव '**शिष्टः**' इत्यादौ 'शा' इति समुदायस्य 'शास इत्' (६।४।३४) इतीत्त्वं न पञ्चम्यन्ताऽल्ग्रहणाच्च शस्य न।

**सर्वनामस्थाने** (६।४।८)—'नोपधायाः' (६।४।७) इत्यस्य, 'ढ्रलोपे' (६।३।१११) इत्यतो दीर्घपदस्य चाऽनुवृत्तिमभिप्रेत्याह—**नान्तस्येत्यादि**।

अपृक्त (१।२।४१)—'एक'शब्दोऽसहायवाची, सङ्ख्यावाची वा। 'अभैत्सीत्' इत्यत्र सिचो लोपस्तु न। 'सुति' इतिसाहचर्याद् विभक्तेरेव तत्र ग्रहणात्।

'अल्'[2] इत्येव सिद्धे 'एक'ग्रहणं वर्णग्रहणे जातिग्रहणज्ञापनार्थम्। तेन 'धिप्सति' इत्यादिसिद्धिरिति मूले एव स्फुटीभविष्यति। न च ज्ञापितेऽपि कथमेकग्रहणं चरितार्थम्। यावताऽल्ग्रहणसामर्थ्यात् संज्ञाविधानसामर्थ्या-च्चैकग्रहणाऽभावेऽप्यल्रूपस्यैव भविष्यतीति वाच्यम्। 'सामर्थ्येन समुदायस्यैव संज्ञा, नाऽल्रूपस्य' इत्यर्थस्याऽपि कल्पयितुं शक्यत्वात्। क्विबादौ च संज्ञाव्यावृत्तिः फलम्। हल्ङ्याप्सूत्रे सोः 'अपृक्तम्' इति विशेषणं न सम्बध्येतैव, सामर्थ्यात्। तिस्योर्हल्मात्रस्याऽपृक्तत्वन्तु स्थानि-वत्त्वेन भविष्यति। 'वेरपृक्तस्य' (६।१।६७) इति सूत्रं तु 'दर्विः' इत्यादावेव भविष्यतीति शङ्कावारणाऽर्थत्वेन चारितार्थ्यादित्याहुः। 'निपात एक' (१।१।१४) इत्यनेनैतदर्थज्ञापने, तत्प्रयुक्तजातिग्रहणवारणायेदमावश्यकमेव। अस्य ज्ञापकत्वे त्वनयैव रीत्या तदावश्यकमिति बोध्यम्।

---

१. ग. पाठः।

२. 'अलित्येकत्वविवक्षयैव सिद्धे' ख. ग. पाठः।

'अपृक्तः' इत्यत्र पुंस्त्वमविवक्षितम्। अत एव 'अपृक्तं हल्' इति नपुंसकनिर्देशः सङ्गच्छते। अपृक्तप्रदेशेषु हल्ग्रहणेनैव सिद्धे, संज्ञाविधानं विस्पष्टाऽर्थमित्याहुः।

**हल्ङ्याप्** (६।१।६८)—'दीर्घात्' इति ङ्यापोरेव विशेषणम्, न तु हलः' असम्भवात्। 'सुतिसि' इति पृथक्पदम्। **परमिति**—'तस्मादित्युत्तरस्य (१।१।६७) इति जाग्रति विहितविशेषणाऽसम्भवादिति भावः।

**केचित्तु** विशेष्याऽसन्निधानाद्धलंशे तदन्तग्रहणाऽसम्भवेन, तत्साहचर्यात् ङ्याबंशेऽपि तदन्ताऽग्रहणेन' 'हलो, ङ्यापश्च परम्' इति वृत्तिरुचितेत्याहुः।

**हलिति**—तस्य सुतिसिरूपत्वं स्थानिवद्भावेन बोध्यम्। **लुप्यते इति**—अनुवर्त्तमान 'लोप' शब्दस्य भावसाधनत्वेऽपि, 'हल्' इति प्रथमान्तसामानाधिकरण्यात् कर्मसाधनत्वमिति भावः। यद्यपि 'तस्मादित्युत्तरस्य' (१।१।६७) इति परिभाषणात् षष्ठ्यन्तताऽपि सम्भवति, तथाऽपि बहुषु पदेषु विभक्ति-

---

१. परमिति। 'विहितविशेषणत्वे तु 'बहुश्रेयसी' इति न सिद्ध्येत्। तत्र स्त्रीप्रत्ययस्योपसर्जनत्वेन तदादिनियमप्रवृत्तेः, समुदायस्य ङ्यन्तत्वाऽसम्भवात्। अवयवस्य ङ्यन्तत्वेऽपि, ततः सोर्विहितत्वाऽभावात्। परत्वं त्ववयवङ्यन्तादस्त्येव। 'तस्मादित्युत्तरस्य' (१।१।६७) इति जाग्रति विहितविशेषणाऽसम्भवाच्चेति भावः। अत एव 'ईयसश्च' (५।४।१५६) इति सूत्रे, 'गोस्त्रियोः' (१।२।४८) इति सूत्रे च भाष्येऽविभक्तिक'बहुश्रेयसी' इति प्रयोगः संगच्छते। तत्रत्यकैयटस्तु प्रामादिक इत्यवधेयम्। 'या' 'सा' 'का' इत्यादावव्याप्तेश्च। न च हलन्ताद् विहितत्वेन निर्वाहः। 'यः' 'सः' कर्त्ता 'इत्यादावतिव्याप्त्यव्याप्तेरिति[1] दिक्।' इति ख. ग. पाठः।

२. 'हलः परम्, ङ्यापश्च परम्' ख. पाठः।

---

1. अत्र कर्त्तेत्यत्राऽव्याप्तिः, 'यः, सः' इत्यादावतिव्याप्तिरिति योज्यम्।

विपरिणामकल्पनाऽपेक्षयागन्तुक'लोप'शब्दे एवाऽर्थान्तरकल्पनमुचितमिति भावः[1]।

**हल्ङ्याब्भ्यः किमिति**—'रामः' इत्यादौ दीर्घान्तत्वाऽभावाददोष इति प्रश्नः।

**दीर्घात्किमिति**—ङ्यापोर्दीर्घत्वाद् विशेषणं व्यर्थमिति प्रश्नः। **निष्कौशाम्बिरिति**—न च 'सु-ति-सीतिप्रत्ययैरङ्गाऽऽक्षेपात्, उपसर्जन स्त्रीप्रत्यये तदादिनियमसत्त्वाच्चाऽङ्गस्य ङ्याबन्तत्वाऽभावेन नाऽत्र दोष इति वाच्यम्। आक्षेपे, आक्षिप्तस्य विशेष्यतया शाब्दाऽन्वयित्वे वा, मानाऽभावात्।

किञ्चैवमपि 'बहुश्रेयसी' इत्यादिसिद्ध्यर्थं प्रत्ययग्रहण(पृ० २३)परिभाषया[2]ऽङ्गं विशेष्यमादाय, 'येन विधिः' (१।१।७२) इति परिभाषया च 'टिड्ढाणञ्' (४।१।१५) इतिसूत्रे 'अणन्तान्तात्' इतिवत्, 'ङ्याबन्तान्तात्' इत्यर्थस्याऽऽवश्यकत्वेन, दीर्घग्रहणाऽभावे दोषस्य सत्त्वात्।[3] 'माला' इत्यादौ तु व्यपदेशिवद्भावेन सिद्धिः। श्रविष्ठासु जातः 'श्रविष्ठः' इत्यादौ तद्धितलुकि, स्त्रीप्रत्ययलुकि च, प्रत्ययलक्षणेनाऽऽबन्तत्वात्, आपः परत्वाच्चाऽतिव्याप्तिवारणार्थं दीर्घग्रहणस्याऽऽवश्यकत्वाच्च। (न च[4] गङ्गीयतेः क्विपि 'गङ्गीः' इत्यत्र ईकारस्य स्थानिवद्भावेन आप्त्वाद् दीर्घत्वाच्चाऽ-

१. इतोऽग्रे—'सखेति। नान्तलक्षण उपधादीर्घः। यद्यपि 'सख्युरसम्बुद्धौ' (७।१।९२) इति सोर्णित्वेन परत्वेन 'अत उपधायाः' (७।२।११६) इति वृद्धिरुचिता, एवं चाऽत्रैव तल्लेख उचितस्तथापि फले विशेषाऽभावात् कृताऽकृतप्रसङ्गित्वेन दीर्घस्य नित्यत्वाच्च, 'सख्युरसम्बुद्धौ' इति णिद्वद्भावमुपजीव्य प्रवृत्तत्वेन वृद्धेर्बहिरङ्गत्वाच्च न दोष इत्याहुः'—इति ग. पाठः।

२. 'अङ्गस्य विशेष्यत्वेन येन विधि' ख. पाठः।

३. इतोऽग्रे—'अप्रातिपदिकेन' इति निषेधस्तु प्रत्ययविधिविषयः' इति क. कुण्डलितो ग. पाठः।

४. 'न च गङ्गीयतेः' इत्यारभ्य 'ग्रहणाच्च' इत्यन्तः क. कुण्डलितः ख. ग. पाठः। मनोरमाशब्दरत्नस्योऽयं ग्रन्थः।

तिव्याप्तिः, तथा अस्य स्त्री 'ई'। देवदत्तस्य ई–'देवदत्तेः' इत्यादावतिव्याप्तिरिति वाच्यम्। 'ङी–ई' 'आ–आप्' इति प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यानेनाऽदोषात्। [1]दीर्घग्रहणेनोपस्थितत्वादीकाराऽऽकाररूपस्यैव दीर्घस्य ग्रहणाच्च)।

'अपृक्तं किम्? बिभर्त्ति' इति क्वाचित्कोऽपपाठः। विशिष्टस्याऽहल्वात्। 'सु-ति-सिरूपं हल्' इति सामानाधिकरण्येनैव मूले व्याख्यानात्। एवं चाऽपृक्तग्रहणं चिन्त्यप्रयोजनमेव। स्पष्टं चेदं भाष्ये।

(न[2]नु सुरां सुनोतीति सुरासुत्, तमाचष्टे इति ण्यन्तात् क्विपि 'सुराः' 'सुरासौ' इत्यादौ सुनोत्यवयवसुलोपवारणाऽर्थं तत्। न च 'णौ चङि' (७।४।१) इतिसूत्रस्थभाष्यप्रामाण्येनेगुप[3]धेभ्यो णिज् नास्तीति **कैयटादिभिः** सिद्धान्तितत्वेन कथमत्र णिजिति वाच्यम्। तद्भाष्यस्य तेषां लुङि प्रयोगाऽभावमात्रकल्पनेनोपपत्तौ, सर्वथा णिजभावकल्पनस्य कैयटाद्युक्तस्याऽप्रामाणिकत्वादिति चेन्न। 'प्रत्ययाऽप्रत्यययोः' (प० ११२) इति परिभाषया, परस्परसाहचर्येणाऽनुनासिकोकारपाठेन च विभक्तेरेव सोर्ग्रहणेनाऽदोषात्।

वस्तुतो 'गङ्गोः' इत्यादीनामभिधाने दृढतरमानं चिन्त्यम्।

[4]अत्र वदन्ति,—'ङ्यापोः' इति सोरेव विशेषणम्, न तु तिस्योः, व्याख्यानात्। तेन 'गङ्गा'शब्दादाचारक्विबन्ताल्लङि, तिप्सिपोः, शपि, 'अगङ्गात्' इत्यादौ, कस्य स्त्री की, ततः, ज्ञाशब्दाच्चाऽऽचारक्विबन्तात् यङ्लुकि, लङि, 'अचेकेत्' 'अजाज्ञात्' इत्यादौ च लोपो न। न च 'अगङ्गात्' इत्यादौ शपा व्यवधानम्। एकाऽऽदेशे कृते तस्य पूर्वाऽन्त[5]वत्त्वेन

---

१. 'दीर्घ' इत्यारभ्य 'ग्रहणाच्च' इत्यन्तोऽयं ग. नास्ति। क. तु कुण्डलितः।

२. क. कुण्डलितः ख. ग. पाठः।

३. 'इकारोकारोपधेभ्यो' इति ख. पाठः। 'इदुदुपधेभ्यो' इति ग. पाठः।

४. 'अत्रेदं चिन्त्यम्' ग. पाठः।

५. 'पूर्वान्तत्वेन' इति क. ग. पाठः।

ग्रहणात्। न च स्थानिवद्भावः। अपूर्वविधित्वात्। न चैवम् 'बुद्धौ' इत्यादौ सन्निपात(प० ८७)परिभाषया टाब्न' इति भाष्योक्तं विरुध्यते इति वाच्यम्। दीर्घप्रवृत्त्युत्तरमन्तादिवद्भावप्रवृत्तावपि, टाबुत्पत्तिकालिकाऽऽनन्तर्यविघातस्य तेन वारयितुमशक्यत्वात्। यद्वा[1] 'अचेकेत्' इत्यादावीकाररूपत्वाऽभावात् भाष्यमते न प्राप्तिः। सूत्रमतेऽपि दीर्घग्रहणेनोपस्थितत्वादीकाराऽऽकाररूपस्यैव दीर्घस्यैव ग्रहणान्न दोषः। (एवं[2]च्च गङ्गामिच्छति गङ्गीयति। गङ्गीयतीति गङ्गीरित्यादौ न सुलोपः)।[3] एवं चेकाररूपङ्यन्तात् तिस्योरसम्भवेन, तत्साहचर्यादापोऽपि सोरेव लुक्। अत एव 'यदि पुनरयमपृक्तलोपः संयोगाऽन्तलोपो विज्ञायेत, द्विहलपृक्तग्रहणम्, तिस्योश्च ग्रहणं न कर्त्तव्यं भवति' इत्येतत्सूत्रे उपक्रमस्थं भाष्यं सङ्गच्छते। यदि ङ्याब्ग्रहणं तिस्योरपि विशेषणं स्यात् कथं तिस्योर्ग्रहणस्याऽकर्त्तव्यतां ब्रूयादित्याहुः।

तदेतत् सर्वमीदृशानामभिधानसत्त्वे युक्तम्। न च हल्ग्रहणाऽभावे 'राजा' इत्यादौ सोः संयोगान्तलोपे, तस्याऽसिद्धत्वान्नलोपो न स्यादिति वाच्यम्। 'न ङिसम्बुद्ध्योः' (८।२।८) इतिसम्बुद्धिग्रहणेन विभक्तिसंयोगाऽन्तलोपस्याऽसिद्धत्वाऽभावज्ञापनात्।

'गोमा[4]न्' इत्यादौ तु नलोपो न। तलोपस्याऽसिद्धत्वबाधे मानाऽभावात्। लक्ष्यभेदाच्च तत्र वारं वारं संयोगान्तलोपः। न च 'सावपि पदम्' इति

---

१. 'यद्वा' स्थाने 'केचित्तु' इति ग. पाठः।

२. 'एवञ्च' इत्यारभ्य 'न सुलोपः' इत्यन्तोऽयं ग. पाठः।

३. एतदुत्तरं—'न च कीशब्दात् क्यजन्तात् क्विपि, आचारक्विपि, यङ्लुकि 'क्वौ लुप्तम्' (वा० ६. ४. ८५) इत्यस्याऽसार्वत्रिकत्वात् स्थानिवत्त्वेन गुणाऽप्रवृत्तौ, ईकाररूपङ्यन्तात् तिस्योः सम्भव इति वाच्यम्। यणो दुर्वारत्वात्। आचारक्विबन्ताद् यङ्लुक्सत्त्वे मानाऽभावाच्चेत्याहुः' इति ग. पाठः।

४. 'अत एव गोमानित्यादौ नलोपो न' इति ग. पाठः।

पक्षे तच्चारितार्थ्यम्[1]। तत्पक्षाऽऽश्रयणे प्रकृतेऽपि नलोपसिद्धेः। न च तत्पक्षाऽऽश्रयणे 'राजा' इत्यादौ संयोगाऽन्तलोपस्याऽसिद्धत्वान्नलोपे, सो रुत्वविसर्गौ स्यातामिति वाच्यम्। उक्ताऽर्थज्ञापकेनाऽदोषात्[2]।

तथा हि 'न ङि' (८।२।८) इतिसूत्रे 'ङिसम्बुद्ध्योः' इति षष्ठी। अत एव ङौ नलोपनिषेधः सार्थकः। अन्यथा ङेर्लुका लुप्ततया तत्परत्वं दुरुपपादं स्यात्। न च 'न लुमता' (१।१।६३) इति निषेधाऽनित्यत्वान्न दोषः। तदपेक्षया षष्ठ्यन्ततया व्याख्यानस्यैव लघुत्वात्। एवं च सम्बुद्ध्यन्तप्रातिपदिकाऽन्तस्य नलोपनिषेधोऽनेन। न हि प्रथमं संयोगान्तलोपं विना सम्बुद्ध्यन्तं प्रातिपदिकं नान्तं लभ्यते। असिद्धत्वाऽभावं विना च प्रथमं संयोगाऽन्तलोपो दुर्लभः। न च 'हे ब्रह्मन्' इति नपुंसके नलोपनिषेधाय तदावश्यकम्, तत्र हि 'स्वमोः' (७।१।२३) इति लुगिति वाच्यम्। 'सम्बुद्धौ वा नपुंसकानां नलोपो वाच्यः' (७।१।२८) इति वार्त्तिकसत्त्वेन फलाऽभावात्। तच्च 'ङिसम्बुद्ध्योः' इत्यस्य षष्ठ्यन्तत्वपक्षे विकल्पाऽर्थमावश्यकम्। न च 'वा नपुंसकानाम्' इत्येव भाष्ये पठितम्, सम्बुद्धिग्रहणं च सूत्रादेव सम्बध्यते इति, तदर्थं सम्बुद्धिग्रहणस्य चारितार्थ्यात् कथं ज्ञापकत्वमिति वाच्यम्। अत्र पाठेनोक्ताऽर्थज्ञापकत्वस्याऽपि सम्भवात्।

न[3] च सम्बुद्धिग्रहणस्य भाष्ये प्रत्याख्याततत्वेन ज्ञापकता न युक्ता[4]। सूत्रस्थङिग्रहणस्य, 'ङिसम्बुद्ध्योरनुत्तरे'ति वार्त्तिकस्थसम्बुद्धिग्रहणस्य च प्रत्याख्यानेऽपि, सूत्रस्थस्य तस्याऽप्रत्याख्यानादित्यग्रे निरूपयिष्यामः। एवं च ज्ञापकं सुस्थम्[5]।

---

१. एतदुत्तरं 'ङिसम्बुद्ध्योरिति षष्ठ्याश्रयणात्' इति ग. पाठः।

२. 'नलोपात् प्राक् संयोगान्तलोपः' इत्यर्थज्ञापकेन 'न ङिसम्बुद्ध्योः' (८।२।८) इत्यनेनेत्यर्थः। अत्र 'ज्ञापनेन' इति पाठः स्यात्।

३. 'एतेन' ग. पाठः। ४. 'न युक्तेति परास्तम्' ग. पाठः।

५. इतोऽग्रे—'एतेन 'राजा' इत्यादौ सावपि पदत्वान्नलोपे कृते, सो रुत्वविसर्गौ स्यातामित्यपास्तम्। विभक्तिसंयोगान्तलोपस्याऽसिद्धत्वाऽभाव-

एतेन '[1]राजैधते' 'चक्रयत्र' 'राजाच्छत्रम्' इत्यादौ वृद्धि-यण्-तुगादिकं न स्यात्। संयोगान्तलोपस्याऽसिद्धत्वात्' इति परास्तम्। विभक्ति-संयोगान्तलोपस्याऽसिद्धत्वाऽभावज्ञापनात्।

ए[2]तेन 'अभिनोऽत्र' इत्यत्रोत्वं न स्यादित्यपास्तम्। 'संयोगान्तलोपो रोरुत्वे' इति सिद्धकाण्डे पाठाच्च। अत एव 'हरि'शब्दान्मतुपि 'छन्दसीरः' (८।२।१५) इति वत्वे, नुमि, संयोगाऽन्तलोपे, 'मतुवसोः' (८।३।१) इति रुत्वे, उत्वे, गुणे, 'हरि वो मेदिनं त्वा' इति सिद्धम्। 'संयोगान्तलोपो इत्यस्य विनिगमनाविरहात् 'न मु ने' (८।२।३) इतिवदुत्वे कर्त्तव्ये, कृते चेति व्याख्यानेन, 'एङः पदान्तात्' (६।१।१०९) इति पूर्वरूपेऽपि, संयोगान्तलोपो नाऽसिद्धः। न चैवमपि 'रात्सस्य' (८।२।२४) इति नियमेन 'अबिभर्भवान्' इत्यत्र लोपाऽनापत्तिः। तत्र तकारस्याऽपि प्रश्लेषान्न दोष इत्यस्य भाष्य एवोक्तत्वात्।

कीर्त्तयतेर्यदि क्विब्विचौ स्तस्तदा 'की' इत्येव रूपम्। एवं वृतेर्यङ्लुकि 'अवर्वः' इत्येव। कीर्त्तयतेः क्विब्विचावेव न स्तः। वृत्धातोर्यङ्लुकि ईडभावे तिप्सिपोः प्रयोग एव ना[3]स्तीति तत्त्वम्। तदु[4]क्तं भाष्ये—'यथाऽलक्षणमप्रयुक्ते' इति। 'अप्रयुक्ते लक्षणप्रवृत्त्यभावस्य योग्यता इति तदर्थः।

---

ज्ञापनेन परत्वात् पूर्वं संयोगान्तलोपस्यैव प्राप्तेः। न हि प्रथमं संयोगान्तलोपं विना सम्बुद्धयन्तप्रातिपदिकं नान्तं लभ्यते। 'ङिसम्बुद्धयोः' 'इति षष्ठीत्युक्तमेव' इति ग. पाठः।

१. 'राजैधते, अचका राज्यं, चक्रयत्र, राजाच्छत्रमित्यादौ वृद्धि-ढ्रलोपदीर्घ-यण्तुगादिकं न स्यात्' इति ख. पाठः।

२. 'एतेन 'अचका राज्यम्' इत्यादौ 'ढ्रलोपे' (६।३।१११) इति दीर्घो न स्यात्। 'अभिनोऽत्र' इत्यत्रोत्त्वं न स्यादित्यपास्तम्' ग. पाठः।

३. 'नास्तीत्यप्याहुः' ग. पाठः।

४. 'तदुक्तम्' इत्यारभ्य 'तदर्थः' इत्यन्तोऽयं पाठो ग. नास्ति।

नन्वेवं 'काष्ठशगेव नास्ति' इति 'परेश्च घाऽङ्कयोः' (८।२।२२) इति-सूत्रस्थभाष्यप्रामाण्येन संयोगादिलोपप्राप्तियोग्य-काऽन्त-शब्दाऽभावेऽपि 'सुपीः' इत्यादौ संयोगाऽऽदिलोपः स्यात्। पदान्तसंयोगाऽऽदिलोपस्य संयोगाऽन्तलोपाऽपवादत्वात्। तथा च 'र्वोरुपधायाः' (८।२।७६) इति दीर्घो न[1] स्यादिति चेन्न।

'तिप्यनस्तेः' (८।२।७३) 'सिपि धातो रुर्वा' (८।२।७४) इति सूत्राभ्यां धातुसम्बन्धिपदाऽन्तसस्य दत्व-रुत्वविधायकाभ्याम्, 'क'साहचर्येण च, प्रकृतिप्रत्ययसम्बन्धिवर्णसंयोगमाश्रित्य पदा[2]ऽन्ते संयोगाऽऽदिलोपाऽऽप्राप्तेर्ज्ञापनेन, 'सुपीः' इत्यादौ दोषाऽभावा[3]त्। एतेन 'उखास्रत्' इत्यादौ दत्वस्याऽसिद्धत्वात् संयोगाऽऽदिलोपः स्यादित्यपास्तम्। सिद्धकाण्डे 'वस्वादिषु दत्वम्' इति पाठाद् दत्वे कृते, तदप्राप्तेश्च।

नन्वपदान्तत्वात् न स्यादिति चेन्न। 'सावपि पदम्' इति पक्षाऽऽश्रयणात्। एष पक्षश्च हलन्तनपुंसके उप[4]पादयिष्यते। न च काष्ठं तक्षतीति

---

१. 'दीर्घो न स्यात्। तथा हर्यादिधातुभ्यो यङ्लुकि तिप्सिपोः संयोगान्तलोपस्याऽसिद्धत्वेन 'लोपो व्योः' (६।१।६६) इति लोपापत्तिः। यथान्यासेऽकृतव्यूहपरिभाषया परत्वान्नित्यत्वाच्च हल्ङ्यादिलोपप्रवृत्तौ, वल्परत्वाऽभावेनाऽप्रवृत्तिः। प्रत्ययलक्षणन्तु न। वर्णाश्रयत्वादिति चेन्न' इति ग. पाठः।

२. 'पदान्तसंयोगादि' ख. पाठः।

३. इतोऽग्रे–'न च चकासादेः पचाद्यजन्तादाख्यानणिचि, ततः कर्त्तरि क्विपि, तत आचारक्विपि, लङि, अल्लोपणिलोपयोः स्थानिवत्त्वात् संयोगादिलोपाऽभावे, संयोगान्तलोपे, प्रागुक्तसूत्रद्वयं चरितार्थमिति वाच्यम्। शपा व्यवधानेन संयोगाऽभावात्। लुक् तु दुर्लभः। लाक्षणिकत्वेन 'आदिप्रभृतिभ्यः' (२।४।७२) इत्यत्र तेषामग्रहणात्। धातुग्रहणसामर्थ्येन 'सिपि धातोः' (८।२।७४) इत्यस्य नामधातावप्रवृत्तेश्च' इति ग. पाठः।

४. इतोऽग्रे—'यङ्लुकश्छान्दसत्वाद्धर्यादौ न दोषः। किञ्च विभक्तिसंयोगान्तलोपस्याऽसिद्धत्वाऽभावज्ञापनान्न दोषः'—इति ग. पाठः।

'काष्ठतट्' इत्यादौ 'स्कोः' (८।२।२९) इति कलोपे कृते, सुलोपो न स्यात्, अपवादविषये उत्सर्गाऽप्रवृत्तेरिति वाच्यम्। अपवादस्याऽचारितार्थ्ये एव तदप्रवृत्तेः। अपवादप्रवृत्त्युत्तरं तत्प्रवृत्तौ बाधकाऽभावाच्चेत्याहुः।

एवं च 'दीर्घाङ्याप: सोः' इति सूत्रयितुमुचितम्। आकारेकारप्रश्लेषेण दीर्घग्रहणप्रत्याख्याने तु 'ङ्याप: सोः' इत्येवाऽस्तु।

वस्तुतस्तु ज्ञापकसिद्धतत्तदानुमानिकवचनकल्पनाऽपेक्षया यथान्यासमेव लघु। किञ्च 'न ङिसम्बुद्ध्योः' (८।२।८) इति सप्तम्येव युक्ता। ङिग्रहणसामर्थ्याच्च 'न लुमता' (१।१।६३) इत्यस्यैतद्विषयेऽनित्यत्वम्। एवं च[1] तदनित्यत्वमूलकमेव 'वा नपुंसकानाम्' इति वार्त्तिकम्। एवं च ब्रह्मन्नाद्यर्थं सम्बुद्धिग्रहणस्याऽऽवश्यकत्वेन ज्ञापकाऽसम्भवः। अन्याऽपूर्ववचनकरणेन सिद्धप्रत्याख्यानन्तु न रमणीयम्। किञ्चैवं 'वस्वादिषु दत्वम्' इति न कार्यमित्यपरं लाघवम्। अधातुग्रहणेनैव दीर्घाऽभावसिद्धेः। इदमेवाऽभिप्रेत्य सूत्रशेषे भाष्ये 'तस्मादशक्यो हल्पृक्तलोपः संयोगाऽन्तलोपो विज्ञातुम्। न चेद् विज्ञायते, द्विहल्पृक्तग्रहणम्, तिस्योश्च ग्रहणं कर्त्तव्यम्' इत्युक्तम्[2])।

**सखेति**—यद्यप्यत्रैव 'सख्युरसम्बुद्धौ' (७।१।९२) इत्यादिलेख उचितस्तथाऽपि नान्तलक्षणदीर्घेणैव सिद्धेः, 'अत उपधायाः' (७।२।११६) इत्यपेक्षया नित्यत्वेन तस्यैवौचित्याच्चाऽत्र नोक्तम्।

**सख्युः**—'इतोऽत्' (७।१।८६) इत्यतोऽनुवृत्तं 'सर्वनामस्थाने' इति, 'असम्बुद्धौ' इति च 'गोतो णित्' (७।१।९०) इत्यतोऽनुवृत्तं 'णित्' इत्यनेन सामानाधिकरण्याय प्रथमया विपरिणम्यते इत्याह—**सम्बुद्धिवर्जमिति**। (यद्य[3]पि 'असम्बुद्धिः' इति वक्तुमुचितम्। 'अनङ् सौ' (७।१।९३) इत्यत्रैव सप्तम्या विपरिणामः शक्यः कर्त्तुम्, तथापि भिन्नविभक्तिकत्वात् 'सर्वनामस्थाने' इत्यस्य निवृत्तिराशङ्क्येतेति यथान्यासमेवोचितम्)। 'मृजे-

---

१. 'एवञ्च' इत्यारभ्य 'वार्त्तिकम्' इत्यन्तोऽयं पाठो ग. नास्ति।

२. 'ननु सुरां सुनोतीति' (४७६ पृष्ठे) इत्यारभ्य 'इत्युक्तम्' इत्यन्तः कुण्डलितः ख. ग. पाठः।

३. क. कुण्डलितः ख. ग. पाठः।

वृद्धिः' (७।२।११४) इत्यतो 'वृद्धिः' इत्यनुवर्त्तते। 'अङ्गस्य' (६।४।१) इति चाऽधिकृतम्[1]। तदाह—अङ्गस्य **वृद्धिरिति**।

**ख्यत्यात्** (६।१।११२) यणा निर्देशेन सन्दिग्धत्वादविशेषेणोभयोर्ग्रहण-मित्याह—**खितीत्यादि**। अकारस्तूच्चारणार्थः, न तु मुख्याऽपत्याऽदि-शब्दैकदेशाऽनुकरणम्। 'सख्युर्यः' (५।१।१२६) 'पत्युर्नः' (४।१।३३) 'सङ्ख्यायाः संवत्सरसङ्ख्यस्य च' (७।३।१५) 'आपत्यस्य च तद्धितेऽनाति' (६।४।१५१) इत्यादिनिर्देशादिति भावः।

'एकः पूर्वपरयोः' (६।१।७४) इत्येतदधिकारनिवृत्त्यर्थम्—[2]**परस्येति**। **उकाराऽनुवृत्तिरिति**—नदी-घिसंज्ञारहितस्य तस्याऽभावात्, तत्र च[3] 'इदुद्भ्याम्' (७।३।११७) 'अच्च घेः' (७।३।११९) इत्याभ्यां बाधादिति भावः। **सुसखेति**—'न पूजनात्' (५।४।५९) इति निषेधात् 'राजाऽहःसखिभ्यः' इति टच् न। **समुदायस्येति**—पर्युदासे समुदायस्य सखिभिन्नत्वात्, प्रसज्यप्रति-षेधेऽपि समुदायनिष्ठघित्वस्याऽवयवनिषेधेनाऽव्यावर्त्तनादिति भावः[4]। अत्र यद् वक्तव्यम् तत् घिसंज्ञासूत्रे एवोक्तम्।

**गौणत्वेऽपीति**—अस्थ्याद्यनङ्वदिति भावः[5]।

---

१. 'अधिकृतमचो विशेष्यमित्यभिप्रेत्याह—अजन्तेति। वृद्धिरिति च।' इति ग. पाठः।

२. इतोऽग्रे—'अत्राऽप्यतीत्यनुवृत्तं ङसिङसोर्विशेषणम्—'अकाराद्योर्ङसि-ङसोः' इति। 'आदेः परस्य' (१।१।५४) इत्यकारस्य। 'ङसिङसोरतः' इति फलितार्थकथनम्। यद्वा वैयधिकरण्येनैवाऽन्वयः' इति क. कुण्डलितो, ग. पाठः।

३. इतोऽग्रे—'न च नदीसञ्ज्ञकेषु परत्वादिदं शङ्क्यम्। पूर्वसूत्रे उकारोच्चारण-वैयर्थ्यापत्तेः'—इति क कुण्डलितो ग. पाठः।

४. इतोऽग्रे—'न च पर्युदस्यमानसमर्पके सखिशब्दे तदन्तग्रहणं शङ्क्यम्। विशेष्याऽसंनिधानादिति भावः'—इति ग. पाठः।

५. इतोऽग्रे—'अत एव 'येन विधिः' (१।१।७२) इत्यत्र 'परमसखायौ' इति बहुव्रीहिः। तत्पुरुषे हि टचा भाव्यम् इति कैयटः। [1]'असमस्तन्तु न। तदन्तविधेः प्रक्रमात्' इति क. कुण्डलितः ख. ग. पाठः।

---

1. 'असमस्तन्तु न, तदन्तविधेः प्रक्रमात्' इत्ययं ख. ग. पाठः। क. नास्ति।

अत एव 'तृज्वत्क्रोष्टुः' (७।१।९५) इति सूत्रे 'अतिसखीनि' इत्युदाहृत्य 'णिद्वद्भावः प्राप्तो वृद्ध्यौत्वेति पूर्वविप्रतिषेधान्न भवति' इत्युक्तं भाष्ये। तद्धि न समानाधिकरणतत्पुरुषे। 'मित्रं क्लीबे, सखा द्वयोः' इति कोशेन सखिशब्दस्याऽनपुंसकत्वबोधान्नपुंसकत्वाऽनापत्तेः। अत एव भाष्येऽसमस्तमेव 'सखीनि' इति नोदाहृतम्। 'ब्राह्मणकुलानि' इति विशेष्यं चोदाहृतम्। 'अत्यादयः' (वा० १।४।७९) इति तत्पुरुषे, बहुव्रीहौ वा गौणत्वं स्पष्टमेव। (अ[1]त एव च 'द्वितीया श्रित' (२।१।२४) इतिसूत्रे 'तत्पुरुषविषये बहुव्रीहिर्न' इत्युपक्रम्य, उभयं खल्वपीष्यते, 'सोमसखा' 'गवांसखः' इति भाष्यं सङ्गच्छते। पूर्वत्र बहुव्रीहित्वान्न टच्। उत्तरत्र 'षष्ठ्या आक्रोशे' (६।१।२१) इति षष्ठ्या अलुगिति दिक्)।

**पतिः समासे** (१।४।८)—'एव'कार इष्टतोऽवधारणाऽर्थः। (अन्य[2]था 'समासे पतिरेव' इत्यपि सम्भाव्येत। 'धात्वादेः' (६।१।६४) इतिज्ञापकाऽऽश्रयणे तु प्रतिपत्तिगौरवं स्यात्)। पतिशब्दोऽत्र स्वामिपर्यायो गृ[3]ह्यते। कथं 'सीतायाः पतये' 'सखिना वानरेन्द्रेण' इति चेत्। अत्राहुः—असाधव एवैते। त्रिशङ्क्वाद्ययाज्ययाजनादिवत् तपोमाहात्म्यशालिनां मुनीनामसाधुप्रयोगोऽपि नाऽतीव बाधकः। अस्मदादीन् प्रति तु स्मृतिपुराणाऽध्ययनविधिबलात् तेषां तपोमाहात्म्यबलाच्च तदन्तर्गततत्पाठो न बाधकः। स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः प्रत्यवयन्त्येव। नदीसंज्ञासूत्रस्थ-

१. 'अलुगिति दिक्' इत्यन्तः क. कुण्डलितः ख. ग. पाठः।

२. 'गौरवं स्यात्' इत्यन्तः: क. कुण्डलितः ख. ग. पाठः। मनोरमायां च दृश्यते।

३. इतोऽग्रे–'प्रसिद्धत्वात्। न डिबन्तप्रत्ययान्तः पतधातुः। तेन 'पतिना धातुना' इति सिद्धम्। [1]नापि पतिरित्याख्यातः पति., णौ टिलोपे–'अच इः' ५८८ (उ. ४।१३८) इत्यौणादिकेप्रत्ययान्तः[2]। लाक्षणिकत्वात्। अत एव 'सीतायाः पतये' इत्यादि सिद्धम्। एतेन 'सखिना वानरेन्द्रेण' इति व्याख्यातम्' इति ख. पाठः।

1. 'न तु' ख. ग. पाठः।

2. 'इप्रत्ययान्तग्रहणम्, लाक्षणिकत्वात्' ख. ग. पाठः।

भाष्यकैयटस्वरसोऽप्येवम् । तत्र हि 'छन्दोवत् कवयः कुर्वन्ति' इत्युक्त्वा, 'न ह्येषा इष्टिरस्ति' इत्युक्तम्[1] ।

'समासे'[2] इत्युक्तेर्बहुच्पूर्वे 'बहुपत्या' इत्यादौ घित्वं न । अत एव 'पति-र्वृत्तावेव' इति नाऽसूत्रि । वर्णसंज्ञापक्षे 'पत्यवयवेकारः समासे एव' इत्यर्थः[3] । तदन्तसंज्ञापक्षेऽपि 'पत्यवयवेकारान्तः' इत्यर्थः[4] सूत्रे । पतिशब्दश्च तदवयवे-कारलाक्षणिकः ।

न च 'शेषो घ्यसखिपती' इत्येव सूत्र्यताम्[5], 'सुसखना' इत्यादिवत् 'सुपतिना' इत्यादिसिद्धेरिति वाच्यम् । 'बहुपत्या' इत्यस्याऽनापत्तेः । किञ्च 'पतिगृहे' 'पतिसखायौ' इत्यादौ पूर्वनिपातनियमाऽनापत्तेः । केवलपति-शब्दस्य घित्वाऽभावात् । यथान्यासे तु केवलस्य पतिशब्दस्यैव घित्वमिति स्पष्टमेव ।

अत एव 'पतिसखी समास एव' इति न सूत्रितम् । 'गृहसखायौ' 'सखिगृहे' इत्यत्र पूर्वनिपातनियमाऽऽपत्तेः । अत्र[6] न्यासे समासे विद्यमा-नस्य केवलसखिशब्दस्याऽपि घित्वात् । यथान्यासे तु नेति स्पष्टमेवेत्याहुः ।

---

१. 'इत्युक्तमित्यन्ये' ख. ग. पाठः ।

२. एतत्स्थाने—'अत्र शेषः' इति वर्त्तते । तस्य च 'पतिः' इति विशेषणम् । तेन 'पतिस्तदन्तश्च शेषः समासे एव घिः' इत्यर्थः । अत एव बहुच्पूर्वे बहुपत्येत्यादौ घित्वं न' इति ग. पाठः ।

३. 'एवेत्यर्थात्' ख. ग. पाठः ।

४. इतोऽग्रे—'भूपत्यादेः समासे विद्यमानत्वन्तु व्यपदेशिवद्भावेन'—इति ख. ग. पाठः ।

५. एतत्स्थाने—'पतिः' इति प्रथमा तदन्तसंज्ञापक्षे युक्तैव । वर्णसंज्ञापक्षे 'पत्यवयवेकारः समासे एव' इत्यर्थः । न च शेषो घ्यसखिपती इत्येव सूत्र्यताम्' इति ग. पाठः ।

६. 'त्वदुक्तन्यासे केवलस्यापि सखिशब्दस्य घित्वात्' ख. ग. पाठः ।

वस्तुतस्तु 'यस्येति च' (६।४।१४८) इति सूत्रस्थभाष्यरीत्या 'सुपतिना' 'सुसखा' इत्यादीष्टाऽसिद्धया[1] तथा न्यासः कर्तुमशक्य एवेति बोध्यम्।

**नित्यं बहुवचनान्त इति**—'किमः सङ्ख्यापरिमाणे' (५।२।४१) इत्यनेन 'किम्'शब्दात् सङ्ख्यापरिमाणे वर्त्तमानाद् बहुत्वसङ्ख्यावच्छिन्ने सङ्ख्येये वाच्ये एव डतिर्विधीयते, न तु द्वित्वाद्यवच्छिन्ने। अनभिधानात्। अत एव 'किम्' इत्येतत्परिप्रश्ने वर्त्तते। परिप्रश्नश्चाऽनिर्ज्ञाते। अनिर्ज्ञातं च बहुषु। द्व्येकयोः पुनर्निर्ज्ञातमेव, इति डति(१।१।२५)सूत्रस्थं भाष्यं सङ्गच्छत इति भावः।

**बहुगण** (१।१।२३)—सङ्ख्याप्रदेशेष्वेतत्संज्ञाकरणज्ञानरूपप्रकरण-सत्त्वेऽपि, तन्मूलकृत्रिमाऽकृत्रिमन्यायो न प्रवर्त्तते। 'सङ्ख्याया अतिशदन्तायाः' (५।१।२२) इति सूत्रे शदन्तपर्युदासात्। न हि शदन्ता कृत्रिमाऽस्ति।[2] अत एव 'पञ्चकृत्वः' इत्यादिसिद्धिः। एतन्न्यायोपयोगस्त्वभ्यासाऽऽम्रेडितादिसंज्ञाविषये द्रष्टव्यः। लक्ष्याऽनुसारात् कर्माऽऽदिगोत्राऽऽदिसंज्ञास्विवाऽत्राऽपि प्रकरणाऽनादर इति तत्त्वम्।

नन्वेवं बहुगणग्रहणं व्यर्थम्, द्वित्र्यादीनामिव लोके सङ्ख्यावाचकत्वादेव प्रदेशेषु ग्रहणसिद्धेरिति चेन्न। नियत[3]विषयपरिच्छेदहेतुत्वाऽभावेन तस्याऽसङ्ख्यात्वात्। बहुत्वं हि त्र्यादिसङ्ख्याव्यापको धर्मविशेषः। अत एव भाष्ये 'एतत्सूत्रमतिदेशार्थम्, यदयमसङ्ख्यां सङ्ख्येत्याह' इत्युक्तम्।

ए[4]तेन 'अथाऽन्तरवाचित्वे सति, बहुत्ववाचिनश्चेत् सङ्ख्याकार्यम्, तर्हि

---

१. 'सुसख्येत्यादीष्टाऽसिद्धया' ख. पाठः। 'इष्टसिद्धया' इति केनापि क. पुस्तके हरितालले पेन शोधितः।

२. इतोऽग्रे–'तेन च त्वदुक्तन्यायमूलस्य संज्ञिविशेषे क्रियमाणस्य संज्ञानियमनिष्ठस्य सामान्यापेक्षत्वस्याऽनाश्रयणम्, कृत्रिमान्तरव्यावृत्तिरूपविशेषापेक्षत्वस्य चाऽऽश्रयणमिति बोध्यम्—' इति क. कुण्डलितः पाठः।

३. 'नियतविषय' इत्यारभ्य 'सङ्ख्येत्याहेत्युक्तम्' इत्यन्तोऽयं क. ग. पाठः, ख नास्ति।      ४. 'एतेन' इति क. पाठः। ख. ग. नास्ति।

बहुगणयोरेव, इति नियमार्थं तत्। तेन भूर्यादीनां न। तेषां वैपुल्याद्यर्था-ऽन्तरवाचित्वात्। वैपु[1]ल्यं विशालता। विशेषणविशेष्यदलाभ्यामबहुत्व-वाचिन एकशब्दस्य, बहुत्वमात्रवाचिनां त्र्यादीनां च न व्यावृत्तिः। ([2]त्र्यादीनामर्थान्तरवाचित्वाऽभावात्)। न च 'अनियतसङ्ख्या-वाचिनां चेद् बहुगणयोरेव' इति नियमोऽस्तु। अनन्तवाचिशतशब्दस्या-ऽनियतसङ्ख्यावाचिनः सङ्ख्याऽकार्याऽनापत्तेः। मम तु न दोषः। सङ्ख्या-ऽतिरिक्ताऽर्थान्तराऽभावादित्य[3]पास्तम्। अनन्तशब्दवत् तद्वाचिशतशब्देऽपि सङ्ख्याकार्याऽभावस्यैवोचितत्वाच्च।

'वतु' इति साऽनुबन्धनिर्देशो 'ब्राह्मणवत्' इत्यादिव्यावृत्त्यर्थ इति दिक्।

सङ्ख्य-वैपुल्यवाचकयोस्तु गण-बह्वोर्नेह ग्रहणं[4]म्। प[5]रसाहचर्येण त्र्यादि-सङ्ख्याव्यापकधर्मवाचिनोरेव ग्रहणात्।

अ[6]त्र डतिस्तद्धित एव, न[7] तु पातेर्डतिः, ५०६ (उ० ४।५८) उणादीना-नामव्युत्पन्नत्वात्। अतिक्प्रत्ययेनाऽपि पत्युः सिद्धेश्च। साहचर्या-च्चेत्याहुः।

'ष्णान्ता षट्' (१।१।२४) इत्यतः षडिति वर्त्तते। सङ्ख्येति च प्रकृतम् 'डति' (१।१।२५) इत्यनेन विशेष्यत इत्याह—**इत्यन्तेति**।

ननु संज्ञाविधौ तदन्तग्रहणाऽभावात्, डतेरेव सङ्ख्यासंज्ञात्वात् 'इत्यन्ता

---

१. 'वैपुल्यं विशालता। विशेषणविशेष्यदलाभ्याम्' इत्ययं क. पाठः।

२. ख. ग. पाठः।

३. 'इत्यपास्तम्' इत्यारभ्य 'उचितत्वाच्च' इत्यन्तोऽयं क. पाठः, ख. ग. नास्ति।

४. इतोऽग्रे–'सङ्ख्यायतेऽनया' इत्यन्वर्थसंज्ञाविज्ञानादिति कैयटाद्युक्तम् तन्न। असङ्ख्यां सङ्ख्यय्येत्याहेति भाष्यविरोधात्––' इति क. कुण्डलितः ख. पाठः।

५. 'ग्रहणात्' इत्यन्तो लघुशब्देन्दुशेखरपाठोऽयम्। अत्र तु त्रुटितः।

६. 'अत एव डतिः' ख. पाठः।

७. 'न तु पातेः' इत्यारभ्य 'सिद्धेश्च' इत्यन्तः क. पाठः।

८. 'सङ्ख्यासंज्ञत्वात्' ख. पाठः।

सङ्ख्या' इत्यनुपपन्नम् । न च केवलस्य संज्ञायाः प्रयोजनाऽभावः । अङ्गाऽधिकारे तदन्तविधेः सत्त्वेन, षड्भ्यो लुक एव प्रयोजनस्य सत्त्वादिति चेन्न[1] । ('षट्कतिभ्यो लुक्'[3] इत्येव सिद्धे)[2] 'षट्कति' (५।२।५१) इति डडनुवादेन थुको विधानेन[4] (च) तदन्तस्यैव सङ्ख्यासंज्ञाप्रवृत्तेः । सङ्ख्येति किम् ? । पतयः ।

**प्रत्ययस्य** (१।१।६१)—अनेकसंज्ञाकरणसामर्थ्यात् तन्त्राद्याश्रयणेन तद्भावितसंज्ञाऽऽश्रयणम्, अतो न सङ्करः । तस्मिन् हि 'हन्ति' इत्यादौ 'श्लौ' (६।१।१०) इति द्वित्वादि स्यात् । तदाह—**लुक्श्लुलुप्शब्दैरिति** ।

'अदर्शनं लोपः' (१।१।६०) इत्यतः 'अदर्शनम्' इत्यनुवर्त्तते । प्रदेशेषु तु भाविसंज्ञाविज्ञानान्नाऽन्योन्याऽऽश्रयः । विशेषविहिता अप्येता लोकसंज्ञां न बाधन्ते । एकसंज्ञाधिकारादन्यत्र संज्ञासमावेशस्योक्तत्वात् । तेन प्रत्ययलक्षणसिद्धिः । एते च विधीयमानाः सर्वाऽऽदेशा एव । 'क्सस्याऽचि' (७।३।७२) इति लोपे प्रकृते 'लुग्वा दुहदिह' (७।३।७३) इति लुग्ग्रहणात् । प्रत्ययग्रहणम्—'प्रत्ययाऽदर्शनस्यैवैताः संज्ञाः स्यु' इति । अत एव 'आगस्त्यकौण्डिन्ययोः' (२।४।७०) इत्यादौ प्रत्ययविशेषाऽनुपादानेऽपि प्रत्ययस्यैव लुक् सिद्ध इति सूत्राऽऽशयः ।

**षड्भ्यो लुक्** (७।१।२२)—'जश्शसोः शिः' (७।१।२०) इत्यतो जश्शसोरित्यनुवर्त्तते । 'षषो लुक्' इत्येव सिद्धे बहुवचननिर्देशोऽर्थप्राधान्यसूचनार्थः । 'षट्शब्देन षट्संज्ञकः शब्दः, तदर्थसङ्ख्याश्चेत्युभयमपि विवक्षितम् । तेषां बहुत्वाच्चेदं बहुवचनम् । तत्राऽर्थात् परत्वं स्वगतसङ्ख्याऽनुवादकत्वरूपम् । एवं च 'षडर्थगतसङ्ख्याऽभिधायिनोः' इति फलितो-

---

१. 'सत्त्वादिति चेन्न । 'सङ्ख्या' इत्यन्वर्थसंज्ञाविज्ञानात् सङ्ख्याप्रश्नविषयाऽर्थवाचिन एव डतेर्ग्रहणात् । तादृशाऽर्थवाचकत्वं च न केवलप्रत्ययस्येत्यवश्याऽऽश्रयणीयः संख्यासंज्ञायां तदन्तविधिः । अत एव 'कतिभिः' इत्यत्र 'षट्त्रिचतुर्भ्यः' (६।१।१७९) इति विहितत्वनिबन्धनविभक्त्युदात्तत्वं भवतीति न किञ्चिदनुपपन्नम्'—इति ख. ग. पाठः । २. ग. पाठः । क. ख. नास्ति ।

३. ख. पाठः ।  ४. 'सङ्ख्याश्रयश्च' ग. पाठः ।

ऽर्थः । तेन गौणे न । तत्रोक्ता[1]र्थस्य परशब्दवाच्यत्वं चिन्त्यम् । तस्मादत्र 'षड्भ्यः' इति विहितविशेषणम् । परमपञ्चादौ तु विशिष्टस्यापि सङ्ख्या-प्रकारकसङ्ख्येयविशेष्यकबोध(जन)कत्वेन सङ्ख्यावाचितया षट्त्वमस्त्ये-वेति न दोषः । षट्संज्ञाविषये 'लोके गणनायां प्रसिद्धसङ्ख्याशब्दानामेव ग्रहणम्' इत्यत्र न मानम् । स्पष्टं चेदं सर्वादिसूत्रभाष्ये इति भाष्यप्रदीपोद्-द्योते निरूपितम् ।

**प्रत्ययलोपे** (१।१।६२)—इदं सूत्रं यत्र प्रत्ययः प्राधान्येना-ऽऽश्रीयते, तत्राऽल्विधौ विध्यर्थम् । तेन 'अतृणेट्' इत्यत्र पिति सार्वधातुके विधीयमान[2] इम्, 'मित्रशीः' इत्यादौ हलादौ किति विधीयमानमित्त्वं च सिद्ध्यति ।

'प्रत्ययस्य' (१।१।६१) इत्यनुवृत्त्या सिद्धे पुनराद्यप्रत्ययग्रहणम् (मुख्य[3]-प्रत्ययलोपे एव यथा स्यात्,) अवयवलोपे मा भूत् । तेन 'आघ्नीय' इत्यादौ नाऽनुनासिकलोप इति भाष्ये स्पष्टम् ।

इदमेव प्रत्ययग्रहणं ज्ञापकम् 'अवयवेऽपि प्रत्ययत्वप्रयुक्तकार्यस्य' इति । एवं च 'आदेशप्रत्यययोः' (८।३।५७) 'इदुदुपधस्य च' (८।३।४१) इत्यनयो-र्लक्षणादि नाऽऽश्रयणीयं भवति, 'सात्पदाद्योः' (८।३।१११) इति च चरि-तार्थं भवति ।

'स्थानिवत्' (१।१।५६) इत्यनुवृत्त्यैव सिद्धे 'प्रत्ययलक्षण'ग्रहणन्तु 'प्रत्ययस्य यत्र वर्णाऽविशेषणत्वरूपं प्राधान्यम्, त[4]देव यथा स्यात्' इत्यर्थम् । तेन 'टिड्ढाणञ्' (४।१।१५) इत्यादौ प्राधान्येन यत्राऽलाश्रयणम्, तत्राऽपि विध्यर्थं किं न स्यात्' इति न शङ्क्यमिति **वार्त्तिकमतम् ।**

**भाष्ये** तु 'शास इत्' । 'अङि' । 'अजादौ क्ङिति चेदङ्येव' इति नियमादजादिव्यावृत्तौ, 'शास इत्' (६।४।३४) इत्यत्र हल्ग्रहणाऽकरणेन, स्थानिवद्भावादेव 'मित्रशीः' इत्यादि सि[5]द्धम् । 'तृणह' इति सूत्रेऽचि न,

---

१. 'तत्रोक्तार्थस्य' इत्यारभ्य 'न मानम्' इत्यन्तोऽयं क. ग. पाठः ।
२. 'विधीयमानमिम्' ख. पाठः । ३. क. नास्ति । ख. ग. पाठः ।
४. 'तत्रैव' ख. पाठः । 'तत्र' ग. पाठः । ५. 'सिद्धिः' ख. ग. पाठः ।

इत्यनुवर्त्त्य, 'तृणहानि' इत्यादिव्यावृत्तौ 'हलि' इत्यननुवृत्त्या 'अतृणेट्' इत्यादि सिद्धमित्यादिरीत्या विधिफलानामन्यथासिद्धिं निरूप्य, स्थानिवत्सूत्रेणैव सिद्धे, नियमाऽर्थत्वमुक्तम्। नियमश्च द्वितीयप्रत्ययग्रहणात्–प्रत्ययस्याऽसाधारणं रूपं यत्राऽऽश्रीयते, तदेव कार्यं प्रत्ययलोपे सति भवति, न तु प्रत्ययाऽप्रत्ययसाधारणम्' इति। तेन 'सुदृषत्प्रासादः' इत्यत्राऽसो लुकः स्थानिवत्त्वेनाऽस्त्वादसन्तत्वस्याऽऽर्थसमाजग्रस्तत्वेऽपि 'अत्वसन्तस्य' (६।४।१४) इति दीर्घो न।[1]

न चाऽतुसाहचर्याच्छ्रूयमाणाऽसन्त एव दीर्घप्रवृत्तिः। 'सोर्मनसी' (६।२।११७) इति सूत्रेऽपि 'अलोमोषसी' इति पर्युदासेन श्रूयमाणाऽसन्तस्यैव ग्रहणमिति नियमोऽपि[2] व्यर्थ इति वाच्यम्। साह[3]चर्याद्यनित्यत्वस्यापि ज्ञापनादिति भाष्याशयः। विध्यर्थत्वे तु 'सुदृषत्' इत्यादौ स्वरो दुर्वारः। स्थानिवद्भावस्याऽनिवृत्तेः।

नन्वेवं 'दाधर्त्ति' (७।४।६५) इति सूत्रस्थभाष्यमसङ्गतं स्यात्। तत्र हि 'तेतिक्ते' इति किं निपात्यते ?। आत्मनेपदम्। नैतदस्ति, 'अनुदात्तङितः' (१।३।१२) इत्येव सिद्धम्। नियमाऽर्थं तर्हि भविष्यति—'अत्रैव यङ्लुगन्तस्य, नाऽन्यत्र—बेभिदीति' इत्युक्तम्। त्वद्रीत्या यङो लु[4]कि अनेन नियमे-

---

१. 'स्थानिवत्त्वेनाऽसन्तत्वेऽपि अत्वसन्तस्येति' इति क. पाठः।
'स्थानिवत्त्वेऽप्यत्वसन्तस्येति' इति ग. पाठः।

२. 'नियमोपि व्यर्थ इति वाच्यम्। 'अतु'साहचर्येण प्रत्ययाऽवयवस्यैवाऽसो ग्रहणापत्तौ 'अधातोः' इत्यस्य वैयर्थ्याऽऽपत्त्या, तत्र साहचर्यस्याऽऽश्रयितुमशक्यत्वात्। किञ्चैवं सति 'सुस्रोता' इत्यादौ तुडागमेन प्रत्ययाऽवयवो यत्राऽस्, तत्रैव स्यात्, न तु 'सुपया' इत्यादौ। प्रत्ययोऽत्राऽस्। एवं 'सोर्मनसी' (६।२।११७) इत्यत्र पर्युदासे प्रत्ययावयवाऽसन्तस्यैव ग्रहणाऽऽपत्तौ, 'सुवः' इत्यादौ स्वराऽनापत्तेरिति भाष्याशयः'–इति ख. ग. पाठः।

३. 'साहचर्यात्' इत्यत आरभ्य 'अनिवृत्तेः' इत्यन्तः क. ग. पाठः।

४. 'लुकि प्रत्ययलक्षणेनात्मनेपदम्' ख. पाठः।

नाऽऽत्मनेपदं दुर्लभम्। ङित्त्वस्य प्रत्ययाऽप्रत्ययसाधारणत्वादिति चेन्न[1]। 'आ[2]त्मनेपदम्' इत्यस्यैव सिद्धान्त्युक्तित्वात्। ततो वार्त्तिकाऽनुसारिणैकदेशिना 'अनुदात्तङित' (१।३।१२) इत्येवेदं सिद्ध[3]म्' इति शङ्किते, तदनुसार्येकदेशिन एव तत्समाधानमित्यदोषात्।

न च 'यत्र प्रत्ययस्य विशेष्यत्वम्, तत्रैव' इति नियमशरीरमस्तु। एवं चेदं भा[4]ष्यं सिद्धान्त्युक्तिरेवाऽस्त्विति वाच्यम्। 'राजा' इत्यादौ पदत्वाऽनापत्तेः। वार्त्तिककृन्मते 'वर्णाऽऽश्रये न प्रत्ययलक्षणम्' (प० २१) इति वर्णप्राधान्यविषयकम्। वर्णप्राधान्यं चेतराऽविशेषणत्वरूपम्, प्रत्ययनिरूपितविशेष्यत्वरूपं चेति न[5] दोषः। तेन गवे हितं 'गोहितम्' इत्यत्राऽव्, 'सुयशाः' इत्यत्र विसर्जनीयस्य सत्वम्, 'सुवृडसि' इत्यत्र 'खरि च' (८।४।५५) इति चर्त्वम्, चित्रायां जाता 'चित्रा' इत्यादौ 'अण्योऽकारस्तदन्तात् प्रातिपदिकान्ङीप्' इति ङीप् च न।

न च 'गोहितम्' इत्यत्र 'न लुमताऽङ्गस्य' (१।१।६३) इति निषेधान्नाऽवः प्राप्तिरिति वाच्यम्। लुप्तप्रत्ययनिमित्ताऽङ्गोद्देश्यककार्ये एव तन्निषेधात्। अत एव 'उत्क्राम' इत्यादौ 'क्रमः परस्मैपदेषु' (७।३।७६) इति दीर्घसिद्धिः। परस्मैपदपरशिन्निरूपिताऽङ्गस्य तेन दीर्घविधानात्। प्र[6]कृते चाऽवादेशो वर्णमात्रोद्देश्यको नाऽङ्गोद्देश्यक इति न कश्चिद् दोषः। 'तस्मिन्' इति न्यासेऽपि उपस्थितप्रत्ययाऽऽक्षिप्तप्रकृत्युद्देश्यककार्ये एव प्रवृत्तिरिति दिक्।

---

१. 'इति चेन्न। 'नियमार्थं तर्हि भविष्यति' इति वदता भाष्यकारेण समाधानेऽनास्थां बोधयता तस्य प्रौढिवादत्वबोधनात्। तदुक्तं यङ्लुगन्तमनोरमायां 'दाधर्तीति सूत्रभाष्यन्तु विधिपक्षाऽभिप्रायेणेति'—इति ख. ग. पाठः।

२. 'आत्मनेपदम्' इत्यारभ्य 'इत्यदोषात्' इत्यन्तः क. ग. पाठ।

३. 'इत्येव सिद्धम्' इति क. पाठः।

४. 'भाष्यं मुख्यपक्षाभिप्रायकमेवाऽस्त्विति' ख. ग. पाठः।

५. 'इति न दोषः' इति क. नास्ति।

६. 'एवं च प्रकृतेऽवादेशो वर्णः' इति ख. पाठः।

न च 'प्रत्ययजं प्रत्ययवत्' इति[1] सिद्धे 'लक्षण'ग्रहणं व्यर्थम्। 'प्रत्ययनिमित्तकमेव, न तु प्रत्ययस्थानिकम्' इत्यर्थलाभार्थं तत्। तेन नखैर्भिन्नः 'नखभिन्नः' इत्यादावैसादिकं न। 'अतिदेशेनाऽऽहार्यतद्बुद्धिसम्पादनेऽप्युच्चारणप्रसङ्ग(रूप[2])षष्ठ्यर्थाऽभावा[3]न्नैसादीति व्यर्थमेव लक्षणग्रहणम्' इत्यन्ये। ध्वनितं चेदम् 'सुप्तिङन्तम्' (१।४।१४) इति सूत्रे भाष्ये। स्पष्टं च **कैयटे।**

**कार्यमिति—**कार्याऽतिदेशोऽयमिति भावः। नन्वेवम् 'परिवीः' इत्यत्र तुग्दीर्घौ पर्यायेण स्याताम्, कार्याऽतिदेशेऽनेनैवोभयोरपि विधानात्, 'विप्रतिषेधे परम्' (१।४।२) इत्यस्याऽप्रवृत्तेरिति चेन्न। 'सति प्रत्यये यत् कार्यं भवितुमर्हति, तदेवाऽतिदिश्यते' इति 'परिवीय' इत्यादाविव, 'परिवीः' इत्यत्राऽपि दीर्घ एव, न तु तुगिति न दोषः। कार्याऽतिदेशेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदेशस्यैव देशत्वाऽङ्गीकाराद् वा न दोषः[4]।

**न लुमताङ्ग** (१।१।६३)—'लु'शब्दो वर्त्तते येषु ते लुमन्तः। 'ते के' इत्याकाङ्क्षायामाह—**लुक्श्लुलुप इति। अङ्गकार्यमिति**—'लुप्तप्रत्यये परतः पूर्वस्य यत् कार्यम्, आङ्गम[5]नाङ्गं च' इत्यर्थः। तेन 'पञ्च' इत्यादौ 'सुबन्तम्' इति पदसंज्ञा भवति। 'राजपुरुषः' इत्यादौ भसंज्ञा च न। अङ्गाधिकारनिर्देशे हि सा स्यादेव। न च 'संजिगमिषा' इत्यत्र 'अतो हेः' (६।४।१०५) इति लुकि, 'गमेरिट् परस्मैपदेषु' (७।२।५८) इतीण्न स्यादिति वाच्यम्। तत्र तृचि 'संजिगमिषिता' इत्यादिसिद्ध्यर्थम् 'परस्मैपद'शब्दस्य तङानयोरभावोपलक्षणत्वेन दोषाऽभावात्।

---

१. 'इति वा सिद्धे' ख. ग. पाठः।　　　　२. 'रूप' इति क. नास्ति।

३. 'षष्ठ्यर्थाऽभावाच्च। ध्वनितं चेदम्' इति ख. पाठः।

४. इतोऽग्रे-'न च प्रत्यये सत्यप्यङ्गाऽधिकारस्थदीर्घाऽपेक्षया तुकोऽन्तरङ्गत्वेन स एव प्राप्नोतीति वाच्यम्। वार्णादाङ्गस्य बलीयस्त्वादित्याहुः। 'लक्ष्याऽनुरोधादीदृशेषु शास्त्राऽतिदेश एव' इत्यन्ये। तद् ध्वनयन्नाह-इति जसि चेति'—इति ख. ग. पाठः।

५. 'आङ्गमनाङ्गं वेत्यर्थः' ख. ग. पाठः।

किञ्च परस्मैपदनिमित्ताऽङ्गसंज्ञकस्य कार्याऽभावान्न दोषः। अङ्गसंज्ञा तु लुक्यपि भवति। अनित्यत्वात् 'न लुमता' (१।१।६३) इति निषेधस्याऽङ्गसंज्ञायामप्रवृत्तेः। अत एव 'गुणो यङ्लुकोः' (७।४।८२) इत्यादीनामङ्गाऽधिकारे पाठः सङ्गच्छते। अत एव 'पञ्चभिः क्रोष्टीभिः क्रीतं कुलम्' इति 'तद्धितार्थ' (२।१।५१) इति समासे, ठको 'अध्यर्ध' (५।१।२८) इति लुकि, 'लुक्तद्धितलुकि' (१।२।४९) इति स्त्रीप्रत्ययलुकि, 'पञ्चक्रोष्टृ' इत्यङ्गसंज्ञानिमित्ततृज्वद्भावसिद्धिः। इदमेवाऽभिप्रेत्य 'न चाऽपरं निमित्तमाश्रीयते—'अस्मिन्परतः क्रोष्टुस्तृज्वत्' इति। किं तर्हि ?। 'अङ्गस्य क्रोष्टुस्तृज्वत्' इति। अङ्गसंज्ञा च भवति प्रत्ययलक्षणेन' इति भाष्यं 'तृज्वत्क्रोष्टुः' (७।१।९५) इत्यत्र[1]। कार्यकालपक्षेऽपि[2] 'क्रोष्टुशब्दः प्रत्ययेऽङ्गसञ्ज्ञो भवति, अङ्गसंज्ञकस्य च तस्य तृज्वद्भावः' इत्यर्थात् तृज्वत्त्वमनैमित्तिकमेव। लक्ष्याऽनुरोधाच्चोरदित्यादौ यथाऽत्वं प्रत्यपि निमित्तता आवृत्त्या, न तथा प्रकृते, लक्ष्याऽनुरोधादेवेति तदाशयः।

'चर्करीति' 'अजर्घाः' इत्यादौ तु 'न लुमता' (१।१।६३) इति निषेधाऽनित्यत्वादत्वप्रवृत्तिः। 'वव्रश्च' इति सिद्धये च तस्य प्रत्ययनिमित्तताऽऽवश्यकीति दिक्।

**केचित्त्वङ्गाऽऽक्षिप्तप्रत्ययनिमित्तकं** कार्यं लुकि भवत्येव। प्रकाराऽन्तरेणाऽपि लब्धप्रत्ययस्य निमित्तत्वे तु निषेधो भवत्येव। यथा 'अर्व' 'गव' इत्यादौ त्रादेशो न, 'असौ' इति पर्युदासेनाऽपि प्रत्ययस्य निमित्तत्वादिति वदन्ति। अत्र पक्षे भ्रुवे हितं 'भ्रूहितम्' इत्यादावुवङ्भावश्चिन्त्यः।

**त्रिषु सरूपा इति**—'ङे प्रथमयोः' (७।१।२८) इतिसूत्रस्थेन 'युष्मान्,

---

१. इतोऽग्रे—'यथोद्देशे इदम्। कार्यकाले तु प्रत्ययनिमित्तत्वं स्यात्। यथा वव्रश्चाऽऽदौ। एवं च 'स्त्रियां च' (७।१।९६) इति सूत्रे 'यथोद्देशपक्ष एवाऽऽश्रीयते' इति कैयटादयः। अत्र पक्षे 'चर्करीति' इत्यादावुरदत्त्वं कथमिति चेन्न। 'अजर्घाः' इति भाष्योदाहरणेन प्रत्ययत्वेन प्रत्ययनिमित्तकाऽभ्यासकार्ये 'न लुमता' (१।१।६३) इति निषेधस्याऽनित्यत्वेनाऽप्रवृत्त्यङ्गीकारादिति बोध्यम्'—इति ख. पाठः।

२. 'कार्यकालपक्षेऽपि' इत्यारभ्य 'इति दिक्' इत्यन्तः क. ग. पाठः।

इत्यादौ 'तस्माच्छसो नः' (६।१।१०३) इत्युप[1]न्यासपरभाष्येण, 'स्वमोर्नपुं-सकात्' (७।१।२३) इति सूत्रे शिश्नीनुमादिभिर्युष्मदस्मदादेशानां विप्रतिषेध-परवार्त्तिकेन, तद्भाष्येण च, 'न षट्' (४।१।१०) इति निषेधेन च लिङ्ग-सत्ताबोधनेऽपि, लिङ्गबोधकप्रत्ययाऽनुत्पत्त्या रूपे न विशेष इ[2]त्यर्थः। 'साम आकम्' (७।१।३३) इति सूत्रस्थ[3]स्य 'अलिङ्गे युष्मदस्मदी' इति भाष्यस्य तु 'पदान्तरसन्निधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दमात्रान्न प्रतीयते' इत्यर्थ इति दिक्।

**त्रेस्त्रयः** (७।१।५३)—त्रयाऽऽदेशो न सान्तः। 'णिजां त्रयाणाम्' (७।३।७५) इति निर्देशात्।

न च त्रेरयङेव कुतो न कृत इति वाच्यम्। 'अयङ् यि क्ङिति' (७।१।७३) 'अनङ्' इत्यादाविवाऽकारस्यो[1]च्चारणाऽर्थत्वशङ्कावारणार्थं तथोक्तेः। **केचिदिति**—'आमि सर्वनाम्नः' (७।१।५२) इति साहचर्यादिति भावः। [4]**वस्तुतस्त्विति**—साहचर्यस्याऽसार्वत्रिकत्वात् सूत्राऽन्तरस्थतदा-श्रयणे दृढतरप्रमाणाऽभावा[5]च्चेति भावः। न गौणमुख्यन्यायेनाऽत्र न भ[6]वतीति वाच्यम्। अ[7]प्रसिद्धत्वस्य, गौणलाक्षणिकत्वस्य वा तत्र गौणपदार्थत्वात्। स्पष्टं चेदं सर्वनामसंज्ञासूत्रे **कैयटे**। (अत्र[8] ह्यङ्गाऽधिकारात् त्रिशब्दाऽन्त-

१. 'उपन्यासपरतद्भाष्येण' ख. पाठः।

२. इतोऽग्रे–'अत एवाऽव्ययानामत्राग्रहणम्। तेषां लिङ्गाऽभावात्। अव्ययी-भावस्य क्लीबत्वेऽपि लिङ्गाऽन्तराऽभावाच्च। विभक्तिप्रतिरूपकाणां लिङ्गयोगेऽपि, त्रिषु सारूप्याऽभावात्। इदमेव ध्वनयितुं मनोरमायाम् 'अव्ययानां प्रायेण निर्लिङ्गत्वात्, इत्युक्तम्'—इति क. कुण्डलितः, ख. ग. पाठः।

३. 'सूत्रस्थाऽलिङ्गे' इति ख. ग. पाठः।

४. 'वस्त्विति। बहुवचनादेरर्थप्राधान्यद्योतकस्याऽभावादिति भावः। साहृ-चर्यस्याऽसार्वत्रिकत्वात्' इति ख. ग. पाठः।

५. 'प्रमाणाभावाच्चेति बोध्यम्' ख. ग. पाठः।

६. 'भविष्यतीति वाच्यम्' इति ख. पाठः।

७. 'अप्रसिद्धत्वं, गौणलाक्षणिकत्वं वा तत्र गौणत्वम्' ख. ग. पाठः।

८. क. नास्ति।

त्वेन प्राप्तिः)। प्रकृते च त्रिशब्द[1]स्त्रित्वसङ्ख्यारूपमुख्याऽर्थप्रतिपादक एव। इतरविशेषणीभूत इत्यन्यदेतत्। न हीतरविशेषणतामात्रेणाऽप्रसिद्धत्वं गौणलाक्षणिकत्वं वा भवति। अत एव 'प्रियतिसा' इत्यादौ तिस्रादय आदेशा भाष्याद्युदाहृताः सङ्गच्छन्ते।

किञ्च गौणमुख्यन्यायो न प्रातिपदिककार्ये, किन्तू[2]पात्तं विशिष्याऽर्थोपस्थाप[3]कं विशिष्टरूपं यत्र तादृशपदकार्ये एव। परिनिष्ठितस्य[4] पदाऽन्तरसम्बन्धे हि 'गौर्वाहीकः' इत्यादौ गौणत्वप्रतीतिर्न तु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्गत्वाज्जातसंस्कारबाधाऽयोगः प्रातिपदिककार्ये प्रवृत्त्यभावे बीजम्। 'श्वशुरसदृशस्याऽपत्यम्' इत्यर्थे 'श्वाशुरिः' इत्यादावत इञः सिद्धये उपात्तेत्यादि। न च प्रातिपदिकपदं तादृशम्। तेन हि प्रा[5]तिपदिकशब्दवदर्थवच्छब्दत्वेनोपस्थितिरिति तस्य विशिष्य[6]ाऽर्थोपस्थापकत्वाऽभावात्।

निपातपदं तु निपा[7]तपदवच्चादित्वेनैव चादीनामुपस्थापकमिति तदुद्देश्यककार्येऽर्थोपस्थापकचादिनिमित्तत्वात् तत्र न दोषः।

(प[8]दशब्देन च कार्यप्रवृत्तिवेलायां गौणाऽर्थोपस्थापकं पदमुच्यते। अत एव) 'अग्नीषोमौ माणवकौ' इत्यत्र प्रसिद्धदेवताद्वन्द्ववाच्यग्नीषोमपदस्य तत्सदृशपर[9]त्वे इत्वषत्वे भवत एव। [10]तत्प्रवृत्तिवेलायां गौणाऽर्थोपस्था-

---

१. 'तत्र ह्येतद्घटकीभूतत्रिशब्दस्त्रित्वसंख्यारूपः' ख. पाठः।

२. 'किन्तूपात्तार्थोपस्थापकम्' ख. पाठः।

३. 'पस्थापकविशिष्टरूपकपदकार्ये' इति ख. ग. पाठः।

४. 'परिनिष्ठितस्य पदस्य पदान्तरसम्बन्धे हि' ख. ग. पाठः।

५. 'प्रातिपदिकशब्दत्वेन अर्थवच्छब्दत्वेन वोपस्थितिरिति' ख. ग. पाठः।

६. 'विशिष्टार्थोपस्थापकत्वाऽभावात् ख. पाठः।

७. 'निपातपदवत्' इति क. ग. पाठः।

८. ख. ग. पाठः।

९. 'परत्वेऽपि' ख. पाठः।

१०. 'तत्प्रवृत्ति' इत्यारभ्य 'उपस्थापकत्वाऽभावात्' इत्यन्तः पाठः क. नास्ति।

पकत्वाऽभावात् । यदा[1] त्वयं माणवकोऽग्निरयं सोम इत्युक्ते, परेण 'अग्नि-सोमौ भोजय' इति प्रयुक्ते, सदृशपराऽग्निसोमपदयोर्द्वन्द्वस्तदा न षत्वम्, तन्नामकावित्यर्थके च । अत एव 'अग्निसोमौ[2] माणवकौ' इत्यत्र गौणमुख्य-(प० १५)न्यायेन षत्ववारणपरं[3] भाष्यमष्टमे सङ्गच्छते । एवं च 'गां पाठय' इत्यादौ मुख्यगोपदार्थस्य पाठनकर्मत्वाऽसम्भवेन, विभक्त्युत्पत्ति-वेलायां प्रयोक्तृभिर्गौणार्थत्वप्रतीतावपि, अपदस्याऽप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थकत्वग्रहेण, 'अत्वं त्व सम्पद्यते' 'अमहान् महान् भूतः' 'त्वद्भवति' इत्यादिभाष्यप्रयोगे त्वाऽऽद्यादेशदीर्घादीनां करणेन चाऽस्य न्यायस्य पदकार्य[4]विषयत्वमेवोचितम् । अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः ।

किञ्च 'शुक्लाम्' इत्युक्ते कर्म निर्दिष्टम्, कर्त्ता, क्रिया चाऽनिर्दिष्टे' इत्युक्त्वा, 'इहेदानीं गामभ्यजा कृष्णां देवदत्त' इत्यादौ सर्वं निर्दिष्टम्, गामेव कर्म, देवदत्त एव कर्त्ता, अभ्याजैव क्रिया इत्यर्थकभाष्येण, कारका-ऽऽदिमात्रप्रयोगे, योग्यसर्वक्रियाऽऽद्यध्याहारे प्रसक्ते, नियमाऽर्थः क्रिया-वाचकादिप्रयोगः' इत्येतत्तात्पर्यकेण, सामान्यतः क्रियाजन्यफलाश्रयत्व-मात्रविवक्षायां द्वितीयायाः सत्त्वेन, पाठनक्रियाऽन्वयकाले पदस्यैव गौणा[5]ऽर्थ-त्वप्रतीतिः प्रयोक्तुरपि ।

(किञ्च 'गाम्' इत्यादावात्ववृद्ध्यादिकं भवत्येव । विशिष्टरूपोपादाना-

---

१. 'यदा त्वयम्' इत्यारभ्य 'अत एव' इत्यन्तः क. ग. पाठः । ख. नास्ति ।
२. 'अग्नीषोमौ' इत्येव सर्वेषु पुस्तकेषु पाठो दृश्यते । परन्तु भाष्यानुसारेणा-ऽस्माभिः स शोधितः ।
३. 'षत्वावरणपरं भाष्यमग्नीषोमनामकावित्यर्थकोदाहरणपरम्' ख. पाठः ।
४. 'पदकार्यमात्रविषयत्वमेव' ख. पाठः ।
५. 'गौणार्थत्वमिति तत्त्वम्' ख. ग. पाठः ।
६. 'ओकारोपलक्षणत्वात्' इत्यन्तः क. कुण्डलितः ख. पाठः । अस्य ख. पाठस्य स्थाने—'किञ्चात्ववृद्ध्यादौ विशिष्टरूपोपादानाऽभावेन तन्न्याया-प्रवृत्त्या गामित्यादौ न दोषः' इति ग. पाठः । क. कुण्डलितः ।

ऽभावेन तद्विषये तन्न्यायाऽप्रवृत्तेः । 'अर्थाऽऽश्रये एतदेवं भवति, शब्दाऽऽश्रये च वृद्धयात्वे' इत्योदादिसूत्रस्थभाष्यस्याऽप्यर्थरहितवर्णरूपशब्दाऽऽश्रय इत्येवाऽर्थः । 'गोतः' (७।१।९०) इत्यस्याऽपि ओकारोपलक्षणत्वात्) ।

'गौणलाक्षणिकत्वमेव गौणत्वमत्र' इतिमते एतदतिरिक्तोऽभिव्यक्तेति[1]-न्यायोऽपि पदकार्यविषयकः । ध्वनितं चेदं सर्वादिसूत्रे संज्ञाभूतानां प्रतिषेधमारभता वार्त्तिककृता, 'पूर्वाऽपर' (१।१।५८) इति सूत्रे'ऽसंज्ञायाम्' इति वदता सूत्रकृता, अन्वर्थसंज्ञाऽऽदिभिस्तत्प्रत्याख्यानं कुर्वता भाष्यकृता च ।

(शब्द[2]परेषु तु शास्त्रीयकार्यप्रवृत्ति-तदभावौ यथालक्ष्यम् 'यत्तदेतेभ्यः' (५।२।३९) इत्यादिज्ञापकाद्भवत इति बोध्यम्) । एतत्परिभाषाफलन्तु 'महद्भूतश्चन्द्रमाः' इत्यादावात्वाऽभावः, संज्ञाश्वशुराऽऽदौ यदभावश्चेति [3]बोध्यम् ।

अ[4]त एव एषा परिभाषा लौकिकेनाऽर्थेनाऽर्थवद्ग्रहणविष[5]या । सोऽर्थश्च लोके प्रयुज्यम[6]ानपदस्यैव । न हि प्रातिपदिकं लोके प्रयुज्यते । कल्पिता हि तस्याऽर्थवत्ता । तत्र च न गौणमुख्यत्वमिति पद[7]कार्ये एवाऽयं न्याय इत्यष्टमे कैयट इत्यलम् ।

**त्यदादीनामः** (७।२।१०२) 'अष्टन आ विभक्तौ' (७।२।८४) इत्यतो 'विभक्तौ' इत्यनुवर्त्तते । तत्फलन्तु तत्कुलम् । सोर्लुकि अत्वं न ।

**दृष्टिरिति**—'भाष्यकारस्य' इति शेषः 'वार्त्तिकमिदम्' इत्यन्ये ।

---

१. 'एवमभिव्यक्तेतिन्यायोऽपि पदकार्यविषयकः' इति ख. पाठः ।

२. क. नास्ति । ३. 'यदभावश्चेति तत्त्वम्' ख. पाठः ।

४. 'यत्त्वेषा' ख. ग. पाठः ।

५. 'अर्थवद्विषयैव' ख. पाठः ।

६. 'प्रयुज्यमानस्य पदस्यैव' ख. पाठः ।

७. 'पदकार्ये एवाऽयं न्याय इति । तन्न । कल्पिताऽर्थवत्त्वमादायाऽर्थवत्परिभाषाया इव, कल्पितगौणमुख्यत्वमादायैतन्न्यायस्याऽपि प्रवृत्तेरेवौचित्यादित्यष्टमे कैयट इत्यलम्' इति क. कुण्डलितः ख. ग. पाठः ।

**द्विपर्यन्तानां किमिति**—युष्मदस्मदोरात्वयत्वलोपैर्विशेषविहितैरत्वस्य बाधात्, किमः काऽऽदेशस्य विधानाच्चेति प्रश्नः। ननु व्यक्तिपक्षे 'अत्व-सन्तस्य' (६।४।१४) इति सूत्रेऽस्याऽप्यतोरुपस्थितिसामर्थ्यात् सौ न 'त्यदादीनामः' (७।२।१०२) इत्यस्य प्राप्तिरित्यपि शङ्का स्यादत आह—**भवन्ताविति**।

**इञोऽपवाद इति**—अनेन बहुवचनमात्रविषयोऽकारान्त इकारान्ताद् भिन्न एवेति ध्वनयति। यद्यपि हरिशब्दनिरूपणेन इकारान्ताऽन्यकृत्तद्धि-तान्तवत् अयमपि उपन्यस्तप्रायः, तथाऽप्यत्र निरूपणम् 'इकारान्तस्य बहुत्वेऽकारान्तत्वम्' इति **जरदनुसारिणां** भ्रमनिवृत्त्यर्थम्।

यत्तु 'इञ्यपि, तस्य बहुत्वे 'बह्वच इञः प्राच्यभरतेषु' (२।४।६६) इति लुकि, अन्तर्वर्त्तिविभक्त्या पदत्वेन लोपसिद्धेरिदं व्यर्थम्। भसंज्ञा तु वर्णाऽऽश्रयत्वाल्लुका लुप्तत्वाच्च प्रत्ययलक्षणेन न' इति। तन्न। प्राच्य-भरतेभ्योऽन्यत्र लुगभावात्। सुब्विधौ नलोपाऽसिद्धत्वेन 'उडुलोमान्' 'उडुलोमैः' इत्याद्यसिद्ध्यापत्तेश्च। **इतीदन्ताः**।

**ङौ तु सवर्णदीर्घ इति**—यथा चाऽस्य ङौ प्रयोगेऽपि 'ईदूतौ च सप्तम्यर्थे' (१।१।१९) इति सूत्रस्थभाष्यविरोधो न भवति तथा भाष्यप्रदी-पोद्द्योते स्पष्टम्। 'ईदूतौ च' (१।१।१९) इत्यत्र अत्राऽपि ग्रन्थे ध्वनितम्[1]।

**क्विबन्तवातेति**—[2]'मीङ् माने' इति ईकारान्तात् क्विप्। 'माङ् माने' इत्यस्मात् क्विपि त्वीत्वम्। ईत्वविधौ 'अवकारादौ' इत्यस्य भाष्ये प्रत्याख्यानात्। 'शंस्था'शब्दे तु भाष्यप्रयोगादेव ईत्वाऽभाव इति 'स्थः

---

१. 'ध्वनितं च' ख. ग. पाठः।

२. 'यत्तु मीङ् माने' इति ईकारान्तात् क्विप्। 'माङ् माने' इत्यस्मात् क्विपि त्वीत्वं दुर्लभम् : तस्य वकारादौ प्रतिषेधात्। अत एव शंस्थाशब्दे ईत्वं नेति वक्ष्यामः। किञ्च सत्यपि ईत्वे 'एरनेकाच' इति यण् दुर्लभः। ईत्वविधावनुवर्त्तमानेन 'असिद्धवत्' इत्यनेन यणि तस्याऽसिद्धत्वादिति। तन्न। 'अवकारादावि'त्यस्य भाष्ये प्रत्याख्यानात्।' इति ख. ग. पाठः।

क च' (३।२।७७) इति सूत्रे **हरदत्तादय** इत्यग्रे निरूपयिष्यामः। यणि ईत्वस्याऽसिद्धत्वन्तु न प्राप्नोति। क्त्वावीत्वम्, विभक्तौ यणादेश इति व्याश्रयत्वादिति दिक्[१]।

**वातप्रमीः**—निःश्रृङ्गो मृगाऽऽकृतिर्जन्तुविशेषः।

**बहुश्रेयसीति**—'ईयसश्च' (५।४।१५६) इति निषेधान्न कप्। न च समासान्तविधौ लिङ्गविशिष्ट(प० ७३)परिभाषाऽभावस्य 'ङ्याप्प्रातिपदिकात्' (४।१।१) इति सूत्रे भाष्ये उक्तत्वात्, ईयसन्तोत्तरपदत्वाऽभावाच्च कथं निषेधः ?। किञ्च 'ईयसश्च' (५।४।१५६) इति निषेधः 'अनन्तरस्य' (प० ६३) इति न्यायेन 'शेषाद्विभाषा' (५।४।१५४) इत्यस्यैव बाधकः स्यात्, न तु 'नद्यृतश्च' (५।४।१५३) इत्यस्येति वाच्यम्। 'गोस्त्रियोः' (१।२।४८) इति सूत्रे 'ब[२]हुश्रेयसी' इति भाष्योदाहरणात् समासान्तविधौ लिङ्गविशिष्टपरिभाषाया अप्रवृत्तावपि, तन्निषेधविधौ तत्प्रवृत्तेः। अत एवाऽनन्तरस्येति न्यायोऽप्यत्र न प्रवर्त्तते इति बोध्यम्। 'ईयसो बहुव्रीहेर्न' इति निषेधान्नोपसर्जनह्रस्वः।

**यू स्त्र्या** (१।४।३)—'यू' इति दीर्घयोरेव ग्रहणम्। व्याख्यानात्। 'यू' इत्यत्र 'वा च्छन्दसि' (६।१।१०६) इत्यनेन 'दीर्घाज्जसि' (६।१।१०५) इति निषेधस्य पाक्षिकत्वात् पूर्वसवर्णदीर्घः। यू किम् ?। मात्रे। मातुः। 'आण्नद्याः' (७।३।११२) इति स्यात्।

स्त्रियमाचक्षाते-'स्त्र्याख्यौ'। मूलविभुजादित्वात् कः।

अत्र **केचित्**—वर्णयोरेव संज्ञा। 'आच्छीनद्योः' (७।१।८०) इति सूत्रस्वरसात्। 'स्त्र्याख्यौ' इति तु ईदूतोर्विशेषणम्। तयोः स्त्र्याख्यत्वन्तु ङ्यादौ स्वतः। **मनोरमायाम्** 'ङ्यादिषु' इति बहुवचनन्तु प्रयोगभेदाऽभि-

१. इतोऽग्रे–'अत एव[1] प्रविगणय्य' इत्यादौ 'अतो लोपोऽयादेशे नाऽसिद्धः' इति भाष्यं सङ्गच्छते। एवं च माङोऽपि निर्बाधमिति दिक्' इति क. कुण्डलितः ख. पाठः।

२. 'हे बहुश्रेयसीति' इति ख. पाठः।

1. 'अत एव विगणय्येत्यादौ' इति ख. पाठः।

प्रायेण । क्वचित्तु स्त्रीवाचकवर्णसमुदाये घटकत्वेन प्रवेशात्, शक्तिपर्याप्त्यधिकरणत्वस्याऽविवक्षितत्वादिति वदन्ति ।

**अन्ये** तु तदन्तयोरिति वदन्ति । 'स्त्र्याख्यौ' इत्युपस्थापितस्त्रीवाचकस्य विशेष्यत्वात् तदन्तविधिरित्यभिप्रेत्याऽऽह—**ईदूदन्ताविति** । 'आच्छीनद्योः' इत्यादौ तु नदीशब्दस्य तदवयवे लक्षणा बोध्या । 'आख्या'ग्रहणान्नित्यत्वलाभः । तदाह—**नित्यस्त्रीलिङ्गाविति** । तत्फलन्तु ग्रामणीशब्दादिव्यावृत्तिः । नित्यस्त्रीत्वं च लिङ्गान्तरविशिष्टाऽर्थाऽनभिधायकत्वम् । 'स्त्रीविषयावेव यौ नित्यम्' इति भाष्यस्वरसतस्तथैव लाभात् ।

नन्वेवं ङ्यन्तकुमार्यादिशब्दानामपि नदीत्वं न स्यात् । क्यच्-क्विपोर्निर्वृत्तेन त्रिलिङ्गेन समानाऽऽकारतया, नित्यस्त्रीत्वाऽभावादिति चेन्न । प्रत्यासत्तिन्यायेन, 'स्त्र्याख्यौ' इति विशेषणसामर्थ्येन च प्रवृत्तिनिमित्तैक्ये नित्यस्त्रीत्वस्याऽऽश्रयणात् ।

नन्वेवं 'बहुश्रेयसी'शब्दस्य नदीत्वं न स्यादत आह—**प्रथमेति** (वा० १।४।३) । 'अर्थान्तरसंक्रमात् पूर्वं विद्यमाननित्यस्त्रीत्वमादाय नदीत्वमर्थान्तरसङ्क्रमेऽपि तस्य कर्त्तव्यम्' इत्यर्थः । 'प्रकृष्टा धीर्यस्य' इति विग्रहे 'प्रध्यै ब्राह्मणाय' इत्यत्र 'नेयङ्' (१।४।४) इति निषेधस्तु न । अत्राऽङ्गे इयङुवङोः स्थित्यभावात् । बहुव्रीहित्वेऽपि 'नद्यृतः' (५।४।१५३) इति कप् न । ऋकारसाहचर्येण यस्य वृत्तेः प्राङ् नदीत्वम्, तदुत्तरपदक एव तत्प्रवृत्तेः । प्रतिपदोक्तगतिसमासाऽभावेऽपि यथा यण्, तथाऽग्रे निरूपयिष्यामः ।

इदं च 'यूस्त्र्या' (१।४।३) इति सूत्रविषयमेव, न तु 'ङिति ह्रस्वश्च' (१।४।६) इत्येतद्विषयम् । अत एव 'अतिश्रिये ब्रह्मणाय' इत्यत्र विकल्पो न । महासंज्ञाबललब्धस्त्रीत्वेन तत्राऽङ्गस्याऽपि विशेषणात् । यथोद्देशपक्षे त्वन्तरङ्गत्वात् पूर्वप्रवृत्तनदीसंज्ञयैव नद्यन्तत्वात् समुदाये कार्यसिद्ध्या इदं न कार्यम् ।

(न[1]दीसंज्ञायां च लक्ष्याऽनुरोधाद् यथोद्देश एवाऽऽश्रयणीयः) ।

---

१. क. नास्ति, ख. ग. पाठः ।

कार्यकालेऽपि[1] अजहत्स्वार्थायामवयवस्य नित्यस्त्रीत्वविशिष्टाऽर्थबोधकत्वेन तस्यैव सञ्ज्ञया, नद्यन्तत्वात् समुदाये कार्यसिद्धिः। इदमेवाऽभिप्रेत्य भगवता भाष्यकारेण प्रत्याख्यातम्—'अवयवस्त्रीविषयत्वात् सिद्धम्' इति। 'अवयवशब्देन चाऽत्र वृत्तिप्रकृतिभूतशब्दग्रहणम्। अत एव क्यजाद्यन्ते न दोषः। तत्रापि[2] कुमारीशब्दस्येच्छाविशेषणतया स्त्र्याख्याऽर्थबोधकत्वात् कार्यकालपक्षे न दोषः।

**हे बहुश्रेयसीति—**ह्रस्वे कृते गुणस्तु न। प्रक्रियालाघवाय 'अम्बाऽर्थानां ह्रस्वः' 'ह्रस्वनद्योर्गुणः' इत्येव वक्तव्ये, ह्रस्वविधानसामर्थ्यात्। 'जसि च' (७।३।१०९) इत्यत्र तु ह्रस्वग्रहणमेवाऽनुवर्त्तते, न 'नदीग्रहणम्' एकदेशे स्वरितत्वप्रतिज्ञानादिति भाष्यकृतः।

'अम्बाऽर्थनद्योर्गुणः' इति वक्तव्ये ह्रस्वविधानसामर्थ्यान्न गुणः, इति न युक्तम्। 'अनः क्लीबं जले, शोके, मातृस्यन्दनयोरपि' इति रभस-रुद्र-विश्वादिकोशेषूक्तस्य मातृपर्यायस्याऽनःशब्दस्याऽम्बार्थकत्वेन गुणाऽऽपत्तेः। ह्रस्वग्रहणे तु 'अचश्च' (१।२।२८) इत्युपस्थितावजन्तस्याऽम्बार्थकस्य ग्रहणान्न दोषः। मातरि तस्य नपुंसकत्वेऽपि 'हे वारे' इतिवत् पक्षे गुणाऽऽपत्तिरिति बोध्यम्। अत एव 'अम्बाऽर्थनद्योरण्' इत्येव सूत्रयितुमुचितम्, इत्यपास्तम्। ह्रस्वश्चाऽयमनन्तरस्येति न्यायात् 'ह्रस्वस्यः गुणः' (७।३।१०८) इत्यस्यैव बाधकः। तेन 'मातः' इत्यत्र 'ऋतो ङि' (७।३।११०) इति गुणो भवत्येवेत्याहुः।

**आण्नद्याः** (७।३।११२)—'अट्' एव वक्तुं युक्तः, 'अजादीनामटा सिद्धम्' इतिवत्। पररूपन्तु न। 'आटश्च' इति पुनर्विधानाऽर्थेन चेन पररूपबाधादित्याहुः। तन्न। तत्पक्षे 'अटश्च' इत्यत्र 'धातौ' इत्यपकर्षेण वृद्ध्यनापत्तेः। अत एव तत्पक्षे 'अस्वपो हसति' इत्यत्र न दोषः।

**आटश्च** (६।१।९०)—यद्यपि 'वृद्धिरेचि' (६।१।८८) इति सिद्धम्, अत

---

१. 'कार्यकालेऽपि' इत्यारभ्य 'कार्यसिद्धिः' इत्यन्तः क. पाठः, ख. ग. नास्ति।

२. 'तत्रापि' इत्यारभ्य 'न दोषः' इत्यन्तः क. ग. पाठः।

एव 'न माङ्योगे' (६।४।७४) इति सूत्रस्थभाष्योक्ते 'अटश्च' इति न्यासे न दोषः, तथाऽपि परत्वेन न्याय्यत्वादुपन्यस्तमिदम् ।

**ङेराम्** (७।३।११६)—'ङेः' इति सप्तम्येकवचनम् । 'स्त्रियाम्' इत्यादिनिर्देशात् । **इह परत्वादिति**—सकृद्गति(प० ४०)न्यायाऽऽश्रयणादिति भावः । अत एव 'स्त्रियाम्' इत्यादिनिर्देशाः सङ्गच्छन्ते । स्पष्टं चेदं 'ह्रस्वनद्यापः' (७।१।५४) इत्यत्र भाष्ये ।

([1]एतेन नित्यत्वात् पूर्वमाटि, 'रमायाम्' इत्यादौ याटि च, तेन व्यवधानादाम् दुर्लभः, इत्यपास्तम् । शब्दाऽन्तरप्राप्त्योभयोरप्यनित्यत्वेन, परत्वादाम एव प्रवृत्तेः) ।

न च नपुंसक'ग्रामणि'शब्दान्ङ्गवेकदेशविकृत(प० ३७)न्यायेन 'नी'-शब्दत्वादामि नुडापत्तिरिति वाच्यम् । परस्यौत्त्वस्य प्राप्त्या, आमो दुर्लभत्वात् । औत्त्वमपि नुमा पूर्वविप्रतिषेधेन बाधितमित्यन्यदेतत् । तस्मात् 'ग्रामणिनी' इत्येवेति बोध्यम् । पुंवत्त्वपक्षे तु ह्रस्वस्याऽप्यभावात् 'ग्रामण्याम्' इत्येवेत्याहुः । न च येन नाप्राप्ति(प० ५९)न्यायेन नद्याम आडपवादत्वात् कथं तद्विषये आटः प्रवृत्तिरिति वाच्यम् । क्वचिदपवादप्रवृत्तिविषयेऽपि तत्प्रवृत्त्यनन्तरमुत्सर्गप्रवृत्त्यङ्गीकाराददोषः । अत्र च 'स्त्रियाम्' इत्यादिनिर्देशा लिङ्गम् । स्पष्टं चेदम् 'पादः पत्' (६।४।१३०) इति सूत्रे कैयटे ।

[2]यत्त्वागमादेशयोर्न बाध्य-बाधकभावः, भिन्नफलत्वात् । अत एव 'ब्राह्मणे दधि दीयताम्, कम्बलं कौण्डिन्याय' इत्यादौ कम्बलेन न दधिदानबाधः । बाधितस्य हि न प्रवृत्तिः । एवञ्च पूर्वमाडादौ व्यवधानादाम्-शास्त्रस्य वैयर्थ्येन पूर्वं तत्र प्रवृत्ते, पुनराडादि भवत्येव । स्पष्टा चेयं रीतिः 'च्छ्वोः शूड्' (६।४।१९) इति सूत्रे कैयटे इत्याहुः । तन्न । 'अपवादो नुग्दीर्घत्वस्य' इति 'दीर्घोऽकितः' (७।४।८३) इति सूत्रस्थभाष्यविरोधात् ।

---

१. 'एतेन' इत्यारभ्य 'एव प्रवृत्तेः' इत्यन्तः क. कुण्डलितः ख. पाठः ।

२. 'यत्त्वागमादेशयोः' इत्यारभ्य 'भाष्यविरोधात्' इत्यन्तः क. ग. पाठः ।

**अङ्चन्तत्वादिति**—'लक्षेर्मुट् च' २९४(३।७) इत्यौणादिके प्रत्यया[1]न्तत्वादिति भावः। अत एवोपसर्जनह्रस्वो न। गोस्त्रियोः (१।२।४८) इत्यत्र स्वरितत्वेन स्त्र्यधिकारोक्तस्यैव ग्रहणात्।

**कुमारीति**–यद्यपि क्विबर्थं प्रति ङ्यन्तस्योपसर्जनत्वात् ह्रस्वत्वं प्राप्तम्, तथापि ह्रस्वविधायके शास्त्रीयोपसर्जनग्रहणादुपसर्जनह्रस्वो[2] न।

**अचि श्नु** (६।४।७७)—य[3]द्यपि 'ऊङ् च गमादोनाम्' (वा० ६।४।४०) इतिवार्त्तिकेन क्विपि, अनुनासिकलोपे, ऊङि च, निष्पन्न'भ्रू'शब्दस्य धातुत्वादेव सिद्धम्, तथाऽपि 'भ्रमेश्च डूः' २३६(२।७१) इत्युणादिनिष्पन्न'भ्रू'शब्दस्य यणभावार्थं ग्रहणमित्याहुः।

इह 'य्वोः' इति धातोरेव विशेषणम्, न त्वन्ययोः, अव्यभिचारात्। तदपि समानाधिकरणमेव। विभि[4]न्नवचनत्वेऽपि, 'वेदाः प्रमाणम्' इत्यादौ तथा दर्शनात्।

([5]'श्नुप्रभृत्यन्ताऽङ्गावयवेवर्णोवर्णयोः' इति व्याख्यानं त्वयुक्तमेव। वैयधिकरण्यस्याऽन्याय्यत्वात्। ङित्त्वस्य वैयर्थ्याऽऽपत्तेश्च। श्न्वादीनामङ्गस्य च स्थानषष्ठ्या निर्देशाऽभावात्। 'क्षिपति' 'अद्युतत्' इत्यादावियङापत्तिश्च[6]। 'दिदवितुः' इत्यत्र 'एरनेकाचः (६।४।८२) इति यणापत्तिश्च। यण्शास्त्रे 'इवर्णान्ताङ्गस्य' इत्येवाऽर्थाऽङ्गीकारे तु तत्राऽपीयङापत्तिर्बोध्या। 'अज[7]ादौ प्रत्यये' इत्यस्य अङ्गविशेषणताया न्याय्यत्वात्। न चाऽत्र 'लोपो व्योः' (६।१।६६) इति लोपेन निर्वाहः। प्रत्ययनिमित्तेयङुवङोर-

---

१. अत्र 'ईप्रत्ययान्तत्वात्' इति च्छेदो बोध्यः।
२. 'उपसर्जनग्रहणादुपसर्जनह्रस्वो न' ग. पाठः।
३. 'यद्यपि' इत्यारभ्य 'तथापि' इत्यन्तः क. ग. पाठः।
४. 'विभिन्न' इत्यारभ्य 'तथा दर्शनात्' इत्यन्तः क. ग. पाठः।
५. 'श्नु' इत्यारभ्य 'अवल्परे दोषाच्च' इत्यन्तः क. कुण्डलितः ख. ग. पाठः।
६. 'इयङाद्यापत्तिश्च' ख. पाठः।
७. 'न चाऽजादौ प्रत्यये इत्यनेन य्वोर्विशेषणान्न दोषः। अङ्गविशेषणताया न्याय्यत्वात्' इति ख. पाठः।

सिद्धत्वात् । 'ऊयतुः' इत्यादौ अवल्परे दोषाच्च) तदाह—**इवर्णोवर्णान्तधातोरिति ।**

**इत्येतस्येति**—इत्येतदन्तस्येत्यर्थः । तेन 'सुभ्रुवौ' इत्यादिसिद्धिः ।

ननु 'धातोरुच्यमानं कार्यं धातुप्रत्यये' इति 'मृजेर्वृद्धिः' (७।२।११४) इतिसूत्रपठितपरिभाषया सुपि इयङादीनामनापत्तिरिति चेन्न । 'सुधी'शब्दे यण्निषेधाऽऽरम्भसामर्थ्येनाऽत्र प्रकरणे परिभाषाया अप्रवृत्तिकल्पनात् । 'क्षियो दीर्घात्' (८।२।४६) 'भुवः संज्ञाऽन्तरयोः' (३।२।१७९) इत्यादिनिर्देशाच्च । य्वोः[1] षट्त्रिंशदिति[2], यथासङ्ख्याऽप्राप्तेराह—**आन्तरेति ।** स्थानत इति भावः । य्वोरिति किम् ? । वव्रे । अचि किम् ? । युयात् ।

**एरने(का)** (६।४।८२)—'अचि श्नु' इत्यत एकदेशे स्वरितत्वप्रतिज्ञाबलादनुवृत्तधातुग्रहण चाऽऽवृत्त्या संयोगाऽङ्गयोर्विशेषणम्, व्याख्यानात्, लक्ष्याऽनुसाराच्च, एकदेशाऽन्वयेऽपि सौत्रत्वाद् वृत्तिः । न च 'उन्न्यौ' इत्यादौ यणभावे इष्टाऽऽपत्तिरेवाऽस्तु । 'स्वरपूर्वा, पदपूर्वा चोपधा यस्येवर्णस्य तस्य यण्' इत्यर्थकेन 'स्वरपद-पूर्वोपधस्य' इति वार्त्तिकेन तत्र यण इष्टत्वाऽनुमानात् । उक्तोपायेन[3] प्रत्याख्यातं च ।

([4]उन्नी' शब्दादिभ्यः[5] क्यजन्तेभ्यः[6], आचारक्विबन्तेभ्यो वा[7] कर्त्तृक्विप् तु न, अनभिधानादिति न तत्र भाष्यवार्त्तिकयोः फलभेदः । **केचित्तु** भाष्याऽनुरोधेन वार्त्तिके 'पद'पदेन 'धात्ववयवत्वाऽनधिकरणं पदमेव' इति नाऽभिधानेऽपि फलभेदः, उभयमतेऽपि यणभावादित्याहुः) । इत्यभिप्रेत्याह—**धात्ववयवेत्यादि ।** अङ्गविशेषणफलन्तु 'हरी' इत्यादि । अङ्गस्य,

---

१. इकारोकारयोः षट्त्रिंशद्भेदस्त्वादियङुवङ्भ्यां यथासङ्ख्याऽप्राप्तिरित्यर्थः ।

२. 'य्वोः षट्त्रिंशत्' इति ख. पाठः ।

३. उक्तोपायेन=आवृत्त्या ।

४. क. कुण्डलितः ख. ग. पाठः ।

५. 'तन्त्रीशब्दादिभ्यः' इति ग. पाठः ।

६. 'क्यजाद्यन्तेभ्यः' इति ग. पाठः ।

७. 'आचारक्विबन्तेभ्यो वा' इति ख. पाठः, क. ग. नास्ति ।

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तत्वात्। (न[1] च धात्ववयवसंयोगपूर्वत्वस्य धात्ववयवेकार एव सम्भवेन, संयोगवद् विप्रयोगस्याऽपि विशेषाऽवगतिहेतुतया तद्भिन्नस्याऽपि धात्ववयवस्यैव ग्रहणान्न दोष इति वाच्यम्। 'तन्त्रोः' इत्यादौ धात्ववयवसंयोगपूर्वस्याऽधात्ववयवस्याऽपि सम्भवात्)। यद्यपि 'इको गुणवृद्धी' (१।१।३) इति निर्देशेन प्रत्यासत्त्या धात्ववयवसंयोगपूर्वभिन्नस्येवर्णस्य धात्ववयवस्यैव ग्रहणेन 'हरी' इत्यादौ न दोषस्तथाऽपि स्पष्टप्रतिपत्तये 'धातोः' (३।१।९१) इत्यस्याऽऽवृत्तिरेवाऽऽश्रिता।

'उत्सर्गसमानदेशा अपवादाः' इति न्यायेन तु न निर्वाहः। अङ्गांऽशे तदसम्बन्धे 'हरम्' इत्यादावपि प्राप्त्या, तेन येन नाप्राप्त्यभावेन, तदपवादत्वस्यैवाऽभावादिति दिक्।

एः किम्?। असंयोगपूर्वग्रहणम् इवर्णविशेषणं यथा स्यात्, अङ्गविशेषणं मा भूदिति। तेन 'यवक्रियौ' इत्यादौ नाऽतिप्रसङ्गः। न च तदभावे 'लुलुवतुः' इत्यादावतिप्रसङ्गः। 'ओः सुपि' (६।४।८३) इति नियमाऽऽश्रयणात्। विपरीतनियमस्तु न। 'सुधी' शब्देऽचि सुपि यण्निषेधाऽऽरम्भादित्याहुः।

यत्तु 'अनेकाचोऽसंयोगात्' इत्येव सूत्रं कार्यम्। 'य्वोः' इत्यनुवर्त्य 'धात्ववयसंयोगभिन्नात् परौ यौ यू, तदन्तस्य' इत्यर्थः। 'ओः सुपि' (६।४।८३) इति 'उवर्णान्तस्य चेत् सुप्येव' इति नियमार्थम्। अतो 'लुलुवतुः' इत्यादौ न दोषः' इति। तन्न। 'यवक्रियौ'[2] इत्यादावपि धात्ववयवसंयोगभिन्नरेफात् परत्वेनाऽतिप्रसङ्गात्। सिद्धान्ते तु 'धात्ववयवसंयोगपूर्वभिन्नस्य' इत्यर्थान्न दोषः।

यदि तु[2]—'असंयोगात्' इतिविशेषणसामर्थ्यात् 'धात्ववयवसंयोगात् परस्य न' इति व्याख्यायते, तदा 'उदियौ' इत्यादौ दोषः। मम तु पूर्वग्रहणसामर्थ्येन, पर्युदासवृत्त्या च तद्भिन्नस्य धात्ववयवपूर्वस्यैव ग्रहणान्न दोषः। (वा[3]र्त्तिकेऽपि परपूर्वोपधासाहचर्यात् स्वरपूर्वोपधाऽपि धात्ववयवभूतैव गृह्यते इति नाऽत्र दोषः।)

---

१. क. कुण्डलितः ख ग पाठः। २. 'यदि हि' ख. पाठः।
३. क. कुण्डलितः ख. ग. पाठः।

**कुमार्याविति**—'नः क्ये' (१।४।१५) इति पदत्वनिषेधादन्तर्वर्त्तिविभक्त्या पदत्वमाश्रित्य शाकलं नेति बोध्यम्। **प्रधीरिति**—'प्रकृष्टं ध्यायति इति विग्रहः। अत एव न नदीत्वम्। ध्यानकर्त्तृत्वस्य लिङ्गत्रयसाधारण्येन नित्यस्त्रीत्वाऽभावात्। 'प्रकृष्टा धीर्यस्य' इति विग्रहे तु नदीत्वं भवत्येव।

संयोगस्य धातुना विशेषणे फलमाह—**उन्न्याविति। ग्रामणीरिति**—क्विपि 'अग्रग्रामाभ्यां नयतेः' (वा० ३।२।६१) इति णत्वम्।

'गतिकारकपूर्वस्यैव' इति भाष्ये पठ्यते। स च नियमः। तेन 'गतिकारकपूर्वभिन्नस्य' इत्यर्थः। यत्तु–'इदं वचनं यण्विधिनैकवाक्यतयाऽन्वेति, अतो न नियामकत्वम्' इति। तन्न। एवकारस्याऽनन्वयाऽऽपत्तेः। 'निन्यतुः' इत्यसिद्धापत्तेश्च। गतिकारकपूर्वभिन्नं च तत्सदृशं सपूर्वपदमेव गृह्यते। तेन बहुच्पूर्वे[1], 'निन्यतुः' इत्यादौ च[2] यण्। तदेतदाह–**गतिकारकेतरेति। शुद्धधियाविति**। 'शुद्धा धीर्यस्य' इति विग्रहः। 'शुद्धं ध्यायति' इति विग्रहे यण् भवत्येव। न चाऽद्यविग्रहेऽप्यस्तीत्यध्याहारेण कारकत्वमस्त्येवेति वाच्यम्। वृत्तौ शुद्धधीपुरुषपरत्वेनाऽकारकत्वात्। (प्रत्यासत्त्या[3] यणस्थान्यवयवकधात्वर्थकारकस्यैव ग्रहणाच्च)।

**कथं तर्हीति**—'दुर्ध्यायति' इति, 'दुष्टा धीर्येषाम्' इति, 'वृश्चिकाद् भीः' इति विग्रहाऽभिप्रायेण प्रश्नः। यत्तु 'भाष्यवचने 'गतिकारकपूर्वपद' इत्यत्र प्रतिपदोक्तत्वाद् गतिसमासस्य नित्याऽधिकारस्थस्यैव ग्रहणम्, तत्साहचर्यात् कारकांशेऽपि 'कर्त्तृकरणे' (२।३।३२) इत्यादेरेव। एवं च प्रागुक्तविग्रहेऽपि न दोषः। 'दुर्ध्यायति' इति विग्रहे तु यण् भवत्येव' इति **श्रीपतिदत्तादयः**। तन्न। भाष्ये 'पूर्वपद'ग्रहणाऽभावेन शब्दप्रयोज्यसमासोपस्थितेरभावात्। लक्षणप्रतिपदोक्त(प० १५)परिभाषायाश्च विशिष्टरूपोपादानविषयत्वेन, तत्प्रवृत्तौ मानाऽभावात्। अत एव 'यू स्त्र्याख्यौ'

१. 'बहुच्पूर्वे' इति लघुशब्देन्दुशेखरे नास्ति।

२. चकारः क. ग., लघुशब्देन्दुशेखरे च नास्ति।

३. क. कुण्डलितः ख. ग. पाठः।

(१।४।३) इति सूत्रस्थः 'प्रकृष्टा धीः' इति विग्रहाऽभिप्रायकः 'प्रध्यै ब्राह्मण्यै' इति भाष्यप्रयोगः सङ्गच्छते। एवञ्चोक्तप्रयोगयोरुक्तविग्रहे यणेव प्रप्नोतीत्याशयेनाऽऽह—**दुःस्थितेति**।

न च 'प्रकृष्टा धीः' इति विग्रहेऽपि 'प्रध्यम्' इत्यत्र यण् न स्यात्। 'प्र'शब्दस्य कृषिं प्रति गतित्वेऽपि धीशब्दं प्रति तत्त्वाऽभावादिति वाच्यम्। प्रशब्दोपात्तप्रकर्षस्य धीशब्दोपात्तधात्वर्थ[1]विशेषणत्वेनैव बोधात्। प्रकृते दुःशब्दोपात्तदुष्टत्वस्य तु स्थितिक्रि[2]याया विशेषणत्वेन वैषम्यादित्याहुः।

**यत्क्रियायुक्ता इति**—'या चासौ क्रिया' इति विग्रहः। **तं प्रतीति**—तद्वाचकं प्रतीत्यर्थः। यद्वा 'यस्य धातोर्वाच्यया क्रियया युक्ता' इत्यर्थः। अयं चाऽर्थः 'उपसर्गाः क्रियायोगे' (१।४।५९) इति सूत्रे 'योग'ग्रहणेन बोधित इत्यवोचाम।

**नेहेति**—ततश्च सम्बन्धसामान्यषष्ठ्यैव समास[3]ः। 'भीत्राऽर्थानाम्' (१।४।२५) इति सूत्रन्तु हेतुत्वप्रकारकबोधे तृतीयाबाधनार्थम्। विभक्तिप्रकरणे तु न कृतम्। कारकत्वप्रयुक्तकार्याऽनाप[4]त्तेः। किञ्च[5] हेतुत्वाऽविवक्षायाम्, सम्बन्धत्वेन विवक्षायाम्' षष्ठी सूत्रारम्भेऽपीति भावः। ये तु वैतण्डिकतया 'भीत्रार्थानाम्' (१।४।२५) इत्यस्य षष्ठीबाधनार्थत्वमिच्छन्ति, तैः सूत्रमते षष्ठी दुर्लभा।

भाष्यरीत्या बुद्धिकृताऽपायमाश्रित्य सूत्रप्रत्याख्यानेऽपि, **फलभेदे** प्रत्याख्यानाऽयोगादनभिधानेन तदभावोऽङ्गीकार्यः[6], तन्मतेऽप्याह—**वृश्चिकसम्बन्धिनीति**।

---

१. 'धात्वर्थ एवान्वयात्' ख. पाठः।

२. 'स्थितिक्रियायामन्वयेन वैषम्यात्' ख. पाठः।

३. 'समास इति भावः' ख. पाठः।

४. 'कार्यानापत्तेरिति तात्पर्यम्। केचित्तु सूत्रमते 'भीत्रार्थानाम्' (१।४।२५) इत्यस्य षष्ठीबाधनार्थत्वात् षष्ठी दुर्लभा। भाष्यरीत्या बुद्धिकृताऽपायमाश्रित्य' इति ख. पाठः।

५. 'किञ्च' इत्यारभ्य 'षष्ठी दुर्लभा' इत्यन्तः क. ग. पाठः।

६. 'अङ्गीकार्य इति तन्मतेऽप्याहः' ख. पाठः।

**उत्तरपदेति**—पूर्वपदाऽन्तर्गतस्येत्यर्थः । शाकपार्थिवाऽऽदित्वादिति भावः । 'परमदीध्यौ' इत्यादौ तु च्छान्दसत्वाद् यण् ।

**न भू** (६।४।८५)—'अनन्तरस्य' (प० ६३) इति न्यायेन 'एरनेकाचः' (६।४।८२) 'ओः सुपि' (६।४।८३) इतिसूत्रद्वयप्रापितस्यैवाऽयं निषेधः । अङ्गेन च प्रत्ययाऽऽक्षेपः । तथा च सुप्येव फलितः । तदाह—**सुपीति** । **सुधियाविति**—'शोभना धीर्यस्य' इति विग्रहेऽप्युत्तरपदत्वे चाऽपदादिविधौ' (वा० ८।२।६८) इतिप्रत्ययलक्षणप्रतिषेधात् शाकलं न ।

**लोपाविति**—'अतो लोपः' (६।४।४८) 'लोपो व्योः' (६।१।६६) इत्याभ्यामिति भावः । न चाऽल्लोपः स्थानिवत् । यलोपे तन्निषेधात् । न च परत्वाद् वेरपृक्तलोपे, वल्परत्वाऽभावाद् य[1]लोपो न प्राप्नोतीति वाच्यम् ।

'लोपो व्योर्वलि' । ततो 'वेः' । पूर्वसूत्रमनुवर्त्तते । व्यन्तस्य व्योर्लोपो भवति वलि । वल् च प्रत्यासत्तिन्यायेन वेरेव[2] । [3]तत्सामर्थ्यात् पूर्वं वलि लोपः । ततो 'अपृक्तस्य' इतियोगविभागेन भाष्यकृता साधितत्वाच्च । अत एव 'क्वौ लोपो वक्तव्यः' इति एतत्[4]साधनाय प्रवृत्ते वार्त्तिके ककारोऽविवक्षित इत्याहुः । 'विचोऽप्यल्पविषयताध्वननाय ककारोक्तिः' **इत्यन्ये** ।

**स्थानिवत्त्वादिति**—एवं च यणादेशे, यलोपे स्थानिवत्त्वनिषेधाद् यलोपे, 'अख्' इत्येव प्रातिपदिकं स्यादिति भावः । न चाऽन्तर्वर्त्तिविभक्त्या पदत्वात् 'न पदान्त' (१।१।५८) इति निषेधः । 'नः क्ये' (१।४।१५) इति नियमेनाऽस्याऽपदत्वात् ।

ननु नियमस्य सजातीयाऽपेक्षत्वेन हलन्त एव प्रवृत्तिरिति न दोषः ।

---

१. 'यलोपो न प्राप्नोतीति वाच्यम् । 'लोपो व्योः' (६।१।६६) इति सूत्रे विधेयस्य प्रथमनिर्देशेन 'वेरपृक्तलोपाद् वलि लोपस्य बलवत्त्वज्ञापनात्' ख. ग. पाठः ।

२. 'वेरेव । तत्र परत्वादपृक्तलोपेऽपि वचनसामर्थ्यात् प्रत्ययलक्षणम्' इति ख. ग. पाठः । क. कुण्डलितः ।

३. 'तत्सामर्थ्यात् पूर्वं वलि लोपः' इति क पाठः । ख. ग. नास्ति ।

४. 'एतत्साधनाय प्रवृत्ते' इति क. पाठः, ख. ग. नास्ति ।

किञ्चाऽन्तर्भूतक्यजकाराऽपेक्षेऽन्तरङ्गे यणि बहिर्भूतक्विबपेक्ष–क्यच्सम्बन्धियलोपस्य बहिरङ्गतयाऽसिद्धत्वाद् व्यवधानेन यणोऽप्राप्तेरिति चेन्न। बहिरङ्गपरिभाषा 'नाऽजानन्तर्ये' (प० ५२) इति निषेधात्। प्रमाणानां सामान्ये पक्षपातेन सामान्याऽपेक्षनियमस्यैव युक्तत्वाच्च। अत एव 'गव्यति' इत्यादौ न 'लोपः शाकल्यस्य' (८।३।१९) इति वलोपः।

**क्वौ लुप्तमिति** (वा० ६।४।८५)—भावे क्तः। लोप इत्यर्थः। प्रत्ययलक्षणसत्त्वाद् दीर्घस्य न निवृत्तिः। क्विलुगुपधेति वार्त्तिके 'क्वि' इत्यंशस्य 'क्वौ लुप्तं न स्थानिवत्' इत्यर्थं प्रदर्श्य, लवमाचक्षाणो लौरित्यसिद्धिमाशङ्क्य, एवं तर्हि 'क्वौ विधिं प्रति न स्थानिवत्' इति भाष्ये उक्तत्वेनाऽस्य क्वाचित्कत्वम्। न चाऽभाव एवाऽस्याऽस्तु। गोमत्यतेरप्रत्यये 'गोमान्' इत्यादिभाष्यविरोधाऽऽपत्तेः। तेन क्येऽस्य[1] प्रवृत्तिः। 'ण्यन्तेऽपि पादयतेः पात्, 'पद' इति[2] 'येन विधिः' (१।१।७२) इति सूत्रभाष्याण्ण्यन्तेऽपि[3]। अस्या[4]ऽसार्वत्रिकत्वादेव पिपठिषतेरप्रत्यये नपुंसके, शौ, 'पिपठिषि' इत्येवेत्युक्तं **कैयटेन** 'दीधीवेवीटाम्' (१।१।६) इति सूत्रे। ध्वनितं च भाष्ये इत्याहुः[5]।

**अनन्यतयेति**—गौणत्वेऽप्यनङ्णित्त्वयोः प्रवृत्तेरुक्तत्वाच्चेति बोध्यम्। 'अभिव्यक्तपदार्था ये' इति न्यायस्तु गौणमुख्य(प० १५)न्यायवत् पदकार्यविषयक एवेत्युक्तम्।

(**केचित्तु**[6] तत्र पदशब्देन[7] कार्यप्रवृत्तिवेलायामनभिव्यक्ताऽर्थोप-

---

१. 'तेन क्यणिच्सु अस्य' ख. पाठः।

२ 'ण्यन्तपादयतेः पात्, पद इति' इति ख. ग. पाठः।

३. 'येन विधिरितिसूत्रभाष्यात्, प्रागुक्तभाष्याच्च' ख. पाठः।

४. 'अत एव पिपठिषतेरप्रत्यये' ख. पाठः।

५. 'इत्याहुः' इत्यारभ्य' 'इति बोध्यम्' इत्यन्तः ख. ग. पाठः, क. नास्ति।

६. 'केचित्तु' इत्यारभ्य 'प्रयोजनप्रदर्शनपरभाष्यविरोधात्' इत्यन्तः क. कुण्डलितः ख. ग. पाठः।

७. 'तत्र पदशब्देन' इति क. नास्ति।

स्थापकत्वा[1]देवंविधानां तेन न्यायेनाऽनङादिविधावग्रहणम्। प्रा[2]तिपदिक-कार्येऽप्रवृत्तौ हि तन्मात्रात् तदर्थाऽनुपस्थितिरेव बीजम्। न च प्रसिद्धा-ऽर्थस्याऽपि तत्र विशेषणतया भानान्न दोषः। न्याये पदार्थेत्यनेन पद-जन्यप्रतीतिविशेष्यस्यैव ग्रहणात्। अत एव 'ख्यत्यात्' (६।१।११२) सूत्रे 'सखिपतिभ्याम्' इतिन्यासे 'सखीयतेरप्रत्यये सख्युः' इत्यत्राऽव्याप्तिप्रति-पादनपरभाष्यं विना सङ्कोचमपपद्यते। 'सह खेन सखस्तमिच्छति' इति [3]कैयटादिकृतं सङ्कोचेन व्याख्यानं चिन्त्यमेव। तस्मात् 'सखीः' 'सख्यौ' इत्येवेत्याहुः। तन्न। 'मपर्यन्तस्येति सूत्रे 'परि'ग्रहणस्य युष्मयतेरस्मयते-श्चाऽप्रत्यये प्रयोजनप्रदर्शनपरभाष्यविरोधात्)।

**दीर्घस्यापीति**—'खितेः परस्य' इति वक्तव्ये कृतयणा निर्देशादिति भावः। ननु 'अतिसखेः' 'भूपतेः' इत्यादिगुणविषये व्यावृत्त्यर्थं यणा निर्देशः। न चाऽत्र गुणे कृतेऽपि, खितिशब्दयोर्गुणस्थानित्वे मानाऽभावेन, खितिशब्दाऽभावेन, तदप्राप्तिः। एकदेशविकृत(पृ० ३७)न्यायोऽपि न। अर्द्धस्य, तदधिकस्य वा विकारेण प्रत्यभिज्ञाऽभावादिति वाच्यम्। घित्वा-ऽङ्गत्वसापेक्षगुणाऽपेक्षयाऽस्याऽन्तरङ्गत्वादिति चेन्न। तदर्थं कृतस्याऽन्य-सङ्ग्राहकत्वेऽपि बाधकाऽभावात्। न च य[4]णा निर्देशस्य दीर्घसङ्ग्राहकतया चारितार्थ्येन, वाक्याऽर्थान्वयित्वे मानाऽभावेन, यण्विषये उत्वम्, न गुणविषये' इत्यर्थाऽसिद्धिरिति वाच्यम्। भाष्यप्रामाण्येन यकारान्ता-ऽनुकरणस्य सूत्रेऽङ्गीकारेणाऽदोषात्। अत एवोच्चारणार्थोऽकार इत्याहु-र्नतु यणर्थ इति। एवं च गुणविषयेऽप्राप्तिः सिद्धैव। दीर्घप्रकृतिकग्रहणं च सिद्धम्। ङस्यादिपरस्तादृशः खि-खी-ति-ती-शब्दप्रकृतिक एव सम्भवती-त्याशयेन मूले 'खिखी' इत्याद्युक्तम्। अपत्यादिशब्देभ्य आचक्षाणण्यन्तेभ्यः क्विपोऽनभिधानमेवेति बोध्यम्।

---

१. 'गौणार्थोपस्थापकोपलक्षणत्वादेवंविधानाम्' इति ख. ग. पाठः।

२. 'प्रातिपदिककार्ये' इत्यारभ्य 'बीजम्' इत्यन्तः क. पाठः।

३. 'कैयटादिकृतं भङ्क्त्वा व्याख्यानम्' ख. ग. पाठः।

४. 'यणादिनिर्देशस्य' ख. पाठः।

**शुष्किय इति**—न चाऽत्राऽऽभीयेत्वेनाऽतो लोपस्याऽसिद्धत्वम्। व्याश्रयत्वात्। न चाऽत्र यणापत्तिः। संयोगपूर्वत्वात्। **इतीदन्ताः**।

**तृज्वत्** (७।१।९५)—'क्रुश आह्वाने' इत्यतस्तुनि, 'क्रोष्टु' शब्दः। तृचि 'क्रोष्टृ'शब्दः। द्वावपि शृगालाऽर्थौ। तत्राऽविशेषेण द्वयोः प्रयोगे प्राप्ते, 'सर्वनामस्थाने, स्त्रियां च तृजन्त एव, तृतीयादावच्युभयम्, अन्यत्र तुन्नन्त एव' इति फलतः प्रयोगनियमाऽर्था त्रिसूत्री।

'क्रोष्टुः' इति तुन्नन्तात् प्रथमा। 'तृज्वत्' इति तृतीयान्ताद् वतिः। 'तृजन्तेन तुल्यम्' इति।

नाऽयं 'सुबामन्त्रिते पराऽङ्गवत्' (२।१।२) इतिवत् तादात्म्यार्ऽतिदेशः। तद्वत् सहप्रयोगाऽभावात्। नाऽपि 'पूर्ववत्सनः' (१।३।६२) इतिवन्निमित्ताऽतिदेशः। तस्याऽशक्याऽतिदेशत्वात्, ब्राह्मणत्ववत्। न हि ब्राह्मणस्य श्राद्धभोजनाऽदौ निमित्तभूतं ब्राह्मण्यं वचनशतेनाऽप्यतिदेष्टुं शक्यते। यद्यप्याहार्यारोपेणाऽपि शास्त्रप्रवृत्तेर्निमित्ताऽतिदेशोऽपि वक्तुं शक्यः। ब्राह्मण्यन्त्वनारोपितमेव श्राद्धभोजने निमित्तमिति लोके न दोषः, तथाऽपि तृजन्तत्वरूपनिमित्ताऽतिदेशाऽऽश्रयणे आ[1]हृत्य तृच्छब्दमुच्चार्य विहितकार्यस्यैवापत्तौ, जसि गुणेऽवादेशे, तृजन्तोद्देश्यक 'अप्तृन्' (६।४।११) इति दीर्घ ए[2]व स्यात्। सौ, औजसादौ चाऽनङ्गुणौ न स्याता[3]म्।

---

१. 'आहृत्य' इत्यारभ्य 'आपत्तौ' इत्यन्तः क. पाठः। ख. ग. नास्ति।

२. 'दीर्घ एव स्यात्, न त्वनङ्गुणौ' इति ख. ग. पाठः।

३. इतोऽग्रे—'ननु तयोरभावे उपधायामचोऽभावाद् दीर्घाऽप्रवृत्तावतिदेशवैयर्थ्यम्। न च 'देवदत्तस्य क्रोष्टा' इत्यादौ 'तृजकाभ्याम्' (२।२।१५) इति षष्ठीसमासनिषेधेन चारितार्थ्यम्। अस्य शृगाले रूढत्वेन कर्मणि षष्ठ्या असम्भवात्। कर्त्तुरुक्तत्वेन कर्तृषष्ठ्या अप्यसम्भवाच्चेति चेन्न। जसि गुणेऽवादेशे चारितार्थ्यात्। किञ्चोत्तरसूत्रद्वयवैयर्थ्यापत्तिः। 'अप्तृन्' (६।४।११) इति क्रोष्टुग्रहणेनैव सिद्धावस्यापि वैयर्थ्यापत्तेश्च' इति क. कुण्डलितः पाठः।

एतेन 'आद्यन्तवत्' (१।१।२१) इतिवत् तृजन्तत्वरूपव्यपदेशस्याऽतिदेशः' इति परास्तम्। यदि तूत्तरसूत्रद्वयस्य सामर्थ्यादप्तृन्नित्यत्र क्रोष्टुग्रहणेनैव सिद्धावस्याऽपि सामर्थ्यात् कार्यमात्रप्रवृत्त्यङ्गीकार इत्युच्यते, तर्हि शास्त्र-कार्ययोरतिदेश एव ज्ञापयितुं युक्तः[1]। स्त्रियां च' (७।१।९६) इति सामर्थ्याच्चाऽनाङ्ग्योरपि सः।

वस्तुतो न तयोरपि सः। 'क्रोष्टा' इत्यादौ[2] तुन्नन्तस्याऽऽद्युदात्ततया उदात्तस्थानिकयणोऽभावेन 'उदात्तयणो हल्पूर्वात्' (६।१।७४) इति स्वराऽनापत्तेः। अर्थाऽतिदेशस्त्वसम्भव्येव। तुन्नन्ततृजन्तयोरर्थैक्यस्य स्वत एव सत्त्वात्, तत्सत्त्वे नानाऽभावाच्चेति 'जात्याख्यायाम्' (१।२।५८) इत्यादौ निरूपयिष्यामः।

तस्माद् रूपाऽतिदेशोऽयम्। प्राधान्याच्च। तत्राऽपि न प्रयोगसमवायि-'क्रोष्टार्' इत्यादिरूपग्रहणम्। अनेकत्वात्। उदात्तस्थाने यणोऽभावात्, 'उदात्तयणो हल्पूर्वात्' (६।१।७४) इति स्वराऽनापत्तेश्च। किन्तु[3] 'क्रोष्टृ' इति 'तृज्वत्' (७।१।९५) इत्यत्र ऋकारस्योपस्थितत्वेन तद्विशिष्टस्यैवाऽतिदेशात्। तत्र 'तृज्वत्' इति चकारग्रहणसामर्थ्यात् स्वरविशिष्टरूपस्याऽतिदेशेन, ऋकारस्योदात्तत्वात्, 'उदात्तयणः' (६।१।७४) इत्यादिस्वरसिद्धिरित्यभिप्रेत्याह—**क्रोष्टुशब्देति**। पक्त्रादेस्तु नाऽतिदेशः। अर्थत आन्तर्याऽभावात्। (न[4] च 'दयतेर्दिगि'(७।४।९) इतिवत् स्थान्यादेशभावबोधकमेवाऽस्त्विति वाच्यम्। वत्करणवैयर्थ्यापत्तेः। 'दिगि'वदस्य मानान्तरेणाऽसिद्ध्यभावाच्चेति दिक्)।

---

१. इतोऽग्रे—'नाऽपि तयोरपि वक्तुं शक्यः' इति ख. पाठः।

२. 'क्रोष्टा इत्यादौ' इति क. पाठः। ख. नास्ति।

३. 'किन्तु शास्त्रीयं 'क्रोष्टृ' इति। तृजन्तत्वबोधाऽर्थं शास्त्राऽन्वेषणस्याऽऽवश्यकत्वेन तस्यैवोपस्थितत्वात्, प्रत्यासन्नत्वाच्च'–इति क. कुण्डलितः, ख. ग. पाठः।

४. 'न च' इत्यारभ्य 'दिक्' इत्यन्तः क. कुण्डलितः पाठः।

**ऋतो ङि** (७।४।११०)—'कॄ' 'तॄ' इत्यनयोरनुकरणवारणाय तपरत्वमि[1]ति केचित्।

**अप्तृन्** (६।३।११)—'तृ' इति वक्तव्ये द्वयोरुपादानं क्वचित् सामान्योपादानेऽपि विशेषग्रहणाऽर्थम्। तेन 'न कोपधायाः' (६।३।३७) इति सूत्रे तद्धितवुग्रहणं सिद्धमित्याहुः। तन्न। विनिगमनाविरहेण विशेषद्वयस्याऽपि ग्रहणाऽऽपत्तौ, ज्ञापितेऽपि चारितार्थ्याऽभावात्।

**केचित्त्**वर्थवत्परिभाषाऽनित्यत्वज्ञापनद्वारा 'अर्वणस्तृ'(६।४।१२०)-व्यावृत्त्यर्थम्। तेन 'अनिनस्मन्ग्रहणान्यर्थवता' (प० १६) इति सिद्धमित्याहुः। तन्न। 'प्रत्ययाऽप्रत्यययोः' इति परिभाषयाऽऽदेशवारणात्। तस्मात् 'तृ' इति वक्तुं शक्यम्। स्पष्टं चेदम् 'ण्वुल्तृचौ' (३।१।१३३) इति सूत्रे भाष्ये।

ननु 'ण्वुल्तृचौ' (३।१।१३३) इतिसूत्रस्थभाष्यबोधितव्युत्पत्तिपक्षे तृन्नन्तत्वात्, तृजन्तत्वात् वा दीर्घे सिद्धे, नप्त्रादिग्रहणं व्यर्थमत आह—**नियमार्थमिति**। 'अन्येषामुणादिव्युत्पन्नानां संज्ञाशब्दानां न' इति। तेन 'धातृ'शब्दे दीर्घो भवत्येव। तस्योणादिव्युत्पन्नत्वात्। ने[2]ष्ट्रादयोऽप्युणादय इत्यभिमानः। वस्तुतस्तृन्नितिसूत्रस्थवार्त्तिकेन तेषां व्युत्पादनात् 'नप्त्रादि' इत्यादिग्रहणेन प्रशास्तृशब्दस्यैव ग्रहणम्। अव्युत्पत्तिपक्षे तु विध्यर्थमेव बोध्यम्। स च पक्षो 'अतः कृकमि' (८।३।४६) इति सूत्रे 'कमि' ग्रहणेनैव सिद्धे 'कंस'ग्रहणेन ज्ञाप्यते। न च दन्त्यान्त्यकसेरेवेदं रूपम्। 'प्रत्ययस्य लुक्श्लुलुपः' (१।१।६१) इतिसूत्रस्थ**कैयटहरदत्ता**दिप्रामाण्येन तस्येदृ[3]शे विषये प्रयोगाऽभावाऽनुमानादित्याहुः। 'उणादिषु मात्रादयो निरनुबन्धक-'तृ'प्रत्ययान्ताः, वेदे क्व[4]चिद् विपरीतस्वरस्तु व्यत्ययात् साध्यः'इति 'ण्वुल्तृचौ' (३।१।१३३) इतिसूत्रस्थभाष्यस्वरसः, तदाऽपि विध्यर्थमेव नप्त्रादि-

१. 'इति केचित्' इति ख. नास्ति। क. ग. पाठः।

२. 'नेष्ट्रादयः' इत्यारभ्य 'ग्रहणम्' इत्यन्तः क. पाठः।

३. 'ईदृशे विशेषविषये' इति ख. पाठः।

४. 'वेदे क्वचित्' इत्यारभ्य 'साध्यः' इत्यन्तः क. पाठः।

ग्रहणं बोध्यम् । (शंस्त्रा[1]देराद्युदात्तत्वसिद्धये 'तृन्तृचौ शंसि क्षदादिभ्यः' २५९।(२।९४) इत्युणादिसूत्रेऽनुबन्धोच्चारणमावश्यकम् । व्यत्ययाऽऽदिना तत्साधनस्याऽगतिकगतित्वादिति तु मूलाऽऽशयः) ।

**भाष्यप्रयोगादिति**—एवं चोणादिष्वस्य व्युत्पादनमप्रामाणिकमिति भावः । पङ्कजपदवत् अष्टाध्यायीव्युत्पन्नत्वेऽपि योगरूढिस्वीकारे बाधकाऽभावादिति तत्त्वम् । **क्रोष्टेति**–अनङ् । हल्ङ्याादिलोपात् परत्वादुपधादीर्घः । स च 'सर्वनामस्थाने च' (६।४।८) इत्यनेन यद्यपि सिद्ध्यति, तथाऽपि कृ[2]ताऽनङः स्थानिवत्त्वेन तृजन्तत्वेन परत्वादप्तृन्नित्येव न्याय्यः । कार्यैक्येऽपि विप्रतिषेधप्रवृत्तेः 'नपुंसकस्य झलचः' (७।१।७२) इत्यादिसूत्रस्थभाष्येषु ब[3]हुशो दर्शनात् । त[4]त्र हि भाष्ये 'गोमन्ति' इत्यादावुगिल्लक्षणनुमः परत्वाज्झल्लक्षण उक्तः । **केचित्तु** तत्रैकनुमि अन्त्यादचः परे जाते, न द्वितीयस्याऽन्त्यादचः परत्वसम्भव इत्यसम्भवो विप्रतिषेधबीजमस्ति । प्रकृते च नाऽसम्भवः । अतोऽत्र 'सर्वनामस्थाने च' (६।४।८) इत्येव दीर्घः । प्रथमोपस्थितत्वात् । तदनन्तरं पर्जन्यवल्लक्षणप्रवृत्त्याऽस्यापि प्रवृत्तिरित्याशय इत्याहुः ।

**विभाषातृतीयादिषु** (७।१।९७)–अयमपि नियम एव 'तृतीयादावच्येवोभयम्' इति । तेन भ्यामादौ, शसि च, 'क्रोष्टुपुत्रः' इत्यादौ च न दोषः । सर्वत्र विशिष्टाऽभावस्य सुलभत्वात् । ननु 'तृज्वत् सर्वनामस्थाने एव' इति नियमं स्वीकृत्याऽस्य विध्यर्थतैवोचिता । न च सर्वनामस्थाने तुन्नन्तप्रयोगस्याऽप्यापत्तिः । 'क्रोष्टृ' इत्येव सूत्रयितव्ये, क्रोष्टुशब्दोद्देशेन तृजन्त-

१. 'शंस्त्रादेः' इत्यारभ्य 'मूलाशयः' इत्यन्त. ख. पाठः ।

२. कृताऽनङः स्थानिवत्त्वेन तृजन्तत्वेन' इति क. ग. पाठः । ख. नास्ति ।

३. 'बहुशो दर्शनात् । कृतेऽप्यनङि एकदेशविकृतन्यायेन, स्थानिवद्भावेन वा तृजन्तत्वादिति भावः'—इति ख. पाठः ।

४. 'तत्र हि' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ग. पाठः ।

रूपाऽतिदेशबोधकगुरुतरन्यासेन वाच्याऽर्थविरोधान्न तत्प्रयोगाऽऽपत्तिरिति चेन्न। सर्वनामस्थाने, स्त्रियां च क्रोष्टुशब्दे तृजन्तवद् रूपाऽतिदेशेनाऽर्थात् तुन्नन्तस्याऽप्रयोगवत्, अन्यत्र तुन्नन्ते तद्रूपाऽतिदेशकाऽभावेनोभयोः प्रयोगस्य सिद्धत्वेन, एवमपि विध्यर्थताया दुरुपपादत्वात्। आद्यसूत्रयोर्नियमत्वोक्तिस्तु नियमफलकत्वादिति बोध्यम्। नन्वेवमपि 'क्रोष्टून्' इत्याद्यसङ्गतम्, अन्यत्र तृजन्तस्यैव प्रयोगेणाऽप्युक्तनियमस्य चारितार्थ्यादिति चेन्न। 'तृज्वत् क्रोष्टुः' (७।१।९५) इति योगविभागस्य वैयर्थ्याऽऽपत्तेः। न च 'तद्धितेष्वचामादेः' (७।२।११७) इतिसूत्रस्थः 'क्रौष्ट्र' इति भाष्यप्रयोगः, 'वृद्धिरादैच' (१।१।१) सूत्रस्थः 'क्रोष्ट्रीया' इति च भाष्यप्रयोगोऽसङ्गतः स्यादिति वाच्यम्। 'क्रोष्ट्र्[2]या अयम्' इति विग्रहेणाऽदोषात्। 'क्रोष्ट्री' इति कस्याश्चिद् ऋषिमातुर्नाम। 'वा नामधेयस्य' (वा० १।१।७५) इति च वा वृद्ध[3]त्वम्। शुद्धसंज्ञात्वेन भाषितपुंस्कत्वाऽभावात् 'भस्याऽढे' (वा० ६।३।३५) इति न पुंवत्त्वम्। ईकारस्यैव 'यस्य' (६।४।१४८) इतिलोपात् परत्वाद् वृद्धिप्राप्त्या, न 'अचामादिवृद्धावन्त्योपधावृद्धिप्रतिषेधः' इति तत्रत्यवा[4]र्त्तिकोदाहरणविरोध इत्याहुः।

'भाष्यप्रयोगादेव साधुत्वम्' इत्यन्ये[5]।

**ऋत उत्** (६।१।१११)—तपरकरणम् 'भाव्यमानोऽप्यण् क्वचित् सवर्णग्राहकः' इत्यर्थज्ञापनद्वाराऽऽन्तर्यतो द्विमात्रनिवृत्त्यर्थमिति 'छ्वोः' (६।४।१९) इति सूत्रे **कैयटः**। ज्ञापनफलन्तु 'अमूभ्याम्' इत्यादिसिद्धिरिति तत्रैव निरूपयिष्यामः।

**सस्यैवेति**—संयोगान्तलोपेनैव सिद्धे नियमाऽर्थमिति भावः। तेन ऊर्गित्यादौ लोपो न। 'रादेव सस्य' इति विपरीतनियमस्तु न। 'पुमान् स्त्रिया' (१।२।६७) इति निर्देशात्। **परत्वादिति**। न च नुट् नित्यः। स[6]न्निपात (प० ८७) परिभाषया तदप्राप्तेः। **इत्युदन्ताः**।

---

१. 'न चैवम्' ख. पाठः। २. 'क्रोष्ट्र्या अपत्यमिति विग्रहेण' ख. पाठः।
३. 'वृद्धत्वमस्य' ख. पाठः। ४. 'न तत्रत्योदाहरणविरोधः' ख. पाठः।
५. 'इति केचित्' ख. पाठः।
६. 'तृज्वद्भावे संनिपातपरिभाषया' ख. पाठः।

**हूहूरिति**—अव्युत्पन्ना[1] संज्ञेयम् । **अतिचमूशब्दे त्विति**—'प्रथमलिङ्ग-ग्रहणं च' (वा० १।४।३) इत्युक्तेः ।

**ओः सु** (६।४।८३)—'एरनेकाचः' (६।४।८२) इति सूत्रम् 'एः' इत्ये-तद्रहितं साऽनुवृत्ताऽऽवृत्तविशेषणमनुवर्त्तते इत्यभिप्रेत्याऽऽह—**धात्ववय-वेत्यादि ।** वार्त्तिकानां सूत्रशेषत्वेनानुवृत्तिमभिप्रेत्याऽऽह—**गतीति** (वा० ६।४।८३) । 'सकृल्ल्वौ' इत्यत्र तु क्रियाविशेषणत्वेन कर्मत्वाद्यण् भवत्येवेत्याहुः ।

'न भूसुधियोः' (६।४।८५) इति निषेधे प्राप्ते आह—**वर्षाभ्वश्च** (६।४।८४) इति । 'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः' **इत्यमरोक्तेः**,'भिन्न-लिङ्गानां न द्वन्द्वः' इति तेन परिभाषणाच्च दर्दुरे पुँल्लिङ्गोऽयमिति भावः। 'वर्षाभूर्दर्दुरे पुमान्' इति **यादवकोशाच्च** । 'दर्दुरे षणी' इति पाठा-न्तरम् । 'षण्' इति तु पुंलिङ्गस्य प्राचां संज्ञा ।

**व्युपादित इति**—'दृभी ग्रन्थे' इति तुदादेरूप्रत्ययो नुमागमश्च निपात्यत इत्यर्थः । यद्यप्युज्ज्वलदत्तेन 'दृन्फूः' इति पवर्गद्वितीयं पठित्वा 'दृम्फेर्नलोपाऽभावो निपात्यते' इति व्याख्यातम्, तथाऽपि वृत्त्यन्तराऽनुसा-रेण मूलम् । यत्तु **दशपादीवृत्तौ** 'दर्भणं दृंभूः । दृभेरूप्रत्यये, नुम्[2], अनु-स्वारश्च निपात्यते । तन्निपातनसामर्थ्यात् परसवर्णो न, इति । तन्न । नुम्निपातनवैयर्थ्यात्, नुम्[3]येव निपात्येऽनुस्वारनिपातसामर्थ्यादिव परसवर्णाऽ-भावसिद्धेरित्याहुः । दृंभूर्ग्रन्थकर्ता । 'कथकः' इत्यन्ये । अयमूकारो न धातोरित्युवङोऽप्रसङ्गः ।

**दृम्भूमिति**—'इको यणचि' (६।२।७७) इति यण्[4] पूर्वसवर्णदीर्घाभ्यां बाध्यते । एवं चाऽयमूकारो न धातोरित्युवङोऽप्रसङ्गाद् यणा भाव्यमिति

---

१. 'अव्युत्पन्ना' इत्यंशः ख. पाठः । ग. नास्ति । क. तु केनापि पश्चाद् वर्धितः ।

२. 'नुमागमः' इति ख. पाठः ।

३. 'नुम्येव' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ग. पाठः ।

४. 'यणपि' ख. पाठः ।

दृन्पूर्वकभूप्रभृतिकदृंभूशब्देन सह न रूपभेदः' इति **माधव**श्चिन्त्य इति भावः। 'दृन्कर' (वा० ६।४।८४) इति यणस्तु नाऽत्र प्राप्तिः। अनुस्वारादेरसिद्धत्वेऽपि 'दृन्' इत्यस्य, 'भू' इत्यस्य चाऽनर्थकत्वात्। स्पष्टं चेदमत्रैव **कैयटे**। तद्ध्वनयन्नाह— **नान्ते हिंसार्थे** इति। एवंनिष्पन्नश्चाऽयं तरुभेदसर्पभेदवाची। 'कप्यर्थः' इत्यन्ये। **माधव**स्तु 'दृढशब्दे उपपदे भुवः 'कू'-प्रत्ययः। उपपदस्य दृन्नादेशश्च 'अन्दूदृन्भू' ९६ (१।९६) इत्यनेन निपात्यते। एकाऽऽदेशस्य पूर्वान्तत्वेन च भूत्वम्' इत्याह। मूलन्तु श्रीपतिदत्तमतेन।

**दृन्करेति** (वा० ६।४।८४)—अत्र 'दृन्' इति नान्तपाठः। मान्तपाठोऽपि **केषाञ्चित्**। 'दृक्कार' इति पाठस्तु **कैयटा**दिविरुद्धः। इदं च वार्त्तिकम्, 'वर्षाभ्वश्च' (६।४।८४) इति चेनाऽनुक्तसमुच्चयाऽर्थेन संगृहीतमित्याहुः।

**दीर्घपाठे इति**—'दृन्कार' इति पाठ इत्यर्थ इत्याहुः[2]। अयमेव[3] भाष्यसंमत इति तत्त्वम्। अत्राऽऽहुः[4]—'अत्र पाठेऽपि हस्तवाचककारशब्दस्यैव ग्रहणम्। पाठान्तरेणैकार्थ्यलाभात् प्रसिद्धत्वाद् व्याख्यानाच्च। तेन ण्यन्ताद् भिदाद्यङि निष्पन्न 'कारा'शब्दपूर्वके 'काराभूः' इत्यादौ लिङ्गविशिष्टपरिभाषया, पूर्वाऽन्तवत्त्वेन वा प्राप्तोऽपि यण्न' इति। यत्तु 'दृन्कारपुनर्भ्वः' इति वक्तव्ये पूर्वग्रहणस्य व्यवहितेऽपि प्रवृत्त्यर्थत्वात् 'वर्षोद्भूः' 'पुनरुद्भूः' इत्यादौ यण् भवत्येव' इति। तन्न। परिभाषाप्राप्ताऽनुवादकत्वेनैवोपपत्तौ, वाचनिकत्वे मानाऽभावात्। 'वर्षाभ्वश्च' (६।४।८४) इति सूत्रकर्त्तुः, 'वर्षाभूपुनर्भ्वश्चेति वक्तव्यम्' इति वार्त्तिककर्त्तुः, 'अत्यल्पमिदमुच्यते, 'वर्षादृन्कारपुनः-पूर्वस्येति वक्तव्यम्' इति वक्तुश्च परस्परं विरोधाऽऽपत्तेश्च। एतेन 'दृन्कर' (६।४।८४) इति ह्रस्वपाठेऽपि स्वार्थि-

---

१. एतत्पाठस्थाने—'न चाऽत्रानुस्वारपरसवर्णयोरसिद्धत्वात् 'दृन्कर' (वा० ६।४।८४) इति यण् प्राप्नोतीति वाच्यम्। 'दृन्' इत्यस्य, 'भू' इत्यस्य चाऽनर्थकत्वेन तत्राऽग्रहणात्'—इति ख. पाठः।

२. 'इत्याहुः' इति क. नास्ति।

३. 'अयमेव' इत्यारभ्य 'तत्त्वम्' इत्यन्तः ख. पाठः।

४. 'अत्राहुः' इत्यारभ्य 'यणेति' इत्यन्तः क. कुण्डलितः ख. पाठः।

काऽणन्तकारशब्दप्रकृतिभागस्यैकदेशविकृतन्यायेन करशब्दत्वात् पूर्वग्रहणेन व्यवहितग्रहणादणा व्यवधानेऽपि यण् भवत्येव' इति परास्तम्। अणन्ते करशब्दत्वन्तु दुर्लभम्। अणोऽविकारत्वात्। एवं च ह्रस्वपाठे कारपूर्वस्योवङेव। दीर्घपाठे तु करपूर्वस्य स एवेति बोध्यम्। पाठनिर्णयं बहुलक्ष्यदर्शिनः कुर्वन्तु। प्रायेण भाष्ये दीर्घपाठ एव दृश्यते।[1]

**स्वार्थिक इति**—स्वस्याः प्रकृतेरर्थः=स्वार्थः। तत्र भवः स्वार्थिकः। अध्यात्मादित्वाट्ठञ्। द्वारादित्वप्रयुक्त ऐजागमस्तु न। द्वारादिषु स्वग्रामस्वाध्याययोः पाठेन 'स्वशब्दादेश्चेदेतयोरेव' इति नियमाऽर्थकेनाऽप्राप्तेः। ([2]अन्ये तु 'स्वार्थिकाः प्रकृतितः' इति भाष्यप्रयोगान्नेत्याहुः)।

पुनर्भूशब्दस्य रूढस्य नित्यस्त्रीत्वादाह—**यौगिक** इति। '[3]रूढेर्योगाऽपहारकत्वादिदं चिन्त्यम्' इति कश्चित्। 'लक्षणया तथा प्रयोगः' इत्यन्ये।

**इत्यूदन्ताः।**

वर्णैकदेशानां वर्णग्रहणेनाऽग्रहणे रेफाऽभावेन, ग्रहणेऽप्युत्तराऽज्भागेन व्यवधानाण्णत्वाऽप्राप्तावाह—**ऋवर्णादिति** (वा० ६।४।८४) । न च तस्याऽज्भागस्याऽट्ग्रहणेन ग्रहणम्। (मा[4]नाऽभावात्)। आद्यन्तसदृशानामनेकदेशानामेव मध्यस्थानामडादिप्रत्याहारसंज्ञाविधानात् (च[5])। **व्युत्पत्तिपक्षेऽपीति**—अव्युत्पत्तिपक्षे त्वबादिष्वपाठाद् दीर्घशङ्कैव नेति भावः।

**नृ च** (६।४।६)—'छन्दस्युभयथा' (६।४।८६) इत्यत उभयथेत्यनुवर्त्तते। छन्दसीति तु नाऽनुवर्त्तते। 'नृणामेको गम्यः' इत्यादिप्रयोगविरोधात्। (पूर्वसू[6]त्रेणैव सिद्धौ[7] 'नृ च' (६।४।६) इत्यस्य वैयर्थ्याऽऽपत्तेश्च। यत्तु 'पूर्वत्र 'न तिसृचतसृ' (६।४।४) इत्यनुवर्त्तते' इति। तन्न। अविशेषेण

---

१. 'पाठनिर्णयम्' इत्यारभ्य 'दृश्यते' इत्यन्तः क. ग. पाठः। ख. नास्ति।
२. 'अन्ये तु' इत्यारभ्य इत्याहुः' इत्यन्तः क. कुण्डलितः पाठः।
३. 'रूढे.' इत्यारभ्य 'इत्यन्ये' इत्यन्तः क. कुण्डलितः ख. पाठः।
४. ख. पाठः।　　५. चकारः क. ग. नास्ति।
६. क. कुण्डलितः पाठः।　　७. 'सिद्धे' ग. पाठः।

विकल्पदर्शनात्। अत एव 'धाता धातॄणाम्' इति मन्त्रे तैत्तिरीयैर्ह्रस्वः पठ्यते। बह्वृचे स्तु दीर्घ इति दिक्)।

**इत्यृदन्ताः।**

**प्रकृतिवदनुकरणेति** (प० ३६)— 'यत्तदेतेभ्यः' (५।२।३९) इत्यत्र त्यदाद्यत्वकरणादतिदेशस्य, 'क्षियो दीर्घाद्' (८।२।४६) इत्यादौ धात्वनुकरणे विभक्तिकरणेन वैकल्पिकत्वस्य च ज्ञापनादिति भावः। **इत्त्वे इति**— 'किरश्च पञ्चभ्यः' (७।२।७५) इति निर्देशादधातुप्रत्ययेऽपि प्रवृत्तिरिति भावः।

(न[2] चैवमनुकार्याऽनुकरणयोर्भेदविवक्षायामनुकरणस्यार्थवत्त्वेऽप्यनेनाऽतिदेशेन धातुत्वात् कथं प्रातिपदिकत्वमिति वाच्यम्। वैकल्पिकत्वात्। यत्त्वतिदेशेन धातुत्वेऽपि स्वनिष्ठाऽधातुत्वमादाय संज्ञा[3]। 'अधातुः' इति हि पर्युदासः। अत आतिदेशिककार्याऽभावादतिदेशाऽप्रवृत्तौ, तद्विरुद्धमपि स्वाश्रयं प्रवर्त्तते' इति 'क्षियो दीर्घात्' (८।२।४६) इत्यत्र **कैयटेनोक्तम्**। तन्न। एवं हि 'अपचत् तण्डुलान्' इत्यादावप्यतिदेशाऽप्रवृत्तौ, स्वाश्रयाऽप्रत्ययान्तत्वनिबन्धनप्रातिपदिकत्वाऽऽपत्तेः। यदि तु शास्त्रतात्पर्यविषयस्य प्रत्ययान्तादिषु प्रातिपदिकत्वाऽभावस्य सिद्धये तत्राऽतिदेशप्रवृत्तेर्न तद्विरुद्धप्रातिपदिकत्वमिति विभाव्यते, तर्हि प्रकृतेऽपि समम्। अत एव 'क्षियो दीर्घात्' (८।२।४६) इति सूत्रे इयङर्थं 'प्रकृतिवत्' (प० ३६) इत्यतिदेशाऽङ्गीकारे स्वाद्यनुत्पत्तिमाशङ्क्य, 'एवं तर्ह्यातिदेशिकानां स्वाश्रयाण्यपि न निवर्त्तन्ते' इति समाधाय, 'अथाऽप्येतन्न, एवमपि न दोषः। निर्देशसाम-

---

१. इत्वे इति। 'न च 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात् कथमित्त्वम्, तत्र 'स्वरूपग्रहणे' इत्यस्याऽवयुत्याऽनुवादत्वादिति वाच्यम्। 'किरश्च पञ्चभ्यः' (७।२।७५) इतिनिर्देशात् तस्या अत्राऽप्रवृत्तेः' इति ख. ग. पाठः। क. नास्ति।

२. 'न चैवम्' इत्यारभ्य 'दिक्' इत्यन्तः क. कुण्डलितः पाठः।

३. 'संज्ञापत्ति' इति क. शोधितः पाठः।

थ्र्यादेव तदुत्पत्तेः' इति समाहितम् । तत्र अथापीत्यस्याऽयं भावः—विरुद्ध-निवृत्तिरावश्यिकेति, इति दिक्) ।

नन्वत्राऽर्थवत्त्वाऽभावान्न प्रातिपदिकत्वम् । तथा हि—**अर्थवत्त्वम्** वृत्त्याऽर्थबोधकत्वम् । अनुकरणत्वं च स्वसदृशशब्दमात्रतात्पर्यकोच्चारण-विषयत्वम् । एवं च कॄशब्दाऽऽदिः सादृश्याऽऽख्यसम्बन्धेन स्वसदृशशब्दानु-पस्थापयति । तथोपस्थितस्याऽपि शाब्दबोधेऽन्वयप्रतियोगित्वं व्युत्पत्तिवैचि-त्र्यात्, तात्पर्यवशाच्च स्वीक्रियते । एवं च वृत्त्याऽर्थबोधकत्वाऽभावः स्पष्ट एव । तदेतत् तत्र तत्राऽऽकरे उच्यते—'अनुकार्याऽनुकरणयोरभेदविव-क्षायामर्थवत्त्वाऽभावान्न प्रातिपदिकत्वम्' इति । सादृश्यमूलिका चैषाऽभेद-विवक्षा । 'स्वरूपेणाऽर्थेनाऽर्थवत्ता' इत्यप्ययुक्तम् । तादृशाऽर्थवत्त्वस्याऽव्या-वर्त्तकत्वेनाऽर्थवद्ग्रहणसामर्थ्येन तद्वयतिरिक्तबाह्याऽर्थस्यैव ग्रहात् । तस्यापि वृत्त्यविषयत्वाच्च, श्रोत्रेणैव तदुपस्थितिर्न वृत्त्या । अत एव 'गवित्ययमाह' इत्यादौ न विभक्तिः । अत एव 'भू सत्तायाम्' इत्यादिनिर्देशाः सङ्गच्छन्ते । न चैतेषामपदत्वादसाधुत्वं स्यात् । अत एव लिङ्गादपदत्वेऽपि साधुत्वाऽ-ङ्गीकारात् । परिनिष्ठितत्वाच्च 'अपरिनिष्ठितं न प्रयुञ्जीत' इति निषेध-स्याऽविषयः । 'अपदं न प्रयुञ्जीत' इत्यस्याऽप्ययमेवाऽर्थः । सर्वथा प्रकृते प्रातिपदिकत्वं न प्राप्नोतीति चेन्न । प्रकृते भेदविवक्षाया अङ्गीकारात् । अर्थवच्छब्दस्याऽपि वृत्तिविषयत्वमेवेति तद्भावः । अत एव 'भुवो वुक्' (६।४।८८) इत्यादिनिर्देशाः सङ्गच्छन्ते । स्पष्टश्चाऽयं पक्षो 'मतौ छः सूक्त' (५।२।५९) इति सूत्रे, 'ऋलृक्' सूत्रे च भाष्ये । भेदकाऽभेदकपक्षयोश्च लक्ष्याऽनुरोधेन व्यवस्थेति दिक् ।

**कीरिति**—'कॄ' धातुरित्याद्यर्थः । **गुणौ नेति**—'ऋत उत्'(६।१।१११) इत्युत्त्वमप्यत एव न । अत एव 'ग्रो यङि' (८।२।२०) इति सूत्रनिर्देशः सङ्गच्छते । **इत्यॄदन्ताः** ।

**अनङिति**—ऋलृवर्णयोः सावर्ण्यादिति भावः । गम**निति**—लृवर्णस्य दीर्घाऽभावाद् ऋवर्ण एवेति भावः ।

ननु 'तुल्या[1]स्य' (१।१।९) इति सूत्रे भाष्ये—ईषत्स्पृष्टरेफद्वयगर्भ-लकारद्वयगर्भयो 'ऋलृक्' इति सूत्रात् पूर्वपाठेनाऽच्त्वम् दीर्घत्वं चाऽऽश्रित्य, 'ऋति सवर्णे' इत्यादिवार्त्तिकद्वयं प्रत्याख्यातम्। 'अकः सवर्णे' इत्येव सिद्धेः। ऋकारद्वयस्थाने रेफद्वयवत्तारूपगुणकृताऽऽन्तर्येण कदा चिद्रेफद्वयगर्भस्य, विवृतत्वाऽऽन्तर्येण कदा चिद्विवृतस्य, लृकारे लृका[2]रे च[3] लकारवत्तान्तर्येण कदा चिद् द्विलकारस्य, कदा चिद्विवृत-त्वसाम्येन, रेफवत्तासाम्येन वा तादृशऋकारसिद्धया विकल्पस्याऽपि लाभात्। एवं च 'प्रथमयोः' इत्यादिभिरपि 'गम्लृ'शब्दादिविषये द्विलकार ईषत्स्पृष्टो भाष्यनये दुर्वार इति चेन्न। एकलकारगर्भस्य विवृतप्रयत्नत्वेन, लद्वयगर्भस्येषत्स्पृष्टत्वेन, प्रयत्नभेदात्तयोः सावर्ण्याऽभावात्। वार्त्तिकाऽनु-रोधेन च भाष्यमतेऽयोगवाहपाठस्याऽनित्यत्वाश्रयणेनाऽन्यत्राऽसाधुत्व कल्प-नाच्च। अत एव मुन्योः फलैक्यम्। एतेनाऽस्मि स्थानत आन्तर्यस्य बलव-त्त्वाल्लद्वयगर्भो भवत्येव—'गम्लृनाम्' इति। तथा 'धातृणा' 'धातॄण'मिति रूपद्वयमि'त्यपास्तमित्याहुः।

**गम्लेति**। यत्तु 'लणि'ति सूत्रे–'उरण् रपर' इत्यत्र 'पूर्वेण प्रत्याहारः, परेण वे'ति सन्दिह्य, न तावत्परेण, 'कर्त्रर्थ'मित्यादौ सत्यपि रपरत्वे, 'रो री'तिलोपे, फलाऽभावात्। एवं चोरजिति वक्तव्येऽण्ग्रहणसामर्थ्यात्पूर्वेणैवे'त्युक्तम्। 'गम्ले'त्यादौ यणादेशे हि तत्र लपरत्वाऽर्थमेव परेणाऽण्ग्रहणं स्यादिति सामर्थ्योक्तिरसङ्गता स्यात्। तस्मादेतद्भाष्यप्रामाण्येन लृस्थाने-ऽनभिधानाद्यणादेशाऽभावोऽङ्गीकार्य' इति। तन्न। ऋकारांऽशे हल्रूपाऽणि 'रो री'ति प्रवृत्त्या फलाऽभावेन, तत्साहचर्याल्लृकारांऽशेऽपि हल्रूपाऽण्य-

---

१. 'ननु तुल्यास्यमिति सूत्रे भाष्ये' इति त्रिष्वप्यादर्शेषु पाठः।

२. 'लकारे च' इति क. पुस्तके केनापि वर्द्धितः। ख. ग. तु नास्ति।

३. चकारः क. नास्ति।

प्रवृत्तिरिति भाष्याशयात् । अन्यथा व्याख्याने **वृत्त्यादि**महाग्रन्थविरोध इत्याहुः । **इति ऌदन्ताः ।**

**सेरिति** । 'इना सह वर्त्तते' इति, 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्ये'ति सत्वम् । अत एव 'से' इत्येकादेशस्य पूर्वान्तत्वेन ग्रहणादव्ययत्वात्सुपो लुगिति परास्तम्[1] । लिङ्गसङ्ख्याद्यन्वयित्वेन अस्याऽनव्ययत्वात् । न चाऽन्तरङ्गत्वादाद्गुणे 'सहे'इति रूपं स्यात् । न च ततः सादेशः । एवमप्येदन्तरूपाऽसिद्धेरिति[2] वाच्यम् । उत्तरपदाऽधिकारस्थबहिरङ्गेऽन्तरङ्गपरिभाषाऽप्रवृत्तेः' 'इच एकाचोऽमि'ति सूत्रे भाष्ये उक्तत्वेनाऽक्षतेः ।

नन्वेषां प्रथमैकवचने प्रयोगसत्त्वे 'नाऽन्तः पादमि'तिसूत्रस्थं 'न चैङः पदान्तात्परो रुरस्ती'ति भाष्यं विरुध्यते, सावपि पदत्वसत्त्वादिति चेन्न । योगविभागसिद्धस्य सौ पदत्वस्य क्वाचित्कत्वान्न दोषः ! एवं व्युत्पन्नस्याऽपि साधुत्वं 'सहेः साड' इत्यत्र भाष्ये उक्तम् ।

**स्मृतय इति** । ननु 'से' 'स्मृते' इत्याद्येकारस्याऽन्तर्वर्त्तिविभक्तिमाश्रित्य पदान्तत्वात् 'एङः पदान्तादि'ति पूर्वरूपमेव स्यादिति चेन्न । भाष्ये 'स्वादिष्वि'ति योगं विभज्य, 'स्वादिषु पूर्वं पदमि'त्यर्थः । ततः'अ सर्वनामस्थाने यचि' । 'अ' इति भिन्नं पदं निषेधार्थकम् । 'सुबन्तमि'त्यनुवर्त्तते । 'यजादौ सर्वनामस्थाने पूर्वं पदं न, मध्ये चेत्सुबन्तं यजादिस्वादिपरं, तदपि पदं ने'ति व्याख्यातम् । तथा चोत्तरपदस्य पदत्वाऽभावात्परादिवद्भावेन न पदत्वम् । न च पूर्वान्तवद्भावेनाऽस्त्विति वाच्यम् । 'से'शब्दनिष्ठस्य तस्याऽपि प्रागुक्तरीत्या निषेधात् । आतिदेशिकस्यापि तेन निषेध इति

---

१. 'परास्तम् । उपसर्जनत्वेन सहशब्दस्याऽनव्ययत्वात्' ख. पाठः ।
तत्र–'अनुपसर्जनत्वेन' इति क. शोधितः पाठः ।

२. 'रूपाऽसिद्धिरिति वाच्यम्' ख ग. पाठः ।

स्पष्टमेव । 'उत्तरपदत्वे चाऽपदादिविधावि'ति वार्त्तिकेनाऽपि भाष्यैक-वाक्यतया उत्तरपदस्य, तद्घटितस्य वा पदत्वे, सर्वस्याऽपि प्रत्ययलक्षणस्य निषेधान्न[1] दोषः ।

'इतोऽदि' त्यतोऽनुवृत्तं सप्तम्यन्तं सर्वनामस्थानग्रहणं प्रथमया विपरिण-म्यते, 'णिदि'त्यनेन सामानाधिकरण्यादित्याह—**सर्वनामस्थानमिति** । प्राधान्यात्कार्याऽतिदेशोऽयमित्याह—**णित्कार्येति** । तत्र णितः कार्यस्या-ऽसम्भवाण्णिति यत्कार्यं तदतिदिश्यते इत्यर्थः । **शसेति** । 'अची'त्यधिकारात्त-द्धितस्य शसोऽग्रहणादिति भावः । स्पष्टं चेदम् 'इच एकाच' इति सूत्रे भाष्ये ।

**गामिति** । न च परत्वाद् वृद्धिः प्राप्नोति । आत्वस्याऽनवकाशत्वेनाऽप-वादत्वात् । तदेवोपपादयति—**ओतो णीति** । 'गोत' इति तपरकरणेन ध्वनितोऽयमर्थः । अत एव 'चित्रगुरि'त्यादौ न दोषः । अन्यथाऽङ्गाधिकारे तदन्तविधेः सत्त्वेनैकदेशविकृतन्यायेन गोऽन्तत्वेन दोषो दुर्वार एव स्यात् । तपरकरणेन हि गकारस्याऽविवक्षितत्वं सूत्रकृत इति लभ्यते । एवं चौका-रान्तत्वाऽभावादल्विधौ स्थानिवत्त्वाऽभावाच्च न दोषः । स्पष्टं चेदं स्थानि-वत्सूत्रशेषे भाष्ये । **विहितेति** । अत एव 'दिव ओदि'ति वक्तव्ये औकार-विधानं चरितार्थम् । **सुद्यौरिति** । 'द्यु अभिगमने' इत्यस्माद्विच्चि गुणः । केवलद्योशब्दस्य स्त्रीत्वाद्बहुव्रीहिरुदाहृतः ।

**व्याख्यानान्नेहेति** । लक्षणप्रतिपदोक्तपरिभाषा तु वर्णग्रहणे नेति भावः । **केचित्तु** 'वर्णग्रहणेऽपि क्वचित्तत्परिभाषाप्रवृत्त्यङ्गीकारेण विहित-विशेषणे न फलमित्याहुः ।

**स्मृतौरिति** । यत्तु—'अयवायादिषु एकादेश उदात्तेनोदात्त' इति स्वरस्य सिद्धत्वं वक्तव्यम्, तत्स्थानिकाऽयादीनामस्वरितत्वाये[2]'ति वार्त्तिक-

---

१. **'निषेध इत्यर्थान्न दोषः'** ख. पाठः ।

२. **'स्वरितत्वाय'** इति ख. पाठः । स चाऽशुद्धः ।

व्याख्यावसरे 'अवादेशे नास्त्युदाहरण'मिति 'स्वरितो वाऽनुदात्ते पदादौ'-इति सूत्रस्थं भाष्यं विरुध्येत। प्रकृते पूर्वपदप्रकृतिस्वरेण स्मृतशब्दस्याऽन्तोदात्तत्वे, शेषनिघातेन उशब्दस्याऽनुदात्तत्वात्तदेकादेशे 'एकादेश उदात्तेने'त्युदात्तत्वे, 'स्मृतवे'त्यादौ तदुदाहरणसम्भवादि'ति। तन्न। तृतीयादिष्वनभिधानेऽप्यन्यत्र तत्कल्पने मानाऽभावात्।

यत्तु 'अचः परस्मिन्नि'ति सूत्रे भाष्ये 'पूर्वविधाविति किमर्थमि'त्याशङ्क्य 'हे गौरि'ति प्रत्युदाहृत्य, 'नैतदस्ति प्रयोजनम्, आचार्यप्रवृत्तिर्ज्ञापयति— 'न सम्बुद्धिलोपे स्थानिवदि'ति, यदयम् 'एङ्‌ ह्रस्वात्सम्बुद्धेरि'त्येङ्ग्रहणं करोति। नैतदस्ति ज्ञापकम्। गोऽर्थमेतत्स्यात्। यर्त्ताहि प्रत्याहारग्रहणं करोति। इतरथा हि 'ओ ह्रस्वादि'ति ब्रूयादि'त्युक्तम्। तत्र हि 'गोऽर्थमि'-ति वदता इतरोकारान्ताऽभावोध्वनितः। ज्ञापकेन च 'से' इत्याद्येकारान्ताऽभावोऽपि। अन्यथा 'एङ्ह्रस्वादि'ति सूत्रे एकारस्य तदर्थमावश्यकत्वेन, प्रत्याहारग्रहणस्य ज्ञापकता भज्येते'ति। तन्न। 'पूर्वविधावि'त्यस्याऽभावे स्थानिवद्भावेन ह्रस्वान्तत्वं निमित्तीकृत्य एङ्ग्रहणाऽभावेऽपि[1] लोपसम्भवेन, तदभावकल्पने मानाऽभावात्।

न च न्यादिभ्यो विचि, दीर्घप्रकृतिकैकारान्तार्थं प्रत्याहारग्रहणस्याऽऽवश्यकत्वेन कथं ज्ञापकत्वम्। 'पूर्वविधावि'त्यस्याऽभावातिदेशेन स्थानिवत्त्वादेङ्ग्रहणसत्त्वेऽपि तत्र लोपाऽप्राप्तौ ज्ञापकत्वसम्भवात्। अथ वा 'योऽत्रादेश' इत्यादि भाष्येणैतत्प्रकरणस्य[2] स्थानिप्रयुक्तं भवति, आदेशप्रयुक्तं नेत्यभावाऽतिदेशाऽश्रयेण प्रवृत्तेर्ध्वनितत्वात्। न च भाष्ये 'पूर्वविधा[3]वि'-त्यस्याऽभावे 'गौः' इत्यत्रेङ्ह्रस्वादित्यस्याऽतिव्याप्त्युपन्यासवत्, दीर्घप्रकृतिकैकारौकारान्ते एङ्ह्रस्वादित्यस्याऽप्राप्त्यापत्तिरू[4]पदोषाऽनुपन्यासान्न्यूनता। प्रयोगाऽभावकल्पनाऽपेक्षयोपलक्षणपरतया भाष्यव्याख्याया एवोचितत्वात्।

---

१. 'ए' ग्रहणाऽभावे' इति ख. पाठः। २. 'तत्प्रकरणस्याऽपि' ख. पाठः।
३. 'पूर्वविधौ' इत्यारभ्य 'उपन्यासवत्' इत्यन्तः क. ग. पाठः।
४. 'रूपाऽव्याप्त्यनुपन्यासात्' ख. पाठः।

एतेन 'गोऽर्थमिति वदता ओकारान्ताऽभावो ध्वनितः' इत्यपास्तम्। एकाक्षरकोशबोधिताऽर्थवत 'ए' इत्यस्याऽभावः सम्बुद्धौ तद्भाष्यप्रामाण्यादावश्यक इति बोध्यम्। न च—'द्योश्च सर्वनामस्थाने वृद्धिर्विधेये'ति वार्त्तिके 'द्यो'शब्दस्यैवोपादानादन्याऽभावोऽनुमीयते इति वाच्यम्। उपलक्षणतया व्याख्यानेनैवोपपत्तावभावकल्पने मानाऽभावात्। एतेन 'औतोऽमि'ति सूत्रे 'अचिनवमि'त्यतिप्रसङ्गमाशङ्क्य, 'आ गोत इति करिष्यते' इत्युक्त्वा 'द्योरुपसङ्ख्यानं कर्त्तव्यमि'ति भाष्यं व्याख्यातम्। 'औकारान्तप्रातिपदिकोपसङ्ख्यानं कर्त्तव्यमि'ति तदर्थात्। **परे** त्वनभिधानेऽपि न क्षतिरित्याहुरिति दिक्।

**रायो हलि**। 'अष्टन आ' इत्यतो 'विभक्तावि'त्यनुवर्त्तते।

(यत्तु[3] 'रा यिश्छान्दस' इति 'स्थानेऽन्तरतम' सूत्रस्थभाष्यं, तत्क्यजन्त-'रै'शब्दाऽप्रायम्। केवल'रै'शब्दस्याऽपि छन्दस्येव प्रयोगार्हत्वे, भाष्यकर्त्तू 'रायमिच्छती'ति प्रयोगाऽनुपपत्तिः। न हि विग्रहोऽपि च्छन्दः।

अपि **च राः=रैशब्दो, यिः=**यकारादिप्रत्ययान्तः, **छान्दस** इत्यर्थः। भाष्याऽक्षरैस्तथैव लाभात्। यकारेण यकारादिः प्रत्ययो लक्ष्यते। इकार उच्चारणार्थः 'यी'ति सूत्रे तादृशाऽर्थकत्वेन दृष्टतयोपस्थितत्वाच्च तस्यैवोच्चारणम्। क्वचित्तु विसर्गरहितपाठ एव भाष्ये दृश्यते। अत एवा'ऽचः परस्मिन्नि'त्यत्र 'रायि आशां-राय्याशामि'त्युदाहृतं भाष्ये इत्यलम्)।

'अ[4]र्थरैविभवा अपी'त्यमरः। साहचर्यात्पुंस्त्वम्। 'संराया भूयसा सृजे'त्यादिप्रयोगाच्च।

**॥ इत्यजन्ताः पुंल्लिङ्गाः ॥**

---

१. 'एतेन द्योश्च' ख. ग. पाठः।

२. 'इत्यपास्तम्' ख. ग. पाठः।

३. क. कुण्डलितः पाठः।

४. 'अर्थरै' इत्यारभ्य 'प्रयोगाच्च' इत्यन्तोऽयं ख. ग. पाठः।

# अथाऽजन्तस्त्रीलिङ्गप्रकरणम्

**रमेति** । रमयतेः पचाद्यचि टाप् एकाऽऽदेशस्य पूर्वाऽन्तत्वेन प्रातिपदिकत्वात्स्वादयः, लिङ्गविशिष्टपरिभाषया वा प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टे बोधनेन प्रातिपदिकत्वात् । 'वाचे'त्यादौ त्वनयैव । 'ङ्याप्प्रातिपदिकादि'ति सूत्रस्थङ्याप्ग्रहणं त्वन्याऽर्थमिति मूल एवोक्तं प्राक् । 'आप' इति पञ्चम्यन्तेन सामानाधिकरण्यादङ्गस्येत्यपि पञ्चम्या विपरिणम्यते, विशेषणेन च तदन्तविधिरित्याह—**आबन्तादिति** ।

**शी स्यादिति** । 'जसः शी'त्यतोऽनुवृत्तेरिति भावः । **रमे** इति । 'यस्येति चे'ति लोपस्तु न भवति । अभत्वात् । श्यां प्रतिषेधाच्च ।

**सम्बुद्धौ च** । 'बहुवचने झली'त्यत 'एदि'ति, 'आङि चाऽऽप' इति सूत्रात् आप इति चाऽनुवर्त्तते । 

नन्वनवकाशत्वेन एत्वेन हल्ङ्यादिलोपस्य बाधात्तदप्राप्तेराह—**एङ्ह्रस्वादिति** । सन्निपातपरिभाषा तु सम्बुद्धिलोपे न प्रवर्त्तत इत्यसकृदावेदितम् । **ओसि चेति** । चकारेण प्रकृतम् 'ओसि चे'ति परामृश्यत इति भावः । **रमाभिरिति** । अल्विधावन्तादिवद्भावाऽप्रवृत्तेरैस् न कृतः ।

'घेर्ङिती'त्यतोऽनुवृत्तं 'ङिती'ति 'आप' इति पञ्चम्या षष्ठ्या

---

१. 'कार्यकालपक्षे तु लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वतद्व्याप्य' ख. पाठः ।

२. इतोग्रे—'ननु येन नाप्राप्तिन्यायेन सम्बुद्धिपराऽऽबन्ताऽङ्गरूपैकविषयत्वाद्धल्ङ्यादिलोपं बाधित्वा एत्वे, हल्ङ्यादिसूत्रे आकारप्रश्लेषस्य वक्ष्यमाणत्वेन स्थानिवद्भावेनाऽऽप्त्वेऽप्याकाररूपत्वाऽभावात्तदप्राप्तेराह—एङ्ह्रस्वादिति' । इति ख. पाठः । 'ननु द्वयोर्विषयस्य भेदाद्येननाप्राप्तिन्यायेनैत्वस्याऽपवादत्वाऽभावेपि, प्रथमप्रवृत्तौ शीघ्रोपस्थितिकत्वेन प्रतिपदोक्तत्वस्य बीजत्वादेत्वे, हल्ङ्यादिलोपो न प्राप्नोति । हल्ङ्यादिसूत्रे आकारप्रश्लेषस्य वक्ष्यमाणत्वेन स्थानिवद्भावेनाप्त्वेऽप्याकाररूपत्वाऽभावात्तदप्राप्तेराह—एङ्ह्रस्वादिति ।' इति ग. पाठः ।

विपरिणम्यत इत्यभिप्रेत्याऽऽह—**ङिद्वचनस्येति**। 'यडित्येव' वक्तमुचितम्। अकारोच्चारणसामर्थ्येन पररूपाऽभावोपपत्तेः। उच्चारणार्थत्वसम्भावनावारणाय वा तथा नोक्तम्। स्याडप्येवमेव।

[1]**वृद्धिरेचीति**। यत्तु समुदायाऽवयवयोः सन्निधानेऽनुबन्ध उभयोपपकारकः, अतः परत्वादाटश्चेति वृद्धिर्न्याय्या। किञ्च 'प्रादूहे'त्यत्र **मनोरमायां** 'व्रश्चे'ति सूत्रे 'राजृ'ग्रहणेन भ्राजेकदेशस्य ग्रहणमुक्तं, ततोऽत्र वैषम्यं दुर्वचम्। न चाऽस्याऽनर्थकत्वम्। आटोऽर्थवतः क्वाऽप्यभावादिति। तन्न। ऋकारोच्चारणसामर्थ्येन विलम्बोपस्थितस्यैकदेशभूतस्य ग्रहणेऽपीह ग्रहणे मानाऽभावात्। सानुबन्धकनिर्द्देशेषु प्रायोगिकरूपाऽसम्भवादौपदेशिकरूपग्रहणमिति घसंज्ञादिसूत्रेषु भाष्ये स्पष्टम्। उपदेशे च तेषामित्सञ्ज्ञकत्वादुपस्थिततद्गुणवतामेवाऽत्र भानमिति टकारेत्सञ्ज्ञकाऽऽकारादित्यर्थः। एवञ्च तत्र तत्र पाणिनेर्विशिष्टोपदेशे तात्पर्येण तत्प्रयुक्तेत्सञ्ज्ञकेन तस्यैव टित्त्वादिव्यवहारो, नाऽवयवस्य, तदुपदेशे तात्पर्याऽभावात्। अत एव 'वव्रश्चिमहे' इत्यादौ महिङो ङित्त्वमाश्रित्य न सम्प्रसारणम्। एतेनौपदेशिकस्याऽच्परत्वाऽभावेन न वृद्धेः प्रसङ्गः, प्रयोगे तु नाऽऽडिति 'आटश्चे'त्यसङ्गतमित्यपास्तम्। [2]कार्यैक्ये विप्रतिषेधाऽभाववादिनां मतेऽदोषाच्च। 'क्तक्तवतू निष्ठे'ति सूत्रे भाष्ये स्फुटमेतत्।

**सर्वनाम्नः स्या**। 'आबन्तात्परस्य सर्वनाम्नो विहितस्ये'त्यर्थः। तेन 'मासपूर्वायै' इत्यत्र स्याट् न। अत्र ह्रस्वो न स्याटः। तस्य विधेयत्वेनोद्देश्यत्वाऽसम्भवात्, षष्ठ्यन्तत्वाऽभावाच्च। [3]नाऽपि ङिद्वचनस्य। व्याख्या-

---

१. 'वृद्धिरेचीति' इत्यारभ्य 'इत्यपास्तम्' इत्यन्तः (शब्दरत्ने धृतत्वादत्र) क. कुण्डलितः, प्रायः ख. ग. पाठः।

२. 'कार्यैक्ये' इत्यारभ्य 'अदोषाच्च' इत्यन्तः पाठः क. नास्ति।

३. 'नापि ङिद्ववचनस्य। तथा च 'स्याडिश्चङेरि'त्येव सूत्रयेत्। 'ङेरि'ति सन्निधानादिकारेणैव सम्बध्यते। न च ह्रस्वविधानसामर्थ्याण्ङसादावपि

नात् । अत आपो ह्रस्व इत्यभिप्रेत्याह—

**आपश्चेति** । ('स्या[1]डच्चे'ति तु न सूत्रितम् । तथा हि सति ङिद्वचनस्यैव स्यात् । तथा च ङे-ङ्योरेवा[2]ऽकारः स्यादिति बोध्यम् ।

न च 'सर्वनाम्नोऽसुङ् चे'त्येवा[3]ऽस्तु, अन्तरङ्गत्वात्पूर्वं याटि, 'सर्वस्यै' इत्यादिसिद्धेरिति वाच्यम् । पूर्वमसुङि, असान्तत्वाऽभावेन 'अमुष्यै' इत्यादौ मुत्वाऽनापत्तेः । पूर्वं मुत्वे त्वसिद्धिः स्पष्टैव । एवं च 'अमुमुयङि'त्यादौ व्याख्याभेदेन रूपद्वयवदिहाऽपि स्यात् । एवं च तत्राऽसान्तस्येत्यप्यर्थं इत्यत्र स्याड्ग्रहणमपि ज्ञापकम् । न च अस्याङादेशोऽस्तु । स्थानिवत्त्वेन प्रत्ययतया तदवयवत्वात् 'अमुष्यै' इत्यादौ षत्वसिद्धिः । दीर्घोच्चारणं त्वनङ्गविवोच्चारणाऽर्थत्वसम्भावनावारणायेति वाच्यम् । अवङ्सूत्रभाष्योक्तरीत्या कार्यचिदन्तोदात्तत्वाऽऽपत्त्या 'यस्मै' इत्यन्तोदात्तस्याऽप्यापत्तेः । **केचित्तु** 'सर्वनाम्नः सुडि'त्युत्तरं 'याटो ह्रस्वश्चे'ति कार्यम् । याटस्तु न ह्रस्वः, दीर्घोच्चारणसामर्थ्यात् । पररूपमकारोच्चारणेनाऽपि वारयितुं शक्यमित्याहुः । तेषां 'त्रेस्त्रय'इत्यादौ 'आमी'त्यस्याऽनुवृत्तये मण्डूकप्लुतिराश्रयणीयेति बोध्य[4]म्) । आबन्तस्य गणे पाठाऽभावेन सर्वनामत्वाऽभावादाह—**एकादेशस्येति** । 'गणे सर्वशब्देने'ति शेषः । एतेन 'पूर्वं कार्याऽ-

---

दीर्घाऽभावोऽस्तु फलम् । 'आप' इत्यस्य षष्ठ्यन्तत्वमात्रकल्पनेनोपपत्तौ शास्त्रबाधे मानाऽभावात् । तस्मात्, ह्रस्वविधानसामर्थ्याद्व्याख्यानाच्च 'आपो ह्रस्व' इत्यभिप्रेत्याह—'आपश्चेति' इति ख. ग. पाठः ।

१. 'अत एव स्याडश्चेति' ख. पाठः ।

२. 'ङेङ्योरकारः स्यात्' ख. पाठः । 'ङेङ्योरेव स्यात्' ग. पाठः । कः तु कुण्डलितः, खण्डितश्चाऽयं पाठः ।

३. 'असुङ्' चेति कुतो न सूत्रितम्' ख. पाठः ।

४. 'अस्याङ्' इत्यत्र दीर्घोच्चारणन्त्वित्यर्थः ।

५. 'स्याडच्चेति तु न सूत्रितम्' इत्यारभ्य 'आश्रयणीयेति बोध्यम्' इत्यन्तः ख. पाठः । क. कुण्डलितः ।

भावात्संज्ञाया अप्रवृत्तौ, पूर्वाऽन्तत्वेन सा दुर्लभे'त्यपास्तम्। **सर्वस्यामिति।** इह स्याटि कृते सुट् न परेण स्याटा बाधात्।

**योत्तरेति।** 'अनेकमन्यपदार्थे' इति बहुव्रीहिः। 'सर्वनाम्नो वृत्तिमात्रे' इति मात्रग्रहणसामर्थ्यात्सम्प्रति असर्वनामत्वेऽपि पुंवद्भावः **प्रतिपदोक्तस्येति।** 'दिक्'पदमुच्चार्यविहितत्वात्तत्वम्।

[1]**योत्तरेति** वाक्ये यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वं प्रतीयते, 'योत्तरात्वप्रकारज्ञानविशेष्या सा प्रसिद्धपूर्वा यस्या' इत्यर्थात्। समासे तु न तत्प्रतीतिः। एकप्रसर[2]ताभङ्गात्। तत्रोत्तर[3]पदस्य ज्ञानविशेष्यपर्यन्तलक्षकत्वेन गुणवाचकत्वाद्विशेषणत्वेन पूर्वनिपात इति भावः। न तूत्तरस्यां पूर्वात्वप्रकारकज्ञानविशेष्यत्वं विधेयम्। तथा सति 'पूर्वा'पदस्य पूर्वनिपातः स्यात्। 'न विधौ परः शब्दार्थ'इतिन्यायेन विधेयबोधके लक्षणाया अनौचित्याच्च। (एतेन[4] 'या पूर्वा सोत्तरा यस्या' इति विग्रहः परास्तः। पूर्वनिपातवैपरीत्याऽऽपत्तेः। तत्र पूर्वापदस्यैव लाक्षणिकत्वेन गुणवचनत्वादितिदिक्)।

**स्पष्टार्थमिति** 'दिङ्नामान्यन्तराले' इत्यस्य बहुव्रीह्यधिकारस्थत्वादिति भावः। **अन्तरायै नगर्यै** इति। 'अपुरी'ति वार्त्तिकस्य पूःशब्दार्थस्य विशेष्यत्वे इ[5]त्यर्थो, न तु पूःशब्दप्रयोगे इत्यर्थ इति भावः। तथा हि सति शास्त्रस्याऽल्पविषयता स्यादित्याहुः।

त्यक्तुं **शक्यमिति।** 'तीयस्ये'त्यस्य पुंनपुंसकाऽर्थमावश्यकत्वादिति भावः। ननु भागार्थकाऽन्प्रत्ययान्ते लाक्षणिकतया 'तीयस्ये'ति वार्त्तिका-

---

१. 'उत्तरपूर्वायै इति। वाक्ये यत्तच्छब्दाभ्याम्' इति ख. पाठः।

२. 'एकप्रसृ(त)ताभङ्गात्' इति क. ख. ग. पाठः।

३. 'उत्तरापदस्य' ख. ग. पाठः। क. तु हरिताललेपेन 'उत्तरपदस्य' इत्येव पाठः शोधितः। ४. क. कुण्डलितः ख. ग. पाठः।

५. 'शब्दार्थविशेष्यत्वे' इति क. पाठः। 'पूःशब्दार्थस्य अविशेष्यत्वे' इति तु लघुशब्देन्दुशेखरे पाठः।

६. पूःशब्दार्थस्य विशेष्यत्वे नेत्यर्थ इति भावः।

ऽप्रवृत्तौ, भक्तौ विवक्षितायां स्त्रीलिङ्गे विकल्पाऽर्थं सूत्रमावश्यकम्। अत्र सूत्रे तु न प्रतिपदोक्तपरिभाषा प्रवर्त्तते, प्रतिपदोक्तस्याऽभावात्। न च महाविभाषयाऽनभावे वार्त्तिकप्रवृत्त्या रूपद्वयं सिद्धमेवेति वाच्यम्। तत्सूत्रे महाविभाषाऽसम्बन्धस्य तद्धिते वक्ष्यमाणत्वात्। आद्युदात्तस्य तथाऽपि रूपद्वयाऽसिद्धेश्चेति चेन्न। भागाऽर्थे विधीयमानस्य स्त्रीत्वाऽभावात्। अत्र च प्रत्याख्यानपरं भाष्यं मानम्। अत एव संज्ञोपसर्जनाऽर्थमपि न। 'सर्वनाम्नः स्याडि'ति साहचर्याच्च। (न[1] चाऽनेकमन्यपदार्थे इति सूत्रभाष्योक्तसहायवाचिद्वितीयाशब्दार्थं सूत्रे द्वितीयाग्रहणमिति वाच्यम्। तृतीयाशब्दसाहचर्येण तस्याऽग्रहात्। 'द्वेस्तीय'[2] इति सूत्रेणैवाऽऽवृत्त्या तस्याऽपि व्युत्पादनाच्च)।

**अम्बार्थ। हे अम्बेति**। ह्रस्वे कृते 'सम्बुद्धौ चे'त्येत्वं न। 'आ-आबि'ति प्रश्लेषात्। 'द्व्यक्षरं यदी'ति 'द्व्यच्काऽम्बाऽर्थकस्यैव ह्रस्वः' इति नियममाश्रित्य 'डलकवतां ह्रस्वो ने'ति वार्त्तिकं भाष्ये प्रत्याख्यातम्। तत्र फलभेदाऽभावाय सामान्यतोऽपि वार्त्तिकमसंयुक्तविषयकमित्यभिप्रेत्याऽऽह—**असंयुक्ता** इति। 'द्व्यक्षरं यदी'त्यस्याऽङ्गाऽधिकारस्थत्वाद् 'द्व्यक्षराऽम्बार्थकाऽन्तस्यैव ह्रस्वः इतिनियमशरीरात् 'जगदम्बे'त्यादावपि ह्रस्वो भवत्येव। यस्तु 'द्व्यक्षरत्वाऽभावादेवमादौ ह्रस्वो ने'त्याह, स देवानांप्रिय एव।

अत्र वार्त्तिकम्–**मातुर्मातच्पुत्रार्थमर्हते**'। इदं च सम्बुद्धिविषयम्, अत्रोपसङ्ख्यानात्[3]। पुत्रायेतिपुत्राऽर्थम्। (तुमर्थाच्चे'ति चतुर्थी)। एवं चाऽर्हन्तं पुत्रमभिधातुं यो मातृशब्दः प्रयुज्यते, तस्य 'नद्यृतश्चे'ति कबपवादो मातजादेशः, सम्बुद्धावित्यर्थः। साऽपेक्षत्वेऽप्यत एव निपातनात्समासः। अर्हत्त्वं

---

१. क. कुण्डलितः ख ग. पाठः।

२. 'द्वेस्तीय' इत्यारभ्य 'व्युत्पादनाच्च' इत्यन्तः पाठः क. नास्ति।

३. अयं ख. ग. पाठः, क. नास्ति।

च पुत्रस्य मातृद्वारकमेव, प्रत्यासत्तेः। 'पुत्रस्याऽत्यन्तश्लाघ्यत्वं प्रतिपादयितुं यो मातृशब्दः प्रयुज्यते' इत्यर्थः। इदमेव ध्वनयितुं भाष्ये 'मातृणामि'ति बहुवचनमुपात्तं पूज्यतार्ऽथम्। पुत्रेण ससम्बन्धिकत्वाच्च जननीवाच्येव मातृशब्दो गृह्यते। यत्र तु श्लाघ्यत्वं न द्योत्यं, तत्र 'गार्गीमातृके'त्येव।

**यद्यपि जरसादेशस्येति**। एवं चैत्व-शी-नुड्-याड्-आमां नित्यत्वात्पूर्वमेषु कृतेषु, क्व चिदजादित्वाऽभावात्क्व चित्सन्निपातपरिभाषया जरसादेशाऽनापत्तिरिति भावः। कृते तु प्रश्लेषे शी-नुड्भ्यां परत्वाज्जरसिति भावः। यद्यपि याडामोर्जरसादेशाऽपेक्षया परत्वात्तयोः कृतयोराद्येऽजादित्वव्याघातात्, अन्त्ये सन्निपातपरिभाषया न जरसादेशप्राप्तिरिति, ततः पूर्वं न जरसादेशसम्भवः, एवमत्वेऽपीति, तत्र प्रश्लेषे न फलम्, तथाऽपि तत्र फलं दर्शयितुमाह—**एवमिति**। ('पूर्वं पूर्वमन्तरङ्गमि'त्यन्तरङ्गत्वाच्छीनुड्याडाम्भ्यो, नित्यत्वाच्चैत्त्वात्पूर्वं जरसि कृते इति भावः)[1]। अत्र यद्वक्तव्यं तन्निर्जरशब्दे उक्तम्।

**स्वाश्रयमिति**। स्वं—श्रूयमाण आकारः। **स्थानिवद्भावेनाऽप्त्वमिति**। ननु 'ङ्याप्स्थानिको दीर्घभिन्न आदेशो न स्थानिवदि'त्यर्थकेन, स्थानिवत्सूत्रस्थेन 'ङ्यापोरदीर्घत्वे' इति वचनेन ह्रस्वे आप्त्वस्य विच्छेदात्पश्चाद्दीर्घे जातेऽपि स्थानिवद्भावेन कथं तल्लाभः। वार्त्तिके[2] 'ह्रस्वत्वे'इति नोक्तम्। चित्रायां जातश्चित्र इत्यादौ जातार्थलुकि, टापो लुकि, प्रत्ययलक्षणेन हल्ङ्यादिलोपाद्यापत्तेः। मम तु तस्यापि दीर्घभिन्नत्वात्तत्रापि न स्थानिप्रयुक्तकार्याऽतिदेशः। दीर्घशब्देनाऽत्र सवर्णदीर्घ एव। अत एव गङ्गायतेः क्विपि 'गङ्गीरि'त्यादौ सुलोपादि न। आकारप्रश्लेषकर्त्तृभाष्यनये तदप्राप्तेः, तेषामनभिधानमेव वा। न च श्रुतमाकारमादाय, स्मृतमनुबन्धमादायाऽऽप्त्वानुसन्धानात्स्यादेव लोप इति वाच्यम्। एवंविधस्य लाक्षणि-

---

१. 'पूर्वम्' इत्यारभ्य 'इति भावः' इत्यन्तः क. कुण्डलितो ग. पाठः।

२. 'वार्त्तिके' इत्यारभ्य 'तेषामनभिधानमेव वा' इत्यन्तः क. ग. पाठः।

कत्वेन ग्रहणाऽयोगात्। स्थानिवद्भावे तु वचनसामर्थ्यादुक्तपरिभाषा न प्रवर्त्तत इति चेन्न। 'याडापः' 'औङ आपः' 'आङि चापः' 'ङेराम्नद्याम्' 'हल्ङ्याब्' इत्येतेष्वाकारप्रश्लेषमाश्रित्य स्थानिवद्भावनिषेधवार्त्तिकस्य भाष्ये प्रत्याख्यानाददोषः। ननु 'अतिखट्वस्य-अ' इतिनिष्पन्ना'ऽतिखट्वा'-शब्दे वार्त्तिकमते सुलोपा[1]ऽऽदि न प्राप्नोति, सूत्रमते, भाष्यमते च आकार-प्रश्लेषेऽपि प्राप्नोतीति कथं तत्प्रत्याख्यानमिति चेन्न। अनभिधानेन एषां प्रयोगाणामभावेनाऽदोषात्। यत्त्वाकाराऽन्तरं प्रश्लिष्य आकाररूप एव यो, न कदाचित् ह्रस्वं, रूपाऽन्तरं वा प्राप्त इतिव्याख्यानान्न दोष इति। तन्न। मानाऽभावात्। 'अतिखट्वाये'त्येव वार्त्तिकप्रयोजनं प्रदर्श्य, आकार प्रश्लेषेण हि तत्प्रत्याख्यातं भाष्ये।

(यदपि 'दीर्घसम्भावनारहिते एवाऽऽदेशे स्थानिवद्भ[3]ावे निषेध' इति, वार्त्तिकमतेऽपि सुलोप-याडादिकं भवत्येवे'ति। तदपि न। 'अतिखट्वाये'-त्युदाहरणपरभाष्यविरोधात्)।

**आबन्तं यदङ्गमिति**। प्रत्ययग्रहणे' इति परिभाषयाऽतिखट्वस्य ना-ऽऽबन्तत्वं, यच्चाऽऽबन्तं 'खट्वे'ति तदङ्गमिति भावः। 'प्रत्ययग्रहण'परि-भाषा त्वङ्गसंज्ञासूत्रे 'यस्मात्प्रत्ययविधिस्तदादि प्रत्यये' इति योगविभागा-त्सिद्धा। 'प्रत्यये गृह्यमाणे यस्मात्तस्य विधिस्तदादि गृह्यते' इत्यर्थात्।

नन्वनयाऽऽबन्तग्रहणे, तेन चाऽङ्गविशेषणे 'आबन्ताऽन्तं यदङ्गमि'त्य-र्थादतिखट्वायेत्यादौ दोषस्तदवस्थ[4]ः। (अत[5] एव 'ङ्यापोरदीर्घत्वे' इत्यस्या-

---

१. 'सुलोपादिर्न प्राप्नोति' इति ग. पाठः।

२. अयं ख. ग. पाठः, क. नास्ति।

३. 'स्थानिवद्भावनिषेधः' ख. पाठः।

४. 'दोषस्तदवस्थ इति चेन्न। अङ्गस्य विशेषणत्वाश्रयणात्' क. ग. पाठः।

५. क. कुण्डलितः पाठः। ख. ग. नास्ति।

ऽतिखट्वायेत्युदाहरणं भाष्ये दत्तम् । अन्यथा स्थानिवद्भावेऽपि प्राप्त्यभावा-त्किन्तेन ?) –इति चेन्न । अङ्गस्य विशेषणत्वाऽऽश्रयणात् ।

ननु स्त्रीप्रत्यये वाचनिकस्तदादिविधिनिषेधो भाष्ये पठितस्तकथमस्य तत्र प्राप्तिरत आह—**उपसर्जनेति** ।'स्त्रीप्रत्यये चाऽनुपसर्जने ने'ति वचन-स्यैव भाष्ये पाठादिति भावः । 'यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाऽऽह, तत्र तदादिनियमो न, यस्तु अप्रधानत्वेनाऽऽह, तत्र तदादिनियमोऽस्त्येवे'ति तदर्थः । प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययाऽन्तत्वमानेयं, तदर्थं प्रत्यनुपसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम्[2] । अत एवाऽत्र न शास्त्री-योपसर्जनग्रहणम् । स्त्रीप्रत्यये तत्त्वाऽसम्भवात् । इदं च 'ष्यङः सम्प्रसार-णमि'ति सूत्रे भाष्ये स्पष्टम् ।

**परे** तु अस्याऽऽकारस्य लाक्षणिकत्वेन नाऽत्र याट् । वर्णग्रहणेऽपि क्व चित्प्रतिपदोक्तपरिभाषाऽङ्गीकारात् । न च 'खट्वायै' इत्यत्राऽपि याडना-पत्तिः, सूत्रन्तु 'निशायै' इत्यादौ चरिताऽर्थमिति वाच्यम् । यस्य रूपस्य लक्षणप्रवृत्तिं विनाऽसम्भवस्तस्यैव[3] लाक्षणिकस्य परिभाषाविषयत्वात् । न चेह तथा । एकाऽऽदेशतः प्रागपि तद्रूपसत्त्वा[4]त् ।

अत एव 'आबन्ताऽन्तं यदङ्गमि'त्यर्थाऽभिप्रायेण प्रवृत्तं 'ङ्यापोर्दी-र्घत्वे' इति वार्त्तिकं व्याख्याय, श्रुताऽऽकारस्मृताऽनुबन्धाभ्यामाप्त्वेनाऽऽ-

---

१. 'कथमत्र तस्य प्राप्तिरत आह' ख. पाठः ।

२. 'निमित्तमिति बोध्यम्' ख. पाठः ।

३. 'तत्रैव लाक्षणिकस्य' ख. पाठः ।

४. इत उत्तरं—'किञ्च आकारप्रश्लेषे कृते, दीर्घोत्तरं स्वाश्रयाऽऽकारत्वं, स्थानिवद्भावेनाऽऽप्त्वमि'ति शङ्काऽयुक्तैव, दीर्घात्पूर्वं स्थानिवद्भावस्य फलाऽभावादप्रवृत्तौ, स्थानिव्याप्त्वबुद्धेरभावात्तदादेशे दीर्घे तदारोहस्य दुर्लभत्वात् । परम्परया कार्यमादायाऽऽद्यस्थानिवत्त्वप्रवृत्तौ मानाऽभावात्' —इति ख. ग. पाठः । क. तु अग्रेऽयं पाठः ।

शङ्कां कृत्वा, लाक्षणिकत्वेन समाधाय, तत्प्रत्याख्याने एतत्परिहारायोपायाऽन्तराऽकथनं भाष्ये सङ्गच्छते । अङ्गस्य विशेषणत्वाऽऽश्रयणे तु एतद्वार्त्तिकप्रत्याख्यानाय प्र[1]श्लेषो व्यर्थः स्यात् । वार्त्तिकाऽऽरम्भश्च विफलः स्यात् । किञ्च खट्वाया[2] अर्द्धेऽर्द्धखट्वायामित्यादौ याडनापत्तिः । किञ्चाऽऽकारप्रश्लेषे कृते दीर्घोत्तरं स्वाश्रयाऽऽकारत्वं, स्थानिवद्भावेनाऽऽप्त्वमिति शङ्काऽयुक्तैव । दीर्घात्पूर्वं स्थानिवद्भावस्य फलाऽभावादप्रवृत्तौ स्थानिन्याप्त्वबुद्धेरभावात्तदादेशे दीर्घे तदारोहस्य दुर्लभत्वात् । परम्परया कार्यमादायाऽऽद्यस्थानिवत्त्वप्रवृत्तौ मानाऽभावात् ।

एवं—'जरसाद्यादेशानां स्थानिवत्त्वेनाऽऽबन्तत्वमि'त्यप्यसङ्गतम् । तस्याऽशास्त्रीयत्वात् । प्रत्ययग्रहणपरिभाषया शास्त्रे प्रत्ययबोधकपदस्य तदन्तबोधकत्वबोधनेऽपि, तस्य समुदायस्य तदन्तत्वाऽबोधनात् । न चैवं वस्नसादीनां स्थानिवत्त्वेन प्रत्ययाऽन्तत्वाऽलाभे प्रातिपदिकत्वाऽऽपत्तिः । फलाऽभावात् । तदर्थस्य सङ्ख्याकारकाद्यभावेन सुपोऽप्राप्तेः । 'औत्सर्गिकैकवचनन्तु न सर्वत्रे'त्यव्ययप्रकरणे वक्ष्यामः । एवं च 'ह्रस्वनद्याप' इत्यत्र प्रश्लेषे न फलं, नाऽपि मानमित्याहुः ।

**व्रश्च** । अत्र राज[3]साहचर्याद्भ्राजिः फणादिरेव[4] । तेनाऽन्यस्य 'विभ्रागि'त्येवेत्याकरः । ननु[5] राजेः पृथग्भ्राजिग्रहणं व्यर्थम्, तन्मध्येऽपि राजः सत्वात् । न च साहचर्यसम्पादनद्वारा फणादिभ्राजेरेव ग्रहणार्थं तदिति

---

१. 'प्रश्लेषकरणं व्यर्थं स्यात्' ख. पाठः ।

२. 'खट्वाया अर्द्धायै अर्द्धखट्वायै इत्यादौ' ख. पाठः ।

३. 'राजिसाहचर्यात्' ख. ग. पाठः ।

४. 'फणादिरेव गृह्यते' ख. पाठः ।

५. 'ननु' इत्यारभ्य 'इत्याहुः' इत्यन्तोऽयं पाठः । 'प्रादूहोढ' इत्यत्रत्यमनोरमाशब्दरत्नस्थत्वादत्र क. कुण्डलितः ।

वाच्यम् । 'विभ्राट्' 'विभ्राजि'ति हि रूपद्वयं साध्यम् । तच्च व्रश्चादिसूत्रे 'राजृ' इति पठित्वाऽपि सुसाधम्, एकस्य भ्राजतेर्ऋकारस्य प्रागपि दातुं शक्यत्वात् । यद्वा एकस्याऽनुबन्धाऽन्तरमेवाऽस्तु । एवं च 'भ्राजभासे'ति सूत्रे भ्राजिग्रहणमपि न कार्यमित्यपरं लाघवम् । 'राट्' 'विभ्राडि'त्यादौ राजृत्वन्तु भूतपूर्वगत्या । 'रां जृणाती'ति 'रा'शब्दपूर्वक 'जृ'धातोः क्विपि-निष्पन्न'राजृ'शब्दे नपुंसके तु[1] न षत्वम् । लाक्षणिकत्वात् । व्रश्चादिसाहचर्येण, प्रसिद्धत्वेन च धातुपाठपठितस्यैव[2] ग्रहणाच्च । (ऋ[3]कार उच्चारणार्थ एव सन्नितरव्यावर्त्तको, नेत्संज्ञकः, अनुनासिकत्वे मानाऽभावात्) । न चा[4]ऽनुबन्धनिर्देशेन यङ्लुकि 'राराष्टी'त्यादौ षत्वं न स्या[5]त्, यङ्लुकश्छान्दसत्वात्[6], 'श्तिपा शपे'त्यस्याऽनित्यत्वाच्च, भा[7]ष्याऽसंमतत्वाच्चेति चेन्न । अनर्थकत्वात् । व्रश्चादिसाहचर्येण धातुसंज्ञक[8] राज एव ग्रहणाच्च । एवं च भ्राजिग्रहणमेव विनिगमनाविरहादर्थवत्परिभाषायाः, साहचर्य-परिभाषायाश्च ज्ञापकम् । एतदाशयेनैव **सीरदेवोऽ**र्थवत्परिभाषाज्ञापकमिदमुक्तवानित्याहुः ।

छ-शौ वर्णौ, ताभ्यां शब्दरूपविशेष्यमादाय तदन्तग्रहणमित्याह—**छशान्तयोरिति** । 'छ-शयोरि'त्युक्तेऽपि का क्षतिरि'ति चिन्त्यम् ।

---

१. तुः क. ग. नास्ति ।

२. 'पठितानामेव' ख. पाठः ।

३. 'ऋकार' इत्यारभ्य 'मानाभावात्' इत्यन्तः पाठः क. ग. नास्ति ।

४. 'एतेनाऽनुबन्धनिर्देशेन' ख. पाठः ।

५. 'न स्यादित्यपास्तम्' ख. पाठः ।

६. 'छान्दसत्वाच्च' ख. पाठः ।

७. 'भाष्याऽसंमतत्वाच्च' इति ख. नास्ति ।

८. 'धातुसंज्ञकस्य राजः' ख. पाठः ।

विशेष्याऽसन्निधानाच्च । **अन्तादेश इति** । 'अलोऽन्त्यस्ये'ति वचनात् । अत्र 'झलो झली'ति सूत्रात् 'झली'त्यनुवर्त्तते, 'पदस्ये ति, 'स्कोरि'त्यतोऽन्त इति च । तदाह—**झलीत्यादि** । 'छ्वोः शूडि'त्यत्र 'क्ङिती'त्यनुवृत्तेः 'प्रष्टे'-त्यादौ शादेशाऽभावात्, शान्तत्वेन षत्वाऽप्राप्तौ 'छ'ग्रहणम् । अत्राऽपि सतुग्निर्देशो बोध्यः । येषान्तु तत्र 'क्ङिती'ति नाऽनुवर्त्तते, तेषां छः षत्वविधानं व्यर्थम्, शान्तत्वादेव सिद्धेरिति 'छ्वोः शूडि'ति सूत्रे भाष्ये स्पष्टम् ।

**तस्यासिद्धत्वादिति** । 'चयो द्वितीया' इत्यस्य 'नादिन्याक्रोशे'इति सूत्रे भाष्ये पठितत्वादिति भावः । **टतयोरिति** । धुडभावे टस्य, धुटि तु तकारस्येति भावः । **न भवतीति** । जश्त्वात्प्राक् षस्य नेत्यर्थः । जश्त्वे तु कृते प्राप्तिरेव नेति बोध्यम् । **के चित्त्विति** । 'एकाच' इत्युत्तरसूत्रेऽनुवृत्त्या, मध्येऽपि सम्बन्धस्यौचित्यात् । एवं च 'छशाऽन्तयोरि'ति **प्राचां** व्याख्यान-मप्याञ्जस्येनोपपद्यते इति भावः । **जश्त्वेनेति** । यत्तु 'झलां जश् झशी'ति निर्देशात् शस्य न जश्त्वमि'ति । तन्न । अविकृतस्वरूपप्रतिपादने तात्पर्यात्, अयस्मयादित्वेन भत्वाच्च तत्र तदप्राप्तौ न्यायासिद्धायाम् ज्ञापकत्वाऽ-योगात् । 'उपदेशेऽजनुनासिक' इत्यादिनिर्देशैः कुत्वाद्यनापत्तौ, सर्वापप्ल-वाऽऽपत्तेश्च ।

**निच्छिवति** । पक्षे 'शश्छोऽटी'ति छत्वे 'निच्छु' इत्यपि बोध्यम् । अन्ये तु निशाप्रकृतिभूतनिश एव तत्स्थाने 'पद्दन्न' इति सूत्रेणाऽदेशत्वबोधनात्, तस्य च धातुत्वेन भवत्येव 'धातोरि'त्यनुवृत्तिमतेऽपि षत्वमित्याहुः । 'मांसपृतने'त्यस्य 'पद्दन्न' इति सूत्रे उपसङ्ख्यातत्वादाह—**शसादौ वेति** । (अत्राऽऽदिशब्दः प्रकारे । 'मांस्पचन्या' इति भाष्योदाहरणात्) । स्त्रीत्वा-दीति । पुंस्त्वाऽभावादित्यर्थः। **नात्वं नेति** । 'स्त्रीत्वादि'त्यनुकृष्यते । अत एव

---

१. क. कुण्डलितः पाठः । ख. ग. नास्ति ।

'पुंस्त्वाऽभावान्नत्वाऽभाव' इति नोक्तम् । न हि पुंस्त्वाऽभावो नाभावे प्रतिबन्धकः, नपुंसकेऽपि तदङ्गीकारादिति दिक् ।

**ङिति ह्रस्वश्च ।** अत्र वाक्यद्वयम् । आद्ये 'यू' इति, 'स्त्र्याख्यावि'ति, 'अस्त्री'ति, 'इयङुवङ्स्थानावि'ति, 'वे'ति चाऽनुवर्त्तते । द्वितीये 'वे'ति, 'यू' इति, 'स्त्रीवाचकावि'त्येतन्मात्राऽर्थकं 'स्त्र्याख्यावि'ति च । तत्र ह्रस्वयोरप्राप्ते विभाषा । (अत एव 'यूस्त्र्याख्यावि'ति सूत्रे ह्रस्वघटितवाक्ये 'ने'-ति निवृत्तमि'त्युक्तं भाष्ये) । दीर्घयोस्तु 'नेयङि'ति निषेधादप्राप्ते विभाषा । भावमात्रतात्पर्यकतालाघवाऽनुरोधेनाऽप्राप्तविभाषात्वमेवोचितम् ।

**नित्यस्त्रीलिङ्गाविति** । यत्तु 'ङिति ह्रस्वश्चे'ति सूत्रे 'नित्यस्त्रीलिङ्गावित्येवंविधो नियमो नाऽऽश्रीयते' इति **कैयटोक्ते**'र्नित्यस्त्रीलिङ्गावि'ति चिन्त्यमि'ति । तन्न । इय्वादिष्वप्राप्तिमाशङ्क्य तथोक्तत्वेन, तस्य ह्रस्वांऽशमात्रविषयत्वात् । 'यू स्त्र्याख्यावि'ति सूत्रे 'ङितीयङुवङ्स्थानौ यू स्त्र्याख्यौ अस्त्री वा नदीसंज्ञौ न भवत'इति सूत्राऽऽरम्भे भाष्ये उक्तत्वेनाऽस्य निषेधकत्वेन, निषेधस्य प्राप्तिपूर्वकत्वेन च, तदंशे नित्यस्त्रीलिङ्गावित्यस्याऽऽवश्यकत्वात् । तत्फलन्तु 'कटप्रुवे, यवक्रिये ब्राह्मण्यै' इति । लिङ्गाऽन्तराऽभिधायकत्वेन कैयटमते तत्त्वाऽभावात् । कटप्रवणादेरुत्सगर्तः पुंधर्मतया वृत्तिमतेऽपि तत्त्वाऽभावाच्च । 'अतिश्रियै ब्राह्मण्यै' इत्यादौ,

---

१. क कुण्डलितः ख. ग. पाठः

२. 'ङिति चेयङुवङ्स्थानौ यू वाऽस्त्री नदीसंज्ञौ न भवतः' इति तु मुद्रितभाष्यपाठः ।

३. 'तदंशे' इति ख. ग. नास्ति ।

४. 'आवश्यकत्वाच्च' ख. ग. पाठः ।

५. 'कैयटमते' इति क. ग. नास्ति ।

६. 'हरदत्तमते' ख पाठः ।

क्यजन्तादिप्रकृतिकक्विबन्तादौ[1] च 'श्रियै ब्राह्मण्यै' इत्यादौ, अवयवस्य नित्यस्त्रीत्वादेव सिद्धिः। 'लिङ्गाऽन्तराऽभिधायकत्वमि'ति लक्षणे क्यजादिसाऽपेक्षबहिरङ्गलिङ्गाऽन्तरव्यावृत्तौ मानाभाव इत्युक्तम्। न चेयङुवङ्ङित्प्रत्ययैरङ्गाऽऽक्षेपेण, तस्यैव नित्यस्त्रीत्वं युक्तमिति वाच्यम्। 'यू स्त्र्याख्यावि'त्यत्राऽङ्गाऽऽक्षेपकाऽभावेन यूभ्यामेव सम्बन्धस्य क्लृप्तत्वात्।

न च जहत्स्वार्थायामवयवोऽनर्थकः। भूतपूर्वगत्या तत्सत्त्वात्। न चैवम् 'अतिश्रिये ब्राह्मणाय', 'श्रिये द्विजाये'त्यादावपि विकल्पः स्यात्। 'स्त्र्याख्यावि'त्यनेन 'स्त्रीवचनावि'त्येतन्मात्रार्थकेनाऽऽवृत्त्या ङित्प्रत्ययाऽऽक्षिप्ताऽङ्गस्याऽपि विशेषणात्। ईदूतोस्तु न विशेषणम्, वैयर्थ्यात्। एतच्च सर्वं 'ह्रस्वेयुव्स्थानौ[2] प्रवृत्तौ च स्त्रीवचनावेवे'ति वार्त्तिकव्याख्यानपरभाष्ये स्पष्टं सुधियाम्। नन्वेवम् 'अतिश्रिये ब्राह्मणाये'त्यत्राऽवयवनदीत्वान्नित्यनदीकार्याऽऽपत्तिः। न च 'नेयङुवङि'ति निषेधः। तत्राऽप्युक्तरीत्या स्त्रीत्वस्येयङाद्याक्षिप्तेऽङ्गेऽप्यन्वयेन तदप्राप्तेरिति चेन्न। भाष्यप्रामाण्येन तत्र तदनङ्गीकारात्। नन्वेवमप्यावृत्तिर्व्यर्था। नित्यस्त्रीत्वघटकस्त्रीत्वस्य विशेष्याऽन्वयिन एव ग्रहणेन, प्रागुक्ताऽतिप्रसङ्गाऽभावादिति चेन्न। लिङ्गाऽन्तराऽनभिधायकत्वसमानाधिकरणविशेष्याऽन्वयिस्त्रीत्ववाचकत्वस्य 'अतिश्रियै ब्राह्मण्यै' इत्यत्र समुदाये[3], अवयवे चाऽभावेन नदीत्वाऽनापत्तेरिति दिक्।

श्री शब्दादिभ्य इवाऽर्थे कनि, लुपि च 'श्रिये ब्राह्मणाये'त्यादौ विकल्पो

---

१. 'आचारक्विबन्ते, क्यजन्तातिप्रकृतिकक्विबन्तादौ च' इति क्वचित्पाठः। तत्र 'आचारक्विबन्ते' इति क. कुण्डलितः पाठः।

२. 'ह्रस्वेयुव्स्थानप्रवृत्तौ च स्त्रीवचनावेव' इति तु वार्त्तिकपाठः। 'ह्रस्वौ च, इयङुवङ्स्थानौ च, प्रवृत्तौ च, प्राक् च प्रवृत्तेः, स्त्रीवचनावेव' इति च तद्व्याख्याभाष्ये पाठः।

३. 'समुदायस्याऽवयवस्य च तत्त्वाऽभावेन' क. पाठः।

न। 'स्त्र्याख्यावि'त्यस्य 'स्त्रीत्वविशिष्टमेव यावाचक्षाते' इत्यर्थात्[१]। स्त्रीत्वेन रूपेण वस्तुतः पुंस्त्वविशिष्टस्याऽभिधानेन, तथात्वाऽभावात्। यद्यपि लिङ्गत्रयमपि केवलाऽन्वयि, तथापि व्यक्ति-वस्तु-पदाऽर्थाऽऽदिपदबोध्यतादशायां तत्तल्लिङ्गोपजनेऽपि, स्त्रीपदाऽऽदिबोध्यत्वदशायां तत्सत्त्वे मानाऽभावः। प्रकृते तु 'ब्राह्मणाये'त्यादिविशेष्यदर्शनेन तत्सत्ताऽनुमानम्। अत एव **कैयटोऽपि** 'स्त्रियमेव यावाचक्षाते, न लिङ्गाऽन्तरयुक्तमपी'ति व्याख्यत्। 'चञ्चा ब्राह्मणान्पश्ये'त्यादौ नत्वं तु न। तत्र 'पुंसी'त्यस्य 'पुंस्त्वे बोध्ये' इत्यर्थात्। तस्य तत्र सत्त्वेऽपि, चञ्चाशब्दाऽवाच्यत्वान्न दोषः। 'लिङ्गान्तराऽनभिधायकत्वमि'त्यत्र लिङ्गाऽन्तरे'त्यस्य लिङ्गाऽन्तरयुक्तेत्यर्थो भाष्यप्रामाण्यादिति भाष्यप्रदीपोद्योते विस्तरः।

'ह्रस्वश्चे'ति वाक्ये तु 'स्त्र्याख्य'पदं शब्दाऽधिकारात्स्त्रीबोधकावित्येतन्मात्राऽर्थकं सम्बध्यते। अत इष्वादीनामुभयलिङ्गानां नदीत्वम्। अन्य[३]था तु तन्न स्यात्। नित्य[४]स्त्रीत्वाऽभावात्। वृत्तिमतेऽपि ह्रस्वांऽशे नित्यग्रहणव्यावर्त्याऽलाभाच्च। न च पट्वादयः सर्वलिङ्गाः, इष्वादयश्च व्यावर्त्याः। तेषां शब्दाऽर्थ एव स्त्रीत्वमिति पदान्तरं विनाऽपि स्त्रियां वर्त्तमानत्वात्। एतदभिप्रेत्यैव कैयटेनोक्तं—'ङिति ह्रस्वश्चेत्यत्र एवं विधो नियमो नाऽऽश्रीयते' इति। (भा[५]ष्ये च 'ह्रस्वौ च यौ यू स्त्र्याख्यौ नदीसंज्ञौ भवतः' इत्युक्तम्)।

---

१. 'इत्यर्थान्न दोषः' ख. पाठः।

२. अत्र 'व्यक्ती'ति लघुशब्देन्दुशेखरात् पूरितमस्माभिः।

३. 'आख्याग्रहणसम्बन्धे तु तन्न स्यात्' ख. पाठः।

४. 'कैयटरीत्या नित्यस्त्रीत्वाऽभावात्' ख. ग. पाठः।

५. क. नास्ति।

तच्च क्लृप्तत्वाद्यूभ्यां सम्बध्यते। आवृत्त्याऽङ्गस्याऽपि विशेषणम्। अत एव 'अतिशकटये ब्राह्मणाये'त्यत्र विकल्पो न। न चैवमङ्गविशेषणत्वाऽऽवश्यकत्वे पुनर्य्वोर्विशेषणं व्यर्थम्। 'हरिमतिक्रान्तायै अतिहर्य्ये[1] ब्राह्मण्यै' इत्यत्र विकल्पवारणार्थत्वात्। तत्र स्त्रीत्वस्य वारद्वयमन्वयसामर्थ्येन 'तत्र प्रयोगे स्त्रीवाचकघटकावेव यौ यू' इत्यर्थात्। इदमेवाऽभिप्रेत्य 'ह्रस्वेयुवस्थानौ च वृत्तौ, वृत्तेः प्राक् च स्त्रीवचनावेव नदीसंज्ञावि'ति ग्रन्थे 'एव'कारः प्रयुक्तः। तस्य हि 'नित्यस्त्रीलिङ्गावि'ति नाऽर्थः। इष्वादीनां नदीत्वाऽनापत्तेः। 'अतिश्रियै ब्राह्मण्यै' इत्यादि-तदुदाहरणपरभाष्यविरोधाच्च। तस्मात् 'तत्र प्रयोगे पुमादिवाचकघटकौ ने'त्यर्थः।

तदन्तसंज्ञापक्षे तु 'तत्र प्रयोगे किमपीवर्णान्त चेत्पुंवाचकं ने'त्यर्थः। एवं च 'अतिहर्य्ये' इत्यादौ नदीत्वाऽभावः स्पष्ट एवेति स्पष्टमस्माभिर्भाष्यप्रदीपोद्द्योते निरूपितम्। अत एव च 'कौशाम्बीमतिक्रान्ता स्त्री अतिकौशाम्बिः'। तस्मान्ङिति विकल्पो भवत्येव।

यू किम्? मात्रे। तत्र 'यू' इति यद्यपि दीर्घपरं तस्य च न ह्रस्वत्वं विशेषणं, तथाऽपि विभक्तिविपरिणामेन 'य्वोर्ह्रस्वावि'त्यन्वयः।[2] ह्रस्ववाक्ये शब्दाऽधिकारो वा। यद्यपि दीर्घांऽशे निषेधविकल्पत्वमस्य' तथाऽपि निषेधविकल्पे विधिविकल्पस्य फलितत्वेन, नञः[3] स्वरितत्वाऽकल्पनलाघवेन च ह्रस्वांऽशे विधिविकल्पस्यैव सत्त्वेन चाऽऽह—**वा नदीसंज्ञौ स्त इति।** स्पष्टं चेदं 'ह्रस्वेयुवस्थानौ, प्रवृत्तौ च स्त्रीवचनावेव नदीसंज्ञौ स्तः' इति भाष्ये। एतत्सर्वं 'वाऽऽमी'त्यत्रापि बोध्यम्

**औत्वे इति।** ङेरामपेक्षया परत्वादिति भावः।

'इदुद्भ्यामौदच्च घेरि'ति सूत्रं योगविभागेन व्याचष्टे—

---

१. 'अतिहर्य्यै' इति क. ख. ग. पाठः। 'अतिहर्य्ये' इति तु उद्योते शुद्धः पाठः।

२. 'त्यन्वयमाहुः' ख. पाठः।

३. 'नञः' इत्यारभ्य 'लाघवेन च' इत्यन्तः क. ग. पाठः।

**इदुद्भ्याम्** । तपरकरणमौदिति सूत्रस्य 'पपी'शब्दादावप्रवृत्त्यर्थम् । अनदीसंज्ञकेषु 'अच्च घेः' 'औदि'त्यनेन च बाधात् 'ङेराम्नि'तिसूत्रान्नदी-ग्रहणाऽनुवृत्तेश्चाऽऽह—**नदीति** । **मत्यामिति** । न च सन्निपातपरिभाषया यण् न स्यादिति वाच्यम् । 'आण्नद्या' इत्यादिनिर्देशैः स्थानिवद्भावेन यकारान्तेऽपि नदीत्वस्वीकारेणाऽदोषात् ।

**त्रिचतुरोः** । 'अष्टन आ' इत्यतो 'विभक्तावि'त्यनुवर्त्तते । विभक्ताविति किम्? त्रिभार्यः । तत्पुरुषः । **भार्यो**–भरणीयः । बहुव्रीहौ तु पुंवत्त्वेन[1] सिद्धम् । **'संज्ञायां कन्युपसङ्ख्यानम्'** । तिसृका नाम ग्रामः ।

**अचि र** । न च 'ऋत' इति व्यर्थम्, अलोन्त्यपरिभाषयैव सिद्धेरिति वाच्यम् । तिसृचतस्रोः षष्ठ्यन्तत्वकल्पने मानाऽभावेन, 'त्रिचतुरोरि'त्य-स्यैवाऽनुवर्त्तनाऽऽपत्तावजादौ विभक्तौ रादेशेन तिसृचतस्रोर्बाधाऽऽपत्तेः । तथा च 'ऋत' इति 'तिसृचतसृ' इत्यस्य षष्ठ्यन्तत्वकल्पनायेति बोध्यम् ।

**गुणेत्यादि** । 'तिस्रस्तिष्ठन्ती'त्यादौ[2] 'ऋतो ङी'ति गुणस्य, 'तिस्रः पश्ये'त्यत्र 'प्रथमयोरि'ति पूर्वसवर्णदीर्घस्य, 'प्रियतिस्रः आगतः' 'प्रियतिस्रः स्वमि'त्यत्र 'ऋत उदि'त्युत्वस्याऽपवाद इत्यर्थः । अत एव 'प्रियतिस्रौ' प्रिय-चतस्रावि'त्यादिभाष्यप्रयोगाः सङ्गच्छन्ते ।

'चतसर्याद्युदात्तनिपातनं करिष्यते' इति वार्त्तिके तु स्वरूपपरत्वाद्रादे-शाऽभावः । 'तृज्वत्क्रोष्टुरि'तिसूत्रे भाष्ये स्पष्टं बाध्यसामान्यचिन्ताऽऽश्र-यणमुक्तम् । बाध्यविशेषचिन्तायान्तु दीर्घोत्त्वयोरेव बाधः स्यात् । मध्ये-ऽपवादन्यायात् । 'अनन्तरस्ये'तिन्यायेनोत्त्वमात्रस्यैव वा बाधः स्यात् । एवं च प्रकृतसूत्रस्थं 'गुणात्पूर्वविप्रतिषेधेन रभाव' इत्यर्थकं वार्त्तिकं बाध्य-विशेषचिन्ताऽऽश्रयेण प्रवृत्तं प्रौढिवाद एवेति बोध्यम् ।

---

१. 'पुंवत्त्वे सिद्धम्' ख. पाठः ।

२. 'तिस्रस्तिष्ठन्तीत्यत्र' ख. पाठः ।

ननु यत्राऽनेकविधि प्रत्यपवादत्वं प्राप्तं, तत्र व्यवस्थापकौ मध्येऽपवाद-पुरस्तादपवादन्यायौ। (यथा[1] 'नासिकोदरौष्ठे'त्यत्र)। एवमनन्तरस्येति[2] न्यायोऽपि। तथा हि 'येन नाऽप्राप्ते' इतिन्याये 'येने'त्यस्य 'यद्धर्माऽवच्छिन्नेन कार्येणे'त्यर्थो 'येन लक्षणेने'त्यर्थो वा ?। आद्ये 'एत्येधे'त्यादौ पररूपत्वावच्छिन्ने कार्ये, ङीप्निषेधत्वाऽऽद्यवच्छिन्ने च कार्ये प्राप्ते आरभ्यमाणस्य वृद्धिङीबादेस्तद्बाधकत्वे निर्णीते, 'किंशास्त्रविहितस्ये'त्येवं तद्विशेषचिन्तायां, 'पुरस्तादपवादा' इत्यादिभिर्व्यवस्था। पूर्वाऽनन्तरादिबाधमात्रेणाऽपवाद-शास्त्रस्य चारितार्थ्ये, विप्रतिषेधशास्त्रबाधे मानाऽभाव इति तन्न्याय-बीजम्[3]। द्वितीये तु नैषां विषयः, सन्देहाऽभावात्। स्पष्टं चेदम् 'इको झल्' 'एत्येधत्यूठ्स्वि'त्यादौ भाष्यकैयटादौ[4]। प्रकृते तु रभावस्य न केनाऽपि येन नाऽप्राप्तिरिति, कथं मध्येऽपवादन्यायसञ्चार इति चेन्न।

किमिदं व्यक्तिपक्षे येन नाऽप्राप्तिन्यायेन 'प्रथमयोः पूर्वसवर्ण' इत्येतदपवादतया प्रथमाद्वितीयामात्रविषयम्, उत 'ऋत उदि'त्यपवादकतया पञ्चमी-षष्ठीमात्रविषयम्, उत 'ऋतो ङी'तिगुणाऽपवादकतया सर्वनामस्थान–ङिमात्रविषयं चेति सन्देहे, व्यवस्थाया अवश्याऽपेक्षितत्वेन 'मध्येऽपवाद'-न्यायप्रवृत्तेः सूपपादत्वात्। एते च सन्देहा बाध्यविशेषचिन्तायामेव। या तु 'स्वविषये स्वेतरत् यत्प्राप्नोति तद्बाध्यं, विध्यन्तराऽव्याप्तविषयाऽभावादि' त्येवं चिन्ता, सा **बाध्यसामान्यचिन्ता नाम**। अत्र पक्षे 'येने'त्यस्य स्वेतरेणेत्यर्थः। स्पष्टं चेदम् 'इको गुणवृद्धी' इतिसूत्रस्थकैयटादौ[5]। यस्योत्सर्गस्याऽवश्यं प्राप्तौ योऽपवाद आरभ्यते, तस्योत्सर्गप्राप्त्युत्तरं प्रवृत्ति-

---

१. अयं ख. पाठः।

२. 'एवम्' इत्यारभ्य 'तथा हि' इत्यन्तः क. ग. पाठः।

३. 'बीजमाहुः' ख. पाठः।

४. 'भाष्यकैयटकौस्तुभादौ' ख. पाठः।

५. 'सूत्रस्थे कैयटादौ' इति ग. पाठः। 'कैयटकौस्तुभादौ' इति ख. पाठः।

सम्भवेन चारितार्थ्येऽपि तदुत्सर्गबाधकत्वं भवत्येव, तत्कर्त्तृकाऽवश्यंप्राप्तावारम्भात्। 'सत्यपि सम्भवे बाधनं भवती'ति न्यायात्। निरवकाशत्वमप्येतदेव, यत् तत्प्राप्त्यनाक्रान्तविषयाऽभावः। ध्वनितं चेदं 'दयतेर्दिगी'ति सूत्रे भाष्ये। (तत्रा[1]'ऽनन्तरस्ये'त्यादिन्यायाऽपेक्षया 'येन नाऽप्राप्ति'न्यायः प्रबलः। तेषां लक्ष्यविशेष-पाठोभयसापेक्षत्वेन बहिरङ्गत्वादित्यलमप्रसक्तविचारेण)।

**नुमचिरेति**। न च रस्य गुणादीनामिव नुटोऽप्यपवादत्वमेव युक्तं, तत्कथं विप्रतिषेध इति वाच्यम्। 'न तिसृचतसृ' इतिज्ञापकेन तदपवादत्वाऽभावकल्पनात्। अत एव ज्ञापकाऽनुसरणस्याऽऽवश्यकत्वात्तमादाय 'अचि र'ग्रहणं वार्त्तिकस्थं प्रत्याख्यातं 'तृज्व'त्सूत्रे भाष्ये। न च स्वार्थद्रव्यबहिर्भूत-लिङ्गरूपाऽर्थ-विभक्तिसंज्ञा-निमित्ततिस्राद्यादेशाऽपेक्षयाऽन्तरङ्गत्वान्नुटि सिद्धे, पूर्वविप्रतिषेधोऽयुक्त इति वाच्य[2]म्। '[3]न तिसृचतसृ' इति सूत्रे 'तिसृ'ग्रहणेनैतत्सूत्रविषये बहिरङ्गपरिभाषाऽनाश्रयणात्। अन्यथाऽन्तरङ्गत्वात्त्रयाऽऽदेशे तदसङ्गतिः स्पष्टैव।

अत एव'त्र[4]याऽऽदेशं बाधित्वा परत्वात्तिसृभावे, सकृद्गतावि'ति न्यायेन त्रयाऽऽदेशाऽभाव' इति भाष्यकृतः।

(**तिसृ[5]णामिति**। 'त्रि आमि'ति स्थिते तिस्रादेशः। न च निर्जरशब्दोक्तरीत्या तिस्रादेशस्य विभक्तिसंज्ञासाऽपेक्षत्वेन बहिरङ्गत्वात्त्रयाऽऽदेशा-

---

१. 'अयं ख. ग. पाठः, क. नास्ति।

२. इतोऽग्रे—'कुत्सिते' इति सूत्रस्थभाष्योक्तन्यायेन सर्वबहिर्भूतसङ्ख्यानिमित्तकविभक्तिनिमित्तककार्ये ईदृशे बहिरङ्गत्वस्याऽनाश्रयणात्' इति ख ग. पाठः।

३. 'न तिसृ' इत्यारभ्य 'स्पष्टैव' इत्यन्तः क. पाठः।

४. 'त्रयादेशं, नुटं च बाधित्वा' ख. पाठः।

५. क. नास्ति। ख. ग. पाठः।

ऽऽपत्तिः नुम्नुटोः पूर्वविप्रतिषेधवार्त्तिकेन क्वचिदन्तरङ्गत्वाऽनाश्रयणपूर्वकं विप्रतिषेधसूत्रप्रवृत्तेर्ज्ञापनेनाऽदोषात्) ।

**त्रिचतुरोर्विशेषणादिति ।** स्त्रीनिष्ठसङ्ख्यायां वर्त्तमानयोरित्यर्थः । न त्वङ्गस्य । अश्रुतत्वादिति भावः । **नेहेति** । त्रिशब्दस्य पुंनपुंसकवृत्तित्वेऽपि, समुदायस्य स्त्रियां वृत्तेरङ्गविशेषणत्वे आदेशः स्यादिति भावः ।

---

१. 'पूर्वविप्रतिषेधवार्त्तिकेन' इत्येतत्स्थाने 'न तिसृचतसृ इतिनिषेधेन' इति ग. पाठः ।

२. इतोऽग्रे–'केचित्तु स्त्रियां वर्त्तमानयोस्त्रिचतुरोरि'त्येवाऽर्थः । 'प्रियत्रिरि-'त्यादौ च न दोषः । बहुव्रीहिरूपाऽङ्गस्य स्त्रियां वर्त्तमानत्वेऽपि, त्रिशब्दस्य पुंनपुंसकयोरेव वृत्तेः । न चाऽजहत्स्वार्थायामन्यपदार्थस्य त्रिशब्देनाऽप्युक्ततया स्त्रियां वृत्तिस्त्रिशब्दस्याऽस्त्येव न चेदं स्त्रीत्वं तात्पर्यग्राहकपदाऽन्तरसाऽपेक्षतया बहिरङ्गमित्यस्याऽग्रहणम् । अत एव 'पञ्चाऽजी'त्यादौ न टाप् । त्रिशब्देन सर्वत्र स्त्रीरूपार्थप्रतिपादने तात्पर्यग्राहकस्याऽपेक्षिततयाऽन्तरङ्गाऽभावादिति वाच्यम् । लक्ष्याऽनुरोधेन जहत्स्वार्थवृत्तेरेवाऽऽश्रयणात् । तेना'ऽङ्गस्य स्त्रीत्वमि'ति सम्यगेव । 'प्रियतिसा पुमानि'त्यादौ स्त्रीवृत्तिता त्रिशब्दस्य भूतपूर्वगत्या बोध्या । प्रकृते त्रिशब्दस्य प्रागुक्ता पुंनपुंसकवृत्तिताऽप्येवमेव । 'उत्तरपदाऽर्थप्रधानस्तत्पुरुष' इत्यादेरेवमेवाऽत्र पक्षे निर्वाह्यत्वात् । 'प्रत्ययोत्तरपदयोश्चे'-त्येतत्सूत्रगतभाष्यसन्दर्भश्चेह प्रमाणमित्याहुः ।

तत्तूक्तरीत्या पक्षद्वयेऽपि सूत्रसामञ्जस्यात्, रूढेरविरोधित्वे जहत्स्वार्थवृत्तेरभावाच्चाऽयुक्तम् । [1]किञ्च जहत्स्वार्थाऽजहत्स्वार्थाशब्दयोरवयवानां स्वार्थत्याग-तदत्यागमात्रमर्थः । तत्राऽन्त्ये 'स्वार्थपुमादिवृत्तेः कथमन्यपदार्थे स्त्रियां वृत्ति'रिति पूर्वपक्षोऽयुक्तः । न चाऽन्यपदार्थस्य समुदायशक्यत्वेऽपि समुदायघटकतयाऽवयवस्याऽपि स शक्य इत्याशयः,

---

1. 'किञ्च' इत्यारभ्य 'अयुक्ततरमेतत्' इत्यन्तः क. कुण्डलितो ग. पाठः । ख. नास्ति ।

**आमि त्विति ।** न च सप्तम्येकवचनस्याऽऽम्यपि त्रयादेशाऽऽपत्तिरिति वाच्यम्[1] । अर्थाऽधिकारेण[2] षष्ठीबहुवचनस्यैव तत्र ग्रहणात् । त्रिशब्दस्य स्त्रीनिष्ठसङ्ख्यावृत्तित्वेऽप्यङ्गस्य स्त्रियां वर्त्तमानत्वाऽभावादङ्गविशेषणत्वेऽव्याप्तिः स्यात्प्रियतिसेत्यत्रेत्याह—**इति विग्रहे** त्विति ।

**प्रियतिसेति** । 'प्रिया जस् त्रि जसि'तिस्थिते 'ऽन्तरङ्गानपी'ति **न्यायेन** तिस्रादेशात्पूर्वं विभक्ति लुकि, समासाद्विभक्तौ, पदाऽङ्गाधिकारे तदन्तविधेः सत्त्वेन त्रिशब्दाऽन्तत्वात् 'निर्दिश्यमानस्ये'ति परिभाषया त्रिशब्दस्याऽऽदेशः । 'प्रिया'शब्दे 'स्त्रियाः पुंवदि'ति पुंवद्भावः । न च तिस्रादेशे 'नद्यृतश्चे'ति कप् । समासार्थाऽलौकिकवाक्ये ऋकारान्तोत्तरपदत्वाऽभावात् । (विभ[3]क्तिनिमित्तत्वेनाऽऽदेशस्य बहिरङ्गत्वाच्च) । 'ऋदुशने'त्यनङ् ।

**अनित्यत्वादिति** । अत्र च ज्ञापकम् 'इकोऽची'त्यज्ग्रहणम् । तद्धि न हलादिव्यावृत्त्यर्थम् । नलोपेन सिद्धेः । न च 'पञ्चत्रपुभ्यामि'त्यादौ नुमि सति, तल्लोपस्य 'नलोपः सुप्स्वरे'त्यसिद्धत्वात् 'इगन्ते द्विगावि'ति पूर्वपदप्रकृतिस्वरो न स्यादिति वाच्यम् । नुमः सङ्घातभक्तत्वेनोत्तरपदस्येगन्तत्वाऽनपायात् । अत एव 'पञ्चत्रपुणे'त्यादौ स्वरसिद्धिः । स्वरस्याऽन्तरङ्गत्वाच्च ।

---

तर्हि जहत्स्वार्थत्वेऽप्युक्तरीत्या शङ्का दुरुद्धरैव । तत्रापि पक्षेऽन्यपदार्थे समुदायशक्यत्वस्यैव सत्त्वात् । यदि स्त्रीवाचकतापर्याप्त्यधिकरणत्वविवक्षया दोषपरिहारस्तदाऽजहत्स्वार्थत्वेऽपि तुल्य इत्ययुक्ततरमेतत् ।' इति क. कुण्डलितः ख. पाठः ।

१. इतोऽग्रे—'सन्निपातपरिभाषया वारणात् । नदीसंज्ञकसन्निपातनिमित्तो हि आमिति बोध्यम्'—इति ख. ग. पाठः ।

२. 'अर्थाधिकारेण, पूर्वोत्तरसाहचर्येण च षष्ठीबहुवचनस्यैव तत्र ग्रहणाच्च' इति ख. ग. पाठः ।

३. क. नास्ति । ख. ग. पाठः ।

न चैवम् 'अतिराभ्यामि'त्यत्र नुमा व्यवहितत्वाद्राय आत्वं न स्यादिति वाच्यम्। नुमं बाधित्वा परत्वादात्वप्रवृत्तेः। न चाऽऽकारस्य वृद्धितया 'वृद्ध्यौत्त्वे'ति पूर्वविप्रतिषेधान्नुमेव स्यादिति वाच्यम्। तत्र वृद्धिशब्दविहित-वृद्धिग्रहणस्यैव वक्ष्यमाणत्वात्। एतेन 'प्रियतिसृभ्यामि'ति व्याख्यातम्। नुमः परत्वात्तिस्रादेशप्रवृत्तेः। न चोत्तरार्थम्। तत्रैव कर्त्तुं युक्तत्वात्। न च 'शुचीनामि'त्यादौ नुटि, पश्चान्नुमि, 'इन्हन्पूषार्यम्णामि'ति नियमाद्दीर्घो न स्यादिति वाच्यम्। 'नुमचिरे'ति पूर्वविप्रतिषेधेन नुटि, सकृद्गताविति न्यायान्नुम एवाऽप्राप्तेः। (लाक्षणिकत्वेनेदृशेन्विषये नियमाऽप्राप्तेश्च)[1]। न च 'बहुभिः कुलैरि'त्यत्र नुमि, नलोपेऽपि तस्याऽसिद्धत्वान्नान्तसङ्ख्यावाच-कत्वेन[2] षट्त्वात् 'षट्त्रिचतुर्भ्यो हलादिरि'ति विभक्तिस्वरः स्यादिति वाच्यम्। षट्[3]त्वेऽपि 'झल्युपोत्तममि'त्यस्य प्राप्त्या, तदभावेऽपि बहुशब्दस्या-न्तोदात्ततया, स्वरे विशेषाऽभावात्। तस्मात्सम्बुद्धिवारणार्थं तत्। सम्बुद्धेस्तु लुका लुप्तत्वात्प्रत्ययलक्षणप्रवृत्तिं विना न नुमः प्राप्तिः। सा च न 'न लुमते'त्यस्याऽनित्यतां विनेति।

न चैवमनङपि स्यात्। 'प्रियतिसृ' इति भाष्योदाहरणप्रामाण्येनाऽनङि 'न लुमते'ति निषेधप्रवृत्तिस्वीकारात्। तिस्रादेशस्तु भवत्येव। एतेन 'सम्बुद्धिगुणमात्रविषयमेतदनित्यत्वमि'त्यपास्तम्।

**प्रियतिसृणी** इति। न च 'प्रियत्रिशब्दे नुमः परत्वात्तिस्रादेशे, 'सकृ-द्गतावि'ति न्यायेन नुम्न स्यादिति वाच्यम्। 'प्रियतिसृणी' 'प्रियतिसृणि'इति 'प्रत्ययोत्तरे'ति सूत्रस्थभाष्योदाहरणात्पुनः प्रसङ्गविज्ञानस्यैवात्रेष्टत्वाऽनुमा-नात्। एतेन 'राऽऽदेशात्पूर्वविप्रतिषेधेन नुमि'ति निर्मूलमि'त्यपास्तम्।

---

१. ख. पाठोऽयं क. ग. नास्ति।

२. इतोऽग्रे—'स्वरविधायके विहितविशेषणाऽऽश्रयणात्। न हीयं विभक्ति-र्नान्ताद्विहिता, किन्तु बहुशब्दात्' इति ख. ग. पाठः।

३. 'षट्त्वेऽपि' इत्यारभ्य 'विशेषाऽभावात्' इत्यन्तः क. पाठः।

आमि त्रितोऽपि पूर्वविप्रतिषेधेन नुट् बोध्यः। **द्वेरत्वे सत्याविति।** न चाऽऽपि बहिरङ्गत्वादत्वमसिद्धम्। तस्या अनित्यत्वात्। अत एव 'न यासयोरि'ति चरितार्थम्। एतेन 'सन्निपातपरिभाषया टाप् न स्यादि'त्यपास्तम्। **विभक्ताविति**। वाचनिकमेवेदम्। 'युवोरनाकावि'त्यत्र भाष्ये स्पष्टम्। लिङ्गविशिष्टपरिभाषाऽनित्यत्वमूलकं वा बोध्यम्।

**सखीति**। 'सख्यशिश्वी'ति ङीष्[1]। 'यस्येति चे'ति लोपेनैकादेशस्य पूर्वाऽन्तवत्त्वेन सखिशब्दत्वमपि नाऽऽशङ्क्यम्। **लक्ष्मीरिति**। 'कृदिकारादि'ति ङीषि 'लक्ष्मी'त्यपि बोध्यम्। तथा च कोशः—'**लक्ष्मीर्लक्ष्मी** हरिप्रिये'ति।

स्त्यायतोऽस्यां शुक्रशोणिते इति 'स्त्री'। स्त्यायतेड्ट्। टिलोपयलोपौ। टित्त्वान्ङीप्। **इयङिति।** स्त्रीशब्दस्येकारान्तत्वादियङेवाऽनुवर्त्तते इति भावः। **गुणेति**। 'जसि चे'ति **गुणः**, 'आङो नाऽस्त्रियामि'ति '**ना**', 'अच्चघेरि'त्यौत्वम्[2], 'ह्रस्वनद्याप' इति नुडित्यर्थः। **बाध्यते** इति। 'स्त्रीशब्दस्येयङि'त्यनेनाऽन्वयः। **नुमेति**। 'इकोऽचि विभक्तावि'ति नुमेत्यर्थः।

पूर्वकारिकोक्तैः परत्वाद्बाधे सति यत्फलितं, तदाह—**औस्याविति**[3]। **इयादेशोऽचीति**। 'अजादौ य इयादेशो विहितः स उपसर्जने पुंसि विद्यमानस्य, **स्त्रियाः**=स्त्रीशब्दस्य, औसादिषु चतुर्ष्वेव, न त्वन्यत्र, गुणनाभावादिभिः पूर्वोक्तैर्बाधादिति भावः। **वक्ष्यमाणेति**। 'तृतीयादिषु भाषितपुंस्कमि'त्यनेनेति भावः।

ननु ह्रस्ववाक्येऽप्यस्त्रीत्यस्य सम्बन्धः स्यात्, तत्र 'स्त्रीशब्दभिन्नह्रस्वेवर्णान्तादि'त्यर्थे फलाऽभावेन, सामर्थ्यात् 'स्त्रीशब्दाऽवयवभिन्नह्रस्वे-

---

**१. 'ङीप्' इति क. ग. लघुशेखरे च पाठः।**

**२. 'इत्यत्त्वम्' इत्येव क ख. ग. पाठः। एतन्मते च. 'गुणनाभावाऽत्त्वनुड्भिरि'ति मूले कारिकापाठो बोध्यः।**

**३. 'ओस्येति' इति ख. ग. पाठः।**

वर्णान्तादि'त्यर्थो भविष्यतीति, कथम् 'अतिस्त्रि'शब्दे प्राप्तिरत आह—अस्त्रोति। तत्रैव युक्तिमाह—**तत्सम्बद्धस्यैवेति**। प्रसज्यप्रतिषेधस्तु न, वाक्यभेदाऽसमर्थसमासाऽऽपत्तेः।

**श्रीरिति**। श्रयन्त्येनामिति[1] श्रीः। 'क्विब्वची'त्यादिना क्विप्, दीर्घश्च। अङ्यन्तत्वान्न सुलोपः।

**नेयङुव**। 'ङ'द्वयोच्चारणं स्पष्टार्थम्। स्थानशब्दो भावल्युडन्तः। 'इयङुवङोः स्थानं=स्थि[2]तिर्ययोरि'ति बहुव्रीहिः। तच्च बाधकाऽविषये एव। अन्यथा 'नेयङुवङोरस्त्री'त्येव वदेत्। सम्बन्धश्च योग्यतारूपोऽपीति, फलोपधानलाभाय 'स्थान'ग्रहणं कृतम्[3]। तदाह—**इयङुवङोः स्थितिरिति**। तेन 'प्रकृष्टा धीः प्रधीरि'त्यादौ नदीसंज्ञाया निषेधो न। सा चोपलक्षणम्, न तु विशेषणम्, व्याख्यानात्। तेन 'हे श्रीः' 'हे भ्रूरि'त्यादौ निषेधसिद्धिः। 'श्रियौ' 'भ्रुवावि'त्यादौ बाधकाऽबाधितेयङुवङ्स्थितिसत्त्वात्। अत्रेयुवङ्भ्यामङ्गमाक्षिप्यते। तेन 'यत्र नदीकार्याऽऽश्रयेऽङ्गे बाधकाऽबाधितेयुवङोः स्थितिः क्वचित्प्रयोगे दृष्टा, तस्य, तदवयवस्य च निषेध' इति फलितम्। अत एव 'प्रकृष्टा धीर्यस्या, यस्य वा प्रधीरि'त्यत्राऽवयवधीशब्दस्य नदीत्वं भवत्येव।

**श्रियै इति**। 'ङिति ह्रस्वश्चे'ति विकल्पः।

**वाऽऽमि**। 'आमी'तिच्छेदो न त्वमीति, द्वितीयैकवचने नदीकार्याऽभावात्। (ङेरामि[4] त्विदं न प्रवर्त्तते। तस्य नदीसंज्ञोत्तरभावित्वेनोप-

१. 'श्रयत्येनाम्' ग. पाठः।

२. 'स्थितिः' इति ख. ग. नास्ति।

३. इतोऽग्रे—'अधिकरणल्युडन्तेन षष्ठीतत्पुरुषस्तु न युक्तः। अविद्यमानस्याऽधिकरणत्वाऽदर्शनात्। सम्बन्धस्त्वविद्यमानेनाऽप्यभावस्य प्रतियोगिना दृष्टः। अत्र च स्वप्रसङ्गोच्चारितत्वं सम्बन्धः। तदाह'—इति ख. पाठः।

४. अयं ख. ग. पाठः क. नास्ति।

जीव्यविरोधात्) । **प्रधीशब्दस्येति** । 'प्रकृष्टं ध्यायती'ति विग्रहः ।

**वृत्तिकारादीनामिति** । तेषामयं भावः–भाष्ये 'इयुव्स्थानप्रतिषेधे यण्स्थानयोरपि प्रतिषेधः । आध्यै, प्रध्यै ब्राह्मण्यै । किं कारणम् ? । अवयवोऽत्रेयङुवङ्स्थान' इत्याशङ्क्योक्तरीत्या समाहितम् । अत्र हि प्रकृष्टं ध्यायतीत्यर्थः । बहुव्रीहौ तु प्रतिपदोक्तगतिसमासाऽभावात् **श्रीपतिदत्ता-**ऽऽदिरीत्या यण् दुर्लभः, कबापत्तिश्च । इदं च **कैयटमते**ऽसङ्गतम् । समुदायस्य, अवयवस्य च **कैयटोक्त**नित्यस्त्रीत्वाऽभावेन नदीत्वाऽप्राप्तेः । तस्मात् 'स्त्रीविषयावेव यौ यू नित्यमि'त्यत्रैवकारो भिन्नक्रमः । 'नित्यमेव यौ स्त्रीविषयावि'त्यन्वयः । 'नित्यमेवे'त्यस्य पदान्तरं विनाऽपीत्यर्थः । खलपू-कटप्रू-ग्रामणीनां क्रियाशब्दतया पुंसि मुख्या वृत्तिः, पुंस एव खल्वयमुचितो धर्मः, शक्तत्वाद्भयरहितत्वाच्च । आध्यान-प्रध्यानाऽऽदि तु स्त्रीपुंससाधारणमिति । अत्राऽरुचिबीजन्तु सूत्रभाष्याद्यक्षरैरीदृशनित्यस्त्रीत्वाऽलाभः । 'आध्यै प्रध्यै इति । चिन्त्यमेतत्, क्रियाशब्दत्वेन नित्यस्त्रीत्वाऽभावादि'ति **कैयटस्तु** चिन्त्य एव । 'आध्यै प्रध्यै' इति भाष्योदाहरणे बहुव्रीहिसत्त्वात् । यथा च न कप्, तथा 'यू स्त्र्याख्यावि'-त्यत्र निरूपितम् । यणपि गतिपूर्वकत्वात्सुलभ एवेति यण्विधायके निरूपितम्[1] ।

**पुंवद्रूपमिति** । 'प्रकृष्टं ध्यायती'ति विग्रहे नित्यस्त्रीत्वाऽभावात्पुंसीव, स्त्रियामप्यनदीत्वात्पुंवदित्यर्थः । एवं च स्त्रीपुंसोस्तुल्यं रूपमिति फलितम् । **वृत्तिमते** स्त्रियां लक्ष्मीवत्, पुंसि तु नदीत्वाऽभाव एवेति विशेषः । 'प्रकृष्टा धीर्यस्या' इति विग्रहे तु मतद्वयेऽपि, लिङ्गद्वयेऽपि लक्ष्मीवत्, 'प्रथमलिङ्गग्रहणं चे'त्यवयवधीशब्दस्य नदीत्वात् । 'नेयङि'ति निषेधस्तूक्त-

---

१. इतोऽग्रे–'गमित्यादिना नेयङिति सूत्रे निरूपितः' इति आदौ खण्डितः, कुण्डलितश्च क. पाठः ।

२. 'प्रकृष्टा धीर्यस्या, यस्य वे'ति विग्रहे तु पुंस्त्रियोरपीत्यर्थः ।

रीत्या न। ('अकृतव्यूहपरिभाषया ने'त्यन्ये। भाष्यरीत्याऽङ्गस्येयुङ्स्थानित्वाऽभावाच्च)। तदेवाह—**प्रकृष्टा धीरिति विग्रहे** त्विति। ईदृशपदघटितविग्रहे इत्यर्थः। तेन कर्मधारये, तद्घटितबहुव्रीहौ चेत्यर्थः। **प्रागुक्त**रीत्या धीशब्दनिमित्तकनिषेधाऽप्राप्तेर्विकल्पाऽप्रवृत्तेश्चेति भावः।

**विशेष इति**। लक्ष्मीशब्दाऽपेक्षयेत्यर्थः। **श्रीवदिति**। विशिष्टस्याऽप्येयङ्स्थानत्वेन ङिदामोर्विकल्पस्य, अन्यत्र निषेधस्य च प्राप्तेरिति भावः। पुंसि त्वीदृशबहुव्रीहावपि नदीत्वाऽभाव एव, 'नेयङि'त्यवयवस्य निषेधात्, समुदायस्याऽप्राप्तेश्च। **पुंवदिति**। 'सष्ठु ध्यायतीति विग्रहे' इति शेषः। तत्र हि नित्यस्त्रीत्वाऽभावात्पुंसीव स्त्रियामप्यनदीत्वादिति भावः।

**सुष्ठु धीरिति विग्रहे** त्विति। ईदृशपदघटितविग्रहके स्त्रीलिङ्गबहुव्रीहौ, कर्मधारये चेत्यर्थः।

**स्त्रियां च**। अत्र 'असम्बुद्धौ सर्वनामस्थाने' इति न सम्बध्यते, आरम्भसामर्थ्यात्। **केचित्तु** 'स्त्रियामि'त्यस्य स्त्रीप्रत्यये इत्यर्थः। ङीषर्थं च गौरादिषु क्रोष्टुशब्दः पाठ्य' इत्याहुः। तन्न। पञ्चभिः क्रोष्ट्रीभिः[2] क्रीतैः रथैः 'पञ्चक्रोष्टृभी रथैरि'त्यादौ सुब्लुकि, क्रीताऽर्थठकोऽध्यर्धे'ति लुकि, 'लुक्तद्धितलुकी'ति ङीषो लुकि च, ऋकारश्रवणाऽनापत्तेः। एतदर्थं चाऽत्र रूपाऽतिदेश एवेति बोध्यम्। एतेन 'अङ्गसंज्ञाऽऽक्षिप्ते प्रत्यये तृज्वद्भाव' इत्यपास्तम्। [3]उक्तेऽर्थे 'पञ्चक्रोष्टृ वास' इत्याद्यसिद्धापत्तेश्च। तदेतद्ध्वनयन्नाह—**स्त्रीवाचीति**।

**ऋन्नेभ्यः**। प्रयोगाऽपेक्षया बहुवचनम्। 'प्रातिपादिकादि'त्यस्य विशेष्यत्वात्तदन्तविधिः। 'स्त्रियामि'ति चाऽधिक्रियते। तदाह—**ऋद-**

---

१. क. कुण्डलितः पाठः।

२. 'क्रोष्टृभि' ख. ग पाठः।

३. 'उक्तेऽर्थे' इत्यारभ्य 'असिद्धद्यापत्तेश्च' इत्यन्तः क. ग. पाठः, ख. नास्ति।

**न्तेभ्य** इत्यादि। ([1]क्रोष्ट्रीति। तृतीयादिष्वपि विकल्पं बाधित्वाऽन्तरङ्गत्वादयमेव नित्यो विधिर्भवति)। **कथं तर्हीति**। 'नेयङि'त्यनेनाऽवयवस्य, समुदायस्य च नदीत्वनिषेधादिति भावः। **बह्व इति**। अत्राऽरुचिबीजन्तु सामान्ये नपुंसकत्वमादाय प्रयोगाणां सूपपादत्वम्। यद्वा विनाऽर्थनञा समासेन 'अनुदात्तं पदमनेकमि'तिवक्तव्ये, 'वर्ज' ग्रहणेन ज्ञापितया 'नञ्घटितमनित्यमि'ति परिभाषया 'नेयङुवङि'त्यस्याऽनित्यत्वान्न दोष इति [2]केचित्। तन्न। अन्त्यस्य भाष्याऽनुक्तत्वेन लक्ष्यसंस्काराऽनुप[3]योगित्वात्। 'सु[4]भ्रु' इत्यस्य[5]'सीते' इत्यर्थे एव तात्पर्येण निषेधस्याऽप्यनुचितत्वाच्च।

**एकाजुत्तरेति**। 'एकोऽच् यस्मिन्, तादृशमुत्तरपदं यस्ये'ति सूत्रे बहुव्रीहिगर्भो बहुव्रीहिः। उत्तरपदाऽऽक्षिप्तसमासश्च विशेष्य इत्याह— **तस्मिन्समासे** इति। ननु 'ण'ग्रहणं व्यर्थम्, अनुवृत्त्यैव सिद्धेः। न च 'ण एवे'त्यर्थबोधनद्वारा नित्यत्वप्रतिपत्तिः फलम्। 'प्रातिपदिकाऽन्तनुम्विभक्तिषु चे'त्यनेनैव विकल्पसिद्धावारम्भसामर्थ्यात्तत्सिद्धेरत आह—**स्पष्टार्थमिति**। **यणमिति**। 'दृन्करे'ति यणमित्यर्थः। **वर्षाभूः**। **भेकजाता**विति। 'शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डु[6]लिरि'त्यमरादस्य वाह्वादित्वेन वा ङीपित्याहुः। 'परन्त्वत्र मानं चिन्त्यम्। 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमा'निति यादवस्य 'सुतः पुत्रः स्त्रियां त्वमी'। आहुर्दुहितरमि'तिकोशवन्नित्यङ्य-

---

१. क. कुण्डलितः पाठः।

२. 'केचित्' इत्यारभ्य 'अनुचितत्वाच्च' इत्यन्तः क. ग. पाठः।

३. 'अनुपयुक्तत्वात्' ग. पाठः।

४. 'पितरित्येतत्साहचर्येण सुभ्रु इत्यस्य' इति क. कुण्डलितो ग. पाठ।

५. 'सुभ्रु' इत्यस्य मातरित्यर्थे एव कवितात्पर्यान्नयनेनाद्यस्याप्यनुचितत्वान्न दोषः' इति ग. पाठः।

६. 'दुलिः' इति क. पाठः।

न्तत्वेऽप्युपपत्तेः। कोशयोरेकवाक्यता च। 'नित्यो ङीष् च गौरादिपाठादि'-त्यन्ये। '[1]**अमरे** 'वर्षाभूः कमठी डुलिरि'ति पाठो युक्त इति **सुबोधिनीकार**' इति **माधवः।** टाप्ङीपौ न स्त इति। 'स्त्रियां यत्प्राप्नोति तन्ने'ति व्याख्यानादिति भावः।

**स्वसा तिस्रश्चतस्रश्चेति**। अत एव 'न तिसृचतसृ' इति निषेधसूत्रं चरितार्थमित्याहुः। यत्तु 'ङीपि सत्यपि लिङ्गविशिष्टपरिभाषया 'प्रिय-[2]तिसृणां कुलानामि'त्यादौ दीर्घव्यावृत्तये निषेधस्य चारितार्थ्यादि'ति। तन्न। विभक्तौ लिङ्गविशिष्टाऽग्रहणात्। सन्निपातपरिभाषयैव तिसृचतस्रोर्ङी-बभावे सिद्धे, तदनित्यत्वज्ञापनाऽर्थं ग्रहणम्। अयं च निषेधः परिच्छेत्तृ-वाचकमातृशब्दे स्त्रियां न प्रवर्त्तते। नना[3]न्द्रादिसाहचर्येण ससम्बन्धिक-जननीवाचकस्यैव तत्र ग्रहादित्याहुः। **राः पुंवदिति**। रैशब्दस्य 'रात्येनं राः। स्त्रीत्येके' इति **क्षीरस्वामिना** स्त्रीत्वस्योक्तत्वादिति भावः। 'स्त्रियां नौस्तरणिस्तरिरि'त्यमरः।

॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥



१. 'अमरे' इत्यारभ्य 'इति माधवः' इत्यन्तः क. पाठः। ख. ग. नास्ति।
२. 'प्रियतिस्रिणाम्' इति ख. ग. पाठः।
३. 'ननन्द्रादि' इति सर्वत्र पाठः।

## अथाऽजन्तनपुंसकलिङ्गप्रकरणम् ।

**अतोऽम्** । 'अत्' इत्येतत् अधिकृतस्याऽङ्गस्य विशेषणम् । 'स्वमोर्नपुंसकादि'ति चाऽनुवर्त्तते । तदाह—**अतोऽङ्गादिति** । अमोऽम्विधानं लुग्बाधनाऽर्थम् । **अम् स्यादिति** । (अत एव द्वितीयैकवचने 'ज्ञानमि'ति सिद्धम्) । 'म्' इतिच्छेदे तु 'ज्ञानमि'त्यादावमि, 'आदेः परस्ये'त्यकारस्य मकारे कृतेऽपि मद्वयश्रवणाऽऽपत्तिः । संयोगाऽन्तलोपस्तु झल्ग्रहणाऽपकर्षान्न प्राप्नोति । अत एव 'मत'इति नाऽसूत्रि । न च 'बहिरङ्गलक्षणत्वाद्वे-'ति तृतीयपक्षे दुर्वार इति वाच्यम् । पक्षभेदेन लक्ष्यभेदाऽङ्गीकारे, तत्पक्षवादिन इतरपक्षाऽज्ञानवत्फलाऽज्ञानकल्पनाऽऽपत्तेः । अविरोधे संभवति विरोधस्याऽन्याय्यत्वाच्च । एकस्यैव शब्दस्य साधुत्वाऽसाधुत्वाभ्यां पुण्यपापजनकताऽऽपत्तौ, 'नवे'तिसूत्रस्थभाष्यविरोधाऽऽपत्तेश्च । अत एवाऽङ्गस्येत्यादावेकफलाऽर्थं क्लेश आदृतो **भाष्यकारैः** । तस्मात् 'बहिरङ्गे'तिसमाधानं 'स्कोरि'ति सूत्रविषयकमेव, 'दध्यत्रे'त्याद्युदाहरणविशेषविषयं चेति प्राक् प्रपञ्चितम् ।

एतेन 'काव्यकलत्रशाल्वेभ्य आत्रक्षाणणिजन्तेभ्यः क्विपि, संयोगान्तलोपे, 'काव्' 'कलत्' 'शाल्' इत्येव रूपमि'ति परास्तम् । किञ्च काव्यशाल्वाभ्यां णिजन्ताभ्यां क्विपि, संयोगान्तलोपस्याऽसिद्धत्वात्क्वौ स्थानिवत्त्वनिषेधाच्चाऽऽद्ये'लोपो व्योरि'ति कृते, अन्त्ये च तद्बाधित्वा, ऊठ् दुर्वारः । विचि त्वाद्ये 'लोपो व्योरि'त्यस्याऽऽपत्तिः । न च 'पूर्वं पूर्वमन्तरङ्गमि'त्या-

---

१. क. कुण्डलितः पाठः । ख. ग. नास्ति ।

२. 'दध्यत्र' इत्यारभ्य 'विषयं च' इत्यन्तः क. ग. पाठः ।

३. 'एतेन' इत्यारभ्य 'अपास्तम्' इत्यन्तः क. कुण्डलितः ख. ग. पाठः ।

श्रित्याऽल्लोपणिलोपयोरसिद्धत्वान्न तदापत्तिः। एवं तर्हि तृतीयपक्षे तेनैव संयोगान्तलोपस्याऽप्यनापत्तिः। यदि तु[1] प्रातिपदिकादेव णिजुत्पत्तेः पूर्वं सिद्धान्तित्वेन, बहिर्भूतसुप्निमित्तकतया बह्वपेक्षत्वात्संयोगान्तलोपस्याऽपि बहिरङ्गत्वम्, 'पूर्वस्थानिकमन्तरङ्गमि'त्यर्थस्य तु न[2] भाष्याऽऽदिसंमतत्वमित्युच्यते, तदा ऊठादि दुर्वारम्। एतेन 'वभ्रादिभ्यो यङ्लुकि तिप्सिपोर्हल्ङ्यादिलोपे, संयोगाऽन्तलोपे च 'अवावप्' इत्यादिकमेवे'ति **माधवोक्त**मपास्तम्। स[3]त्यप्यभिधाने 'बहिरङ्गे'ति समाधानस्य 'स्कोरि'ति सूत्रमात्रविषयत्वेन, 'दध्यत्रे'त्याद्युदाहरणविशेषमात्रपरत्वेन च, तेषु संयोगान्तलोपाऽभाव एवोचित इति दिक्।

**अपरे** तु झल्ग्रहणाऽपकर्षेऽत्रैव झल्ग्रहणे कर्त्तव्ये, उत्तरत्र तत्करणसामर्थ्यात्पूर्वत्र 'झल' इत्यस्य वाक्यभेदेन सम्बन्धः। अनेन च संयोगान्तलोपसूत्रस्य क्वाऽचित्कत्वमात्रम्। तेनाऽझलोऽपि लोपः। स च यण्व्यतिरिक्तस्यैव। 'यणः प्रतिषेध'इति वचनेन फलभेदाऽऽपत्तेः। (ए[4]वं च गिरिं वेश्मयते गिरिवेडि'त्येव)। एवं च 'मत' इत्यपि सूत्रं कर्त्तुं शक्यम्। न चैवं 'सुपि चे'ति दीर्घाऽऽपत्तिः। सन्निपातपरिभाषाविरोधात्। (ध्व[5]नितं चेदमत्रैव **मनोरमायाम्**)। 'दानीं चे'ति सूत्रे 'दानीमो यकारो लुप्तनिर्दिष्ट' इति भाष्यन्तु यस्य 'लोपो व्योरि'तिलोप इत्यभिप्रायकतया व्याख्येयम्।

---

१. 'यदि तु' इत्यस्य स्थाने 'न च' इति ख. पाठः।

२. 'न भाष्यादिसंमतत्वमिति, न तत्र तयोरसिद्धत्वमिति वाच्यम्। एवं तर्हि पक्षाणां फलैक्यायेदृशे विषयेऽनभिधानस्यैव स्वीकर्त्तव्यत्वेनैषां प्रयोगाणामेवाऽभावात्'—इति ख. ग. पाठः।

३. 'सत्यभिधाने' इत्यारभ्य 'दिक्' इत्यन्तः ख. पाठः. क. ग. नास्ति।

४. क कुण्डलितः ख. ग. पाठः।

५. क. कुण्डलितः ख. ग. पाठः।

संयोगाऽन्तलोपपरतया **कैयट**कृतव्याख्या[1]यान्तु चिन्त्यमेवेत्याहुः । वस्तु[2]तो मस्य स्वसंनिपातविघाताऽनिमित्तत्वे 'ज्ञाने'त्यादौ सम्बुद्धिलोपो न स्यात् । तस्मादत्र तदप्रवृत्तौ दीर्घो दुर्वार इति एवं कर्त्तुमशक्यम् । ध्वनितं चैतदेङ्ह्रस्वादिति सूत्रे भाष्ये । ('अ[3]त' इति तकार उच्चारणार्थः । नपुंसके ह्रस्वाऽवश्यम्भावात्) । 'जसः शी' 'औङ आप' इत्याभ्यां 'शी' 'औङ' इति चाऽनुवर्त्तते । तदाह—**क्लीबा**दित्यादि । **भसंज्ञाया**मिति । 'अनुपुंसकस्ये'ति पर्युदासेनाऽसर्वनामस्थानत्वादिति भावः ।

**यस्ये** । इश्च अश्च यम् । 'य' शब्दस्य तु न ग्रहणम् । 'सूर्यतिष्ये'तिसूत्रे पुनर्यग्रहणात् । 'भस्ये'त्यधिकारः । चेन 'नस्तद्धिते' इत्यतस्तद्धितोऽनुकृष्यते । तदाह—**भस्येवर्ण**त्यादि । भस्येति किम् ? गर्गरूप्यः[4] ।

यत्तु 'सर्वे' इति प्रत्युदाहरन्ति, तत्तु 'श्यां ने'ति निषेधेनाऽपि सिद्धम् । ईकार[5]स्येति लोपे प्रयोजनन्तु—सखीमतिक्रान्तोऽतिसखिरि'त्यादावेकादेशस्य पूर्वाऽन्तत्वेन ग्रहणात्प्राप्तसमासान्तटजभावः, 'सखो'त्यादावनङाद्यभावश्च । लिङ्गविशिष्टपरिभाषा तु समासाऽन्तविधौ, विभक्तौ च न प्रवर्त्तते इति भाष्ये स्पष्टम् ।

**औङः श्यामिति** । विभक्त्यपेक्षया 'श्यामि'ति स्त्रीलिङ्गनिर्देशः । इत एव निर्देशाद्गौरादिपाठाद्वा शीशब्दा[6]न्ङी बोध्यः । 'विभाषा ङिश्योरि'-त्यतः 'शी'त्यनुवर्त्त्य, 'न संयोगादि'त्यतो 'ने'ति चाऽनुवर्त्त्य 'श्यां ने'ति

---

१. 'व्याख्यानन्तु चिन्त्यमेव' ख. ग. पाठः ।

२. 'वस्तुतः' इत्यारभ्य 'सूत्रे भाष्ये' इत्यन्तः क. पाठः ।

३. अयं ख. ग. पाठः ।

४. 'गर्गरूप्यम्' इति लघुशब्देन्दुशेखरे पाठः ।

५. अत्र 'इकारस्य ईति लोपे' इति पाठः स्यात् ।

६. 'ङी' इत्येव ख. पाठः । 'ङीप्' इति तु. क. शोधितः पाठः ।

व्याख्येयमित्यर्थः। (वार्त्तिके–)[1] 'औङ' इति स्वरूपकथनम्। 'सर्वे' इत्यस्य भाऽधिकारेण सिद्धेः।

**जश्शसोः**। जसा साहचर्याच्छस्सुबेव गृह्यते। तेन 'कुण्डशो ददाती'-त्यादौ नाऽतिप्रसङ्गः। न च निरनुबन्धकपरिभाषया तद्धितस्य शसोऽपि ग्रहणं स्यादिति वाच्यम्। धर्मिग्राहकमानेन येनाऽनुबन्धेन सानुबन्धकत्वं, तदनुच्चारण एव तत्प्रवृत्तेः।[2] 'तस्माच्छस' इत्यादौ सुप्शसोऽतिप्रसिद्ध-त्वाच्च। अत एव 'तान्येके'ति सूत्रे 'एकश' इति प्रयोगः सङ्गच्छते। तत्र हि नपुंसकैकशब्दाच्छस्। 'तानी'त्युपक्रमे नपुंसकनिर्देशात्।

**शि स**। 'शी'त्यविभक्तिको निर्देशः। महासंज्ञाकरणं पूर्वाऽऽचार्याऽनु-रोधात्। तेन च स्वशास्त्रस्य प्रामाण्यज्ञापनम्।

**नपुंसकस्य**। 'इदितो नुमि'त्यतो 'नुमि'ति, 'उगिदचामि'त्यतः 'सर्व-नामस्थाने' इति च वर्त्तते। 'अङ्गस्ये'ति च प्रकृतम्। तच्च झलज्भ्यां विशेष्यते। 'नपुंसकस्ये'ति च गृह्यमाणस्याऽन्यस्याऽभावादङ्गस्यैव विशेष-णम्। (अत[3] एव 'बहुत्रपवे' त्यादौ श्यादिकं न)। 'अस्थिदधो'त्यादौ तु गृह्यमाणस्यैव[4], प्रकरणाऽपेक्षया श्रुतेर्बलवत्त्वात्। 'वा शावि'ति वक्तव्ये 'वा नपुंसकस्ये'ति सूत्रकरणेन लिङ्गबोधकपदस्य सति सम्भवे गृह्यमाणे

---

१. 'वार्त्तिके' इति क. नास्ति।

२. इतोऽग्रे–' न चैवमप्यनुबन्धस्मरणसापेक्षज्ञानक-सुप्शसपेक्षया श्रूयमाणवर्णकस्य शीघ्रोपस्थितिकत्वेन तस्यैव ग्रहणं न्याय्यम्। लोकन्यायसिद्धत्वात्, ज्ञापकसिद्धत्वाच्चैतत्तर्काऽपेक्षया साहचर्यन्यायस्य प्रबलत्वात्'—इति ख. ग. पाठः।

३. क. कुण्डलितः ख. ग. पाठः।

४. 'गृह्यमाणस्यैव, उपस्थितत्वात्' ख. पाठः।

एवाऽन्वयस्य ज्ञापितत्वाच्च । तद्धि 'बह्वो ददतो येषु, तानि कुलानि बहुददती'त्यत्र नुमभावाऽर्थम् । न हि तत्र गृह्यमाणं शत्रन्तं नपुंसकम् । अत एव 'प्रियसक्थ्ना ब्राह्मणेने'ति भाष्यं सङ्गच्छते ।

अत एव 'त्रिचतुरोः स्त्रियामि'त्यादौ 'स्त्रियामि'ति त्रिचतुरोरेव विशेषणमित्याकरः । तदाह—**झलन्तस्येत्यादि** । **उपधादीर्घ इति** । 'सर्वनामस्थाने चाऽसंबुद्धावि'त्यनेनेति भावः । **शेषमिति** । कर्मणि घञ् । 'हलश्चे'त्यत्र 'पुंसि संज्ञायामि'त्यनुवृत्तेः 'कर्त्तरी'ति विहिते नपुंसकत्वस्याऽपि सत्त्वात् । 'घञजपाः पुंसी'त्यादि तु प्रायोवादः । अत एव 'सम्बद्धमि'त्यर्थकं 'सम्बन्धमनुवर्त्तिष्यते' इति 'इको गुणवृद्धी' इति सूत्रे भाष्ये स्पष्टम् । 'भावविषयमेवेदमि'त्यन्ये । 'मासं भक्षोऽस्ये'ति 'कर्मण्यण्'सूत्रे [1]भाष्यप्रयोगादिदं चिन्त्यम् ।

**अदड्ड** । 'पञ्चभ्य' इति किम् ? । डतराऽऽदिः सर्वाद्यन्तर्गणः, तत्राऽधिकग्रहणं मा भूदिति । 'गौणे [2]त्विदं न 'अतिकतरं कुलमि'त्यादौ । सर्वाद्यन्तर्गणकार्यत्वात् । प्रधाने तु भवत्येव, 'पर[3]माऽन्यदि'त्यादावि'ति **कैयटादयः** ।

परे तु सर्वादिसूत्रे उपसर्जनप्रतिषेधप्रत्याख्यानाऽवसरे 'डतरादिभ्य' इति पञ्चम्या विरुद्धाऽर्थकविभक्तित्वादङ्गस्येति विशेषणत्वाऽसम्भवात् 'डतरादिभ्यो यो विहितः प्रत्यय' इत्येवं प्रत्ययविशेषणं तदि'त्युक्तम् । उपसर्जनप्रतिषेधाऽऽरम्भेऽपि परम[4]ाऽन्यादौ व्यावृत्तयेऽवश्याऽऽश्रयणीयविहितविशेषणाऽऽश्रयणेनैवाऽदिकतरादिव्यावृत्तौ तदर्थं स प्रतिषेधो न वक्तव्य इति तदाशयः ।

---

१. सूत्रभाष्य' इति ग. पाठः ।

२. 'गौणे तु' इत्यारभ्य 'इत्याहुः' (५५७ पृष्ठे) इत्यन्तः क. ग. पाठः ।

३. 'परमकतरदित्यादौ' ग. पाठः ।

४. 'परमकतरादौ' ग. पाठः ।

यत्तु **कैयटेन** 'अर्थद्वारकं विधानमाश्रयितव्यं, तेन **परमकतरदिति** सिद्धमि'त्युक्तम् । तस्य यदि 'डतरादिभ्य' इति षष्ठ्यर्थे पञ्चमीं कृत्वा 'डतराद्यर्थगतसङ्ख्याभिधायिन' इत्यर्थस्तदा विरुद्धविभक्तित्वाऽभावात् 'अङ्गस्येत्यनेनाऽन्वयाऽसम्भव' इति भाष्याऽसङ्गतिः । विधानस्य सर्वथाऽनाश्रयणेन 'अर्थद्वारकं विधानमि'ति तद्ग्रन्थाऽसङ्गतिरपि । प्रकारान्तरन्तु दुर्वचम्[1] । 'डतरा[2]न्तान्तादि'त्यर्थे तु अतिकतरादावपि दोष' इत्याहुः ।

**अद्डादेश इति** । सूत्रे ष्टुत्वेन दस्य ड इति भावः ।

डित्त्वफलमाह—**टेः** । 'तिविंशते'रित्यतो 'डिती'त्यनुवर्त्तते । 'भस्ये'ति चाऽधिकृतम् । तदाह—**डितीत्यादि** ।

**पञ्चम** इति । डटो मडागमे भत्वाऽभावादिति भावः । न च डित्त्वे मानाऽभावः । 'डतरादिभ्यः पञ्चभ्योऽदि'ति वक्तव्ये सन्दिग्धगुरुनिर्देशस्यैव मानत्वात् ।

ननु पूर्वसवर्णदीर्घाऽभावाय दादेश एव क्रियतामत आह—**एङिति** । अ**न्यतमस्येति** । डतरादिष्वपाठादिति भावः । **एकतरमिति** । 'एकाच्च प्राचामि'ति डतरच् । एकतमस्य तु 'एकतमदि'त्येव । **परत्वादिति** । 'मुमपेक्षये'ति शेषः । न च कृताऽकृतप्रसङ्गित्वेन नित्यो नुम् । शब्दाऽन्तरप्राप्तविधेरनित्यत्वात् । झलन्ता[3]ऽजन्तलक्षण-लक्षण-भेदाच्च ।

**केचित्तु** शीभावात्परत्वाज्जरसि कृते, ततः शौ, झलन्तत्वान्नुमिति मूलाऽर्थमाहुः । तद्भाष्याऽसंमतम् । अत्र यद्वक्तव्यं तन्निर्जरशब्दे उक्तम् ।

**सान्त महतः** । 'संयोगस्ये'ति महतोऽप्युपरञ्जकतया विशेषणम् । अत एव द्वन्द्वः । पृथक्पदं वा 'सान्ते'ति लुप्तषष्ठीकम्, 'संयोगस्ये'त्यनेन समानाधिकरणम् । 'नोपधायाः', 'सर्वनामस्थाने चाऽसम्बुद्धावि'ति चाऽनुवर्त्तते ।

---

१. 'दुर्वचमित्याहुः' ग. पाठः ।

२. 'डतराऽन्ताऽन्तात्' इत्यारभ्य 'इत्याहुः' इत्यन्तः पाठो ग. नास्ति ।

३. 'झलन्ताऽजन्तलक्षणभेदाच्च' इति ख. ग. पाठः ।

तदाह—**सान्तसंयोगस्येत्यादिना**। उपधाग्रहणं च पूर्वत्वमात्रोपलक्षणम्, पारिभाषिकाऽर्थस्येहाऽसम्भवात्। '[1]सर्वनामस्थाने' इति च सान्तसंयोग-विशेषणम्। अत एव 'हंसशिरांसी'त्यादौ न दोषः। यद्वा 'अनन्त्यविकारेऽन्त्यसदेशस्ये'ति तत्र न दोषः। न चैवं 'न्स्महत' इत्येव सिद्धे 'संयोग-स्ये'ति व्यर्थमिति वाच्यम्। अन्ततीति-अन्। त्सरतीति त्सर्। अन् च त्सर् चाऽन्त्सरौ। तावाचष्टेऽन्त्सयति इति अन्त्स्। ततः सुपि दीर्घाऽर्थं 'संयोगस्ये'त्यस्य सत्त्वात्। एतदर्थमेव बहूनां समवधाने बहूनामपि संयोग-संज्ञोक्ता भाष्ये। 'क्वौ लुप्तमि'ति निषेधाण्णिलोपस्य न स्थानिवत्त्वमिति **केचित्**।

**मांस्पचन्येति**। 'मांसस्य पचनी'ति विग्रहः। ङसो लुका लुप्तत्वा-त्प्रत्ययलक्षणं न। न च'मांसस्य पचि युड्घञोरि'ति पृषोदरादिपठितवचनेन तत्सिद्धिरिति वाच्यम्। तस्योक्तसिद्धार्था**ऽनुवादकत्वात्**। शब्दत्वेन च सादृश्यमित्य**भिमानः**। 'न लुमते'ति निषेधाऽनित्यत्वेनाऽपीदं सुसाधम्।

**केचित्त्वेवं** सादृश्ये 'वा शोकष्यञ्रोगेष्वि'ति सूत्रं व्यर्थं स्यात्। तस्मा-द्वार्त्तिके 'शसादावि'ति नाऽनुवर्त्तते। भाष्यप्रामाण्यात्, व्यवस्थितविभाषया च नाऽतिप्रसङ्गः। 'पद्दन्न' इति सूत्रेऽपि सुप्त्वेनैव सादृश्यम्। 'आसन्यं प्राणमि'ति तु छान्दसमित्याहुः। **वृत्ताविति**। भाष्यस्वरसस्त्वननुवृत्तावेवेति प्रागेव निरूपितम्। **मासश्छन्दसीति**। 'मासस्तकारः स्याद्भ्रादौ प्रत्यये, छन्दसी'त्यर्थः। 'माद्भिः शरद्भिर्दुरोदरं तवे'त्युदाहरणम्।

**ह्रस्वो**। ननु 'क्लीबव[2]दर्थे वाचकतासम्बन्धेन वर्त्तमानस्याऽजन्तस्ये'-त्युक्ते धातु-तिङन्तादौ तत्त्वाऽसम्भवात्सामर्थ्येनैव प्रातिपदिके लब्धे, पुनः प्रातिपदिकग्रहणं व्यर्थम्। (न च[3] 'वारिणी' इति व्यावृत्त्या चरितार्थम्,

---

१. 'सर्वनामस्थाने' इत्यारभ्य 'तत्र न दोषः' इत्यन्तः क. ग. पाठः।

२. 'क्लीबवदर्थेषु' ख. पाठः।

३. क. नास्ति। ख. ग. पाठः।

प्रथमायाः प्रातिपदिकार्थाऽनुवादकत्वेन समुदायस्यापि क्लीबे वर्त्तमानत्वादिति वाच्यम् । 'प्रातिपदिकमि'त्यनुवृत्त्या विभक्तिविपरिणामेन सिद्धेः) ।

न च 'काण्डे' इत्यादावन्तवद्भावेन प्रातिपदिकेऽवयवद्वारा नपुंसके, ह्रस्वाऽभावाय मुख्यप्रातिपदिकग्रहणाऽर्थं तदिति वाच्यम् । 'काण्डे' इत्यादेः शक्तिप्रधानतया क्लीबवदर्थकत्वाऽभावात् । तद्वत्त्वं च स्वभावाद्द्रव्यस्यैव,न शक्तिक्रियादेः । विभक्तीनां धर्मिवाचकत्वेऽपि, शक्तिमत्त्वेन प्रत्ययबोध्यस्य न लिङ्गवैशिष्ट्येन भानम्, किन्तु प्रकृत्या काण्डत्वादिना बोध्यस्यैव । 'नपुंसके' इत्यस्य च नपुंसकवैशिष्ट्येन वृत्त्याऽर्थबोधकस्याऽजन्तस्येत्यर्थः । न च विभक्त्यन्तं तथा । 'स्वमोर्नपुंसकादि'त्यादिशास्त्रेणाऽविभक्तिकप्रातिपदिकस्यैव तदर्थकत्वप्रसिद्धेः । एतेन 'वारिणी' 'ज्ञाने'[१] इति प्रथमाद्विवचने दोष' इत्यपास्तम् । 'पचतिकल्पमि'त्यादौ तु तद्वाच्य[२]क्रियायाः स्वभावादेव नपुंसकत्वयोगः । असत्त्वं च न[३]पुंसकेतरलिङ्गाऽनन्वयित्वमेव, कर्तृकर्मेतरकारकाऽनन्वयित्वमेव वेति चेन्न । स्पष्टाऽर्थत्वात् । स्पष्टं चेदं भाष्ये । ह्रस्वश्रुत्योपस्थिता'ऽच' इत्यस्य प्रातिपदिकेन विशेषणात्, सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्वात्, 'सुवाक्कुलमि'त्यत्राऽतिव्याप्तेश्चाऽऽह—**अजन्तस्येति** ।

**ज्ञानवदिति** । दीर्घान्तत्वप्रयुक्तो न कश्चिद्विशेष इति भावः । 'श्रीपाणी'त्यादौ 'एकाजुत्तपदे'ति णत्वन्तु भवत्येवेति बोध्यम् ।

**सन्निपातेति** । याऽऽदेशे हि ह्रस्वत्वविशिष्टमत्त्वं प्रयोजकम्, 'अत' इत्यनुवृत्तेः । तत्र यद्यपि 'कष्टाये'ति निर्देशप्रापितदीर्घेण ह्रस्वत्वांऽशो निवर्त्तितस्तथाप्यत्वमादेशेऽप्यनुवर्त्तत एव । तदपि चेल्लोपेन निवर्त्तेत, तर्हि

---

१. **'वारिणी' इति क. ग. पाठः । ख, नास्ति ।**

२. **'तद्वाच्य' इति क. ग. पाठः । ख. नास्ति ।**

३. **'नपुंसकेतरलिङ्गाऽनन्वयित्वमेव विवक्षितमिति चेन्न' ख. पाठः ।**

परिभाषाविरोधः स्पष्ट एवेति भाव इति **प्राञ्चः**। **परे** तु जातिपक्षे तपरसूत्रं व्याप्यजातिनिर्देशस्यैव बोधकमिति[1] यादेशनिमित्तभूतसन्निपातस्य दीर्घेण निवृत्तिर्जातैव, न कस्याऽप्यनुवृत्तिः, तस्माद्व्याप्याऽत्वजातियञादि-सन्निपातनिमित्तो दीर्घो, न स्वसन्निपातविघातलोपनिमित्तम्। सन्निपात-परिभाषायाश्च 'स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः सन्निपातस्तद्विघातकस्य स्वाऽतिरिक्तस्य स्वयमनिमित्तमि'त्यर्थः। एवं च जराशब्दादावोसि, आङि चेत्त्वे कृते न जरसादेश इत्याहुः।

(अत[2] एव 'इको गुणवृद्धी' इत्यत्र 'गाधातोष्टे गुणेन अकारे, आर्द्धधा-तुकोपदेशेऽदन्तत्वाऽभावादतो लोपाऽभावेऽपि, पररूपेण 'सामग' इति सिद्धौ, गापोष्टकः कित्करणाल्लिङ्गादाकारस्य गुणो न भवतीति व्यर्थमिक्ग्रहण-मित्युक्तम्। आतो लोपे परिभाषाया अप्रवृत्तौ तु 'सामगाये'त्यत्राऽसति कित्त्वे, एकाऽऽदेशस्य पूर्वाऽन्तत्वेन ग्रहणादाकारस्य धात्ववयवत्वेनाऽऽतो लोपः स्यात्, कित्त्वे तु 'आतो लोप इटि चे'त्यालोपे, धात्वनवयवत्वाद-प्रवृत्तिरिति, तद्व्यावृत्त्या चरिताऽर्थं कित्त्वमिति, भाष्योक्तं ज्ञापकमनुपपन्नं स्यादिति दिक्)।

**स्वमोः**। 'अन्तरङ्गानपी'ति न्यायाल्लुकः पूर्वं न विभक्तिनिमित्तकार्य-प्रवृत्तिरिति बोध्यम्। परत्वात्त्यदाद्यत्वे तु अम्भावेन द्वितीयैकवचने 'तं कुलमि'ति स्यात्, प्रथमैकवचने च 'सं कुलमि'ति।

**इकोऽचि**। 'सुपी'ति वक्तव्ये 'विभक्तावि'ति चिन्त्यप्रयोजनम्। नाम-धातौ तिङि क्रियावाचकत्वेन नपुंसकत्वाऽभावादित्याहुः। विभक्तौ किम्?। मधुन इदं-माधवम्'। अत्र नुमि टिलोपः स्यात्।

---

१. **'बोधकमिति मते यत्वसंनिपातस्य दीर्घेण' ख. पाठः।**

२. अयं दिगन्तः क. कुण्डलितः ख. पाठः।

**हे वारे, हे वारीति**। अत एव 'इकोऽची'ति सूत्रस्थम् 'इह किंचित्त्रपो इनि' इति भाष्यम्, 'एङ्ह्रस्वादि'तिसूत्रस्थं 'हे त्रपु' इति भाष्यञ्च सङ्गच्छते।

**वृद्ध्यौत्त्वेति**। 'अतिसखीनी'ति वृद्ध्युदाहरणं बोध्यम्। तृज्वद्भावोदाहरणं मूले एव वक्ष्यते। औत्त्वोदाहरणं-'वारिणि' इति। तत्र वृद्ध्यौत्त्वतृज्वद्भावगुणानां क्रमेण 'गावौ', 'हरौ', 'क्रोष्टा', 'हरये' इत्यवकाशाः[1]। नुमस्तु 'वारिणी' इति बोध्यम्। न चैवमप्योत्त्वस्य वृद्धिग्रहणेनैव ग्रहणे सिद्धे, पृथक् तद्ग्रहणं व्यर्थम्। गुणग्रहणेनाऽकारस्याऽपि ग्रहणाऽऽपत्तौ 'तानि' 'द्वे कुले' इत्यत्राऽत्वं बाधित्वा पूर्वविप्रतिषेधेन नुमापत्तेः। एवं चौत्त्वग्रहणमेव ज्ञापकं-'गुणवृद्धिशब्दा[2]भ्यां विहितगुणवृद्ध्योरेव ग्रहणमि'ति। यत्तु 'दीर्घतृज्वद्भावे'त्येव वक्तुं युक्तम्, गुणवृद्ध्यौत्त्वग्रहणं[3] व्यर्थमि'ति। तन्न। 'धातृणी'[4]त्यादावरो ह्रस्वत्वेन, ततः पूर्वं नुमोऽनापत्त्या तदसिद्ध्यापत्तेः[5]। वार्त्तिकेषु लाघवगौरवविचाराऽभावाच्च। नुम्नुटोर्विशेषमाह—**नामीति**। नुमि तु तस्याऽङ्गभक्तत्वाद्दीर्घो न स्यादिति भावः।

**तृतीयादिषु**। 'भाषितः पुमान्येन शब्देने'त्यर्थे पीलुशब्देऽतिप्रसङ्गः। तस्माद्भाषितः पुमान् = पुँल्लिङ्गोऽर्थो यस्य प्रवृत्तिनिमित्तस्याऽऽश्रयस्तत्प्रवृत्तिनिमित्तरूपं-'भाषितं[6]पुंस्कम्'। भा[7]ष्ये तु प्रवृत्तिनिमित्त-

---

१. 'अवकाशः' ख. पाठः।
२. 'गुणवृद्धिसंज्ञाभ्याम्' ग. पाठः।
३. 'गुणवृद्ध्यौत्त्वग्रहणं च' ख. पाठः।
४. 'धातृणी'त्यसिद्ध्यापत्तेः' ख. ग. पाठः।
५. 'असिद्ध्यापत्तेर्गुणग्रहणस्यावश्यकत्वात्' ख. पाठः।
६. इतोऽग्रे—'सप्तम्यर्थे बहुव्रीहिवादिनामाधेये आधारत्वविवक्षेति क्लेशः' इति ख. पाठः।
७. 'भाष्ये तु' इत्यारभ्य 'यस्मिन् अ इति' र्थे इत्यन्तः क. ग. पाठः, ख. नास्ति।

स्याऽऽधारत्वविवक्षया सप्तमी प्रयुक्ता—'भाषितः पुमान्यस्मिन्नर्थे' इति । अतद्गुणसंविज्ञानश्च बहुव्रीहिः । पुंविशिष्टस्य क्लीबवाच्यत्वाऽभावात् । भाषणक्रियया स्वकरणतयाऽऽक्षिप्तशब्दश्च क्लीबेन समानाऽनुपूर्वीकः, समानाऽर्थश्च गृह्यते, प्रत्यासत्तेः । ततोऽर्शआद्यच् । (एवं च तत्प्रकारकबोधजनकशब्दपरो 'भाषितपुंस्क'शब्दः । तस्य च क्लीबत्वं विशेषणम्) ।

एवं स्थिते यत्फलितं, तदाह—**प्रवृत्तिनिमित्तैक्ये** इति । 'इकोऽची'ति, 'नपुंसकस्ये'ति चाऽनुवर्त्तते । ते च तत्र षष्ठ्यन्ते, अत्राऽर्थात्प्रथमान्ते भवतः । तेन 'श्रीपेणे'त्यादौ न दोषः । टादौ किम् । 'अनादिनी' इत्यादि । 'पुंवदि'त्यभावाऽतिदेशः । तृतीयादौ पुंसि विहितस्याऽतिदेश्यस्य भावस्याऽभावात् । स च व्याप्तिन्यायाऽऽश्रयणाद्ध्रस्वस्य, नुमश्च । अत एवाऽतिदेशश्चरितार्थः । अन्यथा नुमो निषेधमेव कुर्यात् । 'नब्विषयस्याऽनिसन्तस्ये'ति स्वरस्याऽभावस्तुनाऽनेनाऽतिदिश्यते । भिन्नकर्त्तृकत्वात् । 'विषय'पदेन नपुंसकत्वाऽभावेऽपि तत्प्रवृत्त्यङ्गीकाराच्च । स्पष्टं चेदम् 'ई च द्विवचने' इत्यत्र **कैयटे** । तदेतद्ध्वनयन्नुदाहरिष्यति—**सुधियेति** । ह्रस्वत्वे हि नाभावो दुर्वारः स्यादिति भावः । **भेदादिति ।** वृक्षे हि वृक्षत्वव्याप्यजातिः प्रवृत्तिनिमित्तम् । फले तु फलत्वव्याप्यजातिः, वृक्षविशेषप्रभवत्वं वा । उभयथाऽपि पुंनपुंसकयोर्नैकं प्रवृत्तिनिमित्तमिति भावः ।

**अस्थिदधि** । नुमि प्राप्ते विधिरयम् । नकारादकार उच्चारणाऽर्थः । नन्वनङ उदात्तस्योच्चारणेनैव सिद्धावुदात्तग्रहणं व्यर्थमिति चेन्न । 'स्वरूपेणोच्चारितो गुणोऽविवक्षित' इति ज्ञापनाऽर्थत्वात् । एतेन 'अस्थ्यादीनां नब्विषयस्ये'त्याद्युदात्ततयाऽन्त्याऽऽदेशस्याऽनङः स्थान्यनुरूपेऽनुदात्ते एवोच्चारणीये, उदात्तोच्चारणं विवक्षाऽर्थं भविष्यतीति, 'यत्नं विना नोच्चारितगुणविवक्षे'त्यर्थो ज्ञाप्यते इति मतेऽपि ज्ञापितेपि व्यर्थमुदात्तग्रहणमि'-

---

१. अयं ख. ग. पाठः । क. नास्ति ।

२. 'विवक्षेति ज्ञापितेऽपि व्यर्थमुदात्तग्रहणम्' ख. पाठः ।

ति परास्तम् । तथा[1] ज्ञापनस्यैवाऽभावात् । 'परमाऽस्थि'शब्दादावन्तोदात्ते उदात्तगुणकस्याऽपि स्थानित्वेन,[2] विवक्षायां प्रमाणाऽभावाच्च । 'चतसर्याद्युदात्तनिपातनं करिष्यते' इति भाष्याऽऽदिग्रन्थास्त्वेकश्रुत्याऽष्टाध्यायीपाठमभिप्रेत्य । उदात्तत्वफलन्तु 'दधनी'त्यादावल्लोपाऽभावपक्षे स्फुटम् । 'दध्ने'त्यादावकारलोपे, उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वं च फलं बोध्यम् ।

**तदन्तेति** । आङ्त्वादिति भावः । **अतिदध्नेति** । दध्यतिक्रान्तेनेत्यर्थः । 'प्रियदध्ने'ति तु चिन्त्यम् । उरःप्रभृतिषु[3] पाठेन नित्यकप्प्रसङ्गात् । भाष्येऽपि 'अतिदध्ने'त्येव पाठो दृश्यते । (यणं बाधित्वा परत्वादाङ्त्वाच्चाऽनङ्) । अत्राऽपि 'नपुंसकस्ये'ति सम्बध्यते । तेन धात्र 'आदृगमहने'ति 'कि' प्रत्यये, 'दधिने'[4]त्यादौ न । तच्च गृह्यमाणस्यैव विशेषणम् । तेन 'अतिदध्ना ब्राह्मणेन, ब्राह्मण्या वे'ति सिद्धम् । स्त्रियां ङीप्तु न । सन्निपातपरिभाषाविरोधात्, बहिरङ्गतयाऽनङोऽसिद्धत्वाच्च ।

**सुधिनी इति** । इयङः परत्वान्नुम् । **सुधियेति** । शोभनज्ञानवत्त्वरूपैकप्रवृत्तिनिमित्तकत्वात्पुंवत्त्वे, नमोऽभावाद्धस्वाऽभावेन नाभावाऽभावाच्चेयङ् । (न[5] चाऽन्तरङ्गत्वात्पूर्वं ह्रस्वे कृते, पश्चात्पुंवत्त्वेऽपि, जातस्य निवृत्त्ययोगान्नाभाव एवोचित इति वाच्यम् । 'तृतीयादिविषये, पुंवत्त्वमि'त्यर्थेनाऽदोषात् । अकृतव्यूहपरिभाषया पूर्वं ह्रस्वाऽप्रवृत्तेः) । एवं 'प्रधी'शब्दे प्रकृष्टज्ञानवत्त्वमेकमेव प्रवृत्तिनिमित्तम् । **मध्विति** ।

**मकरन्दस्य, मद्यस्य, माक्षीकस्यापि वाचकः ।**
**अर्द्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधुः ॥**

---

१. 'तथा ज्ञापनस्यैवाऽभावात्' इति क. ग. पाठः ख. नास्ति ।
२. 'स्थानिवत्त्वेन' ख. ग. पाठः ।
३. अयं ख. पाठः, क. ग. नास्ति ।
४. 'दधिरित्यादौ' ख. ग. पाठः ।
५. क. कुण्डलितः ख. पाठः ।

—इति **शाश्वत**कोशान्मद्यादिवाचिनः पुंवद्भावो भवत्येव । यस्तु मृद्वीकाविकारवाची मधुशब्दस्तस्य 'माक्षीकं मधु न द्वयोरि'त्यमरान्नित्यनपुंसकत्वेन, न भवत्येव पुंवद्भावः । ([1]इदमेव ध्वनयितुं तृतीयादौ नोदाहृतम्) ।

**केचित्तु**—'माक्षिकवाच्यपि नित्यनपुंसकः । 'व्यत्ययो बहुलमि'ति सूत्रे भाष्ये 'मधोस्तृप्ता इवाऽऽसते', 'मधुन' इति प्राप्ते' इति लिङ्गव्यत्ययोदाहरणात् शाश्वतस्य प्रमाद' इत्याहुः । अन्ये तु 'माध्वीर्गावो भवन्तु न' इति लिङ्गसिद्धक्षीरवाचिनपुंसकमधुशब्दाऽभिप्रायेण भाष्यमि'त्याहुः ।

**स्नुर्वेति** । 'मांस पृतना-सानूनामि'ति वार्त्तिकेनेति भावः । 'स्नुः प्रस्थः सानुरस्त्रियामि'त्युभयलिङ्गः । **पूर्वविप्रतिषेधेनेति** । अङ्गाऽधिकारे तदन्तविधेः सत्त्वेन, तदन्तेऽपि तृज्वद्भावप्राप्तिर्बोध्या । एतेन 'नुम्नित्यः, तृज्वद्भावस्तु नुमि कृते, तेन व्यवधानादप्राप्त्याऽनित्य' इत्यपास्तम् । तदन्तग्रहणेन 'यदागमा 'इतिन्यायेन नुम्विशिष्टस्य ग्रहणात् । सकृद्गतिन्यायात्, पूर्वविप्रतिषेधसामर्थ्याच्च न पुनस्तृज्वद्भावः ।

नन्वयं पूर्वविप्रतिषेधः 'तृतीयादिष्वची'त्येतद्विषयकः । भाष्ये 'कृशक्रोष्टुनेऽरण्याये'त्यस्यैवोदाहरणात् । अन्यथा प्रथमोपस्थितसर्वनामस्थानो[2]दाहरणत्यागे बीजाऽनापत्तिः' ([3]न चाऽस्य तन्मात्रविषयत्वे वार्त्तिके तृज्वद्भावग्रहणवैयर्थ्याऽऽपत्तिः, 'कृशक्रोष्टुने' इत्यस्य तृज्वत्त्वाऽभावपक्षे सुसाधत्वात्, 'कृशक्रोष्ट्रे' इत्यस्य च पुंवत्त्वपक्षे दुर्वारत्वादिति वाच्यम् । 'कृशक्रोष्ट्रृणे' इत्यादिव्यावृत्त्या चारितार्थ्यात् । न च 'कृशक्रोष्टु ङे'

---

१. क. कुण्डलितोऽयं ख. पाठः ।

२. 'उदाहरणत्यागे बीजाऽनापत्तिरिति चेन्न' इत्येवं क. पुस्तकरीत्या पाठोऽत्र बोध्यः ।

३. क. कुण्डलितः ख. ग. पाठः ।

इत्यस्यामवस्थायां-नुम्-तृज्वद्भावयोः प्राप्तयोः, परत्वात्तृज्वद्भावे, सकृद्गतिन्यायेन नुम्न भविष्यति । न च 'पुनःप्रसङ्गविज्ञान'पक्षे तत्प्राप्तिः । सकृद्गतिन्यायमाश्रित्य वचनाऽनारम्भस्यैव लघुत्वादिति वाच्यम् । एवमपि समाहारद्विगौ 'पञ्चक्रोष्टुने' इत्यादौ पुंवत्त्वाऽभावात्तत्र तृज्वद्भावनिवृत्तेः फलस्य सत्त्वात्)—इति चेन्न । उदाहरणस्य सङ्कोचकत्त्वे मानाऽभावात् । तदुक्तं—'न चोदाहरणमादरणीयम्' इति । तस्य चोदाहृताऽतिरिक्तोदाहरणाऽभाव इत्येवंपरतयाऽनादरणीयमित्यर्थं इत्याहुः ।

**सुलुनी इति ।** 'ओः सुपो'ति यणं बाधित्वा, परत्वान्नुम् । **सुल्वेति ।** अस्य शोभनलवनकर्त्तृत्वमेव प्रवृत्तिनिमित्तं पुंक्लीबयोः तत्र पुंवत्त्वपक्षे ह्रस्वाऽभावेन घित्वाऽभावान्नाभानो न । अक्लीबत्वेन नुमभावाद्यण् ।

**धातृ इति ।** अनङ् तु न, 'प्रियतिसृ' इति भाष्योदाहरणेनाऽनङ्विषये 'न लुमते'त्यस्य नित्यत्वाऽङ्गीकारादित्युक्तं प्राक् । 'ऋतो ङी'ति गुणस्तु सर्वनामस्थानत्वाऽभावान्न । एतदर्थमेव तत्र 'सर्वनामस्थान'ग्रहणम् । एवं च सर्वनामस्थानग्रहणमपि तदनित्यत्वे ज्ञापकं बोध्यम् । **धात्रेति ।** 'धारणपोषणकर्त्तृत्वं पुंनपुंसकयोरेकमेवे'ति, पक्षे पुंवदिति भावः ।

---

१. 'सत्त्वादिति चेन्न । भाष्योदाहरणाऽसङ्गतेः । उपलक्षणं तदिति चेत् । **'कृशक्रोष्टुनी'** त्येवोपलक्ष्यतां भाष्योदाहृतप्रातिपदिकांशाऽनुग्रहाय । तदुक्तं—'न चोदाहरणमादरणीयमिति'ति प्राञ्चः । तत्र 'इत्येवे'त्यस्य-इत्यपीत्यर्थः । 'प्रातिपदिकांशे'त्यस्य-तदंशस्याऽपीत्यर्थः । केचित्तु–एवं सति 'कृशक्रोष्टुने' इत्युदाहरतो भाष्यकृतोऽज्ञानमेवोक्तं भवति । तच्चाऽयुक्तम् । तस्मात्तादृशोदाहरणपरभाष्यप्रामाण्यात्पुंवत्त्वपक्षेऽनभिधानेन तृज्वत्त्वाऽभाव इत्येव कल्पयितुं युक्तम् । भाष्यकृता हि सूत्रत्रयस्य, वार्तिकस्य च प्रत्याख्यानायाऽऽश्रितस्य शब्दानां नियतविषयत्वस्य सूत्राऽऽरम्भेऽप्यावश्यकत्वद्योतनाय तदुदाहृतम् । 'न चोदाहरणमादरणीयमिति'–इति ख. पाठः ।

२. 'उदाहरणस्ये'त्यारभ्य 'आदरणीयमि'ति इत्यन्तः क. ग. पाठः ।

**एच** इक् 'आदिश्यते **इति आदेशः ।** कर्मणि घञ् । ह्रस्वपदेन कर्मधारयः । निर्धारणे सप्तमी । जातावेकवचनम् । तदाह—**आदिश्येत्यादि** । एचां पूर्वभागोऽकारसदृशः, उत्तरस्त्विवर्णोवर्णसदृशः । तत्रोभयाऽन्तरमह्रस्वाऽभावात्पर्यायेणाऽवर्णेवर्णादयः स्युः । तत्र मा कदाऽप्यवर्णं भूदिति नियमार्थमिदमित्याह—**इगेवेति** । यथाप्राप्तमेव नियम्यते इति न यथासङ्ख्यम् । न च परत्वात्सूत्रं विनाऽपीगेव भविष्यतीति वाच्यम् । अन्तरङ्गत्वेनाऽकारस्यैवाऽऽपत्तेः । लक्ष्यगतपरत्वमादाय विप्रतिषेधसूत्राऽप्रवृत्तेः—

**'नित्यः परयणादेशः, परश्चाऽसौ व्यवस्थया ।**
**युगपत्सम्भवो नास्ति, बहिरङ्गेण सिद्ध्यति ॥'**

—इति ग्रन्थे न 'अचः परस्मिन्नि'ति सूत्रे भाष्ये स्पष्टतयोक्तत्वात् ।

अत्र पूर्वोत्तरभागयोः समप्रविभागपक्ष एव 'प्लुतावैच' इति सूत्रभाष्यादावुक्तः । उत्तरभूयस्त्वपक्षस्तु तत्रैव विनिगमनाविरहेण भाष्ये दूषित इति बोध्यम् ।

ह्रस्व एच् तु नाऽस्त्येव, 'एओङि'त्यादौ दीर्घनिर्देशसामर्थ्यादिति स्पष्टं भाष्य एवेति दिक् ।

ननु प्रकृष्टस्वर्गवत्त्वादिरूपप्रवृत्तिनिमित्तैक्यात्पुंवत्त्वं स्यादत आह—**यदिगन्तमिति** । (केचि[1]त्तु पुंवत्त्वपक्षे 'प्रराय' इत्यादिरूपाणि । पुंवत्त्वेन ह्रस्वनिवृत्तेः । भाषितपुंस्कत्वमप्येकदेशविकृतन्यायेन सुलभम् । तेन न्यायेनाऽशास्त्रीयधर्माऽतिदेशस्याऽपि 'प्राग्दीव्यत' इति सूत्रस्थभाष्यसंमतत्वात् । न च जातस्य निषेधाऽयोगेन कथं ह्रस्वनिवृत्तिः, ह्रस्वात्पूर्वन्तु पुंवत्त्वं दुर्लभम्, इगन्तत्वाऽभावादिति वाच्यम् । लोपाऽऽदिवत्पुंवद्भावस्य 'सुन्दरभार्य' इत्यादौ जातनिवर्त्तकताया अपि दृष्टत्वादिति । तन्न । उपजीव्यविरोधेन तदनिवृत्तेः । अत एव 'समासस्ये'ति सूत्रे भाष्ये—'नाव्य-

---

१. 'इत्याहुः' (५६७ पृष्ठे) इत्यन्तोयं क. कुण्डलितः ख. पाठः । 'केचित्तु' इति ग. नास्ति ।

मि'त्यादावादिर्नकारो न स्वरयोग्यो, यश्चाऽऽकारस्तद्योग्यो, नासावादिरित्यनाव इति प्रतिषेधोऽनर्थकः । न चाऽऽदिरेव नकार उदात्तगुणविशिष्टाऽन्तरतमाऽच्रूपोऽस्तु । सूत्रस्य हि'यदन्तस्य द्व्यच्कस्याऽऽदिरुदात्तगुणकरूपो भवती'त्यर्थ इति वाच्यम् । तथा हि सति निमित्तभूतद्व्यच्कत्वस्य विनाशादुपजीव्यविरोधेनाऽऽद्युदात्ताऽप्राप्तेः एवं चाऽयमेव प्रतिषेधो ज्ञापयति 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदि'त्युक्त सङ्गच्छते इत्याहुः । केचित्तूपजीव्यविरोधात् ह्रस्वो मा निवृतत्, नुमो निवृत्तिस्तु केन वार्यतामिति चिन्त्यम् । किञ्च पुंवद्भावेन 'स्त्रियाः पुंवदि'त्यादौ स्त्र्यर्थकत्वद्वारा उपजीव्यस्यैव स्त्रीप्रत्ययस्य निवृत्तिदर्शनेनैतद्विषये तस्याऽप्यङ्गीकार इत्याहुः) ।

**प्रराभ्यामिति** । ननु 'आदेच उपदेशेऽशितो'ति सूत्रे भाष्ये 'गोभ्यामि'त्यादावात्वमाशङ्क्य 'रायो हलो'ति ज्ञापकात्प्रातिपदिकस्य नेत्युक्त्वा, नैतदस्ति, नियमाऽर्थमेतत् 'रायो हल्येवे'त्युक्तत्वेनाऽस्याऽप्येजन्त एव प्रवृत्तेः कथमत्राऽऽत्वमिति चेन्न । 'इकोऽची'ति सूत्रे'अज्ग्रहणाऽभावे'ऽतिराभ्यामि'त्यादौ नुमि कृते, तस्य समुदायभक्तत्वेन निर्दिष्टस्य रैशब्दस्य तेन व्यवधानादात्वं न प्राप्नोती'त्याशङ्क्य, परत्वमाश्रित्य समाधानरूपन्यायाऽनुगृहीतप्रामाणिकसिद्धान्तभाष्याऽनुरोधेनाऽस्य भाष्यस्य एकदेश्युक्तित्वात् ।

**प्ररीणामिति** । यत्तु 'रायो हली'ति विषयसप्तमी, अतः प्रागेवाऽऽ-

---

१. इतोऽग्रे—'न चाऽऽदेरेव नकारस्य स्थाने उदात्तगुणविशिष्टाऽच्प्राप्तिरस्त्विति वाच्यम् । तथा हि सति' इति ख. ग. पाठः ।

२. 'न चाऽऽदिरेव' इत्यारभ्य 'वाच्यम्' इत्यन्तः क. पाठः ।

३. 'इत्युक्तं सङ्गच्छते इत्याहुः' इति क. ख. पाठः । ग. नास्ति ।

४. 'किञ्च' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. पाठः । ख. ग. नास्ति ।

५. 'प्रौढिवादपरत्वात्' ख. ग. पाठः ।

त्वमि'ति । तन्न । अङ्गाऽधिकारे विषयसप्तम्या वक्तुमशक्यत्वात् । अङ्ग-त्वस्य विधानप्रतिबद्धत्वात् । निर्दिष्टपरिभाषाबाधे मानाऽभावाच्च । आत्वे कृते नुडनापत्त्या, हलादिविषयाऽभावेन पूर्वमात्वाऽप्राप्तेश्च ।

**केचित्तु** नुटो निमित्तस्य सन्निपातस्य दीर्घेण विनाशाऽऽवश्यकत्वेन, तद्विषये सन्निपातपरिभाषाया विषय एव न । 'नामी'ति दीर्घस्तु 'सुपि चे'ति दीर्घं नित्यत्वाद्बाधते' इति **माधवा**ऽऽशयमाहुः ।

**इतीति**[1] । 'बहुश्रेयसी'शब्दे तु नपुंसकह्रस्वो भवत्येव । न च 'ईयसो बहुव्रीहौ पुंवदि'ति वचनेन पुंवत्त्वमिति वाच्यम् । प्रत्यासत्त्या स्त्रीप्रत्यय-त्वनिमित्तक'गोस्त्रियो'रित्यस्यैव तेनाऽभावाऽतिदेशात् । तथा हि—'ईयसः परस्य स्त्रीप्रत्ययस्य बहुव्रीहौ विद्यमानस्य पुंवत्[2]=पुंविषयस्य ईकारस्य यथा न ह्रस्वस्तथाऽस्यापो'ति हि तदर्थः । 'ईयसन्ताद्विहितो यः स्त्रीप्रत्य-यस्तदन्ताऽन्ते बहुव्रीहौ पुंवदि'ति तु नाऽर्थः । बहुव्रीहेः पुंवत्त्वेऽप्युपसर्जनस्य 'श्रेयसी'शब्दस्य स्त्रीप्रत्ययान्तत्वाऽनपायेन उपसर्जनह्रस्वस्य दुर्वारताऽऽ-पत्तेः । न च 'ने'त्येव सिद्धे, पुंवद्वचनं व्यर्थम् । वार्त्तिकेषु लाघवगौरव-विचाराऽभावस्य तत्र तत्र भाष्ये ध्वनितत्वात् । एतेन 'बहुश्रेयसी कुलमि'ति श्रीपत्याद्युक्तमपास्तमि'ति **केचित्** ।

**अपरे** तु 'ईयसश्चे'ति सूत्रे भाष्ये-ईयस उपसर्जनस्त्रीप्रत्ययस्य दीर्घत्वं वक्तव्यम्' । 'बहुश्रेयसी' । 'पुंवद्वचनात्सिद्धमि'त्युक्तम् । तेनाऽस्य नपुंसक-ह्रस्वनिवृत्त्यर्थत्वमपि लभ्यते । अन्यथा वचनेन वचनप्रत्याख्यानाऽ-सङ्गतिः । मम तु मते नपुंसकह्रस्वनिवृत्त्यर्थमावश्यकं तदिति, युज्यते एव तेनाऽस्य प्रत्याख्यानमित्याहुः[3] ।

॥ **इत्यजन्ता नपुंसकलिङ्गाः** ॥

---

१. 'इतीति' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. कुण्डलितः ख. पाठः ।

२. 'पुंवदिति तदर्थात्' ख. पाठः ।

३. 'इतीति । बहुश्रेयसीशब्दे तु' इत्यारभ्य एतावान्ग्रन्थः क. कुण्डलितः ।

## अथ हलन्तपुँल्लिङ्गप्रकरणम् ।

**हो ढः** । 'झलो झलि' 'पदस्य' 'स्कोः संयोगाद्योरि'त्यतो 'झलि' 'पदस्य' 'अन्ते' इति चाऽनुवर्त्तते । तदाह—**झली**त्यादि । 'झलि परे पूर्वस्य, पदान्ते विद्यमानस्य हस्ये'त्यर्थः । डस्तु न विहितः । 'ध्रुट्' 'लेढी'त्याद्य-सिद्ध्यापत्तेः । **लिट्त्स्विति ।** 'लिह् आस्वादने' क्विप् । ढस्य जश्त्वेन डः । 'खरि चे'ति टः । तस्याऽसिद्धत्वात्पक्षे धुट् । चर्त्त्वम् । 'न पदान्तादि'ति ष्टुत्वनिषेधः । नन्वत्र धुट् दुर्लभः, 'डः सी'त्यत्र 'पदस्ये'त्यधिकारेण 'सो'त्यस्य तद्विशेषणत्वेन, सप्तमीनिर्दिष्टत्वेन च सकाराऽऽदेः पदस्यैव तद्विधानादिति चेन्न । भाष्याऽऽदिप्रामाण्येन विशेषणविशेष्ययोरुभयोरपि सप्तम्यन्तत्वे 'यस्मिन्विधिरि'तिन्यायप्रवृत्तेर्वलादेरित्यत्राऽऽदिग्रहणादौ-चित्येन च व्यधिकरणाऽन्वयस्यैवाऽङ्गीकारादित्याहुः । 'चयो द्वितीया' इति तु न । चर्त्त्वस्याऽसिद्धत्वात् ।

**दादेः** । 'दादिग्रहणमौपदेशिकदादित्ववल्लक्षकमि'त्यभिप्रेत्य फलिता-ऽर्थमाह—**उपदेश इति** । अत एव भाष्ये 'घत्वस्याऽसिद्धत्वात् धुगित्यत्र ढत्वं प्राप्नोती'त्याशङ्क्य, अपवादत्वेन समाधाय, अथवा एवं वक्ष्यामि-'हो ढः' 'अदादेरि'ति । ततो 'धातोरि'ति । 'दादेरि'ति वर्त्तते । 'ने'ति निवृत्तमि'त्युक्तम् । द्रुहेस्तु 'वा द्रुहे'त्यनेन ढत्वस्याऽपि विधानाद्'ध्रुडि'त्यादौ न दोष इति तदाशयः । तत्र 'धातोरि'ति सूत्रे भाष्यकृत्कृत'दादेरि'त्यनुवृत्तेः फलाऽन्तराऽभावेन, वृत्त्याद्येकवाक्यतया तदुपदेशवद्दादिलक्षकम्, सामर्थ्यात् । अर्थाऽधिकाराऽनुरोधाच्च पूर्वत्र निषेध्यसमर्पकेऽप्येवम् । अत एव नामधातुविषये 'दामलिडि'त्यादौ ढत्व-घत्वाऽभावौ सिद्धौ । एवं च

---

१. 'दादेः । धातुग्रहणाऽऽवृत्तिमभिप्रेत्याह—उपदेशे इति ।' इति ख. पाठः ।

२. 'दाहिग्रहणम्' इत्यारभ्य 'फलितमाह' इत्यन्तः क. ग. पाठः ।

तदेकवाक्यत्वायाऽपवादत्वपक्षेऽपि दादिपदस्या[1]ऽऽवृत्त्याउपदेशकालिकदादित्ववल्लक्षकतोचितेति भा[2]वः।

धातुग्रहणन्तु 'तद्वाडि'त्या[3]दिव्यावृत्तये उत्तरार्थमावश्यकं स्पष्टाऽर्थमिहैव[4] कृतम्। प्रा[5]तिपदिकानामुपदेशाऽभावादेव व्यावृत्तः। न च 'औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणमि'ति परिभाषया औपदेशिकदादित्वलाभे, लक्षणा व्यर्थेति वाच्यम्[6]। भाष्येऽव्यवहृतत्वेन, वैयधिकरण्याऽन्वयप्रदर्शकभाष्यविरोधेन, तत्र तत्रोपदेशग्रहणं कुर्वत्सूत्रविरोधेन, 'तरप्तमपौ घः' 'अत्वसन्तस्ये'त्यादिसूत्रस्थभाष्यविरोधेन च तस्या अप्रामाणिकत्वात्।

**हस्येति।** हाऽन्तस्येत्यर्थः। घस्तु अलोन्त्यपरिभाषयाऽन्त्यस्यैवेति

१. 'धातुपदस्योपदेशलक्षकतोचिता' ख. पाठः।

२. इतोऽग्रे—'न चोपदेशे इत्येवाऽस्तु, प्रातिपदिके तूपदेशाऽभावादेव नेति वाच्यम्। गौरवाऽऽपत्तेः। किञ्च तद्वाडित्यादिव्यावृत्योत्तरत्र 'धातु'-ग्रहणं चरितार्थम्। वस्तुतस्तदेकवाक्यत्वाय 'दादिपदमुपदेशकालिकदादित्ववल्लक्षकमि'त्येवं वक्तुं युक्तम्। आवृत्तिलक्षणोभयाऽऽश्रयणे गौरवात्। किञ्च 'दादे'रित्यस्य[1] षष्ठ्यन्ततया उपदेशकाललक्षणापक्षेऽपि 'उपदेशे' इत्यर्थलाभाय विभक्तिविपरिणामेऽत्यन्तगौरवम्।[2] अत एवाऽऽदिग्रहणं चरितार्थम्। अन्यथा 'उपदेशे धात्ववयवदकारात्परहस्य घ' इत्यर्थेनैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव' इति क. कुण्डलितः ख. पाठः।

३. 'तद्वाडित्यादिव्यावृत्तये' इति ख. नास्ति।

४. 'स्पष्टाऽर्थमिहैव कृतमिति तत्त्वम्' ख. पाठः।

५. 'प्रातिपदिकानामुपदेशाऽभावादेव व्यावृत्तेः' इति क. ग. पाठः। ख. नास्ति।

६. 'आवृत्तिर्लक्षणा च व्यर्थेति वाच्यम्' ख. पाठः।

1. 'धातोरित्यस्य' ख. पाठः।

2. 'अत एव' इत्यारभ्य 'स्पष्टमेव' इत्यन्तः क. ग. नास्ति।

बोध्यम् । घ इति । 'ग' इति तु नोक्तम् । 'धुगि'त्यादौ भष्भावाद्यनापत्तेः ।

नन्वधोगित्यस्य 'धातोरवयवो यो दादिरि'त्यर्थेन सिद्धिः । वैयधिकरण्यं च गर्दभयतेरप्रत्यये 'गर्धप्' इत्यादौ भष्भावायोत्तरसूत्रे आवश्यकम् । 'दोग्धे'त्यादि तु व्यपदेशिवद्भावात्सिद्धम् । स्पष्टं चेदं भाष्ये । अत आह-**दामलिहमिति ।** अत्र घत्वाऽभावे मानं भाष्यं दर्शितम् । न चैवं प्रागुक्त-भाष्योत्तरम् । 'अधोक'सिद्धये वैयधिकरण्याऽन्वयपर्यन्तं भाष्यकृतो धावनं व्यर्थम् । 'दादेरि'ति वर्त्तते इत्यस्योक्तमाशयमजानत 'एवमपि घो दादे-रि'त्युच्यते । तत्राऽधोक् न सिद्ध्यती'त्याशङ्कायाम् 'एकाच' इत्युत्तरसूत्रा-ऽर्थमपि प्रसङ्गान्निर्णेतुं, दादिपदलक्षणायामधोगित्यस्याऽसाधारणफलत्वा-ऽभावं दर्शयितुं च तथोक्तेः । अत एवाऽग्रे वैयधिकरण्यस्योत्तराऽर्थमावश्य-कत्वोक्त्या इहाऽर्थमनावश्यकत्वं भाष्यध्वनितं सङ्गच्छते इत्यलम् ।

**एकाचो** । 'झ[1]ष् झषन्तस्ये'ति वक्तुं युक्तं, भष्पदाऽशक्तिकल्पनेन लाघवात् । **निवृत्तमिति** । 'धुग्भ्यामि'त्यादौ तु पदान्तत्वादेव सिद्धिरिति भावः । एते[2]न 'एकाचो बश' इति सूत्रे 'ह्रस्वादङ्गादि'त्यतोऽङ्गादि'त्यनु-वर्त्तते । अङ्गं च द्विविधम्, धातुरूपं, प्रातिपदिकरूपं च । तत्र धातोः पदान्ते एव, प्रातिपदिकसंज्ञस्य तु झलि, पदान्ते चे'ति परास्तम् । स्वरित-त्वकल्पन-विभक्तिविपरिणामाऽऽदीनां निर्मूलत्वात्, निष्फलत्वाच्च । 'तद्वाट्' 'तद्वाड्भ्यामि'त्यादावतिव्याप्तेश्च । **सामर्थ्यादिति** । 'स्ध्वो'र्ग्रहणस्येतर-व्यावृत्त्यर्थत्वे तु तदनुवृत्तौ फलाऽभाव इति भावः । धातोरिति किम् ? । तद्वाट्, तद्वाड्भ्याम् ।

ननु दुहेर्घत्वे धात्वयवमेकाच्रूपं 'दु' इति, 'उघि'ति च । तत्राऽऽद्यो

---

१. 'झष्' इत्यारभ्य 'लाघवात्' इत्यन्तः क. ग. पाठः ।

२. 'एतेन' इत्यारभ्य 'अतिव्याप्तेश्च' इत्यन्तः ख. पाठः मनोरमाशब्दरत्न-स्थत्वात् क. कुण्डलितः ।

न झषन्तः, अन्त्ये न बश्, 'दुघि'ति तु नाऽवयव इति कथं भष्भावोऽत आह—**व्यपदेशिवदिति** । विशिष्टोऽपदेशो=मुख्यो व्यवहारः, सोऽस्याऽस्तीति 'व्यपदेशी'। तेन तुल्यमित्यर्थः । इदं चा'ऽऽद्यन्तवदेकस्मिन्नि'त्यत्र तत्सूत्रप्रत्याख्यानभाष्ये स्पष्टम् । एकाचः किम् ? । 'दामलिट्' । बशः किम् ?, 'क्रोत्स्यति' । झषन्तस्य किम् ? । 'दास्यति' । स्ध्वोः किम् ? । 'दादद्धि' । दधधातोर्यङ्लुकि लोटि हेर्धिः ।

**घुगिति** । ननु धातुत्वस्य 'क्रियावाचकत्वे सति भ्वादिगणपठितत्व'-रूपत्वेन, क्रियायाः 'प्रधानाऽप्रधान'न्यायेनाऽनुपसर्जनीभूतप्रधानरूपाया एव ग्रहीतुमौचित्यात्कथमत्र घत्व-भष्भावौ, 'दुहि'त्येतद्बोध्यकर्त्तारं प्रति क्रियाया गुणभूतत्वादिति चेन्न । 'अत्वसन्तस्ये'ति सूत्रे 'अधातोरि'ति निषेधेन धातुलक्षणे 'अनुपसर्जनीभूतस्यैव ग्रहणमि'ति नियमाऽनङ्गीकारात् । एतन्मूलकमेत्र पठ्यते—'क्विपा धातुत्वं न जहती'ति । नन्वेवमपि 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमि'ति परिभाषया कथमत्र घत्व-भष्भावौ । अस्यां च ज्ञापकं 'दाण्डिनायना'ऽऽदिसूत्रे 'भ्रौणहत्ये'ति तत्व-निपातनम् । अन्यथा 'हनस्तोऽचिण्णलोरि'त्यनेनैव तत्वे सिद्धे, किं तेन । अत एव 'वार्त्रघ्नमि'त्यादौ त तत्वम् । 'भ्रौणहत्ये' कुत्वं च न । **तत्प्रत्ययः**= धातुसंशब्दनेन विहितः प्रत्ययः । स्वरूपग्रहणं च नेह शृङ्गग्राहिकयोपादानम् । 'घृतस्पृग्भ्यामि'त्यादौ 'अनुदात्तस्य चर्दुपधस्ये'त्यमागमापत्तेः । किन्तु 'यत्कार्यं धातुं न व्यभिचरति, तत्रे'त्यर्थः । तथा च स्वरूपग्रहणं नाम धातोरेवाऽऽश्रयणम् । तच्च यथा कथञ्चिदिति काम्यच्सूत्रे **कौस्तुभे**, 'मृजेर्वृद्धिरि'-त्यादौ भाष्ये, **हरदत्ता**दिग्रन्थे च स्पष्टमिति चेन्न । 'अप्रशानि'ति निषेधेन तस्या अनित्यत्वात् । यदि'मो नो धातोरि'त्यादौ सा स्यात्तदा निषेधाऽसङ्गतिः । स हि 'शान तेजने' इति क्विबन्तस्य न, तदनुकरणे हि सूत्रे[1] नलोपाऽऽपत्तेरिति दिक् ।

---

१. 'तदनुकरणे हि तत्र नलोपापत्तिरिति दिक्' ग. पाठः ।

**वा द्रुह (मुह)**। द्रुहेः प्राप्तेरन्येषामप्राप्तेरुभयत्र विभाषेयम्। 'द्रुहादीनामि'ति तु नोक्तम्। 'दोध्रुक्' 'दोध्रुडि'त्यादौ यङ्लुकि दोषाऽऽपत्तेः। भाष्भावस्तु 'अजर्घा' इति भाष्योदाहरणेन निषेधाऽनित्यत्वाद्भवत्येवेत्याहुः।

**इग्यणः। यणः स्थाने** इति। 'षष्ठी स्थाने' इति सूत्रात् 'स्थाने'ग्रहणमपकृष्यते। अतोऽस्य संज्ञासूत्रत्वेन गुणत्वात् 'गुणानां च परार्थत्वादि'ति न्यायेन परिभाषाऽसम्बन्धेऽपि, अनुवादत्वेऽपि च न दोषः। (स्पष्टं चेदम् 'इको गुणवृद्धी' इति सूत्रशेषे भाष्ये। 'यणः स्थाने इक् भवति, स सम्प्रसारणसंज्ञक' इति तु नाऽर्थः। वाक्यभेदप्रसङ्गात्)। विधिप्रदेशेषु सूत्रशाटकवद्भाविसंज्ञाऽऽश्रयणं बोध्यम्।

नन्वेवम् 'अदुहितरामि'त्यादौ लस्योत्तमपुरुषैकवचने इटि, तस्य संप्रसारणत्वात् 'हल' इति दीर्घाऽऽपत्तिः। न चेष्टाऽऽपत्तिः। 'वाक्यार्थः संज्ञी'त्यादिभाष्योक्तपक्षाऽन्तरेषु दुर्लभत्वात्। (यथासङ्ख्यन्त्वनुवादत्वान्न। न चैवं 'समूलाऽकृतजीवेषु हन्कृञ्ग्रह' इत्यादावपि यथासङ्ख्याऽनापत्तिः। तत्रोपपदसञ्ज्ञाया अपि विधेयत्वेन द्वयोरपि साक्षाद्विधेयसम्बन्धसत्त्वात्, सम्बन्धस्याऽपूर्वस्य बोध्यत्वाच्च। अत्र तु मानान्तरसिद्धसम्बन्धस्याऽप्यनुवाद एवेति चेन्न। सूत्रप्रवृत्त्यभावेऽपि, लौकिकन्यायसिद्धस्य श्रुतिलिङ्गादौ मीमांसकैः परिगणितस्य, स्थानाख्यप्रमाणस्याऽनुवादेऽपि सुलभत्वात्। 'अनुवादे' इत्यस्याऽभावादनित्यत्वाच्च)। 'व्यक्तिसाम्याऽभावेऽपि धर्म-

---

१. 'द्रुहादीनाम्' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. पाठः मनोरमाशब्दरत्नस्थत्वात् क. कुण्डलितः।   २. ख. पाठः। क. ग. नास्ति।

३. 'दुर्लभत्वादिति चेन्न। यथासङ्ख्येन, (स्थानाख्यप्रमाणेन च) अदोषात्' इति ख. ग. पाठः।

४. 'यथासङ्ख्यन्तु' इत्यारभ्य 'अनित्यत्वाच्च' इत्यन्तः क. कुण्डलितः पाठः। ख. नास्ति।

साम्यमादाय यथासङ्ख्यं सुलभमि'ति प्राञ्चः। तन्न। 'ऌकारोपदेशः किमर्थः' इत्यादि 'ऋऌक्'सूत्रस्थभाष्यविरोधात्। तस्मात् 'स्थानेन्तरतम' इत्यपि अत्राऽपकृष्टव्यम्। तेन 'यणः स्थाने स्थानतः सदृशो यण् संप्रसारणसंज्ञक' इत्यर्थान्न दोषः।

यद्वा प्रदेशेषु 'यण इगि'त्येतावतैव सिद्धे, संज्ञाविधानसामर्थ्येन तद्भावितपक्षाऽऽश्रयणान्न दोषः। (विधिप्रदेशेषु तु सूत्रशाटकवद्भाविसंज्ञाश्रयणं तवाऽप्यावश्यकमेव)[1]। 'संप्रसारणाच्चे'त्यादौ-'यण इक' इत्युक्तावपि, विधिप्रदेशेषु क्लृप्ततयाऽन्तरङ्गतया च स्थानसम्बन्धलाभः। तद्भावितत्वाऽऽश्रयणादेव च 'अक्षद्यूश्चाऽसावरुणश्च 'अक्षद्यू-अरुण'[2] इत्यादौ पूर्वरूपं न। समानाऽङ्गग्रहणन्तु भाष्ये प्रत्याख्यातम्। तथा च भाष्यं–'शकह्वर्थमि'-त्यादौ पूर्वरूपाऽभावाय समानाऽङ्गग्रहणं कर्त्तव्यम्। न कर्त्तव्यम्। सम्प्रसारणत्वात्। अन्योऽयं सम्प्रसारणाऽसम्प्रसारणयोः स्थाने एक आदिश्यते। यदि तर्हि नेदं संप्रसारणं 'हूत' इति दीर्घत्वं न प्राप्नोति। वचनप्रामाण्याद्भविष्यती'ति। 'न सम्प्रसारणे' इति निषेधोऽपि पूर्वरूपोत्तरमेव। न च 'यु-उ-अन्-असि'ति स्थितेऽन्तरङ्गत्वाद्दीर्घे, पूर्वरूपं न स्यादिति वाच्यम्। अन्तरङ्गपरिभाषाया अनित्यत्वेनाऽप्रवृत्तेः[3]। न चैवं तत्र सवर्णदीर्घोत्तरं 'न सम्प्रसारणे' इति निषेधो न स्यादिति। वाच्यम्। 'अचः परस्मिन्नि'-ति स्थानिवद्भावादिति दिक्।

---

१. ख. पाठोऽयं, क. ग. नास्ति।

२. 'अक्षद्यू–अरुण इत्यादौ' इति क. ख. ग. पाठः। लघुशब्देन्दुशेखरे तु 'अक्षद्व्यरुण' इति पाठः।

३. 'इतोऽग्रे—'लोकन्यायसिद्धपूर्वनिमित्तकत्वरूपाऽन्तरङ्गत्वाऽपेक्षया शास्त्रीयत्वेन शास्त्रपरत्वमूलकस्य विप्रतिषेधस्य बलवत्त्वमि'त्यपि कश्चित्' इति ख. पाठः।

**वाह ऊठ्** ।'भस्ये'त्यधिकारः ।'वसोः सम्प्रसारणमि'त्यनुवर्त्तते । तच्चोठो विशेषणम् । तेन 'अलोन्त्यस्ये'ति न । तदाह—**भस्येत्यादि** । ननु ह्रस्व उठेवास्स्तु । वृद्धिविधावप्येवम् । 'छ्वोः शूडि'त्यत्र च 'शुडि'त्येवाऽस्तु । तस्यैव 'ज्वरत्वरे'त्यत्राऽनुवृत्ते'र्जनौरि'त्यादौ न दोषः । 'अक्षद्युरि'त्यत्र च 'हल' इति दीर्घेणेष्टसिद्धिः । न चाऽनकारान्ते उपपदे विशेषः । सम्प्रसारणाऽनुवृत्त्यैव सिद्धे, ऊठ्ग्रहणस्याऽसिद्धपरिभाषायां ज्ञापकत्वं वदता भाष्यकारेण तादृशोपपदाण्ण्वि-विजभावस्य ध्वनितत्वात्, कैयटादिभिः स्पष्टीकृतत्वाच्चेति चेन्न । दीर्घस्य 'अक्षद्यूरि'त्यादौ चरिताऽर्थत्वेनाऽल्विधौ स्थानिवत्त्वाऽभावेन[1] 'शून' इत्यादौ दीर्घाऽभावप्रसङ्गात् । सिद्धान्ते तु 'हल' इति विधानसामर्थ्याद्दीर्घ इति न दोषः । 'वाक्यार्थः संज्ञी'त्यादिपक्षे, तद्भावितग्रहणपक्षे[2] च 'अक्षद्यूरि'त्यत्र दीर्घाऽप्राप्तेश्च ।

'अमि पूर्वं' इत्यतः 'पूर्वं' इति, 'इको यणची'त्यतो'ऽची'ति, 'एकः पूर्वपरयोरि'ति चाऽनुवर्त्तते । तदाह—**सम्प्रसारणादचीत्यादि** । ऊठष्टित्त्वे फलमाह—एत्येधेति । अत्रैव विशेषणाऽर्थष्टकार इति भावः । छन्दस्येवेति । 'छन्दसि सह' इत्यतो 'वहश्चे'त्यत्र 'छन्दसी'त्यनुवृत्तेर्रिति भावः ।

**णिजन्ताद्विर्जिति** । अनेन लोके 'विश्ववाट्'शब्दस्य साधुत्वमात्रमुच्यते, न त्वस्योठ् । णिलोपस्य स्थानिवत्त्वात् । भसंज्ञाऽक्षिप्तप्रत्ययेन वाहो विशेषणादित्याहुः । 'विज्'ग्रहणं क्विपोऽप्युपलक्षणम् । न च तत्र सम्प्रसारणं, णिलोपस्य स्थानिवत्त्वन्तु 'क्वौ विधिं प्रती'ति निषिद्धमिति वाच्यम् । 'वच्यादिभ्यो विहिते किती'ति व्याख्यानस्य 'अचः परस्मिन्नि'त्यत्र काम्यच्सूत्रे च[3] भाष्ये उक्तत्वेन, ण्यन्तात्क्वौ सम्प्रसारणाऽप्राप्तेः ।

---

१. 'स्थानिवत्त्वाऽभावेन च' ख. पाठः ।

२. 'तद्भावितग्रहणपक्षे च' इति ख. नास्ति ।

३. चकारः ख. नास्ति ।

लक्षणप्रतिपदोक्तपरिभाषया क्विशब्दमुच्चार्य विहितविधेरेव तत्र ग्रहणाच्च[1]। अत एव काम्यच्सूत्रोक्तविहितविशेषणपक्ष-तदितरपक्षयोः फलैक्यम् ।

([2]ये तु 'गोमत्यतेरप्रत्यये गोमानि'त्यादिभाष्येऽप्रत्ययपदस्य सङ्कोचाऽभावाय 'क्वौ लुप्तिमि'त्यत्र क्विपदं विचोऽप्युपलक्षणमाहुस्तन्मते विच्यपि ऊठ् भवत्येवेत्याहुः) । वस्तुतस्तु 'विभाषा पूर्वाह्णाऽपराह्णाभ्यामि'ति सूत्रे 'प्रष्ठौह आगतं प्रष्ठवाड्रूप्यमि'ति भाष्ये लौकिके विग्रहवाक्ये प्रष्ठौह' 'इति प्रयोगात् 'वहश्चे'त्यत्र 'छन्दसी'ति नाऽनुवर्त्तते[3] । ध्वनितं चेदम्'इति पक्षे' इत्युक्त्या **मूलकृता ।**

**चतुरनडुहो**। 'इतोऽत्सर्वनामस्थाने' इत्यतः 'सर्वनामस्थाने' इति वर्त्तते ।

**सावन** । 'आच्छीनद्योरि'त्यतो नुमनुवर्त्तते, 'आदि'ति च । तदाह— **आदित्यधीति । विशेषविहितेनेति** । यामुटा सीयुडिवेत्यर्थः । **न बाध्यत** इति उपजीव्यत्वादिति भावः । **अमा चेति ।** 'अम् संबुद्धावि'ति विशेषविहितेनाऽमेत्यर्थः । नुम उपजीवकत्वेन विरोधाऽभावात् ततः प्राक् तस्याऽप्राप्तेश्चेति भावः । क्वचित्तु **'आमा च नुम्न बाध्यते'** इति पाठः । तत्राऽयमर्थः 'बह्वनड्वांही'त्यादौ 'नपुंसकस्ये'ति नुम् परत्वादामा बाध्येत । पुनः प्रसङ्गविज्ञानात्तु न बाध्यते' इति **दत्वं नेति** । न चैवं नुमोऽविकृतरूपश्रवणाऽर्थत्वे'अनड्वांस्तत्रे'त्यत्र रुत्वमपि न स्यादिति वाच्यम् । तस्मिन् उपदेशवैयर्थ्याऽभावात् । **संयोगान्तलोपस्येति** । ह्रस्थानिकस्येत्यर्थः । एवं च नस्य प्रातिपदिकान्तत्वाऽभाव इति भावः ।

**अनड्वानिति** । 'अनः=शकटं-वहतो'ति विग्रहः । 'वहेः क्विबनसि, अनशो डश्च' । यजादित्वात् सम्प्रसारणम् ।

---

१. **'ग्रहणात्' ख. पाठः ।**

२. अयं पाठः क. कुण्डलितः । ख. ग नास्ति ।

३. **'नानुवर्त्तते इत्याहुः' ख. पाठः ।**

**वसुस्रंसु** । 'ससजुषे'त्यतः 'से'ति वर्त्तते । तदाह—**सान्तवस्वन्तस्येति** । वसुः प्रत्ययः, तेन तदन्तग्रहणमिति भावः । 'वसु स्तम्भे' इत्यस्य तु न ग्रहणम् । व्याख्यानात् । स्रंसु-ध्वंस्वोस्तु **'साऽन्ते'**ति न विशेषणम्, अव्यभिचारात् । न च तयोर्विचि, सुपि, संयोगाऽन्तलोपे, व्यभिचारोऽस्त्येवेति वाच्यम् । स्रंसुध्वंस्वोरनभिधानेन विचोऽभावात् । विचोऽसार्वत्रिकत्वाच्च । अत एव भाष्यकृता 'सस्ये'त्यनुवृत्तौ 'पपिवानि'त्यत्रैव दत्वशङ्का कृता, अनुवृत्तौ च 'अनडुद्भ्यामि'त्यत्रैव दत्वाऽभावशङ्का कृतेति दिक् ।

**सहेः सा** । 'अपदान्तस्य मूर्द्धन्य' इत्यधिक्रियते । **सहेरिति किम्** ? । यस्य नाम्नि 'ड'श[1]ब्दोऽस्ति, स डेन सह सडः, तदपत्ये 'साडौ' मा भूदिति ।

**लोके** त्विति । एतेन 'तुराषाण्मेघवाहन' इत्यादौ ण्विरेव दुर्लभः, प्रागेव तु षत्वमिति **हरदत्तः** परास्तः । 'नहिवृती'तिसूत्रेण क्विवन्तसहावेव दीर्घविधानादाह—**अन्येषामपीति** ।

निरनुबन्धकपरिभाषालभ्याऽर्थमाह—**प्रातिपदिकस्येति** । तेन 'अक्षद्यूरि'त्यादावन्तरङ्गत्वादू[2]ठि, स्थानिवत्त्वेन दिव्त्वेऽपि नौत्त्वम्, दिवु[3]धातोः साऽनुबन्धकत्वात् । स्पष्टं चेदमत्र भाष्ये ।

अत एव 'अक्षद्यूरि'त्यत्र 'सावपि पदमि'तिपक्षे उत्त्वमपि न । न चैवं 'डिवि'प्रत्ययान्तोऽपि साऽनुबन्धकः । प्रत्ययस्य तथात्वेऽपि, तदन्तस्याऽतथात्वादिति दिक् ।

औतस्तकार उच्चारणाऽर्थो न त्वित्संज्ञकः, फलाऽभावात् । न च 'तित्स्वरितमि'ति स्वरितत्वं फलम् । 'र्तिति प्रत्ययग्रहणं कर्त्तव्यमि'ति वार्त्तिकेन प्रत्यय एव तत्प्राप्तेः 'प्रत्ययाऽप्रत्यययोरि'ति परिभाषया प्रत्ययस्यैव ग्रहणाच्च ।

---

१. यथा 'मृड' इति । तेन सडः=मृड इत्यवधेयम् ।

२. 'दूठि स्थानिवत्त्वेन' इति क. ग. नास्ति । ३. 'दिव्धातोः' ख. पाठः ।

**परे** तु अनुवादे उच्चारणाऽर्थत्वेऽपि, विधेयविषये तत्त्वं प्रमातुमशक्यम्। अपूर्वविधानेन तान्तस्यैव विधानमित्यस्याऽप्यापत्तेः। तस्मादित्संज्ञैवोचिता। किञ्च द्वितीयवर्णोच्चारणे सहायसम्पादनेन चरितार्थेषु तत्र तत्र विशेषणार्थेष्विव प्राप्तहलन्त्यसूत्राऽप्रवृत्तौ मानाऽभावात्। अत एव 'तस्य लोप' इति सूत्रभाष्येऽनुबन्धानामेकान्तत्वपक्षे 'दिव औदि'त्यादीनां सर्वाऽऽदेशत्वाऽऽपादनं सङ्गच्छते। एवं विधेयविषये उच्चारणाऽर्थाऽचामप्यनुनासिकत्वेनेत्संज्ञा भवत्येव। अत एव 'वेरपृक्तस्ये'तिसू[1]त्रभाष्ये अपृक्तग्रहणाऽभावे 'दर्विरि'त्यादौ लोपमाशङ्क्य 'अनुनासिकः परो यस्य तादृशस्य विशब्दस्य ग्रहणमि'त्युक्तं सङ्गच्छते। ल्यु[2]डादावुकारस्याऽनाऽकादेशैर्निवृत्तिरिति न तस्येत्सञ्ज्ञा। फलाऽभावात्। अत एव तस्याऽननुनासिकताऽपि 'युवोरनाकावि'ति सूत्रे भाष्ये सूचिता। एवं नन्द्यादिभ्यो ल्युप्रत्ययेऽपि। अत एव 'गाङ् लिटी'ति सूत्रे भाष्ये 'नन्दने'ति टाबन्तप्रयोगः। 'ल्युः कर्त्तरि पुंसी'ति **त्वमरस्य प्रमादः**।

अनुवादविषये त्वित्संज्ञाशास्त्राऽप्रवृत्तेरुच्चारणाऽर्थं वर्णसहितसमुदायस्य तद्रहिते लक्षणेति तत्त्वम्। 'न विधौ परः शब्दार्थ' इति विधेयबोधके लक्षणाऽनुचितैव। न चैवं 'णौ गमिरि'त्याद्यादेशानां नुमाप[3]त्तिः। स्थानिवद्भावेन भाव्यातिदेशिकधातुत्वं गृहीत्वाऽत्र[4] धातुनिर्देशे इकः

---

१. 'सूत्रेऽपृक्तग्रहणाऽभावे' क. ग. पाठः।

२. 'ल्युडादौ' इत्यारभ्य 'प्रमादः' इत्यन्तः क. ग. पाठः। ख. नास्ति।

३. एतदुत्तरं—'हुण्डेत्यादिसिद्ध्यर्थमावश्यकत्वात् 'धातूपदेशे (इदितो) नुमि'त्यर्थान्न दोषः। येषां हि पदार्थोपस्थितिकाले धातुत्वं, तेषामुपदेशो 'धातूपदेश' इत्युच्यते। अत्र तु स्थानिवद्भावेन विधानोत्तरं धातुत्वम्। अत एव जग्धौ न दोषः। यद्वा स्थानिवद्भावेन'—इति ख. पाठः। क. कुण्डलितः।

४. 'गृहीत्वाऽत्रापि धातुनिर्देशे इगेवाऽयम्। स्वराऽप्रवृत्तिस्तु' ख. पाठः।

सत्त्वेनाऽक्षतेः । 'गमेरिडि'तिवन्नोपधालोपः । स्वराऽप्रवृत्तिस्तूक्तयुक्त्यैवेति[1] । ध्वनितं चेदमद्ड्तरादिसूत्रे भाष्येऽपीति वदन्ति । न च 'द्यौष्पितः पृथिवी मारध्रुगि'तिपठ्यमानस्वरितविरोध इति वाच्यम् । 'दिवेर्डिविरि'ति व्युत्पत्तिपक्षे प्रत्ययस्वरेण, अव्युत्पत्तिपक्षे फिट्स्वरेणेकारस्योदात्तत्त्वे, स्रंसनधर्मणो हलः स्थाने जायमानत्वेन औकारस्याऽनुदात्तत्वे, यणि, 'उदात्तस्वरितयोर्यण' इत्यनेन स्वरितसिद्धेः । न चैवं 'पृथिवी उत द्यौरि'-तिपठ्यमानाऽन्तोदात्तत्वविरोधः । 'द्यो'शब्दस्य सत्त्वात् ।

'दिव उदि'ति सूत्रे उकारोऽन्तोदात्तो निपात्यते । तेन 'द्युभिरक्तुभिरि'-ति पठ्यमानमन्तोदात्तत्वं सिद्धम् । न च निपातनस्वरसामर्थ्यात् 'ऊडि-दमि'त्यादिविभक्तिस्वराऽप्राप्तौ, 'दिवो झलि'ति तन्निषेधो व्यर्थ इति वाच्यम् । 'विमलद्यु' इत्यादौ प्रकृ[2]तिस्वरबाधेन दिव उत्सूत्रस्थनिपातनस्व-रस्य चारितार्थ्येन, विभक्तिस्वराऽबाधकत्वादित्याहुः ।

**लोपो नेति** । 'अनल्विधा'वित्यत्र पञ्चमीसमासस्याऽप्याश्रयणादिति भावः । **पदान्त इति** । 'पदान्तादि'त्यनुवृत्तस्य विभक्तिविपरिणाम इति भावः । **सुद्युभ्यामिति** । ऊठ् तु न । 'क्ङिती'त्यनुवृत्तेः । नन्वत्रोकारस्य स्थानिवत्त्वाद्वत्वेन लोपः स्यात् । न च वत्वं न शास्त्रीयम् । 'स्वं रूपम्', 'अणुदिदि'ति च परिभाषणेन तस्य शास्त्रीयत्वात् । न च तथाऽपि तस्य हल्त्वाऽपेक्षया विशेषधर्मत्वात्कथमतिदेशः ? 'स्थानिवदि'तिसङ्ग्राहक-वाक्येषूपस्थितधर्माऽपेक्षया विशेषधर्मत्वाऽभावात् । स्थानिवत्सूत्रे विशेषा-ऽतिदेशस्याऽपि सत्त्वाच्चेति चेन्न । अल्विधित्वात् ।

अत्र 'हल' इति दीर्घो न । तद्भावितपक्षाऽऽश्रयणात् । अन्ये तु भावि-दीर्घस्य तपरत्वेन वारणान्न दोषः । अन्यथा 'उ' इति नपुंसकनिर्देशेनैव

---

१. 'तूक्तयुक्त्यैवेति वदन्ति' ख. पाठः ।

२. 'तिस्वरबाधेन चारितार्थ्यादित्याहुः' ख. पाठः ।

सिद्धौ, तद्वैयर्थ्यं स्पष्टमेव। न चैवं 'द्यूच' इत्यादौ 'चावि'ति दीर्घोऽपि न स्यात्। बहिरङ्गतया 'चावि'त्यस्याऽसिद्धत्वेन वारयितुमशक्यत्वात्। 'द्युकाम' इत्यत्र 'सम्प्रसारणस्ये'त्युत्तरपदनिमित्तदीर्घस्तु बहिरङ्गोऽपि न। प्रत्यासत्तिन्यायेनोत्तरपदनिमित्तसम्प्रसारण एव तत्प्रवृत्तेः। स्पष्टं चेदं **कैयटादौ**। न चाऽत्र विधेयत्वेन तपरसूत्राऽप्रवृत्त्या, वाच्यवृत्त्या तपरत्वेन भाविदीर्घव्यावृत्तिर्दुर्लभेति वाच्यम्। 'अप्रत्यय' इत्यस्याऽसम्बन्धेन विधेय-विषयेऽपि प्रवृत्तेः। सूत्राऽप्रवृत्तावपि तपरत्वसामर्थ्येन वल्क्षफलजातीय-फलकल्पनस्यैवौचित्याच्च। अत एव 'तपरत्वसामर्थ्यात् 'कुरुते' इत्यादौ न गुण' इति स्थानिवत्प्रकरणे भाष्ये स्पष्टमित्याहुः।

'तित्स्वरितमि'ति सूत्रेऽस्य तपरत्वस्य भाव्यमाने उकारे सवर्णग्राहक-[1]ताज्ञापकताया भाष्ये उक्तत्वेन, 'विमलद्यु' इत्यादौ साऽवकाशोत्त्वाऽपेक्षया परत्वाद् 'द्युभ्यामि'त्यादौ 'क्ङिती'त्यननुवृत्तिपक्षे 'च्छ्वोरि'त्यूठि, पुनः-प्रसङ्गविज्ञानेन ह्रस्वोकारविध्यर्थं च तपरत्वमिति प्रकृतसूत्रभाष्ये उक्तत्वेन चाऽयुक्तमेत[2]त्। '[3]अङ्गसञ्ज्ञादिसापेक्षदीर्घस्य बहिरङ्गत्वादनेन व्यावृत्तिर-शक्या चे'ति परे।

**षट्चतुर्भ्यश्च**। ननु 'ष्णान्ते'ति सूत्रे रेफप्रक्षेपेण रेफाऽन्तस्याऽपि षट्संज्ञा विधेया, किमत्र, 'ष[4]ट्त्री'तिसूत्रे च चतुर्ग्रहणेन?। 'तिस्रः' 'चतस्र' इत्यत्र रेफाऽन्तत्वेन षट्त्वेऽपि, सन्निपातपरिभाषया न 'षड्भ्य' इति लुक्। अत एव 'त्रीणी'त्यत्र न दोष इति चेन्न। 'चत्वार' इत्यादौ लुगापत्तेः। तत्प्रतिषेधाऽर्थं 'रो ने'त्यादियत्ने तु पदलाघवाऽभावः।

---

१. 'सवर्णग्रहणज्ञापकताया भाष्ये' ख. पाठः।

२. 'उक्तत्वेन चाऽयुक्तमेतदित्यन्ये। षट्चतुर्भ्यश्च' ख. पाठः।

३. 'अङ्ग' इत्यारभ्य 'इति परे' इत्यन्तः क. पाठः ख. ग. नास्ति।

४. 'षट्त्रीत्यत्र च' ख. पाठः।

'चतसृण[1]ामि'त्यादौ कार्यकालपक्षे षट्त्वस्य दौर्लभ्येन, षट्स्वराऽनापत्तिश्चेति सूत्राऽऽशयः।

**णत्वं द्वित्वमिति**। न च 'पूर्वत्राऽसिद्ध[2]मद्वित्वे' इति णत्वात्पूर्वं द्वित्वमेव उक्तम्। 'द्वित्वे कर्त्तव्येऽन्यस्याऽसिद्धत्वं ने'त्येव तद[3]र्थो, न तु 'द्वित्वस्याऽसिद्धत्वं ने'ति तदर्थ इत्यदोषात्। यत्तु 'द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यमि'ति वचनसामर्थ्येन वर्णद्वित्वे तदप्रवृत्तिः। न चेदं व्यर्थमेव। अनुस्वारस्यैव द्वित्वेऽन्त्यस्य 'वा पदान्तस्ये'ति परसवर्णे, आद्यस्य तमेव ययं निमित्तीकृत्य 'अनुस्वारस्य ययी'ति परसवर्णे, त्रियकारक'सय्य्यँन्ते'-त्य[4]स्य सिद्धेरिति वाच्यम्। 'वा पदान्तस्ये'त्यस्याऽसिद्धत्वादिति। तन्न। 'द्वित्वे घत्वढत्वाऽऽदीनि सिद्धानो'ति वचनसामर्थ्येन 'सर्वस्य द्वे' इत्यत्राऽपि तदप्रवृत्तौ, तस्य 'द्रोग्धा-द्रोग्धे'त्युदाहरणपरभाष्यविरोधाऽऽपत्तेः। तस्मात् घत्व-ढत्व-सिद्धत्ववचनवदिदमप्येतद[5]नाश्रित्यैव। अत एव 'वाक्','वाक्क्' इत्यनचि चेत्युदाहरणप[6]रभाष्यं सङ्गच्छते। अन्यथा चर्त्वस्याऽसिद्धत्वात् गस्यैव द्वित्वेऽन्त्यस्य 'वाऽवसाने' इति चर्त्वे, पूर्वत्र गस्यैव श्रवणं स्यात्।

न च तस्याऽपि 'खरि चे'ति चर्त्वम्। 'वाऽवसाने' इत्यस्याऽसिद्धत्वेन खर्परत्वाऽभावात्। न च सिद्धान्तेऽप्यवसाने चर्त्वस्याऽसिद्धत्वाद्गकारे, झशि[7] परे जश्त्वे, उक्तरीत्यैव चर्त्वाऽभावे, गश्रवणं दुर्वारमिति वाच्यम्। एतद्भाष्यप्रामाण्यात् 'पूर्वत्राऽसिद्धमि'त्यस्य 'कृतेऽपि द्वित्वे प्रत्यासत्त्या

---

१. 'चतसृणामित्यत्र' ख. पाठः।
२. 'सिद्धीयमद्विर्वचने' ख. पाठः।
३. 'तदर्थात्। न तु द्वित्वस्याऽसिद्धत्वं वार्यते' ख. पाठः।
४. 'सय्य्यँन्तेत्यसिद्धेः' ख. पाठः।
५. 'एतदनाश्रित्येत्येव युक्तम्' ख. पाठः।
६. 'उदाहरणपरं भाष्यं ख. पाठः।
७. 'झशि च परे' ख. पाठः।

द्वित्वाऽऽश्रयस्य कार्ये कर्त्तव्येऽसिद्धत्वं ने'त्यप्यर्थान्न दोषः। ध्वनितं चेदं 'सन्यङोरि'त्यत्र **कैयटे**।

**रोः सुपि**। सुप् न प्रत्याहारः। 'खरी'त्यनुवृत्तेः। न हि सप्तमीबहुवचनादन्यः खरादिः सुबस्ति। तेन 'पयोभ्यामि'त्यत्र विध्यर्थत्वं न शङ्क्यम्। एवं च 'खरवसानयोरि'त्येव सिद्धे, नियमोऽयमित्याह—**रोरेवेति**। 'रोः सुप्ये'वेति नियमस्तु न। 'हलोऽनन्तराः संयोग' इति[1] निर्देशात्[2]। **द्वित्वे इति**। 'अचो रहाभ्यामि'त्यनेन। 'अचो रहाभ्यामि'त्यतो द्वे' इति, 'नादिन्याक्रोशे' इत्यतो 'ने'ति चाऽनुवर्त्तते। तदाह—**न द्वे स्त' इति**। **न च द्वित्वेऽपि न क्षतिः**, 'झरो झरी'ति लोपादिति वाच्यम्। तस्य वैकल्पिकत्वात्। 'अप्स्सरा' इत्यादौ 'शरोऽची'त्यनेन 'शरः खय' इत्यस्य न निषेधः, 'नाऽऽदिनी'त्यादिसाहचर्येण वार्त्तिकाऽनिषेधात्।

**प्रियचत्वार इति**। आङ्गत्वात्तदन्तस्यापि 'चतुरनडुहोरि'त्याम्।

**गौणत्वे त्विति**। बहुवचनेनाऽर्थस्य प्राधान्यसूचनात्[3]। यथा चैतत्तथा 'षड्भ्यो लुगि'त्यत्रोपपादितम्। यत्तु 'ष्णान्ता षडि'त्यत्र सङ्ख्यापदाऽनुवृत्तेस्तस्य[4] च सङ्ख्याबोधकशब्दपरत्वात्प्रधानाऽप्रधानन्यायेन सङ्ख्यारूप-

---

१. 'इत्यादिनिर्देशात्' ख. पाठः।

२. 'निर्देशादित्याहुः' ख. पाठः।

३. इतोऽग्रे—'तथा हि 'षट्चतुः'शब्दौ संज्ञि-तदर्थसङ्ख्याऽऽश्रयोभयबोधकौ। व्याख्यानात्। तेषां बहुत्वाद्बहुवचनम्। तत्राऽर्थातपरत्वमामः शब्दद्वारकं बोध्यम्। शेषषष्ठ्यर्थे पञ्चमी। स च स्वगतसङ्ख्याऽनुवादकत्वरूपः। एवं च षट्संज्ञकचतुःशब्दाऽन्ताऽङ्गात्परस्योपात्तषडाद्यर्थगतसङ्ख्याऽनुवादक(स्याऽऽमो नुडित्यर्थः)। लक्ष्यसंस्कारकवाक्यान्यपि 'पञ्चभ्यो' 'दशभ्य' इत्यादिबहुवचनयुक्तान्येव'—इति मध्ये खण्डित इव ख. पाठः।

४. 'तस्य चाऽर्थपरत्वात्' ख. पाठः।

५. 'न्यायेनाऽर्थस्याऽनुपसर्जनस्यैव' ख. ग. पाठः।

स्याऽनुपसर्जनस्यैव ग्रहणेनोपसर्जने षट्त्वमेव नाऽस्ती'ति। तन्न। सङ्ख्यापदेनोपस्थितसङ्ख्यायाः सङ्ख्येयपर-पञ्चाऽऽदौ प्राधान्याऽभावेन षट्संज्ञाऽनापत्तेः। 'षडि'त्यन्वर्था संज्ञा तु न। तदुपस्थापितषट्त्वस्य पञ्चादावनन्वयात्। न च षट्त्वं सङ्ख्यावत्सङ्ख्येयोपलक्षणम्। सङ्ख्यापदाऽनुवृत्तिपरभाष्यविरोधाऽऽपत्तेः। 'ष्णान्तशब्दाः सङ्ख्यावत्सङ्ख्येयवाचकत्वसमानाधिकरणषट्पदवन्त' इत्यर्थेनैव सङ्ख्यावाचकत्वलाभात्। अत एवाऽऽकडारसूत्रे 'डु'संज्ञ[1]या व्यवहारो भाष्ये।

किञ्चैवं सति 'प्रियपञ्चा द्रौपदी'त्यत्र टाप्निषेधाऽनापत्तिः। वस्तुतोऽस्य गौणेऽप्रवृत्तौ कस्य भाष्यस्याऽनुग्रह इति चिन्त्यम्। 'नामी'तिसूत्रस्थभाष्यात्तु विपरीतं प्र[2]तीयते इति तत्रैव निरूपितम्। 'न षट्स्वस्रादिभ्य' इत्यादौ शब्दबाहुल्याऽभिप्रायेण बहुवचनवत्, 'तिसृभ्योजस' इत्यादौ प्रयोगबाहुल्याऽभिप्रायेण तद्वच्च, इहाऽपि बहुवचनं वक्तुं शक्यम्। 'षड्भ्यो लुगि'त्यत्र तु सर्वाऽऽदिसूत्रस्थभाष्यप्रामाण्यात्तथा कल्पनमिति दिक्।

**कमला** लक्ष्मीः, **कमलं** पद्मम्, 'तदाचष्टे' इति णिचीष्ठवद्भावाट्टिलोपे, कर्त्तरि क्विपि, 'णेरनिटी'ति णिलोप[3]ः। न[4] च 'अणोऽप्रगृह्यस्ये'तिसूत्रे न परेणाऽण्ग्रहणम्, 'न हि पदान्ताः परेऽणः सन्ति'। नन्वयमस्तिकर्त्तृ

---

१. 'आकडारसूत्रे एतत्स्थाने डुसंज्ञया' इति ख. पाठः।

२. 'प्रतीम इति' ख. पाठः।

३. इत उत्तरं—'न च 'न हि पदान्ताः परेऽणः सन्ती'ति लण्सूत्रस्थभाष्यविरोधात् 'कमलि'त्याद्यसङ्गतमिति वाच्यम्। 'अनुनासिकप्राप्तिविषयीभूता न सन्ती'ति तदर्थात्। अत एवाऽप्रगृह्यस्येतिपर्युदासाश्रयणमूलकम् 'अच एव हि प्रगृह्या भवन्ती'ति तदुत्तरभाष्येण तदुपपादनं सङ्गच्छते। अत एव 'कर्तॄ' 'हर्तॄ' इत्यादि प्रयोगाः सङ्गच्छन्ते—'इति ख. पाठः।

४. 'न च' इत्यारभ्य 'द्रष्टव्यम्' इत्यन्तः क. पाठ, ख. ग. नास्ति।

हृत्तृ । एवन्तर्हि सामर्थ्यात्पूर्वेणैव । अप्रगृह्यस्येतिपर्युदासेनाऽक्ष्वेव तत्प्रवृत्त्या, परेणाऽण्ग्रहणेऽपि, परेषामणां पदान्ते सत्त्वेऽपि, 'अण' इत्यस्य व्यर्थत्वादिति लण्सूत्रस्थभाष्यविरोधात्कमलित्याद्यसङ्गतमिति वाच्यम् ।

भाष्योक्तपर्युदासेनैव हृल्ष्वप्रवृत्त्या तदभावकल्पने मानाऽभावात् । 'न हि पदान्ता' इति पूर्वपक्ष्युक्तिस्तु एजन्तानां, यान्तानां, रान्तानां च तथाप्रयोगाऽदर्शनमात्रेण सर्वाऽप्रयोगभ्रान्त्या । कर्त्तृ हृत्रिति चैषामप्युपलक्षणं द्रष्टव्यम् । अत एव च 'भोभगो' इतिसूत्रस्थ 'वृक्षवृक्रोती'ति भाष्यप्रयोगः सङ्गच्छते । तोयमाचक्षाणस्तोय् इति यान्तास्तु न सम्भवन्ति । क्विपि 'लोपो व्योरि'ति यलोपात् । णिलोपस्य स्थानिवत्त्वन्तु, न, यलोपे 'न पदान्ते'ति तन्निषेधात् ।

**प्रशानिति** । 'शमु उपशमे' क्विप् । 'अनुनासिकस्ये'ति दीर्घः । न चाऽस्य स्वराऽऽदिपाठादव्ययत्वमिति 'प्रशामावि'त्याद्यसङ्गतमिति वाच्यम् । अन्वर्थसंज्ञाबलेन, पूर्वोत्तरसाहचर्येण चाऽसत्त्वार्थकस्य साम्यवाचिन एवाऽव्ययत्वात् । अयन्तु शान्तिमद्वाचकः । स्वरादीनां तु पाठसामर्थ्यात्सत्त्ववाचकत्वेऽप्यव्ययत्वमिति दिक् ।

**विभक्ताविति** । 'अष्टन आ' इत्यतोऽनुवृत्तेरिति भावः । नन्वत्र '**इम**'[1] इत्येव सूत्र्यताम् । 'त्यदादीनाम' इत्यनुवर्त्तते । 'त्यदादीनामि'त्यनुवृत्तेश्च सिद्धान्ते उपसर्जने न । किम्शब्दश्च द्वेः प्राक् पठिष्यते इति, त्यदादीनां द्विपर्यन्तानामेव 'तदोः स' इत्यत्रेवाऽर्थाधिकाराऽनुरोधादिह ग्रहणेऽपि न दोषः एवं च 'किंसर्वनामबहुभ्य' इत्यत्र 'किम्' ग्रहणं न कार्यम् । स्पष्टं चेदं 'त्यदादीनाम' इत्यत्र भाष्येऽत्र कैयटे च । 'नाऽनर्थके' इति निषेधादारम्भसामर्थ्याच्च सर्वादेशोऽपि सिद्धः । न च 'इमौ' इत्यत्राऽप्यापत्तिः । 'अङ्गकार्ये कृते पुनर्नाऽङ्गकार्यमि'ति निषेधात् । न चेमः 'कु

---

१. 'इम अ' इत्येव सूत्र्यताम् । 'त्यदादीनाम्' इत्यनुवृत्तेश्च तिमादिषु क्विबन्तेषु नाऽतिप्रसङ्गः । अत एव सिद्धान्ते उपसर्जने न' ख. पाठः ।

तिहोः' 'क्वाऽती'त्यादेशे ककारद्वयश्रवणाऽऽपत्तिः। 'उ तिहोः' 'अती'त्येव साम्राज्यात्[1]। 'नाऽनर्थके' इति निषेधान्नान्त्याऽऽदेशत्वम्। अङ्गवृत्तपरिभाषया च 'क्वे'त्यत्र गुणो नेत्याशङ्क्याह—**अकच्सहितस्यापीति**। त्वन्मते 'कक' इति स्यात्। मम तु तन्मध्यपतितन्यायेन साऽकच्कस्य किम्शब्दत्वात्सिद्धम्। स्पष्टं चेदं 'त्यदादीनाम' इत्यत्र भाष्ये।

अकज्विषये 'निर्दिश्यमानस्ये'ति परिभाषा तु न प्रवर्त्तते, काऽऽदेशविधानसामर्थ्यात्। न च प्रियकुत्सनाऽऽदिषु लिङ्गसङ्ख्याकारकाऽन्वयोत्तरं प्रवृत्तेर्विभक्त्युत्पत्त्यनन्तरमकच्, तत्र परत्वात्कादेशेऽकचि 'कक' इत्येव स्यादिति वाच्यम्। 'प्रातिपदिकादि'त्येवाऽनुवृत्तेः शब्देन सुपोनिमित्तत्वेनाऽनाश्रयणात्, काऽऽदेशाऽपेक्षयाऽकचोऽन्तरङ्गत्वात्। किञ्च 'उतिहोरि'ति न्यासे उकारस्याऽन्त्याऽऽदेशत्वाऽऽपत्तिः। एतदर्थं 'नाऽनर्थके' इत्यस्याऽऽरम्भे तु विपरीतं गौरवम्। 'कु तिहोरि'ति पाठे तु कद्वयश्रवणाऽऽपत्तिरिति दिक्।

**इदमो मः**। 'तदोः सः सावि'त्यतोऽनुवृत्तेराह—**साविति**। अत्राऽपि[2] 'त्यदादीनामि'त्यनुवर्त्तते। तेनोपसर्जने नेति बोध्यम्)।

इदोऽय्। **साविति**। 'यः सावि'त्यतोऽनुवृत्तेरिति भावः।

**दश्च**। इह 'अष्टन' इत्यतो 'विभक्तावि'त्येवाऽनुवर्त्तते, न तु 'तदोरि'त्यतः 'सावि'ति। उत्तरसूत्रे पुनः 'सौ' ग्रहणात्। साविदमोदस्याऽसम्भवाच्च। तदाह—**विभक्ताविति**। ([3]**नास्तीति**। अत्र मानन्तु 'सम्बुद्धिरि'ति महासञ्ज्ञाकरणमित्यवोचाम)। **उत्सर्ग इति**। तेन 'तदोरि'ति सूत्रे

---

१. 'साम्राज्यात्' इत्येव लिखितादर्शेषु त्रिष्वपि पाठः। परं 'सामञ्जस्यात्' इति पाठोऽत्र सम्भाव्यते।

२. अयं ख. पाठः क. ग. नास्ति।

३. अयं क. कुण्डलितः पाठः। ख. ग. नास्ति।

'अनन्त्ययोरिति किम् हे स' इति भाष्यं न[1] विरुध्यत इति भावः। न च

**'इदमस्तु सन्निकृष्टं, समीपतरवर्ति चैतदो रूपम्।**
**अदसस्तु विप्रकृष्टं, तदिति परोक्षे विजानीयात् ॥'**

—इत्युक्तेरेवंविधस्याऽर्थस्याभिमुखीकरणाऽसम्भव इति वाच्यम्[2]। विप्रकृष्टस्य, परोक्षस्य च 'हा पितः क्वाऽसि हे सुभ्रु' इत्यादौ बहुशः सम्बोधनदर्शनात्[3]। **प्रत्याहार इति**। 'विभक्ताावि'त्वेन विशेषणाट्टापो न ग्रहणमिति भावः। न चेद्शब्दो नाऽऽप्परः त्यदाद्यत्वेन व्यवधानादिति वाच्यम्। 'येन नाव्यवधानमि'त्याश्रयणात्। आप्परत्वेनेदम एव विशेषणाच्च।

**हलादाविति**। 'आपी'ति वर्त्तते। 'हल्यशि'त्येव सूत्रयितुमुचितम्। न चेदमाचष्टे इदयति, ततः क्विप्, 'इद्', ततो भ्यामादौ दोष इति वाच्यम्। णिलोपस्य स्थानिवत्त्वेन तत्र तदप्रवृत्तेः। 'अक' इति पर्युदासेन, 'त्यदानीनामि'त्यनुवृत्त्या च गौणे एतदप्रवृत्तेश्च।

नन्विदोऽन्त्यस्य लोपः प्राप्नोतीत्यत आह—**नाऽनर्थके** इति। अत्र च मानम् 'इदोऽय् पुंसी'ति सूत्रस्थमिद्ग्रहणम्। अन्यथा 'इदमो मः' 'इदश्च' 'यः सौ' 'अय् पुंसी'त्येव सूत्रयेत्। 'अनभ्यासविकारे' इत्यंशस्तु 'अर्त्तिपिपर्त्योरि'तिनिर्देशेन ज्ञाप्यत इति बोध्यम्। [इयं च परिभाषा उपधासंज्ञासूत्रे भाष्ये फलानामन्यथोपपादनेन प्रत्याख्याता। तदन्यथासिद्धिं च तत्र तत्र दर्शयिष्यामः।

प्रत्याख्याने तु 'अनाप्यक' इत्यतो'ऽनि'त्यनुवर्त्त्य, 'हली'ति सप्तम्या षष्ठीं प्रकल्प्य, अन एवाऽलोन्त्यस्येति नलोपे, पररूपे चेष्टसिद्धिर्बोध्या।

---

१. 'भोऽच्युतेत्यादि च न विरुध्यते इति भावः' इति ख. पाठः।

२. इतोऽग्रे संनिकृष्टादिशब्दानामिव एषामपि सम्बोध्यसमर्पकत्वे बाधकाऽभावात्। विप्रकृष्टस्य 'हा पितः क्वाऽसि हे सुभ्रु इत्यादौ' इति ख. पाठः।

३. 'दर्शनाच्च' ख. पाठः।

ननु 'अ–भ्यामि'तिस्थिते 'सुपि चे'ति दीर्घो न प्राप्नोति । स ह्यलोन्त्य-परिभाषयाऽन्त्यस्य भवति । न हि स्वस्यैव स्वयमन्त्यः । अङ्गस्याऽकार-रूपत्वेनाऽदन्तत्वाऽभावाच्चेत्यत आह—**आद्यन्तवदिति** 'आदिरन्त्येने'त्यत्रोक्तरीत्याऽऽद्यन्त[1]शब्दयोर्विशिष्टशक्ततया, तत्प्रयुक्तकार्याण्यसहाये न स्युरित्ययमारम्भः । **एकस्मिन्निति** । असहाये इत्यर्थः । ('तद[2]ादितदन्तोद्देश्येन क्रियमाणं कार्यमसहायेऽप्यादाविवाऽन्त इवे'त्याद्यन्वयः) ।

उपमेये सप्तमीदर्शनात्सप्तम्यर्थे वतिरित्याह—**आदाविवेत्यादि ।** (सप्त[3]म्यर्थश्चाऽत्राऽविवक्षितः । तेनाऽऽभ्यामित्यादेः सिद्धिः) । एकस्मिन्निति किम् ? । दरिद्रातेरिवर्णाऽन्तलक्षणोऽच् च मा भूत् । अ[4]ादिवत्त्वोदाहरणम्–'औपगवः' । अत्राऽण आद्युदात्तत्वम् ।

'आद्यन्तवदि'ति व्यपदेशाऽतिदेश' इति **प्राञ्चः** । कार्याऽर्थत्वात् सर्वेषां कार्यस्य प्राथम्याच्च कार्याऽतिदेश एवेति तत्त्वम् । व्यपदेशिवद्भावेन सिद्धे इदं सूत्रं चिन्त्यप्रयोजनम् । व्यपदेशिवद्भावश्चाऽऽवश्यकः । अन्यथा 'कुरुते' 'कुर्वे' इत्यादावनेनाऽन्तत्वव्यपदेशेऽपि 'अन्त्योऽच् आदिर्यस्ये'त्येवंरूपस्य बहुव्रीह्यर्थस्याऽभावाट्टित्वाऽभावेन, टेरेत्त्वाऽनाऽनापत्तेः । 'अवादिष्टामि'त्यादौ सिचो वलाद्यार्द्धधातुकत्वनिबन्धनेडनापत्तेश्च । न च परत्वाद्दीर्घे, ततो हलि लोपे, किमनेनेति वाच्यम् । लोपस्य नित्यत्वात् कृते त्वस्मिन्परत्वाद्दीर्घ एवेति बोध्यम् ।

नन्विद-ए इति स्थिते स्मायादेशात्परत्वादनादेशे 'सकृद्गताविति'पक्षे पुनः 'स्मै'भावो न स्यादत आह—**नित्यत्वादिति** । ननु 'स्मै'भावे कृतेऽप्यनादेशप्राप्तेः सोऽपि नित्यः । न च हलि लोपेन बाधान्न तथेति वाच्यम् । कृताऽकृतप्रसङ्गित्वमात्रेण क्वचिन्नित्यताऽभ्युपगमादिति चेन्न । लक्ष्याऽनु-

---

१. 'आद्यन्त्यशब्दयोः' ख. पाठः  २. ख. पाठः । क. ग. नास्ति ।

३. ख. पाठः क. ग. नास्ति ।

४. 'आदिवत्किम् ? । 'औपगवः' ख. ग. पाठः ।

रोधेन बाधकाऽबाधितप्रसङ्गस्यैवाऽत्र ग्रहणादित्याहुः[1]। 'अन एव लोप' इति मते तु परत्वादनि, पुनः प्रसङ्गविज्ञानात्स्मैभावे, लोपो बोध्यः।

ननु 'अनापी'त्यत्र, 'नेदमदसोरकोरि'त्यत्र च 'अक' इति व्यर्थमत आह—**कारकयोगे त्विति**। 'अव्ययसर्वनाम्नामि'त्यकचीति भावः।

**इदमोऽन्वा**। नन्विदमोऽनुदात्तत्वमात्रविधावपि, अत्वे, हलि लोपेन 'अस्मै' 'आभ्यामि'त्यादेः सिद्धत्वात्किमश्वचनेन ?। टौसोस्त्वेनाऽऽदेशेन बाध एव। न च 'आभ्याम्' 'एभिरि'त्यादौ 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्य' इत्यनेन, 'सावेकाचस्तृतीयादिर्विभक्तिरि'त्यनेन वा विभक्तेरुदात्तत्वे, शेषनिघातेनाऽनुदात्तत्वमपि सिद्धमिति सूत्रमेव व्यर्थमिति वाच्यम्। आद्ये- 'अन्तोदात्तादुत्तरपदादि'त्यतोऽन्तोदात्तादित्यनुवर्त्तनेन, अन्त्ये तदपकर्ष- णेनाऽन्वादेशे तदप्रवृत्तये सूत्रस्याऽऽवश्यकत्वात्। एवं चाऽऽभ्यामित्यादि सर्वाऽनुदात्तं भवति। तथा च श्रूयते 'प्र ते बभ्रू' 'माभ्यां गा अनु' 'एभि- रग्रे' 'प्रेणा तदेषामि'ति[2]। स्पष्टं चेदमत्रैव **कौस्तुभे**, इत्यत आह—**साकच्का- र्थमिति**। शित्वात्सर्वाऽऽदेश इति भावः। ([3]शित्वसामर्थ्यादेव 'निर्दिश्य- मानस्ये'ति परिभाषा न प्रवर्त्तते। इदमपि सूत्रं संज्ञोपसर्जनीभूते न प्रवर्त्तते, 'एतदस्त्रतसोरि'त्युत्तरसूत्रसाहचर्यात्। तत्र संज्ञोपसर्जनैतदस्त्रतसोरसंभवेन, तादृशस्याऽग्रहणात्)। न चैवमपि त्यदाद्यत्वेनैव सिद्धे विधानसामर्थ्यात्सर्वा- देशोऽस्तु, किं शित्वेनेति वाच्यम्। 'मो राजी'तिवत् 'एभिः', 'आभ्यामि'- त्यादौ विकाराऽभावार्थताऽऽपत्तेः।

**द्वितीयाटौ**। 'इदमोऽन्वादेशे' इति, 'एतदस्त्रतसोरि'त्यत 'एतद' इति चाऽनुवर्त्तते तदाह—**इदमेतदोरित्यादि**। अत्राऽप्यनुदात्त इति वर्त्तते इति बोध्यम्।

---

१. 'इत्याहु'रिति ख. नास्ति।

२. 'प्र ते बभ्रू विचक्षणं शंसामि', 'माभ्यां गा अनु' 'एभिरग्रे' 'प्रेणा तदेषां निहितम्' इति शब्दकौस्तुभे पाठः।

३. क. कुण्डलितः, ख. पाठः।

**विधातुमिति**। तेनाऽनुवादे न दोषः। विधानं च 'इदमैवे'ति नाऽऽग्रहः। स्पष्टं चेदमत्रैव 'अन्वादेशश्च कथिताऽनुकथनमात्रं, न त्विदमा कथितमिदमैव यद्यनुकथ्यते' इत्यनेन भाष्ये। विधानं च अज्ञातज्ञापनमेव, न तु प्रवर्त्तनाविषयत्वम्। इदमेव भाष्ये—'कथनम्'। एतेन 'इमकाभ्यां रात्रिरधीता, अथो आभ्यामहरप्यधीतमि'त्युदाहरणं कथं, विध्यभावादि'ति परास्तम्। 'नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापये'त्यादौ गृहप्रापणं प्रति प्रार्थ्यमानया राधया भीरुरयं बुद्धत्वेनाऽनुवाद्यत्वान्नाऽन्वादेश इति नैनाऽऽदेशः। अत एव'**ईषदर्थे क्रियायोगे मर्यादाऽभिविधौ च यः। एतमातं ङितं विद्यादि**'ति वार्त्तिके एनाऽऽदेशाऽभावः। ईषदर्थाऽऽदीनामनुवाद्यत्वा-दित्याहुः।

**सुगणट्स्विति।** 'ङ्णोरि'ति टुक्। तस्याऽसिद्धत्वाज्जश्त्वं न। क्विप् **सुगाणिति**। 'अनुनासिकस्य क्वी'ति दीर्घः। न चाऽल्लोपणिलोपयोः स्थानिवत्त्वम्। क्वौ विधिं प्रति तन्निषेधात्।

न्लोप[3] इति। नकारलोप इत्यर्थः।

**न ङि**। ननु 'राजनी'त्यादौ भत्वान्नलोपाऽप्राप्तेर्ङाविति व्यर्थम्। न च 'राजनीवाऽऽचरती'त्यर्थे 'अधिकरणाच्चे'ति क्यचि नलोपाऽभावार्थमिति वाच्यम्। अयस्मयादित्वाद्भत्वेन नलोपाऽप्रसक्त्या सूत्रस्थङिग्रहणप्रत्या-ख्यानपरभाष्यप्रामाण्यादीदृशे विषये लोके क्यजनुत्पत्तेरनुमानात्। अत आह—**ङौ तु छन्दसीति**। **निषेधसामर्थ्यादिति**। 'न लुमते'ति निषेधाऽ-नित्यत्वप्रतिपादनद्वारेत्यर्थः। एतदनित्यत्वबललब्धमेव 'वा नपुंसकानामि'-तीति बोध्यम्। न च परमे व्योमनित्यादौ घोषत्वाऽल्पप्राणत्वनिरनुनासि-

---

१. 'विधानं च' इत्यारभ्य 'इति परास्तम्' इत्यन्तः क. ग. पाठः।

२. 'अनुवाद्यत्वान्वय इत्याहुः' ख. पाठः।

३. 'न्लोप इति। नकारलोप इत्यर्थः' इति क. ग. पाठः, ख. नास्ति।

कत्वाऽऽन्तर्येण पूर्वसवर्णे दकारे, संयोगाऽन्तलोपे, 'स्वादिष्वि'ति पूर्वस्य पदत्वात्प्राप्तनलोपनिषेधेनाऽयं चरितार्थ इति वाच्यम् ।

प्रक्रियालाघवाऽनुरोधेन तत्र लुक एव प्रवृत्तिरित्याशयेन ज्ञापकस्य सत्त्वात् । पूर्वसवर्णे कृतेऽकृते च संयोगाऽन्तलोपस्याऽसिद्धतया, 'अन्तरङ्गा-नपी'ति न्यायेन च लुक एव प्राप्तेश्च । स्पष्टं चेदं 'सुपां सुलुगि'त्यत्र **कैयटे** । अत एव 'ङावुत्तरपदे'इति चरिताऽर्थम् । अन्यथा 'न ङिसम्बुद्ध्यो-रि'त्यस्य चारिताऽर्थ्याल्लुकि प्राप्त्यभावेन व्यर्थमेव तत्स्यात् । अत एव भाष्येऽप्युक्तम्–'न क्वचिन्ङिर्लोपेन लुप्यते, सर्वत्र लुमतैव, स यथेह भवति–'परमे व्योमन्नि'ति, एवमिहाऽपि स्यात्––'चर्मतिल' इति, तस्मात् 'ङिसम्बुद्ध्योरनुत्तरपदे इत्युपसङ्ख्यानं कर्त्तव्यमि'ति ।

**ङावुत्तरपदे इति** । वैदिक'चर्मतिल' इत्यादिप्रयोगसाधनाऽर्थमिदम्, छन्दोऽर्थं कृतङिग्रहणस्य लोकेऽपि प्राप्ताऽतिप्रसङ्गवारणार्थं च । भाष्य-कृताऽयस्मयाऽऽदित्वेन भत्वमाश्रित्य, सूत्रस्थङिग्रहणप्रत्याख्यानेनाऽनाव-श्यकत्वादिदमपि प्रत्याख्यातमित्यन्यदेतत् ।

न च भाष्ये 'ङिसम्बुद्ध्योरनुत्तरपदे' इति पठितत्वेन, सम्बुद्धित्यागा-न्न्यूनतेति वाच्यम् । प्रयोजनाऽभावात् । न च नलोपप्रतिषेधः प्रयोजनम् । सम्बुद्ध्यन्तानामनभिधानेन समासाऽभावस्य वार्त्तिकस्थसम्बुद्धिग्रहणप्रत्या-ख्यानेनाऽत्रैव भाष्ये ध्वनितत्वात् । **न चेति** । पञ्चमीसमासाऽभिप्रायेण शङ्केयम् । **षाष्ठीमिति** । 'वाह ऊठि'त्यत्र ज्ञापितत्वेन तद्देशस्थत्वादिति भावः । **जञोर्ज्ञ इति** । नेदमपूर्वाऽऽदेशविधायकम् । सूत्रभाष्यवार्त्तिकेष्व-पठितत्वात् । 'त्रिषष्टिश्च चतुःषष्टिर्वर्णा सम्भवतो मता' इति शिक्षायाम-परिगणितत्वेन तादृशवर्णाऽन्तरसत्त्वे मानाऽभावाच्च । किन्तु जञयोगे लोकवेदसिद्धतादृशध्वनेर्लिपिविशेषस्य चाऽनुवादकमभियुक्तवचनम् । अत एव 'जज्ञावि'त्यादिसिद्धिः । 'तज्ज्ञानमि'त्यादौ श्चुत्वाऽऽदि च ।

---

१. 'त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः' ख, पाठः ।

**सुब्विधिरिति**—सर्वविभक्त्यन्तः समास इति भाष्ये स्पष्टम्। 'कृती'-त्येतत्। सामर्थ्यात्तुक एव विशेषणमित्याह—**कृति तुगिति**। 'पूर्वत्राऽसिद्ध-मि'त्येव सिद्धे नियमोऽयमित्याह—**नाऽन्यत्रेति**। इदमेवाऽस्य विधेयमिति भावः। 'अन्यत्र'शब्दाऽर्थमाह—**राजाऽश्व** इति। 'राजाऽश्व' इत्यादौ प्राप्तसवर्णदीर्घाऽऽदावित्यर्थः। सुब्विधावुदाहरति—**आत्वमि**त्यादि।

**स्वरविधौ**[1]–'पञ्चाऽर्मम्'। अत्र 'दिक्सङ्ख्ये' इत्यनुवर्त्तमाने 'तद्धिताऽर्थे'-तिसमासे, नलोपे च कृते, पूर्वपदस्याऽवर्णाऽन्तत्वात् 'अर्मे चाऽवर्णं द्व्यच् त्र्यजि'ति पूर्वपदाऽऽद्युदात्तत्वं प्राप्तं, नलोपस्याऽसिद्धत्वान्न। न चाऽत्र 'स्वरविधौ व्यञ्जनमविद्यमानवदि'ति सत्त्वेन स्वरे इष्टाऽऽपत्तिरिति वाच्यम्। स्वरोद्देश्यकविधावेव तत्प्रवृत्तेः। 'नोत्तरपदेऽनुदात्तादावपृथिवी-रुद्रपूषमन्थिष्वि'तिसूत्रस्थपृथिव्यादिपर्युदासरूपधर्मिग्राहकस्य तथैव सत्त्वात्। अत एव 'शतुरनुमो नद्यजादी' 'अचः कर्त्तृयकी'त्यादौ 'अजादौ' 'अच' इत्यादीनां चारितार्थ्यम्। अत एव 'राजवती'त्यादौ नलोपस्याऽसिद्धत्वात् 'अन्वती'शब्दत्वात् 'अन्तोऽवत्या' इति स्वरो न। 'उदश्वित्वानि'त्यत्र 'ह्रस्वनुड्भ्यामि'ति मतुबुदात्तत्वं च **नेत्याकरः**। इदं 'समासस्ये'तिसूत्र-भाष्ये स्पष्टम्। इदमेवाऽभिसन्धाय 'यतोऽनाव' इत्येतत्प्रतिषेधमूलकं 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदि'ति परिभाषाऽन्तरं भाष्ये तत्रैव पठितम्।

**संज्ञाविध्युदा**हरणन्तु–'दण्डिघटौ'[2]। अत्र नलोपे, घित्वे, पूर्वनिपात-नियमः स्यादिति बोध्यम्। कृति तुग्विधौ 'वृत्रहभ्याम्'। 'ह्रस्वस्य पिती'ति

---

१. 'स्वरविधौ' इत्यारभ्य (५९४ पृष्ठस्थ–) 'मञ्जूषायामेव कारकवादे विस्तरः' इत्यन्तः ख. पाठो मनोरमाशब्दरत्नस्थत्वात् क. कुण्डलितः, ग. नास्ति।

२. अत्र 'दण्डिदत्तौ, दत्तदण्डिनौ' इति लघुशेखरे पाठः। तदनुसारेणाऽत्रापि 'दण्डिघटौ', 'घटदण्डिनौ' इति पाठ ऊहनीयः।

तुग्न। 'कृतीत्युक्त्या 'वृत्रहच्छत्रमि'त्यत्र 'छे चे'ति तुक् स्या[1]देवेति।

स्यादेतत्। नेदं युक्तम्। सुबादिपदेन स्वव्यतिरिक्तविधेर्लक्षणया, भवती'त्यनेन 'न भवतो'त्यर्थस्य च लक्षणया, नियमसूत्राणां निषेधे पर्यवसानेनाऽस्याऽसिद्धत्वविधायकत्वाऽभावात्। निषेधश्च नलोपविधावनुवर्त्तमान 'पूर्वत्राऽसिद्धमि'त्यस्य। अतएव वार्त्तिककारोऽपि वक्ष्यति—'उभयप्राप्तौ कर्मणीति प्रतिषेधेऽकादिप्रयोगेऽप्रतिषेध' इति। अत्र शास्त्रे 'नियम'पदेन मीमांसकोक्तपरिसङ्ख्यैवोच्यते। अत्र च स्वार्थहानि-प्राप्तबाध-पराऽर्थकल्पना-रूपदोषत्रयमग[2]त्या स्वीक्रियते इति चेन्न।

लक्षणायां गौरवेण विधिरूपेणैव प्रवृत्तेरौचित्यात्। न चैवमस्य वैयर्थ्यम्, नलोपविधावनुवर्त्तमानेन 'पूर्वत्राऽसिद्धमि'त्यनेन सिद्धत्वादिति वाच्यम्। सामर्थ्येन सामान्यशास्त्रसङ्कोचस्याऽपि कल्पनात्। सङ्कोचश्च—नलोपविधौ 'पूर्वत्राऽसिद्धमि'त्यस्याऽनुपस्थितिरूपः, अर्थव[3]त्सूत्रे चाऽर्थवत्पदेनाऽर्थवत्समुदायाऽग्रहणरूपः। एवं चाऽस्य विधायकत्वं स्पष्टमेव। इदमेव च नियमस्य विध्यपेक्षया गुरुत्वम्। निषेध[4]वादिनोऽप्यत्यावश्यकत्वम्। अन्यथा विकल्पाऽऽपत्तेः। सामान्यशास्त्रसंकोचे चाऽन्यत्र तदभावस्याऽप्यर्थतः सिद्धेरर्थसिद्धं तमादाय नियमशास्त्रेषु प्रतिषेधव्यवहारस्यापि सङ्गतिः। न[5] चैवं 'मूलकेनोपदंशमि'त्यादौ कृदन्तत्वात्प्रातिपदिकत्वाऽऽपत्तिः। समासग्रहणेन येन नाप्राप्तिन्यायादर्थवत्सूत्रस्यैव सङ्कोच-

१. इतोऽग्रे—'सुब्विधावुदाहरति—इत्यसिद्धत्वादिति' इति ख. पाठ.।

२. 'अगत्या स्वीक्रियते। ननु लक्षणाया गौरवाद्विधिरूपेणैव तत्प्रवृत्तिरस्तु। न चैवमस्य वैयर्थ्यम्' ख. पाठः।

३. 'अर्थवत्' इत्यारभ्य 'अग्रहणरूपः' इत्यन्तः क. कुण्डलितः पाठः।

४. 'निषेधवादिनः' इत्यारभ्य 'सङ्गतिः' इत्यन्तः क. कुण्डलितः पाठः।

५. 'एवं च मूलं सम्यगेवेति चेन्न। एवं हि मूलकेनोपदंशमित्यादौ'—इति ख. पाठः।

कल्पनात्। निषेधमुखेन प्रवृत्तौ तु येन नाऽप्राप्तिन्यायादर्थवत्सूत्राऽपवादेनाऽपि निषेधपरेण समासग्रहणेन परतया कृदंशबाधेनेष्टसिद्धिरितिवाच्यम्[1]। लक्ष्यानुसारिबाध्यसामान्यचिन्तया कृदंशस्यापि तेन संकोचकल्पनात्। 'पञ्च पञ्चनखा भक्ष्या' इतिशास्त्रेणापि प्रापकप्रमाणरागप्राप्तभक्षणस्य तदितराऽविषयत्वरूपसंकोचकल्पनम्। तेनाऽन्येषां भक्षणाऽभावो गम्यते, तद्भक्षणे प्रायश्चित्तं च गम्यते। 'अनुपराभ्यामि'ति सूत्रे भाष्ये विधिमुखेन प्रवृत्तेरपि स्वीकारात्। इमौ च पक्षौ लक्ष्याऽनुरोधाद्व्यवस्थिताविति प्राहुः।

**परे तु** 'पतिः समास एवे'त्यादौ 'एव'कारसमभिव्याहारे 'समासघटकपतिशब्दाऽन्यतादात्म्याऽभाववत्पतिशब्दसम्बद्धा घिसंज्ञे'त्यन्ययोगव्यवच्छेदबोधवत्, एवकाराऽसमभिव्याहारेऽपि पतिशब्दस्य तादृशेऽर्थे लक्षणया तथैव बोध उचितः। स[2]मासाऽघटकपतिशब्दे घित्वाऽभावबोधस्तु मानसः पश्चादुभयत्राऽपि। अत एव 'पञ्च पञ्चनखा भक्ष्या' इत्यत्र 'भक्ष्यनियमेऽभक्ष्यप्रतिषेधो गम्यते' इति पस्पशायां भाष्ये उक्तम् [ 'प[3]तिः समास एवे'त्यादावेवकारो घिसञ्ज्ञाशास्त्रस्य समासाऽघटकपतिशब्दाऽविषयकत्वरूपसंकोचस्य स्फुटं द्योतनाय, पतिघटितसमासाऽन्यसमासाऽविषयकत्वरूपसंकोचो मा भूदिति। 'अन्ययोगव्यवच्छेद एवकाराऽर्थ' इति तु सामान्यप्रमाणसंकोचफलिताऽर्थमादाय नेयम्। 'अनुपराभ्यामि'ति सूत्रे च भाष्ये विधिमुखेनैव प्रवृत्तिरुक्तेति भाष्यप्रदीपोद्द्योते निरूपितम्।

---

१. 'इष्टसिद्धिरिति चेदत्रोच्यते—'अनुपराभ्यां कृञ' इति सूत्रे भाष्ये विधिमुखेन प्रवृत्तेरपि स्वीकारात्। उपपादितं तत्रैव सूत्रे भाष्यप्रदीपोद्द्योतेऽस्माभिः' इति ख. पाठः।

२. 'अन्यपतिशब्दे' ख. पाठः।

३. 'पतिः समास एव' इत्यारभ्य 'भाष्यप्रदीपोद्द्योते निरूपितम्' इत्यन्तः क. ग. पाठः।

अत एव च 'त्वन्मुखं त्वन्मुखेनैव तुल्यं, नाऽन्येन केन चिदि'त्यादौ 'नाऽन्येने'त्यादि न पुनरुक्तम् । (उक्तरीत्या लक्षणायान्तु पौनरुक्त्यं स्पष्टमेव) । अत एव च 'इतरनिवृत्तिफला परिसङ्ख्ये'**त्यभियुक्ताः ।**

अत एव 'किंभूषणं, सुदृढमत्र यशो, न रत्नमि'त्यत्र **प्रकाशीये** शाब्दपरिसङ्ख्योदाहरणे 'न रत्नमि'ति न पुनरुक्तम् । तत्र वाच्याऽर्थमादाय 'विधीयते' इत्युक्तिः, आर्थिकाऽर्थमादाय 'प्रतिषेध' इत्युक्तिश्च समञ्जसा[२] इति । लक्ष्यानुसारिबाध्यसामान्यचिन्तया 'कृदि'त्यस्याऽपि तेन नियनेन सङ्कोच इति[३], न 'मूलकेनोपदंशमि'त्यत्र दोष इति **मञ्जूषायामेवकारवादे** विस्तर इत्याहुः ।

'विधि'शब्दोऽत्र भावसाधनः, कर्मसाधनश्च । तयोरेकशेषः । द्वन्द्वाऽन्ते श्रूयमाणस्य प्रत्येकमभिसम्बन्धः । सम्बन्धसामान्यषष्ठ्यन्तसुबादिभिः समासः । तत्र स्वराऽऽदिविषये भावसाधनः । कर्मत्वरूपसम्बन्धश्च षष्ठ्यर्थः । सुप्विषये कर्मसाधनः । तेन सुबाश्रित-सुब्निमित्त[४]विधिमात्रग्रहणम् । तदाह—**एत्वमैस्त्वं चेति** । न च 'दण्डिष्वि'त्यादौ षत्वरूपसुब्विधावप्राप्ताऽसिद्धत्वविधानाऽर्थमेवाऽस्त्विति वाच्यम् । स्वराऽऽदिसाहचर्येण, षत्व[५]स्यैतत्सूत्रदृष्ट्याऽसिद्धत्वेन च नलोपशास्त्रात्पूर्वं पठितेन शास्त्रेण विहितस्य सुप्विधेर्ग्रहणेनाऽतदर्थत्वनिर्णयात् ।

---

१. अयं ख. पाठः ।

२. एतदग्रे—'आर्थिकप्रतिषेधेन च परत्वात्कृदंशस्यापि बाध इति न 'मूलकेनोपदंशमि'त्यत्र दोष इति'—इति ख. पाठः ।

३. 'स्वरविधौ—पञ्चार्मम्' (५१ पृष्ठे) इत्यारभ्य 'इत्याहुः' इत्यन्तोयं क. कुण्डलितः ख. ग. पाठः ।

४. 'निमित्तक' ख. पाठः ।

५. षत्वादीनामेतत्सूत्रदृष्ट्या' ख. पाठः ।

**राजनीति**। 'विभाषा ङिश्योरि'त्यल्लोपविकल्पः।

**प्रतिदिवेति**। कनिनन्तोऽयम्।

**हलि च**। 'र्वोरुपधाया दीर्घ इक' इति सूत्रं, 'सिपि धातोरि'त्यतो 'धातोरि'ति चाऽनुवर्त्तते। 'र्वोरि'ति च धातोर्विशेषणम्। तदाह—**रेफवान्तस्येति**। रेफस्य 'गीर्यती'त्युदाहरणम्। 'न पदान्त'सूत्रे 'प्रतिदीव्न' इति भाष्योदाहरणादत्र 'पदस्ये'ति न सम्बध्यते, सम्बध्यमानं वा इक एव व्यधिकरणं विशेषणम्। ध्वनितं चेदम् 'उपधायां चे'ति सूत्रे भाष्ये।

धातोः किम्?। 'दिवेर्डिविरि'तिव्युत्पन्नस्य 'दिव्यती'त्यादौ, 'अग्निः करोती'त्यादौ च मा भूत्। अत एव 'उपधायां चे'ति सूत्रं चरितार्थम्।

**प्रतिदीव्न इति**। 'न भकुर्छुरामि'त्यत्र 'र्वोरि'त्यनुवर्त्तनाद्रेफाद्यन्तस्यैव भस्य ग्रहणेन नाऽत्र निषेधः। नान्तं ह्यत्र भम्।

**न संयोगात्**। वमाभ्यां संयोगस्य विशेषणात्तदन्तत्वे लब्धेऽन्तग्रहणं स्पष्टाऽर्थम्।

**इन्हन्**। 'सर्वनामस्थाने चाऽसम्बुद्धावि'ति सिद्धे नियमाऽर्थमिदमित्याह—**शावेवेति**। **उपधाया** इति। तेना'ऽनुनासिकस्ये'त्यस्याऽपि नियम इति भावः। **नाऽन्यत्रेति**। सर्वनामस्थानत्वरूपविशेषमनपेक्ष्य सुप्त्वरूपसामान्याऽपेक्षनियमाऽऽश्रयणात्—'वृत्रघ्नः' 'वृत्रहणी'त्यादौ 'अनुनासिकस्य क्वी'ति दीर्घोऽपि नेति। तत्र नियमस्य सजातीयाऽपेक्षत्वात् सुबानन्तर्ये एव नियमफलनिषेधप्रवृत्तेः 'पथीनती'त्यादौ **माधवाद्यु**दाहृतो दीर्घः सङ्गच्छते। 'उपधादीर्घ' इत्युक्ते'वृत्रहायते' इत्यत्र, ततः कर्त्तरि क्विपि 'वृत्रहामि'त्यादौ च 'अकृत्सार्वे'ति दीर्घो भवत्येव। 'हनः क्वावुपधाया दीर्घत्वप्रतिषेध' इति वार्त्तिके हन्ग्रहणमुपलक्षणम्, प्रत्याख्यानपरभाष्यस्वरसादित्याहुः। **परे** तु वार्त्तिके हन्ग्रहणात्, प्रत्याख्यानपरभाष्याच्च इनादिभ्य आचारक्विप् नाऽस्त्येव। 'सुबानन्तर्ये एव नियम' इति त्वयुक्तम्। 'वृत्रघ्नः स्त्रो वृत्रघ्नी'त्याद्यसिद्धेरित्याहुः।

'शिस्वोरि'ति वक्तव्ये 'सौ चे' ति योगविभाग उत्तरार्थः।

**हो हन्तेः ।** ञित्-णि-न्नकाराश्च हस्यैव विशेषणम् । तत्र ञ्णिद्विषये येन नाऽव्यवधानन्यायेन द्वाभ्यां व्यवाये 'घातक' इत्यादावेव भवति, न त्वधिकव्यवधाने । तेन हननीयतेर्ण्वुलि न । न च 'वृत्रहणमाचष्टे वृत्रहयती'त्यादावव्यवधाने चरितार्थत्वेन 'घातक'[1] इत्यत्राऽपि न स्यादिति वाच्यम् । 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्' । नकारे तु 'वृत्रघ्न' इत्यादावेव, न तु 'हननमि' त्यादौ, व्यवधानात् । न च 'वृत्रघ्न' इत्यत्राऽपि स्थानिवत्त्वेन व्यवधानम् । स्थानिवत्त्वकृतव्यवधानेऽपि, श्रुतिकृताऽव्यवधाने चरितार्थत्वेन, श्रौतव्यवधानेऽप्रवृत्तेः । स्पष्टं चेदं भाष्ये ।

ननु 'वृत्रघ्न' इत्यादौ णत्वं दुर्वारम् । अतो 'हन्तेरत्पूर्वस्ये'ति सूत्रं विभज्य व्याचष्टे—**हन्तेरिति** । 'उपसर्गादसमासेऽपी'त्यत 'उपसर्गादि'ति वर्त्तते, 'रषाभ्यामि'ति च तत्र 'तात्स्थात्ताच्छब्द्यमि'त्याह—**उपसर्गस्थादिति** । प्रासङ्गिकस्य 'प्रहण्यादि'त्युदाहृत्य, प्रकृतोपयुक्तमंशमाह—**अत्पूर्वस्येति** । 'अत'[2] इति सिद्धे 'पूर्व'ग्रहणं स्पष्टार्थम् । अत्र 'उपसर्गादि'ति नाऽनुवर्त्तते , तेन णत्वमात्रस्याऽयं नियम इत्याह—**एकाजुत्तरेति । णत्वमिति** । (नन्व[3]ल्लोपे एकाऽच्त्वाऽभावः । न च स्थानिवत्त्वम् । अपूर्वविधित्वात् । न च बहिरङ्गाऽसिद्धत्वम् । यथोद्देशे तदप्राप्तेरत आह—**अपीति**) । अपिना 'प्रातिपदिकाऽन्ते'त्यस्य, 'कुमति चे'त्यस्य च सङ्ग्रहः । बाध्यसामान्यचिन्ताऽऽश्रयणात्सर्वबाध इति भावः । सन्निपातपरिभाषयाऽपि 'कुमति चे'ति णत्वं वारयितुं शक्यम् ।

**न स्थानिवदिति ।** 'स्थानिवद्भावकृतव्यवधानेऽपि प्रवृ[4]त्तिरि'त्यन्ये ।

---

१. 'घात' इति ख. पाठः ।

२. 'अत इति सिद्धे पूर्वग्रहणं स्पष्टार्थम्' इति क. ग. पाठः । ख. नास्ति ।

३. अयं ख. पाठः क. कुण्डलितः ।

४. 'प्रवृत्तिरिति तत्त्वम्' ख. पाठः ।

**वृत्रघ्न इति ।** न चाऽत्र स्थानिवद्भावेनाऽत्पूर्वत्वम्[1] । अपूर्वविधित्वात् । बहिरङ्गत्वेनाऽप्यल्लोपाऽसिद्धत्वं न । यथोद्देशे तदप्राप्तेः । अत एव 'प्राघानी'त्यादावपि न णत्वम्[2] ।

---

१ 'अत्पूर्वत्वमस्त्येवेति वाच्यम् । अपूर्वविधित्वात् सामर्थ्येन तदप्रवृत्तेश्च अत एव बहिरङ्गत्वेनाऽप्यल्लोपस्याऽसिद्धत्वं न । यथोद्देशपक्षे तदप्राप्तेश्च' इति ख. पाठ. ।

२. इतोऽग्रे—'नन्वत इति पञ्चम्यन्तमेवाऽस्तु । न च पूर्वग्रहणं 'पर्यघ्नन्नि'त्यादौ व्यवहितेऽपि [1]णत्वार्थमस्तु, हाऽऽदेशकवर्गव्यवायेन तत्र तस्याऽनिष्टत्वात् । तत्किं 'पूर्व'ग्रहणेनेति चेत् । न । भूमाऽर्थकबहुव्रीह्याश्रयणेन 'अकारः पूर्वो बाहुल्येन यस्माद्धन्तिनकारादि'त्येवं बहुव्रीहिलाभद्वारा ([2]णत्वप्राप्तियोग्य)हस्थानिकवर्गाऽभाववद्धन्त्युपलक्षणाऽर्थं तदुपादानात् । हस्थानिककवर्गवति 'प्रघनाघन' इत्यत्रैवाऽत्पूर्वत्वं, नाऽन्यत्र । तदभाववति तु क्वचिदेव 'बहुवृत्रहाणी'त्यत्र तदभावः, अन्यत्र तु सर्वत्राऽत्पूर्वत्वमिति ।

तेन 'बहुवृत्रहाणी'त्यत्र, 'प्रघनाघन'इत्यादौ च न दोषः । 'हस्थानिके'ति विशेषणाद् 'द्रुघण' इत्यादौ 'पूर्वपदादि'ति णत्वं भवत्येव । तत्र हि हन्तेरप्प्रत्ययोऽन्तोदात्तघनाऽऽदेशश्च । अत एव 'अगारैकदेशे प्रघणः प्रघाणश्चे'ति सूत्रे कृतणत्वयोरुच्चारणम् । न च तत्र निपातनाण्णत्वम् । सूत्ररीत्या 'प्रघण'शब्दे, वार्त्तिकरीत्योभयत्राऽपि सूत्रेणैव सिद्ध्या, तन्निपातनवैयर्थ्यात् । एवं च प्रघाणस्य कृतणत्वस्योच्चारणमपि अत्पूर्वग्रहणस्योक्तार्थोपलक्षणत्वे तात्पर्यग्राहकं बोध्यम् । अत एव 'हाऽऽदेशकवर्गव्यवाये प्रतिषेधो वक्तव्यः' 'वृत्रघ्नः''स्रुग्घ्नः''प्राघाणी'ति 'रषाभ्यामि'ति सूत्रे भाष्ये उक्तम् । तत्र 'स्रुग्घ्न' इत्यत्र 'पूर्वपदात्संज्ञायामि'त्यस्य प्राप्तिः । अत एव ऋगयने निपातनमाश्रित्य 'अग' इति प्रत्याख्यातं भाष्ये । अन्येषान्तु गाऽन्तपूर्वपदानामनभिधानमेवेति तदाशयः । अपूर्व-

---

1. 'णत्वप्रवृत्त्यर्थमस्तु' ख. पाठ. ।   2. अयं ख. पाठः ।

न[1]न्वेवं योगविभागेऽपि 'प्रघनाघन' इत्यत्र णत्वं स्यात् । 'बहुवृत्रहाणी' त्यत्र च न स्यात् । न चेष्टापत्तिः । 'हादेशकवर्गव्यवाये णत्वप्रतिषेधो वक्तव्यः । 'वृत्रघ्नः' 'स्रग्घ्नः' 'प्राघानी'ति 'अट्कुप्वाङि'ति सूत्रस्थवार्त्तिक-विरोधात् । प्रघणद्रुघणादौ वार्त्तिकमतेऽपि न दोषः । हादेशकोरभावात् । हन्तेर्घनादेशस्य तत्र निपातनादिति चेन्न । भाष्ये त्रयाणामेवोदाहरण-त्वोक्त्या, सूत्रमते 'प्रघनाघन' इत्यत्राऽतिव्याप्तेरनुद्भावनेन च, तेषां णत्व-विषयाणामनभिधानात् । नपुंसके 'बहुवृत्रहाणी'त्येतल्लेखस्तु शुद्धवार्त्तिका-ऽनुसारिणां प्राचामनुरोधात्, तदुदाहरणाऽर्थाऽसामञ्जस्याच्चेत्याहुः ।

(वा[2]र्त्तिकोदाहरणान्युक्त्वा 'अत्पूर्वस्येति न कर्त्तव्यं भवती'त्युक्त्याऽत्र योगविभागोऽपि भगवता सूचितः, सकलणत्वबाधश्च सूचितः । तावन्मात्र-फलकत्वं च तस्य सूचितम्) । एकवाक्यतया 'प्राघानि' इत्येतद्व्यावृत्ति-मात्रफलकं तदिति मत्वा वार्त्तिकाऽऽरम्भः । तत्करण-योगविभागाऽपेक्षया वार्त्तिकमेव ज्यायः । 'प्रघनाघन' इत्यादेरनभिधानमेवे'त्यन्ये ।

[3]**माधवेनोक्तमिति** । 'वृत्रघ्नः' 'वृत्रघ्ण' इति रूपद्वयं तेनोक्तम् । **तद्भाष्येति** । उक्तभाष्येत्यर्थः । **अनिनिति** । एतच्च 'इणः षीध्वमि'ति सूत्रे-

---

वार्त्तिककरणाऽपेक्षया सूत्राक्षरैस्तदर्थक्रोडीकारो न्याय्य इति मूलाशयः । तद्वार्त्तिके 'वृत्रघ्नः' 'स्रुग्घ्न' इति भाष्योदाहरणादेव तदर्थसंग्रहे 'अत्पूर्वस्ये'ति योगविभागे'अन्तर्गतं हननमन्तर्हननमि'त्यादौ णत्ववारणाय 'अन्तरदेशे' इत्यादावुत्तरत्राऽनुवृत्तमपि 'उपसर्गादि'ति न सम्बध्यते इति दिक्'—इति क. कुण्डलितः ख पाठः ।

१. 'नन्वेवं योगविभागेपि' इत्यारभ्य 'अनभिधानमेवेत्यन्ये' इत्यन्तः क. ग. पाठः ।

२. 'वार्त्तिकोदाहरणानि' इत्यारभ्य 'सूचितम्' इत्यन्तः क. कुण्डलितः पाठः ।

३. 'माधवेनोक्तमिति' इत्यारभ्य 'उक्तभाष्येत्यर्थः' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

'अङ्ग'ग्रहणेनाऽर्थवत्परिभाषाया अनित्यत्वज्ञापनात्सिद्धम् । **अन्यथा** 'परिवेविषीध्वमि'त्यत्र षीध्वंशब्दस्याऽनर्थकत्वादेवाऽग्रहणे किं तेन ? ।

**अर्थवता चानर्थकेनेति** । एवं चाऽन्यत्राऽलैवाऽनर्थकेन तदन्तविधिः, न तत्समुदायेनेति 'हन्'ग्रहणे 'प्लीहन्'ग्रहणं नेति बोध्यम् । लाक्षणिकस्य तु न ग्रहणम् । स्पष्टं चेदम् 'इकोऽची'ति सूत्रे भाष्ये ।

**मघवा ब** । 'अर्वणस्त्रसावि'त्यतः 'तृ' इति वर्त्तते । तदपेक्षा च'मघवे'-ति षष्ठ्यर्थे प्रथमा । तदाह—**मघवन्शब्दस्येति** ।

**ऋ इदिति** । तेनाऽनेकाल्त्वाऽभावान्न सर्वाऽऽदेश इति भावः ।

**उगिदचाम्** । 'अजि'ति न प्रत्याहारः, 'नपुंसकस्य झलच' इत्यत्र पुनरज्ग्रहणात् । 'अच अचि इत्येके' इति पठितस्याऽच्धातोरपि न ग्रहणम् । 'ऋत्विगि'त्यादिसूत्रेष्वञ्चेः पठितत्वेन, तस्यैवाऽष्टाध्यायीप्रसिद्धत्वात् । व्याख्यानाच्च । भाष्यादिस्वरसाच्च । तदाह—**अञ्चतेरिति** ।

ननु उगितो धातोश्चेत्तर्ह्यञ्चतेरेवेत्यञ्चतिग्रहणनियमेनैव सिद्धावधातुग्रहण व्यर्थम् । न च 'अचामि'ति लुप्तनकारनिर्देशेन 'नलोपिन एव यथा स्यान्न तु पूजाऽर्थस्ये'त्येतदर्थमचामित्यस्य चरितार्थ्यात्कथं त्वदुक्तनियम इति वाच्यम् । भाष्यप्रामाण्येन[2] 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवे'ति नियमस्वीकारात् । अत एव नलोपेन निर्देशः सङ्गच्छते ।

न च क्विन्नन्ताऽनुकरणेन स न्यायसिद्ध इति वाच्यम् । अकारलोपस्याऽपि न्यायप्राप्तत्वेन, तदकरणपूर्वकमेतत्करणस्य विवक्षाऽर्थत्वात् । न च 'धातोरुगितः प्रतिषेधः''उखास्रत्''अञ्चतेश्चोपसङ्ख्यानम्'इति ङीब्विधायकसूत्रस्थवार्त्तिकविरोधः । तस्य 'नलोप्यञ्चतेरि'ति व्याख्यानात् । अत एव

---

१. इतोऽग्रे–'अस्यैकीयमतत्वाच्च'–इति क. कुण्डलितः पाठः ।

२. भाष्यप्रामाण्येन 'अचामि'त्यस्यावृत्त्या तस्यापि सुलभत्वात् । एवञ्च 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवे'त्येकं नियमशरीरम् । 'अञ्चतेश्चेत्तर्हि नलोपिन एवे'त्यपरम् । अत एव नलोपेन निर्देशः सङ्गच्छते' इति क. कुण्डलितः ख. पाठः ।

'उगिदचामि'तिसामान्याऽपेक्षनियममाश्रित्य तत्प्रत्याख्यातं भाष्ये। एवं च पूजाऽर्थस्य 'प्राञ्चो'स्याद्यसाध्वेव। एतेन 'प्राञ्ची ब्राह्मणी'त्यौपदेशिकोदाहरणं विहाय, 'प्राची' 'प्रतीची'त्यातिदेशिकोदाहरणदानं भाष्ये निर्बीजमि'-ति मन्दोक्तमपास्तम्। स्पष्टा चेयं रीतिः 'क्रतूक्थाऽऽदिसूत्राऽन्ताट्ठक्' 'अकर्मकधातुभिर्योगे' इत्यादिभाष्यव्याख्यायां **कैयटे** इति चेत्।

मैवम्। 'अधातुभूतपूर्वग्रहणाऽर्थं तदि'ति मूल एव वक्ष्यमाणत्वात्।

नन्वेवमौपदेशिकधातुविषयक एव नियमोऽस्तु, किमनेनेति चेन्न। औपदेशिकत्वाऽनन्तर्भावेण सामान्याऽपेक्षनियमज्ञापनाऽर्थत्वात्। तत्फलन्तु 'पणध्वदि'त्यादाविव 'गोमानि'त्यादिनामधातौ 'उगितश्चे'ति ङीबभाव इति दिक्।

अत्राऽच्साहचर्यादुगित् झलन्त एव गृह्यते। तेन 'शमी' 'शमिनावि'-त्यादौ नाऽतिप्रसङ्गः। इदं च 'युवोरनाकावि'ति सूत्रे भाष्ये स्पष्टम्।

दीर्घे इति। 'सर्वनामस्थाने चाऽसम्बुद्धावि'त्यनेन। **न भवतीति**। असिद्धत्वे हि 'पचन्ति'त्यादाविव, नान्तत्वाऽभावाद्दीर्घो **न स्यादिति** भावः। नन्वसिद्धत्वाऽभावकल्पने मानाऽभाव इत्यत आह—**तथा चेति**। तथा च 'वनोर चे'ति सूत्रे भाष्यं—'मघोनी'त्यत्र प्राप्नोति। मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकमि'ति। 'श्वन्नुक्षन्नि'त्यौणादिकोऽयमि'ति **कैयटः**। एवं चाऽन्तोदात्तोऽयम्।

**निपातनादिति**। 'महेर्हस्य घः, अवुगागमः, 'कनि'प्रत्ययश्चे'ति त्रयस्य निपातनादित्यर्थः। **मघशब्दादिति**। धनवाचकादित्यर्थः।

**भाषायामपीति**। अपिना च्छन्दसि। तत्र च्छन्दसि 'मघवानमीमहे' इति मध्योदात्तस्य वनिपा सिद्धिर्बोध्या। न च वनिबन्तस्य सम्प्रसारणे

---

१. श्रीकृष्णभट्टो मौनी तर्कचन्द्रिकादिग्रन्थैर्मनोरमाशेखरशब्दरत्नादिखण्डन-कर्त्ताऽत्र 'मन्द'पदेन व्यवह्रियते।

२. 'कैय्यटे' इति क. पाठः।

'यस्ये'ति लोपे, 'मघोन' इति रूपाऽसिद्धिः न च लोपे बहिरङ्गपरिभाषया सम्प्रसारणाऽसिद्धत्वम्। तस्या 'वाह ऊठ्' सूत्रे निष्पन्नतया आभीयत्वेन, आभीयाऽन्तरङ्गस्य तद्दृष्ट्याऽसिद्धत्वेनाऽत्र तस्या अप्रवृत्तेः। अन्तरङ्गशास्त्राऽऽश्रय एव हि तदाश्रय इति समानाऽऽश्रयत्वमव्याहतम्। व्याश्रयत्वाच्च नाऽऽभीयाऽसिद्धत्वम्, 'मघोनामि'तिनिर्देशेन तस्य सम्प्रसारणाऽप्राप्तेश्चेति वाच्यम्। अन्तोदात्तस्य निपातितस्य सिद्धेः। 'एकादेश उदात्तेनोदात्त' इत्यस्य प्रवृत्त्याऽन्तोदात्त-मध्योदात्तयोः 'मघोन' इत्यादौ न स्वरे विशेषः। यद्वा वनिबन्तेऽपि 'यस्ये'ति लोपो न, छान्दसत्वात्, सौत्रत्वाच्चेति बोध्यम्।

**प्रत्याख्यातमिति**। एवं च मतुपि 'अत्वसन्तस्ये'ति दीर्घसत्त्वेन, त्रादेशे तदभावे, फलभेदे प्रत्याख्यानाऽसम्भव इति भावः। **आकर** इति। 'केशाद्व' इति सूत्रे **कैयटा**दावित्यर्थः। तत्र हि 'छन्दसीवनिपावि'ति प्रतीके-'मघवा बहुलमि'त्येतन्न कर्त्तव्यम्। 'श्वन्नुक्षन्नि'ति निपातनान्मघशब्दान्मतुपा च भाषायामपि रूपद्वयसिद्धेरि'त्युक्तम्। नन्वेवमप्यन्तोदात्तस्य त्रादेशे वकाराऽकारस्योदात्तत्वं, मतुपि तु 'ह्रस्वनुड्भ्यामि'ति प्राप्तस्य मतुबुदात्तत्वस्य 'न गोश्वन्साववर्णेति प्रतिषेधेन, पित्त्वादनुदात्तत्वे, घकाराऽकारस्योदात्तत्वमि'ति फलभेदोऽस्त्येवेति चेन्न। त्रादेशपक्षेऽपि दीर्घवद्बहुलग्रहणेन घकाराऽकारोदात्तत्वस्याऽप्यङ्गीकारात्[1]। तत्रैव मानाऽन्तरमप्याह—**हविरिति**। एवं 'मघवानृजीषी'त्यादिवैदिकप्रयोगा अपि मानम्। अत्र वार्त्तिकम्—

**'अर्वणस्तृ, मघोनश्च, न शिष्यं छान्दसं हि तत्।**
**मतुब्वन्योर्विधानाच्च, छन्दस्युभयदर्शनात्' ॥ इति।**

तस्या[2]ऽयमर्थः—अर्वणो, मघोनश्च 'तृ' न शिष्यं, यतस्तच्छान्दसम्।

---

१. 'घकारोदात्तत्वस्यापि' इति सर्वादर्शेषु पाठः।

२. 'तस्याऽयमर्थः' इत्यारभ्य 'वार्त्तिकाऽक्षरस्वारस्यं महद्भिर्विचार्यम्' (६०३ पृष्ठे) इत्यन्तः ख. पाठः, क. कुण्डलितः।

सामान्यतो बोधितानामपि केषाञ्चिच्छब्दानां 'घृ'धात्वादिवन्नियतविषयत्वादित्यर्थः। एवं च 'छन्दसि दृष्टाऽनुविधिरि'ति न तदर्थः शास्त्राऽऽरम्भ इति भावः। छान्दसत्वं च 'मघवानृजीषी'त्यादौ पठ्यमानदीर्घमध्योदात्तत्वाऽर्थं तवाऽप्यावश्यकम्। एवं च च्छान्दसवर्णव्यत्यये[1]यादिनैव सिद्धिमिति तात्पर्यम्। प्रकाराऽन्तरेणाऽपि सिद्धिमाह—**मतुब्वन्योरिति**। 'ऋ'धातोर्विजन्तान्मघशब्दाच्च म[2]तुवनिभ्यां रूपद्वयसिद्धिरिति भावः। ननु सूत्राऽऽरम्भे नित्यस्तृ आदेशोऽर्वणः, त्वदुक्तरीत्या तु पक्षे तदभावोऽपि स्यादत आह—**छन्दस्युभयेति**। त्रादेशतदभावेत्यर्थः। तदुदाहरणम्—'इमान्यर्वणः पदानी'ति 'अनर्वाणं वृषभं मन्दजिह्वमि'ति दृष्टा[3]न्तार्थम्। त्रादेशविशिष्टेऽवन्शब्दे विवादाऽभावात्तन्नोदाहृतम्। एवं मघोनि रूपद्वयस्य सूत्रसंमतत्वात्तदुदाहरणाऽदानं भाष्ये। यत्त्वेतद्वार्त्तिकभाष्यबलादिदं सूत्रं वनिबन्तमध्योदात्तमघवन्शब्दविषयं छन्दस्येव प्रवर्त्तते इति प्रतीयते। तत्र च एतत्प्रत्याख्यानादपि दीर्घो, घकाराकारोदात्तत्वं च लभ्यते इति बोध्यम्। यत्त्वस्य च्छान्दसत्वाच्छन्दसि त्रादेशे मघवन्नित्येव रूपम्, तच्च मतुबन्तस्य च्छान्दसत्वाद्दीर्घाऽभावेन साध्यमिति प्रत्याख्यानाऽऽशयः। लोके तु मतुबन्ते दीर्घो भवत्येवेति न'हविर्जक्षिती'ति प्रयोगविरोध'इति। तन्न। भाष्याऽक्षरस्वारस्येन तथाऽप्रतीतेः। 'मघवानृजीषी'त्यादौ वेदेऽपि दीर्घस्य पठ्यमानत्वाच्च। एतद्वार्त्तिकबलादर्वन्-मघवन्शब्दयोर्लोकेऽसाधुत्वमिति प्रतीयते इ[4]त्यन्यत्र प्रपञ्चितम्। यत्तु 'छान्दसा अपि क्वचिद्भाषायामित्याश्रित्य समर्थनीयमि'ति। तन्न। तज्ज्ञापकस्य 'वयस्यासु मूर्ध्न' इति सूत्र-

---

१. 'व्यत्ययेनैव तस्य तकारोऽपि सिद्ध इति तात्पर्यम्' इति ख. पाठः।

२. 'मतुब्वनिभ्याम्' इति पाठान्तरम्।

३. 'दृष्टान्तार्थः' क. पाठः।

४. 'इत्यन्यत्र प्रपञ्चितम्' इति क. ग. पाठः, ख. नास्ति।

प्रयोगस्य 'छन्दोवत्सूत्राणी'ति भाष्यकारेष्ट्याऽन्यथासिद्धत्वात् । केचित्तु 'मध्योदात्तवनिबन्तमघवन्शब्दमात्रस्य च्छान्दसत्वबोधकमिदं वार्त्तिकमि'ति । तेषां मते वार्त्तिकाऽक्षरस्वारस्यं मह्द्भिर्विचार्यम् ।

**अन्तोदात्तं त्विति** । श्वन्नुक्षन्नि'त्यत्र 'कनि'प्रत्ययस्यैव विधानादिति भावः । अत एव 'अव्युत्पन्नं प्रातिपदिकमि'ति भाष्ये उक्तम् । अत एव 'उक्षा समुद्र' इत्यादावन्तोदात्तपाठः सङ्गच्छते । एतेन 'कनिनन्ता' इत्युज्ज्वलदत्तोक्तमपास्तम् । **अन्नन्तानामिति ।** 'अल्लोपोऽन' इत्यतो'ऽन' इत्यपकृष्यत इति भावः ।

**मघवत इति** । न च स्थानिवद्भावेनाऽन्नन्तत्वम् । 'अलोऽन्त्यस्ये'त्यस्य सत्त्वेनाऽनः स्थानित्वाऽभावात् । 'सर्वे सर्वपदाऽऽदेशा' इति पक्षेऽपि मघवन्शब्दस्यैव स्थानित्वं, नाऽनः । अत एवाऽत्र, 'धीवरी'त्यादौ च नाऽल्लोपः । एकदेशविकृतन्यायेन च्छिन्नपुच्छश्वादिदृष्टान्तमूलकेनाऽपि न दोषः । 'अन' इत्यत्र नकारप्रश्लेषेण नान्ताऽनन्तानामेव तद्विधानात् । नस्य 'नलोपः प्रातिपदिके'ति लोप इति बोध्यम् । स्पष्टं चेदमृत्वसूत्रे भाष्ये । यदि त्वर्द्धविकारे प्रत्यभिज्ञाऽभावान्नैकदेशविकृतन्यायस्तदा माऽस्तु नकारप्रश्लेषः । अन्त्वस्यैवाऽभावात् । ध्वनितं चेदं 'श्वयुवे'त्यत्र भाष्ये । एतेन 'सामान्याऽतिदेशेऽपि विशेषाऽनतिदेश' इति **कैयटः** परास्तः । स्थानिवत्त्वस्यैवाऽप्राप्तेः । 'न ल्यपी'ति लिङ्गेन स्थानिवत्सूत्रे विशेषाऽतिदेशाऽङ्गीकाराच्च ।

**मघवतीति** । पुंयोगेन स्त्रियां वृत्तौ 'उगितश्चे'ति ङीप् । यत्तु 'पुंयोगादि'ति सूत्रेण ङीषि'ति । तन्न । तत्राऽत इत्यधिकारात् । विभक्तौ लिङ्गविशिष्टाऽग्रहणाल्लिङ्गविशिष्टपरिभाषया नुम्नेत्याहुः ।

---

१. 'तस्याऽयमर्थः' (६०१ पृष्ठे) इत्यारभ्य 'महद्भिर्विचार्यम्' इत्यन्तोऽयं ग्रन्थो मनोरमाशब्दरत्नयोरपि वर्त्तते इति क. कुण्डलितः ।

**शुन**[1] **इति** । ननु संप्रसारणे वार्णादाङ्गस्य बलीयस्त्वेनाऽन्तरङ्गमपि पूर्वत्वं बाधित्वाऽल्लोपाऽऽपत्तिः । त[2]त्र लोपे यद्यपि स्थानिवत्त्वेन न यण्प्रसङ्गः, अन्तरङ्गे यणि सम्प्रसारणाऽसिद्धत्वात्, 'नाजानन्तर्ये' इति निषेधस्त्व-नित्यः, 'अतः शुन' इत्यादिनिर्देशात्, तथापि 'मघोन' इत्यादावुदात्त-निवृत्तिस्वराऽऽपत्तिः ।

**किञ्च** पूर्वरूपे वकारस्थानिकोकारस्य स्रंसनधर्महल्स्थानिकत्वेनाऽनु-दात्ततया, 'श्वन्'शब्दस्याऽन्तोदात्तत्वेनाऽकारस्योदात्ततया, तयोः स्थाने जातस्यैकाऽऽदेशस्योदात्ततयाऽऽद्युदात्तं[3] 'शुने'त्यादि । लोपे तु सर्वाऽनुदात्तं स्यात् । न चोदात्तनिवृत्तिस्वराऽऽपत्तिः । तद[4]ाऽप्यन्तोदात्तापत्त्याऽऽ-द्युदात्ताऽसिद्धेः । 'श्वन्'शब्दस्य गौराऽऽदिपाठेन तत्रोदात्तनिवृत्तिस्वराऽ-प्राप्तेर्भाष्ये एवोक्तत्वाच्च[5] ।

किञ्च 'बहवः श्वानोऽस्यामि'ति बहुव्रीहेरुपधालोपित्वेन 'अन उपधालो-पिन' इति ङीब्विकल्पप्रसङ्गः । यद्यपि श्वन्शब्दो गौराऽऽदिषु पठ्यते, तथाऽप्यनुपसर्जनाऽधिकरात्तदप्रसङ्गः । 'बहुमघवा' 'बहुयुवे'त्यादावपि

---

१. शुन इति । सम्प्रसारणे वार्णादाङ्गस्य बलीयस्त्वेनाऽन्तरङ्गमपि पूर्वत्वं बाधित्वाऽल्लोपस्तु न । आभीयत्वेन सम्प्रसारणस्याऽसिद्धतया 'न संयोगादि'ति निषेधात् । 'वार्णादाङ्गमि'त्यस्याऽनित्यत्वाच्च । न च लोपे इष्टाऽऽपत्तिः । तस्य स्थानिवत्त्वेन यण्प्रसङ्गात् । नन्वन्तरङ्गे यणि सम्प्रसारणाऽसिद्धत्वम्, 'नाऽजानन्तर्ये' इति निषेधस्त्वनित्यः, 'अतः शुन' इत्यादिनिर्देशात्, अत एवाऽल्लोप-पूर्वरूपयोः 'शुन' इत्यस्याऽसिद्धिर्भा-ष्येणोक्तेति चेत् । सत्यम् । एवमपि 'मघोन'इत्यादावुदात्तनिवृत्तिस्वराऽऽ-पत्तेः' इति क. पाठः ।

२. 'तत्र' इत्यारभ्य, 'स्वरापत्तिः' इत्यन्तः क. पाठः ।

३. 'मध्योदात्तं शुनेत्यादि' ख. पाठः ।

४. 'तदाप्यन्तोदात्तापत्त्याऽऽद्युदात्ताऽसिद्धेः' इति क. ग. पाठः । ख. नास्ति ।

५. चकारः ख. नास्ति ।

ङीब्विकल्पसङ्गाच्चेति चेन्न। 'डाबुभाभ्यामि'ति सूत्रे 'बहुयुवे'त्येव भाव्यमि'ति भाष्याद्वार्णपरिभाषाया अनित्यत्वेन क्वचिदप्रवृत्त्याऽदोषात्। श्वन्शब्दे आभीयाऽसिद्धत्वेन सम्प्रसारणाऽसिद्ध्या 'न संयोगादि'तिनिषेधाच्चेति भाष्यप्रदीपोद्द्योते विस्तरः।

**न सम्प्रसारणे**। अनुवृत्त्यैव निषेध्यसमर्पके लब्धे, पुनः सम्प्रसारणग्रहणसामर्थ्यात्सम्प्रसारणमात्रनिषेध इति, दूरस्थस्याऽस्य, 'व्यथो लिटी'त्यस्य च निषेधः। न च व्यथि-व्यधि-व्रश्चि-व्येञ्ष्वस्य चारितार्थ्यात् 'यून' इत्यादौ पूर्वं सवर्णदीर्घरूपैकादेशेऽपि, तस्य 'अचः परस्मिन्नि'ति स्थानिवत्त्वेन सम्प्रसारणत्वेऽपि, तेनैव स्थानिवद्भावेन उकारकृतव्यवधानात्कथं निषेधः?, स्पष्टं चेदं 'ष्यङः सम्प्रसारणम्' 'न सम्प्रसारणे' इति सूत्रयोर्भाष्ये इति वाच्यम्। 'व्यथ' इति सूत्रे 'य'ग्रहणेनैव सिद्धे, सम्प्रसारणग्रहणस्यैतन्निषेधकतयैव चारितार्थ्यस्य वक्तव्यत्वेन, व्यवहितेऽपि प्रवृत्तेः। 'यूनस्तिरि'ति निर्देशाच्चेत्याशयेनाऽऽह– **इति यकारस्येति**। ननु सकृत्प्रवृत्त्यैवोभयोः सम्प्रसारणे जाते निषेधो व्यर्थो, निमित्तत्वाऽनुपपत्तिश्चेत्यत आह—**अत एव ज्ञापकादिति**। स्पष्टं चेदम् 'इहेङ्गितेन, चेष्टितेन, निमिषितेन, महता वा सूत्रप्रबन्धेनाऽऽचार्याणामभिप्रायो गम्यते, एतदेव ज्ञापयति–परस्य पूर्वं भविष्यती'ति भाष्यग्रन्थे। न चैवं 'लक्ष्ये

---

१. 'ङीब्विकल्पप्रसङ्गाच्च। न चैवमल्लोपे 'बहुशुनी'त्यत्रोदात्तनिवृत्तिस्वरः प्राप्नोती'त्यसिद्धवत्सूत्र-विप्रतिषेधभाष्ये 'बहुशुनी'ति प्रयोगाऽसङ्गत्यापत्तिः। उदात्तनिवृत्तिस्वरविचारप्रसङ्गे तस्य सत्त्वेन वैपुल्याऽर्थक'बहु'-शब्देन कर्मधारयसत्त्वात्, गौराऽऽदिपाठस्याऽग्रे वक्ष्यमाणत्वेन, पूर्वपक्षिणस्तदज्ञानाऽऽवश्यकत्वेन तन्मते ङीपः सत्त्वेनोदात्तनिवृत्तिस्वरोदाहरणाऽविरोधात्। बहुव्रीहित्वेऽप्यल्लोपाऽङ्गीकर्तृमते तद्भाष्यस्य सत्त्वेन, तन्मते ङीपःप्राप्तत्वेन, भाष्यसङ्गतिर्बोध्या। सिद्धान्ते तु 'बहुश्वे'त्येवेति भाष्यप्रदीपोद्द्योते विस्तरः'—इति ख. पाठः।

लक्षणस्ये'ति न्यायेनैव सिद्धेरचारितार्थ्यं तदवस्थमेवेति वाच्यम्। कार्याऽऽश्रयवर्णभेदेन लक्ष्यभेदसत्त्वात्। ईदृशलक्ष्यभेदाऽऽश्रयणे चेदमेव मानम्। यद्यपि भाष्ये 'सम्प्रसारणस्थानिनि यणि निमित्तवाचकसम्प्रसारणपदस्य लक्षणे'त्यप्युक्तम्, तत्र 'पूर्वं प्राप्तस्याऽनेन निषेधे, परस्य सम्प्रसारणे कृते, पुनराद्यस्य तु न, निषेधसामर्थ्यादि'ति तदाशयः, तथाऽपि लघूपायेन सिद्धौ, जघन्यवृत्तिकल्पनाऽयुक्तेति **मूलकृता** त्यक्तः **स प्रकारः**। अत एव 'अङ्गस्ये'-ति सूत्रे भाष्ये 'वव्रश्चे'त्यादिसिद्धार्थमङ्गाऽधिकार' इत्युक्तम्। 'अङ्गाऽधिकारे हि उरदत्त्वस्य परनिमित्तकत्वात्स्थानिवत्त्वेन सम्प्रसारणपरत्वात्-सिद्धः सम्प्रसारणनिषेध' इति तदाशयः।

**अर्वणः। न तु साविति**। फलिताऽर्थकथनमिदम्। वाक्यभेदाऽसमर्थ-समासाऽऽपत्त्या पर्युदासस्यौचित्यात्[1]। न 'आर्वतमि'त्यादौ तद्धिते न स्यात्। अङ्गाऽऽक्षिप्तप्रत्ययस्य सुभिन्नतया विशेषणेन प्रत्ययत्वेनैव सादृश्यग्रहात्[2]। 'अनञ' इति तु बहुव्रीहिः, 'वाजमर्वत्स्वि'ति प्रयोगात्। तत्पुरुषे[3] हि 'अनञः परस्याऽर्वण' इत्यर्थेऽत्र न स्यात्। 'सुरि'ति प्रथमैकवचनम्। व्याख्यानादित्याहुः।

**अनञः किमिति**। 'अनञ' इत्यस्य कः शब्दो व्यावर्त्यं इति प्रश्नः। उत्तरमाह—**अनर्वेति**। यज्वशब्दसदृशो'ऽनर्वन्' शब्द इत्यर्थः। एतेन सुपर-त्वाद् द्व्यङ्गविकलमेतत्प्रत्युदाहरणमित्यपास्तम्। ननु 'अस्थिदधी'त्यत्रोदात्तपाठेनैव सिद्धे 'उदात्त'ग्रहणेन विनायत्नं स्वरूपेणोच्चरितगुणस्याऽविवक्षया अभेदकत्वज्ञापनेनोदात्तत्वाऽऽदिगुणानामिव निरनुनासिकत्वगुणस्याऽप्यभेदक[4]-त्वादत्र निरनुनासिकोच्चारणेऽपि नस्याऽनुनासिकस्याऽऽन्तरतम्यादनुनासिकः स्यात्।। 'उञ ऊँ' इत्यत्र नासिकाव्यापारेण क्लेशाऽऽधिक्येनोच्चारणादानु-

---

१. 'पर्युदासस्यैवौचित्यात्' ख. पाठः।

२. 'सादृश्यग्रहणात्' ख. पाठः।

३. 'तत्पुरुषे हि' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ग. पाठः ख. नास्ति।

४. 'गुणस्याऽप्यविवक्षणादत्र' ख. ग. पाठः।

नासिक्यं विवक्षितमिति सर्वेषां समानम् । विवक्षया भेदकत्वेऽपि, तपरसूत्रस्याऽनणि विध्यर्थत्वाद्दोषः । न च तत्राऽप्रत्यय इत्यनुवर्त्तते । मानाऽभावादित्यत आह—**आ आदिति**। एवं च शुद्धाऽऽकाररूपस्यैवाऽऽकारस्य विधानान्न दोष इति भावः। विशेष्यविशेषणभावेनाऽन्वयान्नाऽनेकाल्त्वम् । एतेन 'पथिमथ्यृभुक्षामदि'त्येवाऽस्तु, नकारेकारयोरत्वे सवर्णदीर्घेण रूपसिद्धेः । न च 'अतो गुणे' इत्यस्याऽऽपत्तिः । 'पथिमथ्यृभुक्षां लोपः' 'भस्य टेः' 'इतोऽत्सर्वनामस्थाने' इति न्यासेन नकाराऽश्रवणसिद्धावकारविधानसामर्थ्येनैव पररूपबाधादि'त्यपास्तम् । अनुनासिकवारणाय प्रश्लेषे दीर्घोच्चारणेन लाघवाऽभावात् । पररूपन्तु न । समस्तत्वेन पदान्तत्वात् । असम[2]स्तत्वेऽपि लुप्तविभक्तिकत्वेन तत्त्वमस्त्येव । दीर्घप[3]रतया व्याख्यानन्तु प्रतिप[4]त्तिलाघवाय ।

अ[5]न्ये तु क्यजन्तात्क्विपि 'पन्था' इत्यर्थमाद्विधानमित्याहुः । अ[6]नुनासिकविधाने हि प्रतिपत्तिलाघवाय तमेवोच्चारयेत् । तदनुच्चारणाच्च शुद्धस्यैव विधानमिति भाष्यारूढः पन्थाः । सूत्रे 'आदि'ति दीर्घोच्चारणं प्रतिपत्तिलाघवायैवेति तत्त्वम् ।

**इतोऽत्** । 'आदि'त्यनुवृत्त्यैव सिद्धेऽद्वचनम् । 'ऋभुक्षणमि'त्यादौ 'वा षपूर्वस्ये'ति दीर्घविक[7]ल्पे पक्षे ह्रस्वश्रवणाऽर्थम् । 'अत्' इति तकार

---

१. 'विशेषण-विशेष्य' ख. ग. पाठः ।

२. 'असमस्तत्वे त्वनेकाल्त्वात्सर्वादेशत्वाऽऽपत्तिः' ख. पाठः ।

३. 'दीर्घविधानपरतया' ख. पाठः ।　　४. 'प्रक्रियालाघवाय' ख. पाठः ।

५. 'अन्ये तु' इति ख. नास्ति ।

६. 'अनुनासिकविधाने' इत्यारभ्य 'तत्त्वम्' इत्यन्तः क. ग. पाठः । ख नास्ति ।

७. 'दीर्घविकल्पे सति पक्षे' ख. ग. पाठः ।

उच्चारणार्थः[1]। 'इत' इति तकारोऽप्येवमेव(इति[2] हरदत्तः)। 'एरदि'त्युक्तौ ततो लाघवाऽभावात्। अन्यथा विधेयेऽपि तपरकरणात् 'कुरुत' इत्यादौ गुणाऽभावात् 'पन्थानौ' इत्यादौ दीर्घाऽनापत्तिरित्याहुः।

**केचित्तु**[3] 'इत' इति तपरत्वं पथीयतेः क्विप्यल्लोपयलोपयोरेकदेशविकृतन्यायेन[4] 'पथि'शब्दत्वात् 'पन्थियावि'त्यादावत्त्वाऽभावाय। 'एरनेकाच' इति यणं बाधित्वा नित्यत्वात्[5] न्थे संयोगपूर्वकत्वान्न यण्। नन्वल्लोपस्य स्थानिवत्त्वान्नात्राऽत्त्वम्। न च 'न पदान्ते'ति निषेधः। अनान्ततया 'नः क्ये' इति नियमेन, संज्ञाविधौ नलोपस्याऽसिद्धत्वेन चेकारान्ते पदत्वाऽभावात्। एतेनोक्तरीत्या पदान्तत्वादिकोऽसवर्ण इति ह्रस्वेऽत्राऽत्त्वं दुर्वारमिति परास्तम्, तस्य[6] वैकल्पिकत्वाच्च) इति चेन्न। 'क्वौ लुप्तमि'ति निषेधात्। 'सखीयतेः सख्युरि'ति 'ख्यत्या'त्सूत्रस्थभाष्येण क्यजाद्यकारलोपे तन्निषेधप्रवृत्तेरावश्यकत्वात्। तत्र हि ङस्निमित्तो यण्। क्यजकारनिमित्तत्वे हि 'लोपो व्योरि'ति 'क्वि'निमित्तकलोपाऽऽपत्तिः। ङस्निमित्तकस्य तु बहिरङ्गत्वेनाऽसिद्धत्वान्न लोपः। स्थानिवत्त्वे हि व्यवधानात्तन्निमित्तकस्याऽप्राप्तिः। 'अभिव्यक्तपदार्था' इति न्यायस्य[7] पदकार्यविषयकत्वान्नैतद्विषये प्रवृत्तिः। अत एवाऽस्य सौ 'पन्था'इति, शसादौ 'पथः'

---

१. 'तपरत्वं मुखसुखार्थमि' ति लघुशेखरे पाठः।

२. क. कुण्डलितः ख. पाठः।

३. 'केचित्तु' इत्यारभ्य 'इति वदन्ति' क. कुण्डलितः ख. पाठः। मनोरमायामपि पाठोऽयं वर्त्तते।

४. 'विकृताऽनन्यत्वेन' ख. पाठः।

५. 'परत्वात्' ख. पाठः।

६. ख. पाठः क. ग. नास्ति।

७. 'न्यायस्य तु पदकार्यमात्रविषयकत्वान्नैतद्विषये प्रवृत्तिः' ख. पाठः।

'पथे'त्यादि च सिद्ध्यति । न च 'केवलः 'पथिशब्दः[1] स्त्रियामस्ती'ति युवोरनाकाविति सूत्रस्थभाष्यप्रमाण्यात्क्यजन्तात्क्विपोऽन[2]भिधानमिति तपरकरणं चरितार्थम् । स्त्रीप्रत्ययाऽप्रवृत्त्या तदङ्गीकारेऽपि भाष्यसामञ्जस्यात् । 'विभक्तौ लिङ्गविशिष्टाऽग्रहणमि'त्येतत्प्रयोजनकथनाऽवसरे हि भाष्ये तदुक्तम् ।

न चैवमपि 'पन्थियावि'त्यादावियङ् दुर्लभः,सुब्विधावन्तर्वर्त्तिविभक्त्याश्रयनलोपस्याऽसिद्धत्वेनेवर्णान्ताऽङ्गाऽभावादिति वाच्यम् । सुप्त्वतद्व्याप्यधर्मनिमित्तकसुब्विधेरेव ग्रहणात् । अत एव 'दण्डिष्वि'त्यादौ षत्वे नलोपाऽसिद्धत्वविधायकं न 'नलोपः सुबि'ति सूत्रम् । न चैवमपि न्थादेशेऽङ्गवृत्तपरिभाषयेयङ् न स्यादिति वाच्यम् । तस्या अनित्यत्वात् । न[3] च इयङि कृतेऽत्वं दुर्वारमिति वाच्यम् । सन्निपातपरिभाषया स्वाऽतिरिक्ततद्विघातकस्य बाधेनाऽदोषादिति व[4]दन्ति । (अ[5]न्ये तु प्रकृतिप्रत्ययविशेषाऽपेक्षतया पथ्यादिकार्याणां बहिरङ्गत्वेनाऽन्तरङ्गत्वात् 'एरनेकाच' इति यणेवोचितः । तपरकरणन्तु स्पष्टार्थमेव[6] । 'एरदि'त्युक्तौ ततो लाघवाऽभावात् । अन्यथा विधेयेऽपि तपरकरणात् 'कुरुत' इत्यादौ गुणाऽभाववत्पन्थानावि'त्यादौ दीर्घाऽनाप[7]त्तेः । 'प[8]थ्यादिभ्य आचारक्विप्तु नाऽस्त्येवेति 'इन्हनि'त्यत्र

---

१. 'पथिन्शब्दः' ख. पाठः ।

२. 'क्विपोऽप्यनभिधानम् । स्त्रीप्रत्ययाऽप्रवृत्त्या तदङ्गीकारेऽपि' ख. पाठः ।

३. 'न चैवमियङि कृते' ख. पाठः ।

४. 'इति वदन्ति' इति ख. नास्ति ।

५. 'अन्ये तु' इत्यारभ्य 'स्पष्टार्थमेव' इत्यन्तः ख. पाठः । क. नास्ति ।

६. 'इति हरदत्तः' इत्यारभ्य 'तपरकरणन्तु स्पष्टार्थमेव' इत्यन्तः ख. पाठः । क. कुण्डलितः ।

'अन्ये तु' इत्यारभ्य 'स्पष्टार्थमेव' इत्यन्तः पाठस्तु क. नास्त्येव ।

७. 'दीर्घाऽनापत्तिरित्याहुः । थो न्थः' इति क. ग. पाठः ।

८. 'पथ्यादिभ्यः' इत्यारभ्य 'शङ्कचम्' इत्यन्तः ख पाठः, क. ग. नास्ति ।

निरूपितम् । अतो न तदन्तात्क्विपि तपरकरणचारितार्थ्यं शङ्क्यमित्याहुः) ।

**थो न्थः ।** स्थान्यादेशावनच्कौ । 'थेन्थ' इत्येव सिद्धे इतोऽद्वचनम् ऋभुक्षिन्नर्थम् । 'थो नुडि'ति नोक्तम् । इत्संज्ञाऽऽद्यन्तावित्यनुसन्धाने प्रक्रियागौरवात् ।

**भस्य टेः ।** भस्य किम् ? । पथिभ्याम् । **सुपथीति** । अत्र समासान्तविधेरनित्यत्वात् 'ऋक्पूरि'ति, 'इनः स्त्रियामि'ति च न समासान्तः । आद्यो 'न पूजनादि'ति निषेधादपि न । 'अत्र लिङ्गविशिष्टपरिभाषया आत्वन्थाऽऽदेश-टिलोपास्तदन्तग्रहणात्प्राप्ता विभक्तौ लिङ्गविशिष्टाग्रहणान्न भवन्ती'ति 'युवोरनाकावि'त्यत्र भाष्ये स्पष्टम् । न च टिलोपो न विभक्तिनिमित्तकोऽन्यत्राऽपि प्रवृत्तेरिति वाच्यम् । प्रकृतोदाहरणे विभक्तिनिमित्तत्वमात्रेण तत्प्रवृत्तेः । अत एव 'युवोरनाकावि'ति सूत्रे 'श्वयुवे'त्यादेः परिभाषाफलत्वेनोपन्यासो भाष्ये ।

**सम्बुद्धौ नपुंसकानामिति ।** यद्यपि 'न ङिसम्बुद्ध्योरि'ति सूत्रे 'वा नपुंसकानामि'त्येव पठितं, तथापि ङिग्रहणस्य तत्र प्रत्याख्यातत्वेन, 'हे चर्मन्' 'हे चर्मे'ति सम्बुद्धावेवोदाहृतत्वेन च, तावन्मात्रविषयताऽस्येति भावः । इदं च 'न लुमते'ति निषेधाऽनित्यत्वमूलक[1]मित्युक्तम् ।

[2]**सुपन्थानीति** । एतदर्थमेव सर्वनामस्थानग्रहणम् । अन्यथा 'सुटी'-

---

१. 'मूलकमिति हलङ्यादिसूत्रे निरूपितम्' ग. पाठः ।

२ 'सुपन्थानीति । न च 'न हि कार्यी निमित्तत्वेनाश्रीयते' इति निषेधात्कथमिकारे परे इकारस्याऽऽत्वम् । एतेन 'पथिमथ्यृभुक्षामात्' 'भस्य लोप.' इतः, 'अत्सर्वनामस्थाने' इतिलघुन्यासेनान्त्यनलोपेकारलोपाभ्यां सिद्धेटेरिति मुख्यटिग्रहणार्थं, तेन क्यजन्तप्रकृतिकपथीशब्दे शसादौ टिलोपो ने'त्यपास्तम् । सप्तम्येकवचने 'पथी'त्यादाविलोपाऽनापत्तेरिति वाच्यम् । एतदर्थमेव सर्वनामस्थानग्रहणम्' इति ग. पाठः ।

त्येव वदेत्। (न च[1] 'सुटी'त्युक्तौ, 'सुपथी' इत्यत्राऽतिव्याप्तिः। परत्वाट्टिलोपेन सिद्धेः) इति दिक्।

**ष्णान्ता**। स्त्रीलिङ्गनिर्देशाद्विशेष्यसाकाङ्क्षात्प्रकृतं सङ्ख्येत्याकृष्यते। तत्र स[2]ङ्ख्याशब्देन लोके सङ्ख्याप्रकारकबोधजनकाः पञ्चादयो गृह्यन्ते, सामर्थ्यात्। सङ्ख्याशब्दे, बहु-गण-वतु-डतिषु च ष्णान्तत्वाऽसम्भवात्। तदेतदाह—**सङ्ख्येति। सन्निपातपरिभाषयेति**। नुमो बहिरङ्गाऽसिद्धत्वन्तु न, संज्ञायाः कार्याऽपेक्षत्वेन समत्वात्। स्पष्टं चेदमत्रैव भाष्ये।

'षकारसाहचर्येणाऽऽगमाऽजन्यनकारस्यैवाऽत्र ग्रहणमिति न दोष' इति **कश्चित्**। य[3]त्तूपदेशे यौ षकारनकारौ, तदन्ता या सङ्ख्ये'त्यर्थात् 'शतानी'त्यादौ न षट्संज्ञे'ति। तन्न। सन्निपातपरिभाषयैव सिद्धे फलाऽभावात्। असमर्थसमासाऽऽपत्तेश्च। 'ष्ण'शब्दस्य नित्यसाकाङ्क्षत्वाऽभावेन 'देवदत्तस्य गुरुकुलमि'त्यतो वैषम्यात्। किञ्चोपदेशे इति निर्मूलमपि। 'अन्त'ग्रहणफलन्तु 'सङ्ख्ये'त्यपकर्षः। 'ष्णा षडि'त्युक्तौ हि [4]टापोपस्थापितस्य तदन्तस्त्रीलिङ्गशब्दमात्रस्य ग्रहणाऽऽपत्तिः। किञ्चोणादोनामव्युत्पत्तिपक्षे प्रातिपदिकानामुपदेशाऽभावेन सूत्रस्याऽसम्भवदुक्तिकत्वाऽऽपत्तिरिति दिक्।

**न लुगिति**। एवं च फलाऽभावात्तत्र षट्संज्ञाऽपि नेति बोध्यम्।

**नोप**। नलोपस्याऽसिद्धत्वात् 'नामी'ति दीर्घाऽप्राप्तेरयमारम्भः। न चोपधाग्रहणं व्यर्थम्। दीर्घश्रुत्योपस्थिता'ऽच' इत्यस्य नाम्परत्वेन

---

१. 'न चे'त्यारभ्य 'दिक्' इत्यन्तः ख. पाठः। क. कुण्डलितः।

२. 'सङ्ख्याशब्देन स्वप्रतिपादकाः शब्दा लक्षणयोच्यन्ते' ख. पाठः।

३. 'यत्तु' इत्यारभ्य 'बोध्यम्' इत्यन्तः ख. पाठो मनोरमास्थत्वात् क. कुण्डलितः। ग. नास्ति।

४. टापा उपस्थापितस्य षान्तनान्तस्त्रीलिङ्गशब्दमात्रस्येत्यर्थः।

**विशेषणात्** 'येन नाऽव्यवधान'न्यायेन नकारमात्रव्यवहितस्यैव दीर्घसिद्धे-रिति वाच्यम् । उत्तरार्ऽर्थत्वात् । अत एव 'इन्हन्पूषार्ऽर्यम्णामिति उपधा-[1]दीर्घस्य नियम' **इत्याकरः** । प्रत्ययस्याऽङ्गांऽशे उत्थिताऽऽकाङ्क्षत्वेना-ऽस्याऽन्वयाऽसम्भवाच्च । अत्र चोपधाग्रहणस्येह करणमपि मानम् ।

'ने'ति च लुप्तषष्ठीकमङ्गस्य विशेषणम् । नेति किम् ? । चतुर्णाम् । [2]नामि किम् ? । वर्मणाम् । **नलोप इति** । 'ब्रुवः पञ्चानामि'तिलिङ्गान्न सन्निपातपरिभाषाविरोधः । **गौणत्वे त्विति** । एतदभिप्राय उक्तः ।

**प्रियपञ्च्ञामिति** । ञद्वयमध्ये चकारः ।

**अष्टन आ** । 'पथिमथी'तिवदत्राऽपि [3]नाऽनुनासिकः 'रायो हली'त्यतो 'हलीत्यपकृष्यते इत्याह—**हलादाविति** । तथा च भाष्यं-'हलीत्युभयोः शेष' इति ।

[4]अष्टाभ्य औश् । 'उङि'ति नोक्तम् । सकारस्योकारे 'अष्टा अ उ' इति स्थिते 'इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वादि'तिन्यायेनाऽन्तरङ्गत्वात् सवर्णदीर्घे, तत आद्गुणेऽष्टावित्यसिद्ध्यापत्तेः ।

'हली'त्यपकर्षे 'कृताऽऽकारादि'त्यनुपपन्नमत आह—**कृतात्वनिर्देश इति** । कृताऽऽत्वानुकरणमित्यर्थः । लक्षणवशसम्पन्नत्वे हि तस्य वैकल्पिक-तया लाघवात् 'अष्टभ्य' इत्येव वदेदिति भावः ।

**ज्ञापयतीति** । अयं भावः—'हली'त्यपकृष्यमाणं वाक्यभेदेन पुन-र्विधानार्ऽर्थम् । तेना'ऽष्टन' इत्यस्य क्वचिदक्ष्वपि प्रवृत्तिरिति । एतेन 'हली'ति पूर्वत्रैव कर्त्तुमुचितमि'त्यपास्तम् । 'हलि राय' इति तु सूत्र यितुमुचितम् ।

---

१. 'दीर्घमात्रस्य नियमः' ख. पाठः ।

२. 'नामिति किम्' ख. पाठः ।

३. 'पथिममथीतिवदत्राऽप्याकारप्रश्लेषान्नाऽनुनासिकः ख. पाठः ।

४. 'अष्टाभ्य औश्' इत्यारभ्य 'अथ आह' इत्यन्तः कः ग. पाठः । ख. नास्ति ।

**आत्वमिति**। आत्वमात्रमित्यर्थः। **सूत्र इति**। 'दोर्घान्तादष्टनः पराऽसर्वनामस्थानविभक्तिरुदात्ते'ति तदर्थः।

**ज्ञापकादिति**। तद्धि 'अष्टभिरि'ति ह्रस्वेऽन्तोदात्तत्वव्यावृत्त्यर्थम्। अयं[1] च घृतादित्वादन्तोदात्त इति 'अष्टावि'त्यत्र नाऽष्टन्स्वरोपयोगः। 'एकादेश उदात्तेने'त्येव तत्राऽन्तोदात्तसिद्धेः। नन्वष्टाभिरित्यत्र साऽवकाशस्य 'अष्टन' इति सूत्रस्याऽष्टभिरित्यत्र परत्वात् 'झल्युपोत्तममि'त्यनेन बाधे, 'सकृद्गतावि'तिन्यायेन पुनरप्रवृत्तौ व्यर्थमेव तत्। नह्यष्टाभिरित्यत्र 'झल्युपोत्तममि'ति प्राप्नोति, अनान्तत्वेन षट्त्वाऽभावात्, अल्विधित्वेन स्थानिवत्त्वाऽभावाच्चेति[2] चेन्न। यथोद्देशपक्षे आत्वस्य बहिरङ्गत्वेनाऽन्तरङ्गायां षट्संज्ञायामसिद्धत्वान्नान्तत्वेन षट्त्वे जाते, प्रगृह्यसंज्ञाप्रकरणोक्तरीत्या नान्तसङ्ख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपषट्त्वस्याऽल्धर्मत्वाऽभावेन तत्प्रयुक्तस्वरादेरल्विधित्वाऽभावात्स्थानिवद्भावेन, लोकन्यायसिद्धैकदेशविकृतन्यायेन चाऽऽकारान्तेऽपि तस्य सिद्धतया 'अष्टन'इत्यस्य षट्स्वराऽपवादत्वादष्टाभिरित्यत्रेवाऽष्टभिरित्यत्राऽपि प्रवृत्तिः स्यादिति तद्व्यावृत्त्यर्थं दीर्घग्रहणं विकल्पज्ञापकमित्याशयात्। यथोद्देशपक्षाऽऽश्रयणे,[3] चेदमेव दीर्घग्रहणं मानम्। 'भविष्यति किञ्चिदनेन प्रयोजनमित्य'भिसन्धिमात्रेणैव यथोद्देशपक्षे संज्ञाप्रवृत्तेः प्रगृह्यसंज्ञाप्रकरणे **कैयटादिभि**रुक्तत्वात्।

एतेन 'यथोद्देशेऽपि पूर्वं फलाऽभावात्संज्ञाप्रवृत्तिर्दुरुपपादे'त्यपास्तम्। स्पष्टं चेदं षट्संज्ञासूत्रे, 'अष्टनो दीर्घादि'ति सूत्रे च भाष्ये, कैयटे च[4]।

---

१. 'अयं च' इत्यारभ्य 'अन्तोदात्तसिद्धेः' इत्यन्तः क. ग. पाठः। ख. नास्ति।

२. 'स्थानिवत्त्वाऽभावाच्च। अकृतव्यूहपरिभाषया पूर्वं संज्ञाया अप्रवृत्तेश्चेति चेन्न। यथोद्देशपक्षे' इति ख. पाठः।

३. 'यथोद्देशपक्षाश्रयणे, आत्वविषये षट्संज्ञायामकृतव्यूहपरिभाषाऽप्रवृत्तौ वा इदमेव दीर्घग्रहणं मानम' ख. पाठः।

४. 'कैयटे च' इति ख. ग. नास्ति।

न चाऽऽकारान्तस्य षट्त्वेऽष्टावित्यत्र गुणापत्तिः। औश्विधिसामर्थ्यात्।

केचित्तु[1] कार्यकालपक्षेऽपि दीर्घग्रहणं सकृद्गतिन्यायाऽनित्यत्वज्ञापनार्थं सत् आत्वविकल्पज्ञापकमाहुः।

नन्वेवमप्यष्टावित्यादावष्टन्स्वरस्य चारितार्थ्यम्। न हि तत्र षट्स्वरः प्राप्नोति। हलादित्वाऽभावात्। एकादेशे कृतेऽप्येकदेशविकृतन्यायेन टान्तस्याऽष्टन्शब्दत्वादौ इत्यस्य स्थानिवत्त्वेन विभक्तित्वाच्च न दोषः। स्वरात्पूर्वं सन्धिकार्याऽप्रवृत्तेः 'एही'त्यत्राऽऽङ्निमित्तनिघातसिद्धये 'यद्धितुपरमि'ति सूत्रे भाष्ये ध्वनितत्वाच्चेति चेन्न। अष्टन्शब्दस्य घृताऽऽदिपाठादन्तोदात्तत्वेन 'एकदेश उदात्तेनोदात्त' इत्यनेनैव तत्राऽन्तोदात्तत्वसिद्धेः। घृतादावस्य पाठे चेदमेव भाष्यं मानम्।

नन्वेवमपि 'षट्त्रिचतुर्भ्यो हलादिरि'त्यत्र, 'झल्युपोत्तममि'त्यत्र च विहितविशेषणाऽऽश्रयणेन, समासे षट्स्वराऽप्राप्त्या 'प्रियाष्टाभिः' 'प्रियाष्टाभ्यामि'त्यादिरवकाशः। अत एव 'चतुरः शसी'ति सूत्रे 'षट्-संज्ञकेषु हलादिग्रहणव्यावर्त्यं नाऽस्ती'त्युक्तम्। समासे प्रवृत्तौ हि जसि 'कदष्टावि'त्यादेः सम्भवेन भाष्यमसङ्गतं स्यात्। 'कदष्टन्' शब्दस्याऽव्ययपूर्वपदप्रकृतिस्वरेणाऽऽद्युदात्तत्वादेकादेशस्वरेणाऽपि नाऽन्तोदात्तत्वम्। 'ष्णान्ते'त्यत्र सङ्ख्याशब्दो लोके गणनायां प्रसिद्ध एव गृह्यते इति, न 'कदष्टन्' इति समुदायस्य षट्त्वमिति चेन्न। एतज्ज्ञापकपरभाष्य[2]प्रामाण्यात् 'अष्टनो दीर्घादि'त्यस्याऽपि विहितविशेषणाऽऽश्रयणेन समासेऽप्रवृत्तेः। गणनायां प्रसिद्धस्यैव ग्रहणे मानाऽभावेन सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकतया उत्तरपदार्थप्रधानसमासे समुदायेऽपि षट्त्वस्य सत्त्वाच्च। प्रियाऽष्टादीनां गौणानामनभिधानस्य वक्ष्यमाणत्वाच्च। वार्त्ति-

---

१. 'केचित्तु' इत्यारभ्य 'वक्ष्यमाणरीत्या एषामभावाच्च' इत्यन्तः क. कुण्डलितः ख पाठः। लघुशब्दरत्ने त्वयं ग्रन्थो वर्त्तते।

२. 'भाष्यमानात्' क. पाठः।

कमते विहितविशेषणसत्त्वेऽपि भाष्यमते उपसमस्तव्यावृत्त्यर्थं हलादिग्रहणमिति विहितविशेषणत्वे प्रमाणाऽभावाच्च । निरूपयिष्यते चेदं स्वरप्रक्रियायाम् । आचारक्विबन्तप्रकृतिककर्तृक्विबन्तादष्टन्शब्दात् औ च षट्स्वराऽष्टन्स्वरयोरुभयोरप्यप्रवृत्तिः । 'अभिव्यक्तपदार्था ये' इति न्यायात् । न्यायाऽऽश्रयणे चेदं, 'चतुरः शसी'ति सूत्रस्थं च भाष्यं मानम् । वक्ष्यमाणरीत्या एषामभावाच्च ।

**अष्टानामिति** । 'प्रियाष्टानावि'त्यादावात्वव्यावृत्तये 'हली'त्युक्तेरादौ नुट्, तत आत्वम् । ननु सन्निपातपरिभाषया नाऽऽत्वम् । नान्तत्वप्रयुक्तषट्संज्ञकसन्निपातेन जातस्य तदविघातकत्वात् । किन्तु 'नोपधाया' इति दीर्घे नलोपः । अन्तोदात्तत्वन्तु 'षट्त्री'त्येव सिद्धम् । न[1] च नलोपस्याऽपि सन्निपातपरिभाषयाऽप्राप्तिः । नलोपस्याऽसिद्धत्वेनाऽदोषादिति चेन्न ।

'क्नमेजन्त'सूत्रे भाष्ये सन्निपातपरिभाषादोषनिरूपणाऽवसरे 'अदीदपदि'त्यत्र पुक् ह्रस्वत्वस्याऽनिमित्तं स्यादि'ति ग्रन्थे'असिद्धस्यापि तद्विघातकविधेरनया निवृत्तिरित्यर्थलाभात्, ह्रस्वस्याऽपि पुगपेक्षया बहिरङ्गत्वेनाऽसिद्धत्वात्, जानातेर्मित्त्वसामर्थ्याद्ध्रस्वे तदप्रवृत्तिरि'ति च **कैयटे**नोक्तम् । न हि बहिरङ्गाऽसिद्धत्व-पूर्वत्राऽसिद्धत्वयोः कश्चिद्विशेषोऽस्ति । अत एव 'गव्यिता' 'नाव्यिते'त्यादौ सन्निपातपरिभाषया यलोपो न । नपुंसके 'विश्वपाये'त्यादौ च 'आतो धातोरि'ति न[2] । यलोपस्य बहिर्भूततृज्निमित्तकत्वेन, आतो लोपस्य च धातुसंज्ञा-भसंज्ञानिमित्तत्वेन बहिरङ्गत्वेनाऽसिद्धतया निमित्तविघाताऽभावः स्पष्ट एवेति 'मय उञो वे'ति सूत्रे निरूपितम् । तस्मान्नलोपोऽपि परिभाषाऽनित्यत्वेनैव वाच्यः । एवं च तस्याऽसिद्धत्वादात्वमेव युक्तं तदनित्यत्वेनेति ध्येयम् ।

---

१. 'न च तस्यापि' ख पाठः ।

२. 'आतो धातोरिति च न' ख. पाठः ।

कार्यकालपक्षे त्वत्र नुडर्थमपि 'हली'ति। तदा हि तत्तद्विध्येकवाक्यताऽऽपन्नषट्त्वस्याऽपि बहिरङ्गत्वेन, नित्यत्वादत्वे कृतेऽनान्तत्वेन षट्त्वाऽभाभावान्नुट् न स्यात्। (न[1] चाऽत्र यद्यात्वं तर्हि 'अकृतव्यूह'परिभाषया नुट् न स्यादिति वाच्यम्। उक्तरीत्या स्थानिवद्भावेन षट्त्वस्य सत्त्वेन निमित्तविनाशाऽभावात्। आत्वविषये तदप्रवृत्तेरुक्तत्वाच्च)। **स्थानिवद्भावादिति**। 'पूर्वत्राऽसिद्धे' इति तु 'तस्य दोष' इत्यनेन निषिद्धमिति भावः। न[2]नु संयोगाऽऽदिलोपसाहचर्याल्लत्वस्येव णत्वस्यापि 'रषाभ्यामि'ति प्रतिपदोक्तस्यैव ग्रहणं भविष्यति न ष्टुत्वविधिविधेयस्येति चेत्। सत्यम्। भाष्यकृता 'मूर्द्धन्य'पदाऽनुवृत्तिमाश्रित्य 'रषाभ्यामि'त्यत्र णग्रहणस्य प्रत्याख्यातत्वेन, तदेकवाक्यतयाऽनित्यत्वमाश्रित्य, णत्वांऽशे प्रतिपदोक्तपरिभाषा-साहचर्यपरिभाषयोरप्रवृत्त्यङ्गीकारेणाऽक्षतेः। न चैवं 'पदान्तस्ये'ति णत्वनिषेधो व्यर्थः, 'अपदान्तस्य मूर्द्धन्य' इत्यनुवृत्त्यैव सिद्धेरिति वाच्यम्। णग्रहणवत्स्पष्टाऽर्थत्वात्। भगवता प्रत्याख्यानेनाऽयमेव सूत्राऽऽशयो, नत्वन्यः कश्चिदिति ध्वनितम्।

ननु पञ्चमीसमासः प्रत्याख्यातोऽत आह—**बहिरङ्गस्येति**। अत[3] एव 'ण'ग्रहण-तत्प्रत्याख्यानयोः, पञ्चमीसमास-तत्प्रत्याख्यानयोश्च न फले विशेष इत्याहुः। एवं च 'प्रियाष्टूण इति **हरदत्तो**दाहृतं ष्टुत्वं चिन्त्यमिति बोध्यम्। ('[4]**कार्यकालपक्षे**' इत्यनेन यथोद्देशे णत्वं युक्तमेवेत्यपि ध्वनितम्)।

---

१. अयं पाठः क. कुण्डलितः। ख. ग. नास्ति।

२. 'ननु' इत्यारभ्य 'अत आह' इत्यन्तः ख. पाठः क. कुण्डलितः। मनोरमायामपि च दृश्यते।

३. 'अत एव' इत्यारभ्य 'इत्याहुः' इत्यन्तः कुण्डलितः ख. पाठः।

४. 'कार्यकालपक्षे' इत्यारभ्य 'ध्वनितम्' इत्यन्तः क. कुण्डलितः ख. पाठः।

**प्राधान्य एवेति**। 'षड्भ्यो लुगि'त्येतत्साहचर्यादस्य गौणेऽप्रवृत्तिः। तस्य यथा प्रधाने एव प्रवृत्तिस्तथा 'ह्रस्वनद्याप' इत्यत्र निरूपितम्। एवञ्च गौणे औशोऽप्रवृत्तौ, तज्ज्ञाप्याऽऽत्वमपि नेति बोध्यम्। अ[1]यं भावः—औश्विधावष्टन्शब्दोऽर्थपरः। शब्दस्तु विशेषणम्। अत एव बहुवचनम्। अन्यथा कृताऽऽत्वानुकरणेऽप्येकवचनेनैव निर्दिशेत्—'अष्टा औशि'ति, 'अष्ट' इति वा। षष्ठ्यर्थे पञ्चमी। जस्शसोरष्टन्शब्दवदर्थात्सम्बन्धस्तु स्वगतसङ्ख्याऽनुवादकत्वेनैव। एतज्ज्ञाप्यवाक्यभेदसिद्धत्वाच्चाऽऽत्वमपि तत्रैव। तथा च भाष्यं—'हलीत्यपकर्षे 'प्रियाष्टौ' 'प्रियाष्टाः' इति न सिद्ध्यति, प्रियाष्टानौ' 'प्रियाष्टान' इति प्राप्नोति। 'यथालक्षणमप्रयुक्ते' इति। 'न भवत्येवाऽत्राऽऽत्वमित्यर्थ' इति **कैयटः**।

अत्र **'इति प्राप्नोती'**त्यस्य 'इत्येव प्राप्नोती'त्यर्थः। अन्यथाऽपकर्षाऽभावेऽप्यात्वस्य वैकल्पिकत्वेन 'प्रियाष्टान' इत्यस्य दुर्वारत्वेन, यथाश्रुतभाष्यस्याऽलग्नकतापत्तेः। गौणत्वेऽप्यौश्त्वप्रवृत्तौ हि बहुवचनोल्लेखोऽसङ्गत इति स्पष्टमेव। यत्तु **काशिकायाम्**—'आत्वाऽभावादौश्त्वं गौणतायां ने'त्युक्तम्। तत्र विपरीतं वक्तुं युक्तम्। अ[2]नुमीयमानाऽऽत्वाऽभावसाधकोपायेनैवौशभावस्याऽपि साधयितुं शक्यत्वाच्च।

**हाहावदिति**। प्रथमेकवचनेऽपि हल्ङ्यादिलोपात्परत्वादात्वे, ततो लोपाऽप्राप्तेः 'प्रियाष्टाः' इति रूपमिति भावः। न[3] च लोपोऽन्तरङ्गः। प्रकृतिप्रत्ययोभयसापेक्षत्वेन, प्रत्ययांऽशे विशेषाऽपेक्षत्वेन च समत्वात्। इदं सर्वं वृत्ति-हरदत्ताद्यनुरोधेन। **केचित्तु**—'यथालक्षणमप्रयुक्ते' इत्यस्य

---

१. अयं भावः' इत्यारभ्य 'स्पष्टमेव' इत्यन्तः क. कुण्डलितः ख. पाठः।

२. 'अनुमीयमाना' इत्यारभ्य 'शक्यत्वाच्च' इत्यन्तः ख. पाठः क. ग. नास्ति।

३. 'न च लोपोऽन्तरङ्गः। अनित्यत्वेन तस्या इहाऽप्रवृत्तेः। इदं सर्वं वृत्ति-हरदत्ताद्यनुरोधेन' इति ख. पाठः।

'अप्रयुक्ते' लक्षणाऽभावस्यैव योग्यता, न तु लक्षणप्रवृत्तेरि'त्यर्थः। आद्य-व्याख्यायाम् 'अप्रयुक्ते' इति वाक्यशेषाऽसङ्गतिः। प्रयुक्तेऽपि लक्षणाऽनतिक्रमसत्त्वात्। 'प्रयुक्तानां' हीदमन्वाख्यानमि'त्यभियुक्तोक्तिविरोधाच्च। किञ्च भाष्यकारस्य लक्ष्यैकचक्षुष्कतया इयमेव व्याख्योचिता[1]। एकस्यैव प्रयोगस्य भाष्यफक्किकाव्याख्यानभेदेन साधुत्वाऽसाधुत्वयोरनुचितत्वाच्च।

अत एव हल्ङ्यादिसूत्रेऽस्य 'अप्रयुक्ते लक्षणाऽभाव' इत्येव व्याख्याऽऽदृता **कैयटेन**। एवं चैतेषामनभिधानादसाधुत्वेन सर्वोऽपि विचारो निष्फलः। अत एव विभाषा आत्वं, यदयमात्वभूतस्य ग्रहणं करोति'अष्टाभ्य' इति, अन्यथा 'अष्टन'इत्येव ब्रूयादि'त्यादि 'अष्टाभ्य औशि'त्यादिसूत्रस्थं भाष्यं सङ्गच्छते। कैयट[3]रीत्या गौणेऽप्रवृत्त्यर्थत्वाद्बहुवचननिर्देशस्य, तदसङ्गतिः स्पष्टैव। एवं भाष्यात्तेषामप्रयोगे सिद्धे, साहचर्येण गौणे औशप्रवृत्तिकल्पनमपि व्यर्थमेवेति वदन्ति।

**किञ्चिदिति**। ऋतावुपपदे यजेः क्विन्। धृष्णोतेर्द्वित्वम्, अन्तोदात्तत्वं च। सृजेः कर्मणि क्विन्, अमागमश्च। दिशे, कर्मणि। उदः स्निहेः क्विप्, उदोऽन्तलोपः, षत्वं च। अञ्चेः सुपि क्विन्। क्रुञ्चेर्निरुपपदात्क्विन्, नलो-

---

१. इतोऽग्रे—'अपि च 'यस्य प्रयोगो न स्मर्यते, नापि तन्निषेधस्तद्यथालक्षणमि'ति व्याख्यानमेव,–'भवत्येवाऽत्राऽऽत्वमि'त्यपि व्याख्यातुं शक्यत्वेन न तन्निर्णायकम्। न च पक्षाऽन्तरेषु व्यवस्थितविभाषया आत्वाऽभावसाधकोपायवत् 'हली'त्यपकर्षे आत्वसाधकोपायाऽभावः। 'हली'त्यस्य निष्ठायां सेटी'तिवत्कालावधारणार्थत्वमाश्रित्य, वाक्यभेदेन हलादित्वे जाते आत्वम्, अर्थात् 'यत्र हलादित्वं भावि, तत्रे'त्यर्थेन पूर्ववाक्येन सर्वत्राऽऽत्वस्य सुलभत्वात्'—इति ख. पाठः। क. ग. नास्ति।

२. 'एकस्यैव' इत्यारभ्य 'अनुचितत्वाच्च' इति क. ग. पाठः। ख. नास्ति।

३. 'कैयटरीत्या' इत्यारभ्य 'व्यर्थमेव' इत्यन्तः क. ग. पाठः। ख. नास्ति।

पाऽभावश्चेति भावः। **निरुपपदाद्युजेरिति**। नुमोऽसमास एव विधानेन, सोपपदे 'चोः कुरि'ति कुत्वेनैव सिद्धत्वेन, क्विनि, क्विपि च विशेषाऽभावात्क्विन्विधिवैयर्थ्याऽऽपत्त्येति भावः।

**कनावितावितिि**। इदमुपलक्षणम्-उच्चारणार्थेकारस्याऽपि।[1] 'ककारो गुणवृद्धिप्रतिषेधार्थः।[2] नकारः-'क्विन्प्रत्ययस्ये'त्यत्र विशेषणाऽर्थं' इति भाष्यम्। एतेन 'स्रगि'त्यत्राऽमागमस्य 'आगमा अनुदात्ता' इति बाधित्वा, नित्त्वसामर्थ्यादाद्युदात्तत्वमि'ति परास्तम्। 'दधृगि'त्यत्र निपातनात् विशिष्यैवाऽन्तोदात्तत्वं भाष्ये उक्तम्। न च स्पृशधातोर्युजक्रुञ्चाभ्यां च यङ्लुकि, स्वरे विशेषः। 'नाऽस्ति स्वरे विशेष' इत्येतद्भाष्यप्रामाण्येन, 'ञ्नित्यादिरि'त्यनुबन्धनिर्देशेन च यङ्लुक्यप्रवृत्तेः।[3]

क्रदतिङ्। **सन्निहितेति**। तत्फलन्तु णिजादीनां संज्ञाऽभावः। अतिङ्-किम्?। 'रुरुदिवे'त्यादौ 'नेड्वशि कृती'तोण्णिषेधो मा भूदिति। ज्ञापकेन निर्वाहे तु न किञ्चिल्लाघवमिति सूत्राऽऽशयः।

**युजेर**। 'उगिदचां सर्वनामस्थाने' इत्यतः 'सर्वनामस्थाने' इति, 'इदितो नुम् धातोरि'त्यतो 'नुमि'ति चाऽनुवर्त्तते।

**क्विन्**। प्रत्ययग्रहणसामर्थ्यादतद्गुणसंविज्ञानो बहुव्रीहिरित्याह—**क्विन्-प्रत्ययो यस्मादिति**। न च तदभावे वस्यैव कुत्वाऽऽपत्तिः। कुत्वस्य[4] पूर्वत्राऽसिद्धत्वाद्वलोपे कृते तस्याऽप्राप्तेः। न चाऽनवकाशं कुत्वम्। 'क्विन्नन्तस्य पदस्ये' त्यर्थेनाऽवकाशस्य सुलभत्वात्। किञ्च वस्य कुत्वे 'क्विनो

---

१. 'इदमुपलक्षम्, उच्चारणार्थेकारस्याऽपि' इति ख. नास्ति, क ग. पाठः।

२. 'प्रतिषेधार्थः' ग. पाठः।

३. इतोऽग्रे—'एवमिकारस्याऽपीत्संज्ञेति 'दिव औ'त्सूत्रे निरूपितम्। एतेन 'इकार उच्चारणाऽर्थो, नेत्संज्ञक इत्यपास्तम्' इति ख. पाठः। क. ग. नास्ति।

४. 'कुत्वस्य बहिरङ्गत्वात्पूर्वत्राऽसिद्धत्वाच्च वलोपे कृते' ख. पाठः।

घ' इत्येव वदेदिति भाष्यकैयटादौ स्पष्टम् । 'नशेर्वे'त्यत्र घकारस्यैवाऽनुवृत्तावपि न दोष इत्याहुः ।

**चोः कुः ।** 'स्कोरि'त्यतोऽन्त इति, 'झलो झली'त्यन्तो 'झली'ति चाऽनुवर्त्तते । 'पदस्ये'ति चाऽधिकारः । तदाह—**झलीत्यादि** । 'क्विन्प्रत्ययस्ये'-त्यत्र तु 'झली'ति नाऽस्ति, स्ध्वोर्ग्रहणसामर्थ्येन 'एकाचो बश' इत्यतस्तन्निवृत्तेः । निष्ठाऽऽदेशप्रकरणेन विच्छेदाच्च । अत एव 'स्पृष्टमि'त्यादौ न दोषः । एतेनाऽत्रैव 'चोरि'ति वक्तव्यं, तत्रैव वा 'क्विन्प्रत्ययस्ये'ति वक्तव्यम्, एवं च 'कु'ग्रहणं व्यर्थ'मित्यपास्तम् । न्याय्यत्वादाह—**असिद्धत्वादिति ।** अतद्गुणबहुव्रीह्याश्रयणात्प्राप्तिः । **सुयुगिति ।** 'सत्सूद्विषे'ति क्विप् । **धातुपाठेति ।** प्रथमोपस्थितत्वात्, व्याख्यानाच्चेति भावः । **युगिति ।** 'क्विप् चे'ति क्विप् । **खनिति ।** 'खजि गतिवैकल्ये' ।

'क्विन्प्रत्यय' इति बहुव्रीह्याश्रयणात्कुत्वं स्यादत आह–**इहेति** । 'सृजिदृशोरि'तिसूत्रस्थ'रज्जुसृड्भ्यामि'ति भाष्यप्रयोगात्, 'काम्यच्'सूत्रे''उपयट्काम्यती'ति भाष्यप्रयोगाच्च, षत्वस्य कुत्वाऽपवादत्वाच्चेति भावः ।

**परिमृडिति ।** नन्वत्र मृजेर्वृद्धिर्दुर्वारा, सोः प्रत्ययलक्षणेन प[1]रत्वात् । ([2]न च प्रत्ययस्य प्रकृत्याकाङ्क्षायामुपस्थितमृजेरेव सम्बन्धेन, मृज्प्रकृतिकप्रत्यये परत एव वृद्धिः, न चाऽयं तथेति वाच्यम् । मृज्धातोः क्विपि 'मृडि'त्यादौ दोषस्य दुरुद्धरत्वात्) इति चेन्न । 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमि'ति परिभाषण[3]ात् । क्विपमाश्रित्य तु न वृद्धिः । 'क्ङिति चे'ति निषेधादित्याहुः । ([4]**साहचर्यादिति ।** 'सहचरिताऽसहचरि-

१. 'परत्वादिति चेन्न । धातोः स्वरूपग्रहणे' इतिरीत्या क. ग. पाठः ।

२. अयं ख. पाठः । क. ग. नास्ति ।

३. 'परिभाषणान्न दोषः' इति ख. पाठः ।

४. अयं ख. पाठः । क. ग. नास्ति ।

तयोः सहचरितस्यैव ग्रहणमि'ति परिभाषणात्, 'रामलक्ष्मणावि'त्यादौ साहचर्यस्याऽभिधानियामकत्वदर्शनाच्चेति भावः)।

**परौ व्रजेः**। 'क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणं चेत्यु'-णादिसूत्रात्क्विप्दीर्घावनुवर्तेते ताभ्यां च व्याख्यानात्पदान्ते इत्यस्याऽसम्बन्धः, किन्तु षेणैव।[1](तत्र[2] तत्सम्बन्धस्य'व्रश्चभ्रस्जे'त्यादौ क्लृप्तत्वाच्च) इत्याह—**क्विबित्यादिना**। ([3]**केचित्तु** 'परौ व्रजेरि'ति भिन्नं सूत्रम्। तेन सामान्यतः क्विप्दीर्घौ विधाय, परेण पदान्तविषये षत्व-मित्याहुः)।

**विश्वस्य**। 'ढ्रलोपे' इत्यतो 'दीर्घ' इत्यनुवर्त्तते। ननु षत्वादीना-मसिद्धत्वेन राट्शब्दपरत्वाऽभावः, 'विश्वाराड्भ्यामि'त्यादौ दीर्घाऽना-पत्तिश्च, 'राटि'ति रूपाऽविवक्षणे तु 'विश्वराजावि'त्यादावपि दीर्घाऽऽ-पत्तिरत आह—**पदान्तोपलक्षणार्थमिति**। ण्यन्तरट्धातोः क्विपि निष्पन्न-'राट'शब्दस्य तु न ग्रहणम्। सुप्रसिद्धत्वेन, व[4]सुशब्दसाहचर्येण चैश्वर्यसम्बन्ध्यर्थप्रतिपादकस्य राजतिनिष्पन्नस्यैव ग्रहणात्। आदित्याश्च, विश्वे च, वसवश्चेति विग्रहे 'आदित्यविश्ववसव' इत्यादौ न दीर्घः। 'विश्व'शब्दस्य पूर्वपदत्वाऽभावात्। अत्र चोत्तरपदाऽधिकारेण पूर्वपदस्य [5]आक्षेपात्।

**स्कोः**। 'पदान्ते, झलि च यौ सकार-ककारौ संयोगादी, तयोर्लोप' इति न सूत्रार्थः। संयोगादित्वस्य, पदान्तत्वस्य चैकस्मिन्नसम्भवात्।

---

१. 'किन्तु षेणैवेत्याह—क्विबित्यादिना' इति क. ग. पाठः।

२. ख. पाठोऽयं, क. ग. नास्ति।

३. ख. पाठोऽयं, क. ग. नास्ति।

४. 'वसुशब्दसाहचर्यादैश्वर्यसम्बन्ध्यर्थप्रतिपादकस्य, प्रशस्तवाचकस्य वा राजतेरेव ग्रहणात्' ख. पाठः।

५. 'चाऽऽक्षेपात्' ख. पाठः।

अतः संयोगविशेषणं—'पदान्ते, झलि चे'ति। न चोपसर्जनत्वम्। लुप्त[1]षष्ठीकपृथक्पदत्वादित्याशयेनाऽऽह—**पदान्ते, झलि च यः संयोग इत्यादि।**

**भृडिति।** 'भृज्जती'त्यर्थे क्विप्। यत्त्वत्र 'झल' इति पञ्चम्यन्तमनुवर्त्तते। तेन झलः परयोरेव स्कोर्लोपः। अत एव 'संयोगान्तस्य लोप' इति सूत्रे—संयोगाऽन्तलोपे यणः प्रतिषेधो वाच्यः'। दध्यत्र। 'संयोगाऽऽदिलोपे च'। काक्यर्थमि'त्युत्तरं—'न वा, झलो लोपादि'ति वचनं प्रत्याख्यातम्। तेनाऽत्रापि स्पष्टमेव झल्ग्रहणसम्बन्ध उक्त इति, नाऽत्रसंयोगाऽऽदिलोप' इति। तन्न। 'न वा वक्तव्यम्। किं कारणम्?। 'झलोलोपात्'। झलो लोपः संयोगान्तलोपो वक्तव्यः। 'बहिरङ्गलक्षणत्वाद्वा'। अथवा बहिरङ्गो यणादेशः, अन्तरङ्गो लोप' इति तदुत्तरभाष्येण संयोगान्तलोपसूत्रे एव 'झल' इत्यस्य सम्बन्धो, न संयोगाऽऽदिलोपे इत्यर्थस्य स्पष्टमेवोक्तत्वाद्। अत एव 'झलो लोपः संयोगान्तलोप'इति 'संयोगान्त'-पदोल्लेखः, 'अन्तरङ्गो लोप' इत्यत्र तदनुल्लेखश्च सङ्गच्छते। 'झल' इत्यस्य विच्छिन्नत्वाच्च[2]। 'अ[3]त्र 'झल' इति सूत्राज्झलीति वर्त्तते। तच्च तत्र झलादिप्रत्ययपरम्। 'उदः स्थास्तम्भोरि'त्यारम्भात्। अर्थाऽधिकाराच्चाऽत्रापि तदर्थकस्यैवाऽनुवृत्तिः। 'धि चे'त्यत्रोपसङ्ख्यात'सडी'-

---

१. 'लुप्तषष्ठीक' इति ख. नास्ति, क. ग. पाठः।

२. एतदग्रे—'अत्र पदस्येत्यधिकृते एकत्वस्य विवक्षितत्वान्निमित्तनिमित्तिनोरेकपदस्थत्वे एव स्कोर्लोप इत्यवधेयम्। तेन 'पृथक् स्थाते'त्यादौ न। पदान्तसंयोगाऽऽदिलोपस्य संयोगघटकवर्णद्वयेऽभिन्नपदस्थे एव प्रवृत्तेः सत्त्वेन, तत्साहचर्याज्झलिनिमित्तलोपस्याऽपि तत्रैव प्रवृत्तिः। तेन 'पयः स्थितिरि'त्यादौ नाऽतिप्रसङ्ग इत्याहुः' इति ख. पाठः।

३. 'अत्र' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ग. पाठः।

त्यस्याऽनुवृत्तिर्वा। तेन 'पृथवस्थाता' पयःस्थितिरि'त्यादौ नाऽतिप्रसङ्ग इत्याहुः।

**सस्य श्चुत्वेनेति**। जश्त्वस्याऽसिद्धत्वात्पूर्वं श्चुत्वमित्यर्थः। **ऋतावुपपद इति**। अत्रैवेत्यर्थः। निपातनसामर्थ्यादिति भावः। 'चोः कुरि'त्येतत्षत्वेनाऽपवादत्वाद्बाध्यते। तद्ध्वयन्नाह–**क्विन्नन्तत्वादिति**। एतेनाऽस्याऽसिद्धत्वेन, न्याय्यत्वात्। 'चोः कुरि'त्येवोपन्यसितुं युक्तिमि'ति परास्तम्। यद्यपि 'षत्व क्विन्प्रत्ययस्येत्यस्याऽप्यवाद' इति नपुंसके वक्ष्यते, तथाऽपि क्विन्विधानसामर्थ्यदेवाऽपवादस्याऽपि बाध इति भावः। 'ऋतो यजति', 'ऋतं यजती'ति वा विग्रहः 'वसन्ताय कपिञ्जलानालभेते'त्यादौ तेषामपि देवतात्वदर्शनात्।

ऊर्गिति। 'ऊर्ज बलप्राणनयोरि'त्यतश्चुरादिण्यन्तात् 'भ्राजभासे'त्यादिना क्विप् णिलोपः। स च चोः कुत्वे न स्थानिवत्। पूर्वत्रा[1]ऽसिद्धत्वात्।

इह[2] जान्तेषु 'अवया' इति नोदाहृतम्। 'अवे यज' इति ण्विनः, तदपवादस्य पदान्तविषये डसश्च च्छान्दसत्वात्। अयं च डस्श्वेतवह-उक्थशस्-पुरोडाश्-अ[3]वयजिभ्य एव। 'मन्त्रे श्वते'ति—'अवे यज' इति सूत्रयोरेवोपसङ्ख्यातत्वात्। तत्र 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विनि'त्युपपदानां, धातूनां च पृथक्पा[4]ठे कर्त्तव्ये, समुदायोच्चारणेनाऽलाक्षणिकमपि किञ्चित् निपातनाल्लभ्यते। तत्र श्वेतशब्दे कर्त्तृवाचिन्युपपदे वहेः कर्मणि

---

१. 'पूर्वत्राऽसिद्धत्वात्, पदान्तविधित्वाच्च' इति ख. पाठ.। मनोरमायामप्येवमेव पाठः।

२. 'इह जान्तेषु' इत्यारभ्य 'विषय एवाऽत्र नेत्याहुः' इत्यन्तः ख. पाठो मनोरमाशब्दरत्नस्थत्वात् क. कुण्डलितः। ग. नास्ति।

३. 'अवयजिभ्य एव। तत्रैवोपसङ्ख्यातत्वात्' ख. पाठः।

४. 'श्वेतोक्थपुरस्सु वहिशंसिदासिभ्य' इतिरीत्या पृथक् पाठे इत्यर्थः।

प्रत्ययः । सूत्रेऽकारउच्चारणार्थः । 'दाशृ दाने' इत्यस्मात्पुरःपूर्वकात्प्रत्ययः कर्मणि, दाश आदेर्डत्वं च । उक्थे कर्मणि, करणे वोपपदे शंसेः प्रत्ययो, न[1]लोपश्च ।

अस्य नलोपेऽपि न वृद्धिः । 'उक्थशस्शब्दस्य सामान्येन रुः सिद्धो, न तस्य निपातनं क्रियते' इति भाष्येण तत्र ह्रस्वस्याऽपि निपातनेन, तत्सामर्थ्यात्तदप्रवृत्तेः । **केचित्तु** शासेः प्रत्ययः, उप[2]धाया ह्रस्वः, तत्सामर्थ्याद्वृद्ध्यभाव इत्याहुः । अत्र च माऽस्तु डस् । दीर्घस्य विचैव सिद्धेः । आपाद्यरूपन्तु वेदे नाऽस्त्येव । विच्ण्विनोः स्वरे तु न विशेषः, एकाऽच्त्वात् । यदि ण्विनन्तस्य समासस्याऽऽद्युदात्तत्वमिष्टं, ण्विनो नित्त्वसामर्थ्यात्, विशिष्टस्य प्रकृतित्वेन निर्देशाच्चेत्युच्यते, तर्हि वृषाऽऽदित्वाद्विजन्तस्याऽपि समासस्याऽऽद्युदात्तत्वं कल्प्यम् । अत्र पाठस्तु 'उक्थशोभ्यामि'त्याद्य[3]र्थः ।

यत्तु 'डस्न विधेयः' 'अवयाः, 'श्वेतवाः' 'पुरोडाश्चे'ति प[4]दान्तविषये रुत्वे रूपसिद्धेरि'ति । तन्न । ण्विप्रत्ययनिमित्तवृद्धौ, अतः परत्वाऽभावेनोत्वाऽनापत्तौ, 'श्वेतवोभ्यामि'त्याद्यसिद्ध्यापत्तेः । यत्तु 'पदान्तविषयेवाऽसरूपन्यायेन ण्विन्प्रत्ययोऽप्यस्ति । निपातनं चेदमुभयोः । इदमेवाऽभिसन्धाय 'अवया' इति प्रतीकमुपादाय 'ण्विन्नि'ति प्राचा व्याख्यातम् ।

---

१. 'नलोपश्च । वृद्धिः'-उक्थशासावि'त्यादेः । पदान्ते तु डस् । 'उक्थशस्शब्दस्ये'ति भाष्ये 'तत्प्रकृतिकस्येत्यर्थ' इति बहवः । केचित्तु शासेः प्रत्ययः । अस्याऽपि डस् आवश्यक 'उक्थशा' इत्यत्र दीर्घाऽर्थः । 'उक्थशस्शब्दस्ये'ति भाष्यं यथाश्रुतमेव । माऽस्तु वा डस् । दीर्घस्य विचैव सिद्धेः' इति ख. पाठः ।

२. 'उपधाया ह्रस्वः । तत्सामर्थ्यात् ण्विन्यपि वृद्ध्यभावः' इति ख. पाठः ।

३. 'उक्थशोभ्यामित्याद्यर्थं इत्याहुः । ध्वनितं चेद मतं मनोरमायाम् । परन्त्विदं गुरुत्वाच्चिन्त्यम्' इति ख. पाठः ।

४. 'पदान्तविषये तु' ख. पाठः ।

अत एव रुप्रकरणे 'अवया' इत्यस्य पाठश्चरितार्थः। अन्यथा डसन्ते 'ससजुषो रुरि'ति रुत्वे सिद्धे, दीर्घमात्रस्य निपातनात्तत्प्रकरणे[1] एव कृतं स्यादिति। तन्न। 'डस्[2] वक्तव्यः। किं प्रयोजनम्। वँर्थं निपातनम्—'अवयाः श्वेतवा' इति, तन्न वक्तव्यम्। अवश्यं तद्वक्तव्यं, डसारम्भेऽपि संबुद्धौ दीर्घार्थम्। तर्हि डस् न वक्तव्यः। डसपि वक्तव्यः, उक्थशोभ्यामित्यर्थमि'ति भाष्यविरोधात्। अन्यथा ण्विन्पक्षे रुत्वार्थमपि तस्यावश्यकत्वेन भाष्यविरोधः स्पष्ट एव। तस्मादत्र वार्त्तिकनये वाऽसरूपाऽप्रवृत्तिर्व्यवस्थितविभाषयाऽङ्गीकार्या। रुप्रकरणे सूत्रन्तु सूत्रकृता डसोऽकरणात्, ण्विनन्ते रुत्वमात्रस्यैव तदिष्टत्वादिति बोध्यम्। 'श्वेतवोभ्यामि'ति प्रयोगन्तु सूत्रकृत् न जानात्येवेति स्पष्टं भाष्यविदाम्।

**अन्ये** तु ण्विन आदेशो डस्, 'श्वेतवहादीनां डस्पदस्ये'ति वार्त्तिकात्। 'एतत्सम्बन्धिनः प्रत्ययस्य ण्विना डस्, तदन्ते पदत्वस्य भावित्वे'इति तदर्थः। अत एव वृत्तिकृता ण्विनं प्रक्रम्य 'श्वेतवा' इत्युदाहृतम्। एवञ्च वाऽसरूपस्य विषय एवाऽत्र नेत्याहुः।

---

१. 'तत्प्रकरणे एवं कृतं स्यादिति। तन्न। 'ससजुषो रुरि'ति सूत्रात्सस्याऽनुवर्त्तनेन, सान्त एव तत्प्रवृत्तेः। अत एव ज्ञापकात्सान्तत्वम्। एवं च डस् उक्तसूत्राऽर्थं सिद्ध एव। एवं च सकारस्थानिकरेफान्तत्वमनूद्य दीर्घत्वमात्रमनेन विधीयते। तच्च दीर्घत्वं प्रतिप्रसवविधिलाघवाऽनुरोधात्सम्बुद्धावेव। न च यत्र दीर्घत्वं तत्रैव सान्तत्वं कल्प्येतेति वाच्यम्। बहुलक्ष्यसंस्काराऽनुरोधेन, वार्त्तिकाऽनुरोधेन च पदान्तविषयत्वस्यैव कल्पनात्। उपस्थितपदान्तत्वस्याऽपि त्यागे मानाऽभावात्। एतदर्थमेवाऽत्र प्रकरणे पाठः। सन्नियोगशिष्टन्यायस्य तु नाऽयं विषयः। एवं च मन्त्रे पदान्तविषये ण्विनोऽनभिधानं बोध्यम्'—इति ख. पाठः।

२. 'डस् वक्तव्यः' इत्यारभ्य 'भाष्यविदाम्' इत्यन्तः क. ग. पाठः।

३. 'श्वेतवा' इत्युदाहृतमित्याहुः। छ्वनित चेदं मन्त्रे श्वेतेतिसूत्रे भाष्ये इत्याहुः' ख. पाठः।

'त्यदादीनामि'त्यतोऽनुवर्त्तनादाह-**त्यदादीति**। तेन 'आतप' इत्यादौ **न**। तदोः किम् ?। यः। ननु 'तोरि'त्येव वाच्यम्। न च 'अनेषे'त्यादौ नस्य प्रसङ्गः। नुटः पदद्वयाऽऽश्रितत्वेन बहिरङ्गस्याऽसिद्धत्वादिति चेन्न। प्रकृतिप्रत्ययसापेक्षत्वेन सत्वस्याऽपि बहिरङ्गत्वात्। वस्तुत उत्तरपदाऽधिकारस्थकार्यस्य बहिरङ्गत्वेऽप्यसिद्धत्वं न। अत एवाऽऽत्मानं श्रियं मन्यते तत्कुलं 'श्रिमन्यमि'त्यादौ मन्यतेः खशि, 'इच एकाचोऽम् प्रत्ययवच्चे'ति पूर्वपदस्याऽमि,तस्य'स्वमोरि'ति लुक् सिद्ध्यति। न च श्रीशब्दस्य नपुंसकत्वाऽभावः। प्रष्ठादीनां पुंयोगात्स्त्रियामिव, श्रीशब्दस्याऽपि परित्यक्तस्वलिङ्गस्य कुले वृत्तेः। अत एव 'ह्रस्वो नपुंसके' इति ह्रस्वः। स्पष्टं चेदम् 'इच एकाच' इति सूत्रे भाष्ये।

'अनन्त्ययोरि'ति शक्यमकर्त्तुम्। कृताऽकृतप्रसङ्गित्वमात्रेणाऽत्वस्य

---

१. इतोऽग्रे—'नन्वनन्त्ययोरिति किमर्थम्?। तद् स् इत्यत्राऽत्वं बाधित्वा परत्वादुभयोरपि सत्वे, सोर्हल्ङ्यादिलोपे, रुत्वे च 'स' इत्यादिसिद्धेः। न च 'अत्वसन्तस्ये'ति दीर्घाऽऽपत्तिः। असो लाक्षणिकत्वेनाऽप्राप्तेरिति चेन्न। स्त्रियां 'से'त्यसिद्ध्यापत्तेः। 'हे स' इत्यस्याऽसिद्ध्यापत्तेश्च। सकृद्गतिन्यायेन पुनरत्वस्य दुर्लभत्वात्। 'वस्तुतः पुनःप्रसङ्गविज्ञानपक्षे त्यदाद्यत्वसम्भवः। किञ्च नित्यत्वादपि त्यदाद्यत्वसम्भवः। किञ्च ('सकृद्गतावि'तिपक्षेऽपि) 'तदोरि'त्यनन्तरम् 'अदसः' इति योगं विभज्य 'अदस एव दस्य सत्वं, नाऽन्यस्ये'ति व्याख्यानेनाऽदोषः। न च द्वीयतेः क्विपि 'स्व' इत्यत्र न स्यात्। गौणेऽत्वसत्वयोरभावेन 'द्वीरि'त्यस्यैव न्याय्यत्वात्। तादृशप्रयोगाऽभावाच्च।

अपि च तकारस्याऽन्त्यस्याऽभावात्तत्साहचर्येण दकारस्याऽप्यनन्त्यस्यैव [1]ग्रहणसिद्धेरिति दिक्' इति क. कुण्डलितः, ख. पाठः।

---

१. ग्रहणे सिद्धेऽनन्त्ययोरिति चिन्त्यप्रयोजनम्' इति ख. पाठः।

नित्यतया पूर्वं प्रवृत्तावन्त्ययोस्तयोरभावात्। शब्दाऽन्तरप्राप्त्याऽनित्यत्वं मत्वा तु भाष्ये प्रकाराऽन्तरेण प्रत्याख्यातम्।

वस्तुतोऽनन्त्ययोरिति व्यर्थम्। पुनः प्रसङ्गविज्ञानपक्षे त्यदाद्यत्वसम्भवात्। सौ किम्?। तौ।

**अत्वसत्वे नेति**। गणकार्यत्वादिति भावः।

**ङे प्रथम**। 'युष्मदस्मद्भ्यां ङसोऽशि'त्यतो 'युष्मदस्मद्भ्यामि'ति वर्तते। 'प्रथमा'शब्दाद्यथा द्वयोर्ग्रहणं, तथा 'प्रथमयोः पूर्वसवर्ण' इत्यत्रोपपादितम्। 'ङे' इति पृथक् पदं लुप्तषष्ठीकम्। यद्वा[1] 'प्रथमा'-शब्दः प्रथमाद्वितीययोः समुदाये गौणः। तस्य चैकत्वान्ङेशब्देन समासे द्विवचनम्। प्रथमयोर्वचनयोस्तु न ग्रहणम्। व्याख्यानात्। 'ङेसुटोरि'ति सुवचम्।

**त्वाऽहौ सौ**। यद्यपि युष्मदस्त्वादेशः 'त्वमावेकवचने' इत्येव सिद्धस्तथापि 'युष्मानतिक्रान्तोऽतित्वमि'त्यादिसिद्ध्यर्थमत्र विधानम्। युष्मद एकाऽर्थवाचित्वाऽभावेन तत्र तस्याऽप्राप्तेः। 'युष्मदस्मदोरनादेशे' इत्यतो 'युष्मदस्मदोरि'त्यनुवर्त्तते। तदाह—**युष्मदस्मदोरिति**।

आत्व-यत्वयोः प्रागुक्तत्वेन तद्विषयाऽतिरिक्तविभक्तिरिह 'शेष'पदार्थस्तदाह-**आत्वयत्वेत्यादि**। स्पष्टं चेदं 'युष्मदस्मद्भ्यां ङसोऽशि'त्यत्र भाष्ये, प्रकृतसूत्रे भाष्ये च। अत एव 'साम आकमि'ति सूत्रे ससुट्कनिर्देशः सङ्गच्छते। शेषस्येति व्याख्याने तदसङ्गतिः स्पष्टैव। अत्र[2] पक्षे शेषग्रहणं स्पष्टार्थमेव। **अन्त्यस्येति**। 'अलोऽन्त्य'परिभाषयेति भावः।

**अतो गुण इति**। तत्राऽन्तरङ्गत्वात्पररूपे कृते,लोप इति क्रमो बोध्यः। 'वार्णादाङ्गमि'ति त्वेकस्थानिकविषयमि'त्युक्तम्। ननु त्वाऽहयोरकारस्योच्चारणाऽर्थत्वादस्योपन्यासो व्यर्थः। अत एव—

---

१. 'यद्वा' इत्यारभ्य 'सुवचम्' इत्यन्तः ख. पाठः क. कुण्डलितः। मनोरमास्थत्वात्।

२. 'अत्र पक्षे शेषग्रहणं स्पष्टार्थमेव' इति क. ग. पाठः। ख. नास्ति।

**'टिलोपष्टाबभावार्थः शेषे लोप इति स्मृतः।**
**लुप्तशिष्टे हि तस्याऽऽहुः कार्यसिद्धिं मनीषिणः'॥**

—इति 'त्यदादीनाम' इति सूत्रस्थं भाष्यं 'लुप्ते यः शिष्टस्तस्मिन् कार्यस्य=टाबभावस्य सिद्धिः[1], तस्य='शेषे' इत्यस्य, फलमाहुरि'त्यर्थकं, 'तव ममादिषु चाऽऽदेशेष्वकार उच्चारणार्थो, हलन्ता एवाऽऽदेशा इति न क्वचिदाप्प्रसङ्ग' इति **कैयटश्च** सङ्गच्छते। अन्यथा वार्णादाङ्गपरिभाषया पररूपात्पूर्वमेव टिलोपे, टाबभावस्योपपादयितुमशक्यत्वेन, भाष्याऽसङ्गतिः स्पष्टैव। अकारस्य कार्यद्वयेऽपि स्थानित्वात्[2]। णिजन्तात्क्विपि 'युष्म्''अस्म्' इति प्रातिपदिकयोस्त्वाह्राद्यादेशविषयेऽन्त्यलोपपक्षाऽनङ्गीकारान्न दोषः। तेन[3] तत्र 'तम्' 'त' इत्याद्यापत्तिः, 'त्वं' 'तवे'त्याद्यसिद्धिरिति न वाच्यम्। अन्त्यलोप-टिलोपयोर्लक्ष्याऽनुरोधेन व्यवस्थायास्तवावश्यकत्वादिति[4] चेन्न। अह्रादेशाऽकारेणैवोच्चारणे सहायसम्पादनसिद्धौ, 'त्वाहौ सावि'ति गुरुनिर्देशवैयर्थ्याऽऽपत्तेः 'अकारान्ता आदेशा' इति वृत्त्याद्यनुसारेण तथोक्तेः।

**त्वमहमिति।** न च गौणे बहुवचनान्ताऽदिविग्रहेऽस्य चारितार्थ्यादत्र परत्वात्त्वमाभ्यां भाव्यमिति वाच्यम्। 'त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधत' इत्यस्य वक्ष्यमाणत्वात्।

**अन्तरङ्गत्वादिति।** लिङ्गसङ्ख्याकारकसापेक्षविभक्तिनिमित्तकपूर्वरूपाऽपेक्षया टापः स्त्रीत्वमात्राऽपेक्षत्वेनाऽन्तरङ्गत्वादिति भावः। **अलिङ्गे इति।** तथा च स्त्रियामनयोरवर्त्तनान्न टाबिति भावः। इदं च मतं 'साम

---

१. 'सिद्धिः' इति पाठान्तरम्।

२. 'स्थानिवत्त्वादिति' इति क. ग. पाठः। ख. इति नास्ति। 'अकारस्य कार्यद्वयेऽपि स्थानित्वेन समानस्थानिकत्वात्' इति लघुशेखरे पाठः।

३. 'तेन' इत्यारभ्य 'तवावश्यकत्वात्' इत्यन्तः क. ग पाठः।

४. 'इति। तन्न' ख. पाठः।

आकमि'ति सूत्रे भाष्ये स्पष्टम्। (यद्वा विशेष्यवाचकपदान्तरसमभिव्याहारं विना लिङ्गाऽबोधकत्वमिलिङ्गत्वम्। एवं चेदृशे विषये टापोऽपि बहिरङ्गत्वेन परत्वादमि-पूर्वत्वमेवेति भावः)। **यद्वेति**। अयं पक्षः[1]'त्यदादीनाम' इति, 'साम आकमि'ति च सूत्रे भाष्ये स्पष्टः[2]। **अधिकरणत्वविवक्षयेति**। अत एव 'शेष'ग्रहणं चरितार्थम्। अन्यथा आत्वयत्वाभ्यां विशेषविहिताभ्यां स्वविषये बाधसम्भवेन तद्वैयर्थ्यं स्पष्टमेव।

**मपर्यन्ताच्छेषस्येति**। इदं चोपलक्षणम्। तेन 'त्वमि'त्यादौ लोपप्रवृत्तिवेलायां मपर्यन्ताच्छेषत्वाऽभावेऽपि न क्षतिः। अत्रेदं बोध्यम्—ससुट्क्निर्देश-शेषग्रहणाभ्यामस्य सूत्रस्याऽऽवृत्त्याऽर्थद्वयपरत्वम्। तच्च लक्ष्याऽनुरोधाद्व्यवस्थितम्। एतेन 'भ्यमि टिलोपपक्षे युष्मभ्यमिति स्यादि'ति परास्तम्। ध्वनितं चेदं 'भ्यसोभ्यमि'ति सूत्रे 'यदि तावद्भ्यमादेशः, शेषे लोपोऽन्त्यलोप' इति, एत्वं प्राप्नोति। अथाऽभ्यमादेशः,शेषे लोपष्टिलोप इति उदात्तनिवृत्तिस्वरः प्राप्नोति। यथेच्छसि तथाऽस्त्वि'तिवदता **भाष्यकारेण**। अन्यथा भ्यमादेशे टिलोपमादाय फलभेदाऽनुपन्यासे बीजाऽनापत्तेः। अत्र 'यथेच्छसि तथाऽस्त्वि'ति प्रौढोक्त्या तद्भाष्यस्य भगवतैव प्रौढिवादत्वं बोधितम्। 'त्वं यथेच्छसि तथैवाऽस्तु, तत्र दोषोद्धारस्य मया सुकरत्वमि'त्येव तात्पर्यम्। सूत्रतात्पर्यन्तु अभ्यमेव तत्र, अत्राऽन्त्यलोप एव। ('शेष'[3]ग्रहणन्तु स्पष्टार्थमेव) इति युष्मदस्मदोरनादेशे' 'शेषे लोप' इति सूत्रभाष्योक्तमेवेति तत्त्वम्। ण्यन्तात्क्विपि[4]'युष्म्' इत्यादौ वक्ष्यमाणाऽन्येतुमतरीत्या त्वाहाद्यादेशाऽभाव[5] इति च तत्त्वम्।

---

१. अयं क. कुण्डलितः ख. पाठः।

२. 'अयं च पक्षः' ख. पाठः।

३. 'शेषग्रहणन्तु स्पष्टार्थमेव' इति ख. पाठः। क. ग. नास्ति।

४. 'ण्यन्तात् क्विपि तु' ख. पाठः।

५. 'त्वाऽहाद्यादेशाऽभाव एवेति च तत्त्वम्' ख. पाठः।

**अतो गुणे कृत इति।** वार्णादाङ्गपरिभाषा, अकृतव्यूहपरिभाषा चाऽनित्यत्वान्न प्रवर्त्तते इति बोध्यम्। यत्तु 'शेषग्रहणसामर्थ्यात्तयोरप्रवृत्तिरि'ति। तन्न। 'युष्मभ्यम्' 'युष्मत्'युष्माकमि'त्यादौ टाप्निवृत्त्या चारितार्थ्यात्। अन्ये तु अस्य विभक्तिनिमित्तकत्वादन्त्यलोपेऽपि सन्निपातपरिभाषया टाप् न। अत एव 'बुद्धावि'त्यत्रोक्तपरिभाषया टाप् नेति 'कृन्मेजन्त'सूत्रे भाष्यकृतः। एवं च 'शेषस्य लोप' इत्यर्थे फलाऽभावः। शेषग्रहणन्तु भाष्ये प्रत्याख्यातमेव। 'त्यदादीनाम' इतिसूत्रस्थभाष्यं प्रौढ्यैव, 'आहुरि'त्युक्त्या बोधिताऽरुचिकं चेत्याहुः।

आङ्गत्वात्तदन्तविधिं मत्वाऽऽह—**परमत्वमिति।** गौणेऽप्रवृत्तौ बीजाऽभावादाह—**अतित्वमिति।**

**युवावौ।** 'द्विवचन'शब्दोऽत्र यौगिको, व्याख्यानात्। 'द्वयोर्वचनं बोधनं, तत्र समर्थयोर्युष्मदस्मदोरि'ति वाच्योऽर्थ इत्याशयेनाऽऽह—**द्वयोरुक्ताविति।** एतत्फलन्तु गौणोदाहरणेषु मूल एव स्फुटम्।

नन्वेवमपि 'द्विवचने' इति युष्मदष्मदोरिवाऽङ्गाधिकारात्तदन्तस्याऽपि विशेषणं स्यात्, एवं च गौणे समासे दोष एवेति चेन्न। भाष्याऽऽदिप्रामाण्येनाऽस्य गृह्यमाणविशेषणता एवाऽङ्गीकारेणाऽदोषात्। तत्र 'द्वि'-शब्देन प्रत्यासत्त्या सूत्रगृह्यमाणयुष्मदाद्युपस्थितसम्बोध्योच्चारयित्रोरेव ग्रहणम्। अत एवाऽऽख्येयबहुत्वे ण्यन्तात्क्विपि, कर्त्तृद्वित्वविवक्षायां 'शिष्यमाणं लुप्यमानाऽर्थाऽभिधायी'ति न्यायेन युष्मदस्मदोर्द्वित्वसङ्ख्यायुक्तधर्मिवाचित्वेऽपि नाऽऽदेशा इत्याहुः। **कैयटस्तु** स्थानिवद्भावेनाऽनयो-

---

१. 'अकृतव्यूहपरिभाषा' इति ख. पाठः। क. ग. नास्ति।

२. 'तदप्रवृत्तिः' इति क. ग. पाठः।

३. 'अन्ये तु अस्याऽङ्गाधिकारस्थत्वाद्विभक्तिनिमित्तकत्वाच्चाऽन्त्यलोपेऽपि' ख. पाठः।

४. 'प्रत्यासन्नगृह्यमाण' ग. पाठः।

रपि गृह्यमाणरूपतयाऽऽख्यानकर्तृद्वित्वविशिष्टार्थयोरप्यादेशानिच्छति।

**मपर्यन्तस्य किमिति**। अधिकारसूत्रं किमर्थमित्यर्थः। **युवकामिति**। ननु समुदायाऽऽदेशत्वेऽपि 'ओकार-सकार-भकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र तु सुबन्तस्य टेः प्रागि'ति व्यवस्थाया युष्मदस्मद्विषये 'त्वयके'त्यादिसिद्धये वक्ष्यमाणत्वादत्र न दोषः। अन्तरङ्गत्वाद्युवामित्येतत्सिद्ध्युत्तरं चाऽकजित्यत आह—**त्वयेति**। नन्वत्राऽपि 'अच्ये' इति न्यासेन एकाराऽऽदेशेऽयादेशे च सिद्धेराह—**युवकाभ्यामिति**। नन्वेवमपि 'मान्तस्ये'त्येवोच्यताम्, किं 'परि'ग्रहणेन, अन्तशब्दश्चाऽवयववाचीति चेन्न। एवं सति युष्मयत्यादेः क्विपि, यत्र युष्मदस्मदोर्मान्तत्वं, तत्रैव स्यात्, सामानाधिकरण्येनाऽन्वयस्योचितत्वात्, न तु दान्ते इति 'परि'ग्रहणम्। सति तु तस्मिन् तत्सामर्थ्यात् युष्मदस्मदोरवयवौ यौ मपर्यन्तौ' इति व्याख्यानात्सर्वत्रैव सिद्धम्। 'युष्मयत्यादेः क्विप्यपि व्यपदेशिवद्भावेन तदवयवत्वं बोध्यम्। 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति तु प्रत्ययविधिविषयमिति 'असमासे निष्कादिभ्य'इत्यादिसूत्रस्थाऽऽकरग्रन्थे स्पष्टम्। स्पष्टं चेदमत्रैव भाष्ये। एवं च सर्वत्रैव मान्तेऽमान्ते चाऽऽदेशप्रवृत्तिः। (अत एव त्वाहादावकारोच्चारणं चरितार्थम्)। 'अभिव्यक्तपदार्था ये' इति न्यायस्तु पदकार्यविषय एवे'ति निरूपितम्। अत्र चेदमपि भाष्यं मानमिति **केचित्**।

**अन्ये तु** 'परि'ग्रहणं यत्र मान्ताऽपेक्षया परिशिष्टमस्ति, तत्रैवाऽऽदेशार्थम्। 'कटिपर्यन्तं वस्त्रमि'त्युक्ते 'अग्रे किञ्चिदस्ती'ति नियमेन प्रतीतेः। एवं च युष्मयत्यादेः क्विपि सुपि नैवाऽऽदेशाः। अत एव भाष्ये 'अवधि-

---

१. 'अन्तरङ्गत्वाद्युवामित्येतत्सिद्ध्युत्तरं चाऽकच्' इति क. ग. पाठः ख. नास्ति।

२. अयं कुण्डलितः ख. ग. पाठः, क. नास्ति।

द्योतनाऽर्थं परिग्रहणं कर्त्तव्यम्। 'मान्तस्ये'त्युच्यमाने, यत्रैव मान्ते युष्मदस्मदी, तत्रैवाऽऽदेशाः स्युः। क्व च मान्ते ?। युष्मयतेरस्मयतेश्चाऽप्रत्यये' इत्युक्तम्। '**तत्रैवे**'त्यस्याऽनिष्ट एवेत्यर्थः। '**अवधिद्योतनाऽर्थ**मि'त्यस्याऽन्तशब्दस्याऽवधिवाचकताया द्योतनाऽर्थमित्यर्थः। 'पर्यन्त'शब्दस्य लोके तथैव प्रयोगात्। अग्रे किञ्चित्सत्त्वे देशकालयोरवधित्वव्यवहारो लोके। 'परि'ग्रहणाऽभावे तु 'यतः पूर्वोऽस्ति, परश्च नास्ति सोऽन्त्य' इतिभाष्योक्तेर्मान्तपदस्य मुख्याऽर्थत्वलाभायाऽत्रैव[1] स्यात्। 'त्वौ लुप्तमि'त्यस्य प्रवृत्तिश्च[2] स्यादिति तदाशयः। अत एव भाष्ये प्रयोगदर्शनं[3] न कृतम्।

किञ्च पूर्वव्याख्याने 'परि'ग्रहणेन मणिमन्त्राऽऽदिन्यायेन सामानाधिकरण्याऽन्वयबाधः, मम त्वसम्भवात्तद्बाध, इतीदमेव युक्तम्। (अत[4] एव 'अङ्गुष्ठमारभ्य मस्तकाऽन्तं कुष्ठ' इत्येव प्रयोगो, न तु 'मस्तकपर्यन्तमिति)। 'मपर्यन्तस्ये'ति च तद्गुणसंविज्ञानो बहुव्रीहिः। 'त्वाहौ सावि'त्यत्राऽकारोच्चारणम्[5] 'श्वेतवहोक्थशसि' तिवन्नाऽर्थसाधकमित्याहुः। इदं चाऽत्रैव **कैयटे** स्पष्टम्।

**अङ्गकार्ये इति**। अङ्गाऽधिकारस्थे कार्ये इत्यर्थः। ए[6]तेनाऽङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्ये'ति परिभाषाऽर्थत उपनिबद्धा। अङ्गे=अङ्गाऽधिकारे, वृत्तं=वर्त्तनं यस्य तदङ्गवृत्तं–शास्त्रं, तस्मिन्कृते सति, पुनरन्यस्मिन्नङ्गप्रवृत्ते प्राप्तेऽविधिरि'ति तदर्थः।

---

१. 'अत्रैव स्यात्' इति क. ग. पाठः। ख. नास्ति।

२. चकारः ख. नास्ति।

३. 'प्रयोगप्रदर्शनम्' ग. पाठः।

४. अयं पाठः क. ग. नास्ति।

५. 'अकारोच्चारणन्तु' ख. पाठः।

६. 'एतेन' इत्यारभ्य 'तदर्थः' इत्यन्तः ख. पाठः। क. कुण्डलितः, मनोरमायां स्थितत्वात्।

अत्र च ज्ञापकं 'ज्याद[1]ादीयस' इति। यत्र हि 'बहोर्लोप' इत्यतो लोपाऽनुवृत्त्या ईकारलोपेऽकृत्सार्वेति दीर्घे च 'ज्यायानि'त्यस्य सिद्धावाद्विधानं व्यर्थं सदस्या ज्ञापकमिति स्पष्टं भाष्ये।

अ[2]न्ये त्वत्र ज्ञापकं 'ज्ञाजनोर्जे'ति दीर्घनिर्देशः। अन्यथा 'जायते' 'जानाती'त्यादौ जाऽऽदेशे 'अतो दीर्घो यञी'ति दीर्घेण सिद्धे, किन्तेन ?। नन्वनेन दीर्घे 'पचामि भो' इतिवत् 'अजानाम् भो' इत्यादौ 'अनन्त्यस्याऽपि प्रश्नाऽऽख्यानयोरि'ति प्लुतो न स्यात्। 'अत आदि'त्येव सिद्धे तत्रत्यदीर्घग्रहणस्य प्लुतनिवर्त्तकताया उक्तत्वात्। न चा'ऽनन्त्यस्य पदस्य टेरि'ति तदर्थात्कथं 'पचामी'त्यादौ तत्प्राप्तिः, किमर्थं वा दीर्घग्रहणेन तन्निराकरणमिति वाच्यम्। दीर्घग्रहणसामर्थ्यादन्त्यविषये एव तत्सम्बन्धात्। वाक्य-ट्योः क्लृप्तसम्बन्धत्यागे मानाऽभावात्। तेन 'वाक्यस्याऽनन्त्यस्य पदस्य प्लुतः स्यात्, अन्त्यस्य च पदस्य टेरि'त्यर्थः। न च आदिति तपरकरणेनैव प्लुतव्यावृत्तिः शक्या कर्त्तुमिति दीर्घग्रहणं व्यर्थमेवेति वाच्यम्। प्लुतस्याऽसिद्धतया तद्व्यावृत्तेस्तपरकरणेन कर्त्तुमशक्यत्वात्। अत एव 'गीः' 'पूरि'त्यादौ दीर्घः। अन्यथा तस्याऽपीदुदिति तपरत्वसामर्थ्यादप्रवृत्त्याऽऽपत्तिः। दीर्घग्रहणे तु तत्सामर्थ्यादसिद्धत्वस्याऽपि बाधः। आकाराऽन्तरप्रश्लेषे वारणन्तु क्लिष्टम्। तत्र तात्पर्यग्राहकाऽभावाच्च। अस्तु वा तदुपायाऽन्तरं, तथाऽपि यथान्यासे न कश्चिद्दोष इति चेन्न। उक्तज्ञापकपरभाष्यप्रामाण्यात्, प्लुतस्य[3] वैकल्पिकत्वाच्चेदृशे विषये प्लुताऽप्रवृत्तेः कल्पनात्। दीर्घग्रहणं 'हलि लोप'

---

१. 'ज्यादादीयस इति' इत्यारभ्य 'स्पष्टं भाष्ये' इत्यन्तः क. ग. पाठः। अयं पाठो मनोरमायां, लघुशब्दरत्ने च दृश्यते।

२. 'अन्ये तु' इत्यारभ्य 'लादेशशितोऽग्रहणाच्च' इत्यन्तः ख. पाठः। क. कुण्डलितः। मनोरमालघुशब्दरत्नस्थत्वात्।

३. 'एतज्ज्ञापकपरभाष्यप्रामाण्यात्तत्रत्यदीर्घग्रहणम्' ख. पाठः।

इति सूत्रे 'हल्य' इति वक्तव्ये लोपग्रहणवत्सत्त्वेन नाऽर्थसाधकम्[1] ।

न[2] च जौहोत्यादिकजनधातोः शतरि दीर्घनिर्देशश्चरितार्थः । यदि तु दीर्घादेशे 'श्नाभ्यस्तयोरि'ति लोपप्राप्त्या, ह्रस्वादेशे 'अतो गुणे' इत्यस्य च प्राप्त्या च 'जजदि'ति रूपे न विशेषस्तर्हि 'अनिट्यजादौ लसार्वधातुके परेऽभ्यस्तानामादिरुदात्त' इत्यर्थका'ऽभ्यस्तानामादिरि'त्यस्य दीर्घपक्षे प्राप्त्या, ह्रस्वादेशेऽतो गुणे चोभयत आश्रयणेऽन्तादिवद्भावविरहेणाऽप्राप्त्या च विशेषादिति वाच्यम् । श्नासाहचर्येण श्रूयमाणविकरणस्यैव ग्रहणात् । पूर्वोत्तरसाहचर्येण लादेशशितोऽग्रहणाच्च ।

इयं च परिभाषाऽनित्या, 'द्वयोरेकस्ये'त्यादि निर्देशात् । अन्यथा त्यदाद्यत्वे एत्वं न स्यात् । (एत[3]न्मूलकमेव क्वचित् 'निष्ठितस्ये'ति पठ्यते) ।

(नन्व[4]ङ्गसम्बन्धिन्येव कार्ये सा परिभाषा, न प्रत्ययसम्बन्धिनि, अत एव ससुट्कनिर्देशश्चरितार्थोऽत आह—)**मकारान्तरमिति** 'शसो ने'त्यनेन संहितया पाठे' इति शेषः[5] । अत एव टिलोपाऽन्त्यलोपपक्षयोः फलैक्यम् । इद[6]मुपलक्षणं,–'जसः शी'त्यत्र 'जसः स्' इति सकारं प्रश्लिष्य 'सान्तस्य जस' इति व्याख्यानात्, 'अतोऽमि'ति सूत्रादमृग्रहणमनुवर्त्य 'अम् अमेवे'ति व्याख्यानाद्वेत्यपि बोध्यम् ।

**त्वमा** । अत्राऽपि 'विभक्तावि'ति सम्बध्यते । अन्यथा 'प्रत्ययोत्तरपदयोश्चे'ति व्यर्थं स्यात् । तत्फलन्तु 'त्वं सुन्दरः पुत्रो यस्य युष्मत्सुन्दर-

---

१. 'नाऽर्थसाधकमित्यन्ये' ख. पाठः ।

२. 'न च' इत्यारभ्य 'अग्रहणाच्च' इत्यन्तः क. पाठः । ख. नास्ति ।

३. अयं ख. पाठः । क. ग. नास्ति ।

४. 'ननु' इत्यारभ्य 'अत आह' इत्यन्तः ख. पाठः । क. कुण्डलितः ।

५. इतोग्रे—'तत्र हि जातिपक्षाऽऽश्रयणेन द्वयोरपि मयोरेक एवाऽनुस्वारः' इति ख. पाठः । क. ग. नास्ति ।

६. 'इदम्' इत्यारभ्य 'बोध्यम्' इत्यन्तः क. कुण्डलितः ख. पाठः ।

पुत्र'इति त्रिपदबहुव्रीहौ नाऽऽदेशा इति। अत्राऽप्येकवचनशब्दो यौगिको व्याख्यानात्। तदाह—**एकस्येति**।

**अविभक्तिकमिति**। तथा च 'ङे प्रथमयोरि'तिप्राप्तस्याऽमः प्रतिषेधोऽयमि'ति भाष्ये शङ्कितम्। न च तथैवाऽस्तु। स्त्रीनपुंसकयोर्नत्वाऽप्राप्तेः। अलिङ्गत्वे सर्वत्रैवाऽप्राप्तेश्च।

**योऽचि**। 'अनादेशे' इति किम्?। त्वत् मत्। 'पञ्चम्या अदि'त्यदादेशः। आत्वविधायके च भ्यम् व्यावर्त्यः। वस्तुतः 'उत्तरार्थमेव तदि'ति भाष्ये स्पष्टम्। 'हलादावि'ति परिशेषलब्धम्। यदि तत्र 'हली'त्यनुवर्त्तते, तदा 'योऽची'त्यज्ग्रहणं माऽस्त्वित्याहुः। ([1]**तुभ्यमिति**। अन्त्यलोपपक्षे ङेः स्मै न, आङ्गत्वान्मकारप्रश्लेषाद्वा। अत एव गौणे यादेशो न)।

**भ्यम्, अभ्यम्वेति**। भाष्याऽऽदिप्रामाण्यादादेशद्वये सूत्रकृतस्तात्पर्य[2]मित्यभिमानः। **अन्त्यलोपत्व एवेति**। 'भ्यसोऽभ्यमि'ति सूत्रभाष्येऽभ्यम्पक्ष एवोदात्तनिवृत्तिस्वरशङ्कायाः कृतत्वादिति भावः। एत्वं **नेति**। दीर्घत्वन्तु एत्वेनैव बाधितमिति भावः। तया तस्याऽपि निवृत्तेश्च।

**पक्षद्वयेऽपीति**। वस्तुतो'ऽभ्यमि'त्येवाऽत्र च्छेद इत्युक्तम्। अन्त्यलोपत्वेऽपि न सवर्णदीर्घः। पररूपेण बाधात्। अकारोच्चारणन्त्वङ्गवृत्तपरिभाषाऽनित्यत्वबोधनद्वारा एत्वनिवृत्त्यर्थमिति बोध्यम्।

**युष्मदस्मद्भ्याम्**। अशः शित्वं सर्वाऽऽदेशार्थम्। अन्यथा ह्यादेः स्यात्। विस्त[3]रस्त्वन्यत्र द्रष्टव्यः। स्या[4]देतत्—**आदेरकारविधाने** वैयर्थ्याऽऽपत्तेरन्त्यस्यैवाऽकारेऽतो गुणे च सिद्ध 'तवे'त्यादीति, व्यर्थमेव शिद्-

---

१. अयं पाठः क. ग. नास्ति।

२. 'तात्पर्यमिति भावः' इति ख. पाठः।

३. 'विस्तरस्त्वन्यत्र द्रष्टव्यः' इति क. पाठः।

४. 'स्यादेतत्' इत्यारभ्य 'इत्यलम्' इत्यन्तः ख. पाठः। क. कुण्डलितः, मनोरमाशब्दरत्नधृतत्वात्

ग्रहणम् । नन्वादेर्विधानेऽप्यादेशत्वसम्पादनद्वारा यत्वनिवृत्त्यर्थम्, (शेषे लोपार्थं च) तच्चरितार्थम् । न च 'योच्यङसो'त्युक्त्यैव यत्वनिरासः सिद्धः । पर्युदासे एकवचनत्वादिना सादृश्यग्रहणाऽऽपत्तेः ।

किञ्च 'युष्मदस्मदोरि'त्यात्वं दुर्वारम् । 'हलादावि'ति हि परिशेष-सिद्धार्थस्तत्रेति चेन्न । 'त्वम्' 'अहमि'त्यादौ सम्पूर्णविभक्त्यादेशे यत्वा-ऽभावसम्पादनेन 'अनादेशे' इत्यस्य चरितार्थतया, प्रकृते यत्वाद्यप्रवृत्तौ मानाऽभावात् । 'अनादेशे' इति तु तत्पुरुषो, लाघवात् । न ह्यत्र विभक्ति-रादेशरूपा, किं तर्हि ?, तदवयवः । न च 'सर्वे सर्वपदाऽऽदेशा' इति न्यायेन समुदायस्याऽप्यादेशत्वम् । तत्र मानाऽभावात् । न चैवमपि पररूप-बाधनार्थमेवाऽऽदेरत्वविधानमस्तु । यत्वस्य दुर्वारत्वेन पररूपस्याऽप्राप्तेः । विधिबाधाऽपेक्षया 'आदेः परस्ये'तिपरिभाषाबाधस्य न्याय्यत्वाच्च ।

न चैवमन्त्यस्याऽकाराऽऽदेशेऽपि यत्वप्राप्तिर्दुर्वारा । 'अतो गुणे' इति पररूपे, आदेशरूपविभक्तित्वसत्त्वेन तदप्राप्तेः न च 'वार्णादाङ्गमि'ति-परिभाषया पररूपात्पूर्वं यत्वप्राप्तिर्दुर्वारा । वार्णाऽङ्गयोरेकस्थानिकत्वे एव तत्प्रवृत्तेर्धर्मिग्राहकमानेनोपपादित्वादिति चेत् ।

अत्राऽऽहुः—**शित्त्वमेव तर्हि** 'सर्वे सर्वपदाऽऽदेशा' इति न्यायं ज्ञापयति । एवं चाऽऽदेरपि अत्वविधाने यत्वव्यावृत्त्या तस्य चारिताऽर्थ्येन 'आदेः

---

१. 'नन्वादेशत्वसम्पादनद्वारा' क. पाठः ।

२. अत्र अर्श आद्यजन्तात्त्वप्रत्ययः । तेन आदेशित्वसम्पादनद्वारेत्यर्थः ।

३. अयं पाठः क. ग. नास्ति ।

४. इतोऽग्रे—'किञ्चैवं सति ङसोऽपि शेषत्वेन, तत्र परेऽन्त्यलोपे 'तवे'त्यादौ स्याऽऽदेशाऽऽपत्तिरिति चेन्न'—इति ख. पाठः ।

५. 'किञ्च' इत्यारभ्य 'सिद्धार्थस्तत्र' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

६. धर्मी='वार्णादाङ्गमि' तिपरिभाषारूपः, तद्ग्राहकं मानम्='अभ्यासस्या-ऽसवर्णे' इतिसूत्रस्थम् 'असवर्ण'ग्रहणं, सम्पूर्णसूत्रं वेत्वर्थः ।

परस्ये'त्येतद्बाधे मानाऽभावेन, सर्वाऽऽदेशार्थं शित्त्वं सार्थकम्। 'पदादेशा' इत्यत्र 'पद'शब्देनाऽर्थवत्। अर्थवत्त्वं च कल्पितमपि गृह्यते।

एतेन 'कृत्वा' इत्यस्य स्थाने 'कृये'त्यादेशे प्रकृतिप्रत्ययसंमोहात् 'ह्रस्वस्ये'ति तुक् न स्यादि'त्यपास्तमित्यलम्।

नन्वाकमः पूर्वं लोपाऽभावेनाऽदन्तत्वाऽभावात्सुडागमाऽप्रसक्तेः ससुट्कनिर्देशो व्यर्थः, सूत्राऽसङ्गतिश्चेत्यत आह—**भाविन** इति। आकमि, शेषे लोपे कृते,प्राप्तस्येत्यर्थः[1]। अयं भावः[2]–'सामः प्रसङ्गे आकम्'इत्यनेन तयोरत्र विषयेऽत्यन्तमप्रयोगो बोध्यते। स्थान्यादेशभावविषये सर्वत्रैवमेव। यथाऽऽर्द्धधातुकविषयेऽस्तेरप्रयोगो, भूप्रयोगश्चाऽस्तेर्भूरित्यनेन प्रतिपाद्यते, न तु सतो निवृत्तिः, शब्दाऽनित्यत्वप्रसङ्गात्। किन्तु प्रसक्तबुद्धेरेव निवृत्तिः। सकारप्रसक्तेश्च प्रकृते साम्प्रतिक्या असम्भवाद्भाविन्या ग्रहणम्, सकारोच्चारणसामर्थ्यादिति, प्रथमप्रवृत्त्यैव सुटो निवृत्तिर्न तु प्रवृत्त्यन्तरकल्पनयेति भाष्ये स्पष्टम्।

तन्निवृत्तिश्चाऽऽमोऽभावात्[3]। अत्र सामः स्थानित्वोक्त्याऽऽकमि

---

१. इतोऽग्रे—'अयं भावः 'साम' इति समाहारद्वन्द्वः। 'स्'शब्देन च योग्यताबलात्सकारविशिष्ट आमेव गृह्यते, आम्साहचर्याच्च। साहित्यन्त्वेकत्राऽन्वयित्वमात्रेण, 'अतीताऽनागतयोरयं द्रष्टे'तिवत्, 'मातापित्रोर्मृतेऽह्नी'त्यादिवच्च। एतेन 'सामोर्युगपत्स्थित्यभावात्सहविवक्षाऽभावेन,द्वन्द्वो न स्या'दित्यपास्तम्। केचित्तु 'साम' इत्यत्र केवलोऽप्याम् तन्त्रेण निर्दिश्यते। तथा हि 'सामि'ति 'सपुत्र' इति वद्बहुव्रीहिः। तन्त्रेण च द्वयोर्निर्देशः। तेन केवलस्याऽऽमो व्यपदेशिवद्भावेनाऽऽम्सहितत्वादाकमि, तस्य स्थानिवद्भावेनाम्त्वात्सुटि, पुनरनेनाऽऽकमिति। अङ्गवृत्तपरिभाषा त्वङ्गसम्बन्धिन्येव कार्ये इति प्रागेवोक्तम्। न च 'लक्ष्ये लक्षणस्ये'ति न्यायः, भिन्नलक्षणत्वादित्याहुः।' इति ख. पाठः। क. कुण्डलितः।

२. 'अयं भावः' इत्यारभ्य 'व्यर्थेति दिक्' इत्यन्तः क. ग. पाठः।

३. अस्य 'वस्तुतः' इत्यादिरिति विषमी टीका।

स्थानिवत्त्वेन साम्त्वमेव, न त्वाम्त्वम्। अत एवाऽतित्वाकमित्यादौ 'प्रत्ययोत्तरपदयोश्चे'तिभाष्योदाहृते आकम्-नुडभावौ सिद्धौ। आम्येव साम्त्वस्याऽऽहार्यारोपेणाऽऽदेशः। आदेशस्याऽऽम्त्वाऽभावाच्चाऽत्र न नुट्। न च यत्र भावी सुट् तत्रैवाऽयम्। सामो भावित्वस्य सर्वथा दुरुपपादत्वादिति भाष्यविरुद्धकल्पना व्यर्थेति दिक्।

नन्वा-आकमित्याकारप्रश्लेषेणैव सामर्थ्यादाकारादिरेवाऽऽकमित्यर्थे दोषाऽभावेन सकारनिर्देशो व्यर्थ इति चेन्न। लक्षणैकचक्षुष्कैर्दुर्ज्ञेयत्वात्। 'अ अ'इत्यकारप्रश्लेषेणाऽशः शकारप्रत्याख्यानवदिष्टाऽऽपत्तेश्च।

एतेन 'आमि सर्वनाम्नः' इत्यत्राऽऽमपदं तन्त्राद्याश्रयणादाम्रूपस्यैव आमः सुडित्यर्थादाकमि सुटोऽप्राप्तेः स व्यर्थ इत्यपास्तम्।

ह्रस्वादिरकम् तु न कृतः। अन्त्यलोपेऽप्यकारस्यैत्त्वनिवृत्त्या चारितार्थ्येन, पररूपाऽऽपत्तौ 'युष्माकमि'त्यसिद्ध्यापत्तेः।

द्विवचनैकवचनशब्दयोरर्थपरतया व्याख्याने फलं दर्शयति—**द्व्येकत्ववाचिनी इति**। द्वित्वैकत्वविशिष्टवाचिनी इत्यर्थः। **समासार्थः**=मुख्यविशेष्यम्, **अन्यसङ्ख्यः**=युष्मदाद्यर्थगतसङ्ख्येतरसङ्ख्यायुक्तश्चेदि-

---

१. इतोऽग्रे—'न च[1] तत्र शेषे' इत्यत्र विषयसप्तम्यां, पूर्वमेवाऽन्त्यलोपे, ततः सुटि, नुटि वा प्राप्ते, तदपवादतयाऽऽकमि कृते, इष्टसिद्धिः। वक्ष्यमाण युष्म्'शब्दे उभयोरप्यप्राप्त्या चारितार्थ्येन परत्वान्नुट्सुटो'र्यदागमा-' इति न्यायेन विशिष्टस्याऽऽकम्सिद्धेर्लक्ष्ये लक्षणस्ये'ति न्यायेन पुनः सुडाद्यभावे सिद्धे, मकारनिर्देशो व्यर्थ इति वाच्यम्। 'तस्मिन्नि'ति शास्त्रबाधेन विषयसप्तमीकल्पनाऽपेक्षया, सकारनिर्देशस्य लघुत्वात्' इति ख. पाठः। क. ग. नास्ति।

---

1. यद्यपि 'न च' इति ख पुस्तके नास्ति, तथापि अग्रे 'इति वाच्यम्' इति दृष्ट्वा न चेत्यस्माभिर्वर्द्धितम्।

त्यर्थः। **स्त इति**। द्विवचनैकवचनशब्दयोरर्थपरत्वाऽऽश्रयणादिति भावः।

'**एते**' इति–कर्त्तृपदम्। '**युवावावि**'ति-कर्मपदम्। एवं '**त्वमावि**'-त्यपि।

**पूर्वविप्रतिषेधत इति**। विप्रतिषेधे पूर्वः 'पूर्वविप्रतिषेध' इति '**सुप्सुपे**'-ति समासः। एवं 'परविप्रतिषेध'शब्दोऽपि व्याख्येयः। अत एव 'प्रत्ययो-त्तरपदयोश्चे'तिसूत्रभाष्ये 'त्वमावि'तिसूत्रे 'शेषे' इत्यनुवर्त्त्य, सुजसङे-ङस्व्यतिरिक्तविभक्तावेतावि'ति व्याख्यातम्। तत्र[1] पूर्वविप्रतिषेधकल्पना-ऽपेक्षया 'शेषे' इत्यनुवृत्त्या व्याख्यानमेव युक्तम्, लघु चेति बोध्यम्।

**त्वमौ न चेति**। अर्थपरत्वाऽऽश्रयणादेवेति भावः। इति **विग्रह** इति। 'एवं विग्रहे या[2]दृशानि रूपाणि, तानि वक्ष्यन्ते' इति शेषः। **अतित्वाक**-मिति। नन्वत्राऽऽकमि नुट् स्यात्। न च 'ह्रस्वनद्याप' इत्यत्र विहित-विशेषणान्निस्तारः। 'तस्मादित्युत्तरस्ये'त्यस्य सत्त्वेन विना दृढतरप्रमाणं विहितविशेषणस्याऽयुक्तत्वादिति चेन्न[3]। सुट[4] इव नुटोऽपि निवृत्तेः पूर्वमुपपादितत्वात्।

१. 'तत्र' इत्यारभ्य 'बोध्यम्' इत्यन्तः क. ग. पाठः।

२. 'यादृग्रूपाणि' ख. पाठः।

३. 'इति चेन्न। नद्याप्साहचर्येण ह्रस्वान्तादप्यविकृतस्यैवाऽऽमः प्रवृत्तेः। इद-मेवाऽभिप्रेत्य मनोरमायामुक्तम् 'गौणत्वे तु प्रथमवृत्त्यैव पर्यवसानमि'ति। सुड्विधौ तु सूत्राऽन्तरस्थत्वान्नेदं साहचर्यं[1] नियामकमित्यभिमानः। किञ्च कृतेऽपि नुटि, तद्विशिष्टस्याऽऽम्सहितत्वेन साम इव, तस्याप्याक-मीष्टसिद्धेः। अत एव 'प्रत्ययोत्तरपदयोश्चे'ति सूत्रे 'अतित्वाकम्' 'अतिमाकमि' तिभाष्योक्तं सङ्गच्छते' इति क. कुण्डलितः ख. पाठः।

४. 'सुट् इव नुटोऽपि निवृत्तेः पूर्वमुपपादितत्वात्' इति क. ग. पाठः। ख. नास्ति।

1. 'नियामकमिति तद्भावः' ख. पाठः।

अथ[१] युष्मदस्मदोराख्यानण्यन्तयोः कर्त्तरि क्विपि कश्चिद्विशेष उच्यते। तत्र यद्यपि 'सावेकाच'इति सूत्रे 'त्वन्मदोः प्रतिषेधो वक्तव्यः'। त्वया मया। 'सिद्धन्तु यस्मात्तृतीयाऽऽदिस्तस्याऽभावात्सौ' इति प्रत्याख्यानपर-भाष्यप्रामाण्येनैकवचनाऽन्तप्रकृतिकण्यन्तप्रकृतिकक्विबन्ताऽभावोऽनभिधा-नात्। अन्यथा'त्वासु मासु' इति सावेकाच्रूपात्परा 'त्वाभ्यामि'त्यादौ तृतीयाऽऽदिविभक्तिरस्तीति वार्त्तिकप्रत्याख्यानमसङ्गतं स्यात्। 'अभिव्य-क्ते'ति न्यायस्तु पदोद्देश्यककार्यविषय इत्यसकृदावेदितमिति **बहवः**।

तथाऽपि द्विवचन-बहुवचनाऽन्तप्रकृतिकण्यन्तप्रकृतिकक्विबन्ते 'युष्म्' 'अस्म्' इति प्रातिपदिके। ततः स्वादयः। तत्र यथायथं १ 'ङे प्रथमयोरम्', २ 'शसो न', ३ 'भ्यसोभ्यम्', ४ 'पञ्चम्या अत्', ५ 'एकवचनस्य च' ६ 'युष्मदस्मद्भ्यां ङसोऽश्', ७ 'साम आकमि'तिसत्रसप्तकविहिताः सुबा-देशाः स्युरेव। प्रकृतिभागस्य तु यथायथमात्व-यत्वे स्त एव। शेषे लोपस्तु 'आत्वयत्वनिमित्तेतरविभक्ताववि'ति व्याख्याने भवत्येव। 'मान्ताच्छेषस्य लोप' इति व्याख्याने तु न। तत्र हि शेषे लोपेनाऽपहार्यस्य मान्तात्परस्य टिलोपेनैवाऽऽपहारात्। त्वाहौ, यूयवयौ, तुभ्यमह्यौ, तवममावपि भवन्त्येव। तत्राऽऽख्येयद्वित्वे—'सुजस्ङेङस्सु परत्वात्त्वाहादिप्रवृत्तावपि, वचनाऽन्तरेषु विभक्तिपरत्वाद्, द्व्यर्थत्वाच्च युवाऽऽवौ स्तः।

(१) सौ—त्वम्। औ—युवाम् आवाम्। **जसि**—यूयं वयम्।

(२) अमौटोः—युवाम् २, आवाम् २। शसि—युवान् आवान्।

(३) युव्या, आव्या। युवाभ्याम्, आवाभ्याम्। युवाभिः, आवाभिः।

(४) तुभ्यम्, मह्यम्। युवाभ्याम्, आवाभ्याम्। युवभ्यम्, आवभ्यम्।

(५) युवत्। आवत्। युवाभ्याम्, आवाभ्याम्। भ्यसि ङसिवत्—(युवत्, आवत्)।

---

१. **'अथ'** इत्यारभ्य **'स्पष्टैवेति दिक्'** इत्यन्तः क. कुण्डलितः पाठः। **'हेतु-मति च'** (३-१-२६) इति सूत्रे शब्दकौस्तुभे (३४९ पृष्ठे) अयं ग्रन्थो दृश्यते।

(६) तव । मम । युव्योः । आव्योः । युवाकम् । आवाकम् ।

(७) युव्यि । आव्यि । युव्योः । आव्योः । युवासु । आवासु ।

अथाऽऽख्येयबहुत्वे—(१) सौ द्वित्ववदेव (–त्वम्, अहम्) । औ—युषाम् असाम् । **कैयटमते** तु युवाम् । आवामिति । एवमन्यत्राऽपि द्विवचने सर्वत्र तन्मते युवाऽऽवौ बोध्यौ । जसि प्राग्वत् (–यूयं, वयम्) ।

(२) अमि–युषाम् । असाम् । (शसि–) युषान् । असान् ।

(३) युष्या । अस्या । युषाभ्याम् । असाभ्याम् । युषाभिः । असाभिः ।

(४) ङयि प्राग्वत् (–तुभ्यं, मह्यम्) । भ्यसि–युषभ्यम् । असभ्यम् । भ्यम्पक्षे युड्भ्यम् । 'अद्ड्डतरादिभ्यः' 'अमो मशि'त्यादिसूत्रभाष्यप्रामाण्येन यणतिरिक्ताऽझलोऽपि लोपाऽङ्गीकारात् । शेषे लोपेऽप्येवम् । अस्मदस्तु शेषे लोपे—ओभ्यम् । संयोगादिलोपे तु-अन्भ्यमिति ।

य[1]त्तु-अम्भ्यमिति । तन्न । 'मो नो धातोरि'ति नत्वापत्तेः । औपदेशिकधातोरेव तत्र ग्रहणमित्यत्र तु न मानम् । वस्तु[2]तो भ्यम आभ्यामनभिधानमेव । 'भ्यसोऽभ्यमि'तिसूत्रभाष्येण भ्यमभ्यमोः फलभेदाऽनिष्टेः ।

(५) ङसिभ्यसोः-युषत् । असत् । युष्मत् । अस्मत् ।

(६) ङसि प्राग्वत् (युषत्, असत्) । युष्योः । अस्योः । युषाकम् । असाकम् । युष्मा[3]कम् । अस्माकम् ।

(७) युष्यि[4] अस्यि । (युष्योः, अस्योः) । युषासु असासु ।

अत्र सर्वत्र णिलोपो न स्थानिवत् । 'क्वौ लुप्तमि'ति निषेधात् । न चेदमसार्वत्रिकम् । 'मपर्यन्तस्ये'तिसूत्रस्थ 'परि'ग्रहणेन, भाष्यप्रामाण्येन चाऽत्र

---

१. शब्दकौस्तुभोक्ति खण्डयति—यत्त्विति ।

२. 'वस्तुत' इत्यारभ्य 'फलभेदाऽनिष्टेः' इत्यन्तः क. पाठः ।

३. टिलोपाऽभावे इदं रूपद्वयम् ।

४. 'युष्मि । अस्मि' क. पाठः ।

**प्रवृत्तेः**। एतेन 'युष्मदस्मद्भ्यां णिचि, टिलोपो दुर्लभः, इष्ठनि दृष्टस्यैवाऽतिदेशात्, न चाऽस्मादिष्ठन् दृष्टः। 'अजादी गुणवचनादेवे'त्युक्तेरि'ति परास्तम्। 'युष्मयतेश्चाऽस्मयतेश्चाऽप्रत्यये' इतिभाष्यप्रामाण्येन यत्र क्वाऽपीष्ठनि दृष्टस्याऽन्यत्राऽप्यतिदेशस्वीकारात्। अत एव'अत्यरराजदि'-ति भाष्यप्रयोगः सङ्गच्छते। स्त्रियान्तु सन्निपातपरिभाषया टाप् न। 'न यासयोरि'ति ज्ञापकन्तु विशेषविषयम्। अत एव 'बुद्धावि'त्यत्रोक्तपरिभाषया टाप् ने'ति भाष्यं सङ्गच्छते। अनित्यत्वाऽऽश्रयणेनाऽप्रवृत्तौ दृढतरप्रमाणाऽभावाच्च।

सम्बुद्धौ-हे त्व। हे म। अत एव त्वाहादावकारो विवक्षितः। सति प्रयोजने उच्चारणाऽर्थताया अयुक्तत्वात्। एतत्सर्वं कैयटाऽनुसारेण। प्रागुपपादितकैयटोक्तमताऽन्तरे तु-युष्म्, युष्मौ—इत्याद्येव रूपाणि। इदमेव भाष्यसंमत मित्युक्तम्। अत एव 'त्यदादीनाम' इति सूत्रस्थभाष्यकैयटयोर्नाऽसङ्गतिः अन्यथा तत्र भाष्यसंमते कैयटोक्ते 'हलन्ता आदेशा' इति पक्षे 'यु[1]व्ये'त्यादीनामसङ्गतिः स्पष्टैवेति दिक्।

**पदस्य**। 'अपदान्तस्य मूर्द्धन्य' इत्यतः प्रागयमधिकारः। तत्फलन्तु 'राजानावि'त्यादौ नलोपाद्यभावः। इयं चोत्तरत्राऽनुवर्त्तमानाऽङ्गस्येतिवत्क्व चित्स्थानषष्ठी, क्व चिदवयवषष्ठी। लक्ष्याऽनुरोधाद्व्याख्यानाच्च। तेन 'मादुपधाया' इत्यादाववयवषष्ठी। स्थानषष्ठीत्वे हि मवर्णाऽवर्णाभ्यां परः, उपधाभूताभ्यां च परो यो मतुस्तदन्तस्य पदस्योच्यमानं वत्वं 'वृक्षवानि'त्यत्रैव स्यात्, 'वृक्षवन्तावि'त्यादौ न स्यात्, मत्वन्तस्य पदत्वाऽभावात्। अत एव 'नलोपः प्रातिपदिकान्तस्ये'ति सूत्रे 'अन्त'ग्रहणं चरिताऽर्थम्। स्पष्टं चेदं भाष्ये। एतेन 'अन्तग्रहणसामर्थ्यान्मुख्याऽन्त एव नलोपप्रवृत्तिः। अत एव 'त्रः सङ्ख्याया' इति निर्देशः सङ्गच्छते' इत्यपास्तम्। भाष्यविरोधात्। 'त्र' इत्यत्र नलोपाऽभावस्तु 'झलां जश् झशी'तिवत्समाधेयः।

---

१. 'युवेत्यादीनामसङ्गतिः' क, पाठः।

यद्यपि[1] 'अङ्गस्ये'त्यस्येवाऽस्यापि व्याख्यानात्क्व चिदवयवषष्ठीत्वं वक्तुं शक्यं, तथापि 'नाऽसूया कर्त्तव्या यत्राऽनुगमः क्रियते' इति न्यायेनाऽन्तग्रहणम्। 'हो ढ' इत्यत्र तु[2] स्थानषष्ठीत्याहुः।

**पदात्**। 'कुत्सने च सुप्यगोत्रादावि'त्यतः प्रागयमधिकारः। इदं च 'ङमुट्' सूत्रे भाष्ये स्पष्टम्। 'अनुदात्तमि'त्यादि पदत्रयमा पादसमाप्तेः। तत्र 'पाद'शब्देन ऋक्पादः, श्लोकपादश्चाऽविशेषाद् गृह्यते। 'अपादादि'-शब्देन पादान्तपादमध्यस्थवच्छन्दोहीनवाक्यस्थस्याऽपि ग्रहणम्, 'ग्रामे कम्बलो मे स्वमि'ति भाष्योदाहरणात्। [3]**षष्ठ्यादीति**। न[4]नु 'पदस्ये'त्यधिकारेऽपि 'विशिष्टयोरि'त्यर्थाऽलाभः। युष्मदस्मद्रूपस्य पदस्य विभक्त्यविशिष्टस्याऽपि भ्यामादौ सम्भवात्। षष्ठीद्वितीययोरसम्भवेन 'पदाऽवयवयोरि'त्यर्थलाभेऽपि, त्वदुक्ताऽर्थे मानाऽभावाच्च। न च पदाऽवयवत्वस्याऽव्यभिचरितत्वेन तदनुवृत्तिसामर्थ्यादुक्ताऽर्थलाभः। तदनुवृत्तेरुत्तरत्राऽऽवश्यकत्वेन सामर्थ्याऽयोगादिति चेन्न[5]। 'सर्व[6]मि'त्यस्याऽप्यत्रसम्बन्धेन,

---

१. 'यदि तु अङ्गस्येत्यस्येवाऽस्यापि व्याख्यानात् क्व चिदवयवषष्ठीत्वं, तर्हि अन्तग्रहणं शक्यमकर्त्तुमिति मनोरमाकृतः' इति ख. पाठः।

२. तुः क्व चिन्नास्ति।

३. 'षष्ठ्यादीति'।'सर्वस्य''पदस्ये'त्युभयाधिकारसामर्थ्यादिदं लब्धमित्यन्यत्र प्रपञ्चितम्' इति क. पाठः।

४. 'ननु' इत्यारभ्य 'ग्रहणेनाऽदोषात्' इत्यन्तः ख. पाठः। क. कुण्डलितः, मनोरमा-शब्दरत्नधृतत्वात्।

५. इतोऽग्रे—'सर्वस्य द्वे'इत्यन्तः'सर्वस्ये'त्यस्याऽप्यनुवृत्या, तत्सामर्थ्याद्युष्मदवयवकलक्षणान्न दोषः। यद्यपि भाष्याऽऽदौ 'सर्वमि'त्यस्येदं प्रयोजनमुक्तं, तथाऽपि विभक्तिविपरिणामाऽकरणलाघवेनेदमेवाऽनुवर्त्तितम्' इति ख. पाठः।

६. 'सर्वम्' इत्यारभ्य 'स्पष्टं चेदं भाष्ये' इत्यन्तः क. पाठः।

तस्य षष्ठ्या विपरिणामेन, सर्वस्य पदस्य सामर्थ्याद्युष्मदस्मदवयवकलक्षणान्न दोषः। स्पष्टं चेदं भाष्ये। न च 'युवाभ्यामि'त्यादौ, प्रकृतिभागस्याऽप्यादेशाऽऽपत्तिः, व्यपदेशिवद्भावेन तस्याऽपि तदवयवकत्वादिति वाच्यम्। 'व्यपदेशिवदेकस्मिन्नि'त्युक्त्याऽसहाये एव तत्प्रवृत्तेः।'एकाच्द्विर्वचन'न्यायेन समुदाये एव तत्प्रवृत्तेश्च। न चैवम् 'अतितवे'त्यादीनां 'ते' इत्याद्यादेशाऽऽपत्तिरिति वाच्यम्। षष्ठ्यादेः प्रकृत्याकाङ्क्षतया श्रूयमाणयुष्मदादिप्रकृतिकस्यैव ग्रहणेनाऽदोषात्।

**तौ चाऽनुदात्ताविति**। [1]नन्वेकस्मिन्वाक्ये वाम्–नावादीनामुद्देश्यत्वविधेयत्वयोर्मानाऽभाव इति चेन्न। भाष्यप्रामाण्येन, लक्ष्यानुसारेण च वाक्यभेदाऽङ्गीकारात्। 'विशिष्टविधिरि'त्यन्ये। ननु 'अनुदात्तं सर्वमि'त्यत्र 'सर्व'ग्रहणं व्यर्थम्। न च 'तिङ्ङतिङः' इत्यादौ सर्वानुदात्तार्थं तदिति वाच्यम्। विनिगमकाऽभावेन तत्सिद्धेः। 'अनुदात्तं पदमेकवर्जमि'ति तूदात्तस्वरितविधिविषयमेवेति स्पष्टमाकरे। न चाऽतिङन्तात्परं तिङन्तं निहन्यते इत्याद्यर्थक—'तिङ्ङतिङः' इत्यादौ 'आदेः परस्ये'त्येतदभावार्थं 'सर्व'ग्रहणम्, तत्प्रवृत्तौ हि 'देवः[2] करोती'त्यादौ सर्वाऽनुदात्तत्वं न स्यादिति वाच्यम्। स्थानषष्ठ्यभावात्। न च 'पदस्ये'त्यस्त्येवेति वाच्यम्। 'अनुदात्तं' 'तिङि'त्यादिश्रुतप्रथमान्ताऽनुरोधेन तस्याऽपि प्रथमया विपरिणामात्। 'न लुङि'ति प्रतिषेधाच्च। न हि लुङन्तमाद्यु-

---

१. नन्वेकस्मिन्वाक्ये 'वांनावा'दीनामुद्देश्यत्व-विधेयत्वयोर्मानाऽभावः। वाक्यभेदे, विशिष्टविधौ वा गौरवात्। न चाऽनुदात्तमित्यधिकारसामर्थ्यात्तथेति वाच्यम्। 'आमन्त्रितस्ये'त्यादौ विधेयाऽन्तराऽनुपादाने तस्य चारितार्थ्यादिति चेन्मैवम्। अत्र 'अनुदात्तमि'ति पदोपस्थितिसामर्थ्येन, भाष्यप्रामाण्येन च गौरवाऽङ्गीकारात्'—इति ख. पाठः।

२. 'देवः करोतीत्यादौ मध्योदात्ते आदेरनुदात्तत्वेऽपि सर्वानुदात्तत्वं न स्यादिति वाच्यम्' ख. पाठः।

दात्तमस्ति, यस्याऽनुदात्तत्वायेदं सार्थकं स्यात्। 'अलोन्त्यस्ये'त्यस्यापि स्थानषष्ठ्यभावादेवाऽप्राप्तिः, (स्पष्टं[1] चेदं भाष्यादौ) इति चेन्न। स्पष्टार्थत्वात्। (भाष्ये[2] त्विदमेव 'सर्व'ग्रहणं विभक्त्यन्तस्याऽऽदेशार्थमित्युक्तम्)।

**उक्तविधयोरिति**। पदात्परयोरपादादौ स्थितयोरित्यर्थः।

द्वितीयायां त्वाऽमयोरपवादत्वादाह–**षष्ठीचतुर्थ्येके**ति।

सूत्रे द्वन्द्वे पूर्वनिपातशास्त्रबलात्षष्ठ्याः पूर्वपाठेऽपि, विभक्तिक्रमक्लृप्तद्वितीयाऽऽदिक्रमेणोदाहरणान्याह–**श्रीश इति**। **दत्तादिति**। अनेन चतुर्थ्यन्तत्वं स्फुटीकृतम्। **संवेद्योस्मानिति**। नन्वत्र सन्ध्यभावे नवाऽक्षरत्वेनाऽनुष्टुप्पादत्वादत्वाऽनापत्तिः। सन्धौ तूभयत आश्रयणेऽन्तवद्भावाऽभावेन कथमादेशप्राप्तिरिति चेन्न। 'संवेद्यो' इत्येकादेशविशिष्टस्य पूर्वाऽन्तवत्त्वेन पदत्वात्, 'स्मानि'त्यस्य चैकदेशविकृतन्यायेन द्वितीयान्ताऽस्मच्छब्दत्वेन, सन्धौ कृते तत्प्राप्तिरित्याशयात्। सन्धिश्चाऽन्तरङ्गत्वादादेशात्पूर्वमेव।

'आदेशे सति 'नः कृष्ण सर्वदाऽवत्वि'ति पादादित्वाऽऽपत्त्योपजीव्यविरोधान्नादेश इति भाव' इत्यन्ये।

ननु[3] 'सर्वस्य' 'पदस्ये'त्यधिकारात्षष्ठ्याद्यन्तानामेवाऽऽदेशा भविष्यन्ति, किं 'स्थ'ग्रहणेनेत्यत आह–**स्थेति**। 'समये तिष्ठ सुग्रीवे'तिवत् तिष्ठतिरहानौ वर्त्तते। 'समयं मा हासीरि'ति तत्राऽवगमात्। तेन षष्ठ्यादीनविजहतोरेवाऽऽदेशा इत्यर्थः। **इति युष्मत्पुत्र इति**। 'युवयोर्युष्माकं चे'ति विग्रहः। अत एव त्वमौ न। यद्यपि 'वृत्तविभेदैकत्वसङ्ख्यौत्सर्गिको'ति वक्ष्यते,तथापि आदेशाऽभावरूपतात्पर्यग्राहकसत्त्वात् न क्षतिः। सूत्रद्वयप्रत्यु-

१. अयं ख. पाठः क. ग. नास्ति।

२. अयं ख. पाठः क. ग. नास्ति।

३. 'ननूक्तरीत्या षष्ठ्याद्यन्तानामेवादेशा भविष्यन्ति' इति क. पाठः।

दाहरणलाभाय[1] 'इति त्वत्पुत्र' इति नोदाहृतम् । पदात्परत्वसम्पादनाय 'इति'शब्दः ।

**समानवाक्ये इति** । 'निमित्त-निमित्तिनोरेकवाक्यस्थत्वे' इत्यर्थक- 'समानवाक्ये' इति प्रकृत्य विधेया' इत्यर्थः । ('देव[2]दत्तोऽस्तु' 'यज्ञदत्त हरे'ति निघातोदाहरणम्) । **निघातो** नामाऽनुदात्तः ।

**एकतिङिति**—बहु[3]व्रीहिः । एकतिङ्घटितमित्यर्थः । तेन 'पचती'त्येत- न्मात्रस्य न वाक्यत्वम् । इदं च स्वशास्त्रकार्योपयोग्येकवाक्यत्वलक्षणम् । तेन 'पश्य मृगो धावती'त्यादौ लौकिकैकवाक्यत्ववत्यपि नाऽव्याप्तिः । स्पष्टं चेदं 'तिङ्ङतिङ' इति सूत्रे भाष्ये । तत्र हि 'एकतिङ्वाक्यमि'- त्याश्रित्याऽतिङ्ग्रहणं प्रत्याख्यातम् ।

लौकिकैकवाक्यत्वलक्षणं च 'सुप्तिङन्तचयो वाक्यं, क्रिया वा कारका- ऽन्विते'त्यमरेणोक्तम् । अत्र 'वा'शब्दश्चेदर्थे । कारकाऽन्वितक्रिया चेत् । 'बोध्ये'ति शेषः । तेन निरर्थकशब्दसमुदायव्यावृत्तिः । एव च कारका- ऽन्वितक्रियाबोधकसुप्तिङन्तचय इत्यर्थः । सुप् च, तिङन्तं च सुप्तिङन्ते, सुप्विशिष्टं तिङन्तं–सुप्तिङन्तम् । तेषामेकशेषः तेन सुबन्तचय-तिङन्तचय- सुप्तिङन्तचयानां त्रयाणामपि वाक्यत्वलाभः ।

तत्र[4] सुबन्तचयो-'देवदत्तेन शयितव्यमि'ति । द्वितीयं 'पचति-भवती' त्यादि । तृतीयं–'चैत्रः पचती'त्यादि । यत्तु 'वा'शब्दस्वारस्यादर्थस्याऽपि वाक्यत्वमि'ति । तन्न । अर्थे 'वाक्य'शब्दाऽप्रयोगात् । 'वचोऽशब्दसंज्ञा-

---

१. 'सूत्रद्वयप्रत्युदाहरणलाभाय, उच्चरिततत्पदवत्सूत्रीयप्रत्युदाहरणलाभाय च' ख. पाठः ।

२. अयं ख. पाठः । क. ग. नास्ति ।

३. 'बहुव्रीहि' इत्यारभ्य 'न वाक्यत्वम्' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

४. 'तत्र' इत्यारभ्य 'चैत्रः पचती'त्यादि' इत्यन्तः क. ग. पाठः ।

यामि'ति निषेधेन कुत्वाऽनापत्तेश्च[1]।

एतत्स[2]मानार्थकमेव 'तिङ्ङतिङ' इति सूत्रेऽतिङ इतिवदत्सूत्रकाराऽभिप्रेतं वाक्यलक्षणम्—'आख्यातं सविशेषणं वाक्यमि'ति समर्थसूत्रे भाष्ये उक्तम्। तत्राऽऽख्यातपदेन क्रियाप्रधानं लक्ष्यते। तेन 'त्वया शयितव्यमि'त्यादेः संग्रहः।

सविशेषणत्वेन विभागे साकाङ्क्षत्वं लब्धम्। 'सविशेषणमि'त्यस्य साक्षात्परम्परया वा यद्विशेषणं, तत्सहितमित्यर्थः। तेन 'नद्यास्तिष्ठति कूले' इत्यादौ 'नद्या' इत्यादेः समानवाक्यस्थत्वसिद्धिः। एतदेव एकोद्देश्यकैकविधेयकत्वगर्भमेकवाक्यत्वलक्षणं बोध्यम्। तदुक्तं **हरिणा**—

**'साकाङ्क्षाऽवयवं भेदे, पराऽनाकाङ्क्षशब्दकम्।**
**क्रियाप्रधानं गुणवदेकाऽर्थं वाक्यमुच्यते॥'** इति।

'वाक्य'मित्यस्यैकं वाक्यमित्यर्थः, 'अर्थैक्यादेकं वाक्यं, साकाङ्क्षं चेद्विभागे स्यादि'ति **जैमिनि**सूत्रात्। अत एवोद्देश्याऽनेकत्वे, विधेयाऽनेकत्वे च वाक्यभेद इति मीमांसकोद्घोषः। यत्तु **कैयटे**नाऽस्य पारिभाषिकत्वमुक्तं, तत्प्रमादात्। यदपि 'आख्यातमि'त्यत्रैकत्वविवक्षां कृत्वा, 'पचति-भवती'त्यत्र वाक्यत्ववारणं तेन कृतम्। तदपि न। 'अतिङ' इत्यस्योक्तिसम्भवाऽनापत्तेः। सूत्रसंमतवाक्यलक्षणाऽकथनेन भाष्ये न्यूनताऽऽपत्तेश्च। यदि वाक्यलक्षणमेकार्थत्वगर्भं स्यात्तदा 'समानवाक्ये' इत्यत्र समानपदोपादानमनर्थकं स्यात्। किञ्च व्यक्तिपक्षे 'न ब्राह्मणं हन्यादि'त्यादावेकं ब्राह्मणमहत्वा कृती स्यादितिभाष्योक्तन्यायेन लक्षणवाक्ये एकत्वविवक्षायामेकस्यैवाऽऽख्यातस्य वाक्यत्वं स्यादित्याख्याताऽन्तरस्य वाक्यसंज्ञा न स्यात्। अतो लक्षणवाक्ये जातिनिर्देशस्याऽऽवश्यकत्वम्।

---

१. 'कुत्वानापत्तेश्चे'ति दिक्। ओदनं पचेत्यादि'। इति ख. पाठः।

२. 'एतत्समानार्थकमेव' इत्यारभ्य 'तथेति दिक् (पृ० ६४८) इत्यन्तः क. ग. पाठः। ख. नास्ति।

किञ्चाऽनयैकत्वविवक्षया 'पचति करोति चे'त्यादौ समकक्षाऽऽख्यातद्वित्वे तद्वारणेऽपि, विशेषणमादायाऽऽख्यातद्वित्वे तद्वारणस्याऽशक्यत्वात् । अनेन च 'ब्रूहि ब्रूही'त्यस्याऽसङ्ग्रहः । विशेषणाऽनुपादानेन सविशेषणत्वाऽभावात् । वाक्यत्वफलन्त्वत्र प्रश्नोत्तरे'अनन्त्यस्यापि प्रश्ने'त्यनेन वाक्यस्य टेः प्लुतसिद्धिः । अतः स्वशास्त्रपरिभाषितलक्षणम् 'एकतिङ् वाक्यमि'त्युक्तम् । अत एव तदुदाहरणं 'ब्रूहि-ब्रूही'त्येव भाष्ये दत्तम् ।

**यत्तु कैयटेन** 'ब्रूहि-ब्रूहि देवदत्ते'तिशेषपूरणेन तद्व्याख्यातम् । तन्न । पूर्वलक्षणेनैव सिद्धेः । द्विर्वचनप्रयोगस्य भाष्ये व्यर्थत्वाऽऽपत्तेश्च ।

यद्यपि 'अग्रेऽग्रे'[1] इत्यादौ पूर्वरूपाय द्वित्वेऽवान्तरपदत्वमप्यस्ति । एवञ्च कथमत्रैकतिङ्त्वं, तथाऽप्येकानुपूर्वीकतिङन्तवत्त्वविवक्षणेनाऽदोषः । एतल्लक्षणाऽनुसारेणैवाऽतिङ इति प्रत्याख्यातमित्यन्यत् ।

अत एव भाष्ये 'एकतिङि'तिलक्षणे 'च' शब्दो, 'वा' शब्दो वा नोक्तः । भिन्नविषयत्वात् । एकविषयत्वे हि सोऽवश्यवक्तव्यः स्यात् । दृश्यते हि भाष्यकारस्य शैली तथेति दिक् ।

[2] **ओदनं पचेत्यादि** । न चाऽत्र सामर्थ्याऽभावान्न प्राप्तिः ।

---

१. 'अग्रे-अग्रे' इति क. पाठः । अस्य 'अग्रे-अग्रे' इति स्थिते इत्यर्थः ।

२. 'ओदनं पचेत्यादि । न चाऽत्र सामर्थ्याऽभावान्न प्राप्तिः । एकार्थीभावसामर्थ्ये एव परिभाषाप्रवृत्तिरि'ति भाष्याऽऽदिसिद्धान्तात् । यस्य चाऽत्राऽसम्भवः । साक्षात्तद्विध्युद्देश्ययोस्तद्विध्युद्देश्यविधेययोरेवैकार्थीभावकल्पनेन प्रकृते मानाऽभावादिति समर्थसूत्रे निरूपयिष्यामः । नन्वेवमपि 'अयं मे दण्ड' इत्यादावन्यनिवृत्तितात्पर्यकेऽस्तिक्रियायाः प्रयोजनाऽभावेनाऽनध्याहारात्, एकवाक्यत्वाऽभावे, आदेशादयो न स्युरिति चेन्न । 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ती'त्यादिभाष्यप्रामाण्येन तत्रापि तत्सत्त्वात् । अस्य नियमाऽर्थत्वेनाऽनेकतिङ्घटितस्य वाक्यत्वं नेत्यर्थाच्च । अत एव 'मृगो मम धावति, पश्ये'त्यादौ नाऽऽदेशाः । आष्टमिकद्वित्वस्य

'न[1]द्यास्तिष्ठति कूले' 'शालीनां ते ओदनं ददामी'त्याद्यसिद्ध्यापत्तेः। 'नद्याः' 'शालीनामि'त्यादेस्तिष्ठित्यादिनाऽनन्वयेनाऽसामर्थ्यात्। एकार्थीभावविषये एव तत्परिभाषाप्रवृत्तेश्च। 'अयं मे दण्ड' इत्यादावस्तेः सत्त्वेनाऽदोषः।

**एते वान्नावादय इति**। तथा च 'सपूर्वाया' इति सूत्रे भाष्यं ('[2]युष्मदस्मदोर्विभाषाऽन्वादेशे'। अपर आह–) 'सर्व एते वां-नावादयोऽनन्वादशे विभाषे'ति। न तर्हीदानीमिदं वक्तव्यं-'सपूर्वाया' इति ?। वक्तव्यम्, अन्वादेशाऽर्थमि'ति। परिशेषसिद्धार्थमाह—**अन्वादेशे त्विति**। तदुदाहरति—**तस्मै ते इति**।

**न चवा**। **पञ्चकेति**। समुच्चय-विकल्पा-ऽद्भुत-खेदा-ऽवधारणार्थकानां च-वा-ह-अह-एवानां पञ्चानां मध्येऽन्यतमेन योगे इत्यर्थः। **युक्ते** इति। भावे क्तः। ननु 'तुल्यार्थैरि'तिवत्तृतीयानिर्देशेनैव सिद्धे 'युक्त'ग्रहणं व्यर्थमत आह–**युक्तग्रहणादिति**। **साक्षादिति**। युष्मदस्मदर्थगतसमुच्चयाऽऽदिद्योतकत्वे इत्यर्थः। **परम्परेति**। स्वा[3]ऽर्थाऽऽश्रयाऽन्वय्यन्वयित्वादिरूपेत्यर्थः।

**पश्यार्थैः**। अत एव निपातनाद्भावे शः। दर्शनं-पश्यः। तच्च 'अनालोचने' इति निषेधात्, 'अदर्शनमि'त्यादौ दृशेश्चाक्षुषाऽतिरिक्तज्ञानाऽर्थकत्वस्य दृष्टत्वाच्च ज्ञानमात्रम्। तदाह—**अचाक्षुषेत्यादि**। **चेतसा त्वामिति**। ननु 'अचाक्षुषे'ति पर्युदासेन बहिरिन्द्रियजन्यज्ञानाऽर्थयोग एव

---

स्थाने द्विर्वचनत्वात् 'देवदत्तो मे पचति-पचती'त्यादावादेशा भवन्त्येव। 'एकशब्दः समानपर्याय'इति-अत्र न क्षतिरि'ति समर्थसूत्रे कैयटः' इति ख. पाठः।

१. 'नद्याः' इत्यारभ्य 'अदोषः' इत्यन्तः क. ग. पाठः।

२. अयं पाठः क. ग. नास्ति।

३. स्व-चाद्यर्थ-समुच्चया-श्रय-हरिहरा-ऽन्वयि-स्वामित्वा-ऽन्वयित्वं 'मे'पदार्थ इति समन्वयो बोध्यः। 'स्वार्थाऽऽश्रयाऽन्वयित्वादीत्यर्थः' इति तु ख. पाठः। स्वार्थाश्रयान्वयित्वादिः' इति च क. ग. पाठः।

स्यादिति 'चेतसे'त्ययुक्तमिति चेन्न। '**अनालोचनाऽर्थैरि**'त्येव सिद्धे 'पश्याऽर्थैरि'त्यस्य वैयर्थ्याऽऽपत्तेः। **परम्परेति**। स्वा[1]ऽन्विताऽन्वयित्वाऽऽदिः। अत एव पूर्वसूत्रे 'युक्त'ग्रहणं चरितार्थम्। **भक्तस्तवेति**। इह 'तवे'त्यस्य रूपेण सम्बन्धो, न तु साक्षाद्धयायतिनेति भावः।

**सपूर्वायाः**। 'सह'शब्दो विद्यमानवचनः। अ[2]वधेरपि सम्बन्धित्वेन विवक्षायाम् 'अनेकमन्यपदार्थे' इति षष्ठ्य[3]र्थे समासः। 'वोपसर्जनस्ये'ति सभावः। तदाह–**विद्यमानपूर्वादिति**। 'प्रत्ययग्रहणे तदन्तग्रहणमि'-त्याह—**प्रथमान्तादिति**। ननु 'एते वान्नावादय आदेशा' इत्यनेनैव विकल्पसिद्धेः किमनेनेत्यत आह—**अन्वादेशेऽपीति**। अप्राप्तो निषेधोऽनेन विकल्प्यते। निषेधविकल्पे विधिविकल्पस्य फलितत्वादाह—**आदेशा वेति**। 'यो हरिस्त्वां त्रायसे, स मां चे'त्यादौ चाऽऽदियोगे 'सपूर्वाया' इति बाधित्वा पूर्वविप्रतिषेधेन नित्यनिषेध एवेति 'नवेति विभाषे'तिसूत्रस्थ-भाष्यस्वरसः।

**तेनेति**। भक्तत्वेनेत्यर्थः। अतः प्रक्रान्ताऽर्थत्वान्न यच्छब्दोपादानाऽपेक्षा। अत एव **सप्तमे काव्यप्रकाशे** 'प्रक्रान्त-प्रसिद्धाऽनुभूताऽर्थकतच्छब्दो यच्छब्दोपादानं नाऽपेक्षते'इत्युक्तम्। अनुपादानेऽपि यत्प्रक्रान्तं, यत्प्रसिद्धं, यदनुभूतमित्येतदर्थस्य सामर्थ्यादेवाऽऽक्षेपसम्भवादिति **तद्व्याख्यातारः**। इ[4]दमेवाऽभिप्रेत्य ('हरेस्त्वं भ[5]क्त'इति,–येन कारणेन भक्तत्वेन त्वां त्रायते,

१. स्वं-धात्वर्थो ध्यानं. तदन्वितं रूपं, तदन्वयित्वं त्वत्पदार्थे इति ध्येयम्।

२. 'अवधेरपि सम्बन्धित्वेन विवक्षायाम्' इति क. ग. पाठः। ख. नास्ति।

३. 'पञ्चम्यर्थे' इति ख. पाठः।

४. 'इदमेवाऽभिप्रेत्य' इत्यारभ्य 'इति परास्तम्' इत्यन्तः ख. पाठो मनोरमा शब्दरत्नस्थत्वादत्र क. कुण्डलितः।

५. 'हरेस्त्वं भक्त इति' इत्यारभ्य 'इत्यर्थके' इत्यन्तः ख. पाठः क. ग. नास्ति।

तेनैव कारणेन भक्तत्वेनाऽहमपि भक्त इति मां त्रायते' इत्यर्थके) 'येन कारणेन हरेस्त्वं भक्तस्तेनैव कारणेनाऽहमपि भक्त' इति **प्राचां** विवरणे, 'येन त्वं भक्त' इति यच्छब्दाऽध्याहारक्लेशो व्यर्थः। किन्तु 'तेन त्रायते' इत्येव सम्बन्धः। प्रक्रान्तार्थत्वाच्च न यच्छब्दाऽपेक्षे'ति **मनोरमाया**मुक्तम्।

यत्तु 'येन कारणेने'त्यस्य भक्तत्वेऽन्वयः। अतो 'भक्तत्वात्त्वां त्रायते' 'इति सम्बन्ध' इति। तत्तु भक्तत्वे हेत्वाकाङ्क्षाया अभावात्, त्राणे[1] आकाङ्क्षितहेत्वर्थकस्याऽध्याहाराच्चा[2]ऽयुक्तम्। 'तेने'त्यस्य शब्दमर्यादया त्राणे एवाऽन्वयप्रतीतेश्च।

न च भवत्पक्षेऽपि साऽऽपेक्षविधानादन्वादेशो न स्यादिति वाच्यम्। किञ्चिद्विधाय पश्चादितरविधिरन्वादेशो, न तु निरपेक्षत्वगर्भः, अशब्दाऽर्थत्वात्, शास्त्रे तथाऽपरिभाषितत्वाच्च। अत्र 'तेन हरिस्त्वामि'त्येकमुदाहरणं, 'स मामि'त्यपरम्। 'त्रायते' इत्यस्य च मध्यमणिन्यायेन तन्त्रेणोभयत्राऽन्वयः। तेन 'स'[3] इत्यस्यापि समानवाक्यस्थत्वेन विद्यमानपूर्वत्वं बोध्यम्। एतेन 'त्रायते' इत्यनेन 'हरिस्त्वामि'त्यनेनैव शाब्दोऽन्वयः। 'स मामि'त्यत्र त्वध्याहारः। न च वैपरीत्यमस्तु। अध्याहारस्याऽनुपपत्तिमूलकत्वेनोत्तरत्रैव युक्तत्वात्। अध्याहृतस्य 'आगन्तूनामन्ते निवेश' इतिन्यायेनाऽन्ते एव निवेशेन, श्रूयमाणस्य समानवाक्यस्थत्वाऽभावेन च 'स' इति प्रथमाऽन्तस्य विद्यमानपूर्वत्वाऽभावात्कथं द्वितीयमुदाहरणमि'ति परास्तम्।

**सामन्त्रितम्**। 'सम्बोधने चे'त्यतः 'सम्बोधने' इति वर्त्तते। 'से'त्यनेन

---

१. 'त्राणे आकांक्षितहेत्वर्थकस्याऽध्याहारे सापेक्षत्वं तवाऽपि दुर्निवारं च' इति लघुशब्दरत्ने पाठः।

२. अत्र अयुक्तत्वं सापेक्षत्वादेवेति बोध्यम्।

३. 'तेन स' इत्यारभ्य 'बोध्यम्' इत्यन्तः क. पाठः। ख. नास्ति।

प्रथमा परामृश्यते। संज्ञाविधावपि 'आमन्त्रणम्[1]-आमन्त्रितमि'ति महासंज्ञाया बलात्तदन्तविधिः। भावे क्तः। उपचारात्तत्साधने वृत्तिः[2]। विभक्त्यन्तेन चाऽऽमन्त्र्यते, न तु केवलया विभक्त्येत्याह—**सम्बोधन-इत्यादि**[3]। ननु 'सम्बोधने' 'प्रथमे'त्यनयोरनुवृत्त्यैव संज्ञिलाभे, 'से'ति व्यर्थमिति[4] चेन्न। 'है' 'हे' 'भो'इत्यादीनां कोशे विशिष्य सम्बोधने शक्तेरुक्तत्वेन तत्र प्रातिपदिकार्थसूत्रेणैव प्रथमोत्पत्तेस्तेषां संज्ञाऽर्थं तदावश्यकत्वात्[5]। अन्यथा[6]ऽनन्तरस्येति न्यायात्सम्बोधने चेतिविहितप्रथमान्ते एव स्यात्। एषां सञ्ज्ञासिद्ध्यर्थमेव 'प्रथमान्तमि'ति व्याख्यातम्। अन्यथा 'अन्तरङ्गानपी'ति पूर्वं विभक्तिलुकि, प्रथमाया अभावेन 'नखनिर्भिन्न'-

---

१. 'आमन्त्रणम्-आमन्त्रः। करणस्य शेषत्वविवक्षया स जातोऽस्य तदित्यर्थिकाया आमन्त्रितमिति महासञ्ज्ञाया बलात्' इति ख. पाठः।

२. 'तत्साधने वृत्तिरिति तु जघन्यवृत्तिकल्पनापत्त्याऽयुक्तम्' ख. पाठः।

३. इतोऽग्रे—'विभक्तिमात्रस्य संज्ञित्वे 'आमन्त्रितस्य चे'ति षाष्ठे आद्युदात्तविधायके तदन्ताऽलाभ इत्यभिमानः। 'प्रत्ययग्रहणे तदन्तग्रहणमि'त्यनेन सिद्धे तदन्तसंज्ञायां फलं चिन्त्यमित्यन्ये'—इति ख. पाठः।

४. 'सेति व्यर्थम्। न च 'हे पचमान!' इत्यादौ सम्बोधने शानज्विधानेन, सम्बोधनस्य प्रातिपदिकाऽर्थत्वात्प्रातिपदिकाऽर्थसूत्रेण प्रथमायामपि संज्ञाऽर्थं 'से'ति पदम्, अन्यथाऽनन्तरस्येति न्यायात् 'सम्बोधने चे' ति विहितप्रथमाऽन्त एव स्यादिति वाच्यम्। विभक्तिरहितानां शानजादीनां द्विर्वचनरहितलोट इव कर्त्राद्यभिधानमात्रे सामर्थ्येन, तत्राऽपि 'सम्बोधने चे'त्येव प्रथमासत्त्वात्। 'सम्बोधने चे'ति शतृविधायकं प्रथमासामानाधिकरण्याऽर्थं, लक्षणहेत्वोरि'तिवदिति चेन्न'—इति ख. पाठः।

५. 'तदावश्यकत्वादित्याहुः' इति ख. पाठः।

६. 'अन्यथा' इत्यारभ्य 'प्रथमेत्यर्थः' इत्यन्तः क. ग. पाठः। ख. नास्ति।

इत्यत्रैसभाववदत्र संज्ञा न स्यात्। '**सम्बोधने या प्रथमे**'त्यस्य सम्बोधन-विषयप्रथमेत्यर्थः।

**अविद्यमानवदिति**। ननु 'गोतो णिदि'त्यत्रेव वतिं विनाऽपि तदर्थलाभे वत्करणं व्यर्थम्। न च तदभावे निवृत्तिः, परप्रयोगो वाऽर्थः स्यादिति वाच्यम्। 'लोप' इत्येव, 'पर'[1] इत्येव वा सिद्धे 'अविद्यमान'पदवैयर्थ्याऽऽपत्तेरिति चेन्न। वत्करणसामर्थ्येन क्वचिदतिदिश्यमानविरुद्धस्वाऽऽश्रयस्याऽपि कल्पनात्। तेन 'आम् भो देवदत्ते'त्यादौ 'आम एकान्तरमामन्त्रितमनन्तिके' इत्येकान्तरत्वप्रयुक्ताऽऽमन्त्रितनिघातनिषेधसिद्धिरिति स्पष्टं भाष्ये। स[2]म्बोधनमात्रद्योतकत्वेनाऽस्य विशेष्यवचनत्वान्नाऽत्र 'नामन्त्रिते' इति निषेधः।

**इहेति**। 'अग्ने तव' 'देवाऽस्मानि'त्यत्राऽऽदेशाः, 'अग्ने नये'त्यत्र 'तिङ्ङतिङः' इति निघातः, 'अग्ने इन्द्रे'त्यादौ 'आमन्त्रितस्य चे'ति निघात इति विवेकः। **प्राचीनमिति**। ननु परं प्रत्यविद्यमानवद्भावेऽपि पूर्वं प्रति तदभावात्कथं 'रक्षे'त्यादितः परत्वमस्मच्छब्दादीनामिति चेन्न। पूर्वशब्देन परस्याऽऽक्षेपात्परस्य कार्ये स्वनिमित्तेऽन्यनिमित्ते वा, पूर्वं, परं प्रति वाऽविद्यमानवत्त्वाऽतिदेशाऽङ्गीकारात्। स्पष्टं चेदं **कैयटे**। परस्य कार्ये इति किम्?। देव करोषि। आमन्त्रिताऽऽद्युदात्तत्वे कार्ये तस्याऽविद्यमानता मा भूत्। न चाऽऽद्युदात्तत्वविधानं व्यर्थम्। अपूर्वत्वे, 'अग्ने तेजस्विन्नि'त्यादौ निषेधविषये च तस्य चारितार्थ्यात्।

पूर्वं किम्?। पाहि देव। आमन्त्रितनिघातो भवत्येव।

**'अख्यातिरन्यथाख्यातिरसत्ख्यातिस्तु ते द्विषाम्।**
**नृसिंहाऽऽश्रम! ते ख्यातिर्यात्यनिर्वचनीयताम्॥**

---

१. 'परमित्येव वा' ग. पाठः।

२. 'सम्बोधनमात्र' इत्यारभ्य 'इति निषेधः' इत्यन्तः क. ग. पाठः।

—इत्यादौ 'नृसिंहाश्रमे'त्यस्याऽऽमन्त्रितत्वेनाऽविद्यमानवत्त्वेऽपि[1] पूर्वार्द्धस्थपदात्परत्वेनाऽऽदेशो भवत्येव। वाक्यैकवाक्यतयाऽन्वयेन समानवाक्यस्थत्वाऽनपायात्।

अत एव 'लक्ष्मीपते तेऽङ्घ्रियुगम्', 'दयिते ते करिशावकुम्भलक्ष्म्याः' इत्यादिसिद्धिः। यदि तु तत्र पूर्वार्द्धेऽस्तीत्यध्याहारान्न पारिभाषिकैकवाक्यत्वं, तदा 'नृसिंह, आश्रमे'ति पदद्वयम्। 'आश्रमे'ति विशेषणम्। एवं च पूर्वस्य 'नामन्त्रिते' इति अविद्यमानवत्त्वप्रतिषेधान्न दोष इत्याहुः।

**सर्वेषां निघात इति।** अस्य 'प्राप्त' इति शेषः। तत्र 'यमुने सरस्वती'-त्यनयोर्बाधकाऽभावाद्भवत्येव। 'शुतुद्री'त्यस्य तु न भवति[2], पादाऽऽदिस्थत्वादिति भावः। एतेन 'आदिभ्यः' 'सर्वेषामि'ति च बहुवचनमसङ्गतमि'त्यपास्तम्।

([3]**नामन्त्रिते।** ननु 'सामान्यवचनं विभाषितं विशेषवचने' इत्युत्तरसूत्रादपकृष्टेन 'सामान्यवचनमि'त्यनेन विशेष्यवचनमित्यर्थकेन सम्बन्धिशब्दत्वामन्त्रिते इति सप्तम्यन्ताऽर्थे विशेषवचनत्वाऽऽक्षेपे सामानाधिकरण्यस्याऽर्थलब्धत्वेन 'समानाधिकरणे' इति व्यर्थमिति चेन्न। अत्यन्तसमानाधिकरणग्रहणाऽर्थत्वात्। तेन 'भो देवदत्ते'त्यादौ 'भो' शब्दस्याऽविद्यमानवत्त्वमेव, न निषेधः। तस्य सामान्यवचनत्वेऽपि निपातत्वात् लिङ्गाऽऽदिवाचित्वाऽभावेन, सत्त्वार्थकदेवदत्तपदेनाऽत्यन्तसामानाधिकरण्याऽभावात्। अत एव 'आम् भो देवदत्ते'त्यत्रैकाऽन्तरत्वाऽर्थवत्करणमि'ति 'अविद्यमानवत्' सूत्रस्थं भाष्यं सङ्गच्छते इत्याहुः)।

**अग्ने तेजस्विन्निति।** न च 'अनुदात्तं सर्वमपादादावि'त्यस्य आपाद-

---

१. 'अविद्यमानवत्त्वेपि वाक्यैकवाक्यतयाऽन्वयात्पूर्वार्द्धस्थपदात्परत्वेन' इति ग पाठः।

२. 'भवति' इति ख. नास्ति।

३. अयं ख. पाठः; क. कुण्डलितः। ग. नास्ति।

परिसमाप्तेरधिकारेण 'अग्ने' इत्यस्य च पादाऽऽदिस्थत्वात्कथमविद्यमानवद्भाव इति वाच्यम् । 'अनुदात्तं' 'सर्वमि'त्यनयोः सम्बन्धाऽनर्हत्वेन निवृत्तावावश्यिकायां तत्साहचर्यादपादादावित्यस्याऽपि निवृत्तेः । न चैवमपि 'हरे दयालो न' इत्यत्र 'विभाषितं विशेषवचने' इत्युत्तरसूत्रेण विकल्पः किं न स्यादिति वाच्यम् । भाष्यकृता 'बहुवचनमि'त्यस्य तत्र पूरितत्वात् । आमन्त्रिते किम् ?। देव करोषि । सामान्यवचनं किम् ?। 'अघ्न्ये देवि सरस्वति इडे काव्ये' इत्यत्राऽघ्न्यापर्यायेष्वपि परेषु निषेधो मा भूत् । सामानाधिकरण्यं[1] च एकाऽर्थविशेष्यकबोधजनकत्वमेव, न तु प्रवृत्तिनिमित्तभेदगर्भमिति दिक् । अघ्न्या गौः ।

**सुपादिति** । 'शोभनौ पादावस्ये'ति बहुव्रीहिः । 'संख्यासुपूर्वस्ये'त्यकारलोपः समासान्तः । सुपदेर्ण्यन्तात्क्विप् वा । न च द्वितीयपक्षे पदादेशे कार्ये णिलोपस्य स्थानिवत्त्वेन स दुर्लभः । 'क्वौ लुप्तमि'ति निषेधात् । अत्र च 'येन विधिरि'ति सूत्रस्थं भाष्यं मानम् ।

'निर्दिश्यमानस्ये'ति परिभाषालब्धाऽर्थमाह—**तदवयवस्येति** । **अञ्चेः सुपीति** । न च सकर्मकत्वात् 'कर्मणी'त्यधिकारबाधे मानाऽभावः । निपातनसामर्थ्येन तद्बाधात् । न च तत्सामर्थ्यात्केवलादेवाऽस्तु । भाष्यविरोधात् । 'सुपी'ति प्रकरणबाधे मानाऽभावाच्च ।

**अनिदिताम्** । इत्=इकार, इत्संज्ञको येषां, तद्भिन्नानामित्यर्थः । इदम् 'अङ्गस्ये'त्यनुवृत्तस्य विशेषणम् । हलः किम् ?। नीयते । उपधायाः किम् ?। हन्यते । **ङकार** इति । आन्तरतम्यादिति भावः ।

**अञ्चतेर्भस्येति** । 'अङ्गाऽवयवस्य, यजादिस्वादिपरस्याऽञ्चतेरकारस्ये'त्यर्थः । तेन प्रत्यञ्चमञ्चतीति प्रत्यगङ् । तेन 'प्रत्यक्चे'त्यादौ पूर्वाऽकारस्य न लोपः । अत्र 'अच' इति न प्रत्याहारग्रहणम् । आतो

---

१. 'सामानाधिकरण्यं च' इत्यारभ्य 'भेदगर्भम्' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

धातोरि'त्यारम्भात् 'प्रतीचो यदि'त्यादिनिर्देशाच्च । अत एव पचाद्यचो न ग्रहणम् । भस्येति किम् ? । प्रत्यञ्चौ । नुमि जातेऽपि प्रथमनस्य लोपाल्लुप्तनकारत्वम् । लुप्तनस्येति किम् ? । पूजायां 'प्रत्यञ्चे'ति ।

**चौ** । नेदं वर्गग्रहणं, व्याख्यानात् । तदाह—**लुप्तेत्यादि** । **अण इति** । नन्वेवं 'कर्त्तृचो' 'हर्त्तृच' इत्यादौ दीर्घाऽनापत्तिरिति चेत् । अत्राहु'र्हल' इति सूत्रे भाष्यकाराः–'यथालक्षणमप्रयुक्ते' इति । 'मा भूदत्र दीर्घत्वमि'ति **कैयटः** । 'नास्त्येवेदृशः प्रयोग'इति वाऽर्थः । प्रयोगं सम्भाव्य तत्रैव भाष्ये पक्षाऽन्तरमप्युक्तम्—'अथ वाऽण्ग्रहणं निवृत्तमि'ति । 'अत्र पक्षे भवत्येव दीर्घ' इति **कैयटः** । 'तत्प्र[1]योगाऽभावेन व्यावर्त्त्याऽभावान्निवृत्तमित्यर्थ' इत्यन्ये । **अकृतेति** । न च स्थानिवद्भावेन निमित्ताऽविनाशः । पदचरमाऽवयवे कर्त्तव्ये तन्निषेधात् । 'तत्प[2]रिभाषाऽभावे तु 'चौ प्रत्यङ्गस्य प्रतिषेधो वक्तव्य' इति वचनमेव भाष्योक्तं कर्त्तव्यम् । ([3]**न यणित्युपलक्षणं** प्राक्शब्दादौ सवर्णदीर्घस्याऽपि) ।

**विष्वग्दे** । चात् 'आ सर्वनाम्न' इत्यतः 'सर्वनाम्न' इत्याकृष्यते । अत एव 'अदसोऽद्रेः पृथङ् मुत्वमि'ति वार्त्तिकं सङ्गच्छते । सामर्थ्यादिव चोपसर्जनेऽपि प्रवृत्तिः । **अप्रत्यये इति**-पाठेऽविद्यमानः प्रत्ययः, क्विबादिरित्यर्थः । **वप्रत्यये इति**—पाठेऽप्यकारस्याऽविवक्षितत्वात्स एवाऽर्थः । अद्र्यादेशः, सहस्य सध्र्यादेशश्चाऽन्तोदात्तो निपात्यते इति स्पष्टमाकरे ।

**अदसो** । 'असेरि'तीकार उच्चारणाऽर्थः । **असान्तस्येति** । सान्तभिन्नस्येत्यर्थः । 'अद[4]स' इत्यवयवषष्ठी । अदसो दात्परस्य तदवयवस्य उकारो,

---

१. 'तत्प्रयोगाऽभावेन' इत्यारभ्य 'इत्यन्ये' इत्यन्तः क. ग. पाठः ।

२. 'तत्परिभाषाऽभावे तु' इत्यारभ्य 'कर्त्तव्यम्' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

३. ख. पाठोऽयम् । क. ग. नास्ति ।

४. 'अदसः' इत्यारभ्य 'मश्चेत्यर्थः' इत्यन्तः क. ग. पाठः ।

दस्य मश्चेत्यर्थः। असेः किम् ?। अदस्यति। सान्तग्रहणं च 'अदोऽनुपदेशे' इ[1]ति निर्देशेन ओकाररेफयोरप्युलक्षणम्। तेन 'अदः' 'अदोऽत्रे'त्यादौ न दोषः। दादिति किम्? 'अमुयोरि'त्यत्राऽन्त्यस्य मा भूदिति। अत्र 'उ[2]' इति समाहारद्वन्द्व इति चिन्त्यम्। उस् ऊस् इति द्वन्द्वे सुलोपे घ्यन्तत्वाद्ध्रस्वस्य पूर्वनिपाते नपुंसकह्रस्वसव[3]र्णदीर्घयोः प्राप्त-योर्दीर्घस्य शब्दाऽन्तरप्राप्त्याऽनित्यत्वेन, नित्यत्वात्, अर्थधर्म-नपुंसका-ऽऽश्रितत्वेऽपि अपरनिमित्तकत्वेन अन्तरङ्गत्वाद्वा, ह्रस्वत्वे, ततः सवर्णदीर्घे, 'उ' इति रूपाऽसिद्धेः। अत एव 'ऊकाल' इत्यत्र 'उकाल' इति न कृतम्। तस्मात् 'दिव उदि'तितपरत्वेन भाव्यमानोकारस्याऽपि सवर्णग्राहकत्वात् सिद्धिमिति बोध्यम्।

**व्यञ्जनयोरिति**। व्यञ्जनस्य[4] ह्रस्व ईषत्सदृशो, दीर्घस्तु विसदृश इति भावः। 'ष्यङः सम्प्रसारणमि'ति सूत्रे भाष्ये 'अनन्त्यविकारेऽन्त्य-सदेशस्ये'ति परिभाषा पठिता। 'अन्त्यसदेशाऽनन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवे'ति तदर्थः। 'अनन्त्यविकारे' इति च लिङ्गम्। ('लिङ्ग[5]वती परिभाषे'ति सिद्धान्तात्)। तामर्थत उपनिबध्नाति—**अन्त्यबाध इति**। अन्त्यस्य बाधे=कार्याऽप्राप्तौ, अर्थादनेकाऽनन्त्यस्य प्राप्तावित्यर्थः। 'मिम[6]र्जिषती'त्यादौ वृद्धेः पूर्वमन्तरङ्गत्वाद् द्वित्वे परत्वा-

---

१. 'इति सूत्रेण ओकाररेफयोरप्युपलक्षणम्' इति ख. पाठः।

२. 'उरिति' क. पाठः।

३. 'नपुंसकह्रस्वत्वसवर्णदीर्घत्वयोः प्राप्तयोरन्तरङ्गत्वाद्ध्रस्वत्वे, ततः सवर्ण-दीर्घे' इति ख. पाठः।

४. 'व्यञ्जनस्य हि' ख. पाठः।

५. अयं ख. पाठः क. ग. नास्ति।

६. 'मिमर्जिषतीत्यादौ' इत्यारभ्य 'इति तेषां भावः' इत्यन्तः क. ग. पाठः। ख. नास्ति।

दभ्यासकार्ये, ततोऽभ्यासेकारस्य वृद्धिवारणाय साऽऽवश्यकी। न च वृद्धौ पुनरभ्यासह्रस्वेन सिद्धिः। 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनरप्रवृत्तेः। 'अल्लोपोऽनः' 'सान्तमहत' इत्यत्र च साऽऽवश्यकी। अनेकक्लिष्टकल्पनाऽपेक्षया तस्या एव न्याय्यत्वादिति तेषां भावः।

**अन्त्यसदेशस्येति।** अन्त्येन समानो देशो यस्येत्यर्थः। तत्त्वं चाऽन्त्यवर्ण-तद्वर्णयोरितराऽव्यवधाने भवतीति बोध्यम्। **परस्यैवेति।** 'द्र'शब्दस्यैवेत्यर्थः। **अः सेरिति।** अत्राऽकारेणाऽऽकारस्याऽपि ग्रहणम्। तेन 'अमूदृगि'त्यादिसिद्धिः। तत्र हि 'आ सर्वनाम्न' इति पूर्वपदान्तस्याऽऽत्वम्। **त्यदाद्यत्वेति।** त्यदादीनामत्वविषये इत्यर्थः। **पक्षे इति।** अत्र तन्त्रेणाऽर्थद्वयेऽपि सूत्रतात्पर्यम्। तत्र लक्ष्याऽनुरोधात्क्व चिल्लक्ष्ये आद्य एव, क्व चिदुभयमिति बोध्यम्। अत्र च प्रमाणं वार्त्तिकमिति, तदुपन्यस्यति— **उक्तं चेति।** **अदसोऽद्रेरिति।** अत्र **केचित्** 'अदसोऽद्रेः पृथङ्मुत्वमि'ति पृथग्वाक्यम्। तेन कदा चित्पूर्वस्य। तेनाऽमुद्रयङित्यपीत्याहुः। तन्न। भाष्याऽऽद्यनुक्तत्वात्। 'केचिदन्त्यसदेशस्ये'त्यस्य वैयर्थ्याऽऽपत्तेश्च। **लत्ववदिति।** 'चलीक्लृप्यते'इत्यत्र यथा लत्वं रीगृकारयोर्भवति, तथेत्यर्थः। ('अनन्त्यविकारे' इत्यस्याः प्रयोजनाऽभावेन भाष्ये प्रत्याख्यानात्। 'मिमार्जिषती'त्यादौ वृद्धेः पूर्वमन्तरङ्गत्वाद् द्वित्वे, परत्वादभ्यासकार्ये, ततोऽभ्यासेकारस्यापि वृद्धौ, 'लक्ष्ये लक्षणस्ये'ति न्यायाऽनित्यत्वेन पुनरभ्यासह्रस्वप्रवृत्त्या न दोष इति भावः।

**केचिदिति।** एकप्रयोजनाऽर्थमेव परिभाषास्वीकारस्तेषामिति भावः। 'नैतस्याः सन्ति प्रयोजनानी'ति 'न संप्रसारणे' इति सूत्रभाष्यं त्वनेकप्रयोजनाऽभावपरं, सर्वसंमतप्रयोजनाऽभावपरं[2] वेति बोध्यम्)।

**विष्वग्देवयोः किमिति।** चस्याऽप्युपलक्षणमिदम्। तद्ध्वनयन्नाह— **अश्वाचीति।** ननूत्तरपदाऽधिकारात् 'अञ्च्रूपे उत्तरपदे' इत्यर्थात् 'विश्व-

---

१. अयं ख. पाठः। क. ग. नास्ति

२. 'अभावपरं चेति बोध्यम्' पा०।

गञ्चनमि'त्यादेर्व्यावृत्तौ, व्यर्थमप्रत्ययग्रहणमत आह—**अप्रत्ययेति**।

**तेनेति**। अन्यथा 'अतः कृ'इत्यत्र 'नित्यं समासे' इत्यतोऽनुवृत्ताऽसमासग्रहणेनोत्तरपदाक्षेपेऽपि 'कृधातुरूपे उत्तरपदे' इत्यर्थाऽऽपत्तावयस्कृदित्यादावेव स्यादिति भावः[1]। न च[2] 'वे' इत्येव वक्तव्ये अप्रत्ययग्रहणं व्यर्थम्। स्पष्टाऽर्थत्वात्।

**उद ईत्**। 'अच' इत्यस्याऽपवादः। तस्याऽत्राऽनुवृत्तेः।

**समः समि**। ननु 'समो मिङि'त्येव सूत्र्यतां, 'सम इगि'ति वेति[3] चेत्। परिभाषाज्ञानगौरवपरिहाराय त[4]थोक्तेः।

**तिरसः**। 'अलोपे' इत्यत्र व्याख्यानात्[5] शकन्ध्वादिपररूपेणाऽकारः प्रश्लिष्यते। 'अ'स्य-अलोपो=लोपाऽभावो यस्मिन्नञ्चताविति बहुव्रीहिः। तदाह—**अलुप्ताऽकारेति**। **तिरश्चेति**। श्चुत्वेऽल्लोपस्य स्थानिवत्त्वं तु न। 'पूर्वत्राऽसिद्धीये' इति निषेधात्। **पूजार्थस्येति**। 'पूजारूपाऽर्थस्य गम्यत्वे'

---

१. 'इतोऽग्रे—'न च 'क्वौ' इत्येव वक्तव्येऽप्रत्ययग्रहणं व्यर्थम्। न च विच्सङ्ग्रहाऽर्थम्। अञ्चेः क्विना बाधेन विचोऽनुत्पत्तेरिति चेन्न। सुप्युपपदे क्विना बाधेऽपि केवलाद्विचि विष्वगादिभिः षष्ठीसमासे आदेशार्थं तत्सत्त्वात्। इदमेवाऽप्रत्ययग्रहणं ज्ञापयति-'अन्येभ्योऽपि दृश्यन्ते' इत्यत्र विचोऽपि सम्बन्ध इतीत्याहुः। तन्न। 'समः समि'ति सूत्रे 'किमर्थमञ्चति-नह्यादिषु क्विग्रहणं क्रियते' इति भाष्यदर्शनेन विचि अस्याऽप्रवृत्तेरित्याहुः। 'तत्रैव प्रकरणे अन्तरेणाऽपि क्विब्ग्रहणं क्विबन्त एव भविष्यती'ति भाष्ये क्विब्ग्रहणस्य क्विनुपलक्षणताया आवश्यकत्वेन, विजुपलक्षणत्वेऽपि बाधकाऽभाव इति परे' ख. पाठः।

२. 'न च' इत्यारभ्य 'स्पष्टार्थत्वात्' इत्यन्तः क. ग. पाठः। ख. नास्ति।

३. 'इति चेत्। चिन्त्यमेवैतत्' ख. पाठः।

४. 'तथोक्तमित्यन्ये' ख. पाठः।

५. 'व्याख्यानात्' इति ख. नास्ति।

इति शेषः। अत एव 'अञ्चोऽनपादाने' इति सूत्रे 'अव्याकुलं गच्छती'-त्यर्थके 'अञ्चितं गच्छती'ति प्रयोगे नलोपाऽकरणं सङ्गच्छते। 'अव्याकुल-त्वेन च पूजा गम्यते, न त्वञ्चतेरेव सोऽर्थ' इति **कैयटः**। एवं चाऽञ्चतेः पूजाऽर्थत्वे, पूजाप्रयोजकाऽर्थकत्वे च नलोपो न। एवं 'प्रकृष्टं गच्छती'-त्यर्थक-'प्राञ्च्'शब्दे उपसर्गाणां द्योतकत्वेनाऽञ्चतेः पूजाप्रयोजकप्रकर्षा-ऽर्थत्वान्न भवत्येव नलोपः। यस्तु चिरन्तनेषु रूढः 'प्राञ्च्'शब्दस्तस्य भवत्येव। अत एव 'अन्चेर्गतावि'ति नियामकसूत्रेणैवेष्टसिद्धौ 'नाऽञ्चेः पूजायामि'ति व्यर्थमिति परास्तम्।

निषेधफलमाह—**नलोपेति**। **'प्रान्च'** इति शसादौ नकारश्रवणमपि फलं बोध्यम्। **नलोपाऽभाव इति**। 'क्रुञ्च'धातुविषये 'अनिदितामि'ति-सूत्राऽप्रवृत्तिर्ज्ञाप्यते इति भावः। अत एव 'क्रुन्च्यादि'त्यादावाशीर्लिङ्यपि नलोपो न। [1]परे तु 'परेश्च घाङ्कयोरि'तिसूत्रे भाष्ये 'क्रुञ्चे'त्यत्र 'चोः कुरि'ति कुत्वं प्राप्नोति। सङीति वचनान्न भवति। सनः सकारमारभ्य महिङो ङकारेण 'सङि'ति प्रत्याहारः। एतदपि नाऽस्ति प्रयोजनम्, ऋत्वि-गादिसूत्रे 'क्रुञ्चामि'ति निपातनात्सिद्धमि'त्युक्तम्[2]। तेन ह्यौपदेशिको ञकार इति लभ्यते। अन्यथा नकारस्याऽनुस्वारे, परसवर्णे जाते, तयोर-सिद्धत्वात् 'चोः कुरि'त्यस्य प्राप्तेरभावेन, भाष्याऽसङ्गतिः स्पष्टैव। ([3]एवं च नलोपाऽभावः स्पष्ट एव लभ्यते)। न च ञकारस्यौपदेशिकत्वे ङकारो-च्चारणे एव कर्त्तव्ये, ञकारोच्चारणसामर्थ्यादेव कुत्वस्य वारयितुं शक्यत्वेन, तवाऽपि भाष्याऽसङ्गतिरिति वाच्यम्। 'क्रुङि'त्यादावपि कुत्वाऽनापत्तेः। मम तु निर्देशेन 'च'योगे कुत्वाऽभावनिपातनात् न दोष

---

१. 'अत एव परेश्च' ख. पाठः।

२. 'इत्युक्तं सङ्गच्छते' इति ख. पाठः। पूर्वं 'परे तु' इत्यस्य स्थाने तत्र ख. पुस्तके 'अत एव' इति पाठात्।

३. अयं ख. पाठः। क. ग. नास्ति।

इ[1]त्याहुः। (न[2] च मूलकृताऽपि तथैव कुतो नोक्तमिति वाच्यम्। कुत्वनिवृत्तये निपातनस्याऽऽवश्याऽऽश्रयणीयत्वेन, 'नाञ्चे[3]: पूजायामि'त्यादिमूलक-'नकारजावनुस्वारपञ्चमौ झलि धातुषु'इतिवृद्धोक्तत्यागे मानाऽभावेन चेयमेव सरणिरादृतेति दिक्) । 'क्रुञ्चेर्निरुपपदादेव क्विनि'त्यपि निपातनबललभ्यम्, युजि साहचर्यादित्याहुः ।

षत्वं, **स्कोरितीति** । पाठक्रमादार्थक्रमस्य बलवत्त्वात्सलोपे कृते षत्वमिति बोध्यम् । सलोपं प्रति षत्वस्याऽसिद्धत्वात् । अत एव 'षत्वे' इति सप्तम्यन्तं न कृतम् । **सुवृट्स्विति** । व्रश्चेः क्विपि, 'ग्रहिज्ये'ति सम्प्रसारणे, पूर्वत्वे, श्चुत्वस्याऽसिद्धत्वात्सलोपः । चर्त्वस्याऽसिद्धत्वात् 'ङः सी'-ति वा धुट् ।

**निपात्यन्त इति** । 'अतिप्रत्ययेऽनुवर्त्तमाने'इति शेषः । तत्र पृषद्बृहतोर्गुणाऽभावः गमेर्जगादेशः, महेः कर्मणि प्रत्ययो, निपातनात् ।

**शतृवच्चैषामिति** । 'शतृ'पदेन शतृप्रत्ययाऽन्तं गृह्यते, प्रत्ययग्रहणपरिभाषयेति भावः । अत्र तृतीयान्ताद्वतिः । तेन[3] 'महतीतरे'त्यादौ ततः परस्य ङीप 'उगितश्चे'ति ह्रस्वविकल्पः । न चैवं 'शतुरनुम' इति सूत्रे 'बृहन्महतोरुपसङ्ख्यानमि'ति वार्त्तिकवैयर्थ्याऽऽपत्तिः । पृषदादिव्यावृत्त्यर्थं नियमाऽर्थत्वेन चारितार्थ्यात् । (य[4]त्तु 'षष्ठ्यन्ताद्वतिः । तेन शतृप्रत्ययाऽन्तस्य यत्कार्यं तदतिदिश्यते, न ततः परस्य । तेन 'महतीतरे'त्यादौ 'उगितश्चे'ति ह्रस्वविकल्पो ने'ति । तन्न । वचने उपमेये षष्ठ्यदर्शनादित्याहुः) ।

**अत्वसन्त** । चस्त्वर्थे । 'अतु' इति लुप्तषष्ठीकं पृथक् पदम् । एवं च 'अधातोरि'ति असन्तस्यैव विशेषणम् । व्याख्यानाच्च । तदाह—**धातु-**

---

१. 'इत्याहुः' ख. नास्ति ।

२. अयं ख. पाठः । क. ग. नास्ति ।

३. 'तेन' इत्यारभ्य 'ह्रस्वविकल्पः' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

४. अयं ख. पाठः । क. ग. नास्ति ।

**भिन्नेति**। ईदृशेऽर्थे तात्पर्यग्राहकन्तु 'उगिदचामि'तिसूत्रस्थं 'गोमत्यते-रप्रत्ययः, गोमानि'ति भाष्यम्। अङ्गविशेषणतयाऽर्थसिद्धतदन्तविधेरेवा-ऽनुवादकमन्तग्रहणम्। **परमिति**। न च निरवकाशत्वेन कथं परत्वोक्ति-रिति वाच्यम्। वचनसामर्थ्यादुपधापदाऽसम्बन्धेन चारितार्थ्यादिति भावः।

**नित्यमिति**। कृताऽकृतप्रसङ्गित्वमात्रेणेत्यर्थः। **सामर्थ्यादिति**। नुमि हि अञ्रूपाऽत्वन्तोपधाया अप्रसिद्धेरसञ्जातविरोधन्यायेन नुमः पूर्वं प्रवृत्तेरेव कल्पनादिति भावः।

**धीमानिति**। न चैकाऽनुबन्धकपरिभाषया मतुपोऽत्राऽग्रहणम्। न चाऽसम्भवः। अव्युत्पत्तिपक्षे 'भवतु'शब्दस्य सम्भवात्। सर्वादिगणे ह्यनुनासिकोकारविशिष्टमेव पठ्यते इति वाच्यम्। पकारादेः समुदाया-ऽनुबन्धत्वेऽप्य[1]तो द्व्यनुबन्धकत्वाऽभावात् 'अवयवानां नाऽन्तरीयकतया समुदायोपदेश एव ऋषितात्पर्यमि'त्यर्थस्य 'आदेच उपदेशे' इतिसूत्रस्थ-भाष्यसंमतत्वेन, यदुपदेशप्रयुक्ता यस्येत्संज्ञा, तस्य तदनुबन्धताया एव स्वीकारात्। नन्वत्र धातुत्वात्कथं नुमत आह—**अधातोरिति** त्विति। अत्र यद्वक्तव्यं तदुगिदचामिति सूत्रे एवोक्तम्। क्यच्पक्षेऽल्लोपो न स्थानिवत्। क्वौ लुप्तत्वात्।

ननु 'द्वे' इत्यनुवृत्त्यैव सिद्धे 'उभे'ग्रहणं व्यर्थम्। न च 'द्वे' इत्यस्य विधेयसमर्पकस्य कथमनुवाद्यत्वम्। 'पूर्वोऽभ्यास' इत्यत्र पूर्वशब्दस्य साकाङ्क्षितत्वेन 'द्वे' इत्यस्य तत्राऽनुवाद्यतायाः क्लृप्तत्वात्। 'पूर्व' इति तु नाऽनुवर्त्तते, अ[2]स्वरितत्वात्। योगविभागस्य संज्ञान्तरकरणस्य च वैयर्थ्याऽऽपत्तेरिति चेन्न। 'सहितयोः संज्ञे'त्यर्थलाभाऽर्थं तत्सत्त्वात्। अन्यथा'ब्राह्मणाः शतं भोज्यन्तामि'तिवत्प्रत्येकं वाक्यपरिसमाप्त्या, प्रत्येकं संज्ञाऽऽपत्तेः। तथा हि सति 'नेनिजतो'त्यत्र 'अभ्यस्तानामनिटि अजादौ

---

१. 'समुदायानुबन्धकत्वेऽपि,अतोद्व्यनुबन्धकत्वाऽभावात्' इति ख. ग. पाठः।

२. 'अस्वरितत्वात्' इति क. ग. पाठः। ख नास्ति।

लसार्वधातुके परे आदिरुदात्त' इत्यर्थका'ऽऽभ्यस्तानामादिरि'त्यस्य प्रत्येकं पर्यायेण[1] प्रवृत्तिः स्यात्। 'उभे'ग्रहणात्त्वत्र समुदाये एव वाक्य परिसमाप्तिस्तदाह[2]—**उभे समुदिते इति**। 'समुदायस्य च द्वयोः श्रूयमाणत्वे एव[3] सम्भवात्, द्व्यादिशब्दानामेकाऽपायेऽप्रवृत्तेश्च 'ऐत्संश्नि'-त्यादौ 'अत्र लोप' इत्यभ्यासलोपे ईर्त्स अ झि—इति स्थिते, एकादेशे जुसोऽपवादस्य सम्भावनया पूर्वमन्तिभावाऽप्रवृत्तावेकादेशे कृते, न जुस्। न च यथोद्देशपक्षे पूर्वं समुदाये प्रवृत्तसंज्ञायाः स्थानिवद्भावेनाऽभ्यासलोपेऽपि सुलभतेति वाच्यम्। लक्ष्याऽनुसारेणाऽत्र कार्यकालपक्षस्यैवाऽङ्गीकारात्। 'पूर्वविधा'[4]वित्यत्र पञ्चमीसमासस्याऽप्याश्रयणेनैकादेशस्य स्थानिवत्त्वेन जुसोऽप्रवृत्तेश्च। यत्तु 'अभ्यस्तमि'तिमहासंज्ञाबलात्समुदाये वाक्यपरिसमाप्त्या 'श्रूयमाणयोः सहितयोरेव संज्ञे'त्यर्थसिद्धौ 'उभे'ग्रहणं व्यर्थमिति। तन्न। अक्षरमर्यादया तदर्थाऽलाभात्। अनेकोच्चारणनाशेऽपि तद्विषये 'अभ्यस्तोऽनुवाक' इत्यादिप्रयोगदर्शना[5]-दिति दिक्।

**नाऽभ्यस्ता**। बहुयोगव्यवच्छिन्नोऽपि नुमिहाऽनुवर्त्तते, सामर्थ्यात्। तदाह—**नुम्नेति**। दाञः शतरि, शपः श्लौ 'श्लावि'ति द्वित्वेऽभ्यासह्रस्वत्वम्। 'श्नाभ्यस्तयोरि'त्यालोपे—ददिति।

---

१. 'पर्यायेण वा प्रवृत्तिः स्यात्' इति ख. पाठः।

२. 'समुदायश्च' ख. पाठः।

३. 'एव भवतीति' ख. पाठः।

४. 'पूर्वविधौ' इत्यारभ्य 'अप्रवृत्तेश्च' इत्यन्तः क. ग. पाठः। ख. नास्ति।

५. 'प्रयोगदर्शनात्। न च पञ्चमीसमासाऽऽश्रयणादेकादेशस्य स्थानिवद्भावेन व्यवधानान्न जुसिति वाच्यम्। पञ्चमीसमासस्य 'अचः परस्मिन्नि'ति सूत्रे भाष्ये प्रत्याख्यानात्। किञ्च तदङ्गीकारे 'प्रत्यैषिषुरि'त्यादौ जुसोऽप्रसङ्गः। अत्रत्यं भाष्यन्तु प्रौढ्येति दिक्' इति ख. पाठः।

**जक्षिति**।'जक्ष्' इति पृथक्पदम्। इति आदिर्येषामित्यतद्गुणसंविज्ञानो बहुव्रीहिः। इतिना जक्षिः परामृश्यते। आदिशब्दः पूर्ववृत्तिवाची। तदाह—**षड्धातवोऽन्ये इति। परस्मैपदमिति।** स्पष्टं चेदं 'दीधीवेवीटामि'ति सूत्रे भाष्ये। **गुपिति।** क्विप्यार्द्धधातुके विवक्षिते वैकल्पिकत्वादायाऽभावः। 'गोपायती'ति विग्रहः।

**त्यदादिषु।** आलोचनमिह ज्ञानमात्रम्। तदाह—**अज्ञानार्थादिति।** कञि 'तादृश' इत्यादि रामवत्।

**आ स।** 'दृग्दृशवतुष्वि'ति सूत्रमनुवर्त्तते। अकारादेशे सति हि 'अतो गुणे' इति स्यात्। **तादृगिति।** 'स इवाऽयं=पश्यति=ज्ञानविषयो भवती'-त्यर्थे कर्मकर्त्तर्ययं प्रत्ययः। फलमात्राऽर्थकत्वेऽपि तदनुकूलव्यापाराऽर्थकत्वाऽभावादज्ञानाऽर्थत्वम्। अत्र पक्षे 'कर्मण्युपपदे' इत्यधिकारबाध आपद्यते। भाष्ये तु—तदबाधाय[1] 'तमिवात्मानं पश्यति=दर्शयती'त्यध्यारोपितप्रेषणपक्षे व्युत्पत्तिर्दर्शिता। तत्राऽधिकाऽर्थत्वादज्ञानार्थत्वं बोध्यम्। अनालोचने किम्?। 'तमिवेमं पश्यती'त्यर्थे कर्मण्यण्। 'अज्ञानाऽर्थादि'-त्यस्य च विषयीकरणाऽनुकूलव्यापाराऽर्थकभिन्नादित्यर्थः।

अन्ये तु तादृशादीनां रूढिशब्दत्वादसताऽप्यवयवाऽर्थेन व्युत्पादनमित्यज्ञानाऽर्थादित्यस्य सङ्गतिमाहुः।

**षत्वापवादत्वादिति**। षत्वं जश्त्वस्याऽप्युपलक्षणम्। अत एव **कैयटे** 'षत्वाद्यपवादत्वादि'त्युक्तम्। तादृशादिक्विन्नन्तविषयं लक्षणमचरिताऽर्थमिति तद्भावः। **खकार** इति। अघोषमहाप्राण'श'तुल्यत्वादिति भावः। **कैयटेति**। 'क्विन्प्रत्ययस्य कुरि'ति[2] सूत्रस्थे'त्यादिः। **नगिति**। षडगकाः प्राग्वत्। **नडिति।** कुत्वाऽभावे षत्वे, जश्त्वे च पाक्षिकं चर्त्त्वम्। **नड्भ्यामिति**। 'मस्जिनशोरि'ति नुम् तु न। धातुप्रत्यये तद्विधानात्।

---

१. 'तदबाधाय' इति क. ग. पाठः। ख. नास्ति।

२. 'सूत्रे इति शेषः' ख. इति पाठः।

**स्पृशोऽनु**। अनुदके किम्?। 'उदकस्पर्शः'। निषेधसामर्थ्यादिह क्विबपि न। बहुव्रीह्याश्रयणेन क्विप्यपि कुत्वस्य सत्त्वेन 'अनुदके' इत्यस्य वैयर्थ्याऽऽपत्तेः। धातोरेकाच्त्वात्स्वरे न विशेषः।

**अन्तोदात्तत्वमिति**। नित्त्वादाद्युदात्तत्त्वे प्राप्ते इति बोध्यम्। कुत्वात्पूर्वमिति। कुत्वस्य जश्त्वं प्रत्यसिद्धत्वादिति भावः।

**र्वोरुप**। 'सिपि धातोरि'त्यतो धातोरि'त्यनुवर्त्तते। तच्च र्वाभ्यां विशेष्यते। पिपठिषतेः क्विपि, अतो लोपे, ततः प्रातिपदिकत्वात्सौ, सोर्हल्ङ्यादिलोपे, प्रत्ययलक्षणेन पदान्तत्वाद्रुः। रुत्वेऽल्लोपो न स्थानिवत्। पूर्वत्राऽसिद्धे तन्निषेधात्।

**नुम्विस**। इह 'इण्कोरि'ति वर्त्तते। तत्र व्यवधानेऽप्राप्तावस्याऽऽरम्भः। 'व्यवाय'शब्दस्य प्रत्येकं सम्बन्धात्, 'निंसेः प्रतिषेधो वक्तव्य' इति वार्त्तिकप्रत्याख्यानपरभाष्यप्रामाण्याच्चाऽऽह—**प्रत्येकमिति**[1]।

**व्यवधानेऽपीति**। अपिना'अव्यवधाने'इत्यर्थः। **ष्टुत्वेनेति**। 'वा शरी'तिकृतस्य विसर्गस्थानिकसस्येत्यर्थः। 'आदेशप्रत्यययोरि'ति तु न। 'अपदान्तस्ये'ति निषेधात्। **निंस्वेति**। धातोः सस्य त्वनेन न षत्वम्। 'नुम्विसर्जनीये'त्यस्याऽधिकारत्वेनाऽऽदेशप्रत्ययत्वाऽभावात्।

**नुम्स्थानिकेति**। उपलक्षणत्वे प्रमाणं च 'निंसेः प्रतिषेधो वक्तव्य' इति वार्त्तिकं, व्यवधानाऽऽश्रयेण तत्प्रत्याख्यानपरं भाष्यं च। नुम्स्थानिकत्वांऽशे 'हयरवट्'सूत्रस्थं भाष्यमिति दिक्। **व्याख्यानादिति**। 'असम्भवादि'ति **हरदत्तो**क्तिर्नाऽऽदर्त्तव्या। 'सुहिन्सु' इत्यादौ सम्भवादितिभावः। अत्र सग्रहणेनैव सिद्धे शरि'ति प्रत्याहारग्रहणे फलं चिन्त्यम्।

**संयोगान्तलोप इति**। 'षत्वस्याऽसिद्धत्वादि'ति क्वाचित्कोऽपपाठः। अफलत्वात्। न च 'पूर्वं पूर्वमन्तरङ्गमि'ति पक्षेऽल्लोपस्याऽसिद्धत्वात्कथं

१. इतोऽग्रे—'अत एव शर्त्वादेव सिद्धे विसर्जनीयग्रहणं सार्थकम्। तद्धि प्रत्येकं वाक्यत्रयबोधनायेत्याहुः' इति क. कुण्डलितः पाठः।

संयोगाऽन्तलोपः। बहिर्भूतसुप्‌निमित्तकपदसंज्ञाऽपेक्षत्वेन बह्वपेक्षतयाऽस्यापि बहिरङ्गत्वात्। 'पूर्वमन्तरङ्गमि'त्यस्य पूर्वपूर्वनिमित्तकमन्तरङ्गमित्यर्थस्यैव पूर्वमुक्तत्वाच्च। संयोगाऽऽदिलोपस्य तु न प्रसक्तिः, कत्वस्याऽसिद्धत्वात्। अल्लोपस्य स्थानिवत्त्वाच्च। संयोगान्तलोपविषयेऽकृतव्यूहपरिभाषया पूर्वं सन्निमित्तकषत्वाऽप्राप्ति'रित्यभिमानेनाह—**व्रश्चेति**। **कलोप इति**। पदान्तसंयोगाऽऽदिलोपस्य संयोगाऽन्तलोपाऽपवादत्वादिति भावः।

**तडिति**। तक्ष्णोतेः क्विप्। ण्यन्ताभ्यामिति। न च'परेश्च घाङ्कयोरि'तिसूत्रे 'काष्ठशगेव नाऽस्ति, कुतः काष्टशक्स्थाते'ति भाष्यप्रामाण्यादेतादृशेभ्यः क्विबेव दुर्लभ इति वाच्यम्। 'काष्ठशक्स्थाते'त्यत्र झल्परसंयोगाऽऽदित्वेन लोपमाशङ्क्य तद्भाष्यस्य प्रवृत्तत्वेनाऽणिजन्तविषये एव तदभावाऽङ्गीकारात्। न हि णिजन्ते तत्प्राप्तिरस्ति, णिलोपस्य स्थानिवत्त्वात्।

**तस्य दोष इति**। यत्तु 'क्वौ लुप्तमि'ति स्थानिवत्त्वनिषेधो दुर्वारः। अत एव 'मधुश्चुतमाचष्टे 'मधुगि'तीष्यते' इति 'स्वरितो वे'ति सूत्रस्थकैयटः सङ्गच्छते। अन्यथा णिलोपस्य स्थानिवत्त्वात्संयोगाऽऽदिलोपो दुर्लभः। न च सकारोपदेशसामर्थ्यात्स इति कैयटाऽऽशयः। संयोगाऽन्तलोपेऽपि सस्य रुत्वे 'र्वोरुपधाया' इति दीर्घे, 'मधूरि'ति रूपसिद्ध्यर्थं, 'सन्[2]श्च्योतती'त्यादौ तुगभावार्थं च तस्याऽऽवश्यकत्वा'दिति। तन्न। तस्याऽत्राऽऽश्रयणे दृढतरप्रमाणाऽभावेन, 'न पदान्त'सूत्रे 'तक्षयतेस्तगि'तिकैयटविरोधेन च, तस्य कैयटस्य प्रौढिवादपरत्वात्।

**संयोगान्तलोप एवेति**। यत्तु 'अचः परस्मिन्नि'ति सूत्रे 'अपरविधाविति तु वक्तव्यम्। स्वविधौ स्थानिवद्भावो यथा स्यात्। तेन 'दध्यत्रे'त्यत्र न संयोगान्तलोप' इतिभाष्यमुपादाय 'पूर्वत्राऽसिद्धे' इत्येतदत्र नाऽस्ति,

---

१. 'षत्वाऽप्राप्तेराह' इति ख. पाठः।

२. 'सन् श्च्योततीत्यादौ तुगभावाऽर्थं च' इति क. ग. पाठः। ख. नास्ति।

'तस्य दोष' इत्यत्र संयोगोपलक्षिततलोपोलक्षणाऽर्थत्वा'त्संयोगादि'ग्रहणस्ये' त्युक्तं कैय्यटेन। एवं च संयोगाऽन्तलोपोऽपि दुर्लभ' इति। तन्न। पूर्वपक्ष्याशयवर्णनमात्रपरत्वेन कैय्यटस्य प्रौढिवादपरत्वात्। अत एव'हल्ङ्या'-दिसूत्रे 'रात्सस्ये'त्यत्र तकारप्रश्लेषपक्षे कीर्त्तयतेः कीर्त्त् इत्यत्र संयोगाऽन्तलोपाऽऽपादनपरं भाष्यं सङ्गच्छते।

**संयोगान्तलोपः। पिपगिति।** 'कुत्वस्याऽसिद्धत्वादि'ति क्वाचित्कोऽपपाठः। सनोऽल्लोपस्य स्थानिवद्भावेनाऽपि 'स्कोरि'ति लोपवारणसम्भवात्। **दिधगिति**। 'दादेरि'ति घः 'एकाच' इति भष्भावः।

**विद्वानिति।** विदेः शतुर्वसावदादित्वाच्छपो लुकि शतुर्ङित्त्वाद्गुणाऽभावे, उगित्वान्नुमि, 'सान्ते'ति दीर्घे, संयोगान्तलोपस्याऽसिद्धत्वान्नलोपो न।

**वसोः।** प्रत्ययग्रह[1]णेन तदन्तग्रहणम्। 'भस्ये'त्यधिकृतम्। तदाह—वस्वन्तस्येत्यादि। न चैकानुबन्धकपरिभाषया 'विदेः शतुर्वसुरि'त्यस्यैव ग्रहणं स्यान्न क्वसोरिति वाच्यम्। वसोरुकाराऽनुबन्धकरणस्य सामान्यग्रहणाऽर्थत्वाददोषः। उगित्त्वं तु स्थानिवद्भावेनाऽपि सिद्धम्। ङित्त्ववत्। न च तदनुबन्धकपरिभाषाप्रवृत्त्यर्थमेव तत्स्यात्। निरनुबन्धकत्वेनाऽपि तत्फलसिद्धेः। एतेन 'विदेः शतुर्वसुरि'ति सूत्रे उकार उच्चारणाऽर्थ इत्यपास्तम्। निरनुबन्धकपरिभाषया क्वसुग्रहणाऽनापत्तेरिति सूत्राऽऽशयः।

**विदुष** इति। न च षत्वे सम्प्रसारणपूर्वत्वस्य 'षत्वतुकोरि'त्यसिद्धत्वात्कथं षत्वमिति वाच्यम्। पदान्तपदाद्योरेकाऽऽदेशस्यैवाऽसिद्धत्वात्।

**सेदिवानिति।** 'षद्लृ' इतिधातो'र्भाषायां सदवसे'ति लिटः क्वसौ, द्वित्वे 'अत एकहल्मध्ये' इत्येवाऽभ्यासलोपयो'र्वस्वेकाजाद्घसामि'तीट्।

---

१. 'प्रत्ययग्रहणे तदन्तग्रहणम्' ख. पाठः।

२. 'न प्रवर्त्तते' इत्यारभ्य 'इत्याहुः' इत्यन्तोऽयं ख. पाठः क. कुण्डलितः। अकृतव्यूहपरिभाषाया नागेशैरस्वीकारात्।

**न[२] प्रवर्त्तत इति** । यत्तु 'इट्प्रवृत्तावपि न क्षतिः । वसोः सम्प्रसारणे, 'न्नाऽजानन्तर्ये' इति निषेधाद्यणि सम्प्रसारणाऽसिद्धत्वाऽभावेन पूर्वस्य यणि सम्प्रसारणस्य बहिरङ्गत्वादसिद्धत्वेन, वलि लोपे, 'सेदुष' इत्यस्य सिद्धत्वादि'ति । तन्न । परिभाषाया अन्यार्ऽथमावश्यकत्वे प्रक्रियागौरवकल्पनस्याऽन्याय्यत्वात् । **अकृतेति** । ज्ञापकन्त्वस्याः प्रागुक्तमेवेति दिक् ।

**साहचर्यादिति** । अ[१]न्ये तु महत्यतेः क्विपि महतोऽपि धातुत्वसम्भवः । तस्मात्तत्साहचर्यात्सान्तसंयोगोपधाया अकाररूपाया एव दीर्घ इति, अत्र न दोष इत्याहुः ।

**सुहिनिति** । 'नान्ते'ति दीर्घस्तु संयोगान्तलोपस्याऽसिद्धत्वान्न । 'हिसी'त्यस्येदित्त्वात् 'अनिदितामि'ति नलोपो न । **ध्वदिति** । 'स्रंसु ध्वंसु अवस्रंसने' । क्विप् । अनिदित्त्वान्नलोपः । 'वस्वि'ति दत्वम् ।

**विवक्षिते इति** । तेन 'परमपुमानि'त्यत्र परत्वादसुङि, समासाऽन्तोदात्तत्वं भवदसुङ एवाऽकारस्य भवति । परसप्तम्यान्तु अन्तरङ्गत्वाद्विभक्त्युत्पत्तेः पूर्वमेव 'पुम्'शब्दोकारस्योदात्तत्वे, स्रंसनधर्मणो हलः स्थाने तद्धर्मा अनुदात्त एवाऽसुङ् स्यात् । अत्र च 'उपदेशिवद्वचनं कर्त्तव्यमि'ति भाष्यं मा[३]नम् ।

---

१. 'अन्ये त्वि'त्यरुचिस्तु 'धनूंषी'त्यादौ दीर्घाऽसिद्धया तथा साहचर्यस्य वक्तुमशक्यत्वात्' ।—इति प्राचीनटिप्पणी ।

२. इतोऽग्रे—'न चाङ्गसंज्ञाया विधानप्रतिबद्धतयाऽङ्गाधिकारे विवक्षितसप्तमी वक्तुमशक्येति वाच्यम् । 'अङ्गस्ये' त्यस्याऽङ्गत्वयोग्यस्ये'त्यर्थेनाऽक्षतेः' इति ख. पाठः ।

३. 'भाष्यं मानम् । 'यदि त्वसुङि[1] उकारस्याऽन्तत्वविघातादकृतव्यूहपरिभाषया पूर्वं स्वराऽप्रवृत्तिः, पश्चाच्च जायमानोऽसुङ एव भविष्यति, न च बहिरङ्गतयाऽसुङोऽसिद्धत्वान्नाऽन्त्यत्वविघातः, अकृतव्यूहपरिभाषाविषये तदप्रवृत्तेरुक्तत्वादि'त्युच्यते, तदा परसप्तमीपक्षोऽपि सूपपादः ।

---

1. 'यदि त्वग्रेऽसुङि' इति ख. पाठः ।

अकृत[1]व्यूहपरिभाषा तु नास्त्येवेति तद्भावः। उणादीनामव्युत्पन्नत्वेन पूर्वमन्तरङ्गत्वात्फिट्स्वरे, ततो जायमानोऽसुङ्नुदात्त एवेति 'पुमांसमि'-त्यादावुकारोदात्तत्वसिद्धिः। व्युत्पन्नत्वेऽप्यन्तरङ्गत्वात्प्रत्ययस्वरे इत्यादि बोध्यम्।

म्सुनो नित्त्वं तु स्पष्टार्थमेव। पुमः फिट्स्वरस्तु न। तस्याऽखण्ड एव प्रवृत्तेः। सखण्डे तत्प्रवृत्तौ फलाऽभावात्।

**उच्चारणार्थ** इति। न त्वित्संज्ञाप्रयुक्तलोपाऽतिरिक्तकार्याऽर्थ इत्यर्थः। बहुपुंसीति। विभक्तौ लिङ्गविशिष्टाऽग्रहणान्नाऽसुङ्। ननु 'सर्वनामस्थाने' इत्यस्य विवक्षितसप्तमीत्वेन, परत्वादन्तरङ्गत्वाच्च ङीपं बाधित्वाऽसुङि, ङीपि, 'बहुपुमसी'ति रूपाऽऽपत्तिरिति चेन्न। सङ्ख्याकारकप्रतिपादनेच्छायां सर्वनामस्थानविवक्षा। सा च न ङीबुत्पत्तेः पूर्वम्। स्वार्थद्रव्य-लिङ्गसङ्ख्याकारकाणां क्रमिकबोधस्यैव भाष्यादौ प्रतिपादनात्। एवं च न कश्चिद्दोषः।

---

'उपदेशिवद्वचनमि'ति भाष्यन्तु तत्परिभाषाऽभावमाश्रित्य प्रवृत्तमिति बोध्यम्। न चैवं 'पुमानि'त्यादावपि पूर्वमसुङि' प्रातिपदिकस्वरेण सतिशिष्टेन प्रत्ययस्वरस्य बाधादसुङ उदात्तत्वं स्यात्, इष्यते तूकारस्य, 'पुमांसं परिपातिव'त्यादौ तथा दर्शनादिति वाच्यम्। प्रकृतिप्रत्ययविभाग-शून्येष्वेव तत्प्रवृत्तेः। अत एव चतेरुरनो निरकरणं [1]चरितार्थम्। अन्यथा 'न्नः संख्याया' इत्याद्युदात्तत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। अस्तु वा सखण्डेष्वपि प्रवृत्तिस्तथापि 'पुमानि'त्यादौ नित्त्वसामर्थ्यादेवाऽप्रवृत्तिरि-त्याहुः। वस्तुतस्तु विवक्षितसप्तम्येवोचिता, अकृतव्यूहपरिभाषाया असत्त्वादिति दिक्' इति क. कुण्डलितः ख. पाठः।

१. 'अतव्यूहपरिभाषा तु' इत्यारभ्य 'फलाऽभावात्' इत्यन्तः क. ग. पाठः।

---

1. 'चरितार्थम्। यद्यपि म्सुनो नित्त्वसामर्थ्येन क्वचित्सखण्डेष्वपि प्रवृत्ति-र्ज्ञाप्यते तथापि' इति ख. पाठः।

**पून इति** । क्वचित्तु 'पातेर्डुम्सुन्नि'ति पाठः । 'स्त्रियामि'ति सूत्रे भाष्यकैयटयोस्तु 'सूतेः सस्य षः, म्सुन्प्रत्ययो, बाहुलकाद्ध्रस्व' इत्युक्तम् ।

**पुमानिति** । 'सान्ते'ति दीर्घः । **हे पुमन्निति** । 'असम्बुद्धावि'त्युक्तेर्न दीर्घः । **पुंस्विति** । संयोगाऽन्तलोपेऽनुस्वारः । **उशनेति** । वशेः कनसिः । 'ग्रहिज्ये'ति सम्प्रसारणम् । **अस्य सम्बुद्धाविति** । एतच्च वृत्तौ वाचनिकं पठितम् । [२]वश्धातौ **माधवस्तु 'सम्बोधने तूशनसस्त्रिरूपं सान्तं, तथा नान्तमथाऽप्यदन्तम्'** इति श्लोकवार्त्तिक'मित्याह । भाष्याऽनुक्तत्वादिदमप्रमाणमेव । 'हे उशन' इत्येव रूपं साध्वि'ति **प्रमाणिकाः । उशना**=शुक्रः । **अनेहा**=कालः । 'नञि हन एह चे'ति,-असुनिति (—अधिका[३]रे) हन एहादेशः, असुन् च ।

**सुव इति** । ननु विशिष्टस्याऽसन्तत्वाद्धातुभिन्नत्वाच्च 'अत्वसन्तस्ये'ति दीर्घः प्राप्नोति । न च 'धातो र्ने'ति प्रसज्यप्रतिषेधः । वाक्यभेदाऽसमर्थसमासाऽऽपत्तेरि॑ति चेन्न । 'धातु'शब्देन तदवयवलक्षणया, धात्ववयवभिन्नाऽसन्तस्ये'त्यर्थात् । सौत्रत्वाद्वृत्तिः । अत एव 'पिण्डग्र' इत्यादि भाष्योदाहृतं सङ्गच्छते ।

---

१. इतोऽग्रे—अन्ये तु 'अनङ् सावि'ति सूत्रे 'सोर्डे'त्येव सिद्धेऽनङ्विधानं 'क्वचिदनङः[1] श्रवणमि'ति ज्ञापनार्थम्, तेनेदं सिद्धम् । विकल्पाऽशस्तु वाचनिक एवेति । तन्न । लाघवाऽभावात् । ङित्वसामर्थ्याट्टिलोपकल्पने [2]गौरवाच्च । 'ऋदुशने'त्यत्राऽप्यस्यैवाऽनुवृत्त्यापत्तौ 'उशने'त्यत्र दीर्घाऽऽपत्तेश्च । 'अङ्गवृत्त'परिभाषया समाधानं त्वगतिकगतिः'—इति क. कुण्डलितः ख. पाठः ।

२. 'वश्धातौ' इत्यारभ्य 'इत्याह' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

३. 'अधिकारे' इति अस्माभिर्योजितं, तत्त्वबोधिन्यां तथा दर्शनात् ।

---

1. 'क्वचिदनङ एव' इति ख. पाठः ।

2. 'प्रक्रियागौरवाच्च' इति ख. पाठः ।

**अदस इति—षष्ठी।** सुलोपसन्नियोगशिष्टत्वादयं सावेव। 'तदोः सः सावि'त्यतः 'सावि'त्यनुवृत्तेश्च। औत्वं[1] त्यदाद्यत्वाऽपवादः।

ननु[2] सोरेवौत्वं विधीयताम्, त्यदाद्यत्वेनाऽसाविति रूपसिद्धेः, किं सुलोपेनेति चेन्न। 'असकौ स्त्री'त्यत्र त्यदाद्यत्वे, टापि, 'प्रत्ययस्थादि'तीत्वप्रसङ्गात्। न च 'आ आबि'त्याकारप्रश्लेषान्नेत्त्वम्। वर्णादाङ्गस्य बलीयस्त्वेन वृद्धेः पूर्वं दुर्वारत्वात्। न च वृद्धावाकाररूपत्वस्य विनाशोन्मुखत्वादकृतव्यूहपरिभाषयेत्त्वं नेति वाच्यम्। अकृतव्यूहपरिभाषाया अभावात्। अत एव 'प्राप्तजीविक'इत्यादिसिद्धिः। 'कारिके' 'हारिके' इत्यादावपीत्त्वाऽनापत्तेश्च। एवं च तत्राऽऽकारकप्रश्लेषो विफलो, दुष्टश्चेति बोध्यम्। एतेन 'त्यदादीनाम' इत्यादौ 'विभक्तावि'ति विषयसप्तमीति मन्दोक्तमपास्तम्। तथा हि सति विभक्त्युत्पत्तेः पूर्वं त्यदाद्यत्वे, टापि, सौ, 'अदस' इति अन्त्यस्यौत्वे, स्थानिवत्त्वेनाऽऽप्त्वादित्त्वं दुर्वारमेव स्यात्। न चेष्टापत्तिः। प्रकृतसूत्रस्थभाष्यादिविरोधात्। विना प्रमाणं निर्दिष्टपरिभाषाबाधाऽभावेन विषयसप्तम्या वक्तुमशक्यत्वाच्च। यत्तु 'सुलोपाऽभावे 'असौ स्त्री' त्यत्र 'औङ आप' इति शी स्यादि'ति। तन्न। द्विवचनौकारयोरेव 'औङि'ति संज्ञायाः पूर्वाऽऽचार्यैः कृतत्वात्।

न चैवमपि 'सोर्डौ' इत्येव सूत्रमस्त्विति चेन्न। 'आसावि'त्यत्र टिलोपे कृते, नित्यत्वात्सत्वं बाधित्वा, त्यदाद्यत्वे 'असावि'त्यसिद्धेरिति दिक्।

[3]**असुक** इति। 'अमुकः' 'अमुकौ' 'अमुकशर्मे' त्यादावव्युत्पन्नोऽदःशब्दपर्यायोऽमुकशब्द इत्याहुः।

---

१. 'औत्वं त्यदाद्यत्वाऽपवादः' इति क. ग. पाठः।

२. 'ननु इत्यारभ्य 'कृतत्वात्' इत्यन्तः ख. पाठः क. कुण्डलितः, मनोरमाशब्दरत्नस्थत्वात्।

३. 'असुक इति। 'अमुकः' 'अमुकौ' 'अमुकशर्मे'त्याद्यसाध्वेव। 'असुक' 'असुका' 'अदकःशर्मे'त्याद्येवोचितम्। क्व चित्साान्तत्वेन मुत्वाऽप्राप्तेः,

**एत ईत्** । परिभाषिकबहुवचनग्रहणे 'अमी' इति न सिद्ध्येत्, एकारस्य बहुवचनपरत्वाऽभावादत आह–**बह्वर्थोक्ताविति । पश्चादुत्वेति** । इदं च मध्यमणिन्यायेन पूर्वपराऽन्वयि । 'उत्वे'त्युपलक्षणम्—ईत्वस्याऽपि ।

ननु मुत्वस्याऽसिद्धत्वात्कथं 'ना'भावः । किञ्चेनादेश-गुणयोरापत्तिरत आह–**नमुने** इति । **कर्त्तव्ये कृते चे**ति । एवं च 'ने' इति विषयसप्तमीति भावः । 'मु' इति समाहारद्वन्द्वः । 'कृते चे'त्युक्तेर्मुत्वे कृते 'सुपि चे'ति दीर्घो न । केचि[1]त्तु–'अधुने'तिवत् 'अमुने'ति वक्तव्ये 'न मु ने' इत्युक्ति 'र्ने'ति योगविभागाऽर्था । तेन 'राम' इत्यादिसिद्धिः । अन्यथा रोरसिद्धतया उकारस्येत्संज्ञालोपौ न स्याताम् । न चाऽनुनासिकनिर्देशसामर्थ्यम् । 'देव रुही'त्यादौ 'हशि चे'त्यस्य व्यावृत्तये 'अतो रोरि'त्यत्राऽप्यनुनासिकस्यैव निर्देशेन, तत्र चारितार्थ्यात् । सामर्थ्याच्चोत्वं सर्वाऽऽदेशो भविष्यति । एवं च 'स्थानिवत्'सूत्रस्याऽपि प्रवृत्तौ पदत्वाद्विसर्गो लभ्यते । अत एव 'प्रत्यय' इत्यादिनिर्देशाः सङ्गच्छन्ते इत्याहुः ।

**अमीभिरि**ति । 'नेदमदसोरि'त्यैस् ।

इह कान्ता नोक्ताः । 'परेश्च घाङ्कयोरि'तिसूत्रस्थ'काष्ठशगेव नास्ती'ति भाष्येण कान्तेभ्यः क्विब्विचोरनुत्पत्तेः । 'उख''उखी'त्येवमादिभ्यः क्विपि खान्तादय ऊह्या यथा[3]ऽभिधानमित्याहुः ।

**इति हलन्ताः पुंल्लिङ्गाः ।**

●

---

क्वचित्सत्वेन बाधादिति प्राञ्चः ।

'अमुकः' 'अमुकी' 'अमुकशर्मे'त्यादावव्युत्पन्नोऽदःशब्दपर्यायोऽमुकशब्द' इत्यन्ये' इति क. कुण्डलितः ख. पाठः ।

१. 'केचित्तु' इति ख. नास्ति ।

२. इत्याहुः' इति ख. नास्ति । क. ग. पाठः ।

३. 'यथाऽभिधानम्' इति क. ग. पाठः । ख. नास्ति ।

## अथ हलन्तस्त्रीलिङ्गप्रकरणम् ।

'अलोऽन्त्यस्ये'त्यनेन लब्धाऽर्थमाह—**हस्येति ।** 'झलो झली'त्यतो झली'ति, 'पदस्ये'ति, 'स्कोरि'त्यतोऽन्त इति चाऽनुवर्त्तते । तदाह—**झलीत्यादि** । 'झलि परे, पदान्ते च विद्यमानस्ये'त्यर्थः । (ननु[1] 'नहो ध' इत्यत्र 'द' एव कुतो न कृतः । न चेदं ढादिवद्भष्भावाऽर्थम् । तस्य नहौ विषयाऽभावादिति चेन्न । 'नद्धमि'त्यत्र रदाभ्यामि'ति नत्वाऽऽपत्तेः, 'झषस्तथोरि'ति धत्वाऽनापत्तेश्च । एतेन 'सन्निपातपरिभाषया नत्ववारणं सुशकमि'त्यपास्तम् । न च 'झषस्तथोरि'ति धत्वे सन्निपातपरिभाषया जश्त्वाऽनापत्तिः । तस्या अनित्यत्वात् । अत एव 'पास्पर्द्धी'त्यादौ जश्त्वं **माधवादिभि**रुक्तम् ।

उपपूर्वात् 'णह बन्धने' इत्यस्मात्सम्पदादित्वाद्भावे क्विप् । 'नहिवृती'-ति पूर्वपदस्य दीर्घः । सोर्हल्ङ्याादिलोपे, धत्व-जश्त्व-चर्त्वानि[2] । **दलोपषत्वे इति ।** पूर्वपदान्तस्य लोपः, धातोः सस्य षत्वम् । 'आदेशप्रत्यययोरि'-ति तु न । 'सात्पदाद्योरि'ति निषेधात् । 'पदादादिरि'तिपक्षस्याऽपि भाष्ये स्थितत्वात् । **हस्य ध इति ।** इदं च **कैयटा**दिमतेनोक्तम् । तन्मते षत्वस्येव ढत्वस्याऽपि कुत्वेन बाधात् । स्वमते तु ढ-ड-ग-का इति बोध्यम् ।

**द्यौरिति ।** 'दिव औ'दित्यौत्त्वम् । यण् । 'नाऽजानन्तर्ये' इति नियेधान्नौत्त्वम**सिद्धम् । गीरित्यादि ।** 'गृ' 'पृ'-आभ्यां क्विप् । 'ॠत इदि'ति, 'उदोष्ठ्ये'ति चेत्त्वोत्त्वे । 'र्वोरुपधाया' इति दीर्घः । **चतस्र इति** । परत्वादामं बाधित्वा, चतस्रादेशे, 'सकृद्गतावि'ति न्यायात्पुनराम्न । स्पष्टं चेदं स्थानिवत्सूत्रे भाष्ये । **चतसृणामिति ।** 'न तिसृ'ति दीर्घनिषेधः ।

---

१. अयं ख. पाठः क. कुण्डलितः ।

२. 'अत्र चर्त्वादीति पाठ उचित' इति चिदस्थिमाला ।

**सर्वावदिति ।** सर्वाशब्दवदित्यर्थः । यत्तु 'सर्वनाम्नो वृत्तिमात्रे'इति-पुंवद्भावोऽपेक्षित' इति । तन्न । अस्य शब्दपरत्वेन कदाऽपि सर्वनामत्वाऽभा-वेन, पुंवद्भावाऽप्राप्तेः । 'मात्र'ग्रहणेन हि 'यद्वृत्तिघटकस्य सर्वनाम्नः पुंवद्भावस्तस्य वृत्तेः पूर्वं सर्वनामत्वे सति, वृत्तौ तत्त्वाऽभावेऽपि, 'पुंवद्भाव' इत्येतावन्मात्रं बोध्यते । अत एव 'सर्वा नाम का चित्तत्पुत्रः 'सर्वापुत्र' इत्यादौ न पुंवद्भाव' इति स्पष्ट**माकरे ।**

**यः सौ ।** पुंसि अया बाधात्, क्लीबे सोर्लुप्तत्वात्, स्त्रियामिदम् । **वागिति ।** वचेः 'क्विब्वची'त्यादिना क्विप्, दीर्घोऽसंप्रसारणं च ।

**अपो भि ।** 'ऋदोरि'त्यप्प्रत्ययस्तु न गृह्यते, 'अद्भिः संस्कृतमि'ति लिङ्गात् । 'अच उपसर्गात्त' इत्यतः 'त' इत्यनुवर्त्तते । **दिगिति ।** 'दिश अतिसर्जने' । ऋत्विगा'दिना क्विन्[1] । ष-ड-ग-काः प्राग्वत् । **त्विडिति ।** 'त्विष दीप्तावि'त्यस्मात्क्विप् । जश्त्वचर्त्वे । **जुषते इति ।** 'जुषी प्रीतिसेव-नयोः' । क्विप् । सहस्य सभावः । सजूः मित्रम् । **आशिषाविति ।** 'आशासः क्वावि'त्युपधाया इत्वम्, 'शासिवसी'ति षत्वम् । **अमूभिरिति ।** अदन्त-त्वाऽभावादेत्त्वाऽभावेन 'एत इदि'त्यस्याऽभावे, मूत्वमेवेत्यलम् ।

अत्रेदं बोध्यम्—'सुष्ठु अनड्वाहो यस्यामि'ति विग्रहे 'स्वनड्वानि'-त्येव । गौराऽऽदिङीष् तु न, अनुपसर्जनाऽधिकारादिति ।

**॥ इति हलन्ताः स्त्रीलिङ्गाः ॥**

●

---

१. 'क्विप्' इत्येव सर्वशेखरपुस्तकेषु पाठः । स चाऽपपाठः । ऋत्विगादिना क्विन एव विधानात् । 'क्विन्' इत्युचितः पाठ इति च विषमी टीका ।

## अथ हलन्तनपुंसकलिङ्गप्रकरणम् ।

**दत्वमिति** । 'वसुस्रंस्वि'त्यस्य पदाऽधिकारस्थत्वेन तदन्तत्वेऽपि दत्वम् । एवमङ्गाऽधिकारस्थत्वात् आमपीति ध्येयम् । **पूर्वपदस्येवेति** । प्रत्ययलक्षणेनेति भावः । अत एव राजपुरुषादौ नलोपाऽऽदिकम् ।

**उत्तरेति** । तथा च 'विमलदिवि'इत्यादावुत्त्वं स्यादिति भावः ।

**उत्तरपदत्वे चेति** । 'उत्तर'शब्देनोत्तरपदं लक्ष्यते। 'उत्तरपदशब्दश्च समासचरमाऽवयवे रूढः । तेन'समासोत्तराऽवयवस्य पदत्वे=पदत्वप्रयुक्ते कार्ये कर्त्तव्ये, लुमता लुप्ते प्रत्ययलक्षणं न । पदाऽऽदिविधौ त्वयं निषेधो ने'त्यर्थः । तेन 'परमवाचे'त्यादौ न कुत्वाऽऽदिकम् । 'दधिसेचावि'त्यादौ च 'सात्पदाद्योरि'ति षत्वनिषेधः । पदाऽऽदिविधिश्च प्रतिपदोक्तत्वात् 'सात्पदाद्योरि'त्येव गृह्यते । तेन 'परमबुधावि'त्यादौ भष्भावो न ।

'उत्तरपदादिः' 'कर्णो वर्णलक्षणादि'त्यादौ तु न दोषः । 'उत्तरपद'-शब्दस्य समासचरमाऽवयमात्रे रूढेः । न चैवं 'बहुवाचावि'त्यादौ कुत्वाऽऽदिकं स्यादिति वाच्यम् । 'बहुच्पूर्वस्य ने'तिवचनाऽन्तरेणैव समाधानात् ।

अत्राऽपि 'अपदादिविधावि'त्यनुवर्त्तते । तेन 'बहुसेचावि'त्यादौ षत्व-निषेधसिद्धिः । अयं निषेधः 'अपदादिविधावि'तिपर्युदासात्पदान्तत्वनिमित्तके विधावेव । तेन ङमुडादिविषये नाऽस्य प्रवृत्तिः । पदान्तत्वनिमित्तकत्वं च पदान्तोद्देश्यकत्वरूपम् ।

उत्तरपदस्य कार्यित्व एव च प्रवृत्तिः । तेन 'माषकुम्भवापेने'त्यादौ 'पदव्यवायेऽपी'ति णत्वनिषेधसिद्धिः (न[1] चैवमपि 'अधोगलेटावि'त्यादौ-'आख्यातमाख्यातेने'ति समासे, ढत्वाऽऽदिकं न स्यादिति वाच्यम् । तिङो लुका लुप्तत्वाऽभावात् । लुका लुप्ते एवाऽऽस्य प्रवृत्तिरिति स्पष्टं भाष्ये 'न लुमते'ति सूत्रे) ।

---

१. अयं पाठः क. ग. नास्ति ।

नन्वेवमपि 'पूर्वदण्डिप्रिय' इत्यादाववान्तरतत्पुरुषे, दण्डिशब्दस्योत्तरपदत्वेन, प्रत्ययलक्षणनिषेधात्पदत्वाऽभावे, नलोपो न स्यादिति चेन्न। 'उत्तरपद'शब्देन मध्यमपदत्वाऽनाक्रान्तोत्तरपदस्यैव ग्रहणम्, प्रत्याख्यानभाष्यप्रामाण्यादित्याहुः ।

नन्वेवमपि 'काश्यपेन प्रोक्तमधीते' इत्यस्मिन्नर्थे 'काश्यपकौशिकाभ्यामृषिभ्यां णिनिरि'ति प्रोक्ताऽर्थणिन्यन्तसुबन्तादुत्पन्नस्याऽणो लुकि, 'काश्यपिनावि'त्यादौ उत्तरपदत्वाऽभावात्पदत्वनिषेधाऽनापत्तौ, नलोपाऽऽपत्तिरिति चेन्न। प्रोक्ताऽर्थकणिन्यन्तेभ्यस्तद्विषयताबलात्सुबुत्पत्तेः पूर्वमेवाऽध्येतृप्रत्ययोत्पत्तेरदोष[1]ादिति तत्त्वम् ।

भाष्ये त्विदं प्रत्याख्यातम्। तथा हि–भसंज्ञासूत्रे 'सुप्तिङन्तमि'त्यतः 'सुबन्तमि'त्यनुवर्त्य, 'यजादावसर्वनामस्थाने परे यस्मात्प्रत्ययविधिस्तथाभूतः पूर्वः समुदायो भसञ्ज्ञो भवति, सुबन्तं यजाद्यसर्वनाममस्थानपरं यद्यस्ति, तर्हि तदपि भसंज्ञं भवती'त्यर्था'त्सुवाचे'त्यादौ न कुत्वम् ।

अत्र समुदायस्य संज्ञा प्रधानशिष्टा, अवयवस्य त्वन्वाचयशिष्टा। तेन 'राज्ञ' इत्यादौ सु[2]बन्ताऽभावेऽपि भवति ।

एवं 'स्वादिष्वि'ति योगं विभज्य, तेन सामान्यतः 'स्वादिषु पूर्वं पदमि'ति पदसंज्ञां विधाय, 'अ सर्वनामस्थाने' इत्यत्राऽपि 'सुबन्तमि'त्यनुवर्त्य, 'यची'त्यपकृष्य 'असर्वनामस्थाने'इति प्रसज्यप्रतिषेधमाश्रित्य, 'यजादौ सर्वनामस्थाने परतः पूर्वं पदं न, तत्परं सुबन्तं च पदं ने'त्यर्थः। सुबन्तञ्च यजादिप्रत्ययाऽऽव्यवहि[3]तमेव गृह्यते। तेन 'राजपुरुषावि'त्यादौ पूर्वपदे नलोपाऽऽदिसिद्धिः। (तत्र प्रसज्यप्रतिषेधसामर्थ्यात्'अनन्तरस्ये'ति-

---

१. 'इति तत्त्वम्' इति ख. नास्ति ।

२. 'अवयवसुबन्ताऽभावेऽपि भवति' ख. पाठः ।

३. ख, पाठोऽयं, क. ग. नास्ति ।

न्यायं बाधित्वा पदत्वद्वयस्याऽपि निषेधः) । तत्र समुदायस्य 'स्वादिष्वि'ति प्राप्ता । अवयवस्य 'सुबन्तमि'ति प्राप्ता । तेन 'सुवाचावि'त्यादौ न कुत्वम् । नन्वेवं श्रूयमाणे सौ पूर्वस्य पदसंज्ञा स्यादिति चेत् । इष्टाऽऽपत्तेः[1] ।

'दधिसेचावि'त्यादौ तु 'पदात् आदिः पदादिरि'ति व्याख्यानात्षत्वनिषेधसिद्धिः । अत एव सोपपदात्सिच्धातोर्विचि, गतिकारकोपपदानामि'ति सुबुत्पत्तेः पूर्वं समासेऽपि, 'दधिसेगि'त्यादौ षत्वनिषेधसिद्धिः । 'पदस्याऽऽदेरि'ति व्याख्याने तु निषेधाऽप्राप्तेः षत्वं दुर्वारं स्यात् ।

**कैयटस्तु** 'सोपपदात्सिचेर्बिजेव नाऽस्त्यनभिधानादि'त्याह । (अन्ये[2] तु प्रकृते सुबत्पत्तेः पूर्वं समास एव न । 'गतिकारकोपपदानामि'त्यस्याऽनित्यत्वात् । अत एव 'अम्बाम्बे'ति सूत्रे गवाऽऽदिग्रहणं चरितार्थम् । अन्यथा 'गोष्ठ' इत्यादौ 'सुपि स्थ' इति के, 'गतिकारकोपपदानामि'ति सुबुत्पत्तेः पूर्वं समासे, 'सात्पदाद्योरि'ति निषेधाऽप्राप्तौ 'आदेशप्रत्यययोरि'त्यनेन सिद्धौ, तद्वैयर्थ्यं स्पष्टमेव । तत्र हि 'स्थ' इति 'सुपि स्थ' इतिविहितकप्रत्ययान्ताऽनुकरणम् ।

'बहुसेचावि'त्याद्यर्थं 'बहुच्पूर्वस्य षत्वं ने'ति वचनमेव कर्त्तव्यम् । वार्त्तिकमतेऽपि 'बहुच्पूर्वस्य चाऽपदादिविधौ ने'त्यस्याऽवश्यकत्वादिति । (वस्तु[3] तस्तु 'पदादि'ति पञ्चमीनिर्देशेनैव सिद्धे 'आदि'ग्रहणेन बहुग्रहणं भाष्यनये निमातव्यम्) ।

अ[4]यमपि प्रकारो यत्रोत्तरपदस्य कार्यित्वं, तद्विषय एव, पदान्तत्वप्रयुक्तकार्ये एव च । योगविभागस्येष्टसिद्ध्यर्थत्वात् । अत एव 'सुगणी-

---

१. 'इष्टापत्तिः' ख. पाठः ।

२. अयं क. कुण्डलितः ख. पाठः ।

३. अयं ख. पाठः क. ग. नास्ति ।

४. 'अयमपि प्रकारो यस्य पदत्वप्रयुक्तकार्यप्राप्तिस्तद्विषय एव' इति ख. पाठ ।

शावि'त्यादौ समासे ईशस्य पदत्वादजादेः पदस्य विधीयमानो ङमुट् भवत्येव । तस्य[1] पदान्तत्वप्रयुक्तकार्यत्वाऽभावात् । 'परमदण्डिने'त्यादौ तु विभक्तेः पदत्वाऽभावान्नेति बोध्यम् ।

न चैवं 'रामेष्वि'त्यादौ षत्वाऽनापत्तिः, 'स्वादिष्वि'त्यनेन पूर्वस्य पदसंज्ञकत्वादिति वाच्यम् । 'साति'ग्रहणेन 'स्वादिष्वि'ति यस्य पदसंज्ञा, तदुत्तरस्य षत्वनिषेधो ने'ति ज्ञापनात् । अत एव 'राजपुरुषेष्वि'त्यादौ उत्तरपदमाश्रित्याऽपि षत्वनिषेधो न । भाष्योक्त[2]रीत्या तस्याऽपि 'स्वादिष्वि'ति पदत्वाच्च । स्पष्टं चेदं 'न लुमताङ्गस्ये'ति सूत्रे भाष्ये ।

**कादेशो ने**ति । अत एव इदमूशब्दे 'यः सावि'ति न ।

**वक्तव्य** इति । अयं च सामर्थ्याल्लुका लुप्तेऽपि भवति ।

एवं च[3]ाऽम्येवाऽयम् । औशसादिष्वेनेनैव सिद्धेः । न च तत्राऽपि परत्वात्त्यदाद्यत्वे, तत एनदादेशे, 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनरत्वाऽप्रवृत्तौ विशेषोऽस्त्येवेति वाच्यम्[4] । अत्वस्याऽङ्गसञ्ज्ञासापेक्षत्वेन बहिरङ्गतयाऽन्तरङ्गत्वादेनदादेशस्यैव पूर्वं प्रवृत्तः । अत एव सूत्रे एनतं विधाय तकारोच्चारणसामर्थ्येन च क्लृप्तबाधाऽप्रधानाऽतिदेशनिषेधस्य 'न लुमते'त्यस्य बाधेन नपुंसके लुक्यपि प्रवृत्तिं स्वीकृत्य, वार्त्तिकप्रत्याख्यानं भाष्योक्तं सङ्गच्छते । न चैवम् 'एतच्छ्रित' इत्यत्राऽपि तदापत्तिः, तादृशप्रयोगाऽनभिधानात् । यत्तु 'अन्वादेशस्य विधानगर्भत्वेन, 'कार्याऽन्तरविध्युद्देश्यसमर्पकयोः पुनरुपात्तेदमेतदोरि'त्यर्थेनाऽत्राऽन्वादेशस्यैवाऽभावः,

---

१. 'तस्य पदान्तत्वप्रयुक्तकार्यत्वाऽभावात्' इति क. ग. पाठः । ख. नास्ति ।

२. 'उक्तरीत्या' ख. पाठः ।

३. 'एवञ्च' इत्यारभ्य 'विधान पदार्थत्वात्' इत्यन्तः क. कुण्डलितः ख. पाठः । ग. नास्ति ।

४. 'इति वाच्यम् । । अपवादत्वादेनदादेशस्यैव पूर्वं प्रवृत्तेः' इति ख. पाठः ।

समासे उद्देश्यविधेयभावेनाऽनन्वयादि'ति । तन्न । अत्रैनाऽऽदेशाऽऽपादनपर-भाष्यप्रामाण्येन तत्राऽज्ञातज्ञापनस्यैव विधानपदार्थत्वात्[1] ।

**ब्रह्मणी** इति । 'न संयोगादि'ति निषेधादल्लोपो न । प्राचीनकृतस्य 'अहन्नि'त्युपन्यासस्याऽशुद्धतां द्योतयितुमाह—**अहर्भातीति** । तस्मिन्हि 'अहो भाती'ति स्यादिति भावः । **नलोपे** प्राप्ते इति । न च न[2]लोपेऽकारस्य रौ, रे वा विशेषाऽभावेनान्यतरेणैवोपपत्तावुभयविधानसामर्थ्यादेव लोपो नेति वाच्यम् । सम्बुद्धौ नलोपनिषेधेन 'अहर्गच्छे'त्यादावुत्वाऽभावेन, 'दीर्घाहो निदाघ' इत्यादावुत्वसम्पादनेन, 'दीर्घाहा निदाघ' इत्यादौ यत्व-सम्पादनेन[3] च चारितार्थ्यात् । न चाऽहन्नित्यत्र लोपेन नकारान्तरं प्रश्लिष्य, 'नाऽन्तस्याऽहन्शब्दस्ये'ति व्याख्यानसामर्थ्येन नलोपो नेति वाच्यम् । 'दीर्घाहो निदाघे'त्यादौ सम्बुद्धौ प्रवृत्त्या, भ्यामादौ व्यावृत्त्या च नकारप्रश्लेषस्य चारितार्थ्ये, तेन नलोपबाधे मानाऽभावादिति भावः ।

---

१. 'अत्रैनादेशापादनपरभाष्यविरोधात् किञ्चित्कार्यं विधातुमुपात्तस्य पुनरुपादानमेवाऽन्वादेशो, न तु कार्याऽन्तरविधानाय पुनरुपादानपर्यन्तम् । अत एव 'अनेन छन्दोऽधीतमेनं पश्यति देवदत्त' इत्यादावप्यादेशो भवत्येव । आद्यकोटौ 'विधातुमि'ति तु 'एतमातं ङितं विद्यादि'ति भाष्याऽऽदिप्रयोगादवसीयत इति दिक्' इति ख. पाठः ।

२. 'न च लोपे' क. ख. पाठः । 'न च नलोपे' इति च लघुशब्देन्दुशेखरे पाठः ।

३. 'दीर्घाहा निदाघ इत्यादौ यत्वसम्पादनेन च' इति ख. नास्ति, क. ग. पाठः ।

४. इतोऽग्रे–'न चैवं 'रोऽसावि'त्येव सिद्धे गुरुभूतन्यासो व्यर्थ इति तत्सामर्थ्याल्लोपो नेति वाच्यम् । सप्तमीबहुवचने परे रेफाऽऽदेशापत्तौ, 'रो: सुपीति' नियमेन विसर्गाऽनापत्त्या दोषस्य सत्त्वात् । 'रोऽसी'ति न्यासे विशिष्टस्य सकारभिन्नत्वेन दोषो दुर्वार एव । सुपि विशेष्याऽसन्निधानेन तदादिविध्यभावात्, 'सकारे'त्यर्थे तत्लविधित्वेन सोर्लोपे रत्वाऽऽपत्तिः । 'अहः सङ्गतमि'त्यादौ रत्वाऽनापत्तिश्च' इति ख. पाठः ।

**आवर्त्त्येति**। आवृत्तौ मानं च 'रूपरात्री'ति वार्त्तिकमेव। अन्यथा[1] नलोपे रेफाऽऽदेशेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। भाष्यप्रामाण्याच्च तस्य सम्बुद्धावप्रवृत्तिः। तज्ज्ञापकसिद्धवचनकल्पनाऽपेक्षयाऽऽवृत्तिर्लघीयसीति भावः। आवृत्तस्य 'पदान्तेऽह्नन्निति निपात्यते' इत्यर्थः[2]।

**तदन्तस्याऽपीति**। पदाऽधिकारस्थत्वात्। 'ग्रहणवते'ति निषेधस्तु प्रत्ययविधिविषयः। अत एव 'येन विधि'रिति सूत्रे भाष्ये-प्रत्ययविधिभिन्ने 'अप्तृन्नि'त्यादौ गृह्यमाणप्रातिपदिकेनाऽपि तदन्तविधिप्रतिपादनं, 'स्वसा' 'परमस्वसे'त्याद्युदाहरणं च सङ्गच्छते। 'समासप्रत्ययविधौ प्रतिषेध' इति निषेधाऽनुवादकत्वस्य युक्तत्वाच्च।

यत्तु तज्ज्ञापकं 'सपूर्वाच्चे'ति सूत्रम्। अन्यथा 'पूर्वादिनिरि'त्यत्र तदन्तविधिनैव सिद्धे किं तेन 'प्रत्ययविधौ प्रतिषेध' इत्यस्यैव ज्ञापकं सुवचम्[3]। अत एव तदन्तविधिसूत्रभाष्ये 'समासे'त्यादिनिषेधकथनवदस्य न कथनम्।

तत्रैव 'पूर्वात्सपूर्वादिनिरि'त्येकयोग एव कर्त्तव्ये पृथक्करणं च 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'त्यस्या मानम्। न चेष्टादिभ्य इति सूत्रेऽनुवृत्त्यर्थं

---

१. 'अन्यथा नलोपे अकारस्य रेफादेशेनैव' इति क. पाठो, लघुशब्देन्दुशेखरे च।

२. इतोऽग्रे—'एवं च सन्नियोगशिष्टन्यायेन यत्राऽनेन नलोपप्रतिबन्धस्तत्र रुत्वरत्वयोः प्रवृत्तिः। तेन समासान्तानामुत्तरपदाऽवयवत्वे 'पुण्याहाभ्यामि'त्यादौ न दोष इति दिक्' इति ख. पाठः। क. ग. नास्ति।

३. इतोऽग्रे—'एतेन 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधात्केवले न स्यादि'ति परास्तम्। तस्यापि प्रत्ययविधिविषयत्वात्। एतेन 'सर्वादेः सादेश्च लुग्वक्तव्य' इति केवलसर्वशब्दे न स्या'दित्यपास्तम्। तस्य लुग्विधित्वेन प्रत्ययविधित्वाऽभावात्। ननु 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति न्यायो नास्त्येव, फलाऽभावात्। 'सूत्रान्ताट्ठक्' 'दशान्ताड्ड' इत्यादावन्तग्रहणसामर्थ्येनैव व्यपदेशिवद्भावाऽप्रवृत्तेः।' इति क. कुण्डलितः खण्डितश्च पाठो दृश्यते।

तथा पाठः, अत एव 'अनिष्टी'त्यादिसिद्धिरिति वाच्यम्। ज्ञापकपरभाष्य-प्रामाण्येन 'अनिष्टी'त्यादिप्रयोगाणामनिष्टत्वात्। एकयोगेऽपि तावत उत्तरत्राऽनुवृत्तौ बाधकाऽभावाच्च। अत एव 'नान्तादसङ्ख्यादेरि'ति चरितार्थम्। अन्यथा 'पञ्चम' इत्यादावपि व्यपदेशिवद्भावेन सङ्ख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेव। तत्फलन्तु 'सूत्रान्ताट्ठक्' 'दशान्ताड्डः' 'एकगोपूर्वादि'त्यादेः केवलसूत्रशब्द-दशन्शब्दै-कशब्दादिष्वप्रवृत्तिः। आद्ययोरन्तग्रहणन्तु प्रत्ययविधौ तदन्तग्रहणनिषेधात्कृतम्। ज्ञापकस्य सजातीयाऽपेक्षत्वाच्च सूत्रोपात्ताऽन्ताऽऽदिशब्दविषयतैवाऽस्य स्पष्टं 'येन विधिरि'त्यत्र [1]**कैयटेनोक्ता**। स्पष्टं चाऽनयोः प्रत्ययविधिविषयत्वम् 'असमासे निष्कादिभ्य' इति सूत्रे **भाष्यकैयटग्रन्थे**। ([2]अत एव 'सर्वादिः सादेश्चे'ति लुक् प्रत्ययविधित्वाऽभावात्केवलसर्वशब्दे न)। एतेन 'अनया व्यपदेशिवद्भावनिषेधात्केवलेऽहन्शब्दे रुत्वरत्वे न स्याताम्'त्यपास्तमिति भावः।

**तस्याऽसिद्धत्वादिति**। 'अकृतव्यूहपरिभाषया दीर्घाऽप्रवृत्तिः स्या[3]दि'-त्यभिमानेनेदम्। दीर्घस्तु परत्वाद्धल्ङ्यादिलोपात्पूर्वमेव बोध्यः।

**सम्बुद्धौ त्विति**। सुपोऽत्र हल्ङ्यादिलोपाद्रुत्वे, 'असम्बुद्धावि'त्युक्तेर्दीऽर्घाभावे, 'हशि चे'त्युत्त्वे 'आद्गुणः'।

इन्ग्रहणेऽनर्थकस्याऽपि ग्रहणमुक्तं, तत्फलमाह–**स्रग्वीणीत्यादि**।

**पदान्ते कुत्वमिति**। 'क्विन्प्रत्ययस्ये'त्यस्याऽसिद्धत्वाद् 'व्रश्चे'ति षत्वे, कुत्वमित्यर्थः। षत्वन्तु 'सृष्टमि'त्यादौ झलि साऽवकाशमिति भावः।

---

१. इतोऽग्रे—'अत एव 'सपूर्वाच्चे'तिसूत्रस्य 'ग्रहणवते'ति निषेधज्ञापकता भाष्ये उक्ता। अन्यथा केवले, तदन्ते च सिद्धयर्थं सूत्रद्वयस्याऽऽवश्यकत्वेन तदसङ्गतिः' इति ख. पाठः।

२. ख. पाठोऽयम्। क. ग. नास्ति।

३. 'दीर्घाऽप्रवृत्तिशङ्काऽनेन वार्यते' ख. पाठः।

**भाष्यप्रयोगादिति** । 'रज्जुसृड्भ्यामि'तिभाष्यप्रयोगेणाऽनव्ययपूर्वपदे कुत्वाऽभावो बोध्यते । तेनाऽसृगित्यत्र न दोष इत्याहुः ।

**कुत्वाऽपवाद** इति । सृजियज्योः पूर्वोत्तरसाहचर्येण पदान्तेऽपि विशिष्य षत्वबोधनेन, तत्सामर्थ्यात्कुत्वबाध इति भावः । अत एव 'उपयट्काम्यती'-ति 'काम्यच्'सूत्रभाष्यप्रयोगः स्वरसतः सङ्गच्छते ।

**निपातनादेवे**ति । निपातनेन ह्येतयोः शब्दयोरपवादाऽप्रवृत्तिबोधन-मात्रम् । कुत्वं तु स्वशास्त्रेणैव । एतेन 'निपातनादपदान्तेऽपि कुत्वाऽऽपत्ति-रि'ति निरस्तम्[1] । **ऊर्गिति** । ऊर्ज्शब्दः पुंलिङ्गोऽपि, 'नपुंसकस्ये'ति सूत्रे 'बहव ऊर्ज' इति कैयटस्वरसात् । **नरजानां संयोग** इति । 'बहूर्जि नुम्प्रतिषेध' इति वार्त्तिकमताऽभिप्रायेणेदम् ।

[[2]**बहूर्जि नुम्प्रतिषेध इति**] । भाष्ये तु 'नपुंसकस्ये'ति सूत्रेऽज्ग्रहण-सामर्थ्येनाऽऽवृत्त्या 'अच' इत्यस्य झल्विशेषणत्वाऽऽश्रयणेन 'अचः परो यो झल् तदन्तस्य नुमि'त्यर्थान्नाऽत्र नुमिति प्रत्याख्यातमेतत् । अन्यथा इगन्ता-नाम् 'इकोऽची'त्यनेन सिद्धत्वेन, एजन्तेषु नपुंसकह्रस्वत्वेन चाऽकारग्रहण-मेव कुर्यात् । आवृत्तौ मानं च 'दाण्डिनायने'ति सूत्रे 'हिरण्मयानी'ति निर्देश एव । 'काष्ठतंक्षी'त्यादौ तु झल्त्वजातेरचः परत्वसत्त्वाद्भवत्येव नुम् । ऊर्क्शब्दादौ तु न भवत्येवेति तदाशयः । एतेन 'युज्शब्दान्नपुंसके शौ 'नपुंसकस्ये'ति 'युजेरि'ति च मुमृद्वयमि'त्यपास्तम् । 'युजेरि'त्यस्याऽन्त-रङ्गत्वान्नित्यत्वाच्च पूर्वं प्रवृत्तावचः परझलोऽभावेन 'नपुंसकस्ये'त्यस्या-

---

१. इतोऽग्रे—'यद्वा निपातनादि'त्यस्य क्विन्निपातनसामर्थ्यादित्यर्थः । अन्यथा क्विप्सनियोगेन 'सत्सूद्विषे'त्यादावमादिकं निपात्येतेति भावः' इति क. कुण्डलितः पाठः ।

२. 'बहूर्जि' इत्यारभ्य 'इत्यस्याऽप्राप्तेः' इत्यन्तः ख. पाठो मनोरमाशब्दरत्न-धृत इति क. कुण्डलितः ।

ऽप्राप्तेः। **अन्त्यादिति**। इदं वाचनिकमेव बहूर्जशब्दमात्रविषयकम् बहून्र्जीति। श्चुत्वस्याऽसिद्धत्वादनुस्वारे, परसवर्णोऽत्रेत्याहुः।

**स्थानिवत्त्वादिति**। 'क्वौ लुप्तं ने'त्यस्याऽसार्वत्रिकत्वादिति भावः। स्पष्टं चेदं 'दीधीवेवीटामि'ति **भाष्यकैयटयोः**।

**'जायन्ते नव सौ, [1]तथाऽमि च नव, भ्यां-भिस्-भ्यसां सङ्गमे**
**षट्सङ्ख्यानि, नवैव सुप्यथ जसि त्रीण्येव, तद्वच्छसि।**
**चत्वार्यन्यवचःसु, कस्य विबुधाः! शब्दस्य रूपाणि, तज्—**
**जानन्तु प्रतिभाऽस्ति चेन्निगदितुं [2]षाण्मासिकोऽत्रावधिः॥**

—इति प्राचीनाऽऽक्षेपे श्लोकद्वयेनोत्तरमाह—**गवाक्शब्दस्येत्यादि**। शब्दपरत्वेन पूजाऽर्थकत्वाऽभावान्नस्य लोपः। **भेदत** इति। आद्यादित्वात्तसिः। भेदेनेत्यर्थः। **नवेति**। द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकमभिसम्बन्धात्प्रत्येकं नवेत्यर्थः। एतत्साहचर्यादग्रेऽपि प्रत्येकमेव सङ्ख्याऽन्वय इति बोध्यम्। **गवागिति**। सोर्लुका लुप्तत्वान्न नुम।

**षण्णामिति**। कुक्पक्षे त्रयाणां, गतौ त्रयाणामित्यर्थः।

**चर्त्वस्येति**। तथा च शास्त्रदृष्ट्या गस्यैव सत्त्वेन, गतौ त्रयाणामाधिक्यं नेत्यर्थः। नन्वेवमपि पूजायां, कुक्पक्षे 'चयो द्वितीया' इत्यस्य प्रवृत्तेस्त्रयाणामाधिक्यं दुर्वारमिति चेत्। इष्टाऽऽपत्तिरित्याह—**वर्द्धन्त** इति। एवं च सुपि द्वादश १२। सङ्कलनया द्वादशाऽधिकं शतानीत्यर्थः।

**अश्वाक्षीति**। सप्तविंशत्यधिका पञ्चशतीत्यर्थः ५२७। **तथा हि सौ** नवानामन्त्यद्वित्वे १८। औङि चतुर्णां मध्ये पूजाऽर्थानां त्रयाणां अद्वित्वे ७। अनुनासिकस्त्वस्य नाऽस्ति, प्रगृह्यत्वात्। **जसि** अद्वित्वस्याऽनुनसिकस्य च विकल्पात् १२। सङ्कलनया ३७।

---

१. 'तथा भिसि नव' इति सर्वत्र पाठः। 'तथाऽम्यपि नव' इति पाठः स्यात्।

२. 'षाण्मासिक' इत्यपपाठः। 'अवयसि ठश्चे'ति ठनि 'षण्मासिक' इत्युचित'मिति सदाशिवभट्टीयम्।

एवं द्वितीयायामपि ३७। सङ्कलनया ७४।

ननु जश्शसोः पूजायां नुमागमे, तस्याऽनुस्वारे, परसवर्णे च, पाक्षिके द्वित्वे ञकारत्रयसहितषण्णां वृद्धया उक्तसङ्ख्याऽयुक्तेति चेन्न। वर्णग्रहणे जातिग्रहणेन द्वयोरपि नकारयोरेकस्मिन्ननुस्वारे, तस्य परसवर्णे, द्वित्वेऽपि ञद्वयस्यैव सिद्धेः। किञ्च 'अचः परो यो झलि'ति व्याख्यातत्वेन नुमोऽप्राप्तेः। न च वर्णग्रहणे जातिग्रहणात्प्राप्तिः। नकारे झल्त्वाऽभावादित्याहुः।

**टायाम्** १४। पूजाऽर्थानां त्रयाणां ञद्वित्वात्, सप्तानामनुनासिकविकल्पाच्च। **भ्यामि** ४८। 'भ'प्राग्वर्णस्य, य-मयोश्च द्वित्वात्। **भिसि** २४। 'भ'प्राग्वर्त्तिवर्णविसर्गद्वित्वात्। विसर्गे तु नाऽनुनासिकः, 'अप्रगृह्यस्ये'ति पर्युदासेनाऽऽक्षरसमाम्नायिकेष्वेव तत्प्रवृत्तेः। सङ्कलनया तृतीयायाम् ८६।

**ङयि** ७। एकारस्याऽनण्त्वेनाऽननुनासिकत्वात्। **भ्याम्भ्यसोः** प्रत्येकम् ४८। सङ्कलनया चतुर्थ्याम् १०३।

**ङसौ** १४। **भ्याम्भ्यसोः** प्रत्येकम् ४८। सङ्कलनया पञ्चम्याम् ११०। सङ्कलनया तृतीयादित्रिके २९९। प्रथमाभ्यां सह ३७३।

षष्ठ्या वचनत्रये प्रत्येकम् १४। सङ्कलनया ४२। ङौ, ओसि च १४। सुपि गत्यर्थकत्रयाणां ककारषकारयोर्द्वित्वे, उकारस्याऽनुनासिकत्वे चतुर्विंशतिः २४। षस्य 'शरः खय' इति द्वित्वम्। एवं कुक्पक्षे षण्णां ङ्षयोर्द्वित्वेऽनुनासिके च ४८। कुगभावे 'ङ'द्वित्वे, अनुनासिकत्वे च १२। सङ्कलनया सप्तम्याम् ११२। षष्ठ्या सङ्कलने १५४। पूर्वोक्तपञ्चम्यन्तैः (३७३) सङ्कलने ५२७। इति दिक्।

**तिरश्ची** इति। भत्वादच इत्यल्लोपः। 'अलोपे' इत्युक्तेस्तिर्यादेशाऽभावः। **यः शतेति**। शतृप्रत्यय इत्यर्थः। ननु 'वा शावि'त्येव सूत्रयितुमुचितम्, नपुंसके तस्यैव सर्वनामस्थानस्य सम्भवादिति चेन्न। गृह्यमाणस्य शत्रन्तस्यैव नपुंसकत्वे यथा स्यात्, बहवो ददतो येषु तानि कुलानि 'बहुददती'त्यत्र मा भूत्, बहूनि ददति येषु ते, 'बहुददन्त' इत्यत्र च यथा

स्यादित्येवमर्थं तत् । स्पष्टं चेदं 'स्वमोर्नपुंसकादि'ति सूत्रे भाष्ये । तत्र हि 'नपुंसक'पदं गृह्यमाणस्यैव विशेषणम् । गृह्यमाणाऽभावे प्रकृतस्याऽङ्गस्ये'-त्युक्तमित्याहुः ।

**आच्छी** । यत्तु 'नुम्ग्रहणं प्रतिषेधसम्बन्धाऽनुवृत्तिर्माभूदि'ति[1] । न च न क्षतिः, 'उत्तरसूत्रेणाऽपि निषेधस्यैव नित्यतापत्तेरि'ति । तन्न । निषेधस्य प्राप्तिपूर्वकत्वेनाऽत्र च प्राप्त्यभावेन, सामर्थ्यादेव निषेधनिवृत्तिसिद्धेः ।

एवं च नुम्ग्रहणं व्यर्थम् । स्पष्टं चेदं 'नाऽभ्यस्ताच्छतुरि'ति सूत्रे भाष्ये ।

'वे'ति तु सम्बन्ध्यत एव । उत्तरसूत्रे नित्यग्रहणात् । न चाऽनेनैव नुमि सिद्धे 'शप्श्यनोरि'त्यारम्भसामर्थ्यादिवास्य वैकल्पिकत्वं, तस्य च नित्यत्वं[2] सिद्धमिति व्यर्थं नित्यग्रहणमिति वाच्यम् । वैपरीत्याऽऽपत्तेः । तदेतद्भाष्ये उक्तं 'तिष्ठतु तावत्सांन्यासिकं नित्यग्रहणमि'ति ।

**शतुरवयव** इति । 'परो यः शते'ति तु नोक्तम् । 'तुदन्ती'त्यादावेका-देशे कृते, उभयत आश्रयणेऽन्तादिवद्भावविरहेण नुमभावापत्तेः । भूतपूर्व-गत्याश्रयणे तु 'अदती'त्यादावपि स्यात् । अवर्णश्च शतृभिन्नाऽवयव एव गृह्यते, शत्रकारेणाऽव्यभिचारादित्याहुः ।

**श्यप्श्यनोः** । आदिति किम् ? । 'भान्ती' 'भाती'त्यादौ नित्यं नुम् मा भूत् । अन्यथा प्रत्ययलक्षणेन स्यात् । 'आदि'त्युक्तौ वर्णप्राधान्यान्न प्रत्यय-लक्षणम् । 'न लुमते'ति निषेधस्तु प्रत्यासत्त्या लुप्तप्रत्ययनिमित्ताऽङ्गसंज्ञकस्य कार्ये एव प्रवर्त्तत इति स्पष्टं षाष्ठाऽऽर्द्धधातुके इति सूत्रे कैयटे । **पचन्ती**-त्यादिबहुवचने तु 'नपुंसकस्य झलच' इति नुम् ।

**स्वप् इति** । शोभना आपोऽस्मिन्सरसी'ति बहुव्रीहिः । 'न पूजनादि'ति-समासान्तनिषेधः । 'द्व्यन्तरि'तीत्त्वमपि न । 'अप' इति कृतसमासान्ताऽ-

---

१. प्रतिषेधसम्बद्धानुवृत्तिर्माभूदिति' ख. पाठः ।

२. 'नित्यत्वसिद्धिरिति' ख. पाठः ।

नुकरणात् । **निरवकाशत्वमिति ।** इदं च 'छदिरुपधिबलेर्ढञि'ति सूत्रे भाष्ये स्पष्टम् । तत्र हि 'छादिषेयं चर्मे'त्यत्र 'चर्मणोऽञि'ति बाधित्वा पूर्वविप्रतिषेधाड्ढञि'त्युक्तम् । अन्यथा प्रतिपदोक्तत्वेनैव ढञाऽञौ बाधसिद्धौ, किं तेन ? । छदिश्चर्मविकारोऽपि । 'चर्मणोऽञि'त्यस्य च चर्मविकारवाचकादञित्यर्थः । 'शेषाद्विभाषे'ति सूत्रे च भाष्ये स्पष्टम् ।

तत्र हि 'शेष'ग्रहणमनर्थकं, ये प्रतिपदं विधीयन्ते, ते बाधका भविष्यन्ती'त्याशङ्क्य, 'अनवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कबभावे सावकाशा' इत्युक्तम् । **नुमेवेति** । अन्ये तु[3] असम्भवे एव विप्रतिषेधशास्त्रस्य प्रवृत्तिः । न चाऽत्राऽसम्भवः । दीर्घनुमोः क्रमेण प्रवृत्तौ द्वयोरपि सम्भवात् । 'अकृतव्यूह' परिभाषा तु नास्त्येव । तत्र अनवकाशत्वाऽभावेनाऽबाधकत्वेऽपि प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं दीर्घे 'स्वाम्पी'त्येव युक्तमित्याहुः ।

**धनुरिति ।** 'र्वोरि'ति दीर्घो न, रेफाऽन्तस्याऽधातुत्वात् ।

**॥ इति हलन्ता नपुंसकलिङ्गाः ॥**

●

---

१. 'शेषाद्विभाषा' इत्यारभ्य 'इत्युक्तम्' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

२. 'नुमेवेति । 'एव'कारेण पूर्वमतेऽपि नुमि, अकारनिष्ठोपधात्वस्य विनाशोन्मुखत्वादकृतव्यूहपरिभाषया नुमः पूर्वं दीर्घो दुर्लभ इति सूचितम्' इति क. पाठः ।

३. 'अन्ये तु' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

## अथाऽव्ययप्रकरणम् ।

**स्वरादिनिपात** । ननु 'प्रागीश्वरान्निपाताः', ततः 'स्वरादीनी'त्यादि 'अव्ययीभावश्चे'त्यन्तं पाठ्यम् । ततः 'चाऽऽदयोऽसत्त्वे' इत्यादि 'अधिरीश्वरे' इत्यन्तं पाठ्यम् । तत्राऽसत्त्वे इत्यस्य 'इह शास्त्रे ये चादयस्तेऽसत्त्वे ज्ञेया' इत्यर्थः । 'निपात एकाजि'ति सूत्रं 'चादिरेकाजि'ति पाठ्यम् । **तेन आचि**-दक्षिणाऽस्ति', **अति** 'क्वाऽस्ती'त्यादौ, 'हे अ अवे'त्यादौ च न दोषः, एवञ्च संज्ञाद्वयं व्यर्थमिति[1] चेन्न । स्वरादावपि 'निपाता आद्युदात्ता' इत्यापत्तेः । न हि तत्र 'चादय' इति पठितुं शक्यम् । ऊर्यादीनामसङ्ग्रहाऽऽपत्तेः । संग्रहे वा कृन्नादियोगाऽभावेऽप्याद्युदात्तत्वाऽपत्तिः । एतेन 'आकडारस्थेनाऽव्ययसंज्ञामात्रेण निर्वाह' इत्यपास्तम् ।

**स्वरित्यादि** । प्रयोगस्थानामनुकरणान्येतानि । तत्राऽनुकार्याऽनुकरणयोरभेदविवक्षया प्रातिपदिकत्वाऽभावेन सुबनुत्पत्तिः, 'भू सत्तायामि'तिवत् । तेन विसर्गादिकं न । स्वरादीनामनेकशक्ति[2]प्रधानता, 'स्व आगतः' 'स्वः स्थितः' 'स्वः पश्ये'त्यादिप्रयोगदर्शनात् । 'उच्चैरि'त्यादि तु अधिकरणशक्तिप्रधानम्, शब्दशक्तिस्वभावात् । एवं हिरुगादीनां क्रियाप्रधानत्वम्, वृज्यादौ धात्वर्थत्वेन दृष्टस्याऽत्राऽपि प्रतीतेः अ[3]सत्त्वभूतत्वाच्च । क्रियान्तराऽऽकाङ्क्षा त्वस्त्येवैषामित्याहुः ।

**सायंचिरमिति** मान्ताऽव्यये । 'सायंचिरंप्राह्णेप्रगे' इति सूत्रे त्वनव्ययभूताऽकारान्तयोः प्रत्ययसन्नियोगेन मान्तत्वं निपात्यते इति स्पष्टं तत्रैव

---

१. 'व्यर्थमिति चेन्न । 'अव्ययमि'ति महासंज्ञाबललभ्य-गौणव्यावृत्तिरूपफलाऽसिद्धयापत्तेः । स्वरादावपि 'निपाता आद्युदात्ता' इत्यापत्तेश्च' इति ख. पाठः ।

२. 'स्वरादीनां शक्तिमत्प्रधानता' ख. पाठः ।

३. 'असत्त्वभूतत्वाच्चेत्याहुः' ख. पाठः ।

भाष्ये । नन्वेवमपि मान्ताऽव्ययात्प्रत्यये 'चिरन्तनमि'त्यस्य सिद्धत्वेन, चिर-शब्दाट्ठञ्प्रत्ययस्य च 'त्न'प्रत्ययेनैव बाधसिद्धे, सूत्रे 'चिरम्'ग्रहणं व्यर्थ-मिति चेन्न । अव्ययत्वप्रयुक्तटचुटच्युलोरनित्यत्वज्ञापनेन चारितार्थ्यात् । तेन 'सायम्प्रातिक' इत्यादि सिद्धमित्याहुः ।

**केचित्तु ।** 'तद्भाष्य-प्रामाण्यात् 'चिरमि'त्यव्ययम् प्रामाणिकमि'त्याहुः ।

[1]**वदिति ।** तेन[2] तुल्यम्' 'तत्र तस्येव''तदर्हमि'ति विहितः । [3]उपसर्गा-च्छन्दसी'ति विहितस्य नु च्छान्दसत्वादेव न संज्ञेति बोध्यम् । स्तोकादीनां क्रियाविशेषणत्वेऽपि सत्त्वाचकत्ववत् 'तत्र तस्येवे'ति विहितस्य 'मथुरा-वत्पाटलिपुत्रे प्राकार' इत्यादौ सत्त्ववाचकविशेषणत्वेऽपि शब्दशक्तिस्वा-भाव्यान्न लिङ्गसङ्ख्याद्यन्वयित्वमित्यसत्त्ववाचित्वं बोध्यम् ।

---

१. 'वदिति । तेन तुल्यमि'त्यधिकारे 'तत्र तस्येवे'ति विहितः । तस्य च नामाऽर्थयोरभेदाऽन्वयाऽनुरोधाद्धर्मिशक्तताया आवश्यकत्वेन, लिङ्गसङ्ख्या-ऽन्वयिविशेष्यसमानाधिकरणत्वेन च सत्त्ववाचकत्वान्महासंज्ञया 'तद्धि-तश्चे'त्यप्राप्ताविह पाठसामर्थ्यात्तत्त्वेऽपि संज्ञा सिद्धयति । एवं च-वादी-नामपि पाठसामर्थ्यादेव स्वरादिवदव्ययसंज्ञेति बोध्यम् । 'तेन तुल्यमि'ति विहितस्य तु सदृशवाचकत्वेऽप्यसत्त्वभूतक्रियासमानाधिकरणत्वेनाऽसत्त्व भूतत्वात्तेनैव सिद्धा संज्ञा । 'उपसर्गाच्छन्दसी'ति विहितस्य तु च्छान्दस-त्वादेव न संज्ञेति बोध्यम् । यदि तु स्तोकाऽऽदीनां क्रियाविशेषणत्वेऽपि सत्त्ववाचकत्ववत्, इवादीनां सत्त्ववाचकविशेषणत्वेऽपि शब्दशक्तिस्वा-भाव्यान्न साक्षाल्लिङ्गसङ्ख्याद्यन्वयित्वमित्यसत्त्ववाचित्वमेवेति विभाव्यते, तदा 'वद्'ग्रहणं व्यर्थमेव । 'तद्धितश्चे'ति सूत्राऽनित्यत्वज्ञापकं वा । तेन परिगणनं सिद्धमित्याहुः' इति ख. पाठः ।

२. 'तेन तुल्यम्' इत्यारभ्य 'विहितः' इत्यन्तो लघुशब्देन्दुशेखरपाठः । स च योग्यत्वादत्र स्थापितः ।

३. 'उपसर्गाच्छन्दसि' इत्यारभ्य 'इत्यप्येवम्' इत्यन्तः क. ग. पाठः ।

वस्तुतः 'तद्धितश्चे'त्येव सिद्धेर्वद्ग्रहणं व्यर्थम् । **विना नानेत्यप्येवम्** ।

**अन्तरा** । **अन्तरेणेति** । 'अन्तराऽन्तरेण युक्ते' इति सूत्रभाष्येऽनयोर्निपातत्वोक्तेः स्वरादिष्वनयोः पाठः प्रक्षिप्त' इति **केचित्** ।

(**विनानानेति** । अनयो'स्तद्धितश्चे'त्येव सिद्धेऽखण्डयोरर्थान्तरेऽव्ययत्वार्थं, 'नाने'त्यस्याऽन्तोदात्तत्वाऽर्थमत्र पाठ इत्याहुः । [2]**अस्तीति** । विभक्तिप्रतिरूपकत्वादेव सिद्धे धनवाचिनः सत्त्ववचनस्याऽव्ययत्वाऽर्थः पाठ इत्याहुः । यथा—'अस्तिमानि'तीति । विभक्तिप्रतिरूपकत्वं विनिगमनाविरहाच्छब्दतोऽर्थतश्चेति, न धनवाचिनः प्राप्तिरि'त्यपरे) । **नमसिति** । 'महसां नमसामि'ति प्रयोगस्तु सत्त्ववाचकत्वे बोध्यः । '[3]अव्ययात्त्यबि'तिसूत्रे भाष्ये ग्रामविशेषवाचिन आराच्छब्दस्याऽव्ययत्वं स्वीकृतम् । **अम् आमिति**—शैघ्र्याऽङ्गीकाराऽर्थौ प्रत्ययभिन्नावेव । **प्रताम् प्रशामिति** । 'प्रतानि'तिनान्ताऽव्ययस्य पृथक्पाठसामर्थ्यात् 'प्रतामि'त्यव्ययस्य प्रयोगे नत्वाऽभाव इत्याहुः । 'अव्ययमि'त्यन्वर्थसंज्ञाबलादसत्त्वार्थकस्य धर्मवाचकस्याऽव्ययत्वं, न धर्मिवाचकस्य । अत एव 'प्रशामौ' 'प्रतामावि'ति भाष्याद्युदाहृतं सङ्गच्छते । न च 'प्रशानि'ति शाम्यतेः क्विबन्तस्य रूपमि'ति'क्रन्मेजन्त'सूत्र**भाष्यकैयटाऽऽदौ** स्पष्टम्, एवं च 'प्रशानि'तिनान्तगणपाठोऽयुक्तः, 'स्वरि'त्यादिवद्गणे विभक्त्यनुत्पत्तेरिति वाच्यम् । 'प्रशामि'ति मान्तपाठस्यैव साम्प्रदायिकत्वात् । 'क्रन्मेजन्त'सूत्रस्थभाष्यस्वरसोऽप्येवमेव ।

---

१. अयं ख. पाठः क. ग. नास्ति । 'विना नानेत्यप्येवम्' इति तत्र पूर्वमुक्तेः ।

२. 'अस्तीति । विभक्तिप्रतिरूपकत्वादेव सिद्धे, विभक्तिप्रतिरूपकत्वं विनिगमनाविरहात् शब्दतोऽर्थतश्चेति, धनवाचिनः सत्त्ववचनस्याऽव्ययत्वार्थे पाठः । यथाऽस्तिमानितीति केचित्' इति क. कुण्डलितः पाठः ।

३. 'अव्ययात्त्यप्' इत्यारभ्य 'स्वीकृतम्' इत्यन्त इह क. ग. पाठः । ख. तु 'सङ्गच्छते' इत्यस्याऽग्रेऽयं पाठः ।

**नञश्चा**ऽऽदिष्वप्रामाणिकः पाठः। अत एव 'अव्यये नञ्कुनिपातानामि'त्यत्र भाष्ये निपातात्पृथक् नञ् पठित इत्याहुः। तन्न। नञ्सूत्रे भाष्येऽस्य द्योतकताया उक्तत्वात्। अत एव तत्र 'नञ्ग्रहणं स्पष्टार्थमि'ति **कैयटो** व्याख्यत्। 'अकरणिरि'त्यादौ परस्यापि कृत्स्वरस्य बाधनार्थं तस्य सत्त्वाच्च। स्वरादिपाठस्तु चिन्त्यप्रयोजनः। एवं **माङोऽपि।**

(य[1]त्तु 'स[2]त्त्ववचनानामव्ययत्वाऽर्थं स्वरादिपाठ' इति। तन्न। सत्त्ववाचकस्य माङ्त्वाऽभावात्। न च ङकारोऽविवक्षितः। 'मा' इत्यस्य पृथक्पाठवैयर्थ्याऽऽपत्तेः)। **यावत्ताव**च्छब्दावव्युत्पन्नौ।

**उपसर्गविभक्ति।** अत्र प्रतिरूपकत्वं विनिगमनाविरहादर्थतः, शब्दतश्च गृह्यते। 'गेये केन[3] विनीतौ वामि'त्यत्रापि 'वामि'त्यस्य कर्मत्वेन समानाऽर्थत्वमस्त्येव। (तत्र[4] हि तत्प्र[5]थमान्तम्)। स्वरांशे तु नाऽर्थतः। अत एवाऽल्पाच्तरस्यापि परनिपातः। एतेन 'युगं पतती'त्यादिव्युत्पत्त्याश्रयणेन 'युगपदि'त्यादीनां विभक्तिप्रतिरूपकत्वादेव सिद्धे, तेषां गणपाठो व्यर्थ इति परास्तम्। (ध्वनितं चेदं 'मतुप्'सूत्रे **भाष्यकैयटयोः**)।

एवं 'तदि'त्यपि लुप्तषष्ठ्यन्तादिविभक्तिप्रतिरूपकमव्ययम्। अत एव 'अविद्यातच्चितोर्योगः' 'तत्तदर्थविभाग' इत्यादौ 'त्यादीनि सर्वैरि'ति

---

१. अयं ख. पाठः क. ग. नास्ति।

२. 'यदप्याहुः—सत्त्ववचनानामप्यव्ययसंज्ञाऽर्थं स्वरादिपाठ इति। तदपि चिन्त्यम्। लक्ष्मीवाचकस्याऽपि माशब्दस्याऽव्ययत्वापत्तेः। तस्मादुभयत्र पाठे फलं चिन्त्यम्' इति मनोरमायां पाठः।

३. 'गेये केन' इति क्वचिन्नास्ति। लघुशेखरे त्वस्त्येव।

४. ख. पाठोऽयम्। क. ग. नास्ति।

५. तत्=वामितिपदमित्यर्थः।

६. अयं ख. पाठः। क. कुण्डलितः।

नैकशेषः, नाऽपि विभक्तिश्रवणम्, त्यदादिषु साहचर्येणाऽनव्ययस्यैव ग्रहणादित्याहुः ।

**अवदत्तमिति** । ननु क्रियायोगादत्रोपसर्गत्वमेवाऽस्ति । न चैवम् 'उपसर्गात्तः' इत्यस्याऽऽपत्तिः ।

**'अवदत्तं, विदत्तं च, प्रदत्तं चाऽऽदिकर्मणि ।**
**सुदत्तमनुदत्तं च, निदत्तमिति चेष्यते ।।**

—इति भाष्योक्तेः पक्षे तदप्रवृत्तेरिति चेन्न । साक्षात्प्रधान-तत्वविधिबाधाऽपेक्षया, गुणभूतोपसर्गसंज्ञाबाध एव 'अवदत्तमि'त्यादि भाष्यवचनेन बोध्यत इत्याशयात् । निपातत्वाऽव्ययत्वयोः फलन्तु 'अव्यये नञ्कुनिपातानामि'त्यव्ययपूर्वपदप्रकृतिस्वरत्वमेवेति बोध्यम् ।

'प्रादय' इति योगविभागसिद्धाऽर्थकथनमेवेदम् ।

**आकृतीति** । 'अह' इति अहनीत्यर्थे । एवम् **'ओम्'** इति स्वरादिषु । 'अवतेष्टिलोपश्चे'ति वचनाद्ब्रह्मणि, अङ्गीकारे च 'ओमि'ति सिद्धम् । अश्च,उश्च,म् चेति व्युत्पत्त्या शिवाऽऽदिवाचकं वा । स्वरादित्वमुभयोरपि,[1] लाक्षणिकत्वाद्यविशेषात् । न चाऽऽद्यस्य 'क्रन्मेजन्त' इत्येव सिद्धम् । 'च्विरव्ययमि'त्युणादिपठितेन नियमादप्राप्तेः । 'उणादिव्युत्पन्नानां चेच्चादिस्वराद्यपठितानां भवति, तदा च्व्यन्तानामेवे'ति तदर्थात् । अन्यथा च्व्यन्तानां निपातत्वादेव सिद्धे, तत्पाठो व्यर्थ एव स्या[2]त् । 'स्व[3]रादिनिपातमि'त्यत्र निपातपदे गौणमुख्यन्यायाऽप्रवृत्तिः,अनित्यत्वात् । अन्यथा 'ओदि'ति प्रगृह्यत्वमिवेदमपि न स्यादिति दिक् ।

एवमतिशयेन साधु इत्यर्थे **'साधीय'** इत्यपि । अत एव 'कश्च साधीय' इत्यादि तत्र-तत्र भाष्यप्रयोगः ।

---

१. 'उभयोरपि, अविशेषात्' ख. पाठः ।

२. 'व्यर्थ एव स्यादिति दिक्' ख. पाठः ।

३. 'स्वरादिनिपातम्' इत्यारभ्य 'न स्यात्' इत्यन्तः क. ग. पाठः ।

अत्रेदं बोध्यम्—उभयोराकृतिगणत्वेऽपि, येषां निपातस्वर इष्टस्ते चादिषु, अन्ये स्वरादिषु, स्वरद्वयभाजस्तूभयत्रेति ।

'सर्व'शब्दोऽस्ति प्रकारकात्स्न्र्ये । यथा—'सर्वान्नीनो भिक्षुः' । सर्वप्रकाराऽन्नभक्षक इत्यर्थः । अस्ति चाऽवयवकात्स्न्र्ये । यथा—'सर्वः पटो दग्ध' इति । तत्राऽऽद्यो न गृह्यते । 'अव्ययेभ्यः सर्वासामेकवचनानि उत्पद्यन्ते' इति पक्षेऽपि[1] सूत्रस्याऽसम्भवदुक्तिकत्वाऽऽपत्तेः । अतो द्वितीयस्यैव ग्रहणमित्याशयेनाऽऽह—**यस्मात्सर्वेति** । वचनत्रयाऽऽत्मिकेत्यर्थः । (त्रिके[2] एव प्राचां विभक्तिव्यवहारात्) ।

**नेति** । किन्त्वेकवचनमेवोत्पद्यते इति भावः ।

ननु 'कर्मणि द्वितीया' 'द्व्येकयोरि'त्यादीनां स्वादिवाक्येनैकवाक्यत्वादव्ययेभ्यः स्वादीनां प्राप्तिरेव नाऽस्ति । 'अव्ययादाप्सुप' इति ज्ञापकाऽऽश्रयणे च सर्वाऽपीति, किमुच्यते-'स[3]र्वा नोत्पद्यते' इति ? । अयं पक्षः-'अव्ययादाप्सुपः' 'बहुषु बहुवचनमि'त्यादिसूत्रेषु भाष्ये स्पष्टः ।

किञ्च[4] 'विहितानां नियम' इतिपक्षेऽप्यस्य नोपपत्तिः । तथा हि—अत्र पक्षे सर्वेष्वर्थेषु प्रातिपदिकात्सर्वविभक्त्युत्पत्तौ लोपेनेव जातस्य निवृत्तिः । एकप्रकृतेः कथं सर्वेषां परत्वमिति चेन्न । विधेयतया प्रधान-

---

१ अपि ख. नास्ति ।

२. अयं ख पाठः क. ग. नास्ति ।

३. 'सर्वा नोत्पद्यते (इति) । इति चेत्सत्यम् । सामर्थ्यात् 'सर्वे'त्यस्य 'सर्वधर्मविशिष्टा विभक्तिरि'त्यर्थः । एवं'च ज्ञापकादुत्पन्नानां निरर्थकत्वेन. विशिष्टविभक्त्यनुत्पत्तिरस्त्येव । कर्त्राद्यर्थकत्वस्याऽपि विभक्तिधर्मत्वा-दिति' इति ख. पाठः ।

४. 'यद्वा भिन्नवाक्यतया नियमः । अत्र पक्षे च सर्वेष्वर्थेषु' इति ख. पाठः ।

प्रत्ययाऽनुरोधेन गुणभूतप्रकृतिभेदकल्पनात्। नियमेन प्र[1]त्ययनिवृत्तौ च कल्पितगुणस्वरूपं स्वत एव निवर्तते। स च द्विविधः—अर्थनियमः, प्र[2]त्ययनियमो वा। अन्त्योऽपि द्विविधः–प्रकृताऽर्थाऽपेक्षः, सामान्याऽपेक्षो वा। इदं पक्षत्रयमपि 'सार्वधातुके यक्' 'बहुष्वि'त्यादिसूत्रेषु भाष्ये स्पष्टम्। तत्र 'कर्माद्यर्थयोग्यप्रातिपदिकाच्चेत्कर्मणि विभक्तिस्तदा द्वितीयैव' 'कर्मादिरहिततद्योग्यप्रातिपदिकाऽर्थे तादृशप्रातिपदिकात्प्रथमैवे'त्यादिर**र्थनियमः**। अत्र पक्षे सर्वाः सप्ताऽपि विभक्तयोऽव्ययेभ्यः, विभक्तीनामनियतत्वादिति 'बहुष्वि'त्यत्र भाष्ये स्पष्टम्।

'कर्माद्यर्थयोग्यप्रातिपदिकाच्चेद् द्वितीया तदा कर्मण्येव, न करणाऽऽदौ' 'सङ्ख्यावदर्थयोग्यप्रातिपदिकाच्चेत् एकत्वादावेव एकवचनाऽऽदि, न द्वित्वादावि'त्यादिः **प्रकृताऽर्थाऽपेक्षः प्रत्ययनियमः**। तत्र 'न 'करणादा'वित्यादिशब्देन कर्मादियोग्यतद्रहितप्रातिपदिकाऽर्थस्याऽपि ग्रहणम्। तादृशप्रातिपदिकाच्चेत्तदर्थे एव प्रथमा, न कर्मादा'विति च **प्रथमानियमः**। अत्राऽपि पक्षेऽव्ययेभ्यः सप्ताऽपि विभक्तयः सम्पूर्णा इत्यपि त[3]त्रैव भाष्ये स्प[4]ष्टम्।

अथ 'प्रातिपदिकाच्चेद् द्वितीया तदा कर्मण्येव, नाऽन्यत्रे'त्यादिः **सामान्याऽपेक्षः प्रत्ययनियमः**, तदाऽव्ययेभ्यो विभक्तिर्न प्राप्नोतीति ज्ञापकादेव [5]सेत्यपि 'बहुष्वि'ति सूत्र एव भाष्ये स्पष्ट[6]म्। तथा हि—द्वितीयादीनामभावस्तावत्स्पष्ट एव। प्रथमाऽपि न। प्रातिपदिकाऽर्थसूत्रे

---

१. 'प्रत्ययनिवृत्तौ च गुणः स्वत एव' ख. पाठः।

२. 'प्रत्ययनियमश्च' इति ख. पाठः।

३. 'तत्रैव भाष्ये। अत्र पक्षद्वयेऽपि सर्वा विभक्तिर्नोत्पद्यते' इत्यस्योक्त एवाऽर्थो भाष्ये स्पष्टः' इति ख. पाठः, क. ग. नास्ति।

४. 'स्पष्टम्' इति ख. नास्ति।

५. 'सेति' इति ख. पाठः।

६. 'स्पष्टम्' इति ख. नास्ति।

'मात्र'ग्रहणेन, पर्युदासन्यायेन च 'प्रातिपदिकाच्चेत्सा कर्माऽऽदियोग्यकर्माऽदिरहित-प्रातिपदिकाऽर्थे एव, नाऽन्यत्रे'त्येव तन्नियमात्। यद्यपि[1] तादृशनियमाऽसम्भवोऽपि तत्रैव भाष्ये उक्तः, सुपां, तिङां च सङ्ख्याकर्मोभयाऽर्थत्वेन 'कर्मण्येव, नाऽन्यत्रे'त्यादेर्वक्तुमशक्यत्वात्, तथापि[2] सङ्ख्याकर्माद्युभयार्थकत्वोक्तिसामर्थ्यात् 'कर्मण्येव, न तु तदभावे' इत्येवं नियमाऽङ्गीकार' इति **केचित्**।

'पचतिकल्पमि'त्यादौ तु क्रियायाः कर्त्तृत्वकर्मत्वस्वीकारेण, शब्दशक्तिस्वाभाव्यान्नपुंसकलिङ्गेनेव, एकत्वसङ्ख्ययाऽपि तद्वाच्याऽर्थस्य योगस्वीकारेण कर्त्तृत्वकर्मत्वाऽर्थकविभक्त्योः, प्रथमायाश्च एकवचने भवत्येव। द्वित्वादिकन्तु न। भेदेन क्रियाया अनुपस्थितेः। अतो न द्विवचनाऽऽदि। अन्यास्तु अर्थनियमे, प्रकृताऽर्थापेक्षप्रत्ययनियमे चाऽनभिधानाद्वारणीयाः। यदि तु कर्त्तृत्वाद्यर्थिकाऽपि नेष्यते, तदा साऽपि तथैव[3] वारणीया।

एवञ्चैष्वपि पक्षेषु 'सर्वा नोत्पद्यते' इत्यसङ्गतमेवेति चेदत्राहुः—'तद्धितश्चे'तिसूत्रे **भाष्यकृतः**—'एकवचनमि'त्येव सूत्रं कार्यम्, 'एक'ग्रहणं च न कार्यम्। विभक्तिविधावुद्देश्यतावच्छेदकाऽवच्छिन्नादेकवचनमि'त्युत्सर्गः। तस्य द्वित्वबहुत्वयोरर्थयोरितरे[4] बाधके भविष्यतः। एवञ्चैकत्वव-

---

१. 'यद्यपि' इत्यस्य स्थाने 'किञ्च' इति ख. पाठः।

२. 'तथापि' इत्यारभ्य 'केचित्' इत्यन्तः क. ग. पाठः ख नास्ति।

३. 'तथैव वारणीया। यदि तु सङ्ख्याकर्मोभयाऽर्थकत्वोक्तिसामर्थ्यात् 'कर्मण्येव, न तु तदभावे' इत्येवं नियमाऽङ्गीकारान्नाऽसम्भवः, प्रातिपदिकार्थसूत्रे च 'मात्र'ग्रहणं प्रत्याख्यायते, तदा प्रथमा प्राप्नोत्येव। नन्वेवमपि वचनत्रयनियमात्तदप्राप्तिरेवेति चेदत्राहुः' इति ख. पाठः।

४. 'इतरे बाधके भविष्यतः तत्र प्रथमाऽतिक्रमे कारणाऽभावादनेकनियमबाधे गौरवाच्च प्रथमैकवचन-'सु'-'त'योरेवाऽनेनोत्सर्गत्वं बोध्यते। एतेन 'विनिगमनाविरहात्सर्वविभक्तीनामनेनैकवचनमि'त्यपास्तम्।

त्यपि भविष्यति, अलिङ्गाऽसङ्ख्येभ्योऽव्ययेभ्यश्च। द्विवचनबहुवचनविधायकयोर्द्वि-बहुग्रहणसामर्थ्यान्महासंज्ञाबोध्यैकत्वाऽभावेऽपि सोरेव[1] प्रवृत्तेः। द्वित्वबहुत्वयोर्द्विवचनबहुवचनोक्तावर्थादेकवचनस्यैतद्वचनं विनाऽपि तदभावे कर्मादौ सिद्धत्वेन, सामर्थ्यादप्राप्तप्रापणार्थमेतदिति, कर्माद्यभावेऽप्येतत्प्रवर्त्तत इति विनिगमनाविरहात्सर्वविभक्तीनामेकवचनमनेन। प्रथमाऽपि मात्रग्रहणाद्यत्प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यसम्भावना तत्रैवेति, तस्या अप्यप्राप्तिरव्ययेभ्यः। अत एव 'सर्वा विभक्तय' इति बहुवचनान्तविग्रहं त्यक्त्वा, एकवचनान्तविग्रहो दर्शितो भाष्ये। एवञ्चैतत्पक्षे सङ्ख्याप्रकरणं विध्यर्थमेव। ध्वनितं चेदनेकवचनस्यौत्सर्गिकत्वमितरयोस्तद्बाधकत्वं च वदता भाष्यकृता।

यत्त्वेतत्पक्षेऽपि 'द्व्येकयोरि'त्यादेर्नियमत्वमि'ति, तत्तु न्यायविरुद्धं, भाष्यविरुद्धं च द्वित्वाद्यभावे द्विवचनादिप्रवृत्तिस्तु महासंज्ञाबलादेव वारयितुं शक्येति बोध्यम्।

अत्रैव सूत्रे **कैयटस्तु** प्रथमातिक्रमे कारणाऽभावादनेकनियमबाधे गौरवाच्च प्रथमैकवचनसु-तयोरेवाऽनेनोत्सर्गत्वं बोध्यते। सुप्तिङ्विधिभ्यामस्य वाक्यैकवाक्यत्वाच्च न तिङन्तादिभ्यः प्रसङ्गः। यद्वा महासंज्ञाकरणादस्य क्वाचित्कत्वम्, तेन नाऽतिप्रसङ्गः (इति)। स्पष्टं चेदं रूपप्सूत्रे **कैयटेऽप**।

तत्र भाष्योक्तमेव ज्यायः। स्वादिसूत्रे प्रथमायाः प्राथम्येऽपि, नियमशास्त्रपर्यालोचनया द्वितीयाया अपि तत्त्वात्तन्न विनिगमकम्। नाऽप्येकवचनपदार्थज्ञानायाऽत्र स्वादिसूत्र-तिबादिसूत्रयोरुपस्थितिरावश्यकी येन

---

यत्तु ङ्याप्सूत्रात्परमिदं कार्यमिति। तन्न। 'भूयते' इत्यादौ भावे एकवचनाऽनापत्तेः। महासंज्ञयोपादानाच्चाऽस्य क्वाचित्कत्वम्। तेन नाऽतिप्रसङ्गः। एतेन 'सु-तावि'त्येव वाच्यमि'त्यपास्तम्। स्पष्टं चेदं 'रूपप्'सूत्रे कैयटेऽपि' इति ख. पाठः।

१. 'तत्प्रवृत्तेः' इति क. पाठः। 'सोरेव' इति च तट्टिप्पणी।

तत्रत्यं प्राथम्यं विनिगमकं स्यात्। यदुपस्थितौ यदुपस्थितिर्नियता, यथा चतुर्णामुपस्थितिकाले त्रयाणां, तत्प्राथम्यं हि विनिगमकम्। 'निजां त्रयाणामि'त्यत्र 'त्रयाणां'ग्रहणेन, आद्युदात्तश्चे'तिसूत्रे अदिग्रहणेन च पाणिनिना स्वशास्त्रे एतन्न्यायाऽनाश्रयणज्ञापनाच्च। एवं च 'तद्धितश्चे'-ति सूत्रमेव 'द्व्येकयोरि'ति सूत्रे एकग्रहणमदृष्टार्थमेव, न तु वाक्यार्थाऽन्व-यी'त्यर्थज्ञापकम्।

यत्तु 'एकवचनमि'त्येव सूत्रं कार्यम्। 'कर्मणि द्वितीये'त्यादि'द्विब-ह्वो'रित्यादिश्च प्रकृतार्थापेक्षः प्रत्ययनियमः। ततश्चाऽव्ययेभ्यः सर्ववि-भक्तिप्राप्तौ 'एकवचनमि'ति नियमार्थम्-'एकवचन-तद्भिन्नयोः प्राप्तावेक-वचनमेवे'ति। तन्न। सङ्ख्याबोधकानामपि प्रकृतार्थाऽपेक्षप्रत्ययनियमत्वे, द्वित्वेऽप्येकवचनप्राप्त्या, त्वदुक्तनियमेन तत्राऽप्येकवचनाऽऽपत्तेः। एवञ्च 'द्वित्वबहुत्वयोरेवे'ति नियमो, द्विवचनादिविधिश्च व्यर्थ इति, तेन भव-दुक्ताऽर्थाऽभावस्यैव ज्ञापनम्। अत एव भाष्ये 'एकवचनमुत्सर्ग' इत्युक्त-मिति दिक्।

य[1]दपि 'कर्मणि द्वितीये'त्यादौ सामान्याऽपेक्षः प्रत्ययनियमः। प्रथमा तु प्रातिपदिकार्थमात्रे एवेति, नियमेन कर्माद्याधिक्यस्थले एव वार्यते। 'द्व्येकयोरि'त्यत्र तु सजातीयापेक्षः प्रत्ययनियम इति, तदाऽ-व्ययेभ्यः सम्पूर्णा प्रथमेति पक्ष' इति। तन्न। वैषम्ये मानाऽभावात्। भाष्याऽनुक्तत्वाच्च।

यद्यपि सम्पूर्णसप्तविभक्त्युत्पत्तावपि 'सर्वे'त्यस्य सर्वधर्मविशिष्टेत्यर्थः। एवञ्च तासां निरर्थकत्वेन विशिष्टविभक्त्यनुत्पत्तिरस्त्येव, कर्त्राद्यर्थकत्व-स्याऽपि विभक्तिधर्मत्वादि'ति। तदपि न। प्रकारकात्स्न्र्याऽवयवकात्स्न्र्य-योरिव धर्मकात्स्न्र्यस्य सर्वशब्दार्थतायाः क्वाऽप्यदृष्टत्वात्। ईदृशलक्षणया सर्वशब्दप्रयोगाऽसाधुत्वस्यैव भाष्यबलेन लाभाच्चेति दिक्।

---

१. ख. पाठेऽयं 'यद्यपि' इत्यारभ्य दिगन्तो ग्रन्थः ६९७ पृष्ठे टिप्पण्यां प्रायो वर्त्तते।

**'घट'** इत्युक्ते एकत्वनिश्चयस्तु प्रकरणाऽऽदितो भविष्यति, तव 'जातावेकवचनं, व्यक्तौ वे'त्यर्थनिर्णयवत्। येषां तु स्वरादीनां कर्मत्वाऽऽदिशक्तियोगस्तत्र द्वितीयादिकं भवत्येव। तस्याऽप्येकवचनमेव। तस्याऽनियतत्वात्। अव्ययीभावात्तु 'नाऽव्ययीभावा[1]दि'त्युक्त्या सर्वकारकसम्बन्धात्सर्वविभक्त्येकवचनम्। नेत[2]रे। सङ्ख्यासम्बन्धे मानाऽभावेनोक्तयुक्तेः। अत एव 'असर्वविभक्त्यव्ययमि'ति न्यासमाश्रित्य 'स्वरादी'ति पञ्चसूत्र्या भाष्ये प्रत्याख्यानं सङ्गच्छते। एवञ्च 'अव्ययेभ्यः सम्पूर्णा सर्वा विभक्तय' इति 'बहुष्वि'त्यादिसूत्रभाष्योक्तपक्षस्त्वेकदेशिनो, न सिद्धान्तिन इति तत्त्वम्।

**'असर्वविभक्तिरि'ति** पर्युदासलभ्यो, बहुव्रीहिलभ्यो वा विशेष्य इत्यभिप्रेत्याह–**तद्धितान्त इति**। केवलस्य तद्धितस्य प्रयोगाऽभावात्फलाऽभावाच्च संज्ञाविधावपि त[3]दन्तविधिरिति भावः। तद्धितः किम्? एकः, द्वौ। असर्वविभक्तिः किम्?। औपगवः। नन्वेवमपि 'पचतिकल्पमि'त्यादावतिव्याप्तिः, प्रागुक्तरीत्या तेभ्य एकवचनस्यैव प्राप्तेः। एवमु[4]भयशब्देऽतिव्याप्तिः। ततो द्विवचनाऽनुत्पादात्। अत आह–**परिगणनमिति**।

---

१. 'दित्यादिज्ञापकात्सर्वकारकसम्बन्धात्' ख पाठः।

२. 'नेतरे। उक्तयुक्तेः। अत एव 'असर्वविभक्तिरि'ति न्यासमाश्रित्य 'स्वरादी'ति पञ्चसूत्र्या भाष्ये प्रत्याख्यानं सङ्गच्छते। यत्तु 'द्वितीया कर्मणी'त्यादौ सामान्याऽपेक्षः प्रत्ययनियमः। 'प्रथमा प्रातिपदिकाऽर्थे एवे'त्यनेन कर्माद्याधिक्यस्थल एव सा निवार्यते। सङ्ख्यावाक्ये तु सजातीयाऽपेक्षः प्रत्ययनियमः—'एकत्वे एवैकवचनं, न सङ्ख्यान्तरे' इति, तदाऽव्ययेभ्यः प्रथमाया एव वचनत्रयमि'ति पक्षलाभ' इति। तन्न। वैषम्ये प्रमाणाऽऽभावादिति दिक्'—इति ख. पाठः।

३. 'तदन्तविधिरित्याहुः' ख. पाठः।

४. 'एवम्' इत्यारभ्य 'अनुत्पादात्' इत्यन्तः क. ग. पाठः ख. नास्ति।

**तसिलादय इति** । 'पञ्चम्यास्तसिलि'त्यारभ्य 'द्वित्र्योश्च धमुञि'त्यन्ता इत्यर्थः । **शस्प्रभृतय इति** । 'बह्वल्पार्थाच्छसि'त्यारभ्य 'अव्यक्तानुकरणादि'ति डाजन्ताः । यस्तु 'इवे प्रतिकृतावि'त्यधिकारे'प्रत्नपूर्वविश्वेमात्थाल्छन्दसी'ति थाल्, तस्य स्वरादिगणे 'आस्थालावि'ति पाठेनाऽव्ययत्वम् । तत्र 'इण आसिरि'त्युणादिसूत्रविहित 'आसिः'। 'अयाः'[1] इत्युदाहरणम् । 'आदि'विधायके 'छन्दसी'ति नाऽनुवर्त्तते । एवं च लोके विभक्तिरहितप्रयोगायाऽव्ययत्वमावश्यकम् । अत्र च स्वरादावासिपाठ एव लिङ्गम्[2] । 'अयासा वयसे'ति तु वेदे च्छान्दसमित्याहुः ।

**अम् आम्**—'अमु च च्छन्दसि' 'किमेत्तिङव्ययघादामु'इति विहितौ । **कृत्वोऽर्था** इति । कृत्वसुच्-धाः । **तसिवतीति** । 'तेनैकदिक्', 'तसिश्च', 'तेन तुल्यमि'त्यादिना विहितौ ।

**नानाञाविति** 'विनञ्भ्यां ना-ना नसहे'तिविहितौ ।

**कृन्मेजन्तः** । **कृद्यो मान्त** इति । यत्तु 'कृदन्तस्यैतद्विशेषणमि'ति । तन्न । कृत एव श्रुतत्वात्, स्वरादौ प्रशान्शब्दपाठाच्च । अन्यथा श्रुत्या मान्तत्वेन, प्रत्ययलक्षणात्कृदन्तत्वेन चाऽनेनैव सिद्धे, तत्पाठो व्यर्थ एव स्यात् । न च 'शान तेजने' इत्यस्यैव क्विपि तद्रूपं, न तु शाम्यतेरिति वाच्यम् । एतत्सूत्रस्थभाष्यप्रामाण्येन तस्मात्क्विब्विचोरनुपत्तेः । प्रयोगे नलोपाऽऽपत्तेश्च । ग[3]णेऽविभक्तिकानामेव पाठात्'नान्ताऽनुकरणेन तदभाव'

---

१. 'अया' इत्युदाहरणमित्याहुः । अपरे त्विदं न क्षमन्ते । 'अयासा वयसे'-त्यपि वेदे दर्शनात्. 'आसेश्च छन्दसी'ति प्रत्ययविधानादासेः पाठो व्यर्थः । यदि तु विभक्तिरहितोऽपि क्वचित्प्रयोगो दृश्यते, स एव च्छान्दसत्वाद्वाच्य इति । वस्तुत आसिविधायके' इति ख. पाठः ।

२. 'लिङ्गमित्याहुः' ख. पाठः ।

३. 'गणे त्वविभक्तिकानामेव स्वरादिवत्पाठस्य सत्त्वेन तत्र नान्तानुकरणेन तदभाव इति वक्तुमयुक्तम्' ख. पाठः ।

इति वक्तुमयुक्तम् । मान्तपाठे शङ्काया एवाऽभावाच्च । अत एव 'प्रतामौ' लवमाचक्षाणो 'लौरि'त्यादौ नाऽतिप्रसङ्गः । लिङ्गसङ्ख्याकारकाऽन्वयि-[1] त्वाच्च । न[2] च 'आधये'[3] 'हे आधे' 'कुम्भकारेभ्य' इत्यादौ गुणे, एत्वे च कृते एजन्तत्वेन संज्ञाऽऽपत्तिः । न च बहिरङ्गत्वेन गुणादेरसिद्धत्वम् । कार्यकालपक्षे लुग्विध्येकवाक्यतापन्नसंज्ञायाः समत्वात् । न च सङ्ख्या-लिङ्गाद्यन्वयित्वेन सत्त्ववाचकत्वान्नाऽत्र तत्प्राप्तिः । महासंज्ञाविरोधात् । तद्विरोधेऽप्यव्ययीभावादाविवाऽत्राप्याप[3]त्तेरिति वाच्यम् । सन्निपातपरि-भाषया बाधात् । न च तया सन्निपातविघातकलुको बाधेऽपि, संज्ञाबाधे मानाऽभावः । 'उपादास्ते'त्यत्र कित्त्वाऽऽप[4]त्तेः । एज्विषयसंनिपातनिमित्त-काऽऽत्वस्य संन्निपातविघातको हि 'क्ङिति चे'ति निषेधः' स परमनया न स्यात् । कित्त्वफलं तु तत्सन्नियोगशिष्टेत्वसिद्धिरेव । एवं च 'उपा[5]देस्ते'-ति रूपं स्यात् । कि[6]त्त्वाऽप्रवृत्तौ तत्सन्नियोगशिष्टत्वादित्त्वस्याऽप्यप्रवृत्तिः । तत्र हि 'किदि'तिव्यपदेशाऽतिदेश एव । इत्त्वप्रवृत्तिकाले कित्कार्यस्याऽ-तिदेश्यस्याऽभावात् । तस्मादनया सन्निपातविघातकशास्त्रस्यैव, तच्छा-स्त्रप्रवृत्तिनिमित्ता-ऽतिदेश-संज्ञानामपि निवृत्तिरवश्यंवाच्या । 'साक्षात्पर-म्परया वा स्वनिमित्तसन्निपातविघातकस्य स्वयमनिमित्तमि'ति परि-भाषाऽर्थः । एतेनाऽत्राऽकजादि स्यादिति परास्तम् ।

---

१. 'अन्वयित्वात्' इत्येव ख. पाठः । चकारस्तत्र नास्ति ।

२. 'न च' इति क. ग. पाठः, ख. नास्ति ।

३. 'आधये, हे आधे, कुम्भकारेभ्य इत्यादौ गुणे एत्वे च कृते एजन्तत्वेऽपि न संज्ञा, संनिपातपरिभाषाविरोधात्' ख. पाठः ।

४. 'कित्त्वापत्तेः । 'क्ङिति चे'ति निषेधः परमनया न स्यात्' क. पाठः ।

५. 'उपादेस्तेति रूपं स्यात्' इति लघुशब्देन्दुशेखरे पाठः । 'उपादास्तेति रूपं स्यात्' इति च क. ख. ग. पाठः ।

६. 'कित्त्वाऽप्रवृत्तौ तु' ख. पाठः ।

न च कार्यकालपक्षे लुगेकवाक्यतापन्नसंज्ञाबाधेऽप्यकजाद्येकवाक्यतापन्ना स्यादिति[1] वाच्यम् । अन्तरङ्गा[2]यां तदेकवाक्यताऽऽपन्नाऽऽव्ययसंज्ञायां बहिरङ्गगु[3]णादेरसिद्धत्वात् । लुगेकवाक्यताऽऽपन्ना तु गुणादितो बहिरङ्गा । उभयोरपि शब्दतः सुबाश्रयत्वाच्चेति दिक् ।

'मेज्भ्यां[4] कृतो विशेषणान्मेजन्तेति लब्धेऽन्तग्रहणस्यौपदेशिकत्वाऽर्थत्वेन, 'आधये' इत्यादौ न दोष' इति **केचित्** । तन्न । समुदायोपदेशाऽभावेन 'उपदेशे नेजन्तं कृदन्तमि'त्यर्थेऽसम्भवाऽऽपत्तेः । 'कृद्यो मान्त, एजन्तश्चोपदेशे, तदन्तस्ये'त्यर्थे शध्यैनाद्यन्तस्याऽव्ययत्वाऽऽपत्तेः । प्रतिपदोक्तपरिभाषया[5] 'आधये' इत्यादौ न दोष इत्यप्याहुः ।

न चैवं 'कारयामि'त्यामन्तस्याऽव्ययत्वं न स्यात्, मान्तस्याऽऽमः कृत्त्वाऽभावात् । एवं[6]च्च लकारस्य कृत्त्वेन कृदन्तत्वात्तस्य प्रातिपदिकत्वेन, तत उत्पन्नसुपो लुगनापत्तिरिति वाच्यम् । इष्टाऽऽपत्तेः । 'आम' इत्यनेन 'लेरि'त्यननुवर्त्य लुक्सि[7]द्धेः । अकच् तु न भवत्येव । अपरिसमाप्ताऽर्थत्वेन कुत्साद्ययोगात् । अपरिसमाप्ताऽर्थत्वं च सङ्ख्याकर्त्रादिविषयकोत्थिताऽऽकाङ्क्षत्वम् । अत एवाऽनुप्रयोगः प्रार्थ्यते । एवं च परिसमाप्ताऽर्थकाऽ-

---

१. 'स्यादिति वाच्यम् । लक्ष्याऽनुसारेण यथोद्देशपक्षस्यैवाऽत्राङ्गीकारात्' इति ख. पाठः ।

२. 'अन्तरङ्गायामव्ययसंज्ञायाम्' ख. पाठः ।

३. 'गुणादेरसिद्धत्वाच्चेति दिक्' ख. पाठः ।

४. 'मेज्भ्याम्' इत्यारभ्य 'इत्यप्याहुः' इत्यन्तः क. कुण्डलितः ख. पाठः । अयं पाठो मनोरमादावपि दृश्यते ।

५. 'परिभाषया च' ख. पाठः ।

६. 'एवञ्च' इत्यारभ्य 'लुगनापत्तिः' इत्यन्तः क. ग. पाठः । ख. नास्ति । 'कृत्त्वाभावादिति वाच्यम्' इत्येव तु ख. पाठः ।

७. इतोऽग्रे—'प्रथमैकवचनस्येवाऽलिङ्गाऽसङ्ख्येभ्य उत्पत्त्या हल्ङ्यादिलोपेनैव सिद्धत्वाच्च' इति ख. पाठः ।

नुप्रयुज्यमानतिङन्तोत्पन्नाऽकजादिभिरर्थस्य द्योतितत्वेन आमन्ते तदप्राप्तिरिति दिक्।

**जीवसे इति।** 'तुमर्थे सेसेनि'ति 'असे' प्रत्ययः। **पिबध्यै इति।** 'तुमर्थे सेसेनि'ति भावे 'शध्यै'प्रत्ययः। यक्तु न, व्यत्ययेन शपः प्रवृत्तेः। यत्तु 'कर्त्तरि शबि'ति। तत्र 'कर्त्तरी'त्यसङ्गतम्। अव्ययकृतां भाव एवोत्पत्तेः। (व्य[1]त्ययेन यगभावमात्रमित्यन्ये)। **उदेतोरिति।** उत्पूर्वादिणो 'भावलक्षणे स्थेणि'ति'तोसुन्'। **विसृप इति।** 'सृपितृदोः कसुन्'।

**अव्ययदाप्।** 'ण्यक्षत्रिये'ति सूत्राल्लुगनुवर्त्तते। [2]**विहितेति।** न च 'अनन्यप्रकृतिरि'ति वक्तव्यम्। 'कुम्भकारेभ्यः। 'न वा, सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति क्नमेजन्तसूत्रस्थं भाष्यं विरुध्येत। त्व[3]द्रीत्या प्रकृते लुकः प्राप्त्यभावादिति वाच्यम्। [4]आप्सुप्भ्यामाक्षिप्ताऽङ्गस्याऽव्ययरूपस्यैव प्रत्यासत्त्या ग्रहणेन भाष्यसामञ्जस्यात्। मूलस्याऽप्यत्रैव

---

१. अयं ख. पाठः। क. ग. नास्ति।

२. 'विहितेति। अत्र प्रमाणन्त्वाग्रहणप्रत्याख्यानपरं भाष्यमेव। अन्यथा 'उच्चैराभ्यां ब्राह्मणीभ्यां कृतमि'त्यादौ लोपायाऽब्ग्रहणस्याऽव्ययानामलिङ्गत्वेऽप्यावश्यकत्वेन, तदसङ्गतिः स्पष्टैव। विहितविशेषणपक्षे तु नाऽयं टाबुच्चैः शब्दाद्विहितः, किन्तु इदम्शब्दादिति न दोषः' इति ख. पाठः।

३. 'त्वद्रीत्या प्रकृते लुकः प्राप्त्यभावादिति वाच्यम्। गुणस्य बहिरङ्गतयाऽसिद्धत्वेन, सत्त्वाऽर्थकत्वेन चाऽव्ययसंज्ञाया एवाऽप्राप्त्या, भाष्यस्य प्रौढिवादपरताया आवश्यकत्वात्। यदि त्वाप्सुप्भ्यामाक्षिप्ताऽङ्गस्याऽव्ययरूपस्यैव प्रत्यासत्त्या ग्रहणादाब्ग्रहणप्रत्याख्यानमपि सङ्गतं, 'क्नमेजन्त'सूत्रभाष्याऽविरोधश्चेत्युच्यते, तदाऽस्तु मूलस्याऽप्यत्रैव तात्पर्यम्' इति ख. पाठः।

४. 'आप्सुप्भ्याम्' इत्यारभ्य 'भाष्यसामञ्जस्यात्' इत्यन्तः क. ग. पाठः।

तात्पर्यम् । अङ्गसंज्ञाकोटौ विहितत्वांऽशप्रवेशेन[1] तेनाऽङ्गोपलक्षणा-दित्याहुः ।

**अत्युच्चैस्—औ इति** । 'इति स्थिते' इति शेषः । **'अत्युच्चैरि**त्युत्तर-पदार्थप्रधानस्तत्पुरुषः । 'औ' इति 'अ' शब्दस्य द्विवचनम् । तत्रैकाऽऽदे-शस्य पराऽऽदिवद्भावात्सुप्त्वम् । नन्व[2]त्युच्चैसावित्यत्राऽधिकरणशक्ति-प्रधानस्याप्युच्चैस्शब्दस्य वृत्तिविषये शक्तिमत्प्रधानत्वाद् द्वितीयान्ततया 'अत्यादयः क्रान्ताद्यर्थे' इति समासेऽपि विभक्तिश्रवणाऽनापत्तिरित्या-शङ्क्य समाधत्ते—**यद्यपीति** ।

**तदन्तेति** । शब्दस्य विशेष्यत्वात् 'प्रयोजनं सर्वनामाऽव्ययसंज्ञायामि'-तिवाचनिकस्तदन्तविधिरिति भावः ।

**न गौणे इति** । अयं भावः—सामानाधिकरण्यसम्बन्धेन लिङ्गाऽऽद्य-नन्वय्यर्थबोधकत्वविशिष्टाऽव्ययपदवत्त्वेन हि 'अव्ययं पदं बोधकमि'ति तस्य संज्ञात्वकरणात्तादृशाऽर्थानां गणेऽनुकरणाऽऽवश्यकत्वे, इतरेषामनु-करणे मानाऽभावः । तत्राऽर्थस्य प्रधानाऽप्रधानन्यायेन, सर्वनामसंज्ञा-साहचर्येण च प्रसिद्धाऽन्तरङ्ग-पदाऽन्तराऽनपेक्षाऽनुपसर्जनीभूतस्यैव ग्रहणेन न समुदायस्य, नाऽप्यवयवस्य, संज्ञेति भावः । अ[3]त एव भाष्ये सर्वनाम-संज्ञासूत्रस्थोपसर्जनप्रतिषेधाऽनुवृत्त्याऽत्युच्चैसावित्यादावव्ययत्वाऽभावमुक्त्वा

---

१. 'विहितत्वांऽशप्रवेशादित्याहुः' ख. पाठः ।

२. 'यत्त्वत्युच्चैसावित्यत्राऽधिकरणशक्तिप्रधानस्याऽप्युच्चैस्शब्दस्य वृत्तिविषये शक्तिमत्प्रधानत्वात् द्वितीयान्ततया 'अत्यादयः क्रान्ताद्यर्थे' इति समासेऽपि[1] द्विवचनमि'ति व्याचख्युस्तन्न । एवं सति सत्त्ववचनत्वादुच्चैस्-शब्दस्याऽप्यनव्ययत्वेन परविशेषणत्वेऽपि क्षत्यभावात् । गौणत्वेन संज्ञाया अभावाच्च । तदेवाऽऽह—यद्यपीति' इति ख. पाठः ।

३. 'अत एव' इत्यारभ्य 'एतन्नोक्तम्' इत्यन्तः क. ग. पाठः, ख. नास्ति ।

---

1. अपि ख. नास्ति ।

तत्प्रत्याख्यानरीत्यैवाऽत्रापि एतत्प्रत्याख्यानमुक्तम्। **अत ए[1]वोच्चैसा-**वित्येव नोदाहृतम्। गौणे सञ्ज्ञाऽभावस्य फलदर्शनार्थं तन्त्रेण गौणप्रधान-साधारणस्याऽत्युच्चैसावित्यस्योक्तेरिति बोध्यम्।

वस्तुतो विहितविशेषणमङ्गाऽऽक्षेपो वा व्यर्थ एव। 'अत्युच्चैरौ''अत्यु-च्चैराभ्यामि'त्यादेरभिधाने मानाऽभावात्। अत एव भाष्ये एतन्नोक्तम्।

**व्यर्थमिति**। न च 'स्त्रीसमानाधिकरणादि'ति पक्षे टापो दुर्वारत्व-मिति वाच्यम्। 'भूतमियं ब्राह्मणी' 'ब्राह्मणीभिर्दारैरि'त्यत्राऽतिप्रसङ्गेन, तत्पक्षस्याऽऽकरे दूषितत्वात्। 'भूत'शब्दः पौतन्यवृत्तिर्नित्यनपुंसकः। तत्र पर्ज्जन्यवल्लक्षणप्रवृत्त्याऽन्तरङ्गत्वाद्ध्रस्वे जाते, टापि, 'लक्ष्ये लक्षणस्ये'ति पुनर्ह्रस्वप्रवृत्तिरिति बोध्यम्।

नन्विदं 'सदृशं त्रिषु लिङ्गेष्वि'तिश्रुतिविरुद्धमित्यत आह—**लिङ्गे-त्यादि**। अयं भावः—यथोपक्रमोपसंहाराभ्यां ब्रह्मपराया अप्यस्याः श्रुते-र्भाष्यप्रामाण्यादत्रोपसंहारस्तथा तत्प्रामाण्यादेव लिङ्गाद्यभावपरताऽपि। श्रुतौ 'विभक्ति''वचन'शब्दौ कारक-सङ्ख्यापराविति। प्रत्ययपरत्वेऽन्यतर-वैयर्थ्याऽऽपत्तेः। 'लिङ्गेष्वि'त्यादिर्विषयसप्तमी। तत्तद्विषये सादृश्यं च लिङ्गाद्यभावाऽऽश्रयत्वेन। तत्र 'सर्वासु विभक्तिषु सदृशमि'त्यसत्त्वभूताऽव्ययपरम्। सत्त्ववाचकस्वादीनां कर्मत्वादिकारकयोगस्य स्यात्।

लिङ्गसादृश्यमव्ययीभावाऽतिरिक्तविषयम्। तस्य लिङ्गयोगसत्त्वात्। सङ्ख्याऽभाव एव तु सर्वसाधारण इति बोध्यम्।

प्रसङ्गादाह—**वष्टीति**। वशेश्छान्दसत्वेनेह प्रयोगश्चिन्त्यः। **भागुरिश्च** आचार्यः। 'अपि'साहचर्यादवेऽपि आदेरकारस्यैव लोपः।

**यथे**ति—'परिगणनमि'**त्येके**। 'उदाहरणमात्रमि'ति **बहवः**॥

**इत्यव्ययानि**।

[इति श्रीनागेशभट्टविरचिते बृहच्छब्देन्दुशेखरेऽव्ययप्रकरणम्]।

---

१. 'अत एवाऽत्युच्चैसो' इति ग. पाठः।

# अथ स्त्रीप्रत्ययप्रकरणम् ।

**स्त्रियमिति** । नन्वचेतनखट्वादिषु कथं 'स्तनकेशवती स्त्री'त्यादिलक्षणलक्षिताऽवयवसंस्थानविशेषरूपलिङ्गमि'ति चेत् । अत्राऽऽहुः— न प्रागुक्तं लिङ्गं वैयाकरणैराश्रयितुं शक्यम् । 'दारानि'त्यादौ नत्वाऽभावप्रसङ्गात् । किन्तु सत्त्वादीनामुपचया-ऽपचय-स्थितिरूपं क्रमेण पुंस्त्व-स्त्रीत्व-नपुंसकत्वरूपं पारिभाषिकमेव । ईदृशाऽवस्थामात्रस्य पदाऽर्थमात्रे सत्त्वादिदं केवलाऽन्वयि । 'इयं व्यक्तिः' 'इदं वस्तु' 'अयं पदार्थ' इति व्यवहाराणां सर्वत्राऽप्रतिबद्धप्रसरत्वात् । इदं चाऽर्थनिष्ठम् । अत एव 'स्वमोरि'तिसूत्रे 'नपुंसका'दित्यनेनाऽसन्दिग्धेनाऽर्थग्रहणेन भवितव्यं, न हि नपुंसकं नाम शब्दोऽस्ती'ति भाष्ये उक्तम् । 'पुंल्लिङ्गः शब्द' इत्यादि तु वाच्यवाचकयोरभेदोपचाराद्बोध्यम् । अर्श आद्यजन्तं वा ।

न चैवमविकारिणि ब्रह्मण्येतदभावेन ब्रह्मबोधकशब्दे नपुंसकताद्यनापत्तिरिति वाच्यम् । साक्षादसत्त्वेऽप्यात्मनि सर्वस्याऽध्यस्तत्वेन, परम्परया तत्राऽपि तत्सत्त्वात् ।

तत्र कश्चिच्छब्द एकलिङ्गविशिष्टाऽर्थे एव शक्तः, कश्चिल्लिङ्गद्वयविशिष्टे, कश्चित्तत्त्रितयविशिष्टे इति लिङ्गाऽनुशासनादिभ्यो निर्णयम् ।

एवं 'मधुशब्देनोपचय-स्थित्युभयविशिष्टं मकरन्दाऽऽदिकमेवोच्यते, उपचयमात्रविशिष्टन्तु चैत्रादिकमि'त्यपि तत एव निर्णेयम् । एषु च पुंसादिशब्दानां वृद्ध्यादिवच्छास्त्रीयः सङ्केतः । तत्र टि-घु-भादिवल्लघुभूतसंज्ञाकरणस्य युक्तत्वेन, गुरुभूतसंज्ञाकरणसामर्थ्यान्नत्वाऽऽदिशास्त्रप्रवृत्तौ लौकिकमपि लिङ्गं निमित्तत्वेनाऽऽश्रीयते । 'कृत्रिमाऽकृत्रिम'न्यायस्त्वनित्यः । तत्र लौकिकेऽसम्भवे शास्त्रीये एव । तत्सम्भवे तु सामानाधिकरण्यसम्बन्धेन शास्त्रीयविशिष्टे लौकिके । न तु केवललौकिके । नाऽपि केवलशास्त्रीये । एवं च स्त्रियां 'पशुने'त्यादिप्रयुक्ते शास्त्रीयलिङ्गे एव नाभावाऽऽदिकम् । पुंपशौ प्रयुक्ते तु शास्त्रीयविशिष्टे लौकिके ।

अत एव 'पशुना यजेते'त्यादौ पुंस्त्वस्य विवक्षितत्वान्न स्त्रिया याग इति मीमांसकोद्घोषः। शास्त्रीयमपि लिङ्गं लौकिकलिङ्गवच्छाब्दबोधे भासते। तथाऽनुभवात्, कोशाऽऽदिप्रामाण्याच्च। उपचयाऽपचययोः स्थितेरपि सत्त्वेन तन्मात्रविवक्षायां नपुंसकत्वमेव। इदमेवाऽभिसन्धाय 'सामान्ये नपुंसकमि'त्युद्घोषः।

[1]**अजाद्य**। 'अत' इत्यत्र वर्णग्रहणात्तदन्तविधिः। तदा—**अजादीनामकारान्तस्य चेति। वाच्यं यत्स्त्रीत्वमिति**। प्रत्ययाऽर्थत्वे हि स्त्रीत्वस्य प्राधान्याऽऽपत्तिः। द्योतकार्थस्य तु विशेषणत्वमेव। किञ्च 'वागा'दिशब्देषु विनाऽपि टापं स्त्रीत्वस्य बोधात्प्रातिपदिकस्य शक्तत्वाऽऽवश्यकत्वेन, टापोऽपि शक्त्यन्तरकल्पने गौरवात्। अत एव 'कृदिकारादक्तिन' इति वार्त्तिके 'अक्तिन' इति चरिताऽर्थम्, अन्यथा क्तिना स्त्रीत्वस्योक्तत्वान्ङीपोऽप्राप्तौ, तद्वैयर्थ्यं स्पष्टमेव। अत एव 'व्यावक्रोशी'त्यादौ 'कर्मव्यतिहारे णच्स्त्रियामि'ति णचि, 'णचः स्त्रियामञि'त्यञि च स्त्रियां विहितेऽपि, स्त्रीप्रत्ययसिद्धिः।

द्योतकत्वपक्षे[2] तु 'व्यतिलुनीते' इतिवद् 'द्विर्बद्धं सुबद्धं भवती'ति न्यायेनाऽनेकद्योतकसमुच्चयेऽपि न क्षतिरिति भावः।

**टाप्स्यादिति**। स च 'प्रातिपादिकादि'त्यधिकारात्प्रातिपदिकादेव। प्रातिपदिकञ्च सन्निधानादजादिरूपमेव।

नन्वजादिष्वकारान्तपाठो व्यर्थः, 'अत' इत्यनेनैव सिद्धेः। तत्राह—**अजाद्युक्तिरिति**। टापः पकारः स्वराऽर्थः। टकारस्तु 'औङ आप' इत्यादौ सामान्यग्रहणाऽविघाताऽर्थः। अन्यथा एकाऽनुबन्धकपरिभाषया तत्राऽस्यैव ग्रहणं स्यात्, न डाप्चापोरिति बोध्यम्। नन्वजादीनामिति व्याख्यानमयुक्तम्, प्रत्ययविधौ पञ्चम्या युक्तत्वेन 'अजादिभ्यष्टाप्भवति, स्त्रीत्वे

---

१. 'अजाद्य। अत्राऽच्प्रत्याहाराऽऽदेर्न ग्रहणम्, 'ऋची'त्यादिनिर्देशात्, गणपाठसामर्थ्याच्च' इति ख. पाठः।

२. 'द्योतकार्थस्य तु विशेषणत्वमेव' इति क, ग. पाठः, ख. नास्ति।

द्योत्ये' इत्यर्थस्यैव युक्तत्वात् । स्त्रीत्वं च प्रत्यासत्त्या प्रकृत्यर्थनिष्ठमेवेत्यत आह—[1]**अजादिभिरिति** । व्याख्यानादिति[2] भावः । अन्यत्र तु 'स्त्रियामि'ति तदन्त[3]स्याऽपि [4]विशेषणम् । एवं च पञ्च सुत्वानो यस्यां सा 'पञ्चसुत्वरी'-त्येव भवतीत्याहुः । **पञ्चाजीति** । पञ्चानामजानां समाहार इति 'तद्धितार्थे'-त्यादिना द्विगौ 'अकारान्तोत्तरपद' इति स्त्रीत्वे, 'द्विगोरि'ति ङीप् ।

ननु 'अजादिभ्य' इतिव्याख्यानेऽपि, प्रत्ययविधौ तदन्तविधिनिषेधान्नाऽत्र टाप्प्राप्तिरिति चेन्न । 'अमहत्पूर्व'ग्रहणेन[5] ज्ञापकेन 'वनो र चे'ति सूत्रे इवाऽत्रापि तदन्तविधिसम्भवात् । अत एव 'अतिधीवरी'त्यादि सिद्ध्यति ।

एतेन 'तदन्तविधावपि 'स्त्रियामि'ति श्रुतत्वादजादीनामेव विशेषणं स्या[6]दि'ति परास्तम् । अनुपसर्जनाऽधिकारेण तदन्तग्रहणस्येव, तत्सत्त्वे 'स्त्रिया'मित्यस्य तदन्तविशेषणत्वमित्यर्थस्याऽपि बोधनात् ।

ननु 'पञ्चाऽज' इतिसमासे 'अज'शब्दोऽस्त्येवेत्यत्राह—**अत्र हीति** ।

---

१. 'अजादिभिरिति । 'अजाद्यतष्टाप्,' 'ऋचि पादः,' 'अन्यतरस्यां ङीप्,' 'ऋन्नेभ्य' इति न्यासेनैव सिद्धे, ङीप्प्रकरणमध्ये पुनष्टाप्करणात् 'अजाद्यत' इत्यस्य प्रत्ययविधित्वेऽपि षष्ठ्यन्तत्वरूपवैलक्षण्यबोधनेन, यत्सामर्थ्यादत्र 'स्त्रियामि'त्यस्योपात्त एव सम्बन्धबोधनादिति भावः'इति ख. पाठः ।

२. 'व्याख्यानादिति भावः' इति क. ग. पाठः । ख. नास्ति ।

३. 'तदन्तस्याऽपि विशेषणम्, तत एव । एवञ्च पञ्च सुत्वानो यस्याम्' इति ग. पाठः । तत एव=व्याख्यानादेवेत्यर्थः ।

४. 'तदन्तस्यापि विशेषणम् । 'उपात्ते एव सम्बन्ध' इत्यर्थे मानाऽभावात्' इति ख. पाठः ।

५. 'अमहत्पूर्वग्रहणेन,' पादोऽन्यतरस्यामि'ति ज्ञापकेन च तदन्तविधिज्ञापनात् । न हि केवलः पाच्छब्दः स्त्रियाम्, ऋचि वा सम्भवति' इति ख. पाठः ।

६. 'स्यादिति परास्तम् । प्रधानत्वेन तदन्तविशेषणताया न्याय्यत्वात् । अनुपसर्जनाऽधिकारेण तदन्तविशेषणत्वबोधनाच्च' इति ख. पाठः ।

समाहारनिष्ठस्त्रीत्वस्य समुदायवाच्यत्वेऽपि, नाऽजशब्दवाच्यत्वमिति भावः। न च[1] समुदायस्याऽवयवाऽनतिरेकेण समाहारस्याऽजशब्दार्थत्वमप्यस्त्येवेति वा[2]च्यम्। सामर्थ्येनाऽजादिमात्रवाच्यस्त्रीत्वस्यैव ग्रहात्।

**चटकेति**। क्षिपकादित्वात् 'प्रत्ययस्थादि'तीत्त्वं न। **मूषिकेति**। 'वृश्चिकृषोः किकनि'त्यनुवर्त्तमाने 'मुषेर्दीर्घश्चे'तीकारमध्यो 'मूषिक'शब्दः। 'मूष स्तेये' इति दीर्घोपधात्संज्ञायां क्वुनि 'मूषक'शब्दः। ततोऽप्ययं टाप्। 'प्र[3]त्ययस्थे'तीत्त्वं विशेषः। 'व्याघ्री'त्यादिवत्संज्ञात्वेऽपि जातित्वाऽनपायात्। **भस्त्रफलेति**। भस्त्रेव फलानि यस्या इति विग्रहः।

**ह्रस्व इति**। असंज्ञायान्तु 'भस्त्राफले'त्येव।

**संभस्त्रेत्यादि**-'पाककर्त्रे'तिप्राप्तङीषो बाधनाऽर्थम्। एवं 'सदजि'ति, 'मूलान्नञ' इति च वार्त्तिकं बोध्यम्। 'सत्प्राक्काण्डे'ति पाठो भाष्यविरुद्ध इति ध्वनयन्नुदाहरति–**प्रत्यक्पुष्पे**ति। एवं 'श्वेतफला' 'त्रिफले'त्यप्यत्र बोध्यम्। इदं च 'पाककर्णे'ति सूत्रे भा[4]ष्ये स्पष्टम्।

---

१. 'न चाऽजहत्स्वार्थायां वृत्तौ समाहारस्य' ख. पाठः।

२. 'इति वाच्यम्। तत्पक्षेऽपि पद्मत्वविशिष्टस्य पङ्कजपदात्समुदायवृत्तिमात्रेणोपस्थितिवत्समाहारस्य समुदायवृत्तिमात्रोपस्थाप्यत्वाऽङ्गीकारेणाऽदोषात्। प्रकृते च सामर्थ्येनाऽजादिमात्रवाच्यस्त्रीत्वस्यैव ग्रहात्। 'परमाजे'त्यादौ तु पूर्वोत्पन्नस्यैव टापः श्रवणम्। 'अत्यजे'त्यादौ त्वदन्तत्वप्रयुक्तः पुनष्टाप्। 'पञ्चाजी'त्यत्र तु 'द्विगोरि'ति ङीपा परत्वात्स बाध्यते। 'अजादिभ्य' इति व्याख्याने तु तदन्तांऽशोऽचरितार्थत्वाद् 'द्विगोरि'ति ङीपो बाधकः स्यादिति भावः। षष्ठ्यन्तत्वे तु फलाऽभावान्नाऽजाद्यंशे तदन्तविधिरिति बोध्यम्' इति ख. पाठः।

३. 'प्रत्ययस्थेतीत्वं विशेषः। यत्तु संज्ञाया अजातित्वात् क्वुनन्तेऽदन्तत्वाट्टाबिति। तन्न। 'व्याघ्रीत्यादिवत् संज्ञात्वेऽपि जातित्वाऽनपायात्' ख. पाठः।

४. 'भाष्ये बोध्यम्' ख. पाठः।

**शूद्रा चेति**। जातिलक्षणङीषो बाधकोऽयम्। इदमपि वार्त्तिकमिहैव सूत्रे भाष्ये पठितम्। अजादिभिः स्त्रीत्वस्य विशेषणेऽपि, न शूद्रशब्देन स्त्रीत्वं विशेष्यते, किन्तु 'शूद्रशब्दाट्टाप् भवति, स्त्रीत्वे, जातिश्चेद्वाच्ये'-त्येव वाक्यार्थ इति तदन्तस्याऽपि प्रकृतित्वम्। 'पञ्चशूद्री'ति समाहारे जातिवाचकत्वाऽभावान्न दोषः। अत एव 'अमहत्पूर्वग्रहणं तदन्तविधौ ज्ञापकमि'त्याकरः सङ्गच्छते। अन्यथा महत्पूर्वके डित्थादिवदवयवाऽर्थाऽसम्बद्धजातिविशिष्टवाचके, शूद्रशब्दवाच्यगतस्त्रीत्वाऽभावाट्टापोऽप्राप्तावमहत्पूर्वग्रहणं व्यर्थमेव[1] स्यादिति **कैयटः**।

**महत्पूर्वान्न**। 'जातिश्चेदि'तीहाऽपि सम्बध्यते। तेन या हि महती शूद्रा 'महाशूद्रे'त्येव सा[2] भवती'ति **भाष्यकृतः**।

अत्र[3] **केचित्**–'महाशूद्रे'त्यत्र समासात्पूर्व[4]मन्तरङ्गत्वात् टाबुत्पत्तेः, निष्पन्नस्य निवारणाऽसम्भवेन च, निषेधे जातिपदाऽन्वयो[5] व्यर्थ' इति। तन्न। पूर्वं जातिमात्रविवक्षया कुक्कुटाण्डवत्कृतपूर्वी कटमितिवच्च शूद्रशब्देन समासं कृत्वा ततः स्त्रीत्वविवक्षायां टाप् यथा स्यादित्यर्थं तस्याऽऽवश्यकत्वात्। या हि महत्त्वगुणविशिष्टा शूद्रा तस्यां विवक्षितायां, जातिमात्रविवक्षया टाबुत्पत्तेः। पूर्वं समासे, ततः स्त्रीत्वविवक्षायां महाशूद्रैव सा भवतीति भाष्याऽक्षरार्थः। अन्यथा कदा चित्तस्यां 'महाशूद्री'-त्यपि स्यादित्याशयात्। अनुपसर्जनाऽधिकारेण प्रधानेन तदन्तविधि-

---

१. 'व्यर्थमेव स्यात्। स्पष्टं चेदं कैयटे' ख. पाठः।

२. 'या हि' इति, 'सा' इति च. ख. नास्ति।

३. 'अत्र हरदत्तः' इति ख. पाठः।

४. 'समासात्पूर्वं टाबुत्पत्तेरावश्यकत्वेन, निष्पन्नस्य' ख. पाठः।

५. 'जाति'पदान्वयो व्यर्थं इति। तन्न। 'उपजनिष्यमाणनिमित्तोऽप्यपवाद-उपसञ्जातनिमित्तमप्युत्सर्गं बाधते' इति न्यायेन पूर्वमपि टापोऽप्राप्तेः'– इति ख. पाठः।

सत्त्वात् 'जातेरि'ति ङीषोऽत्र प्राप्तिः। (अत[1] एव महाशूद्राया अपत्यमित्यर्थे माहाशूद्रेयस्यापि सिद्धिः। शूद्राशब्देन तु महाशौद्रेय एव स्यात्)। एवं समासे 'परमाजे'त्यादौ टाप्सिद्ध्यर्थमजाद्यत इत्यत्राऽपि तदन्तग्रहणमावश्यकमिति दिक्।

विधिवाक्ये जातिविशेषणस्य कृत्यमाह—**पुंयोगे त्विति**। पुंयोगश्च जन्यजनकभावोऽपि। तेन 'वैश्याशूद्रयोस्तु राजन्यान्माहिष्योग्रौ सुतौ-स्मृता वि'ति सिद्धम्[2]।

---

१. अयं पाठः क कुण्डलितः। ख. ग. नास्ति।

२. 'इति सिद्धम्। अपरे तु 'शूद्रे'त्येव गणे पाठ्यम्। गौणमुख्यन्यायाज्जातिलक्षणङीषेव बाधिष्यते। पुंयोगे हि गौणी वृत्तिः। महाशूद्री'त्यत्र तु न शूद्रशब्दाऽर्थसमवेतं स्त्रीत्वम्, अवयवस्याऽऽनर्थक्यात्, डित्थादिवत्। न त्वयं पङ्कजादिवद्योगरूढः। तत्र शूद्रत्वजात्यङ्गीकारस्य सर्वतन्त्रविरुद्धत्वात्। 'आभीरी तु महाशूद्री जातिपुंयोगयोः समे'त्यमरः। 'ब्राह्मणादुग्रकन्यायामाभीरः। नृपाच्छूद्रायामुत्पन्ना चोग्रकन्ये'ति स्मृतिः। एकरूपेणैवाऽर्थस्य न्याय्यत्वात्तदन्तविधौ फलाऽभावाच्चाऽत्राऽपि शूद्रशब्देनैव स्त्रीत्वं विशेष्यते इत्याहुः। अत्र वदन्ति—इदमेव जातिग्रहणं ज्ञापकम्-अत्र सूत्रे गौणमुख्यन्यायाऽप्रवृत्तेः। तेन-'अजस्य स्त्री', 'अश्वस्य स्त्री'त्यर्थेऽपि 'अजा' 'अश्वे'त्येवेति।

यद्वा 'पदकार्यविषया से'त्यर्थे इदं ज्ञापकं बोध्यम्। किञ्चाऽनुलोमसङ्कराणामपि मातृजातीयत्वाच्छूद्रत्वमपि तत्राऽस्ति। तद्व्याप्या एव तास्ता जातयः। अत एव मातृजातिवृत्तिरेव तेषामुक्ता स्मृतिषु। एवं च शूद्रशब्दार्थसमवेतस्त्रीत्वस्य तत्र सत्वादस्त्येव टापः प्रसङ्ग इत्यमहत्पूर्वेत्यावश्यकमेव।

'जाति'रित्यप्यावश्यकमेव। अन्यथा 'महती शूद्रे'त्यर्थेऽकृतव्यूहपरिभाषया पूर्वमपि टाप् न स्यात्। एवं चाऽत्र शूद्रशब्दो नाऽत्यन्तमनर्थकः। जातिप्रत्ययश्च शूद्रशब्देन समास एव, न तु शूद्राशब्देन समास इति

परे तु 'शूद्रा जातिरि'त्येव गणे पाठ्यम् । 'शूद्रशब्दाऽर्थस्य स्त्रीत्वे' इत्येवाऽर्थः । न च गौणमुख्यन्यायाज्जातिलक्षणङीषेव बाधिष्यते, पुंयोगे हि गौणी वृत्तिरिति जातिग्रहणमनर्थकमिति वाच्यम् । तस्य न्यायस्य पदकार्यविषयत्वात् । एवं चाऽजस्य स्त्रीत्यर्थे-अजा इत्येव । सदृशलाक्षणिकत्वेन गौणत्वं, न तु लाक्षणिकत्वमात्रेणेति, अस्य न्यायस्याऽत्र विषयाऽभावाच्च । 'महाशूद्री'त्यत्र न शूद्राऽर्थसमवेतं स्त्रीत्वम्, अवयवस्यास्याऽऽनर्थक्यात् । तत्र शूद्रत्वजात्यङ्गीकारस्य सर्वतन्त्रविरुद्धत्वात् । 'आभीरी तु महाशूद्री जातिपुंयोगयोः समे'त्यमरः । 'ब्राह्मणादुग्रकन्यायामाभीरः । नृपाच्छूद्रायामुत्पन्ना चोग्रकन्ये'ति स्मृतिः । उक्तरीत्या महत्यां शूद्रायां निष्पन्ने महाशूद्राशब्दे शूद्रशब्दाऽर्थसमवेतस्त्रीत्वसत्त्वान्न दोष इत्याहुः ।

अत्र **भाष्यानुसारिणः**—अनुलोमसङ्कराणां मातृजातीयत्वाच्छूद्रत्वमपि तत्राऽस्ति । तद्व्याप्या एव तास्ता जातयः । अत एव मातृजातिवृत्तिरेव तेषामुक्ता स्मृतिषु । यद्वा तज्जातिवृत्तिमत्त्वेन तां जातिं तत्राऽऽरोप्य शूद्रशब्दप्रयोग इति शूद्रशब्दाऽर्थसमवेतस्त्रीत्वस्य तत्र सत्त्वादस्त्येव टापः प्रसङ्ग इत्यमहत्पूर्वेत्यावश्यकमेव । शूद्रशब्दार्थसमवेतस्त्रीत्वेऽपि प्रत्यासत्त्या शूद्रशब्दादेव टाप्स्यान्न तदन्तादिति तदन्तविधिज्ञापकताऽप्यस्य भाष्योक्ता नाऽसङ्गता । अत एव शङ्खेनाऽनुलोमेषु मातृजात्यारोपेणैव 'ब्राह्मणक्षत्रियवैश्यैः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्रा एव भवन्ती'त्युक्तम् । एवञ्चाऽत्र शूद्रशब्दोऽर्थवानेव । जातिप्रत्ययश्च शूद्रशब्देन समासे एव, न तु शूद्राशब्देन समासे इति न कश्चिद्दोषः । 'जाति'रित्यप्यावश्यकम्, उक्तफलाऽर्थम् । अत एव भाष्येऽमहत्पूर्वग्रहणस्य तदन्तविधिज्ञापकत्वमुक्त्वा, यद्येतज्ज्ञाप्य-पञ्चाजी'त्यत्रापि प्राप्नोति । नैष

---

न कश्चिद्दोष इति' ख. पाठः । प्रायः क. ग. पाठतुल्यार्थ एव चायं पाठः । आनुपूर्वीमात्रेण तु केवलं भिन्नः ।

१. 'परे तु' इत्यारभ्य 'दिक्' इत्यन्तः क. ग. पाठ । ख. नास्ति ।

दोषः। अजादिभिः स्त्रियं विशेषयिष्यामः-'अजादीनां या स्त्री'ति। न ह्येतस्याऽमहत्पूर्वतिप्रतिषेधप्रत्याख्याने तात्पर्यम्। तदन्तविधौ ज्ञापकान्तराऽनुक्तेरिति दिक्।

**क्रुञ्चेत्यादि**—त्रयो हलन्ताः। 'क्रुञ्चानालभेत उष्णिहककुभावि'त्यादिप्रयोगदर्शनाददन्ता अपि भाष्ये उक्ताः।

**पुंयोगेऽपीति**। यदा ज्येष्ठादयः। प्रथमजाताऽऽदौ, तदाऽदन्तत्वादेव टाप्। पुंयोगे त्वनेन ङीष् बाध्यत इति सूचयितुम् 'अपि' शब्दः।

**मूलान्नञः**। नञः किम्?। शतमूली। **अमूलेति**। औषधजातिः। अजादिराकृतिगणः। तेन 'निष्फले'त्यादि सिद्धम्। अत एव 'न मु ने' इति सूत्रे 'टायामादेश' इति भाष्यप्रयोगः सङ्गच्छते। 'प्रथ[1]माध्यायचतुर्थपादे 'चमसवदविशेषादि'तिसूत्रे **भाष्यवाचस्पत्योः**रजायां छागे'तिटाबन्तच्छागशब्दप्रयोगो दृश्यते, तस्माच्छागशब्दोऽप्यजादिष्वि'ति **केचित्**।

**उगितश्च**। उगिच्छब्देन प्रातिपदिकस्य विशेषणात्तदन्तविधिः। न च 'प्रत्ययविधावि'ति, 'ग्रहणवते'ति वा प्रतिषेधः। 'उगिद्वर्णग्रहणवर्जमि'त्युक्तेः। तदाह—**उगिदन्तादिति**। न च 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधात्कथं 'भवती'त्यत्र प्राप्तिः। ज्ञापकस्य विशेषाऽपेक्षत्वेन सूत्रोपात्ताऽन्ताऽऽदिशब्द एव तत्प्रवृत्तेः। प्रातिपदिकमात्रग्रहणे तत्प्रवृत्त्यङ्गीकाराच्च। इह च प्रातिपदिकाऽप्रातिपदिकयोर्ग्रहणम्। उगितः प्रत्ययस्याऽपि सद्भावात्। तदाह-**भवतीति**। 'भवतु' इति सर्पादिषूदित् पठितः। 'भातेर्डवतुरि'ति व्युत्पादनन्त्वप्रामाणिकम्। अत्रत्यभाष्याऽसंमतेः। **गणे** उदित्पाठाच्च। शत्रन्तात्तु ङीपि, 'श्यप्श्यनोरि'ति नित्यं नुम्। तदन्तोदाहरणम् 'अतिभवती'त्यादि।

प्रत्ययमुगितमुदाहरति—**पचन्तीति**। 'प्रत्ययग्रहणे' इति परिभाषा तु नेह प्रवर्त्तते, प्रत्ययमात्रग्रहणाऽभावात्, उगितः प्रातिपदिकस्याऽपि सत्त्वात्।

---

१. 'प्रथमाध्याय' इत्यारभ्य 'इति केचित्' इत्यन्तः क. ग. पाठः।

अत एव 'निर्यवमती'त्यादौ न दोष इत्याहुः।

**अञ्चतेरेवेति**। अत्र यद्वक्तव्यं तत् 'उगिदचामि'त्यत्रैवोक्तम्।

**अञ्चतेस्त्विति**। नलोपिनोऽञ्चतेरित्यर्थः।

व्यपदेशिवद्भावलब्धाऽर्थं स्पष्टप्रतिपत्तये आह—**वन्नन्तादिति**। ननु 'वन' इति प्रत्ययग्रहणम्। तत्र 'प्रत्ययग्रहणे यस्मात्स विहित'इति परिभाषया 'बहुधीवरी'त्यादौ कथमस्य प्राप्तिरित्यत आह—**तदन्ताच्चेति**। प्रत्ययग्रहणपरिभाषालब्धवन्नन्तेन प्रातिपदिकविशेषणादिति भावः।

**सामान्येति**। सूत्रे 'वन' इत्यनुबन्धरहितग्रहणान्न तदनुबन्धकपरिभाषेति भावः। इदं च 'मतुवसोरि'ति सूत्रे 'वन उपसङ्ख्यानमि'ति वार्त्तिकव्याख्याऽवसरे, 'जाग्र' इति सूत्रे, 'चा'विति सूत्रे च भाष्यकैयटयोः स्पष्टम्।

नन्वेकानुबन्धग्रहणे सम्भवति, न द्व्यनुबन्धकस्य ग्रहणमित्येव परिभाषाऽर्थः। अत एव 'दीर्घोऽकित' इति सूत्रस्थाऽकिद्ग्रहणस्य 'यंयम्यते' इत्यादौ नुकि दीर्घव्यावर्त्तकस्याऽपवादत्वादेव नुका दीर्घबाधे सिद्धेऽभ्यासविकारेषु बाध्यबाधकभावाऽभावज्ञापकते'ति भाष्ये उक्तम्। अन्यथा ह्राकः कित्त्वसामर्थ्यादभ्यासस्याऽपि कित्त्वमाश्रित्य तत्राऽभ्यासे दीर्घव्यावृत्त्या चारितार्थ्यं स्पष्टमेव। मन्मते तु ह्राकः कित्त्वस्य 'हश्च व्रीहिकालयोरि'-त्यत्र सामान्यग्रहणसम्पादकत्वेन चारितार्थ्यादभ्यासस्याऽर्थवत्त्ववत् कित्त्वे मानाऽभावाज्ज्ञापकतया युक्तैवेति चेन्न।

अर्थवत्त्वस्य बोधाऽऽवृत्त्यादिदोषभियाऽभ्यासेऽनङ्गीकारेऽपि, कित्त्वाऽनङ्गीकारे मानाऽभावात्। 'किञ्च न विद्यते किद्यस्मिन्नि'ति बहुव्रीहिगर्भबहुव्रीह्याश्रयणात्तत्सामर्थ्येनैव व्यपदेशिवद्भावाऽनाश्रयणेन ज्ञापकं सुस्थम्। अत एव भाष्ये 'तदनुबन्धकग्रहणे नाऽतदनुबन्धकस्ये'त्येव परिभाषा पठिता 'टिड्ढे'ति सूत्रे। 'उपात्ताऽनुबन्धव्यतिरिक्ताऽनुबन्धकस्तु अतदनुबन्धक'इति च **कैयटेन** व्याख्यामिति दिक्।

इदं च सूत्रं न[1] ङीप्‌विधायकम्। किन्तु 'ऋन्नेभ्य' इति प्राप्तङीपमनूद्य तत्सन्नियोगेन रभावमात्रविधायकम्। उभयविधौ गौरवात्।

(किञ्चो[2]भयविधाने'अनो बहुव्रीहेरि'ति सूत्रमनन्तरस्येति न्यायेन 'वनो र चे'त्यस्य निषेधकम्, उत 'येन नाप्राप्ति'न्यायेन 'ऋन्नेभ्य' इत्यस्य ?। नाऽऽद्यः। 'बहुश्वे'त्यत्र 'ऋन्नेभ्य' इति ङीबाप[3]त्तेः। 'वनो र चे'ति सूत्रे 'बहुव्रीहौ वे'त्युपसङ्ख्यानस्य सत्त्वेन 'अनो बहुव्रीहेरि'त्यस्य वैयर्थ्याऽऽपत्तेश्च। किञ्चाऽस्य वार्त्तिकस्याऽप्यपूर्वङीप्‌विधायकताऽऽपत्त्या सुपर्वन्शब्दे ङीब्रयोरापत्तिः। सिद्धान्ते तु 'अन उपधाऽलोपिन' इत्येतद्विहितङीबनुवादेन रभावस्य तेन विधानान्नाऽत्र दोषः। एतेनाऽन्त्यपक्षो, 'बाध्यसामान्यचिन्तया उभयबाधकमि'ति पक्षश्च परास्तः। सुपर्वन्शब्दे ङीब्रयोरापत्तेः।

**अतिधीवरीति**। ध्यायतेः 'अन्येभ्योऽपि दृश्यते' इति भाषायां क्वनिपि 'ध्याप्योः सम्प्रसारणमि'ति सम्प्रसारणम्।

**केचित्तु**[4] दधातेः क्वनिप्। ईत्वं च 'घुमास्थे'त्यनेन। न च 'ईत्वमवकारादावि'त्युक्तत्वेन नेह तत्प्राप्तिरिति वाच्यम्। तत्रैव सूत्रे 'पावान' इति प्रयोगस्य वनिपा सिद्धिमाश्रित्य भाष्ये तत्प्रत्याख्यानात्। न च 'शंस्थाः' 'सव्येष्ठा' इत्यत्र क्विपि ईत्वापत्तिः। 'स्थः क चे'ति सूत्रे भाष्ये आद्यस्य, 'अम्बाम्बे'ति सूत्रे द्वितीयस्य च प्रयोगेण, भाष्यप्रयोगादेव तत्र तदभावात्।

'घुमास्थेति'सूत्रस्थः, 'शंस्था' इतिप्रयोगबलेन वार्त्तिकस्य कर्त्तव्यत्वाऽऽवश्यकत्वपरः **कैयटस्तु चिन्त्य** एव। अत एव 'ध्यायतेः सम्प्रसारणमि'ति

---

१. 'नाऽपूर्वङीप्‌विधायकम्' ख. पाठः।

२. अयं ख. पाठः क. कुण्डलितः।

३. इतोऽग्रे--बहुव्रीहौ वेत्यस्याऽप्यपूर्वङीप्‌विधायकताऽऽपत्त्या सुपर्वन्शब्दे ङीप्रयोरापत्तिः' इति ख. पाठः।

४. 'केचित्तु' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. कुण्डलितोऽयं ख. पाठो, मनोरमाशब्दरत्नस्थत्वात्।
के चित्तु=मनोरमाकृतो दीक्षिता इत्यर्थः।

वार्त्तिके 'धोर्ध्यायितेर्दधातेर्वे'ति भाष्यं सङ्गच्छते। 'घुमास्थे'तिसूत्रे 'हली'-त्यस्याऽनजादावित्यर्थात्प्रत्ययलक्षणसूत्रस्य नियमाऽर्थत्वरूपभाष्यमतेऽपि प्रत्ययलक्षणं सुलभमित्याहुः।

**शर्वरीति**। शाधातोः 'अन्येभ्योऽपि दृश्यते'इति वनिप्। **हशन्ताद्विहित इति**। तेन 'शर्वरी'त्यत्र न निषेधः। अर्थवतो वनो ग्रहणान्नेह—'निःशुनी', 'मघोनी'। यत्तु **न्यासेऽस्य** निषेधस्य प्रायिकत्वात् 'अवावरी'त्युक्तं, तद्भाष्याऽनुक्तत्वादप्रमाणम्।

**बहुव्रीहौ वेति**। 'अनो बहुव्रीहेरि'ति प्रतिषेधे प्राप्ते वचनम्। यद्यपि भाष्ये 'बहुव्रीहेरुपसङ्ख्यानमि'त्येव पठितं, न तु 'वा'शब्दः, तथाऽपि नाऽनेन वार्त्तिकेनाऽपूर्वो ङीब्विधीयते, किन्तु 'अन उपधे'त्यनेन सिद्धं वैकल्पिकं[1] ङीपमनूद्य तत्सन्नियोगेन राऽऽदेशमात्रं विधीयते लाघवात्।

अत एवेदमनुपधालोपिनि 'सुपर्वे'त्यादौ न। एवं च विकल्पः फलित इति भावः। न च 'वनोर चे'त्यनेन सिद्धिः। तस्याऽनन्तरस्येति न्यायेन, प्रत्यासत्त्या च 'ऋन्नेभ्य' इति ङीप्सन्नियोगविशिष्टतया, प्रकरणाऽन्तरस्थेन ङीप्यप्राप्तेः। स्पष्टं चेदं भाष्ये। अस्य प्रत्याख्यानप्रकारः'अन उपधे'तिसूत्रे वक्ष्यते। **पक्षे डाबिति**। तेन द्विवचने रूपत्रयमिति भावः।

**कृतसमासान्त इति**। उत्तरसूत्रे ऋच्यभिधेयायां तस्यैव सम्भवादर्थाऽधिकाराऽनुरोधेनेति भावः। तेन पादयतेः क्विबन्तस्य ग्रहणं न।

**द्विपदीति**। 'द्वौ पादावस्या' इति बहुव्रीहौ 'सङ्ख्यासुपूर्वस्ये'ति 'पाद'-शब्दाऽन्तलोपः समासाऽन्तः। ततो ङीपि भत्वात् 'पादः पत्'।

**टाबृचि**। 'पूर्वसूत्रप्राप्तङीपोऽपवाद' इति[2] प्राञ्चः। तच्चिन्त्यम्। 'शेषाद्विभाषे'तिसूत्रस्थभाष्यविरोधात्। तत्र हि—प्रतिपदविहितसमासान्तानां कबभावे सावकाशत्वं भाष्ये उक्तं, तद्रीत्या[3]ऽस्यापि,—पूर्वसूत्रस्य

---

१. 'वैकल्पिकम्' इति क. ग. पाठः। ख. नास्ति।

२. 'इति प्राञ्चः' इत्यारभ्य 'सावकाशत्वात्' इत्यन्तः क. ग. पाठः।

३. 'तया रीत्या' क. पाठः।

वैकल्पिकत्वेन तदभावे,—सावकाशत्वात्। यद्यपि 'पाद'समानाऽर्थक'पद'-शब्दमादाय 'एकपदे'त्यादि सिद्ध्यति, तथाऽपि ऋचि वाच्यायाम् 'एकपादि'त्या[1]दिनिवृत्तये सूत्रमिदम्। अ[2]त्र केवलपाच्छब्दस्य स्त्रियामृचि वाऽसम्भवेनाऽत्र तदन्तविधिर्बोध्यः। 'अजाद्यतष्टाप्', 'ऋचि पादः', 'अन्यतरस्यां ङीप्', 'ऋन्नेभ्यः' इति तु न सूत्रितम्।

**असिद्धत्वादिति**। आपस्तु परिगणितेष्वभावात्तत्राऽसिद्धत्वाऽभावेन आपः प्राप्तिः। इदं च कार्यकालपक्षे। यथोद्देशे तु एकदेशविकृतन्यायेनैव षट्त्वरूपो धर्मः सुलभ इत्युक्तं प्राक्। अयं निषेधस्तदन्तेऽपि भवति। तेन 'प्रियपञ्चा द्रौपदी', 'अतिपञ्चभ्यां कुलटाभ्यामि'त्यादौ न टाप्ङीपौ। बहुवचनस्य शब्दबाहुल्येनैवोपपत्तेः प्राधान्ये एव प्रवृत्तौ मानाऽभावात्। तदन्तविधिस्त्वत्र प्रकरणेऽस्त्येव। 'स्त्रियां यत्प्राप्नोति तन्ने'ति व्याख्यानात् 'अन उपधालोपिन' इति ङीबपि नेति बोध्यम्। ध्वनितं चेदं प्रकृतसूत्रे भाष्ये इति **भाष्यप्रदीपोद्द्योते** निरूपितम्।

**अनो (बहु)। न ङीबिति।** केचित्तु अयमपि बाध्यसामान्यचिन्तया, अर्थाऽधिकाराच्च टा-ङीपोरुभयोरपि निषेधः। अत एव 'बहुधीवभ्यामि'-त्यत्र डाप्ङीपोरभावे, नलोपे, तस्याऽदन्तत्वाट्टाप् दुर्वार' इत्यपास्तम्। ध्वनितं चेदं 'न षडि'त्यत्र भाष्ये इत्याहुः।

**डाबुभाभ्याम्**। 'उभाभ्यां'ग्रहणाऽभावे सन्निहितस्याऽन एवाऽनुवृत्तिः सम्भाव्येत। वचनसामर्थ्यादिव डाप्-निषेधयोः पर्याये सिद्धे, अन्यतरस्याङ्ग्रहणं स्पष्टाऽर्थम्।

**अन उपधा**। 'ब[3]हुव्रीहेरूधस' इत्यतो 'बहुव्रीहेरि'ति, 'सङ्ख्याव्यया-

---

१. आदिपदेन 'एकपदी, द्विपदी, द्विपात्' इत्येषां ग्रहणं बोध्यम्।

२. 'अत्र' इत्यारभ्य 'न सूत्रितम्' इत्यन्तः क. ग. पाठः।

३. 'बहुव्रीहेरूधसः' इत्यारभ्यः 'अनुवर्त्तते' इत्यन्तोऽयमिह क. ग. पाठः। ख. तु अयमनुपदमग्रे पठ्यमानस्य 'तदाह—अन्नन्तादित्यादि' इत्यतः पूर्वं पठ्यते।

देरि'त्यतो ङीबिति चाऽनुवर्त्तते । अनुपसर्जनाऽधिकारे एतत्पाठफलन्तु बहूनि दामानि सन्ति येषु पुरेषु तानि बहुदामानि, तान्यतिक्रान्ता नगरीत्यत्र ङीप् न, 'अनुपसर्जनं योऽनन्तो बहुव्रीहिरि'त्यर्थात् । तदाह—**अन्नन्तादित्यादि** । विध्यर्थमिदम् । न चाऽत्राऽन्यतरस्याङ्ग्रहणं व्यर्थम् । विधानसामर्थ्येनैव डाप्-ङीप्-प्रतिषेधानां पर्यायसिद्धेरिति वाच्यम्[1] । अनुपधालोपि-सुपर्वेत्यादौ साऽवकाशयोर्डाप्प्रतिषेधयोर्[2]रुपधालोपिनि अनवकाशेनाऽनेन ङीपा बाधाऽऽपत्तेः । वस्तुतस्तु 'डाबुभाभ्यामन्यतरस्याम्'[3] 'अनुपसर्जनात्' 'उपधालोपिनोऽन्यतरस्यामि'त्यष्टाध्यायी पाठ्या[4] । डाप्सूत्रे उक्तरीत्या व्यर्थमन्यतरस्याङ्ग्रहणं योगविभागार्थम् । तत्र'अनो बहुव्रीहेरि'ति वर्त्तते । अन्नन्ता[5]द्बहुव्रीहेर्डाप् वेत्यर्थः । 'ऋन्नेभ्य' इति ङीपा सह विकल्पलाभार्थमिदम् । तत 'उपधालोपिनः' इति, नियमार्थम्—'योऽसा[6]वन्यतरस्यामिति विकल्पः स उपधालोपिनोऽनुपसर्जनस्यैव बहुव्रीहेरि'ति । तेन 'सुपर्वे'त्यादि सिद्धम् । न च पूर्वेणैव विकल्पसिद्धावन्यतरस्याङ्ग्रहणं व्यर्थम् । असति हि तस्मिन् नित्याऽर्थो विधिरेव स्यात्, न नियमः । 'बहुराज्ञी'त्यादौ 'ऋन्नेभ्य' इत्येव ङीप् । तेन बहुधीवरी सिद्धा । अन्यथाऽनन्तरत्वात् 'ऋन्नेभ्य' इति ङीपमनूद्य, तत्सन्नियोगेन विधीयमानो रेफोऽनन्तरेण[7] 'अन उपधे'त्यनेन ङीपि न सिद्ध्येत् । एवं च 'बहुव्रीहौ वे'ति न वक्तव्यं भवति । ध्वनितं चेदं

---

१. 'पर्यायेण समावेशसिद्धेः' ख. पाठः ।

२. 'डाप्निषेधयोः' ख. पाठः ।

३. 'डाबुभाभ्याम्', 'अनुपसर्जनात्' 'उपधालोपिनोऽन्यरस्याम्' इत्येवाऽष्टाध्यायी पाठ्या' ख. पाठः ।

४. 'अनो बहुव्रीहेः', 'डाबुभाभ्याम्' 'अनुपसर्जनात्' 'उपधालोपिनो वा' इति पाठ्यम्' इति तु मनोरमाशब्दरत्नपाठः ।

५. 'अन्नन्ताद्बहुव्रीहेर्डाप् वेत्यर्थः' इति क. ग. पाठः । ख. नास्ति ।

६. 'योऽसौ विकल्पः' इति ख. पाठः ।

७. 'रेफः प्रकरणान्तरस्थेनाऽन' उपधेत्यनेन ख. पाठः ।

'वनो र चे'ति सूत्रे भाष्ये इत्याहुः।

**प्रत्ययस्थात्**। 'कादि'त्यकार उच्चारणार्थः[1]। तदाह—**ककारादिति**। विवक्षितत्वे हि 'सर्विके'त्यादौ न स्यात्। तत्राऽकारविशिष्टस्य प्रत्ययस्थत्वाऽभावात्, 'पचतकी'त्यादिसिद्धयेऽकचोऽकारस्य प्रयोगाऽसमवायित्वादिति भावः। अत एव 'न यासयोरि'ति निषेधश्चरितार्थः।

'आपी'ति चाऽऽकारस्य विशेषणम्। सन्निहितत्वात्, साक्षाद्विध्युद्देश्यत्वेन प्राधान्याच्च।

**सर्विकेति**। 'अव्ययसर्वनाम्नामि'त्यकच्। अत्र सामर्थ्याट्टाबकारयोः श्रौताऽव्यवधानमाश्रित्य[2] शास्त्रप्रवृत्तिः। तच्चैकादेशे कृतेऽस्त्येव। ककारव्यवधानन्तु 'कात्पूर्वस्ये'ति शास्त्रबलादेव सोढम्। अत एव 'न यासयोरि'ति प्रतिषेधस्य, 'आशिषि वुनश्च ने'त्यादीनां चारितार्थ्यम्। 'रथकट्ये'त्यादौ[3] श्रौतव्यवाये प्रवृत्तौ तु न मानम्। न[4] चाऽऽपीति ककारविशेषणमेवाऽस्त्विति वाच्यम्। अनूद्यमानविशेषण-ककार-विशेषणतया निर्दिष्टपरिभाषाया अप्रवृत्त्या रथकट्यादावतिप्रसङ्गात्। अकारविशेषणत्वेनैवोपपत्तावौत्सर्गिकन्यायबाधे मानाऽभावात्। एतेन 'आपीत्यङ्गविशेषणमि'त्यपि परास्तम्। रथकट्यादावतिप्रसङ्गात्[5]। येषां 'कात्पूर्वस्ये'त्यंशेऽनूद्यमानाऽकारविशेषण-पूर्वत्व-विशेषणत्वान्नाऽव्यवधानांऽशप्रवृत्तिस्तेषां मते 'सर्विके'त्यादावाद्याऽकारस्य व्यावृत्तयेऽप्यापीत्यकारविशेषणमित्याहुः।

---

१. 'उच्चारणार्थत्वादिति भावः' ख. पाठः।

२. 'व्यवधानमात्रमाश्रित्य' ख. पाठः।

३. 'इत्यादौ व्यवाये तु प्रवृत्तौ मानाऽभावात्' ख. पाठः।

४. 'न च' इत्यारभ्य 'इत्याहुः' इत्यन्तः ख. पाठो मनोरमाशब्दरत्नधृतत्वात् क. कुण्डलितः।

५. 'अतिप्रसङ्गादित्याहुः' क. पाठः।

**कारिकेति** । करोतेर्ण्वुल् । **नौकेति** । 'नौ'शब्दात्स्वार्थे कः ।
**शकेति** । पचाद्यच् । अयं ककारो न प्रत्ययस्थः ।

ननु[1] 'प्रत्ययात्कादि'त्येवाऽस्तु । प्रत्ययमात्रस्य ककारस्याऽभावादेव तात्स्थ्यलाभात् । न च कान्तात्प्रत्ययादित्यर्थः स्यात्, तथा चाऽकच्येव स्यादिति वाच्यम् । 'क्षिपकादीनामि'ति निषेधवैयर्थ्याऽऽपत्तेः ।

वस्तुतः 'प्रत्यये कौ'त्येव पाठ्यम् । पूर्वग्रहणं च माऽस्तु । 'न यासयोरि'तिनिषेधसामर्थ्याच्च 'कादौ प्रत्यये' इति नाऽर्थः । एवं च 'आप्परस्य, ककारपरस्य चाऽत इदि'त्यर्थः । तत्र सामर्थ्यादाप्परत्वांऽशेऽव्यवधानांऽशबाधो, 'णौ चङी'त्यत्र णिपरत्वांऽश इवेति चेन्न । ज्ञापकेन सूत्राऽक्षरप्रत्याख्यानस्याऽचमत्कारित्वादित्याहुः ।

'सुपः परो ने'तिप्रसज्यप्रतिषेधेन व्याख्याने फलमाह—**बहुपरिव्राजकेति** । पर्युदासे हि समुदायस्य सुब्भिन्नत्वेन, सुबन्तभिन्नत्वेन, च, ततः परत्वादित्त्वं दुर्वारमिति भावः । परिपूर्वाद्व्रजेर्ण्वुणि, बहुशब्देन बहुव्रीहौ, सुपो लुक्यपि, प्रत्ययलक्षणेनाऽऽपः सुबन्तात्परत्वं बोध्यम् । 'बहुचर्मिके'त्यत्र यथेत्त्वं तथा 'समासान्ताः' इति सूत्रे निरूपयिष्यामः । 'सुन्दरपाचिक'[2] इत्यादावन्तरङ्गत्वात्पूर्वं प्रवृत्तेत्त्वस्य निवृत्तौ न मानम् । अकृतव्यूहपरिभाषा तु नास्त्येव । अत एव 'परवल्लिङ्गमि'त्यादिसूत्रस्थाः 'प्राप्तजीविक' इत्यादयो भाष्यप्रयोगाः सङ्गच्छन्ते ।

**कटुकेति** । आपा सह सवर्णदीर्घात्पूर्वं वार्णादाङ्गस्य बलीयस्त्वात्,

---

१. 'ननु' इत्यारभ्य 'इत्याहुः' इत्यन्तः पाठो मनोरमाशब्दरत्नस्थत्वात् क. कुण्डलितः ।

२. 'सुन्दरपाचिक' इत्यादावित्त्वं भवत्येव । न च 'ङ्याब्ग्रहणेऽदीर्घ' इति स्थानिवद्भावनिषेधादाप्परत्वं वाऽस्तीति वाच्यम् । ङ्यापोः कार्ये, ततः परस्य कार्ये वा तत्प्रवृत्तेः, न तु ङ्यापि पूर्वस्य कार्ये । अन्तरङ्गत्वाऽत्पूर्वमित्त्वे स्थानिवत्त्वाऽनुपयोगाच्च । अकृतव्यूहपरिभाषा त्वनित्यत्वान्नाऽत्र प्रवर्त्तते । अत एव 'परवल्लिङ्गमि'त्यादिसूत्रस्थाः'—इति ख. पाठः ।

अ[1]पवादत्वाच्चाऽन्त्यककाराद् उत्तरस्याऽकारस्येत्वं स्यादित्यर्थः।

**राकेति**। 'कृदाधारार्चिकलिभ्यः कः'।

**मामकेति**। कस्य प्रत्ययस्थत्वाऽभावादप्राप्ते वचनम्। **मामिकेति**। 'ममेयमि'ति विग्रहे 'युष्मदस्मदोरन्यतरस्यामि'त्यणि, 'तवकममकावेकवचने' इति ममकाऽऽदेशे, आदिवृद्धिः। संज्ञाच्छन्दसोरभावात् 'केवलमामके'ति ङीप् न। **नरानिति**। 'कै शब्दे'। 'आदेच उपदेशे' इत्यात्वे 'आतोऽनुपसर्गे' इति कप्रत्यये, 'आतो लोप इटि चे'त्यालोपः।

**त्यक्त्यपोरिति**। 'उदीचामात' इत्यस्याऽपवादः। **दाक्षिणात्यि**केति। दक्षिणस्यामदूरे इत्यर्थे '**दक्षिणा**' आजन्तः। 'दक्षिणा भवे'त्यर्थे 'दक्षिणापश्चादि'ति त्यक्। 'दक्षिण[2]स्यां दिशि भवे'ति तु नाऽर्थः। त्यग्विधौ साहचर्येणाऽव्ययदक्षिणाशब्दस्याऽऽजन्तस्यैव ग्रहात्। अन्यथा 'सर्वनाम्नो वृत्तिमात्रे' इति पुंवत्त्वाऽऽपत्तिः। कित्त्वादादि वृद्धौ, टापि, अज्ञातादौ कः। 'केऽण' इति ह्रस्वः। टाप्। **इहत्यिकेति**। 'अव्ययात्त्यप्'।

**न या(सयोः)** 'प्रत्ययस्थादि'ति प्राप्ते निषेधोऽयम्। **यकेति**। यत्तदोरकच्। त्यदाद्यत्वे टाप्। **तकामिति** 'यासयोरि'ति यत्तदोरुपलक्षणम्, न तु स्वरूपं विवक्षितमिति भावः। न च विभक्तिसन्निपातेन कृतमत्वं कथं टापं प्रवर्त्तयेत्, सन्निपातपरिभाषाविरोधादिति वाच्यम्। अनेनैव निषेधेन, निर्देशेन च तस्य[3]ा अनित्यत्वकल्पनात्। अन्यथाऽकारस्याऽऽप्परत्वाऽभावेनाऽप्राप्तौ वैयर्थ्यं स्पष्टमेव। **उपत्यके**ति। 'उपाधिभ्यामि'ति त्यकन्। 'उपत्यकाऽद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः। तत्र पर्वतसमीपभूवाचको-

---

१. 'अपवादत्वाच्चैकादेशं बाधित्वाऽन्त्यककाराऽकारादुत्तरस्येत्वं स्यात्' ख. पाठः।

२. 'दक्षिणस्यां दिशि भवा' इत्यारभ्य 'पुंवत्त्वापात्तः' इत्यन्तः ख. पाठो मनोरमास्थ इति क. कुण्डलितः।

३. 'तस्या अप्यनित्यत्वकल्पनात्' ख. पाठः।

पत्यकाशब्दस्य क्वचित्समीपमात्रे लक्षणया प्रयोगः । यथा[1] 'समुद्रोपत्यका हैमी पर्वताऽधित्यका पुरी'ति भट्टिकाव्ये ।

(एतेन[2] 'समुद्रोपत्यका हैमी पर्वताऽधिकापुरी'ति महाकविप्रयोगविरोधादमरश्चिन्त्यः, 'उत्यका भूरासन्ना, भूमिरूर्ध्वमधित्यके'ति वाऽमरे पाठ' इति मन्दोक्तिः परास्ता) ।

यत्तु 'त्यकन्नन्तस्य नित्यस्त्रीत्वेन प्रक्रियालाघवाय 'त्यिकन्नि'ति वक्तव्येऽकारोच्चारणसामर्थ्यादित्त्वाऽभावे सिद्धे, व्यर्थं प्रतिषेधवचनमि'ति । तन्न । पञ्चभिरुपत्यकाभिः क्रीतः'पञ्चोपत्यक' इत्यादौ चारितार्थ्यात् । अत्र हि क्रीतार्थस्य ठको'ऽध्यर्द्धे'ति, 'लुक्तद्धितलुकी'ति टापो लुकि, आप्परत्वाऽभावादित्त्वाऽप्राप्तेः 'अन्तरङ्गानपी'[3]तिन्यायेन च न पूर्वमित्त्वम् । न च टापो लुकः स्थानिवद्भावेनेत्त्वमत्राऽपि दुर्वारमिति[4] वाच्यम् । 'सुडनपुंसकस्ये'ति सूत्रभाष्योक्तरीत्या प्रतिषेधे युक्ताऽयुक्तत्वेनोभयाऽसम्भवरूपविरोधस्य सत्त्वेन, परत्वेन प्रत्यलक्षणेन तस्य बाधात् । तस्य च 'न लुमताङ्गस्ये'ति प्रतिषेधात् । प्रत्ययलक्षणसूत्रस्य नियमाऽर्थत्वे स्थानिवत्त्वस्यैव तेन निषेधाच्च । 'अचः परस्मिन्नि'ति स्थानिवत्त्वन्तु न । लुकि तन्निषेधात् । बहिर्भूततद्धितलुग्निमित्तत्वेन टाप्लुको बहिरङ्गाऽसिद्धत्वन्तु न । 'नाऽजानन्तर्ये'ति निषेधात् । आप्त्वेनाऽच एव निमित्तत्वात्[5] । 'अन्तरङ्गानपी'तिपरिभाषाविषये तदप्रवृत्तेश्च । अत एव 'मृदस्तिकन्नि'त्यत्रेकारोच्चारणं चरिताऽर्थम् । एतद्धि[6] 'पञ्चमृत्तिकः पटः' इत्यादाविकारश्रवणाऽर्थमि'ति

---

१. 'यथा' इत्यारभ्य' 'भट्टिकाव्ये' इत्यन्तः क. ग. पाठः ख. नास्ति ।

२. 'एतेन' इत्यारभ्य 'परास्ता' इत्यन्तः ख. पाठः, क. ग. नास्ति ।

३. अन्तरङ्गानपीति न्यायेन च न पूर्वमित्त्वम्' इति क. ग. पाठः, ख. नास्ति ।

४. 'दुर्वारमिति वाच्यम् । तत्राऽकारप्रश्लेषेणाऽल्विधित्वेन स्थानिवत्त्वाऽप्राप्तेः । प्रत्ययलक्षणस्य च 'न लुमताङ्गस्ये'ति प्रतिषेधात्' इति ख. पाठः ।

५. इतोऽग्रे--'अकृतव्यूह'परिभाषाऽन्तरङ्गानपी'तिपरिभाषयोर्विषये तदप्रवृत्तेरुक्तत्वाच्च । 'अन्तरङ्गानपी'ति परिभाषया च पूर्वमित्त्वं न'-- इति ख. पाठः ।

६. 'तद्धि' ख. पाठः ।

**कैयटहरदत्तादयः**। **भाष्ये** तु 'त्यकन् उपसङ्ख्यानं न वक्तव्यम्। आचार्यप्रवृत्तिर्ज्ञापयति 'नैवं जातीयकानामित्त्वमि'ति, यदयं'मृदस्तिकन्नि'-तीत्त्वभूतनिर्देशं करोती'त्युक्तम्। एतद्भाष्यप्रामाण्यादनित्यत्वादन्तरङ्गा-नपीत्यस्या एतद्विषयेऽप्रवृत्तिः[1]। तेन पञ्चमृत्तिके इकाराऽनुच्चारणेऽपि न दोषः। एवं च 'पञ्चभिः कारिकाभिः क्रीत' इत्यर्थे 'पञ्चकारिकः' इत्येवेति प्रतीयते इति बहुश्रुतैर्निर्णयम्[2]।

**आशिषि वुनश्चेति**। 'आशिषि विहितस्य वुनोऽस्येत्त्वं ने'त्यर्थः। (**जीवका**)। 'जीवतादि'त्याद्यर्थे 'आशिषि चे'ति वुन्। एवं मनुतात्—**मेनका**। मनेः 'आशिषि चे'ति वुन्। पृषोदरादित्वादकारस्यैकार इति 'अत एके'ति सूत्रे **कैयटः**। (**देवका**)। देवदत्तशब्दादनुकम्पायां कनि, 'अनजादौ च विभाषा लोपो वक्तव्य' इति 'दत्त'शब्दस्य लोपः।

**देवदत्तिकेति**। अस्योपन्यासस्तु 'दत्त'लोपमभिव्यङ्क्तुम्।

**क्षिपकादीनां** च। 'ने'त्यनुषज्यते। (**क्षिपका**) क्षिपेरिगुपधलक्षणः कः। ततोऽज्ञातादौ कः। **ध्रुवकेति**। 'ध्रु स्थैर्ये'। पचाद्यचि, कुटादित्वाद्गुणाऽ-भावे उवङ्। ततष्टाप्यज्ञाताद्यर्थे कः। 'केऽण' इति ह्रस्वः। पुनष्टाप्[3]।

(**चटका**)। 'चट भेदने' पचाद्यचि, टाप्यज्ञातादौ के, 'केऽण' इति ह्रस्वे, पुनष्टाप्। 'चटेः संज्ञायां क्वुनि'**त्यन्ये**। वार्त्तिकोक्तगणा आकृति-गणाः। एतेन 'कन्यकाशब्दस्य भाष्येऽदर्शनादनुचितः पाठः' इत्यपास्तम्। एवं 'धुवका''अलका''इष्टका''कारका'ऽऽदयो बोध्याः। **तारकेति**। तरते-र्ण्वुल्। ज्योतिर्नक्षत्रं, नेत्रकनीनिका च। वर्णकेति। वर्णयति महत्त्वादिकं

---

१. 'एतद्भाष्यप्रामाण्यात् 'प्राप्तजीविक' इत्यादावनित्यत्वादकृतव्यूहपरिभा-षाया इव 'अन्तरङ्गानपी'त्यस्या अप्येतद्विषयेऽप्रवृत्तिः' इति ख. पाठः।

२. इतोऽग्रे—'एवञ्च प्रत्ययस्थादिति सूत्रे यद्याकारप्रश्लेषे न फलं, तदा स मास्त्विति दिक्' इति ख. पाठः।

३. 'पुनष्टाप्' इति क. ग. पाठः। ख. नास्ति।

गुणविशेषमिति, आच्छादयतीति वा **वर्णका**–प्रावरणविशेषः। तन्तुविकारः तान्तवम्। **वर्णिकेति**। ग्रन्थविशेषव्याख्यात्री, स्तोत्रकर्त्री च। **उदीचां त्विति**। 'शकुनावि'ति अत्राऽपि सम्बध्यते। नेनाऽन्यत्र नित्यमेवेत्त्वम्।

**पितृदेवत्यं**—पितृरूपदेवताऽर्थं कर्म 'देवतान्तात्तादर्थ्ये यत्'।

अशेस्तकनि–**अष्टका**। **अष्टिकेति**। अष्टौ परिमाणमस्याः। 'सङ्ख्याया अतिशदन्तायाः कन्'।

**सूतकापुत्रि**। यत्तु भाष्ये क्वचित्पुस्तके 'सूतकापुत्रकावृन्दारकाणामि'-ति सर्वत्राऽकारसहित एव वार्त्तिकपाठो दृश्यते सोऽपपाठः, कैयटाद्यसंमतत्वादिति बोध्यम्। 'सूत'शब्दात्स्वार्थे कन्। वृन्दशब्दात् 'शृङ्गवृन्दाभ्यामारकन्वाच्य' इति मत्वर्थीय आरकन्। देवतावाचि'वृन्दारक'शब्दस्य 'वृन्दारका दैवतानी'त्यमरात्पुंस्त्वेऽपि, 'त्रिषूत्तरे' इत्युपक्रम्य 'वृन्दारकौ रूपिमुख्यावि'त्यमरोक्तेर्मुख्याद्यर्थकस्य स्त्रीलिङ्गत्वमस्त्येव[1]। अत एव 'वृन्दारका' 'वृन्दारिके'ति भाष्ये उदाहृतम्।

**ङीन इति**। शा[2]ङ्गरवादित्वादिति भावः। ननु सूतकादावकारस्याऽकारविधानं व्यर्थं स्यादत आह— **अन्यत्रेति**।

**उदीचामा**। ('य[3]कौ पूर्वौ यस्या' इति विग्रहे सौत्रत्वात्पूर्वशब्दस्य परनिपातः)। अर्थगतं [4]स्त्रीत्वमाकरे आरोप्य 'यकपूर्वाया' इति स्त्रीलिङ्गनिर्देशः। तेन स्त्रीप्रत्ययलाभः। पूर्वत्वं चाऽव्यवहितमेव। 'उदात्तस्वरितयोरि'त्यादाविवाऽनुवादेऽपि निर्दिष्टपरिभाषोपस्थितेः। अत एव 'क्षिपका'शब्दात्के, ह्रस्वे, इत्त्वविकल्पो नेत्याहुः। यद्यपि 'ने'त्यनुवर्त्तते, तथाऽपि निषेधविकल्पे विधिविकल्पस्य फलितत्वादाह—**इद्वेति**।

---

१. 'मस्त्येवेति बोध्यम्। ङीन इति।' इति ख. पाठः।

२. 'शाङ्गरवादित्वाज्जातस्येति भावः' इति लघुशब्देन्दुशेखरे पाठः।

३. ख. पाठोऽयं क. ग. नास्ति।

४. 'स्त्रीत्वं शब्दे आरोप्य' ख. पाठः।

न[1]न्विह 'स्थाने'ग्रहणं व्यर्थम्, 'षष्ठी स्थाने' इतिपरिभाषयैव लब्धत्वात् । न च तदभावे 'सकारस्थानिक आकार' इत्यर्थः स्यादिति वाच्यम् । अस्य निषेधविकल्पत्वेन, प्राप्तेरावश्यकत्वेन, पूर्वसूत्रे च ह्रस्वस्यैव स्थानित्वादाकारस्य केनाऽप्यप्राप्त्या, तदसम्भवात् । एतेन 'तदभावे 'अत' इत्यस्य निवृत्तिरेव स्यादि'ति निरस्तमिति चेन्न । 'अनूद्यमानविशेषणेषु परिभाषाणामप्रवृत्तिरि'त्यर्थज्ञापनाऽर्थं तत्सत्त्वात् । अत एव वृद्धसंज्ञायामिक्परिभाषाऽनुपस्थानाच्छालीयाऽऽदिसिद्धिः ।

(वस्तु[2]तोऽन्तरङ्गत्वेन स्थानसम्बन्धस्य लाभसम्भवेन, स्थानेग्रहणं व्यर्थमेव । वृद्धसंज्ञायामिक्परिभाषाऽनुपस्थितिस्तु 'मालादीनां चे'ति ज्ञापकाद्बोध्या । तद्धि 'प्रस्थेऽवृद्धमि'ति पर्युदासे प्राप्ते आरभ्यते । अनुवादे न'परिभाषे'ति च निर्मूलम् । स्थानसम्बन्धस्य परिभाषालभ्यत्वाऽभावेन ज्ञापकाऽसम्भवादिति दिक्) ।

**आतः किमिति** । 'उदीचां यकपूर्वाया' इत्येव सूत्रं कार्यम् । यकपूर्वकस्त्रीबोधकाऽकारस्येत्यर्थः । साङ्काश्यके च नाऽतिप्रसङ्गः । अकारस्य स्त्रीबोधकत्वाऽभावात्, प्रत्ययाऽवयवत्वादिति **प्रश्नः** ।

**साङ्काश्यिकेति** । बहुलक्ष्यसंस्काराऽनुरोधादवयवषष्ठ्येव स्यादित्युत्तरम् । 'सङ्काशादिभ्यो: ण्यः' । तदन्ताद्भवार्थे योपधत्वाद्वुञ् । स च साङ्काश्यभवां स्त्रियमाहेति भावः । न च[3] प्रतिपदोक्तस्त्रीप्रत्ययस्यैवाऽत्र ग्रहणम् । विशिष्य तदनुपादानात् ।

---

१. 'नन्विह' इत्यारभ्य'दिक्' इत्यन्तः ख. पाठः प्रत्ययस्थात्सूत्रमनोरमाशब्दरत्नस्थत्वात् क. कुण्डलितः ।

२. 'दिक्' इत्यन्तोऽयं पाठः क. कुण्डलितः ।

३. 'न च प्रतिपदोक्तस्त्रीप्रत्ययस्यैवाऽत्र ग्रहणम् । तदनित्यत्वज्ञापनाऽर्थत्वात् । विशिष्य तदनुपादानाच्च । अत्राहुः—'यकपूर्वायाः स्थाने' इति सूत्रं कार्यम् । स्थानेशब्दस्य सत्त्वाच्च नाऽवयवषष्ठीसम्भवः । न च वुञः स्थानेऽयम्' इति ख. पाठः ।

अत्राहुः[1]—अन्तरङ्गत्वात्स्थानषष्ठ्येव व्याख्यास्यते इति नावयवषष्ठी-सम्भवः। 'यकपूर्वकस्त्रीबोधकस्थानिकाऽकारस्ये'त्यर्थः। न च वुञः स्थानेऽयम्। 'अके'ति समुदायस्य तथात्वेऽप्यकाररूपाऽवयवस्याऽतथात्वात्। वुञो यकपूर्वत्वाऽभावाच्च। न हि तस्यामवस्थायां'यस्ये'ति लोपो लभ्यते। तस्मादात इति स्पष्टार्थमेव, उत्तरार्थं चेति[2]। **स्त्रीप्रत्ययस्य किमिति**। 'यकपूर्वाया' इति स्त्रीलिङ्गनिर्देशः किमर्थ इति प्रश्नः। शुभं यातीति 'शुभंयाः'। विच्। ततः कः। 'केऽणः'। 'शुभमि'ति मान्तो निपातः।

**धात्वन्तयकोस्त्विवति**। 'धात्वन्तयकारककारपूर्वयोरकारयोरि'त्यर्थः। **नित्यमिति**। 'इत्त्वमिति'शेषः। सुष्ठु नयो यस्याः 'सुनया'। ततः कः।

भस्त्रैषा। अयमपि निषेधविकल्प एव। तदाह—**अत इति**। अत्राऽप्यातः स्थाने इति वर्त्तते। अत एव स्त्रीलिङ्गा एव निर्दिष्टा इति बोध्यम्।

**स्पष्टार्थमिति**। यत्त्वित एव ज्ञापकादिह तदन्तविध्यभाव इति। तन्न। अपिना नञ्भिन्नपूर्वाणामपूर्वाणां च सङ्ग्रहस्य विनिगमनाविरहेण तवाऽपि सत्त्वेन फलाऽभावात्। 'येन विधिरि'तिसूत्रे 'त्यदादिविधिभस्त्रादिस्त्रीग्रहणं च प्रयोजनमि'ति भाष्यवार्त्तिकविरोधाच्च। अत एव 'निर्भस्त्रिका'ऽपि 'आदाचार्याणामि'त्यात्त्वबाधनार्थं 'भस्त्रा'ग्रहणमिति मन्दोक्तमपास्तम्[3]। उपसर्जने चारितार्थ्येन बाधे मानाऽभावादिति दिक्।

**अन्यस्य**=अनुपसर्जनस्य। उत्तरसूत्रेण। 'अभाषितपुंस्काच्चे'त्यनेन।

**अन्तर्वर्त्तिनीमिति**। न एतत् स् इति स्थितेऽकचि कृतेऽकृते वा नञ्तत्पुरुषे, 'अन्तरङ्गानपी'ति त्यदाद्यत्वप्रवृत्तेः पूर्वं सुपो लुकि, ततोऽकचि वा,

---

१. 'अत्राहुः' इत्यारभ्य 'उत्तरार्थं चेति' इति ख. पाठः क. कुण्डलितः। मनोरमादिस्थत्वात्।

२. 'इति अत्र स्पष्टार्थमेव। उत्तरार्थं चेति' इति ख. पाठः।

३. 'मित्यपास्तम्' क. ग. पाठः।

पुर्नविशिष्टात्सुपि, त्यदाद्यत्वे, टापि, प्रत्ययलक्षणेन समासात्पूर्वोत्पन्नसुपः पर एव टाबिति भावः। बहुव्रीहौ तु 'प्रियैतका' 'प्रियैतकत्का' वा, कबभावे 'प्रियैतकदि'त्येव वा, सर्वथाऽपि नेत्त्वप्राप्तिः।

**अनेषकेति**। 'अज्ञाता एषा—एषका, न एषकेति विग्रहः। पूर्वं नञ्समासेऽज्ञाताऽनेषाऽनेषकेति। **असम्भवादिति**। 'एषाद्वे'तिनिर्देशात्संज्ञोपसर्जनयोरप्राप्तेरिति भावः। **अकजर्ह इति**। एवं च तदकारस्य आतः स्थानिकत्वाऽभाव इति भावः।

**अर्थान्तरे त्विति**। आत्म-ज्ञाति-धनेष्वित्यर्थः। 'स्वो ज्ञातावात्मनि स्वं, त्रिष्वात्मीये, स्वो धनेऽस्त्रियामि'तिकोशादिति भावः। **कप्रत्ययान्तेति**। अत एव 'प्रियस्विके'त्यादौ नाऽन्तर्वर्त्तिविभक्त्या सुपः परत्वम्, केन व्यवधानादिति बोध्यम्। अत एव 'बहुचर्मिके'त्यादावित्त्वसिद्धिः।

ननु संज्ञाभूतो नेहोदाहरणम्, तस्य 'अभाषितपुंस्काच्चे'त्यनेनैव सिद्धेरिति चेन्न। 'संज्ञापूरण्योश्चे'त्यनेन पुंवद्भावनिषेधेन संज्ञाया अपि भाषितपुंस्कत्वबोधनात्। आत्मीयत्वपुरस्कारेणैव संज्ञाकरणात्।

अत एव निषेधात्तसिलादिषु कप्रत्ययपाठेऽपि 'तसिलादिष्वि'ति पुंवद्भावो न। 'केऽण' इति ह्रस्वेन परत्वाद्बाधाच्चेति स्पष्टं भाष्ये।

**नित्यमेवेति**। तत्र ह्यकचि कृते आतः स्थानिकत्वाऽभाव इति भावः। [1]यत्तु वृत्तौ 'ज्ञातिधनयोः 'स्वका' 'स्विके'त्युक्तम्। तच्चिन्त्यम्। तयोः स्त्रीलिङ्गत्वाऽभावात्। न च 'स्वार्थिकाः क्व चित्प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते' इति न दोषः। उक्तरीत्या कप्रत्ययान्ताट्टाप्सम्भवेऽपि, प्रकृतेरस्त्रीत्वादातः स्थाने इत्यंशस्य दुरुपपादत्वात्।

वस्तुतस्तु '**'नित्यमेवे'**त्यस्य 'अकज्विषये' इति शेषः।

'**संज्ञोप**सर्जनीभूत' इत्यपि अकजभाववदुपलक्षणम्। अत एव 'स्वा'-

---

१. 'यत्तु' इत्यारभ्य 'दुरुपपादत्वात्' इत्यन्तोऽयं ख. पाठो मनोरमास्थत्वात् क. कुण्डलितः।

शब्दादत्यन्तस्वार्थिके के, इत्त्वविकल्पो भवत्येव। न ह्यकच् अत्यन्तस्वार्थिकस्याऽप्यपवादः। एतेन[1] 'मुनेर्मनोवृत्तिरिव स्विकायामि'ति व्याख्यातम्। ये त्वकचमत्रोदाहरणे उक्त्वा 'भस्त्रेषे'तीत्त्वविकल्पमुदाहरन्ति, ते देवानांप्रिया एवेति दिक्।

**कृतषत्वेति**। भस्त्राशब्दसाहचर्येण, व्याख्यानेन च श्रुताऽनुपूर्वीकस्यैव 'एषा'शब्दस्य ग्रहणादिति भावः। अत एव 'एषाद्वे नञ्पूर्वे अनुदाहरणे' इति भाष्येऽपि 'एषे'त्येवोक्तम्। सूत्रे रूपस्याऽविवक्षितत्वे तु 'एतद्द्वी'त्येव वदेदिति दिक्। **निःस्वकेति**। 'स्वस्या निष्क्रान्ते'तिविग्रहः। उपसर्जनह्रस्वः। टाप्। ततोऽज्ञातादौ कः।

**अभाषितपुंस्काच्च**। 'स्त्रीविषयाच्चे'ति तु नोक्तम्। स्त्री-नपुंसकलिङ्ग'दाम'शब्दाड्डापि—अज्ञाता दामा'दामिका''दामके'त्याद्यसिद्ध्यापत्तेः। **विहितस्येति**। अत एव 'पूर्वसूत्रे 'भस्त्रा'ग्रहणमुपसर्जनाऽर्थम्। अनुपसर्जने त्वनेनैव सिद्धमि'ति भाष्ये उक्तम्। परविशेषणे हि अभाषितपुंस्कभस्त्राशब्दात्परत्वस्य सत्त्वेनोपसर्जनेऽप्यनेनैव सिद्धेस्तदसङ्गतिः स्पष्टैव।

विहितविशेषणे फलमाह—**बहुव्रीहेरिति**। 'अविद्यमाना खट्वा यस्या' इति बहुव्रीहौ, वैकल्पिकत्वात्समासान्तकबभावे, 'गोस्त्रियोरि'त्युपसर्जनह्रस्वत्वेऽखट्वशब्दाट्टापि, सुपि, अज्ञातादौ के, सुब्लुकि, 'केऽण' इति ह्रस्वे, पुनष्टापि, अभाषितपुंस्काद्विहिताऽऽकारस्थानिकाऽकाराऽभावेनैतद्विकल्पाऽप्राप्तावु[2]त्सर्गेण नित्यमेव। परविशेषणत्वे तु तादृशखटवशब्दात्परत्वसत्त्वेन दोषः स्यादेवेति भावः। 'बहुव्रीहेरि'त्युपसर्जनोपलक्षणम्। तेन 'निःखट्विके'त्यादावपि नित्यमेवेत्त्वम्।

**शैषिके कपीति**। अयं भावः—बहु जस् खट्वा जसित्यस्यामवस्थायां

---

१. 'एतेन' इत्यारभ्य 'दिक्' इत्यन्तः ख. पाठः क. कुण्डलितः।

२. 'उत्सर्गेण नित्यमेवेति भावः' इति ख. पाठः।

'शेषादि'ति कपि, सुब्लुकि, प्रत्ययलक्षणेन भागद्वयस्याऽपि सुबन्तत्वात् समासे, 'समासान्ता'[1] इतिशास्त्रबलात्कबन्तस्यैव समासत्वेन, उपसर्जनस्त्रीप्रत्ययाऽन्ताऽन्तसमासरूपप्रातिपदिकाऽभावात् 'गोस्त्रियोरि'तिह्रस्वत्वाऽभावे, 'केऽण' इति ह्रस्वत्वे च 'न कपो'ति निषिद्धे, 'आपोऽन्यतरस्यामि'ति ह्रस्वपक्षे कपः प्राग्वर्त्तिनः खट्वशब्दात्परस्याऽऽपोऽभाषितपुंस्काद्विहितत्वेन, तत्स्थानिकाऽकारस्यायं विकल्प इति। ह्रस्वाऽभावे 'बहुखट्वाके'त्यपि बोध्यम्। **गङ्गकेति**। एवं 'मेना'शब्दात्के 'मेनका' 'मेनिका' 'मेनाके'ति बोध्यम्। अत एव ततोऽणि 'मैनाक' इति सिद्ध्यति।

'नशिमन्योरलिटयेत्त्वमि'ति 'अत एकहल्लि'तिसूत्रस्थवचनेन[2] मनेरस्यैत्त्वम्। यद्यपीदं छान्दसमिति[3] कैयटेनोक्तं, तथाऽपि भाष्याऽनुक्तेश्चिन्त्यमेव तत्। अत एव 'चेष्टा व्यनेशन्निखिलास्तदाऽस्या' इति श्रीहर्षः प्रायुङ्क्त[4]। 'वा जॄ'इत्यतोऽत्र 'वा'ग्रहणाऽपकर्षणाद्व्यवस्थितविभाषाऽऽश्रयणाच्च नाऽतिप्रसङ्गः। 'अनशन्नि'त्यादिसिद्धिश्च। अत एव 'नष्टः' 'मन्यते' इत्यादिभाष्यादिप्रयोगाः सङ्गच्छन्ते।

**अभिव्याप्येति**। अत एव 'बहुयुवा शाले'त्यत्र यूनस्तिरुपसर्जनत्वान्नेत्याहुः। **अयमेवेति**। न च 'काशकृत्स्निना प्रोक्ता मीमांसा काश-

---

१. 'समासान्ता इति शास्त्रबलात्' इति क. ग. पाठः, ख. नास्ति।

२. 'नाशिमन्योरलिटयेत्वम्', 'छन्दस्यमिपचोरपि'। 'अनेशम्, मेनकेत्येतद्, व्येमानं, लिङ्घि पेचिरन्।' इति श्लोकवार्त्तिकेनेत्यर्थः।

३. 'छन्दसीति पूर्वेणाऽपि सम्बन्धाद्भाषायामेत्त्वाऽभावः। एवं तु मेनकेत्यपि भाषायां न प्राप्नोति। यदि त्विष्यते, पृषोदरादित्वाद्भविष्यति। मनेः 'आशिषि चे'ति वुन्प्रत्ययः। 'न यासयोरि'त्यत्र 'आशिषि चोपसङ्ख्यानमि'तीत्वाऽभावः' इति हि तत्र कैयटः।

४. 'एवं त्विति'। छन्दसीत्यस्य सम्बन्धे इत्यर्थः। 'चेष्टा व्यनेशन्निखिलास्तदाऽस्याः' इति श्रीहर्षस्य तु प्रमादः' इति च तत्र भाष्यप्रदीपोद्द्योतः।

कृत्स्नो, तामधीते 'काशकृत्स्ना ब्राह्मणी'त्यत्र ङीप्व्यावृत्त्यर्थमनुपसर्जनाऽधिकार आवश्यकः। अत्र योऽध्येत्र्यामण् स लुप्तः। प्रोक्ताऽर्थकस्तूपसर्जनम्। न च ङीपा व्यवधानात्प्रोक्ताऽर्थकात्परत्वाऽभावेन कथमत्र लुक्?। अणि 'भस्याऽढे' इति पुंवत्त्वे तत्प्राप्तेः। 'उपसर्जन'पदेन चाऽप्रधानमपि गृह्यते, कृत्रिमाऽकृत्रिमन्यायाऽनित्यत्वात्। अनुपसर्जनत्वं च सूत्रे गृह्यमाणटिदण[1]ादीनामेव विशेषणम्। सामर्थ्यात्।

एतेन 'शिष्यमाणं लुप्यमानाऽर्थाऽभिधायी'तिन्यायेनाऽणन्तमनुपसर्जनमस्त्येवे'त्यप[2]ास्तम्। अ[3]न्यथा तदन्त इव तदन्तान्तेऽपि विशेषणाऽऽपत्तावनुपसर्जनाऽधिकारो व्यर्थ एव स्यादिति वाच्यम्। प्रोक्ताऽर्थगतस्त्रीत्वमादाय प्रोक्ताऽर्थाऽण्निमित्तकस्य ङीप एकवारं कृतत्वेन, 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनरप्रवृत्तेः। अध्येत्रर्थगतस्त्रीत्वमादाय तु तदण्निमित्तकस्याऽप्राप्तिरेव। ल[4]क्ष्याऽनुरोधात् 'स्त्रियामि'त्यस्य गृह्यमाणविशेषणत्वेन, त[5]स्याऽण एतत्स्त्रीत्वेऽवर्त्तनात्। एतेन 'आपिशलिना प्रोक्तमधीते 'आपिशला ब्राह्मणी'त्यत्र ङीप्व्यावृत्त्यर्थं स' इति परास्तम्।

न चैवमपि पञ्चसु राजसु भवा 'पञ्चराजे'त्यादौ तद्वारणाय स आवश्यकः। टितः स्त्रियामवृत्तेः। भवस्यैव स्त्रीत्वात्। पञ्च स्त्रीगोव्यक्तयो धनं यस्य 'प[6]ञ्चगवधन' इत्यत्र तु टजन्तस्य प्रातिपदिकत्वाऽभावान्न दोष इत्यर्थवत्सूत्रे उक्तम्। ङीप्यपि न क्षतिः। पुंवत्त्वप्राप्तेः। आचारक्विबन्तप्रकृतिककर्तृक्विबन्तानां स्त्रियामनभिधानमेव, एतद्भाष्यप्रामाण्यात्। तस्माद्

---

१. 'ढिड्ढाऽणादीनामेव' इति ख. पाठः।

२. 'इति परास्तम्' ख. पाठः।

३. 'अन्यथा तदन्तवत्तदन्ताऽन्तांऽशेपि' ख. पाठः।

४. 'लक्ष्याऽनुरोधेन' ख. पाठः।

५. 'तदण एतत्स्त्रीत्वे' ख. पाठः।

६. 'पञ्चगवधन इत्यत्र ङीप्यपि न क्षतिः, पुंवत्त्वप्राप्तेः' इति ख. पाठः।

बहुकुरुचरे'त्याद्येवैतद्व्यावर्त्यम् । तत्र च तदन्तविधिं विना प्राप्तिरेव न ।

न च 'स्त्रियामि'त्यस्य गृह्यमाणविशेषणत्वान्नेदं व्यावर्त्यम् । प्राधान्येन 'स्त्रियामि'त्यस्य 'ङीप्प्रकृतिविशेषणताया एव न्याय्यत्वात् । अत एव 'धीवानमतिक्रान्ता अतिधीवरी[1] सिद्ध्यति[2] । अयमधिकारोऽप्यत्रार्थे ज्ञापको बोध्यः ।

एवञ्च 'काशकृत्स्ना' 'आपिशले'त्याद्यप्यस्यैव व्यावर्त्यं बोध्यम् । 'अनुपसर्जनादि'ति तु सामर्थ्याद् गृह्यमाणविशेषणमेवेति[3] भावः ।

**तदन्तविधिमिति ।** अणन्तस्य प्रातिपदिकविशेषणत्वेन 'अणन्तान्त' इत्येवं रूप इत्यर्थः । अन्यथा समासप्रत्ययविधौ प्रतिषेधात्स दुर्लभः स्या[4]त् । प्रत्ययग्रहणपरिभाषालभ्यस्य तु नाऽयं निषेधः । 'प्रातिपदिकादि'त्यनेन सहाऽनन्वयाऽऽपत्तेरिति भावः ।

तदन्तविधिफलन्तु 'कौम्भकारेय'सिद्धिः । अन्यथा प्रत्ययग्रहणपरिभाषया कुम्भकारस्याऽणन्तत्वाऽभावात्ततो ङीबभावे, विशिष्टाड्ढगनापत्तिः ।

न च केवल'कार'शब्दस्याऽणन्तत्वेऽपि, कुम्भेनैकार्थीभूततया निष्कृष्य स्त्रीत्वेनाऽन्वयस्य वक्तुमशक्यतया,'कुम्भकारी'ति सिद्धिरेव तदन्तग्रहणफलं कुतो नोच्यते इति वाच्यम् । कारशब्दस्याऽपि प्रातिपदिकत्वेन, लिङ्गस्य तदर्थधर्मतया च, तस्याऽपि स्त्रीत्वेन योगात्तद्गतस्त्रीत्वे द्योत्ये प्रत्ययोत्पत्तेर्वक्तुं शक्यतया, निष्कृष्याऽन्वयाऽभावेऽपि क्षत्यभावात् । एवं च 'कारी'शब्दस्यैव स्त्रीप्रत्ययाऽन्ततया, तत एव ढकि, 'कुम्भकारी'त्यस्य तन्निरूपिताऽङ्गत्वाऽभावे 'कुम्भ'शब्दोकारस्य वृद्ध्यनापत्तिः । 'कृद्ग्रहणपरिभाषा तु कृन्मात्रग्रहणे, न तु कृदकृद्ग्रहणे' इतीहैव भाष्योक्तेर्न तया

---

१. इतोऽग्रे—'एवञ्च ज्ञापकत्वं सुस्थमेव' इति ख. पाठः ।

२. 'अतिधीवरीति सिद्ध्यति' ख. पाठः ।

३. 'मेवेति दिक्' ख. पाठः ।

४. 'स्यादिति भावः' ख. पाठः ।

विशिष्टान्ङीबुत्प[1]त्तिप्रत्याशा। न च कुम्भेनैकार्थीभूतस्य निष्कृष्याऽपत्येनैकाऽर्थीभावाऽयोगाद्विशिष्टस्य चाऽस्त्रीप्रत्ययाऽन्तत्वाड्ढगनुपपत्तिरेवेति वाच्यम्। निष्कृष्यैकाऽर्थीभावस्यैव प्रत्ययनिमित्तत्वे मानाऽभावात्। समुदायेनैकार्थीभावेऽवयवेनाऽप्येकार्थीभावस्यैव सत्त्वात्।

इदमेवाऽभिप्रेत्य भाष्ये उक्तं—'समासे च कृतेऽवयवादुत्पत्तिः प्राप्नोति। तत्र को दोषः?। अवयवस्य वृद्धिस्वरौ स्याता[2]मि'ति।

यदा[3] कुम्भकरणे नियुक्ता कुम्भकारी, तदा 'अणि नियुक्ते' इत्यनेन नियुक्तवाचित्वात्समासस्याऽणन्तस्योत्तरपदत्वाच्च पूर्वपदाद्युदात्तत्वे, कारीशब्दाड्ढकि, कित्त्वप्रयुक्ताऽन्तोदात्तत्वनिमित्तकशेषनिघातेन 'कारे' इत्येतावत एव निघाते, पदे द्व्युदात्तश्रवणापत्तिरिति स्वरे दोषो बोध्यः।

अत एव 'येन विधिरि'तिसूत्रे 'प्रत्ययग्रहणे तदन्तविधेः प्रयोजनं 'गार्ग्यायणः, परमगार्ग्यायण' इत्युक्तं भाष्ये।

तत्र **कैयटः**—यद्यपि 'गार्ग्यायण'इत्येवोदाहरणम्, परमगार्ग्यशब्दस्तु 'यस्मात्प्रत्ययविधिरि'तिनियमान्न यञन्तस्तथापि तन्नियमावश्यकत्वप्रदर्शनायैतदुपन्यस्तमि'ति। यदि त्वेकदेशान्नैव प्रत्ययस्तदा 'परमश्चासौ गार्ग्यायण' इतिभाष्योदाहरणाऽर्थो वाच्यः। तथा सति नैव परमगार्ग्यात्प्रसक्तिरिति कथं तन्न्यायावश्यकत्वं प्रदर्शितं भवेत्। मम तु 'परमगार्ग्यस्याऽपत्यमि'त्यर्थेऽप्युक्तन्यायाद्गार्ग्यशब्दादेव प्रत्ययो, न तु परमगार्ग्यात्। तथा सति 'परमगार्ग्यायण' इति स्यादिति तन्न्यायाऽऽवश्यकत्वव्युत्पादनमाञ्जस्येन सङ्गच्छते।

---

१. 'उत्पत्ति प्रत्याशा' इति तु लघुशेखरे पाठः।

२. इतोऽग्रे–'एवं च 'परमगार्ग्यस्यापत्य'मित्यर्थे 'परमगार्ग्यायण' इतीष्टं भगवत इति ज्ञायते। न च कारशब्दान्ङीप्यपि' इति ख. पाठः।

३. 'यदा' इत्यारभ्य 'एतदर्थज्ञापकमपि बोध्यम्' (७३१ पृ०) इत्यन्तः क. ग. पाठः, ख. नास्ति।

इतोऽपि 'यञिञोश्चे'त्यादेर्यञाद्यन्तप्रकृतिकसुबन्तादित्यर्थकथनम् अप्रामाणिकमिति बोध्यम्। 'समर्थः पदविधिरि'तिसूत्रशेषे भाष्येऽपि ध्वनितमेतदिति तत्सूत्रशेषे भाष्यप्रदीपोद्द्योते निरूपितं, तत एवाऽवधार्यम्। 'तद्धितार्थे'त्युत्तरपदे समासविधानमेतदर्थज्ञापकमपि बोध्यम्।

न च 'कार'शब्दान्ङीप्यप्यनुपसर्जनस्त्रीप्रत्यये तदादिनियमाऽभावेन समुदायाड्ढक् सुलभ इति वाच्यम्। कदा चित्कारीशब्दादप्यापत्तौ पक्षे 'कुम्भकारेय' इत्यस्या[1]ऽऽपत्तेः। एकाज्द्विर्वचनन्यायेन तु न निस्तारः। समुदायकार्येणाऽवयवाऽननुग्रहात्।

ननु तदन्तग्रहणेऽपि कारशब्दस्यापि व्यपदेशिवद्भावेनाऽणन्ताऽन्तत्वात्ततोऽपि कदा चिन्ङीपि, 'कुम्भकारेयो' दुर्वारः। तथा समुदायान्ङीप्यपि, स्त्रीप्रत्यये तदादिनियमाऽभावेन, केवलादपि कदाचित्तदापत्तौ, स दुर्वार इति चेन्न। असहाये एव व्यपदेशिवद्भावप्रवृत्तेः। तथा तदादिनियमाऽभावेनाऽधिकस्य कार्यं बोध्यते, न तु न्यूनस्येत्यदोषाच्च।

एतदर्थद्वयेऽप्यनुपसर्जनाधिकार एव ज्ञापकः। स हि तदन्तग्रहणज्ञापनद्वारा 'बहुकुरुचरे'त्यादौ ङीबभावार्थः। उक्तरीत्या तदन्तग्रहणफलाऽभावे तद्वैयर्थ्यं स्पष्टमेवेति दिक्[2]।

---

१. 'इत्यस्याऽप्यापत्तेः' ख. पाठः।

२. इतोऽग्रे—'वार्त्तिककारास्तु प्रत्ययविधौ तदन्तविधिप्रतिषेधात् 'स्त्रिया-मि'ति गृह्यमाणविशेषणमेव। 'अमहत्पूर्वे'त्यादि क्वचिदेव तदन्तविधि-ज्ञापकम्—'वनो र चे'त्यादौ। 'कुम्भकारी'त्यादौ कारशब्दादेव ङीप्। उक्तयुक्तेः। केवल 'कारी'शब्दाड्ढक्तु न। अनभिधानात्। अनुपसर्जन-स्त्रीप्रत्यये तदादिनियमाऽभावाच्च समुदायाड्ढगिति, इदं सूत्रं प्रत्याचख्युः।

तद्रीत्यैव च सर्वनामसंज्ञायां तत्कृतोपसर्जनप्रतिषेधवचनस्याऽनेन गतार्थतां दर्शयितुम् 'अनुपसर्जनादित्येष योगः प्रत्याख्यायते' इति सर्वाऽऽदिसूत्रे भाष्ये उक्तम्। एतत्सूत्रभाष्ये त्वनभिधानेन प्रत्याख्यानमयुक्त-

यत्तु[1] 'अनुपसर्जनादि'त्येष योगः प्रत्याख्यायते' इति सर्वादिसूत्रे भाष्ये उक्तम्, तदाशयस्तत्रैव भाष्यप्रदीपोद्द्योते निरूपितस्तत एवाऽवधेय इति दिक्।

**टिड्ढा(णञ्)**। 'ठे'त्येव सिद्धे सूत्रे ठक्-ठञोरुभयोरुपादानात् 'अत इनि-ठनौ' 'काश्यादिभ्यष्ठञ्ञिठावि'ति ठन्-ञिठयोर्व्यावृत्त्यर्थम्। **यददन्तमिति**। अकारश्च प्रत्यासत्त्योपस्थितटिदाद्यवयव एव। टिदा[2]द्यवयवाकारान्तमित्यर्थः। अत एव 'पञ्चाश्वे'त्यादौ ठग्निमित्तोऽपि न ङीप्।

(न च[3] 'अपरिमाणे'तिनिषेधसामर्थ्यादिवाऽत्र न ङीबिति वाच्यम्। 'द्वयोर्वातयोर्निमित्तमुत्पातो विद्युत्—'द्विवाते'त्यादौ 'गोद्व्यच' इति यतोऽध्यर्धपूर्वे'ति लुकि साऽवकाशत्वात्)।

**कुरुचरीति**। 'कुरुषु चरती'त्यधिकरणे उपपदे चरेष्टः। ननु नाऽयं टित्, नाऽपि तदन्त इति चेन्न। 'टिदि'ति प्रत्ययाऽप्रत्यययोर्ग्रहणमिति प्रत्ययग्रहणपरिभाषाऽप्रवृत्त्या टिदन्तत्वसत्त्वात्। अवयवेऽचरिताऽर्थस्य टित्त्वस्य समुदायोपकारकत्वेन 'कुरुचर'शब्दस्यैव टित्त्वाच्च। 'बहुकुरुचर'शब्दस्य तु न टित्त्वं, 'यं समुदायं योऽवयवो न व्यभिचरती'ति न्यायात्। अत एव 'स्तनन्धयी'त्यादौ ङीप्। धातोष्टित्त्वस्य तत्रा[4]ऽचरिताऽर्थत्वात्। धेटो ण्वुलादौ तु न ङीप्, अनभिधानादिति 'नासिकास्तनयोरि'ति सूत्रे **हरदत्ताऽऽदयः**। 'पठिता विद्ये'त्यत्र त्विवटष्टित्त्वस्य देश[5]विधौ चारिताथ्र्या-

---

मिति 'कौम्भकारेय' सिद्धये सूत्रमि'त्युक्तमिति न कश्चिद्विरोध इति दिक्' इति ख. पाठः। क. ग. नास्ति।

१. 'यत्तु' इत्यारभ्य 'इति दिक्' इत्यन्तः क. ग. पाठः। ख. नास्ति।

२. 'टिदाद्यवयवाऽकारान्तमित्यर्थः' इति क. ग. पाठः। ख. नास्ति।

३. ख. पाठोऽयं, क. ग. नास्ति।

४. टित्त्वस्याऽवयवेऽचारितार्थ्यात्' ख. पाठः।

५. टित्वेनाद्यवयवत्वसम्पादनेन आद्यवयवत्वरूपदेशविधावित्यर्थः।

त्समुदायोपकारकत्वे मानाऽभावेन न ङीप्। अत एव ट्यु-ट्युलोष्टित्त्वं सार्थकम्। तुटष्टित्त्वस्य समुदायोपकारकत्वे मानाऽभावात्।

अत एव 'पुराणी'त्यत्र 'पुराणप्रोक्तेष्वि'ति निर्देशात्तुडभावेऽपि ङीप्। न चेदं बह्वादिपाठेन ङीषा सिद्धम्। अन्तोदात्तो हि 'पुराणी'शब्दः, 'पुनः पुनर्जायमाना पुराणी'ति यथेति वाच्यम्। यस्य वैकल्पिकत्वेन, तदभावे ङीपः प्राप्तेः। 'पुराण'शब्दो मध्योदात्त इति ङीप्-ङीषोः स्वरे विशेषः। 'अयं पन्था अनुवित्तः पुराण' इत्यादावन्तोदात्तत्वन्तु च्छान्दसत्वादिति **केचित्।**

**अन्ये** तु 'अयं पन्था' इत्यादावन्तोदात्तदर्शनेन, पुराणशब्दस्य घृतादिपाठेनान्तोदात्तत्वादुदात्तनिवृत्तिस्वरेण ङीप्ङीषोः स्वरे विशेषाऽभावेन-बह्वादिपाठेन विकल्पसामर्थ्यात्पक्षे टाबेवेति वदन्ति।

**वक्ष्यमाणेति।** वचेर्लटः शानच्। टित्त्वादिति। स्थानिवत्त्वेनेत्यर्थः। 'न ल्यपी'ति लिङ्गाच्च टित्त्वादेरनुबन्ध[1]वैशिष्ट्यरूपस्याऽशास्त्रीयत्वेऽप्यतिदेशः। अनुबन्धानामुच्चरितप्रध्वंसित्वेन टित्त्वादीनां स्थान्यल्त्वाऽभावात्, 'न ल्यपी'तिनिषेधाच्चाऽनुबन्धकार्येऽनल्विधाविति निषेधाऽप्रवृत्तिरिति भावः। यत्तु'सेर्ह्यपिच्चे'ति अपिद्ग्रहणमत्राऽर्थे ज्ञापकमि'ति। तन्न। अनुदात्तस्य सेः स्थाने आन्तरतम्यात्प्राप्तस्याऽनुदात्तहेर्वारणाऽर्थं तत्सार्थक्यात्। एतेन 'सेर्हिङ् चे'ति सुवचमि'त्यपास्तम्।

**ङित्त्वेनेति।** लिङादेशानां स्थानिवत्त्वेनैव ङित्त्वे सिद्धे, पुनर्यासुटो ङित्त्वविधानस्य वैयर्थ्यादित्यर्थः। यासुटो ङित्त्वस्य चाऽऽवयवेऽचरितार्थस्य समुदायोपकारकत्वात्। न चेदं ङित्त्वं 'स्रुयादि'त्यादावनिग्लक्षणवृद्धिप्रतिषेधेन चरिताऽर्थमिति वाच्यम्। 'उत औदि'ति वक्तव्ये वृद्धिग्रहणेन निर्दिष्टस्थानिकत्वेऽपीक्परिभाषोपस्थितेर्बोधितत्वेन, तस्या अपीग्लक्षण-

---

१. 'अनुबन्धवैशिष्टयरूपस्य' इति ख. नास्ति।

त्वात्। (संज्ञा[1]पूर्वकविधेरनित्यत्वाच्च)। न च 'चिनुयुरि'त्यादौ प्रतिषेधविषय'जुसि चे'ति गुणनिषेधार्थं पुनर्ङित्त्वं चरितार्थम्। 'क्सस्याऽची'त्यतोऽची'त्यनुवर्त्त्य 'अजादौ जुसी'ति व्याख्यानेनाऽदोषादिति वक्ष्यामः। अत एव 'भू प्राप्ता'वित्यस्याशिषि 'भविषीष्टे'त्यत्र ङित्त्वं न।

ननु 'पिच्च ङिन्न, ङिच्च पिन्ने'ति भाष्यकारोक्तकल्पनायां 'मृज्यात्' 'रुध्यादि'त्यादौ औपदेशिकपित्त्वेनाऽऽतिदेशिकङित्त्वस्य बाधान्ङित्त्वविधानेन, यासुटो ङित्त्वं चरितार्थम्। स्पष्टं चेदं 'यासुट्'सूत्रे भाष्ये।

अत्र 'ङिच्च पिन्ने'तिवचनस्य व्यवस्थाऽऽकाङ्क्षायामौपदेशिकत्वादिकं नियामकं, न त्विदमेवैतत्कल्पनाबीजमिति भ्रमितव्यम्। ल्यपि कित्त्वस्याऽनापत्त्या 'निपीये'त्यादौ गुणाऽऽपत्तेः। न चाऽत्र पित्त्वस्याऽपि कृतेकारलोपे तकारे स्थानिवद्भावलभ्यत्वेनोभयोरप्यातिदेशिकत्वाद्बाधे विनिगमनाविरह इति वाच्यम्। ङित्त्वे स्थानिवद्भावद्वयाऽऽश्रयणम्, पित्त्वे त्वेक एवे'ति ङित्त्वस्य पित्त्वाऽपेक्षया दुर्बलत्वात्।

किञ्च 'ङिच्च पिन्ने'त्यस्याभावे 'ब्रूतादि'त्यत्र 'ब्रुव ई'डिति ईडागमः प्राप्नोति। लाश्रयाऽनुबन्धकार्यस्य तदादेशेष्वभावज्ञापनेऽपि, तिपः पित्त्वस्य तदादेशे तातङ्यभावकल्पने मानाऽभावात्। (भा[3]ष्यमते त्वत्र न दोषः) इत्यत आह—(हलः)श्न इत्यादि। इ[4]दं च 'ङिच्च पिन्ने'त्यस्य सत्त्वेऽप्यावश्यकम्। अत एव 'भविषीष्टे'त्यत्र[5] लाश्रयं ङित्त्वं न।

(ए[6]वं च'ङिच्च पिन्ने'त्यादिकमप्येतज्ज्ञापकसिद्धाऽर्थकथनमेव)।

---

१. अयं ख. पाठः क. ग. नास्ति।

२. 'किञ्चैवं सति ब्रूतादित्यत्र' ख. पाठः।

३. अयं ख. पाठः। क. ग. नास्ति।

४. 'इदं च भाष्यमतेऽप्यावश्यकम्' ख. पाठः।

५. 'भविषीष्टेत्यत्र तन्मते लाश्रयं' ख पाठः।

६. ख. पाठोऽयं, क. ग. नास्ति।

**क्व चिदिति**। लक्ष्याऽनुरोधेन च व्यवस्थेति बोध्यम्। निरनुबन्धकस्य ढस्य स्त्रियां वृत्तेरसम्भवात्सानुबन्धकस्यापि ढको ग्रहणमित्याह-**सौपर्णेयीति**। 'शिलाया ढ' इति ढाऽन्तन्तु स्वभावान्नपुंसकमेव। 'सभाया ढश्छन्दसी'त्यस्य स्त्रियां वेदे प्रयोगाऽभावादिति भावः। स्पष्टं चेदमत्रैव भाष्ये। 'सुपर्णी'शब्दादपत्ये 'स्त्रीभ्यो ढगि'ति ढक्। **ऐन्द्रीति**। 'साऽस्य देवते'त्यण्। **औत्सीति**। भावाऽर्थे 'उत्सादिभ्योऽञ्'। अञन्तस्याऽऽद्युदादात्तत्वेन 'शर्ङ्गरवाद्यञ' इति ङीनैव सिद्धे इहाऽञ्ग्रहणमजात्यर्थम्। तत्र हि जातेरि'ति वर्त्तते। अन्यथा पुंयोगेऽपि परत्वान्ङीनेव स्यात्। इष्यते तु ङीप्। अनेनैव सिद्धे तत्राऽञ्ग्रहणमुत्सस्याऽपत्यं स्त्रीत्यत्राऽञन्तलक्षणङीपं बाधित्वा परत्वात्प्राप्तजातिलक्षणङीष्बाधनाऽर्थम्।

**ऊरुदघ्नीत्यादि**। 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' 'सङ्ख्याया अवयवे तयप्'। **आक्षिकीति**। 'तेन दीव्यती'ति ठक्। **लावणिकीति**। 'तदस्य पण्यमि'त्यधिकारे 'लवणाट्ठञ्'। **यादृशीति**। 'त्यदादिषु दृश' इति कञ्।

ननु 'त्यदादिषु दृशोऽनालोचनेऽञ्, किच्चे'त्येव सूत्रयित्वाञेव विधेयः, इह च कञ्ग्रहणं माऽस्तु, अञन्तत्वादेव ङीप्सिद्धेरिति चेन्न। 'तादृशस्य स्त्री'त्यर्थे पुंयोगविवक्षायां परत्वेन प्राप्तङीषो बाधनाऽर्थं तद्ग्रहात्। न च पुनरञ्ग्रहणेन सिद्धिः। लाघवाऽभावात्। अञन्तमात्रे तद्बाधाऽऽपत्तेश्च। गौणमुख्यन्यायस्य तु नेह प्रवृत्तिः। तस्य पदकार्ये एव प्रवृत्तेः।

न च 'ऋतष्ठञि'ति सूत्रं प्रक्रियालाघवेऽपि 'उष्कञि'ति न सूत्रितम्, तद्धि 'पैतृकी विद्ये'त्यत्र ङीबर्थमि'त्याकरग्रन्थाऽसङ्गतिः, कञ्ग्रहणात्सिद्धेरिति वाच्यम्। इष्टाऽऽपत्तेः। एकाऽनुबन्धकपरिभाषायास्तु न विषयः।

---

१. 'नेह प्रवृत्तिः। तस्य विशिष्टरूपोपादानविषयत्वात्। तस्य पदकार्ये एव प्रवृत्तेश्च' इति ख. पाठः।

२. 'इतोऽग्रे—'तथा हि सत्यनुबन्धद्वयस्मरणसापेक्षाऽपेक्षया एकाऽनुबन्धस्मरणमात्रसापेक्षतया शीघ्रोपस्थितिकस्याऽस्यैव ग्रहणाऽऽपत्तौ 'तादृशी'त्याद्य-

येनाऽनुबन्धेन साऽनुबन्धकत्वं तदनुच्चारणे एव तत्प्रवृत्तेः। एतेन 'तया परिभाषया तादृशीत्याद्यसिद्धिरि'ति परास्तम्। अत एव 'तदनुबन्धकग्रहणे नाऽतदनुबन्धकस्ये'त्येव भाष्ये पठितम्। अत एव क्विधायकसूत्रे नित्त्वेनैव स्वसिद्धौ, ञित्त्वमत्र सूत्रे विशेषणाऽर्थम्। अन्यथा 'कनि'त्युक्तौ 'याविके'त्यत्राऽपि प्रसज्येतेति अपिगर्भं भाष्ये सङ्गच्छते। 'ञित्त्वं केवलस्वराऽर्थमेव, उताऽन्याऽर्थमपी'ति तद्विचारतात्पर्यम्।

**इत्वरीति**। 'इण्नशजिसर्त्तिभ्यः क्वरप्'। अन्यतराऽनुबन्धोपादानेनैव वरचो व्यावृत्तिसिद्धावुभयोपादानं स्पष्टाऽर्थम्। तेन 'ईश्वरे'त्यत्र न ङीप्। 'ईश्वरी'ति तु पुंयोगलक्षणे ङीषि, वन्नन्तेश्धातोर्वनोर चेति ङीप्रयोश्च साधु।

ननूष्ट्रस्याऽवयवो, विकारो वा औष्ट्रकं चर्माऽऽदि। 'उष्ट्राद्वुञि'ति वुञ्। कंसीयस्य विकारः—कांस्यम्। 'कंसीयपरशव्ययोरि'ति यञ्। तयोर्विकारे 'ञितश्च तत्प्रत्ययादि'त्यञि—'औष्ट्रिका उपानत्' 'कांस्या स्थाली'त्यादौ ङीप्प्राप्नोति। न चेष्टाऽऽपत्तिः। 'पूर्वे पञ्चालाः' 'पटो दग्ध' इत्यादौ समुदायवाचकानामवयवे दर्शनेन, 'शालीन् भुङ्क्ते मुद्गैरि'त्यादौ प्रकृतिवाचकानां विकारे दर्शनेन च, 'उष्ट्र' 'कंसीय'शब्दयोरेव 'औष्ट्रक'कांस्याऽ'ऽर्थे वृत्तिमाश्रित्य, ततो वुञादावौष्ट्रक-कांस्यादीनां सिद्धिमाश्रित्य, मुख्याऽर्थकौष्ट्रकादेश्च मयडादीनामनभिधानमाश्रित्य,ञितश्च तत्प्रत्ययादि'त्येतत्प्रत्याख्यानपरभाष्यविरोधात्। न हि भाष्यमते ङीप्प्राप्नोतीति चेन्न। अजादिषु पाठेन दोषाऽभावात्।

न च 'शामोरु'शब्दादञि ङापि आद्युदात्तं पदम्। अभेदविवक्षायान्तु

---

सिद्ध्यापत्तिः। न च क्वरप्साहचर्यात्तस्यापि ग्रहणम्। साहचर्यस्याऽत्र सूत्रे आश्रयितुमशक्यत्वात्। अन्यथा कृदणो ग्रहणं न स्यात्। वस्तुत 'उष्कञि'ति वक्तुमुचितम्। अस्य न्यायस्य द्व्यनुबन्धकपरिभाषारूपत्वात्। तस्याश्चाऽत्र न प्रवृत्तिः' इति क. कुण्डलितः ख. पाठः।

शमीशब्दादेव तदर्थे ष्लञि, षित्वान्ङीष्यन्तोदात्तं स्यादिति वाच्यम् । भाष्यप्रामाण्यात् ट्लञ् टिदेव प्रत्यय इति दोषाऽभावादित्याहुः ।

**ताच्छीलिके** इति । 'शीलं' 'छत्रादिभ्यो ण' इति णे इत्यर्थः । 'अनि'-त्यणि विहितप्रकृतिभावबाधनार्थेन 'कार्मस्ताच्छील्ये' इति टिलोपनिपातनेन ताच्छीलिके णेऽण्कार्यस्य ज्ञापनादिति भावः । न च 'कार्मस्ताच्छील्ये' इति सूत्रं न कार्यम्, 'ताच्छीलिके णेऽण्कार्यं भवती'ति च न ज्ञाप्यम्, लाघवेन ङीबर्थं वचनाऽऽरम्भस्यैव युक्तत्वादिति वाच्यम् । 'अणो द्व्यच' इति फिञः फलाऽन्तरस्याऽपि सत्त्वात् । अत एव भाष्ये 'अण्कृतानि भवन्ती'त्युक्तम् ।

ज्ञापकसिद्धस्याऽसार्वत्रिकत्वात् 'च्छात्रे'त्येव । एतेन 'छत्रादिभ्योऽणेव कार्यः, किमनया कुसृष्ट्ये'ति परास्तम् । ज्ञापकस्य ताच्छीलिकविषयक-त्वात् 'तदस्यां प्रहरणमि'ति णे 'दाण्डा' 'मौष्टे'त्येव । अत एव 'शीलि-कामिभिक्षाचरिभ्यो ण' इति वार्त्तिके 'मांसभक्षे'त्येवोदाहृतं भाष्ये इति दिक् ।

**चौरीति** । चुरा शीलमस्या इत्यर्थः ।

**नञ्स्न** । यद्यपि तरुण-तलुनयोः 'वयस्यचरमे' इति ङीप् सिद्धः, तथा-ऽप्यनयोर्गौरादिषु पाठात्परत्वेन ङीषा बाधः स्यादिति, ङीबपि भवत्वि-त्येतदर्थमत्र पुनर्ग्रहणम् । ङीप्ङीषोः स्वरे विशेषः । एतौ हि 'त्रो रश्च लो वे'त्युनन्प्रत्ययान्तत्वादाद्युदात्तौ ।

**स्त्रैणीत्यादि** । 'स्त्रीपुंसाभ्यां नञ्स्नञौ' 'प्रहरणमि'त्यधिकारे 'शक्ति-यष्ट्योरीकक्' । अनाढ्यः आढ्यः क्रियते । 'आढ्यसुभगे'त्यादिना ख्युन् । 'अरुर्द्विषदि'ति मुम् । एवं च वृत्तिकृतः ख्युन्घटितसूत्रपाठः प्रामादिक इति भावः ।

**यञश्च** । योगविभागः 'प्राचां ष्फ' इत्यत्र यञ एवाऽनुवृत्तिर्यथा स्यादिति ।

**हलस्तद्धित** । 'हल' इति पञ्चमी । 'यस्ये'ति सूत्रादीतीत्येवाऽनुवर्त्तते, न तु तद्धित इति । चाऽनुकृष्टत्वात् । 'सूर्यतिष्ये'त्यतो 'य उपाधाया' इत्यनुवर्त्तते । तदाह—**हल इत्यादि** । यलोपेऽल्लोपस्याऽऽभीयाऽसिद्धत्वात्

यकारस्य ईकारपरत्वाऽभावाद्वचनसार्थक्यायोपधाग्रहणाऽनुवृत्तिः।

**ईतीति**। 'सौम्यस्येदमि'त्यर्थे सौमीयमि'त्यादावपि लोपो भवत्येव। 'प्रत्ययाऽप्रत्ययेयोरि'ति परिभाषाया, 'अर्थवद्ग्रहण'परिभाषायाश्च वर्णग्रहणेऽप्रवृत्तेः। ध्वनितं चेदम् 'अचः परस्मिन्नि'ति सूत्रशेषे भाष्ये।

**अनपत्याऽधिकारस्थादिति**। अपत्याऽधिकारस्थभिन्नादित्यर्थः। 'आपत्यग्रहणं कर्त्तव्यमि'ति वार्त्तिकं 'कञ्क्वरपोऽयञश्चे'त्यत्र 'गर्गादिभ्योऽयञ्' इत्यत्र, यस्कादिभ्यो गोत्रेऽयञञोश्चे'त्यत्र चाऽकारप्रश्लेषेण तत्प्रत्याख्यानपरभाष्यप्रामाण्यादपत्याधिकारस्थप्रत्ययपरमित्याशयः। न चैवम् 'अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छुमदणो यञि'ति यञन्तादपि ङीबनापत्तिः। 'आयुधजीविसङ्घाञ्ञ्यट्' 'वृकाट्टेण्यणि'त्यादिभिर्विच्छिन्नस्याऽपि 'व्रातच्फञोरि'तिसूत्रस्था'ऽस्त्रियामि'त्यस्य मण्डूकप्लुत्येहाऽनुवृत्त्या ङीपोऽप्राप्तेः। अत एवाऽभिजित्सूत्रे 'गोत्रमिति वक्तव्यम्। अस्य गोत्रत्वप्रयुक्तं कार्यं भवतीति वक्तव्यम्। किं प्रयोजनम्। 'आभिजितकः'। 'गोत्रचरणादि'ति वुञ् यथा स्यात्। तच्चाऽकर्त्तुं शक्यम्। गोत्रादयं स्वार्थिको, गोत्रमेव भवती'ति भाष्ये वुञेव प्रयोजनत्वेनोक्तो, न ङीप्।

अत्र 'गोत्र'पदेनाऽपत्यमात्रम्। ननु गर्गादिसूत्रेऽयञितिच्छेदे 'सङ्घाङ्कलक्षणेष्वि'ति सूत्रेऽस्य ग्रहणं न स्यात्। 'गार्ग्य' इत्यादिसिद्धये तदकारस्याऽनुनासिकत्वेनेत्संज्ञकत्वाल्लुप्तत्वेन 'एकाऽनुबन्धग्रहणे द्व्यनुबन्धकस्याऽग्रहणा'दिति चेत्। अत्राऽऽहुः—लक्ष्याऽनुरोधेन[1], 'गार्ग्यो घोषः' 'गार्ग्योऽङ्क' इत्याद्युदाहरणरूप'सङ्घाऽङ्के'तिसूत्रस्थभाष्यप्रामाण्येन च[2] तत्परिभाषाया अत्राऽप्रवृत्त्या गर्गादियञ एव तत्र ग्रहणाच्च[3]।

---

१. 'लक्ष्यानुरोधेन, 'स्त्रीपुंसाभ्यामि'ति सूत्रस्थभाष्यप्रामाण्याच्च तत्र सूत्रे प्रवराऽध्यायप्रसिद्धगोत्रग्रहणेन गार्ग्यो घोषः' इति ख. पाठः।

२. 'भाष्यप्रामाण्येन च तत्परिभाषाया अत्राऽवृत्त्या' इति क. ग. पाठः। ख. नाऽस्ति।

३. चकारः ख. नास्ति।

**अधिकारग्रहणादिति**। प्राग्दीव्यतीयेषु सर्वेष्वर्थेषु विधानेन अपत्या-ऽर्थकत्वसत्त्वादिति भावः।

**प्राचां** ष्फ। 'यञ' इति वर्त्तते। तदाह—**यञन्तादिति**। 'अत' इति वर्त्तते। 'यञो योऽकार' इति चाऽर्थः। तेन 'वतण्डी'त्यत्रोदीचां मते साऽवकाशं शार्ङ्गरवादिङीनं बाधित्वा 'आवट्यायनी'त्यादाविव 'सर्वत्र'-ग्रहणात्प्राचां मते प्राप्तोऽपि ष्फो न। अत्र हि 'वतण्डाच्चे'ति यञो 'लुक् स्त्रियामि'ति लुक्। वर्णाऽऽश्रयत्वाच्च न प्रत्ययलक्षणम्। स्पष्टं चेदं 'प्रत्ययलोपे' इति सूत्रे भाष्ये।

**षः प्र**। 'आदिर्ञिटुडवः' इति सूत्रादादिरित्यनुवर्त्तते। तदाह—**प्रत्ययस्या-ऽऽदिरिति**। प्रत्ययस्येति किम्?। षोडश। 'षष उत्त्वमि'त्यत्रोपदेशस्थोऽयं षकारः। 'षष्'शब्दस्याऽत्रैव निपातनादुपदेशत्वमित्याहुः।

किञ्च 'ष्ठिवु-ष्वष्क' अनयोः षस्येत्त्वे 'षिद्गौरादिभ्य' इत्यङ्गापत्तिः। आदिः किम्?। महिषः। 'अविमह्योष्टिषच्' न चाऽत्र षस्येत्संज्ञायां फला-ऽभावः, टित्त्वान्ङीपि 'महिषी'त्यस्य सिद्धेः, चित्त्वान्महिषशब्दस्याऽन्तोदात्त-त्वेनोदात्तनिवृत्तिस्वरेणोदात्तत्वस्याऽपि सिद्धेरिति वाच्यम्। विनिगमका-ऽभावेन पक्षे टकारस्य[1] श्रवणाऽऽपत्तेः। उत्तरार्थञ्चावश्यकं तत्[2]।

**आयने**। आयनीनोर्नस्य नेत्त्वम्। असञ्जातविरोधित्वन्यायसहकृतात् फिनो नित्करणात्। फादिष्वकार उच्चारणर्थः। तेन ढूक[3] आदेशसिद्धिः।

आदिग्रहणं किम्?। ऊरुदघ्नम्। प्रत्ययेति किम्?। 'फक्कति' 'खनती'त्यादि। खच्-घञादौ 'चजोः कु घिण्ण्यतोः' 'खित्यनव्ययस्ये'त्यादिप्रामाण्यादित्संज्ञैव, नाऽऽदेशाः। 'शमेर्ढः' इत्यादीनामुणादीनां बहुवच-नान्नाऽऽदेशाः। 'ऋतेरीयङ्'ति वक्तव्ये ईयङ्करणेन धातुप्रत्ययेष्वादेशा-

---

१. 'टकारस्याऽपि' ख. पाठः।

२. 'उत्तरार्थे चावश्यकं तत्' इति क. ग. पाठः। ख. नास्ति।

३. 'ढूगादीनामादेशसिद्धिः' ख. पाठः। अत्र, आदिशब्देन फिनादेर्ग्रहणम्।

ऽभावस्य भाष्यकृता ज्ञापितत्वाच्च। न च 'छ-सुनावि'ति वक्तव्ये ईय-सुन्करणं प्रातिपदिकप्रत्ययानामप्यादेशाऽभावं ज्ञापयेदिति वाच्यम्। आयन्नादीनां निर्विषयताऽऽपत्तेः। न च विनिगमनाविरहः। ष्फञ्-घचोश्चित्त्वस्य, 'ण्यक्षत्रिये'त्यादिनिर्देशानां च विनिगमकत्वात्।

तस्मादीयसुन्करणं प्रक्रियालाघवार्थमेव। घचश्चित्त्वसामर्थ्यादिवैते प्रत्ययसम्बन्ध्यादेशा उपदेशसन्नियोगशिष्टकार्यादपि पूर्वमेव भवन्ति। तेनाऽन्तोदात्तत्वसिद्धये चित्त्वं सफलम्। अन्यथा आद्युदात्तत्वेनैव तत्सिद्धौ, तद्वैयर्थ्यं स्पष्टमेव। न चाऽऽदेशेषु आदित्वस्य विनाशोन्मुखत्वात्पूर्वमाद्युदात्ताऽप्राप्तौ चित्त्वस्य चारितार्थ्येन कथं ज्ञापकत्वमिति वाच्यम्। 'अकृतव्यूह'परिभाषाया अभावात्। सत्त्वेऽप्यनित्यत्वाच्च।

एतेन 'आयन्नादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमि'ति व्याख्यातम्। तत्राऽऽदिशब्देनाऽन्तोऽपि। स्पष्टं चेदं 'धातोः' 'उभे अभ्यस्तमि'त्यादौ **भाष्य-कैयट-पदमञ्जर्यादौ।**

ननु स्त्रियामेव ष्फविधानादुक्तार्थानामप्रयोग इति ङीष् न स्यादित्यत आह—**षित्त्वसामर्थ्यादिति। ष्फेणोक्तेऽपीति।** इदं च 'टाबादीनां स्त्रीत्वं वाच्यमि'ति पक्षाऽभिप्रायेण। द्योत्यत्वपक्ष तु ष्फाऽन्तस्य ङीषं प्रति प्रकृतित्वेन तेनाऽभिधाने बाधकाऽभावः। प्रकृत्यभिहितत्वस्याऽपि बाधकत्वे हि टाबादिविधीनां वैयर्थ्याऽऽपत्तिः। षित्त्वेनाऽपि द्योतकत्वपक्ष एव ज्ञाप्यते इति तत्त्वम्।

---

१. 'कथं ज्ञापकत्वमिति वाच्यम्। यदैव तासेः प्रवृत्तिस्तदैवोदात्तत्वमित्यर्थक-'प्रत्ययस्वरश्च तासेर्वृत्तिसन्नियोगशिष्ट' इति डारौरस्सूत्रभाष्यप्रामाण्येन, आद्युदात्तश्चे'त्यस्याऽधिकारसूत्रत्वेन च 'प्रत्ययसंज्ञकः पर आद्युदात्तः प्रत्ययो भवती'त्यादिक्रमेण सूत्राऽर्थात्स्वररहितस्य विधानाऽभावेन, तद्विषयेऽकृतव्यूहपरिभाषाया अप्रवृत्तेः। अत एव 'करिष्यती'त्यादौ स्यस्योदात्तत्वसिद्धिः। ध्वनितं चेदम् 'आद्युदात्तश्चे'ति सूत्रे भाष्ये' इति ख, पाठः।

**सर्वत्र लो**। **सर्वत्र**। सर्वेषां मते इत्यर्थः। तदाह—**नित्यमिति**। ननु 'प्राचा'मित्यस्याऽस्वरितत्वादारम्भसामर्थ्याच्च नित्यत्वसिद्धेर्व्यर्थमिदमिति चेन्न। 'प्राचां ष्फ' इत्यस्य बाधकविषयेऽपि प्रवृत्त्यर्थं 'सर्वत्र' ग्रहणम्। तद्धि पूर्वसूत्रेऽपकृष्यते। तेन 'आवट्यायनी'त्यत्र 'आवट्याच्चे'ति चापं बाधित्वा, प्राचां मते ष्फ एव। 'अवट'शब्दो गर्गाऽऽदिः। एतेन 'चाप्विषये प्राचां मते ष्फः प्राप्तः। उदीचां मते ङीप्। तत्राऽविशेषाच्चाबुभयोरपि बाधकः स्यात्। 'अनन्तरस्ये'त्यादिन्यायाऽऽश्रयणे तु ष्फस्यैव स्यादि'त्यपास्तम्। 'सर्वत्र'ग्रहणसामर्थ्येनोदीचां-मतप्राप्तङीप्बाधकत्वस्यैव कल्पनात्। 'सर्वत्र'ग्रहणस्येह करणन्तु वैचित्र्य[1]ऽर्थम्। स्पष्टं चेदम् 'आवट्याच्चे'ति सूत्रे भाष्ये। ननु चापि कृतेऽप्येकादेशस्य पूर्वाऽन्तत्वेन ग्रहणात्ष्फस्य सिद्धत्वात् 'सर्वत्र'ग्रहणं व्यर्थमेवेति चेन्न। 'अत' इत्यधिकारात्।

**लोहितादि**र्गर्गाद्यन्तर्गणः। तत्र हि—'कपि-कत-कुरुकत-अनडुत्[2]-कण्व-शकले'ति पठ्यते। तत्र कुरुकताऽनडुच्छब्दावस्मात्स्थानादपकृष्याऽन्यत्र पाठ्यौ। 'शकल'शब्दस्तु कत-कण्वयोर्मध्ये। 'कत'शब्देन चाऽत्र 'कुरुकतै'कदेशो न गृह्यते। अनर्थकत्वात्। किन्तु 'कपि'शब्दोत्तर एव सः। न चैवं 'शकल'शब्दस्य लोहिताऽऽदि-कण्वाऽऽदिबहिर्भूतत्वेन, ततः ष्फो न स्यात्, 'कण्वादिभ्यो गोत्रे' इत्यण् च न स्यादिति वाच्यम्। 'कतन्तेभ्यः' 'कण्वादिभ्य' इत्युभयत्राऽपि षष्ठीतत्पुरुष-बहुव्रीह्योरेकशेषाऽभ्युपगमात्। 'कतन्त'शब्दे शकन्ध्वादित्वात्पररूपम्। 'यस्योत्तरस्वरविधिरि'ति बहुव्रीहेः शेषः। तेन शाकल्यस्य च्छात्राः 'शाकला'-इत्यत्राऽण् सिद्धः[3]।

**टाप्ङीषोरिति**। 'कौरव्य'शब्दे योपधप्रतिषेधाट्टाप्, 'माण्डूक'शब्दे जातित्वान्ङीषिति भावः। **'टाप्ङीषोरपवाद'** इति पाठस्तु प्रामादिकः।

---

१. 'स्पष्टार्थम्' ख. पाठः।

२. 'अनड्ह' इति ख. पाठः।

३. 'अण्सिद्धिः' ख. पाठः।

'कौरव्य'[1]साहचर्यात् माण्डूकस्याऽपत्यप्रत्ययान्तस्य ग्रहणम्। तेन 'यद्यसौ कूपमाण्डूकि ! तवैतावतिकः स्मय' इति भट्टिः समर्थितः। तत्र 'मण्डूकस्येयं भार्ये'ति 'तस्येदमि'त्यण्।

**आसुरेरिति**। 'प्राचां ष्फ' इति सूत्रे 'तद्धित'ग्रहणेन ज्ञापितमेतत्। तद्धितत्वं हि 'यस्येति चे'ति लोपाऽर्थम्। ननु प्रातिपदिकत्वेन ङीष्प्र[2]वृत्त्या चरिताऽर्थं तत्। अन्यथाऽप्रातिपदिकत्वान्न स्यात्। न च लिङ्गविशिष्टपरिभाषया निस्तार इति वाच्यम्। प्रातिपदिकसंज्ञस्य षितः समुदायस्य लिङ्ग[3]प्रत्ययवैशिष्ट्याऽभावादिति चेन्न। षित्त्वसामर्थ्येनैव तत्सिद्धेरित्याहुः।

---

१. 'कौरव्य' इत्यारभ्य' 'तस्येदमित्यण्' इत्यन्तः ख. पाठः, क. कुण्डलितो मनोरमास्थत्वात्।

२. 'ङीष्प्रवृत्त्यर्थम्' ख. पाठः।

३. 'लिङ्गवैशिष्ट्याऽभावात्। किञ्चैवम् 'एकपदा ऋगि'त्यत्र टापि लिङ्गविशिष्टपरिभाषया 'पादोऽन्यतरस्यामि'ति [1]ङीबापत्तिः। येन नाऽप्राप्तिन्यायेन पादन्तत्वनिमित्तकङीपोऽनेन बाधेऽपि, लिङ्गविशिष्टात्तस्मात्[2]अस्याऽबाधात्। अत एव 'अजाद्युक्तिर्ङीपो ङीषश्च बाधनाये'त्याकरः सङ्गच्छते। अन्यथा ङीषाद्युत्तरं लिङ्गविशिष्टपरिभाषया[3] तच्चारितार्थ्यं स्पष्टमेव। तस्मादनित्यत्वेन तस्याः परिभाषाया अत्राऽप्रवृत्तिरेवोचिता।

किञ्चैवं[4] 'गार्गी'ति ङ्यन्तादपि ष्फाऽऽपत्तिः। एवं च 'गर्गायणी'त्यस्याऽप्यापत्तिः न च ष्फो ङीपोऽपवादः। उभयोरपि परस्परं येन नाप्राप्तिसत्त्वेनैकस्याऽप्यपवादत्वाऽनिर्णयात्। न च ष्फाऽभावे ङीप् चरितार्थः।

---

1. 'पाक्षिकङीबापत्तिः' ख. पाठः।

2. 'तस्मादित्यस्या' क. ख. पाठः।

3. 'लिङ्गवि शष्टपरिभाषया टाबर्थं तच्चारितार्थ्यम्' ख. पाठः।

4. 'किञ्चैवं सति' ख. पाठः।

**वयसि ।** प्राणिनां कालकृताऽवस्थाविशेषो **वयः** । यः शब्दः प्रकरणाऽऽदिकमनपेक्ष्य वयः प्रतिपादयति, स वयोवचनः, अन्तरङ्गत्वात् । वयःप्रवृत्तिनिमित्तक इति यावत् । तेन 'उत्तानशये'त्यादौ न, प्रकरणाऽदिना वयसः प्रतीतावपि, शब्दात्तथाऽप्रतीतेः । याऽपि हि व्याध्यादिवशादुत्ताना शेते साऽपि प्रतीयते । 'द्विवर्ष'त्यादावपि वयो न वाच्यम् । शालादावपि प्रयोगात् । **कुमारीति** । प्रथमवयोवाच्येषः । 'वृद्धकुमारी'ति तु पुंसाऽसंप्रयोगरूपसादृश्येन गौणः प्रयोग इति बोध्यम् ।

**वयस्यचरम इति ।** 'कौमार-यौवन-वृद्धत्वभेदाद्वयांसि त्रीणीत्येके ।

**'आद्ये वयसि नाऽधीतं, द्वितीये नार्ऽजितं धनम् ।**
**तृतीये न तपस्तप्तं, चतुर्थे किं करिष्यति' ॥**

—इति दर्शनाच्चत्वारी'त्यन्ये । अत्र मतद्वयेऽपि वार्त्तिकमावश्यकम् । यौवनस्याऽप्रथमत्वात् । 'उपचयाऽपचयलक्षणे द्वे एव वयसी' इत्येके । अत्र मते नाऽवश्यकमित्याहुः ।

**अजादित्वादिति** । तस्याऽऽकृतिगणत्वादिति भावः । यद्यपि 'पाककर्णे'ति सूत्रे 'सभस्त्राऽजिने'त्युत्तरं 'त्रेश्चे'ति पठ्यते, तथाऽपि तत्सर्वमाकृतिगणत्वे एव तात्पर्यग्राहकम् । तदेव ध्वनयन्नाह—**त्र्यनीकेति** । समाहारे 'तद्धितार्थे'ति द्विगुः । अकारान्तोत्तरपदत्वात् स्त्रीत्वम् ।

**अपरिमाण** । अत्र 'परिमाण'शब्देनाऽऽरोहतः, परिणाहतश्च येन मीयते काष्ठनिर्निर्मितेन प्रस्थादिना, तद्गृह्यते । 'परिमाणन्तु सर्वत' इत्य-

---

१. 'टाबृची'त्यस्य 'पादोऽन्यतरस्यामि'त्यपवादत्वाऽनापत्तेः । न च 'भस्याऽढे' इति पुंवद्रूपाऽतिदेशेन रूपे न विशेषः । [1]एवमपि तत्प्रवृत्त्यर्थमेव संज्ञाविधानस्य चारिताथ्येनोक्तज्ञापकाऽसङ्गतिरेवेति चेन्न । षित्त्वसामर्थ्येनैव तत्सिद्धेः । किञ्चैतावन्मात्रफलत्वे कृतसंज्ञामेव लाघवात्कुर्यादित्याहुः' इति क. कुण्डलितः ख. पाठः ।

---

1. 'एवं हि' ख. पाठः ।

नेन तत्राऽर्थे शक्तिग्रहात्। न चैवमुन्माने 'द्विनिष्की'ति न सिद्ध्येत्। 'सुवर्णबिस्तौ हेम्नोऽक्षे', 'कम्बल्यमूर्णापलशतमि'ति कोशबलेन उन्मानभूतबिस्त-कम्बल्यग्रहणस्य नियमाऽर्थत्वेनाऽदोषात्। 'उन्मानस्य चेत् निषेधो, बिस्तकम्बल्ययोरेवे'त्यर्थात्। अत एव 'द्वे वर्षे भूता' 'द्वाभ्यां शताभ्यां क्रीते'त्यर्थे 'द्विवर्षा 'द्विशते'त्यादौ, ति[1]र्यङ्माने 'द्विहस्ता भित्तिरि'त्यादौ च निषेधसिद्धिः। 'द्विवर्षे'ति प्रयोगश्च 'वयसि प्रथमे' इति सूत्रे भाष्ये स्पष्टः। 'काण्डान्तादि'ति सूत्रन्तु 'क्षेत्रे' इति नियमाऽर्थम्। तेन 'द्विकाण्डी रज्जुरि'त्यत्र नेति **स्पष्टमाकरे**। अत एव 'द्वौ शमौ प्रमाणमस्या' इति तिर्यगवस्थितवस्तुपरिच्छेदे मात्रचः 'प्रमाणे लो द्विगोर्नित्यमि'ति लुकि, 'द्विशमा' 'त्रिशमे'त्येवेति **प्राञ्चः**। 'पाणिः शमः शयो हस्त' इति **कोशः**। 'ऊर्ध्वाऽवस्थितवस्तुपरिच्छेदे तु 'द्विशमो'ति ङीबेवे'त्येके। वस्तुतस्तदा 'प्रमाणे ल' इति लुगभावात् 'द्विशमद्वयसी'त्येव। ध्वनितं चेदम् 'आयामविवक्षायां प्रमाणमित्येतद्भवती'ति ग्रन्थेन भाष्यकृता 'आर्हादगोपुच्छे'ति सूत्रे।

**द्वौ बिस्तौ पचतीति**। 'बिस्त'शब्देन सुव[2]र्णाऽक्षः। पचधातोर्द्रवीभावाऽनुकूलव्या[3]पारेऽपि शक्तेः। अत्रोन्मानत्वाट्ठको लुक्, न ठञः। 'टिड्ढाणञि'त्यनेन ठगन्तत्वप्रयुक्तोऽप्यत्र न ङीबिति 'टिड्ढे'ति सूत्रे उक्तम्। '[4]आचितः शाकटो भार' इत्युक्तेः परिमाणमेवेदम्।

**कम्बल्यम्**—ऊर्णापलशतम्। 'कम्बलाच्च संज्ञायामि'ति यत्। 'द्वाभ्यां

---

१. 'तिर्यङ्माने' इति क. ग. पाठः। ख. नास्ति।

२. 'सुवर्णाक्षः। प्रकृते तु तत्तुलिततण्डुलाऽऽदि गृह्यते इत्येके' इति ख. पाठः।

३. 'व्यापारेऽपि शक्तेः। स्वर्णमेवेत्यपरे' इति ख. पाठः।

४. आचितः शाकटो भारः' इत्युक्तेः परिमाणमेवेदम्' इति क. ग. पाठः। ख. नास्ति।

कम्बल्याभ्यां क्रीते'ति ठको लुक्।

**द्व्याढकीति**। 'द्वावाढकौ पचती'ति 'आढकाचितपात्रात्खोऽन्यतरस्याम्' 'द्विगोष्ठंश्चे'ति ख-ठन्भ्यां मुक्ते, प्राग्वतीयष्ठञ्। तस्य लुक्। एतेन '**द्व्याचिता**' व्याख्याता। ('आचितो दश भाराः स्युः')।

'अन्त'ग्रहणसामर्थ्यात् 'क्षेत्रे' इति काण्डाऽन्तस्य विशेषणम्। अन्यथा हि अवान्तरवाक्याऽर्थबोधोत्तरं 'येन विधिरि'त्यस्य प्रवृत्तेस्तत्काले श्रुतत्वात्काण्डस्यैव विशेषणं स्यात्। पश्चात्तदन्तविधावपि पुनर्व्यापारे मानाऽभाव इत्याशयेनाऽऽह–क्षेत्रे इति। तेन 'द्वाभ्यां काण्डाभ्यां=तत्परिमिताभ्यां क्षेत्राभ्यां क्रीता वडवा 'द्विकाण्डी'त्यत्र निषेधो न। 'द्विकाण्डा क्षेत्रभक्ति'रित्यादौ च सिद्धः। षोडशहस्तप्रमाणदण्डाऽर्थवाचक'काण्ड'शब्दस्याऽऽयामपरिच्छेदकत्वेन प्रमाणवाचित्वादाह—**प्रमाण** इति। द्वयसच् त्वत्र न प्राप्नोति। काण्डस्य प्रकृते तिर्यङ्मानत्वेनोर्ध्वमानत्वाऽभावात्। '**प्रथमश्च द्वितीयश्च**[2] **ऊर्ध्वमाने मतौ ममे**'ति सिद्धान्तात्।

**पुरुषात्प्रमाणे**। अपरिमाणाऽन्तत्वान्निषेधे प्राप्ते विकल्पाऽर्थं वचनम्। 'पुरुष'शब्दस्योर्ध्वाऽधरदिगवस्थितवस्तुमात्रपरिच्छेदकत्वेनोन्मानत्वात्। तदुक्तम्—'ऊर्ध्वमानं किलोन्मानमि'ति। वस्तुतस्तु 'उन्मानस्य चेद्विस्तकम्बल्ययोरेवे'तिनियमान्निषेधाऽप्राप्त्या, ङीपि नित्यं प्राप्ते, विकल्पाऽर्थमिदम्। न चैवं पुरुषस्य[3] कदापि तिर्यगवस्थितवस्त्वपरिच्छेदकत्वेनाऽप्रमाणत्वात् 'प्रमाणे' इतिविशेषणमनुपपन्नमिति वाच्यम्। सामर्थ्येनाऽत्र 'प्रमाण'शब्दस्य परिच्छेदकमात्रपरत्वात्। यद्यपि 'पुरुष'शब्दो जाति-

---

१. इतोऽग्रे-'केचित्तु बिस्ताऽऽदयः परिमाणविशेषा एवेत्याहुः। तन्मते ठञो लुक्। ध्वनितं चेदं मतं मनोरमायाम्। परन्त्विदं चिन्त्यम्। कोशविरोधात्' इति ख. पाठः।

२. 'द्वितीयश्चोर्ध्वमाने' इति क. ख. ग. पाठः।

३. 'पुरुषस्य च तिर्यगवस्थित' ख. पाठः।

वचनस्तथाऽपि 'पञ्चाऽरत्निः पुरुष' इति शुल्बसूत्रादत्र 'प्रमाणे' इति विशेषणाल्लोकव्यवहाराच्च परिच्छेदकवाच्यपि।

य[1]त्तु 'प्रमाणलक्षणे-**आयामो** दैर्घ्यम्। तच्च द्विविधं,-तिर्यक् ऊर्ध्वं च। **उन्मानं** च तुलादावारोप्य येन मीयते तत्, इदं च विनिगमनाविरहात्। एवं चाऽस्य द्विरूपता। अत एव 'द्विपुरुषी'त्यत्र 'प्रमाणे लो द्विगोर्नित्य-मि'ति द्वयसचो लुगि'ति **न्यासकार** इति। तन्न। 'पुरुषद्वयसमि'त्यत्र ('श[2]म' इत्यादाविव) 'प्रमाणे ल' इति लुगापत्तेः। न च 'प्रमाणे ल' इत्यत्र 'समर्थानां प्रथमाद्वे'त्यतो 'वे'त्यनुवृत्तेरुक्तप्रयोगसिद्धिरिति वाच्यम्। आद्यपदयोरननुवर्त्तनेन, 'वे'त्यस्याऽप्यननुवृत्तेः। न च तस्य प्रमाणत्वेन न प्रसिद्धिः। त्वद्रीत्या एतत्सूत्रे एव प्रसिद्धेः। ([3]ऊर्ध्वाऽधरदिगवस्थिते 'उच्चत्व'व्यवहारेऽपि 'दैर्घ्य'व्यवहाराऽभावाच्च)। 'आर्हादि'तिसूत्रस्थ**मनोरमा** तु प्राचामनुरोधेनेति न तद्विरोधः। द्वयसच् तु 'ऊर्ध्वमाने मतौ मम'ेति वचनाद्भवत्येव। शमादीनामूर्ध्वाऽधरदिगवस्थितवस्तुपरिच्छेदकत्वेऽपि तिर्यगवस्थितवस्तुनोऽपि परिच्छेदकत्वात्प्रमाणत्वमक्षतमेव। अत एव 'वितस्तिर्द्वादशाऽङ्गुल' इति प्रयोगसिद्धिः। द्वादशाऽङ्गुलयः प्रमाणमस्ये'ति तद्धिताऽर्थे द्विगुः। 'तत्पुरुषस्याऽङ्गुलेरि'ति टच्।

[4]**द्विपुरुषीति**। द्वौ पुरुषौ-प्रमाणमस्या इत्यर्थे 'तदस्य परिमाणमि'ति

---

१. 'यत्तु' इत्यारभ्य 'इति टच्' इत्यन्तः ख. पाठो मनोरमाशब्दरत्नधृतत्वात् क. कुण्डलितः।

२. अयं ख. पाठः क. ग. नास्ति।

३. अयं ख. पाठः क. ग. नास्ति।

४. 'द्विपुरुषीति। द्वयसचोऽत्रैव सूत्रे 'तद्धितलुकी'त्यनुवृत्तिसामर्थ्याल्लुक्, न तु 'द्विगोर्नित्यमि'ति। तत्राऽपि 'प्रमाणे'इत्यनुवृत्तेः। स च वृत्तिप्रामाण्यान्ङीबभावेऽपि क्वचित्। अत एव च 'पुरुषहस्तिभ्यामि'ति सूत्रे

ठकष्ठञो वा 'अध्यर्द्धपूर्वे'ति लुकि उदाहरणम्। तत्र हि परिमाणशब्देन उत्तरसूत्राऽनुरोधात्परिच्छेदकमात्रस्य ग्रहणमिति सिद्धान्त इति तत्त्वम्।

तद्धितलुकीति किम्? 'पञ्चपुरुषी'। समाहारे द्विगुः। नित्यं ङीप्। प्रमाणे किम्?। द्वाभ्यां पुरुषाभ्यां क्रीता-द्विपुरुषा गौः'।

**ऊधसो**। समासान्तोऽयम्, कपोऽपवादः। अत एव न कप्। तत्र 'स्त्रियामि'त्युपसङ्ख्यानादाह—स्त्रियामिति। अत्र 'बहुव्रीहौ सक्थ्यक्ष्णो-रि'ति सूत्रात् 'बहुव्रीहावि'ति वर्त्तते। अस्य ङित्त्वादादेशत्वम्।

**डाप्-ङीप्-निषेधेष्विति**। समासान्तानामलौकिके एव प्रवृत्तेर्वक्ष्यमाण-त्वेन, पूर्वमनङ्ग्येषां प्राप्तिरिति भावः। ननु मध्येऽपवादन्यायेन 'बहुव्रीहे-रूधस' इति सूत्रं डाप्-निषेधयोरेव बाधकं स्यान्न तु 'अन उपधालोपिन' इति ङीपः, तस्य परत्वादिति चेन्न। 'अन उपधालोपिन' इति सूत्रे 'बहुव्रीहे-रूधस'इत्यस्याऽनुवृत्त्या, तस्याऽपि बाधकल्पनात्। स्पष्टं चेदम् 'आवट्या-च्चे'ति सूत्रे भाष्ये।

**ङीष् स्यादिति**। ङीपि तु कुण्डोधन्शब्दे बहुव्रीहिपूर्वपदप्रकृतिस्वरेण धकाराऽकारस्याऽनुदात्तत्वादुदात्तनिवृत्तिस्वराऽप्राप्त्याऽन्तोदात्तत्वं न सिद्ध्येदिति भावः।

---

काशिकायां 'द्विपुरुषमुदकमि'त्युदाहृतम्। 'द्विहस्ति' इति तु चिन्त्यमेव वृत्त्युदाहृतम्। (इति वृत्त्यनुसारिणः। वस्तुतस्तु—) 'यत्त्वप्राप्त एवाऽत्र लुग्विधीयते' इति। तन्न। मुनित्रयाऽनुक्तत्वात्। न च 'द्वौ पुरुषौ प्रमाणमस्या' इत्यर्थे 'तदस्य परिमाणमि'ति ठकष्ठञो वा'अध्यर्धपूर्वे'ति लुकि शास्त्रस्य चारितार्थ्येन कथं तत्सामर्थ्याल्लुक्कल्पनम्। तत्र हि परिमाणशब्देनोत्तरसूत्राऽनुरोधात्परिच्छेदकमात्रस्य ग्रहणमिति सिद्धान्त इति वाच्यम्। 'तद्धितस्य प्रमाणपदमुच्चार्य विहितस्यैव ग्रहणं, प्रत्या-सत्तेरि'ति वृत्त्यनुसारिज्ञापकवादिनामाशयात्'—इति क. कुण्डलितः ख. पाठः।

१. 'द्विपुरुषा गौः अत्रैव स्यात् लुक्कल्पनाऽभावायेत्याहुः। 'अत्राऽपि स्यादि'-ति तु तत्त्वम्'—इति ख. पाठः।

**कुण्डोध्नीति**। 'कुण्डमिव ऊधो यस्या' इति बहुव्रीहिः। बहुव्रीहेः किम्?। ऊधः प्राप्ता प्राप्तोधाः। 'प्राप्ताऽऽपन्ने चे'ति समासः। **उपसङ्ख्यानादिति**। न चाऽत्र प्रकरणे एव[1] 'बहुव्रीहेरूधसोऽनङ्, ङीप् चे'ति पाठ्यम्। अस्य[2] समासान्तत्वाऽभावे पाक्षिककपो दुर्वारताऽऽपत्तेः। किञ्च 'धनुषश्च' इत्याद्यर्थं समासान्तप्रकरणे पुनरनङुच्चारणे लाघवाऽभावः। एतेन 'ऊधसो नश्चे'ति नाऽऽदेशेनैव सिद्धेऽनङ्करणं चिन्त्यप्रयोजनमि'त्यपास्तम्। यत्तु 'नादेशेऽनो लाक्षणिकत्वात् 'अल्लोपोऽन' इत्यस्याऽप्रवृत्त्यापत्ति'रिति। तन्न। एतत्सूत्रभाष्यप्रामाण्येनाऽर्थवत्परिभाषावत्, अन्ग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अपि अप्रवृत्तेः। 'अध्यूध्नी होत्रेऽनुहरती'त्यादौ पुरुषलिङ्गवाची 'अध्यूध्नी'शब्दस्तु अव्युत्पन्नो बोध्यः।

**सङ्ख्याऽव्य**। 'सङ्ख्याऽव्ययाभ्यामि'ति तु नोक्तम्। मात्राऽऽधिक्याऽऽपत्तेः। **अव्ययग्रहणाऽननुवृत्तेरिति**। अस्वरितत्वादिति भावः। स्पष्टं चेदं भाष्ये। **डाप्-निषेधावपीति**। अपिना 'अन उपधे'ति ङीप्। अन्ग्रहणेऽनर्थकस्याऽपि ग्रहणात्। बहुव्रीहिविशेषणत्वादेव सिद्धेऽन्तग्रहणं स्पष्टाऽर्थम्। **द्विहायनी बालेति**। गौरित्यर्थः। अत एव 'द्विहायनी, द्विवर्षा गौरि'त्यादिकोशः सङ्गच्छते।

अन्ये तु 'कोशे 'गौरि'ति प्रायोवाद' इत्याहुः।

**नित्यं संज्ञा**। ननु संज्ञाशब्दा अनादिप्रयुक्ता नियताऽनुपूर्वीकाः। छन्दस्यपि दृष्टमेवाऽनुविधीयते। तत्र च ङीबेव दृश्यते। क इदानी तदभावं प्रयोक्तुमर्हति। एवं च 'अन उपधे'त्येव सिद्धे व्यर्थमेतत्। न चोत्तरार्थम्। योगविभागस्यैवमपि व्यर्थत्वादिति चेत्। इष्टाऽऽपत्तेः। इदमेव ध्वनयितुं लक्षणाऽन्तरसिद्धमुदाहरति—**वेदे**[3] **पञ्चदाम्नीति**। क्वचित्तु

---

१. 'अत्र प्रकरणे एव च' ख. पाठः।

२. 'अस्य समासान्तत्वाऽभावेन' इति ख. पाठः।

३. 'वेदे' इति ख. नास्ति।

'वेदे शतमूर्ध्नी'ति पाठः। नित्यग्रहणन्तु स्पष्टार्थमेव।

**केवलमामक**। अस्मच्छब्दादणि 'तवक-ममकावेकवचने' इति ममकाऽऽदेशः। 'भाग'शब्दात्पुंलिङ्गात्स्वार्थे 'धेय' प्रत्ययः। 'स्वार्थिकाः क्व चिल्लिङ्गवचनान्यतिवर्त्तन्ते' इति स्त्रीत्वम्। अभेदोपचारात्, अर्श-आद्यचा[1] वा तद्वति वर्त्तमानः 'पाप'शब्दः स्त्रियामपि। 'अपर'शब्दः पवर्ग-मध्यो, न दन्त्योष्ठ्यमध्यः। स च घृताऽऽदिपाठादन्तोदात्तः। 'उताऽपरं यक्षि देवान् सुवीर्या' इत्यादौ तथैव पाठात्। तत्र ङीप्युदात्तनिवृत्तिस्वरे-णाऽन्तोदात्तत्वमेव। अत एव 'उताऽपरीभ्यो मघवा विजिग्ये' इत्यादावन्तो-दात्तपाठः सङ्गच्छते। अन्यथा 'स्वाङ्गशिटामि'त्याद्युदात्तत्वे, ङीपि, तद-सङ्गतिः स्पष्टैव। 'पूर्वमनयन्नापरं पुनरि'त्यादौ पठ्यमानमाद्युदात्तत्वमपि-वृषाऽऽदित्वाद्बोध्यम्। अस्याऽजादिपाठाट्टाबपि 'अपरा[2] पूर्वामभ्येती'त्यादिप्रयोगादित्याहुः।

**आर्यकृतीति**। 'आर्येण कृते'ति प्राक्सुबुत्पत्तेः **समासे**ऽकारान्तत्वम्। 'भेषज'शब्दे 'भियः षुक् ह्रस्वश्चे'त्युणादिसूत्रेणाऽजिप्रत्ययान्ताद्भिषज्-शब्दाद्भिषज इयमित्यणि, आदिवृद्धेरपवादोऽत एव निपातनादेकारः।

'अणन्तत्वात्सिद्धेऽप्येतदर्थमेव 'भेषज'ग्रहणमि'त्येके। 'भेषज'शब्दो-ऽप्युणादिव्युत्पन्न औषधे रूढः। 'भिषज इदमि'त्यणि तु 'भैषजमि'त्येव। 'स्त्रियामणन्तत्वान्ङीपि 'भैषजी'त्येवे'त्यपरे।

'सुमङ्गलीरियं वधूरि'ति तु मत्वर्थीये ईप्रत्यये बोध्यम्।

**प्रकृतिभागाविति**। नुक्संनियोगेनेति भावः। **मतुबिति**। 'मादुपधाया' इति वत्वं सिद्धमिति भावः। **प्रत्युदाहरणं त्विति**। स्पष्टं चेदं भाष्ये।

**यज्ञेन सम्बन्ध इति**। संयोगपदं संबन्धोपलक्षणम्। सम्बन्धश्च यज्ञफलप्रतियोगिकैश्वर्यवाचकत्वम्। तदाह—**तत्कर्त्तृकयज्ञस्येति**। **उत्तर-**

---

१. 'अर्श आद्यचा वा' इति क. ग. पाठः। ख. नास्ति।

२. 'अपराः' इति तु क. ख. ग. पाठः।

सूत्रे तु 'यज्ञसंयोगे' इति न सम्बध्यते । अत[1] एव 'आशाया: पतिराशापत्नी'-ति तदुदाहरणं भाष्ये । आशापूरकत्वाच्च तत्पतित्वं बोध्यम् ।

**विभाषा ।** 'सह'शब्दो विद्यमानवाची । पूर्वशब्दोऽवयववाची । तुल्ययोगवाची सहशब्दस्तु न । पूर्वस्य नकाराऽऽदेशप्रसङ्गात् । पूर्वशब्दो व्यवस्थावाची न । वाक्येऽतिप्रसङ्गात् । एवं च 'सह=विद्यमान: पूर्वोऽवयवो यस्मिन् प्रातिपदिके, तस्ये'ति विग्रह: तत्र केवलपतिशब्दस्य विद्यमानपूर्वोऽवयवकत्वाऽभावात्पतिशब्देन तदन्तं गृह्यते । स्पष्टं चेदं भाष्ये । यदि तु पकाररूप एवाऽऽवयव: पूर्वशब्देन गृह्यते, तर्हि 'सपूर्व'विशेषणं व्यर्थं स्यात् । तदाह—**पतिशब्दान्तस्येत्यादि ।**

**न पत्युरिति ।** 'सपूर्वस्ये'त्यनेन पत्यन्तस्य गृह्यमाणत्वादिति भाव: । स्पष्टं चेदमत्रैव भाष्ये । **बहुव्रीहावपीति ।** 'बहुव्रीहि'पदमुपसर्जनोपलक्षणम् । तेन 'पतिमतिक्रान्ताऽतिपत्नी'त्यपि सिद्ध्यति ।

**व्यस्ते इति ।** ननु 'वृषलपत्नी'ति षष्ठीतत्पुरुषेऽपि अनुपपत्तिसत्त्वात्, 'व्यस्ते' इति विशिष्योपादानं व्यर्थमिति चेन्न । 'विभाषा सपूर्वस्ये'त्येव सिद्धेरित्याशयात् । **कथमिति ।** सपूर्वत्वाऽभावात्, वृषलत्वेन यज्ञसंयोगाऽभावाच्च । **उपचारादिति ।** पा[2]णिग्रहणाऽऽश्रयादिति भाव: ।

---

१. 'अत एव 'गृहस्य पतिर्गृहपत्नी'त्यादि तदुदाहरणमिति केचित् । अन्ये तु अनुवर्त्तत एव । अत एव 'गवां पति: स्त्री'त्यर्थे 'गोपत्नी'ति न प्रयोग: । एवञ्चोक्तप्रयोगोऽसाधुरेव । उत्तरसूत्रे 'सपूर्व'ग्रहणं पूर्वसूत्रस्य, अस्य च विषयविभागार्थमेव । यत्तु भाष्ये 'आशापति:' 'आशापत्नी'ति विभाषे'त्यस्योदाहरणं, तदाङ्पूर्वकात् श्यते: क्विपि निष्पन्नाऽऽशाब्दनामकस्य द्विजस्य पति: स्त्रीत्यर्थकम् ' 'आशाया: पतिरिति'कैयटोक्ताऽर्थस्त्वसङ्गत इति स्पष्टमेव । तृष्णारूपाऽऽशास्वामित्वस्य क्वाऽप्यसम्भवादित्याहु:' इति क. कुण्डलित: ख. पाठ: । अस्य खण्डनं च मूलस्थे क. पाठे एव स्पष्टम् ।

२. 'अग्निसाक्षिकपाणिग्रहणाश्रयादिति भाव:' ख. पाठ: ।

'[1]यद्वा: आचारक्विबन्तादि'त्यादि तु चिन्त्यम्। न चैवं पूर्वसू[2]त्रे 'यज्ञसंयोग' ग्रहणं व्यर्थम्। 'वृषलस्य पतिः स्त्री'ति प्रयोगसाधनाऽर्थं चारितार्थ्यात्। स्पष्टं चेदं 'पत्युर्न' इति सूत्रे भाष्ये। **सपूर्वस्य किमिति।** अवयववाची पूर्वशब्दः किमर्थ इति प्रश्नः। **गवां पतिरिति।** गवां स्वामिनीत्यर्थः।

**नित्यं स।** आरम्भसामर्थ्यान्नित्यत्वे सिद्धे, नित्य'ग्रहणं स्पष्टाऽर्थम्। **निपात्यत इति।** समानादिगणस्यैव पाठेऽपि, विशिष्टोच्चारणात् 'समानस्य च्छन्दसी'ति सूत्रे 'समानस्ये'ति योगविभागबोधनद्वारा बोध्यत इत्यर्थः। अत एव 'सपक्ष' इत्यादिसिद्धिः 'सपतिर्दास' इत्यस्य च सिद्धिः।'सहस्य स' इत्यत उदात्तगुणविशिष्टसाऽऽदेशस्यैव तत्राऽनुवृत्तेः 'सपत्नी'शब्दस्याऽऽद्युदात्तत्वमेवं सति सिद्धयति। अन्यथा तदौप्यत्र निपात्यं स्यादिति गौर[3]वम्। एतेन[4] 'विशिष्टपाठसामर्थ्यात् 'सपत्नीपाचिके'त्यादौ पुंवद्भावो ने'ति परास्तम्। 'स'भावार्थं समुदायोच्चारणस्य सार्थक्यात्। समानस्वामिकस्त्रीविशेषस्यैव रूढ्या बोधनाऽर्थत्वाच्च।

अत एव समानस्वामिकभूम्यादौ 'सपतिर्भूमिरि'त्येव। समानत्वं चैकस्यैव तत्तत्पत्नीसम्बन्धेन भेदमारोप्य बोध्यम्। मुख्यसादृश्यवत्पतिकासु तु न तथा प्रयोगः। इदमपि रूढिफलम्। एतेन'सपत्यादिष्वि'त्येव सिद्धे सूत्रे नकारङीपोरुच्चारणं व्यर्थमित्यपास्त[5]म्। समान, एक, वीर, पिण्ड, पुत्र, भ्रातृ। **'दासश्छन्दसि'।** इति **समानादयः।**

---

१. 'यद्वा' इत्यारभ्य 'चिन्त्यम्' इत्यन्तः क. ग. पाठः ख. नास्ति।

२. 'पूर्वसूत्रे' इति लघुशब्देन्दुशेखरे पाठः। क. ख. ग. तु नास्ति।

३. इतोऽग्रे—'समानशब्दोऽत्राऽभिन्नवाची। समानस्वामिकत्वं प्रवृत्तिनिमित्तीकृत्य स्त्रीविशेषस्य रूढ्या बोधनाऽर्थत्वाच्च'—इति ख. पाठः।

४. 'एतेन' इत्यारभ्य 'बोधनार्थत्वाच्च' इत्यन्तः क. ग. पाठः। ख. नास्ति।

५. इतोऽग्रे—'अत्राऽपि 'यज्ञसंयोगे' इत्यनुवर्त्तते' इतिवादिनां दासपूर्वे 'दासश्छन्दसी'ति गणोक्तेर्भवति। अत एवेदं चरिताऽर्थम्। अन्यथा

**त्रिसूत्रीति ।** 'पूतक्रत्वादीनां पुंयोगप्रकरणे वचनमि'ति वार्त्तिके ब[1]हु-वचनं व्याख्यानात्त्रिपरमिति भावः ।

**ऐ आदेश इति ।** अत एवाऽत्रोदात्तग्रहणं चरिताऽर्थम् । प्रत्ययत्वे हि तद्वैयर्थ्यं स्पष्टमेव । अर्थाऽधिकाराऽनुरोधाच्च पूर्वसूत्रेऽप्यादेशत्वम् ।

**न त्विति ।** अन्यथा 'वृषाकपि'शब्दो 'लघावन्ते द्वयोश्च बह्वषो गुरु-रि'ति मध्योदात्त उदात्तत्वं प्रयोजयति । अग्न्यादिषु तु त्रिषु'स्थानेन्तरतम' इत्येव सिद्ध मि'ति प्राचां ग्रन्था विरुध्येरन्निति भावः । **उदात्तैकार** इति । सम्बन्धाऽनुवृत्तेः । औकारस्त्वान्तरतम्यादनुदात्त एवेति भावः ।

**सन्नियोगशिष्ट इति ।** एवं च तदभावे ङीबपि न 'सन्नियोगशिष्टानां सह वा प्रवृत्तिः, सह वा निवृत्तिरि'ति न्यायादिति भावः । 'मनु'शब्द आद्युदात्तः । **'नितन्तानामि'ति** पाठः ।

**आद्युदात्त** इति । एवं च[2] शेषनिघातेनाऽनुदात्ताऽन्त इति भावः ।

**त्रीण्येतानीति ।** (चि[3]त्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इति कोशादेतशब्दस्य चित्रवाचकत्वेऽप्येतद्गृह्य[4]प्रामाण्यादेवैतशब्दः शुक्ल-पर्यायोऽपीत्याहुः) । अत्रैतशब्दस्योपसर्जनत्वेऽपि तदन्तस्याऽनुपसर्जनत्व-मस्त्येवेति भावः । संज्ञात्वाण्णत्वम् । छान्दसत्वाद्वा । ननूपसर्जनादित्यस्य तदन्तविशेषणत्वमयुक्तम् । 'टिड्ढाणञि'त्यादौ गृह्यमाणविशेषणतामा-

---

'विभाषे'त्यनेनैव सिद्धे, एतद्वैयर्थ्यं स्पष्टमेव । छन्दस्यापाद्यरूपाऽभावात् । अनुवृत्तिवादिनान्तु तदप्रवृत्त्या चारिताार्थ्यं स्पष्टमेव । अत एव भ्रात्रा-दिदास्यां भ्रातृपत्नी'त्यादिर्न व्यवहार इति दिक्' इति क. कुण्डलितः ख पाठः ।

१. बहुवचनं कपिञ्जलाऽधिकरणन्यायेन त्रित्वे पर्यवसन्नमिति भावः' ख. पाठः ।

२. 'एवञ्चानुदात्तं पदमेकवर्जमिति शेषनिघातेन' ख. पाठः ।

३. अयं ख. पाठः क. कुण्डलितः ।

४. 'प्रामाण्यादेव शुक्लपर्यायत्वमित्याहुः' इति क. पाठः ।

एव क्लृप्तत्वात्[1]। 'उपमानानी'तिसूत्रस्थभाष्यस्वरसोऽप्येवमिति चेन्न। **'गृह्यवृत्त्या**दिप्रामाण्येन लक्ष्यानुसारादत्र तदन्तविशेषणत्वमि'तिमते मूलसत्त्वात्। अत एव **नारायण**वृत्तौ 'त्र्येण्ये'ति बहुव्रीहिं कृत्वा 'वर्णादनुदात्तादि'ति ङीबुक्तः[2]। 'अनुपसर्जनादित्यस्य गृह्यमाणविशेषणत्वमि'ति सिद्धान्ते तु 'त्र्येण्येति–त्रिषु स्थानेषु एनी–त्र्येणी, तयेत्यर्थकम्। अस्यैवाऽर्थस्य **नारायण**वृत्तौ बहुव्रीहिमुखेन दर्शनमिति बोध्यम्।

**अन्तोदात्तोऽयमिति।** अत एव 'श्वेतो वाजी जायतेऽग्रेऽह्नामि'त्यन्तोदात्तपाठः सङ्गच्छते। वर्णात्किम् ?। 'प्रकृता'। 'गतिरन्तर' इत्याद्युदात्तः।

**पिशङ्गादिति।** 'लघावन्ते' इति मध्योदात्तपिशङ्गशब्दादुत्तरसूत्रेण ङीषि प्राप्ते वचनम्। स्वरे विशेषः।

**छन्दसि क्नमिति।** नाऽऽदेशस्याऽपवादः क्नाऽऽदेशः। तेन ङीप्सन्नियोगशिष्टत्वं, तत्स्थानिकत्वं चाऽस्य बोध्यम्। एके **छन्दसीति।** अन्ये भाषायामपीत्यर्थः। अत एवैकग्रहणं चरितार्थम्। तेन लोकेऽपि साधु 'गतो गणस्तूर्णमसिक्निकानामि'तीति **केचित्।** 'छान्दससूत्रेषु वाग्रहणादिवदिदम् 'एके' इत्यपि। उक्तरीत्या व्याख्याने च न मानम्। भाष्याऽनुक्तेः। तस्मादुक्तप्रयोगोऽसाधुरेवे'त्यन्ये।[3] **विशुद्धिवाचीति।** प्रवृत्तिनिमित्ततया तद्वाचीत्यर्थः[4]। 'त्रीणि **यस्याऽवदातानि विद्या,** योनिश्च, **कर्म चे'**त्यादौ तथैव प्रतीतेः। 'दैप् शोधने' इतिस्मरणाच्च। 'अवदातः सितो

१. इतोऽग्रे—'प्रकृतेऽपि गृह्यमाणविशेषणत्वमेव न्याय्यम्' इति ख. पाठः।

२. इतोऽग्रे—'अनुपसर्जनादि'त्यस्य गृह्यमाणविशेषणत्व'मिति सिद्धान्ते तु 'त्र्येण्ये'ति च्छान्दसं बोध्यम्। तिस्र एन्य=एतवर्णविशिष्टा व्यक्त्योऽवयवभूता यस्यामि'ति वा समासः। समासान्तविधेरनित्यत्वात् 'नद्यृतश्चे'ति कप् न' इति ख. पाठः।

३. 'विशुद्धवाचीति। त्रीणि यस्याऽवदातानि' इति ख. पाठः।

४. विशुद्धवाचीति ख. पाठे तु नाऽस्याऽर्थस्याऽवश्यकतेति बोध्यम्।

गौर' इति कोशे तु विशुद्धत्वसाधर्म्यादुपनिबद्ध इति भावः ।

**अन्यतो ङीष्** । अन्यत्वे सन्निधानात्तोपधस्यैव प्रतियोगित्वेनाऽन्वय इत्याशयेनाह—**तोपधभिन्नादिति** । अत एव 'उपमानानी'ति सूत्रे 'तित्तिरिकल्माषी'ति ङीषुक्तो भाष्ये । **लघावन्त** इति । 'अन्ते एकस्मिन् लघौ, द्वयोश्च लघ्वोः परतो, बह्वषः=बह्वच्कस्य गुरुरुदात्त' इत्यर्थः । 'अष्' इत्यचः संज्ञा प्राचाम् । कृष्णेति । 'कृषेर्वर्णे' इति 'नक्'प्रत्ययाऽन्तः । **कपिलेति** । 'कमेः पश्चे'ति इलच्प्रत्ययाऽन्तः । द्वावप्यन्तोदात्तौ ।

**दशपाद्यां**[1] तु 'न'प्रत्ययप्रकरणे 'तृषिशुषिरसिकृषेश्च किदि'ति पठितम्, इलच्प्रकरणे 'कपेश्चे'ति । वर्णात्किम् ? । खट्वा । आद्युदात्तः ।

**नर्त्तकीति** । शिल्पिनि ष्वुनः षित्त्वस्याऽवयवेऽचरिताऽर्थत्वात्प्रातिपदिके तत्कार्यम् । धातूनां षित्त्वमङ्विधौ चरितार्थमिति 'त्रपे'त्यादौ न ङीष् । **गौरीति** । गौरशब्दस्य वर्णवाचित्वेऽप्यन्तोदात्तत्वादिह पाठः । मत्स्यादीनां जातिवाचिनां योपधानाम् 'अयोपधादि'ति निषेधे प्राप्ते । 'योपधप्रतिषेधे' इति वार्त्तिकं नाऽपूर्वम्, गणे पाठो वा प्रक्षिप्तः । अन्येषां 'जातिशब्दानां स्त्रीविषयाऽर्थः पाठः ।

अत्र गणे '**एषणः करणे**' इति पठ्यते । करणल्युडन्तादस्मान्ङीष् । अधिकरणल्युटि तु ङीबेवेति भावः । ऋष्यणन्तो 'गौतम'शब्दोऽत्र, शार्ङ्गरवादौ च । स्वरे विशेषः । **भौरिक्यादय** इञन्ताः, अनृष्यणन्ता आयस्थूणाऽऽदयश्च, ष्यङ्बाधनाऽर्थं प[2]ठ्यन्ते । 'आग्रहायणी'शब्दोऽत्र पठ्यते । 'अग्रे हायनमस्या'इति विग्रहेऽस्मादेव निपातनाण्णत्वम् । प्रज्ञादित्वादण् विशिष्टपाठस्तु 'आग्रहायणीजातीय' इत्यादौ पुंवद्भावाऽभावाय । एतदर्थमेव हि पाठः । अणन्ते ङीप्ङीषोः स्वरो विशेषाऽभावादिति । प्राञ्चः । के चित्त्वस्य भाषितपुंस्कत्वाऽभावान्न पुंवत्त्वप्राप्तिः । पञ्चस्वाग्रहायणीषु

---

१. 'दशपाद्यान्तु' इत्यारभ्य 'कपेश्चेति' इत्यन्तः ख. पाठः, क. कुण्डलितः ।

२. अत्र 'पठ्यते' इति एकवचनान्त एव सर्वत्र पाठः ।

विदितः 'पञ्चाग्रहायणिरि'त्यत्र लुगभावः प्रयोजनम् । सौधर्मादिवद्वाऽयं पाठ इत्याहुः ।

'**सुमङ्गलात्संज्ञायामि'ति** पठ्यते । येन नाऽप्राप्तिन्यायेन ङीपोऽपवादोऽयम् । ङीप्तु छन्दसि चरिताऽर्थः । 'सुमङ्गल'शब्दोऽव्युत्पन्नो 'लघावन्ते' इति मध्योदात्तः । अन्तोदात्ते ङीप्ङीषोर्विशेषाऽभावादित्याहुः ।

**'अनडुही, अनड्वाही'**ति—आम्विशिष्टङीषन्तपाठ आम्विकल्पाऽर्थः, पुंवद्भावविकल्पाऽर्थश्चेत्याहुः । वस्तुतस्तु 'अनडुदि'त्येव पाठः । आम्विशिष्टपाठस्त्वप्रामाणिक[1] इति 'आमनडुहः स्त्रियां वे'ति वचनारम्भेण 'चतुरनडुहो'रिति सूत्रे भाष्यकैयटयोः स्पष्टमित्याहुः । **'सौधर्म'**'बृहत्''महदि'ति शब्दत्रयस्यात्र पाठश्चिन्त्यप्रयोजनः । अण्णन्तत्वादुगित्त्वाच्च ङीपि, उदात्तनिवृत्तिस्वरेण, 'शतुरनुम' इति सूत्रे बृहन्महतोरुपसङ्ख्यानेन च 'अतिमहती'तिवदन्तोदात्तत्वसिद्धेरित्याहुः । स्पष्टं चेदं 'येन विधिरि'त्यत्र कैयटे । 'पुंवद्भावबाधनाऽर्थः पाठ' इति तु न युक्तम् । 'महानवमी'त्यादिप्रयोगविरोधात् ।

**'रोहणी रेवती नक्षत्रे'** । अन्यत्र-रोहिणा । **'दूत''तदन्ताच्चे'**ति पठ्यते । तेन । 'दूती''शिवदूती'त्यादि सिद्धिः । एवं **'पुत्रहती' 'पुत्रजग्धी'**-शब्दावप्यत्र बोध्यौ, 'वा हतजग्धयो'रितिवार्त्तिकस्थभाष्यप्रामाण्यादित्याहुः ।

**तरुण-तलुनावत्र** पठ्येते । तेन ङीप्ङीषोर्विकल्पः ।

**आकृतिगणोऽयमिति** । पिप्पल्यादिरित्यर्थः[2] । एवं च गौरादिरप्याकृतिगण एवेति भावः । अत एव 'श्वन्शब्दोऽत्रे'त्यसिद्धवत्सूत्रस्थभाष्यं, 'शातनपातनशब्दौ चे'ति 'युवोरनाकावि'तिसूत्रस्थकैयटश्च सङ्गच्छते ।

तत्र श्वन्शब्देऽनुपसर्जने एवेदम् । उपसर्जने तु ङीबेव । श्वन्शब्दा[3]-

---

१. 'अप्रामाणिक एवेति चतुरनडुहोरिति सूत्रे' ख. पाठः ।

२. 'पिप्पलादिरित्यर्थः' इति क. पाठः ।

३. 'श्वन्शब्दात्' इत्यारभ्य 'उक्तत्वाच्चेत्याहुः' इत्यन्तः ख. पाठः क कुण्डलितः, शब्दरत्नधृतत्वात् ।

दाचक्षाणणिचि, 'नस्तद्धिते' इति टिलोपे, उपसर्जनत्वान्नाऽनेन ङीष्। नान्तत्वाऽभावाच्च न ङीप्। 'नस्तद्धिते' इति टिलोपो नेष्ठवद्भावेन, 'टेरि'ति तु 'प्रकृत्यैकाजि'ति निषिद्धमि'ति मतन्तु नामधातौ दूषयिष्यते।

'नस्तद्धिते' इत्यस्याऽपि 'प्रकृतिभाव' इति 'पपूर्वे'ति 'प्रकृत्यैका'जितिसूत्रभाष्यध्वनितपक्ष, पूर्वं टिलोपाऽभावेऽपि, वृद्धावेकदेशविकृतन्यायेनाऽन्त्वात्सम्प्रसारणे, ततष्टिलोपो भवत्येव। भ्रष्टाऽवसरन्यायस्तु नाऽस्त्येव। क्विबन्तात्क्वौ तु नान्तलक्षणे ङीपि, 'शुनी'ति भवत्येव। न च 'अनुनासिकस्ये'ति दीर्घे सम्प्रसारणाऽप्राप्तिः, तमुद्दिश्यविकारस्याऽविहितत्वादितिवाच्यम्[1]। एकदेशविकृतन्यायेनाऽन्त्वस्य सुलभत्वादिति प्राञ्चः।

परे त्वेवं सति अनुपसर्जनाऽधिकारस्य तदन्तविधिज्ञापकता भज्येतेत्येषामनभिधानमेवोचितम्। किञ्चाऽऽचक्षाणकर्त्रादिरूपाऽर्थस्याऽपि श्वन्शब्दाऽर्थत्वेन, तस्याऽनुपसर्जनत्वान्ङीपः प्राप्तिरस्त्येव। 'अभिव्यक्तपदार्था ये' इति न्यायस्तु 'पदकार्यविषय एवे'त्यसकृदुक्तम्। हलन्तादाचारक्विबभावस्य 'ह्रस्वनद्याप' इति सूत्रे उक्तत्वाच्चेत्याहुः।

'आभात्'सूत्रे हरदत्तस्तु-'शातनपातनौ ङीबन्तावि'त्याह। वस्तुतो 'ण्यासश्रन्थो युजि'ति युजन्ताऽर्थः 'शातनपातने'ति गौरादिपाठ आवश्यक इति ल्युडन्तत्वेऽपि ङीषेवोचित इत्याहुः।

तुन्नन्तशब्दपाठो[2] गौरादिष्वप्रामाणिक इति 'तृज्वत्क्रोष्टुरि'तिसूत्रस्थभाष्यस्वरसः।

**सूर्यतिष्या। स चेद्य इति।** 'सूर्यादीनामङ्गानामुपधाया' इति-

---

१. इतोऽग्रे--'यदीह दीर्घो न स्यात्तर्हि सम्प्रसारण स्यादि'ति सम्भावनासत्त्वेनाऽकृतव्यूहपरिभाषया दीर्घाऽप्रवृत्तेः। एकदेशविकृतन्यायेनाऽन्त्वस्य सुलभत्वाच्चे'ति प्राञ्चः' इति ख. पाठः।

२. तुन्नन्तक्रोष्टुशब्दपाठ इत्यर्थः।

व्याख्याने तु 'सौरी बलाके'ति न सिद्ध्येत्। सूर्येणैकदिगित्यणन्तात् ङीप्। अत्र 'ङी'निरूपिताऽङ्गसंज्ञा अणन्तस्य, न सूर्यशब्दस्य। न च अणोऽल्लोपे, एकदेशविकृतन्यायेन सूर्यशब्दस्याऽङ्गत्वमस्त्येवेति वाच्यम्। आभीयत्वेन ङीप्निमित्तकाऽण्लोपस्याऽसिद्धत्वात्। अत एवोपधात्वम्। वचनन्तु 'सूरी कुन्ती'त्यत्र चरितार्थम्। न चाऽण्निमित्तकाऽल्लोपस्याऽसिद्धत्वेन, 'सौरी'-त्यत्र यस्योपधात्वाऽभाव इति वाच्यम्। तस्य व्याश्रयत्वात्। स्थानिवत्त्व-न्तु न। यलोपे तन्निषेधात्। एवं 'भस्ये'त्यनुवृत्तमपि उपधाया एव व्यधि-करणं विशेषणं, न सूर्याऽऽदीनामिति बोध्यम्।

एतदेवोपधाग्रहणं ज्ञापयति–'भाऽधिकारमभिव्याप्याऽऽभीयाऽसिद्धत्व-मि'ति। अन्यथा 'यान्तानां सूर्यादीनां लोपो ङ्यादावि'त्यर्थेनैवैकदेशविकृत-न्यायेन 'सौरी'त्यादिसिद्धौ, 'सूर्यचरी'त्यादिव्यावृत्तौ च, तद्वैयर्थ्यं स्पष्टमेव। 'य'ग्रहणं तूत्तराऽर्थमिति दिक्।

'ङ्यामिति' निर्देशादेव न सप्तम्येकवचनग्रहणम्। (**छे**[2] **चे**ति। **सूरीयः**)!

**नक्षत्राऽणी**ति। 'नक्षत्रवाचकाद्योऽण्, तस्मिन्नि'त्यर्थः। तेन 'तिष्ये भवस्तैषः', 'तिष्येण युक्तः कालस्तैष' इति च सिद्धम्। 'सन्धिवेले'ति, 'नक्षत्रेण युक्त' इति चाऽण्। प्रत्युदाहरणन्तु तिष्यसंज्ञकस्येदं 'तैष्यमि'-त्यादीत्याहुः। केचित्तु 'नक्षत्रशब्दमुच्चार्य विहितेऽणी'त्यर्थः। तेन 'तिष्यो देवताऽस्ये'त्यर्थेऽपि 'तैष्यमि'त्येवेत्याहुः।

**मातरि** षिच्चेति। 'पितृव्यमातुलमातामहे'ति सूत्रे वार्त्तिकमिदं 'पितामही''सिद्ध्यर्थमावश्यकम्। गौरादिषु **'पितामही'**शब्दपाठोऽनार्षः।

**दंष्ट्रेति**। दंशे'र्दाम्नीशसयुयुजे'त्यादिना करणे ष्ट्रन्।

**जानपदी**ति। 'जनपदे भवे'त्यर्थे उत्सादित्वाऽदञ्। ङीप्याद्युदात्तत्वे प्राप्तेऽन्तोदात्ताऽर्थं वचनम्। **वृत्तिरि**ति। जीविकेत्यर्थः। **अप्रत्यय** इति।

---

१. इतोऽग्रे--'सूर्यशब्दस्य ङीप्निरूपिताऽङ्गत्वाऽभावादेव सूर्यचरीत्यादि' इति ख. पाठः।　　२. क. कुण्डलितोऽयं ख. पाठः।

तथा च क्रियाशब्दोऽयमिति भावः। **अमत्रे हीति**। कमण्डलुरूपे इत्यर्थः। 'अस्त्री कमण्डलुः कुण्डी'ति **कोशात्**, 'कुण्डी कमण्डलौ जारात्पतिवत्नीसुते पुमानि'ति **मेदिनीकोशाच्च** कमण्डलौ तस्य नित्यस्त्रीत्वादिति भावः। यदि तु[2] 'पिठरे तु न ना कुण्डमि'ति विश्वकोशे, 'पिठरं स्थाल्युखाकुण्डमि'त्यमरे च तस्य नपुंसकत्वमप्युक्तम्। पिठराऽमत्रशब्दौ च पर्यायौ। **अमरे** नपुंसकत्वमात्रोक्तिस्त्ववयुत्याऽनुवाद इत्युच्यते, तदाऽनेकविधसंस्थानेष्वमत्रेषु कुण्डव्यवहारेण तस्या जातित्वाऽभावादप्राप्त इति बोध्यम्। मूले 'स्त्रीविषयत्वादि'त्युपलक्षणम्।

[3]**गोणीति**। आवपने नित्यस्त्रीविषयत्वादप्राप्तो ङीष् विधीयत इति बोध्यम्। **आवपनं चेदिति**। धान्याऽऽदि प्रक्षिप्य नीयते यस्यामित्यर्थः। 'सामान्ये नपुंसकम्'। **गोणाऽन्येति**। यस्या यादृच्छिकं नाम। 'अभिव्यक्तपदार्था ये' इति न्यायस्य तु न विषयः। पदकार्य एव तत्प्रवृत्तेः।

**अकृत्रिमेति**। यथा 'सैषा स्थली यत्र विचिन्वता त्वामि'ति। **स्थला-**

---

१. इतोऽग्रे—'एवं च 'पिठरे तु न ना कुण्डमि'ति विश्वकोशे 'पिठर'शब्देन स्थाल्युखापदवाच्यं कमण्डलुभिन्नमेव गृह्यते। एतेन 'विश्वकोशाऽऽदिप्रामाण्यादमत्रेऽप्यस्त्रीविषयत्वेन जातिलक्षणङीषैव सिद्धमि'ति परास्तम्। अमरस्तु पिठरवाचिनः 'पिठरं स्थाल्युखा कुण्डमि'ति नित्यनपुंसकत्वमाह।

ननु कमण्डलुवाचकस्याऽपि 'कुण्डमग्न्यालये मानभेदे देवजलाऽऽशये' इति मेदिन्यां नपुंसकत्वस्याऽप्युक्तत्वेनाऽस्त्रीविषयत्वं, कमण्डलोरपि जलाऽऽशयत्वादिति वाच्यम्। 'देवस्य जलाऽऽशये' इति षष्ठीतत्पुरुषाऽऽश्रयणात्। अत एवाऽग्न्यालये इति पृथगुक्तम्। अत एव सूर्यकुण्डमि'त्यादयो व्यवहाराः पुराणेषु सङ्गच्छन्त इति दिक्'—इति क. कुण्डलितः ख. पाठः।

२. 'यदि तु' इत्यारभ्य 'इत्युपलक्षणम्' इत्यन्तः क. ग. पाठः।

३. गोणी='गोन' 'बोरी' 'बोरा' इति लोके प्रसिद्धा।

ऽन्येति। कृत्रिमा, पुरुषेण संस्कृता। यथा 'स्थलयोदकं परिगृह्णन्ती'ति। **श्राणा—पक्वा। स्थौल्यगुणयोगादिति**। यद्यप्येवं सति गौणी वृत्तिस्तथापि अपदकार्यत्वात्प्रवृत्तिरिति भावः। **वर्णश्चेदिति**। वर्णविशिष्टश्चेदित्यर्थः। अन्यथा 'गुणे शुक्लादयः पुंसी'त्युक्तत्वेनाऽसङ्गतमिदं स्यादिति बोध्यम्।

ननु 'अन्यतो ङीषि'त्युत्तरमेव 'कालादि'ति वाच्यम्। 'वर्णादि'ति चाऽनुवर्त्तते, तेन नाऽतिप्रसङ्गः। एवं चेह 'वर्ण'ग्रहणं व्यर्थमिति चेत्। नित्यं छन्दसी'त्यादिवत्स्पष्टाऽर्थमेवेत्याहुः।

([1]**कालाऽन्येति**। यस्या यादृच्छिकं नाम)।

**नील्या अनिति**। नन्वस्य लाक्षणिकत्वान्न सूत्रे ग्रहणम्, अन्प्रकृतिङीषन्तप्रविष्टप्रथमोपस्थितनीलशब्दमादाय शास्त्रस्य चारितार्थ्यादिति चेन्न। वृत्त्यादिप्रामाण्येन तस्येहाऽनाश्रयणात्। तेन 'नील्या रक्ता-नीली गौरि'-त्यादि सिद्ध्यति। परे तु 'नीलवर्णवती शाटी'त्यर्थे 'नीली'ति वारणाय 'अनाच्छादने' इति। 'नील्या रक्ता गौरि'त्यर्थे 'नीले'त्येव। परिभाषाऽनाश्रयणे मानाऽभावादित्याहुः।

**अयोविकार इति**। 'फाल' इति प्रसिद्धः। **कुशाऽन्येति**। छन्दोगाः स्तोत्रीयागणनाऽर्थानौदुम्बरान् शङ्कून 'कुशा'इति व्यवहरन्ति। '**मैथुनेच्छा चेदि**'ति बहुव्रीहिः। 'सूत्रनिर्देशादेव व्यधिकरणोऽपि साधुरि'ति **हरदत्तः। अन्येति**। मैथुनादन्यत् या इच्छति। कमे'र्लषपते'त्युकञ्।

**शोणात्प्राचाम्**। शोणशब्दस्य वर्णवाचिनो 'वर्णानां तणे'त्याद्युदात्तस्य 'अन्यतो ङीषि'ति सिद्धेः, विकल्पाऽर्थं वचनम्। 'शोणः कोकनदच्छविरि'-त्यमरः।

**वोतो**। ननु गुणो नेहाऽदेङ्रूपः। 'उत' इति विशेषणात्, वचनग्रहणाच्च। न[2] च—

---

1. शब्दकौस्तुभानुसारी चाऽयं ख. पाठः।
2. 'नापि' ख. पाठः।

**'संसर्गिभेदकं यद्यत्सव्यापारं प्रतीयते ।**
**गुणत्वं परतन्त्रत्वात्तस्य शास्त्रे उदाहृतम् ॥'**

—इत्युक्त्या विशेषणमात्रम् । तत्र '**सव्यापारमि**'त्यस्य इतरव्यापाराऽधीनव्यापारकमि'त्यर्थः । तच्च कुठारादोतिवाच्यम् । 'आखुर्द्रव्यमि'त्यादौ, क्रियायां चाऽतिप्रसङ्गात् । नाऽपि नैयायिकाऽभिमतो गुणः । 'मृद्वी बुद्धिरि'त्यादेरसिद्ध्यापत्तेरिति चेन्न । संज्ञा-जाति-क्रिया-व्यतिरिक्तधर्ममात्रस्यैव 'गुण'पदार्थत्वान्न दोषः । 'चतुष्टयी शब्दानां प्रवृत्तिरि'ति भाष्यपर्यालोचनया तथैव लाभा'दिति **प्राञ्चः** । तत्त्वन्तूत्तरसूत्रे वक्ष्यमाणमेव । 'वचन'-ग्रहणाच्च गुणोपसर्जनगुणिवाचकानामिह ग्रहणम् । केवलगुणवाचिनां स्त्रीत्वाऽसम्भवाच्च ।

**शुचिरि**ति । शुच्धातोः 'सर्वधातुभ्य इन्' । 'उद' इत्यस्याऽभावेऽपि 'खरुसंयोगोपधादि'त्येतत्सामर्थ्येन 'अत' इत्यस्याऽसम्बन्धादिति भावः ।

नन्वत्र 'कृदिकारादि'ति दुर्वारमिति चेन्न । उणादीनामव्युत्पन्नत्वपक्षे तदप्राप्तेः । ध्वनितं चेदं **वृत्तिग्रन्थे** । '**शुक्ले**'त्याद्यपि प्रत्युदाहरणम् ।

'उत' इति तपरः किम् ? । 'वधूः' 'कासूः' । तत्र 'वधूः स्नुषा नवोढा स्त्री', 'कासूर्विकलवाचि स्या'दितिकोशबलेन नवोढात्वस्य, विकलवाक्त्वस्य च प्रवृत्तिनिमित्तत्वेन 'खरु'शब्दवत् गुणवचनत्वात् ।

**पतिवरे**ति । पतिलाभोत्कण्ठावचनत्वाद् गुणवचनोऽयम् । वस्तुतस्तु'मनो रौ वे'त्यस्याऽनन्तरमेव 'गुणवचनादुत'इति पाठ्यम् । आद्युदात्तेषु प्रशस्तवाचि-वसु-तन्वादिषु ङीप एवेष्टत्वात् । अन्तोदात्तेषु तु ङीप्ङीषोर्न विशेषः। 'उदात्तयण' इति ङीपोऽप्युदात्तविधानात् । 'बह्वादिभ्यश्चे'ति सूत्रन्त्वत्रैव 'वा'शब्दसहितं पाठ्यम् । ध्वनितं चेदं भाष्ये ।

**बह्वादि** । 'अत्र 'बहु'शब्दस्य पूर्वेणैव सिद्धेश्चिन्त्यप्रयोजनः पाठ' इति प्राञ्चः । न च सङ्ख्यावाचकस्य गुणवाचकत्वेऽपि, वैपुल्य[1]वाचक-

१. 'वैपुल्यादिवाचक' ख. पाठः

ग्रहणाऽर्थमत्र पाठ इति वाच्यम्। जाति-संज्ञा-क्रिया-व्यतिरिक्तत्वेन तस्याऽपि गुणवाचकत्वात्। 'बहूनिच्छति-बहूयति', ततः क्विप् 'बहूरि'ति दीर्घान्तान्ङीबर्थं ग्रहणमिति केचित्[1]। तत्सर्वं चिन्त्यम्। 'आकडार'[2]सूत्रे भाष्ये समस्त-कृदन्त-तद्धितान्त-सर्वनाम-जाति-सङ्ख्या-संज्ञाशब्दाऽतिरिक्तशब्दमात्रस्याऽत्र शास्त्रे 'गुणवचन'शब्दबोध्यत्वकथनात्।

'ऐक्यं' 'राजपौरुष्यमि'त्यादौ तु ब्राह्मणादित्वात्ष्यञ्[3]। तत्र हि प्रातिपदिकमात्रस्य गुणवचनसंज्ञामुक्त्वाऽग्रे तद्बाधकत्वेनैताः क्रमेण पठिताः।

न च शुक्लादीनां मतुप्लोपेन गुणिपराणां गुणवचनत्वं न स्यात्, तद्धिताऽन्तत्वादिति वाच्यम्। गुणगुणिनोरभेदविवक्षया प्रयोगे गुणवचनत्वप्रयुक्तकार्यसम्भवात्। तेभ्यो मतुप्लोपविधायकन्तु भेदविवक्षायां 'शुक्लवानि'त्यादिप्रयोगव्यावृत्तये। तत्राऽनभिधानेन मतुबनुत्पत्त्या तु तत्प्रत्याख्यातं भाष्ये। 'गुणवचने'त्यन्वर्थसंज्ञाकरणेन न रूपादीनां तत्त्वम्। न च तेषां जातित्वेन निरासः। आकृतिग्रहणाया द्रव्यवृत्तिजातेरेव वाचकानां तत्र तथा संज्ञाकरणात्।

कठादिशाखा-तदध्येतॄणां च तद्धिताऽन्तत्वादेव व्यावृत्तिः। क्वचित्समस्तत्वात्। यथा बह्वृचादेः। एतत्सूत्रभाष्योक्तगुणलक्षणमप्येतत्परमेव। तथा हि—

**'[4]सत्त्वे निविशतेऽपैति, पृथग्जातिषु दृश्यते।**
**आधेयश्चाऽक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥ इति।**

तत्र 'सत्त्वे निविशतेऽपेती'त्याद्यपादेन संज्ञा-जात्योर्निरासः। न हि संज्ञा-जातिशब्दा द्रव्ये विद्यमाने एव रक्ताऽऽदिशब्दवत्कदाचिद्वाचकत्वेन

---

१. 'बहुग्रहणमिति 'केचित्' इति ख. पाठः।

२. 'आकडारात्सूत्रे' ख. पाठः।

३. 'ष्यञ् बोध्यः' ख. पाठः।

४. 'सत्त्वे' इत्यारभ्य 'तत्र' इत्यन्तः क. ग. पाठः।

प्रवर्त्तन्ते, कदा चिन्नेति भवति। 'जातिषु पृथक् **दृश्यते**=भिन्ना[1]: शब्दा-दृश्यन्ते' इत्यर्थकेन **पृथग्जातिषु दृश्यते**' इत्यनेन सर्वनामनिरासः। यथा शुक्लादयः शब्दाः समाने शुक्ले गुणे,—गवि शुक्लशब्दः, अश्वे 'कर्क'शब्दो, नैवं सर्वनामशब्दा नियतविषयाः। चार्वादयोऽपि—क्वचित् 'चारुतर' इति, क्वचित् 'चारुरि'ति, नैवं 'सर्वतरः' इति क्वचिदपि।

**सङ्ख्यावारणाय**—'आधेयश्चे'ति। यत्नाऽऽधेयाऽर्थक इत्यर्थः। न हि सा रक्तादिगुणवद्द्रव्ये विद्यमाने यत्नाऽऽधेया। सर्वनामाऽर्थप्रत्यक्षत्वा-देर्यत्नाऽऽधेयतया नाऽनेन सर्वनामनिरास इति बोध्यम्। शब्दा इत्यर्थः ?।

**'अक्रियाजश्चे'**त्यनेन कृदन्तनिरासः। 'क्रियाबोधकधात्वजन्य' इत्य-र्थात्। 'सोऽसत्त्वप्रकृतिर्गुण' इत्यनेन 'सत्त्ववाचकप्रकृतिकभिन्न' इत्यर्थकेन समस्त-तद्धिताऽन्तयोर्निरासः।

'को गुणो नामे'ति भाष्यस्य—'गुणवचनः शब्दः क' इत्यर्थः। शब्दाऽ-र्थयोरभेदात्। अत[5] एव—

**'उपैत्यन्यज्जहात्यन्यद्, दृष्टो द्रव्याऽन्तरेष्वपि।**
**वाचकः सर्वलिङ्गानां, द्रव्यादन्यो गुणः स्मृतः' ॥**

—इति लक्षणाऽन्तरे 'वाचकः सर्वलिङ्गानामिति' यथाश्रुतमेव सङ्ग-

---

१. 'भिन्नाः शब्दा दृश्यन्ते' इति ख. नास्ति।

२. 'संख्या-सर्वनाम्नोर्निरासः' क. ख. पाठः।

३. 'सर्वनाम-सङ्ख्या-शब्दाः' ख. पाठः।

४. 'नैवं सर्वतरो, द्वितर इति क्वचिदपि दृश्यते। तद्वारणाय—आधेय-श्चेति। यत्नाऽऽधेयाऽर्थक इत्यर्थः। सङ्ख्या तु नित्या। यद्यपि मीमांस-कमते गुणोऽपि नित्यस्तथाऽपि तत्सम्बन्धोऽनित्यः। सङ्ख्याया नैवमित्या-शयः' इति ख. पाठः।

५. 'अत एव' इत्यारभ्य 'लक्षणाऽन्तरे' इत्यन्तः क. ग. पाठः। ख. नास्ति।

६. 'सर्वलिङ्गानामि'त्युत्तरं यथाश्रुतमेव' इति ख. पाठः।

च्छते । अत्र[1] आद्या[2]द्यपादेन संज्ञाजात्योर्निरासः । अत्र हेतुभूतस्तृतीयः पादः । 'दृष्ट' इत्यस्य-'द्रव्यवाचकप्रातिपदिकप्रकृतिकादन्य' इत्यर्थः । तेन समस्त-तद्धितान्तनिरासः । द्वितीयपादस्थाऽपिनाऽधातुजत्वसङ्ग्रहः । तेन कृदन्त-सङ्ग्रहः । अत एवाऽत्र 'बहु'ग्रहणं चरिताऽर्थम् । सङ्ख्याशब्दस्याऽगुण-वचनत्वात् ।

यत्तु कैयटेन—'सत्त्वे=द्रव्ये, निविशते, तत एव च द्रव्यान्निवर्त्तते, पाकादिवशाद्गुणाऽन्तरोत्पत्तावित्यर्थः । भिन्नजातीयेषु द्रव्येषु=घटपटादिषु दृश्यते, यः स गुणः । तेन जातेर्गुणत्वनिरासः । आधेयत्वम्=उत्पाद्यत्वम् । यथा पाकजरूपाऽऽदेः । अक्रियाजत्वम्—अनुत्पाद्यत्वम् । यथाऽऽकाश महत्त्वादेः । एवञ्च नित्याऽनित्यवृत्तिजातिमत्त्वं लब्धम् । तेन क्रियानि-रासः । सा हि अनित्यैव ।

ननु द्रव्यमप्यवयवद्रव्ये निविशते, असमवायिकारणनाशात्ततोऽपैति च, भिन्नजातीयेषु हस्तपादादिषु दृश्यते, नित्याऽनित्यवृत्तिजातिमच्च, निर-वयवस्याऽऽत्मपरमाण्वादेर्नित्यत्वात्, अवयविद्रव्यस्याऽनित्यत्वात् । अत उक्तम्—**असत्त्वेति** । अद्रव्यस्वभाव इत्यर्थ' इति ।

तन्न । 'पृथग्जातिषु दृश्यते' इत्यनेन 'सत्त्वे निविशते' इत्यादिना वा जातेर्वारणे सिद्धेऽन्यतरवैयर्थ्याऽऽपत्तेः । किञ्च क्रियावारणेनैव जाति-वारणे सिद्धे, उभयोर्वैयर्थ्याऽऽपत्तेः । एकस्यैव पदार्थस्यैककालमेव प्रतिपत्तृभेदेन चारु[3]त्वाऽचारुत्वाऽङ्गीकारेण निवेशाऽपाययोर्दुरुपपादत्वा-च्चेति दिक् ।

---

१. इतः पूर्वम् अस्य श्लोकस्य कैयटोक्तव्याख्याने त्वनेकपदवैयर्थ्यम्, 'आक-डार'सूत्रभाष्यविरोधश्चेति निरूपितं भाष्यप्रदीपोद्द्योते इति दिक्' इति ख. पाठः ।

२. 'अत्राऽऽद्याद्यपादेन' इत्यारभ्य 'दिक्' इत्यन्तः क. ग. पाठः । ख. नास्ति ।

३. चारुत्वाऽचारुत्वाङ्गीकारेण' इति ख. पाठः । 'मसीलेपेन स 'चारुत्वाङ्गी-कारेणे'ति शोधितः क. पुस्तके ।

**कृदिकारादिति**। गणसूत्रमिदम्। **सर्वत इति**। अक्तोऽपीत्यर्थः। 'प्राचामि'ति वर्त्तमाने 'पुनर्वा'ग्रहणेन व्यवस्थितविभाषात्वादादेशे, ङतावन्यत्राऽपि क्वचिल्लक्ष्याऽनुसारान्न—'सुगन्धिः' 'प्रियकतिर्वैश्ये'त्यादि।

तथा च परिशिष्टम्—'इतोऽक्त्यर्थादनादेशादकतेरि'ति। शकटिशब्दोऽल्पशकटवाची पृषोदरादित्वात्साधुरित्याहुः।

**अजननिरिति**। 'आक्रोशे नञ्यनिरि'ति जनेरनिः। बहु, पद्धति, यष्टि, विकट, विशाल, कल्याण, पुराण, कृपाण, चण्ड। 'शक्तिःशस्त्रे'। 'शक्ति, शस्त्री' इति पाठे शब्दद्वयम्।

'इतः **प्राण्यङ्गात्**'। धमनी। **'चन्द्रभागान्नद्याम्'**। अहन्। सामर्थ्यादुपसर्जनाऽधिकारबाधः। 'दीर्घाह्नी'। बहुव्रीहिः। एवं च ङीष्यन्तोदात्तत्वं बोध्यम्। उपसर्जनतत्पुरुषे तु नेदं प्रवर्त्तते इति समासे 'अह्नोऽह्न' सूत्रे निरूपयिष्यामः। इति बह्वादिः। अयमाकृतिगणः' इति गणरत्नकारः।[1]

**पुंयोगादा**। हेतौ पञ्चमी। 'आख्यायामि'ति पञ्चम्यर्थे सप्तमी। 'आख्या'शब्दो बोधकपरः। सा च पुंस एव, उपस्थितत्वात्, अन्यस्याऽसम्भवात्, स्त्रियां वर्त्तमानस्य स्त्र्याख्यत्वाऽव्यभिचाराच्च। पुंयोगाद्धेतोः प्रवृत्तिनिमित्ताऽऽरोपेण स्त्रियां वर्तमानात्पुंबोधकाच्छब्दात् ङीषित्यर्थः। तदाह—**येति**। **योगः**—सम्बन्धः। स च दाम्पत्य-जन्यजनकभावादिः। अत एव 'केकयी' 'देवकी'त्यादि सिद्धम्। तयोः केकयदेवकाऽपत्यत्वात्। न च केकयात् 'जनपदशब्दादि'त्यञः 'अतश्चे'ति लुकि, जातिलक्षणे ङीषि, 'केकयी' सिद्धा। भर्गादित्वेन 'न प्राच्यभर्गे'तिनिषेधेन लुगभावे, 'कैकेयी'त्येवाऽऽपत्तेः। यदा तु 'तस्येदमि'त्यण्, तदा 'गौपी'ति ङीबेव। पुंयोगात्किम्?। 'देवदत्ता'। अयं हि संज्ञाशब्दत्वात् स्वभावत एव स्त्रियाम्। आख्यायां किम्?। 'प्रसूता'। तदभावे हि 'स्त्रियां वर्त्तमानं यत्प्रातिपदिकं पुंयोगहेतुकप्रवृत्तिनिमित्तकमि'त्यर्थोऽपि सम्भाव्येत।

---

१. 'इति गणरत्नकारः' इति ख. नास्ति।

अस्ति हि 'प्रसूता'शब्दप्रवृत्तिनिमित्ते प्रसवे, पुंयोगहेतुकत्वम्, परं त्वेषा पुमाख्या नेति न दोषः।

**'गोपालिकादीनां प्रतिषेधो वक्तव्य' इति वार्त्तिकम्**। तत्र 'सिद्धये' इति शेषः। तेषामेव सिद्धये इत्यर्थः। 'गाः पालयती'ति विग्रहे 'गोपालिका' सिद्धयत्येवेत्यवधारणगर्भं व्याख्यानम्। तदेतदर्थत आह–**पालकान्तान्ने**ति। न च 'गवां पालक' इति विग्रहे कारकषष्ठ्या समासस्य निषिद्धत्वात्, शेषषष्ठ्या समासे, आपः सुपः परत्वादित्त्वं दुर्लभमिति वाच्यम्। षष्ठी-समासनिषेधस्याऽनित्यत्वेन, कारकषष्ठ्या च सुबुत्पत्तेः पूर्वमेव समासेना-ऽदोषादित्याहुः।

**चाब्वक्तव्य** इति। ङीषो निषेधेन टापैव सिद्धे चाप् विधानं चित्त्वा-दन्तोदात्तार्थम्। 'सूर्य'शब्दश्च सृधातोः क्यप्याद्युदात्तः।

**उभयमिति**। यवनादपि मुख्याऽर्थादेव लिप्यर्थको ङीष्, न तु लिपौ वर्त्तमानाद्यवनशब्दान्ङीषिति भावः। एवं च यवनाल्लिप्यर्थे 'तस्येदमि'-त्यण्[४]बाधको ङीषिति बोध्यम्। स्पष्टं चेदं कैयट-हरदत्तयोः।

**हिमानी**ति। महत्त्वादियोगे एवैषां स्त्रीत्वमित्यर्थः। **दुष्टो यवो यवानी**ति। जात्यन्तरमेवाऽनेनाऽभिधीयते। अयमेव चाऽस्य दोषो, यदुत यवत्वजातेरभावेऽपि, तदाकाराऽनुवृत्तिः।

**यवनाल्लिप्यामिति**। **लिपिः**–अक्षरविन्यासः। स्त्रीत्वं तत्र स्वभावात्। **मातुले**ति। मातुलान्नित्यं प्राप्ते, उपाध्यायादप्राप्ते, विभाषेयम्।

---

१. 'गा' इत्यारभ्य 'व्याख्यातम्' इत्यन्तः क. ग. पाठः ख. नास्ति।

२. 'इत्त्वं दुर्लभम्'। किञ्च कारकविषये सुबुत्पत्तेः प्राक् समासस्य 'कर्त्तृक-रणे' 'साधन कृते'त्यादिमात्रविषयकत्वमिति, षष्ठीसमासनिषेधाऽनित्यत्वे-नाऽपि न निस्तार इति वाच्यम्। वार्त्तिके प्रयोगादेवेत्त्वस्वीकारात्'–इति ख. पाठः।

३. 'इति वाच्यम्' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ग. पाठः।

४. 'त्यणो बाधको ङीष्' इति ख. पाठः।

**या तु स्वयमेवेति** ।'**अपादाने स्त्रियां घञ उपसङ्ख्यानम्** । तदन्ताच्च वा ङीषि'ति तृतीये 'इङश्चे'ति सूत्रे **वार्त्तिकादिति भावः** । उपेत्य अधीयते यस्या इति विग्रहः ।

**अर्यक्षत्रीति** । 'अर्ये'ति ह्रस्वादिः पाठः । तदेव ध्वनयन्नाह–**स्वामिनीत्यादि** । 'अर्यः स्वामिवैश्ययोरि'ति सूत्रादिति भावः । क्व चित्तु भाष्यपुस्तके 'आर्ये'ति पाठो दृश्यते, सोऽपपाठः । कैयटविरोधात् । **यद्यपि** भाष्ये 'स्वार्थे' इति न पठितं, तथाऽपि वृत्त्यनुसारादुक्तम् ।

**'अर्याणी स्वयमर्या स्यात्क्षत्रिया क्षत्रियाण्यपि ।**
**उपाध्यायान्युपाध्यायी, स्यादाचार्याऽपि च स्वतः ।**
**आचार्याणी तु पुंयोगे, स्यादर्यी क्षत्रियी तथा ।'**

—इत्यमरस्वारस्याच्च । कैयटे तु 'पुंयोगप्रकरणात्पुंयोग एव केचिदिच्छन्ती'ति मतान्तरमप्युक्तम् ।

[1]**कथमिति** । ननु दीर्घोच्चारणसामर्थ्यात् 'आ-अनुगि'ति पदच्छेदः । तत्र नकारोच्चारणसामर्थ्यात्, श्रुतक्रमाऽनुरोधेन च, पूर्वमाकारः, ततोऽनुक् । तत्रेन्द्रादीनामनुकैव सिद्धे, आकाराऽऽदेशविधानमन्यतोऽपि विधानाऽर्थम्, तेन 'ब्रह्माणी' सिद्ध्यति । न चेन्द्रशब्देऽनुगागमे पररूपाऽऽपत्तिः । अत एव त्वया ह्रस्वाऽकारादेशो नोक्तः । ब्रह्मन्शब्दे नकारनिवृत्त्या अकाराऽऽदेशस्य चारितार्थ्यात्पररूपे, ब्रह्माण्यसिद्धेरिति वाच्यम् । नुगागमेनैव सिद्धेऽकारोच्चारणसामर्थ्येन पररूपं बाधित्वा दीर्घसिद्धेः । एवं च ह्रस्वाऽकारादेशोऽपि वक्तुं शक्यः ।

न चैवं नुगागमे, लक्षणप्रतिपदोक्तपरिभाषाया 'अल्लोपोऽन' इत्यत्राऽप्रवृत्तेरकाराऽभावेऽवश्यप्राप्तस्य 'अल्लोपोऽन' इत्यस्य 'येन नाप्राप्ति'-न्यायेन बाधार्थमेवाऽकारोच्चारणमिति वाच्यम् । 'पत्युर्न' इतिवदादेशे

1. 'कथमिति' इत्यारभ्य 'परास्तम्' इत्यन्तोऽयं पाठो मनोरमाशब्दरत्नस्थत्वात् क. कुण्डलितः ।

कर्त्तव्ये, आगमलिङ्गककारोच्चारणसामर्थ्यादेवाऽल्लोपो न भविष्यतीति, न तद्बाधाऽर्थमकारोच्चारणम्। अतः स्वाऽभावेऽप्राप्तस्याऽपि पररूपस्य तेन बाध इति चेन्न। 'शर्व'शब्दे 'न संयोगादि'तिनिषेधेनाऽल्लोपाऽप्राप्तौ, ककारस्य चारितार्थ्यात्। एवं चाऽल्लोपबाधनेन चरितार्थस्य पररूप-बाधकत्वे मानाऽभावेन, 'इन्द्र'शब्दे पररूपनिवारणायाऽऽकारोच्चारणस्या-ऽऽवश्यकत्वेन, त्वदुक्तकल्पनाऽनवकाशात्। एतेन 'आकारोच्चारणम् अदन्तत्वाऽभावेऽपीन्द्रादिशब्देभ्य आचक्षाणणिचि, टिलोपे, आनुगर्थमि'ति परास्तम्।

**कर्मण्यणिति**। 'इन्द्रवरुणे'ति सूत्रन्तु 'इन्द्री'त्यादिव्यावृत्त्यर्थम्। 'पूर्व-पदादि'ति णत्वम्। के चित्तु 'अण शब्दे' इतिटवर्गीयान्तादणि'त्याहुः। अणन्तत्वान्ङीप्। उदात्तनिवृत्तिस्वरेण स्वरेऽपि न विशेषः।

**क्रीतात्**। 'करणादि'ति वक्तव्ये 'पूर्व'ग्रहणसामर्थ्येनाऽनुवृत्तप्राति-पदिकरूपाऽन्यपदार्थेऽवयववाचिपूर्वशब्देन बहुव्रीहिः। 'अत'इति चाऽनुवर्त्तते। तदेवाऽऽह—**क्रीतान्ताददन्तात्करणादेरिति**। तेन 'वस्त्रेण क्रीते'ति वाक्ये ने'ति **हरदत्तः। वस्त्रक्रीतीति**। सुबुत्पत्तेः पूर्वं समासेऽदन्तत्वादनेन ङीष्। अन्तरङ्गत्वाट्टाबुत्पत्तेः पूर्वमेव समासात्।

**क्वचिन्नेति**। 'कर्त्तृकरणे कृते'तिसूत्रस्थ'बहुल'ग्रहणसिद्ध'गतिकार-कोपपदानामि'त्यस्याऽनित्यत्वेन, सुबन्तेन समासे, सुबुत्पत्तेः पूर्वमन्तरङ्ग-त्वेन टापि, अदन्तत्वाऽभावान्न ङीषिति भावः।

करणेति किम्?। 'सुक्रीता'।

**अभ्रलिप्तीति**। 'कृद्ग्रहणे गतिकारकपूर्वस्याऽपी'तिविशिष्टस्य क्तान्त-त्वम्। वृत्तौ 'क्त'पदं क्तान्तपरं वा। तेन क्ताऽन्ताऽन्तादित्यर्थः। '**अल्पा-ख्याया**मि'ति समुदायोपाधिः। ङीषेव चाऽस्य द्योतकः। अल्पत्वं च करणगतं क्रियागतं वेत्याहुः। **तेनेति**। 'बहोर्नञ्वदुत्तरपदभूम्नि' 'नञ्सुभ्यां' 'जातिकालसुखादिभ्योऽनाच्छादनात् क्तोऽकृतमितप्रतिपन्नाः' इत्यन्तोदात्त-

विधायकानि। **सुखादयश्च**-'सुखादिभ्यः कर्तृवेदनायामि'त्यत्र पठिताः सुखदुःख-कृच्छ्रादयः।

अस्वाङ्गपूर्वपदाद्विकल्पस्य वक्ष्यमाणत्वेनेह स्वाङ्गपूर्वपद एवोदाहरण-मित्याशयेनाऽऽह—**ऊरुभिन्नीति**। भिन्नावूरू यस्या' इति बहुव्रीहौ 'जाति-कालसुखाऽऽदिभ्यः परा निष्ठा वाच्ये'ति भिन्नशब्दस्य परनिपातः।

अत्र प्रत्ययग्रहणपरिभाषया लब्धक्तान्तेन प्रातिपदिकस्य विशेषणे 'क्ताऽन्ताऽन्तादि'त्यर्थः। वृत्तौ 'क्त'पदं क्ताऽन्तपरम्।

**जातान्तान्नेति**। 'वर्णादनुदात्तादि'तिवत् 'बहुव्रीहेरुदात्तादि'त्येव सिद्धेऽन्तग्रहणस्य 'नित्याऽन्तोदात्तादि'त्यर्थकतयेदं सिद्धम्। 'वा जाते' इति तु वैकल्पिक उदात्तो, न तु नित्य इति भावः।

**पाणिगृहीतीति**। अग्निसाक्षिकगृहीतपाणिकेत्यर्थः।

**अस्वाङ्गपू**। न स्वाङ्गम् अस्वाङ्गम्। पूर्वं च तत्पदञ्च पूर्वपदम्। पुनः **कर्मधारयः**। तेनाऽस्वाङ्गभूतात्पूर्वपदात्परं यत् क्तान्तं तदन्तबहुव्रीहेरि-त्यर्थः। स्पष्टं चेदं 'स्वाङ्गाच्चोपसर्जनादि'त्यत्र भाष्ये। फलमप्यस्य तत्रैव। अर्थाऽधिकारौचित्याच्चाऽत्रापि तथैव व्याख्यानं युक्तम्।

'जातिपूर्वादि'तीहाऽपि[1] सम्बध्यते। अन्यथा बहु-नञादीनाम् अस्वाङ्ग-त्वेन विकल्पस्य तत्र दुर्वारत्वात्। तद्ध्वनयन्नाह-**नित्ये प्राप्त इति**।

एतेन 'पुत्रहती'त्यादावनेन ङीषि'ति कैयटः परास्तः। न च पुत्रशब्दो जातिवचनः। आकृतिग्रहणत्वाद्यभावात्। अत एव 'पुत्रादिनी'त्यादौ 'सुप्यजातावि'ति णिनिः। 'जातिकालसुखादिभ्य' इति सूत्रे 'जातेः किम् ?, 'पुत्रजात' इति वृत्तिग्रन्थश्च सङ्गच्छते। 'पुत्रहत'शब्दस्याऽन्तोदात्तत्वा-ऽभावाच्च। केचित्तु इह 'जातेरि'ति, 'अन्तोदात्तादि'ति च न सम्बध्यते। 'वा'ग्रहणं च व्यवस्थितविभाषाऽर्थम्। तेन नाऽतिप्रसङ्गः। अयमेव कैयटा-

---

१. 'इहापि सम्बध्यते। बहुनञादीनामस्वाङ्गत्वेन परत्वात् विकल्पस्यैव प्राप्तत्वेन, पूर्वसूत्रे तस्य फलाऽभावात्' इति ख. पाठः।

ऽऽशय' इत्याहुः । न च 'अस्वाङ्गादि'त्येव सिद्धे 'पूर्वपद'ग्रहणं व्यर्थम् । उत्तरार्ऽर्थमावश्यकत्वात् । **वस्त्रच्छन्नेति** । बहुव्रीहिस्वरेण पूर्वपदप्रकृतिस्वरे, शेषनिघाते चाऽनुदात्ताऽन्तोऽयम् ।

**स्वाङ्गाच्चो** । अत्राऽप्यनुपसर्जनादिति सम्बध्यते । असम्बन्धे मानाऽभावात् । तच्चोपसर्जनस्वाङ्गाऽन्तस्य विशेषणम् । तेन 'कल्याणः सुन्दरमुखो यस्या' इति बहुव्रीहिगर्भ-बहुव्रीहौ ङीष् **नेत्याहुः** ।

**तदन्तादिति** । इदमुपसर्जनग्रहणलब्धम् । 'बहुव्रीहेरि'त्यनुवर्त्तमाने 'उपसर्जन'ग्रहणफलं दर्शयति—**अतिकेशोति** । अत एव 'बहुव्रीहेः' 'क्तान्तात्' 'अन्तोदात्तादि'ति निवृत्तमिति बोध्यम् ।

**शिखेति** । यत्तु भाष्ये 'अशिखे'त्युदाहृत्तं, तस्याऽप्येकदेशे तात्पर्यम् । बहुव्रीहावुपसर्जनग्रहणे कृतेऽपि दोषस्य दुर्वारत्वेन, तत्पुरुषेऽदन्तत्वाऽभावेन प्राप्त्यभावात्समुदायपरत्वे भाष्याऽसङ्गतताऽऽपत्तेः । नञ्पूर्वकत्वे 'सहनञ्विद्यमाने'ति निषेधेन प्राप्त्यभावाच्च । प्रचुरपाठस्तु भाष्येऽपि 'शिखे'त्येव । तद्ध्वनयन्नाह—**शोभना शिखा सुशिखेति** ।

एतेन 'शिखा'शब्दः क्रोडादिषुपठ्यते इति निरस्तम् । फलाऽभावाच्च ।

ननु स्वमङ्गं स्वाङ्गम् । एवं च 'सुमुखा शाले'त्यत्राऽपि स्यात् । मुखस्य शालाऽङ्गत्वात् । 'सुकेशी रथ्ये'त्यत्र च न स्यात् । केशानां तदङ्गत्वाऽभावादत आह—**अद्रवमिति** । स्पर्शसमानाधिकरणद्रव्यपरिमाणं मूर्त्तिः । **सुमुखा शालेति** । एवं च 'फलमुखी, कारणमुखी चाऽनवस्थे'त्यादिप्रयोगाः प्रामादिका इति बोध्यम् । **रथ्येति** । इदानीं प्राणिस्थत्वाऽभावात्पूर्वलक्षणेनाऽसिद्धिरिति भावः । एवं चेदं 'पूर्वलक्षणे प्राणिस्थत्वमुपलक्षणमि'त्यत्राऽर्थे तात्पर्यग्राहकं बोध्यम् ।

प्रतिमाऽऽदिगतस्तनस्य प्राणिनि कदाऽप्यदृष्टत्वादाह—**तेन चेदिति** । 'अतत्स्थमि'त्यनुषज्यते । 'अप्राणिस्थमपि स्वाङ्गम्, यदि तेन=वस्तुना प्राणी यथा सम्बद्धः, एवमप्राणी तेन सम्बद्धश्चेदि'त्यर्थः । 'तस्य चेदि'ति भाष्ये पाठः । तत्र करणस्यैव शेषत्वविवक्षायां षष्ठी बोध्या ।

'कल्याणपाणिपादे'त्यादौ तु न ङीष्। 'अस्वाङ्गपूर्वपदादि'त्यनुवर्त्त्य, कर्मधारयञ्चाऽऽश्रित्य 'अस्वाङ्गपूर्वपदात्परं यत्स्वाङ्गं, तदन्तादि'त्यर्थेनाऽदोषात्।

अत्र हि यदुपसर्जनं 'पाणिपादमि'ति समुदायः, न स स्वाङ्गम्। समुदायश्च न स्वाङ्गशब्देन गृह्यते। यच्च स्वाङ्गं 'पादे'ति, न तत्पूर्वपदात्परमिति स्पष्टं भाष्ये। अत एव 'करमुखे'त्यादौ न। एवं च 'करमुखी'त्यादयोऽपप्रयोगा एव। (अत्र पूर्वपदशब्दो यौगिक उक्त एव)।

'प्यायः पी'तिसूत्रे भाष्ये—'श्लक्ष्णपीनमुखी कन्ये'ति दृश्यते। तत्र कर्मधारयपूर्वपदो बहुव्रीहिर्बोध्यः[2]। **पुरस्तादिति**। स हि अनन्तरस्यैव बाधकः।

**मध्ये** इति। स हि पूर्वस्यैव बाधकः। **प्रामाणिका** इति। एवं च 'सुगात्री'त्यादयोऽपप्रयोगा एव। **नित्यमित्येवेति**। अत एव भाष्ये रूपद्वयं नोदाहृतम्। 'कबरमणी'त्युत्तरं पठितं चेत्याहुः।

**न क्रोडा। अश्वानामुर** इति। टाबन्तक्रोडाशब्दस्य स्वभावतो विशेषविषयत्वमिति भावः। तेन समासे उपसर्जनह्रस्वत्वेऽदन्तत्वात्प्राप्तिः। 'न ना क्रोडं भुजाऽन्तरमि'त्यमरः। क्रोडमुत्सङ्गे पुमानपि, शूकरे च। गणे च टाबन्तमेव पठ्यते। तेनाऽन्येन समासे ङीष् भवत्येवेति **माधवः**। **हरदत्त**स्वरसोऽप्येवम्। गणे 'क्रोड' इति प्रातिपदिकमात्रं पठ्यते, न तु टाबन्तम्। एवं चाऽविशेषाल्लिङ्गत्रयेऽपि उदाहरणं बोध्यमि'ति **गणरत्नकृत्**।

**सहनञ्**। अत्र 'सहनञ्विद्यमानेभ्य' इति वक्तव्ये 'पूर्व'ग्रहणं 'विद्यमानकल्याणमुखे'त्यादौ व्यवहितेऽपि निषेधाऽर्थमि[3]ति कश्चित्।

---

१. अयं ख. पाठः क. ग. नास्ति।

२. 'बहुव्रीहिरित्यन्ये' ख. ग. पाठः।

३. 'मिति बोध्यम्' ख. पाठः।

**शूर्पणखेति**। 'पूर्वपदात्संज्ञायामि'ति णत्वम्। यदा तु केवलयौगिकः, तदा न ङीष्निषेधो, न वा णत्वम्। 'शूर्पनखी'त्येवेत्याहुः। 'नान्दीमु[1]ख्यो मातर' इत्यत्र भवत्येव ङीष्। नान्दी—कर्मसमृद्धिः, तन्मुखत्वेन=तद्दातृत्वेन योगेन तत्र तच्छब्दप्रवृत्तेः संज्ञात्वाऽभावात्। किञ्च सर्वत्र शास्त्रे सञ्ज्ञापदेन पौरुषेयसङ्केतितस्य, केवलरूढस्य वा ग्रहणेन, अत्र च तस्येश्वरसङ्केतसत्त्वेन, योगरूढत्वेन वा न सञ्ज्ञात्वम्। अत एव दिक्षु, 'विश्वेषां देवानामि'त्यादौ च सर्वनामत्वमित्याहुः।

**ङीबादेश इति**। स्वतन्त्रतया विधायकत्वे तु प्राग्गुल्फादावपि प्रसज्येत। 'असंयोगोपधादि'त्याद्यनुवृत्त्या स्वतन्त्रप्रत्ययविधाने तु प्रतिपत्तिगौरवम्। 'दिक्पूर्वपदादि'ति पञ्चम्या च 'ङीषि'ति प्रथमायाः षष्ठीकल्पनमिति भावः। **न ङीबिति**। अस्वरितत्वादित्याहुः।

**सख्यशि**। **इतिशब्द इति**। 'भाषायामि'ति चिन्त्यप्रयोजनम्। 'छन्दसी'त्यस्य तु न स्वरितत्वम्। 'दिक्पूर्वपदादि'त्यादौ वृत्तिकृद्भिरसम्बन्धात्। केचित्तु 'दिगि'ति सूत्रे, 'वाह' इत्यत्र च 'च्छन्दसी'ति वर्त्तते। लोके त्वन्तोदात्तमेव—'प्राङ्मुखी'ति। एवं च तन्निवृत्तिबोधनाय 'भाषा'-ग्रहणम्। इतिशब्दश्चाऽर्थे। तेन च्छन्दस्यपि। 'ङेरामि'ति सूत्रे 'सख्यशिश्वी च भाषायामि'ति 'च'घटितसूत्रपाठः क्व चित्कैयटपुस्तके इत्याहुः। **क्व चिदिति**। सर्वविधीनां छन्दसि वैकल्पिकत्वादिति भावः। तेन 'सखा सप्तपदी भवे'त्यादि सिद्धमित्याहुः।

**अशिश्वीति**। न विद्यते शिशुरस्या इति 'अशिश्वी'। 'आधेनवो धुनयन्तामशिश्वी'त्यत्राऽऽद्युदात्तत्वं त्वशिश्बीशब्दस्य च्छा[2]न्दसत्वात्।

'जाति'शब्देन स्ववाचकशब्दो लक्ष्यते। अर्थे कार्यस्याऽसम्भवात्। स्वरूपन्तु न गृह्यते, 'अस्त्रीविषयादि'त्यादेर्वैयर्थ्याऽऽपत्तेरित्याह—**जाति-वाचीति**। अनन्यभावे '**विषय**'शब्द इत्याह—**न च स्त्रियां नियतमिति**।

---

१. 'नान्दीमुख्यः' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ग. पाठः ख. नास्ति।

२. 'छान्दसत्वादिति बोध्यम्' ख. पाठः।

ननु 'नित्यत्वे सति, अनेकसमवेतत्वे सति, एका जातिरि'ति वक्तुम[1]-शक्यम्। शुक्लादिगुणस्यैकत्व-नित्यत्वपक्षे 'शु[2]क्ले'त्यसिद्धेरित्यत आह— **आकृतीति**। 'ग्रहणमि'ति करणे ल्युट्। 'सामान्ये नपुंसकम्'। **आकृतिः**= संस्थानम्। 'संस्थानमाकृतौ, मृत्यौ' इति **कोशात्**। **संस्थानम्**—अवयव-संनिवेशः। आकृतिर्ग्रहणं यस्या इति बहुव्रीहिः। तदाह—**अनुगतेति**। 'ईदृशाऽऽकारो गौरि'त्याकृत्युपदेशेनाऽऽकृतिदर्शनेन च व्यङ्ग्येत्यर्थः।

नन्वेवमपि वृषलत्वादीनां जातित्वं न स्यात्, अवयवसंथानस्य ब्राह्मणाऽऽदिसाधारण्येन, तस्या आकृत्युपदेशादिव्यङ्ग्यत्वाऽभावात्। किन्तु साक्षादुपदेशगम्या सा। अतो लक्षणाऽन्तरमाह—**लिङ्गानामिति**। कर्मणि षष्ठी। सर्वाणि लिङ्गानि न भजतीति 'सर्व'शब्दस्य लिङ्गाऽपेक्षत्वेऽपि 'किमोदनः शालीनामि'तिवद्भाष्यप्रामाण्यात्। 'भजो ण्विः', समासश्च। **आख्यातम्**—आख्यानम्=उपदेशः। अनेन चाऽनेकसमवेतत्वमुपलक्षितम्। तदाह—**असर्वलिङ्गत्वे सतीत्यादि**।

**कथनात्**। उपदेशादित्यर्थः।

**व्यक्त्यन्तरे इति**। तच्च समानकालिकत्वेन विशेष[3]णीयम्। तेन इन्द्रत्वादिकं न जातिः। पूर्वलक्षणेनाऽपि इन्द्रत्वाऽऽदीनां न जातित्वम्।

---

१. 'वक्तुमशक्यम्। 'देवदत्ते'त्यत्राऽपि ङीषापत्तेः। देवदत्तत्वादेर्बाल्याद्यव-स्थाभेदभिन्नाऽनेकदेहवृत्तित्वात्।' इति क. कुण्डलितः ख. पाठः।

२. 'शुक्लेत्यसिद्धेश्चेत्यतस्तादृशानां कतिपयानामेवाऽत्र शास्त्रे तत्त्वेन ग्रहण-मित्याह—आकृतीति' इति ख. पाठः। क. कुण्डलितः।

३. विशेषणीयम्। तेन 'अपर्णा' 'दुर्गा' 'शिवे'त्यादौ न ङीप्। अन्यथा कल्प-भेदेन दुर्गाशरीराणां भिन्नत्वादनेककल्पस्थायिमार्कण्डेयाऽऽदिभिः सकृदा-ख्यानग्राह्यत्वाच्च तत्त्वाऽऽपत्तिः। एवमिन्द्रत्वाऽऽदिकमपि न जातिः'— इति क. कुण्डलितः ख. पाठः।

'समानकालिकाऽनेकव्यक्तिवृत्तित्वे सती'त्यनेन तत्राऽपि विशेषणात्।

[1]दुर्गादौ स्त्रीविषयत्वादपि न ङीषः प्राप्तिः। नन्वेवमपि ब्राह्मणत्वादेर्जातित्वं न स्यात्, तस्योपदेशगम्यत्वेऽपि, एकत्र कथितेऽन्यत्र सुग्रहत्वाऽभावात्। एवं च 'ब्राह्मणोभार्य' इत्यत्र 'जातेश्चे'ति पुंवद्भावनिषेधाऽनापत्तिरिति चेन्न। तत्पित्रादिषु सुग्रहत्वेनाऽक्षतेः। वृषलत्वस्य तदपत्यतत्सहोद[2]राऽऽदौ सुग्रहत्वाच्च। अस्य सर्वलिङ्ग'तटी'त्यादावसम्भवादाद्यमुक्तम्। जलसमीपदेशविशेषस्यैव तद्वाच्यत्वेन, तटत्वादीनामनुगतसंस्थानव्यङ्ग्यत्वात्।

युवत्वादिकं तु आकृतिग्रहणमपि न जातिः। नित्यत्वाऽभावात्। अत एव 'वृद्धे'त्यादौ न ङीष्। 'युवजानिरि'त्यादौ च पुंवद्भावः। 'युवतितरे'त्यत्र तु ङ्याप्सूत्रभाष्योदाहरणप्रामाण्यान्न पुंवद्भावः। तान्त्रिकोक्तनित्यत्वादीनामत्राऽप्यपेक्षणादित्याहुः।

**अपरे** तु यथाभाष्यं तथा 'आकृतिग्रहणा जातिरि'ति लक्षणं नित्याऽनित्यसाधारणम्। अत एव 'यावद्द्रव्यभावित्वे सति, गुणसमानाधिकरणमि'ति अनित्यव्यावृ[3]त्तं लक्षणाऽन्तरम् 'अपर आहे'त्यादिना दर्शितम्। एवं च भिन्नऋषिकर्तृकलक्षणद्वयप्रामाण्येन कुमाराऽऽदिशब्दे जातिकार्यविकल्पः फलति। 'वृद्धे'त्यादौ त्वजादिपाठाट्टाप्। अत एव 'युवजानिरि'त्यत्र पुंवत्त्वं, 'युवतितरे'त्यत्र पुंवत्त्वाऽभावश्च भाष्ये उदाहृत' इति वदन्ति। अत्र पक्षे गौरादिषु तरुणतलुनपाठे फलं चिन्त्यम्, स प्रा[4]मादिको वेति बोध्यम्।

---

१. 'दुर्गादौ स्त्रीविषयत्वादपि न ङीषः प्राप्तिः' इति क. ग. पाठः। 'दुर्गा' 'अपर्णे'त्यादौ' इति तु लघुशेखरे पाठः।

२. 'तत्सहोदरादौ च' ख. पाठः।

३. 'व्यावर्त्तकम्' ख. पाठः।

४. 'अप्रामाणिको वेति बोध्यम्' इति खः पाठः।

**शुक्लेति**। मीमांसकमते तेषां नित्यत्वैकत्वाऽनेकसमवेतत्वसत्त्वादिति भावः। **देवदत्तेति**। परिमाणभेदेन द्रव्यभेदे मानाऽभावात्। भेदेऽपि तस्य व्यक्त्यन्तरसमानकालिकत्वाऽभावादिति[1] भावः।

नन्वेताभ्यामपि 'औपगवी'त्यादेरसंग्रहः, अनुगतसंस्थानव्यङ्ग्यत्वाऽभावात्। 'कठः' 'कठी' 'कठमिदं कुलं' 'नाडायनं कुलमि'ति दर्शनेनाऽसर्वलिङ्गत्वाऽभावाच्चाऽत आह—**गोत्रं चेति**। **अपत्येति**। गोत्रमिह न शास्त्रीयं युवाऽतिरिक्तपौत्रप्रभृत्यपत्यरूपम्, 'अपत्याऽधिकारादन्यत्र लौकिकं गोत्रमि'ति 'यूनि लुक्'सूत्रभाष्योक्तेः। यद्यपि लौकिकं गोत्रं प्रवराऽध्यायप्रसिद्धऋष्यपत्यरूपं, 'यूनि लुक्'सूत्रभाष्यस्वरसात्, 'गोत्राव[2]-यवादि'तिसूत्रस्थभाष्याच्च लभ्यते, तथाऽप्यत्र वक्ष्यमाणभाष्यादपत्य[3]मात्रं गृह्यते। अत्रोपग्वपत्यत्वादेः, शाखाऽध्येतृत्वादेश्च नित्यत्वादिविरहेऽपि, अनेन जातिसंज्ञेति 'जात्याख्यायामि'ति सूत्रे कैयटे, भाष्ये च ध्वनितम्।

उक्तलौकिकगोत्रग्रहणादेवाऽनन्तराऽपत्ये 'अवन्ती' 'कुन्ती'त्यादौ 'इत' इति जातिं प्रयुक्तो ङीष् सङ्गच्छते। स्पष्टं चेदम् 'अनुपसर्जनादि'ति सूत्रे भाष्ये। न च 'जातेरि'त्यनुवर्त्तमाने, पुनः 'इतो मनुष्यजातेरि'त्यत्र जातिग्रहणसामर्थ्यादपत्यप्रत्ययान्तमात्रग्रहणमिति वाच्यम्। शब्द मर्यादयाऽलाभात्। 'जातिग्रहणमयोपधादित्यस्य निवृत्त्यर्थमि'ति भा[4]ष्य-विरोधाऽऽपत्तेश्च।

---

१. 'समानकालिकत्वाऽभावाच्चेति भावः' ख. पाठः।

२. 'अणिञोरितिसूत्रस्थभाष्याच्च' इति ख. पाठः।

३. 'अपत्यमात्रमिति बोध्यम्' ख. पाठः।

४. 'इति भाष्यविरोधाऽऽपत्तेश्च। न चैवमपि 'गोत्राद्यूनि प्रत्ययो भवति। ततः 'स्त्रियां लु'गिति 'औपगवी माणविके'त्यत्राऽण्योऽनुपसर्जनमि'त्यनुपसर्जनलक्षण ईकारो न प्राप्नोति। मा भूदेवम्। अणन्तादनुपसर्जनादित्येवं भविष्यति। इह तर्हि 'औपगवीभार्यः', जातिलक्षणः पुंवद्भावप्रति-

किञ्च[1] प्रवराऽध्यायप्रसिद्धगोत्रग्रहणमत्र वक्तुमशक्यम्, स्त्रीणां प्रवराऽध्यायप्रसिद्धत्वाऽभावात् । यद्यपि 'लौकिकवैदिकेष्वि'त्यादौ भाष्ये लोकशब्दस्य स्मार्त्तव्यवहारे प्रसिद्धिः, तथापि तन्मध्ये प्रवराऽध्यायप्रसिद्धऋष्यंशत्यागस्योक्तयुक्तिभिरावश्यकत्वादपत्यमात्रमपि लौकिकमेवेति बोध्यम् ।

'पुत्रशब्दस्याऽपत्यवाचकत्वेऽपि जातिकार्यं न । अपत्यप्रत्ययान्तवाच्यस्यैव जातित्वाऽङ्गीकारादि'ति केचित् ।

---

षेधो न प्राप्नोति । मा भूदेवम्, वृद्धिनिमित्तस्ये'त्येवं भविष्यति । एवं तर्हि 'ग्लुचुकायनीभार्यें' दोष' इति 'एको गोत्रे' इतिसूत्रस्थभाष्यं विरुध्येत । परत्वाज्जातिलक्षणङीष एव वक्तुं युक्तत्वात्, पुंवद्भावप्रतिषेधसिद्धेश्चेति वाच्यम् । 'स्त्रियां लुगि'ति न्यासेऽस्यौपगवशब्दस्य युवाऽपत्यत्वरूपे प्रवृत्तिनिमित्ते पुंसोऽनुवृत्याऽस्त्रीविषयत्वाऽभावेन, जातिलक्षणङीषः प्राप्त्यभाव इत्याशयात् । तत्तच्छब्देभ्यश्च गोत्रत्व-युवत्वादिनैव बोधः । एकदेशी समाधत्ते-'मा भूदेवमि'ति । तदन्तविशेषणत्वे तदन्ताऽन्तस्याऽपि विशेषणाऽऽपत्तावनुपसर्जनाऽधिकारवैयर्थ्याऽऽपत्त्या तदन्तविशेषणत्वस्य सिद्धान्त्यसंमतत्वात् । परैकदेश्याह—'इह तर्ही'त्यादीति-भाष्याऽर्थस्य सत्त्वान्न कश्चित्तद्विरोध इत्याहुः ।

परे त्वत्र शास्त्रीयमेव गोत्रम्, 'अपत्याऽधिकारात्परं लौकिकं गोत्रमि'ति 'यूनि लुक्' सूत्रभाष्योक्तेः । 'परम्=उत्तरमि'ति कैयटेन व्याख्यानाच्च । अस्य च ततः पूर्वत्वात् । प्रवराऽध्यायप्रसिद्धस्यैव लौकिकगोत्रत्वाच्च । 'अपत्यमात्रं लौकिकं गोत्रमि'त्यस्य भाष्ये क्वाऽप्यदर्शनाच्च । लोकेऽपि तथाऽव्यवहाराच्च । लौकिकवैदिकेष्वि'त्यादौ भाष्ये लोकशब्दस्य स्मार्त्तव्यवहारे प्रसिद्धेश्च । 'अवन्ती'त्यादि तु 'द्रौणायनि'वदुपचारेण गोत्रत्वान्निर्वाह्यम् ।। 'गोत्रसंज्ञासूत्रपर्यन्तं 'गोत्रे' इत्यधिकार इतिभाष्यसंमते पक्षे गाङ्गेयवच्च । एवं चाऽनन्तराऽपत्यत्वादिना बोधे 'औपगवी'त्यादावणन्तत्वात् ङीबेवेत्याहुः—इति ख. पाठः ।

१. 'किञ्च' इत्यारभ्य 'इत्याहुः' इत्यन्तः क. ग. पाठः ।

'परे त्वत्र शास्त्रीयमेव गोत्रम् । अत एव गोत्राद्यूनि प्रत्ययो भवति । ततः 'स्त्रियां लुगिति'न्यासे 'औपगवो माणविके'त्यत्राऽण्योऽनुपसर्जनमित्यनुपसर्जनत्वलक्षण ईकारो न प्राप्नोति । मा भूदेवम्, अणन्तादनुपसर्जनादित्येवं भविष्यति । इह तर्ह्यौपगवीभार्यः, जातिलक्षणः पुंवत्त्वप्रतिषेधो न प्राप्नोति। मा भूदेवम्, 'वृद्धिनिमित्तस्ये'त्येवं भविष्यति । एवं तर्हि ग्लुचुकायनीभार्ये दोषः'—इत्येको गोत्रे इतिसूत्रस्थभाष्ये युवाऽपत्यस्य जातित्वाऽभावकथनम् । अन्यथा परत्वाज्जातिलक्षणङीष एव वक्तुं युक्तत्वम् । 'पुंवद्भावप्रतिषेधो न प्राप्नोती'त्यसङ्गतिश्च । यद्यपि तदन्तविशेषणत्वे, तदन्ताऽन्तस्याऽपि विशेषणाऽऽपत्तावनुपसर्जनाऽधिकारवैयर्थ्यमित्यणन्तादनुपसर्जनादित्युक्तिर्भाष्ये पूर्वपक्षिणोऽसङ्गता, तथापि तामङ्गीकृत्याऽपि दोष उक्त 'इह तर्ही'त्यादिना । ग्लुचुकायनीभार्ये दोषस्तु ङीष्-पुंवत्त्वयोरुभयोरप्यसिद्धिरूपः । 'सर्वतोऽक्तिन्नर्थादि'ति ङीपि तु पुंवत्त्वाऽसिद्धिरेव दोषः ।

अश्वत्थाम्नि द्रौणायनिवत् 'अवन्ती'त्यादि गोत्रत्वाऽऽरोपात्साधु । यूनि तु न शास्त्रीयगोत्रत्वाऽऽरोपः । तत्र तत्संज्ञानिषेधात् ।

अत एव 'फान्टाहृती'तिसूत्रे 'फाण्टाहृताभार्य' इति, 'गोत्रस्त्रिया' इतिसूत्रे 'गार्गीभार्य' इति च भाष्यप्रयोगः संगच्छते । स्त्रियां युवसंज्ञाया अभावात् । 'एको गोत्रे' इतिनियमाच्चाऽत्र णो दुर्लभ इति नाऽस्ति 'गार्ग्ये'त्युक्तमि'त्यन्यदित्याहुः ।

**शाखाध्येत्रिति**—द्वन्द्वः । चरणशब्दः-कठाऽऽदिषु शाखाभेदेषु[1], तदध्यायिपुरुषेषु[2] च । प्रकृते चोभयोरपि ग्रहणमिति स्पष्टम् 'अनुवादे चरणानामि'ति सूत्रे **कौस्तुभ-पदमञ्जर्योः** । (ए[3]तदन्यतमत्वं चाऽनुगतं जातिलक्षणमिति दिक्) ।

---

१. 'शाखाभेदेषु मुख्यः' ख. पाठः ।

२. 'तदध्यायिषु पुरुषेषु गौणः' ख. पाठः ।

३. अयं ख. पाठः, क. ग. नास्ति ।

**कठीति**। 'कठेन प्रोक्तमधीते' इति विग्रहः। वैशम्पायनाऽन्तेवासित्वात्प्रोक्ताऽर्थणिनेः 'कठचरकादि'ति लुक्। अध्येत्रणस्तु 'प्रोक्ताल्लुक्'।

(**बह्वृची**)। वह्वयो ऋचोऽध्येतव्या यस्या इति विग्रहः। 'ऋक्पूरि'-त्यप्प्रत्ययः समासान्तः। स्त्रिया अध्ययनाऽभावेऽपि तद्वंश्यत्वात् ताच्छब्द्यम्। यथाऽनधीयाने माणवके।

अन्ये तु शाखायां 'पुंयोगादि'ति ङीष् सिद्ध इति, शाखावाचिनोऽत्र ग्रहणे फलाऽभावः। **कैयटस्वरसोऽ**प्येवमेव। शाखायामस्त्रीविषयत्वाऽभावाच्च। पुंवद्भावोऽपि भाषितपुंस्कत्वाऽभावादेव न प्राप्नोतीत्याहुः।

**ब्राह्मणी**त्यत्रेति। अपत्येऽणि 'ब्राह्मोऽजातावि'त्यत्र 'अजातावि'त्युक्तेष्टिलोपाऽभावः। **बलाकेति**। बकत्वव्याप्यजातिवचनो नित्यस्त्रीलिङ्गः। या 'विस[2]कण्टिका'पदेनोच्यते। 'अस्त्रीविषयादि'त्यस्य हि 'प्रवृत्तिनिमित्तैक्ये लिङ्गाऽन्तररहितभिन्नादि'त्यर्थः। एतेन 'बलं कायती'ति यौगिकस्य सर्वलिङ्गत्वात्,'बलाका वकपङ्क्तिः स्याद्बलाका बिसकण्टिका[3]। बलाककामुकी प्रोक्ता, बलाकश्च बको मत' इति **शाश्वतकोशे** पंल्लिङ्गस्याऽप्यभिधानाच्चेदमयुक्तमि'त्यपास्तम्। अत एव 'पाककर्णे'ति सूत्रं चरितार्थम्। तद्धि स्त्रीविषयाऽर्थम्। अन्यथा तेषामपि 'यौगिकेऽर्थे लिङ्गाऽन्तरसम्भवेनाऽस्त्रीविषयत्वात्पूर्वेणैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। 'द्रोणी'कुटी''त्यादयो गौरादिषु बोध्याः। 'द्रोण'शब्दः परिमाणे पुमान्, गवादन्या स्त्री। 'कुट'शब्दो घटे पुमान्, गेहे स्त्री। 'पात्र'शब्दो भाजनसामान्येऽर्धर्चादिः। भाजनविशेषे स्त्री। 'अत्र औणादिके ष्ट्रनि षित्त्वान्ङीषि'त्यप्याहुः।

भाष्ये तु प्रौढ्या 'क्व चिद्यदस्त्रीविषयमि'त्यर्थरूपं पक्षाऽन्तरमाश्रित्य 'द्रोणी'त्यादयः साधिताः। 'माला-बलाकयोस्त्वजादिपाठात्सिद्धमि'त्युक्तम्।

---

१. अयं पाठः क. ख. ग. नास्ति।

२. 'ब्रिसकण्ठिका' क. ग. पाठः।

३. 'कण्ठिका' क. ग. पाठः।

एवं च 'पाककर्णे'ति सूत्रं न कार्यमिति तद्भावः। अत्र पक्षे 'अस्त्रीविषया-दि'त्यस्य प्रत्युदाहरणमन्वेषणीयम्। 'कुलीने'त्यत्राऽजादित्वाट्टाप् बोध्यः।

**पाककर्ण**। जातिवाचिनः किम्?। 'बहुपुष्पा शाखा'। पूर्वसूत्रेण सिद्धे स्त्रीविषयाऽर्थमिदमित्याह—**स्त्रीविषयादिति**। न चाऽजात्यर्थमेव किं न स्यादिति वाच्यम्। अन्तरत्वेन 'अस्त्रीविषयादि'त्यस्यैव बाधात्। त्रिफला-काण्डपुष्पादिषु नित्यस्त्रीलिङ्गेषु 'सदच्काण्डे'त्यादिप्रतिषेधाऽऽरम्भाच्च **योपधादपीति**। पुनर्जातिग्रहणादिति भावः।

'अस्त्रीविषयादि'ति नाऽनुवर्त्तते, पूर्वसूत्रेण विच्छेदात्।

**तित्तिरिरिति**। ननु 'तित्तिरिः ककुभो लावः' इति साहचर्यात्पुंस्त्वेनाऽस्य स्त्रीत्वाऽभाव इति चेन्न। 'स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगा' इत्यमरेण स्त्रीत्वस्याऽपि बोधनात्। अत्र '**इञ् उपसङ्ख्यानम्, अजात्यर्थम्**'। सौतङ्गमी। सुतङ्गमशब्दाद् वुञ्छणादिना इञ्। 'गौरादिपाठः कार्य' इत्यन्ये। इतः किम्?। दरत्। 'द्व्यञ्मगधे'त्यणो'ऽतश्चे'ति लुक्।

**ऊङुतः**। ऊकारो 'नोङ्धात्वोरि'तिविशेषणाऽर्थः। अन्यथा 'यवाग्वे'-त्यादावपि निषेधः स्यात्। 'ऊङ्धात्वोर्यणः पराऽसर्वनामस्थानविभक्ति-रुदात्ता ने'ति तदर्थः। दीर्घोच्चारणन्तु 'श्वश्रू'शब्दाऽर्थम्। अन्यत्र सवर्ण-दीर्घेणाऽपि सिद्धेः।

इह ऊकाराऽन्तरं प्रश्लिष्य पुनर्विधानसामर्थ्यात् 'ब्रह्मबन्धूरि'त्यत्राऽन्तरङ्गोऽपि शैषिकः कप् न। नद्युत्तरपदत्वाऽभावात् 'नद्यृतश्चे'त्यस्य प्राप्तिरेव नाऽस्ति।

'ब्रह्म[2]=वेदो बन्धुषु यस्य, न तु स्वस्मिन्नि'ति बहुव्रीहिः। अयं मनुष्यजातिविशेषे रूढः। स्पष्टं चेदं भाष्यकैयटयोः।

---

१. 'जातिवचनेषु नित्यस्त्रीलिङ्गेषु 'सदक्काण्डे'त्यादिप्रतिषेधारम्भाच्च' ख. पाठः।

२. 'ब्रह्मा बन्धुर्यस्येति' ख. पाठः।

**कुरूरिति**। एकाऽऽदेशस्य पूर्वान्तवत्त्वात्स्वादयः। लिङ्गविशिष्टपरिभाषया वा। 'यत्तु 'नाऽत्र परिभाषाप्रवृत्तिः। लिङ्गबोधकप्रत्ययाऽन्तत्वरूपलिङ्गवैशिष्ट्यस्य, प्रातिपदिकत्वस्य च लाभाय पूर्वन्तत्व-परादित्वयोरावश्यकत्वेन उभयत आश्रयणेऽन्तादिद्भावाऽभावादि'ति। तन्न। प्रातिपदिकत्वस्योपयोगाऽभावात्। न हि लिङ्गविशिष्टप्रातिपदिकस्ये'त्युक्तमस्ति। तादृशाऽर्थत्वे हि 'इन्द्राणी'त्याद्यसिद्धिः। न हि ङ्यन्तं प्रातिपदिकं भवतीति यत्किञ्चिदेतत्।

**अध्वर्युरिति**। अध्वर्युशाखाऽध्यायिवंशोद्भवेत्यर्थः। **रज्ज्वादीति**। 'उत' इति तु नेह सम्बध्यते। 'आलाबूरि'ति भाष्योदाहरणादिति भावः।
**कृकवाकुरिति**। मनुष्यजातित्वाऽभावात्पूर्वेणाऽपि [2]नेति ध्येयम्।

**पङ्गोश्च**। पङ्गुशब्दस्य गुणवाचित्वात्पूर्वेणाऽप्राप्तिः। 'श्वसुरः श्वश्र्वे'तिनिर्देशसिद्धाऽर्थमाह—**श्वशुरस्येति**। अत एवाऽन्त्याऽकारस्यैव लोपः।

**ऊरूत्त**। 'उपमीयतेऽनये'ति उपमा-उपमानम्। तद्भावः-**औपम्यम्**। तच्च सादृश्यम्। एवं च 'सादृश्यबोधकोरूत्तरपदादि'त्यर्थः। समासस्य तत्र शक्त्यभ्युपगमात्समासस्य तत्त्वं सूपपादम्। उत्तरपदेन च पूर्वपदमाक्षिप्यते। तच्च प्रत्यासत्तिन्यायादुपमानवाच्येव। अत एवोत्तरपदग्रहणं चरिताऽर्थम्। अन्यथा 'उर्वन्तादि'त्येव वदेत्। अत एव 'करभोपमोरूरि'त्यत्र न। पूर्वपदस्योपमानवाचित्वाऽभावादित्याशयेनाऽऽह—**उपमानवाचीती**। **करभोरूरिति**। मणिबन्धादाकनिष्ठं करबहिर्भागः **करभः**। तद्वदूरू यस्या इत्यर्थः। उत्तरपदग्रहणेन समासस्य गृह्यमाणत्वात्, 'अनुपसर्जनादि'ति तस्यैव विशेषणं बोध्यम्। **शफाविति**। 'शफः खुरे गवादीनामि'ति **हेमचन्द्रकोशा**च्छफशब्दस्य पुंस्त्वमपीति भावः। 'शफं क्लीबे खुरः

---

१. 'लिङ्गविशिष्टपरिभाषया वा' इत्यारभ्य 'यत्किञ्चिदेतत्' इत्यन्तः ख. पाठो मनोरमाशब्दरत्नस्थत्वात् क. कुण्डलितः।

२. नेत्यपि बोध्यम्' ख. पाठः।

पुमानि'त्यमरान्नपुंसकत्वमपि। अत एव 'शफाविव जर्भुराणे'ति श्रुतिप्रयोगः सङ्गच्छते।

**उपचारादिति**। शफशब्दप्रवृत्तिनिमित्तस्य खुरत्वस्योरुपदार्थे आरोपादित्यर्थः।[1] एवं च समासस्य सादृश्य[2]बोधाऽजनकत्वेन पूर्वसूत्रप्राप्तिर्नास्तीत्यर्थः। तदारोपे सादृश्यं निमित्तमित्यन्यदेतत्। इदमेवाऽभिप्रेत्य 'पुंयोगादाख्यायामि'ति सूत्रे भाष्ये भगवतोक्तं—'भिन्नानामभेदाऽभावात्कथमतस्मिन्स इति। चतुर्भिः प्रकारैस्तस्मिन्स इत्येतद्भवति। तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यादि'ति। एतेन 'उपचारेऽपि पूर्वपदस्योपमावाचित्वमव्याहतमेवे'ति मन्दोक्तिः परास्ता।

एवं च 'करभोरु'शब्देऽपि आरोपविवक्षायामूङ् न भवत्येव। एतेन 'विचकरे च करेण करोरुभिरि'ति माघो व्याख्यातः। 'पीवरोरु'[3] इति तु चिन्त्यमेव। संज्ञापूर्वकविधेरनित्यत्वन्तु भाष्ये न क्वापि दृष्टमिति, अप्रामाणिकमि'ति न तस्य साधुत्वनियामकता।

**हितेन सहेति**। 'समो वा हिततयोरि'तिव्युत्पादितस्य तु एकदेशविकृतन्यायेन संहितग्रहणादेव सिद्धिरिति भावः।

ननु 'सह'शब्दग्रहणं व्यर्थम्। सर्वस्योरुमत्त्वेन 'सह'शब्दप्रयोगस्य तत्समभिव्याहारे व्यर्थत्वेन 'सहोरूरि'ति प्रयोगस्यैवाऽभावादत आह—**सहेते** इति। कद्रूरिति। नागमातुः संज्ञेयम्[4]। अच्छन्दोऽर्थमिति। छन्दसि तु 'कद्रुकमण्डल्वोश्छन्दसी'त्यनेनैव सिद्धेरिति भावः।

**अञो योऽकार** इति। 'शार्ङ्गरवादी'ति लुप्तपञ्चम्यन्तम्। 'अञ'

---

१. 'आरोपादिति भावः' ख. पाठः।

२. 'सादृश्यप्रकारकबोधाऽजनकत्वेन' इति ख. पाठः।

३. 'पीवरोरु इति संज्ञापूर्वकविधेरनित्यत्वादगुणाऽभावे बोध्यम्' इति ख. पाठः।

४. 'इतोऽग्रे—'कद्रुरिति। कुत्सितो वृक्ष इत्यर्थः। 'कमण्डलु'शब्दश्चतुष्पाज्जाति वचनः। पात्रवाची तु न स्त्रीलिङ्ग इति न प्रत्युदाहरणम्' इति ख. पाठः।

इति च षष्ठीति भावः। 'अनुपसर्जनादि'ति च विभक्तिविपरिणामेनाऽस्य समानाधिकरणं विशेषणम्। एवं 'टिड्ढे'त्यत्राऽपि सुवचम्। 'तद्वदत्र पञ्चम्यन्तत्वमपि सुवचमि'त्यपि बोध्यम्। एकत्रोक्ताऽर्थस्याऽपरत्राऽपि ग्रहणादिति दिक्। 'अञ्योऽकार' इत्यपि क्वचिन्मूले पाठः। अत्राऽकार-विशेषणं किम्?। 'शूरसेनी'। 'जनपदशब्दादि'त्यञ 'अतश्चे'ति लुक्। ततोऽत्र जातिलक्षणो ङीषेव। अत एव 'न प्राच्यभर्गादियौधेयादिभ्य' इति सूत्रे यौधेयाऽऽदिग्रहणं सार्थकम्। तद्धि 'पर्श्वादियौधेयादिभ्यामणञा-वि'तिविहितस्वार्थिकाऽञः 'अतश्चे'ति प्राप्तलुको निषेधाऽर्थम्। तत्फलं चाऽञन्तत्वान्ङीन् यथा स्यात्, ढगन्तत्वान्ङीप् मा भूदिति।

**शार्ङ्गरवीति**। 'शृङ्गरु'शब्दादपत्येऽण्। आदिवृद्धिः। 'ओर्गुणः'। तत्र जातिलक्षणे ङीपि प्राप्ते वचनम्। **जाते**रित्यनुवृत्तेरिति। स्पष्टं चेदं 'टिड्ढे'ति सूत्रे भाष्ये। **गौतमो** ऋष्यणन्तो गौरादिष्वपि।

**कामण्डलेयः** चतुष्पाड्ढञन्तः। अस्य ञित्त्वेनाऽऽद्युदात्तत्वात्, ङीषि, ङीनि च विशेषाऽभावेन, योपधत्वान्ङीषोऽप्राप्त्या चैतत्पाठफलं चिन्त्य-मित्याहुः। 'पुंवत्त्वाऽभावः फलमि'त्यपि केचित्।

**'वात्स्यायनः'**। एतत्पाठसामर्थ्यादेव स्त्रियां युवसंज्ञा। गोत्रे वा प्रत्ययद्वयम्। गर्गादियञन्तात् 'यञिञोश्चे'ति फगत्र। 'यञन्तप्रकृतिकष्फ-प्रत्ययाऽन्त' इत्यपि **केचित्**। **'आश्मरथ्यः'** गर्गादियञन्तः अपवादष्फ-प्रत्ययस्य पूर्वं वर्णितत्वेन, ष्फ-ङीनौ पर्यायेण बोध्यौ। **'भोगवद्गौरिमतोः** संज्ञायाम्'। 'भोग'शब्दो घञन्तः। 'गौरि'शब्दोऽत इञन्तः। ताभ्यां मतुप्। पित्त्वादनुदात्तः। न च 'ह्रस्वनुड्भ्यां मतुबि'ति तस्योदात्तत्वम्। तत्र 'अन्तोदात्तादि'त्यनुवृत्तेः। नन्वेवम् 'उगितश्चेति' ङीपा सिद्धिः। ङीप्-ङीनोः स्वरे विशेषाऽभावात्। न च घादिषु 'उगितश्चे'ति ह्रस्वविकल्पा-ऽऽपत्तिः। ङीन्यपि दुर्वारत्वात्। 'उगितो विहिता या नदी'त्यर्थस्यैव 'युवोरनाकावि'तिसूत्रे भाष्ये सिद्धान्तितत्वात्, न तु 'उगित्'शब्देन विहि-तेती'तिचेन्न। 'संज्ञायामेवे'ति नियमाऽर्थत्वात्। नियमसामर्थ्याच्च असंज्ञायां ङीबपि नेत्याहुः।

**पुत्र**। अस्य पाठसामर्थ्याज्जातित्वाऽभावेऽपि ङीन्। न च 'पुत्रशब्दः स्त्रियां नास्तीति भ्रमितव्यम्। 'सुतः पुत्रः स्त्रियां त्वमी। आहुर्दुहितरं सर्वे' **इत्यमरात्**। तत्र स्त्रीत्वबोधे ईकारसमभिव्याहारस्तन्त्रम्। केवलाऽकारान्तपुत्रशब्दस्तु पुंस्त्वविशिष्टस्यैव बोधकः। अत एव 'सपुत्र' इत्यतो न सन्देह इ[1]ति **काव्यप्रदीपोद्द्योते** विस्तरः। 'पुमांसं पुत्रमाधेहि'त्यादौ पुँस्त्वेन विशेषणन्तु अतिशयित[2]पुंस्त्वबोधनाय।

ए[3]वं च 'सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वे'ति 'कारे सत्यागदस्ये'ति सूत्रस्थं वार्त्तिकं किमर्थमि'ति चिन्त्यम्। न च दुहितुः पुत्रडादेशे, निरनुबन्धकन्यायेन 'नादिन्याक्रोशे पुत्रस्ये'त्यादीनामप्रवृत्तिः फलमिति वाच्यम्। 'पुत्री'शब्दघटिततादृशाऽऽक्रोशस्य लोकेऽप्रसिद्धेः एतत्स[4]म्बन्ध्यचः पर—'आदिनी'शब्दपरत्वाऽभावाच्च। न च पुत्रटि, ङीपि, उदात्तनिवृत्तिस्वरेणाऽन्तोदात्तत्वं, ङीनि त्वाद्युदात्तत्वमिति स्वरे विशेषः। न च पुत्रडादेशे स्थानिवद्भावेन दुहितृशब्दत्वात् 'न षट्स्वस्रादिभ्य'इतिनिषेधान्ङीपोऽप्राप्तिः। 'मध्येपवाद' इति न्यायेन तस्य निषेधस्य 'ऋन्नेभ्य' इतिङीप्मात्रबाधकत्वात्। 'अनन्तरस्ये'तिन्यायाच्च, टित्त्वसामर्थ्याच्चेति वाच्यम्। ङीनन्तेन तत्पुरुषे समासस्वरेण अन्तोदात्तत्वात्। टित्त्वान्ङीप्यप्युदात्तनिवृत्तिस्वरेणाऽन्तोदात्तत्वस्यैव सत्त्वात्। न च 'उग्री, उग्रा वा दुहिता यस्या' इति बहुव्रीहौ 'उग्रपुत्री'त्यादिसिद्ध्यर्थं तदावश्यकमिति वाच्यम्। अस्य टित उपसर्जनत्वेन, बहुव्रीहौ ङीपोऽप्राप्तेः।

---

१. 'इत्यस्मत्कृतकाव्यप्रदीपोद्द्योते' ख. पाठः।

२. 'अतिशयिततद्बोधनाय' ख. पाठः।

३. एवं च' इत्यारभ्य 'चिन्ताबीजमित्याहुरिति दिक्' इत्यन्तः ख. पाठो मनोरमाशब्दरत्नस्थत्वात् क. कुण्डलितः।

४. 'सम्बन्ध्यचःपरपर आदिनी' इति क. पाठः।

किञ्चाऽस्य वार्त्तिकस्य,—कुलमेरुभ्यां बहुव्रीह्यसम्भवात्तत्साहचर्येण तत्पुरुष एव प्रवृत्तेः। 'कारे सत्यागदस्ये'ति सूत्रे उपसङ्ख्यातत्वेन, तस्य तत्पुरुष एव प्रवृत्त्याऽस्याऽपि तत्रैव प्रवृत्तेः[1]। तच्चाऽन्याऽसम्भवात्, पूर्वोत्तरसाहचर्येण च तत्पुरुष एव प्रवर्त्तते। ('राजपुत्री'त्यादौ[2] तत्पुरुषाऽर्थस्यैव प्रतीतेश्च)।

यद्यपि 'शार्ङ्गरवादौ पुत्रशब्द आधुनिकप्रक्षिप्त' इति। तदपि न। 'प्रत्ययस्थादिति'सूत्रे 'वा सूतकापुत्रिके'त्यादिवार्त्तिक–तद्भाष्यादेरसङ्गत्यापत्तेः। 'शैलपुत्री' 'पुत्री'[3]त्यादिप्रयोगाऽसङ्गत्यापत्तेश्चे'ति **केचित्**।

**अपरे** तु 'सूताऽऽदिपुंशब्देभ्यः परे ङीनन्ते पुत्रशब्दे तत्पुरुषे 'पुत्रः पुम्भ्य' इत्यनेन 'पुंशब्दात्परपुत्रशब्दान्ततत्पुरुषे पुत्रस्याऽऽदिरुदात्त' इत्यर्थकेन लिङ्गविशिष्टपरिभाषया पुशब्दोकारोदात्तत्वं, पुत्रडादेशे तु न तत्प्रवृत्तिः, सानुबन्धकत्वात्, अतस्तत्रोदात्तनिवृत्तिस्वरेणान्तोदात्तत्वम्। कुलशब्दाऽन्तबहुव्रीहौ पुंस्त्वे तत्पूर्वकेऽपि[4] स्वरे विशेषो बोध्यः। इष्टकादिसूत्र इकाऽत्राऽप्याक्षिप्तपूर्वपदस्य विशेष्यतया तदन्तविधिः सुलभः[5]। इदमेव च **मनोरमायां** चिन्ताबीजमित्याहुरि'ति दिक्।

**नृनरयोरिति**। नृशब्दे 'ऋन्नेभ्य' इति ङीपि, 'नर'शब्दाज्जातिलक्षणे ङीषि प्राप्ते वचनम्। 'नृनरयोरि'त्यावर्त्तते। एकत्र पञ्चम्यर्थे षष्ठी। 'अनयोर्वृद्धिराभ्यां ङीन् चे'त्यर्थः।'ननु 'नारी'ति प्रयोगस्य 'नृ'शब्देन सिद्ध-

---

१. 'प्रवृत्तेश्च' ख. पाठः।

२. अयं ख. पाठः, क. ग. नास्ति।

३. 'पुत्री' इति ख. नास्ति।

४. 'तत्पूर्वपदेपि' ख. पाठः।

५. 'तदन्तविधेः सुलभत्वात्' ख. पाठः।

त्वात्, 'नरी'ति प्रयोगस्य पुंयोगलक्षणङीषा दुर्वारत्वाच्च 'नर'ग्रहणं व्यर्थम्। पुंयोगलक्षणस्तु ङीष् नाऽनेन बाध्यते, किन्त्वत्र जातिग्रहणाऽनुवृत्तेर्जातिलक्षण एवेति सर्वसंमतम्, अनन्तरस्येति न्यायसिद्धं च। स्पष्टं च टिड्ढाणञ्सूत्रे भाष्ये। अत एव 'किन्नरीणां नरीणामि'ति प्रयोगः सङ्गच्छते इति चेन्न। नरत्वजातिमात्रप्रतिपिपादयिषायां 'नरी'ति प्रयोगव्यावृत्त्यर्थं तस्याऽऽवश्यकत्वात्। अत्राऽऽद्याऽकारस्यैव वृद्धिः[1]। व्याख्यानात्।

यद्वा[2] 'नरस्य अ'इतिशकन्ध्वादित्वात्पररूपम्। तत्सामर्थ्याच्चाऽऽद्यस्य। यद्वा 'नरि'ति रेफान्तमनुकृत्य, तस्य अ इति व्याख्यानसामर्थ्यादाद्याऽकारस्यैव वृद्धिः। 'वानर'शब्देऽतिप्रसङ्गस्तु 'नृ'साहचर्येण मनुष्यजातिवाचकघटकस्यैव ग्रहणेनाऽपि सुशकवारणः। अत्र पक्षे ङीनोऽकारान्तप्रकृतिलाभः कथमिति चिन्त्यम्। यत्तु 'प्रत्ययसन्नियोगशिष्टामन्तरङ्गामपि वृद्धिं बाधित्वाऽकृतव्यूहपरिभाषया 'यस्ये'ति लोपेऽनन्त्यस्य वृद्धि'रिति। तन्न। स्थानेन्तरतमाऽनन्तरतमाऽऽदेशप्रसक्तौ नियमाऽर्थत्वात् 'स्थानेन्तरतम'परिभाषायाः प्रक्तेऽप्रवृत्तौ, रेफस्यैव वृद्ध्यापत्तेः।

**यङश्चाप्**। पकारो 'याडाप' इत्यत्र सामान्यग्रहणाऽर्थः। **चकारस्य** द्व्यनुबन्धकत्वसम्पादनद्वारा सामान्यग्रहणाऽविघातमात्राऽर्थत्वेन चारिताथ्र्येऽपि, 'आम्बष्ठ्या' 'आवट्ये'त्यादौ परत्वाच्चित्स्वरः पित्स्वरं बाधते।

किञ्च सामान्यग्रहणाऽविघातमात्राऽर्थत्वे टाप्प्रकरणे एव 'यङ' इति वक्तव्ये प्रत्ययाऽन्तरकरणेन चित्त्वसामर्थ्याच्च। एतन्मूलकमेव परिभाषासु क्वचित्पठ्यते 'पित्स्वराच्चित्स्वरो बलीयानि'ति।

**आम्बष्ठ्येति**। 'आम्बष्ठ्य'शब्दादपत्ये 'वृद्धेत्कोसले'ति ञ्यङ्। **कारीषगन्ध्येति**। करीषस्येव गन्धो यस्य-'करीषगन्धिः'। 'उपमानाच्चे'ति

---

१. इतोऽग्रे—'अन्त्यस्य लोपेनाऽपहारात्। न च तत्सामर्थ्याल्लोपबाधः। गुणभूतपरिभाषाबाधस्यैव न्याय्यत्वात्, व्याख्यानाच्च' इति ख. पाठः।

२. 'यद्वा' इत्यारभ्य 'वृद्ध्यापत्तेः' इत्यन्तः क. कुण्डलितः ख. पाठः। ग. नास्ति।

गन्धस्य इत् अन्तादेशः। तस्य गोत्राऽपत्यं स्त्रीत्यर्थे 'अणिञोरि'ति ष्यङ्। तस्य स्त्रियां विधानेऽपि ङकारोच्चारणसामर्थ्यात्, द्योतकत्वाच्च तदन्ता-दप्ययं चाप्। **षाद्यञ इति**। 'पूतिमाषो'—गर्गादिः। एवं च 'गौकक्ष्य'-शब्दस्य गर्गादियञन्तस्योदीचां मतेऽनेनैव चापः सिद्धत्वात्, क्रौड्यादिषु पाठो न कार्य इति भावः। न च 'गौकक्षीपुत्र' इत्यत्र 'ष्यङः सम्प्रसारण-मि'ति न स्यादिति वाच्यम्। इष्टाऽऽपत्तेरिति स्पष्टं भाष्ये[1]।

एतच्च 'आवट्याच्चे'ति चकारस्याऽनुक्तसमुच्चयाऽर्थत्वात्सिद्ध-मित्याहुः।

**तद्धिताः**। बहुवचनमनुक्तानां सङ्ग्रहाऽर्थम्। अत एवाऽल्पाऽर्थे ग्रामटि-कादयः साधव इत्याहुः। महासंज्ञाकरणं 'तेभ्यो हिता' इत्यन्वर्थत्वाय। तेन यथाऽभिधानमेव साधवः। ननु[2] ष्फविधौ तद्धितग्रहणाऽकरणलाघवाऽनुरो-धाट्टापः प्रागेवाऽयमधिकारोऽस्तु। न च ङीबादीनां ङस्येत्त्वाऽनापत्तिः। 'चुटुङ' इति सूत्रकरणेन तत्सम्भवात्। टीप्-टीन्-टीषित्येव वा प्रत्ययाः सन्तु। न च तद्धितान्तत्वात्प्रातिपदिकत्वे 'फिषोऽन्त उदात्त' इत्यस्या-ऽऽपत्तिः। प्रकृति-प्रत्ययविभागशून्ये एव तत्प्रवृत्तेः। पकार-षकारनकाररूप-भिन्नाऽनुबन्धकरणवैयर्थ्याऽऽपत्तेश्च। अत एव सिद्धान्ते लिङ्गविशिष्टपरि-भाषया[3] नाऽत्र फिट्स्वरः। डाप्प्रत्यये विजातीयडकाराऽनुबन्धकरणं च न कार्यमित्यपरं लाघवम्। टिलोपस्य 'नस्तद्धिते' इत्यनेनैव सिद्धेः। 'यस्ये'-ति सूत्रे ईन्ग्रहणम्, 'औङः श्यामि'ति वार्त्तिकं च न कार्यम्।

न च ईद्ग्रहणं [4]ङीबादिषु तद्धितकार्याऽभावज्ञापनाऽर्थं, तेन 'पट्वी'-त्यादौ न ओर्गुणाऽऽपत्तिरिति वाच्यम्। 'कुरूरि'त्यादिसिद्ध्यर्थं स्त्रीप्रत्ययेषु

---

१. 'इति स्पष्टं भाष्ये' इति क. ग. पाठः। ख. नास्ति।

२. 'ननु' इत्यारभ्य 'इति दिक्' (७८६) इत्यन्तः ख. पाठः, मनोरमाशब्द-रत्नधृतत्वात् क. कुण्डलितः।

३. 'परिभाषया न दोषः' ख. पाठः।

४. 'ङीषादिषु' इति ख. पाठः।

तदभावज्ञापने 'आसुरायणी'त्यादौ ष्फेऽपि 'यस्ये'तिलोपाऽनापत्तेरिति[1] चेन्न। 'कुरूः' 'पट्वी'त्यादावोर्गुणाऽऽपत्तेः। अत एव 'दण्डिनी'त्यादौ टिलोपो नेति दिक्।

**यूनस्तिः**। 'ऋन्नेभ्य' इति ङीपोऽपवादः। **शत्रन्तादिति**। तेन 'युवतीनां समूहो यौवतमि'ति सिद्ध्यति। ([2]अन्यथा 'यौवनमि'ति स्यात्। यत्तु 'भिक्षाऽऽदिपाठसामर्थ्यान्न पुंवदि'ति। तन्न। भाष्ये तत्पाठस्य प्रत्याख्यानात्। पाठस्य विकाराऽभावमात्रतात्पर्यकत्वे वृद्ध्यादीनामप्यभावाऽऽपत्तिश्च। अत एव च 'युवतीकरनिर्मथितं दधी'त्यादिप्रयोगसिद्धिः। युवतिशब्दे लिङ्गविशिष्टपरिभाषयैव प्रातिपदिककार्ये सिद्धेऽत्र 'तद्धिता' इत्यधिकारो लिङ्गविशिष्टपरिभाषाऽनित्यत्वज्ञापनाऽर्थः, घटघटीग्रहणवदिति दिक्।

य[3]त्तु तद्धिताऽधिकारः 'कु(ल)युवतिरि'त्यादौ समासत्वात्प्रातिपदिकत्वे सिद्धेऽपि पुनस्तद्धितान्तत्वप्रयुक्तप्रातिपदिकसंज्ञाऽर्थः। न च समुदायो न तद्धितान्तः। अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाऽभावेन तत्सौलभ्यात्। तेन 'फिषोऽन्त' इत्यस्य पुनः प्रवृत्त्या पूर्वपदप्रकृतिस्वराऽभाव इत्याहुः। तन्न। अधिकारस्योत्तरत्र चारितार्थ्यात्। अर्थवत्सूत्रभाष्यप्रामाण्येन तस्याः स्त्रीप्रत्ययसामान्यग्रहणे, विशेषग्रहणे वा प्रवृत्तावप्यत्र प्रवृत्तौ मानाभावाच्च। नचाऽत्र करणं व्यर्थम्। लिङ्गविशिष्टपरिभाषाऽनित्यत्वज्ञापनेन चारितार्थ्यात्। न च घटघटीग्रहणेनैव तज्ज्ञापनं सिद्धमेवेतिवाच्यम्। विनिगमनाविरहात्। वार्त्तिककृता ज्ञापनेऽपि, सूत्रकृताऽपि तज्ज्ञापनस्यावश्यकत्वाच्च। अङ्गभूतपरिभाषाऽनित्यत्वस्य क्लृप्तस्यैव ज्ञापनेनोपपत्तौ, शास्त्रबाधकल्पने मानाऽभावाच्चेति दिक्।

॥ इति स्त्रीप्रत्ययाः ॥

[ इति श्रीनागेशभट्टविरचिते बृहच्छब्देन्दुशेखरे स्त्रीप्रत्ययप्रकरणम् ]



---

१. 'आयानापत्तेः' क. पाठः।

२. अयं ख. पाठः। क. ग. नास्ति।

३. 'यत्तु' इत्यारभ्य 'इति दिक्' इत्यन्तः क. ग. पाठः। ख नास्ति।

